THE
KĀSHI SANSKRIT SERIES
( *HARIDĀS SANSKRIT GRANTHAMĀLĀ* )
27.
( Vyākaraṇa Section No. 4 )

# LAGHUS'ABDENDUS'EKHARA

OF

## S'RĪ NAGES'A BHAṬṬA.

With the S'EKHARA DĪPAKA Commentary

By

M. M. PT. S'RĪ NITYĀNANDA PANTA PARVATĪYA.

*With an Introduction*

By

Pt. Gopāla S'astri Nene, Vyākaraṇāchārya
Prof. Govt. Sans. College, Benares.

Edited by

PT. SADĀS'IVA S'ĀSTRI JOSHI,
Prof. S. D. Sanskrit Mahavidyalaya, Benares,

and

Pt. Rāmachandra S'āstri Paṇs'ikar.

PUBLISHED BY
JAYA KRISHNA DÂS HARIDÂS GUPTA
*The Chowkhambâ Sanskrit Series Office.*
BENARES.
1938

हरिदाससंस्कृतग्रन्थमालासमाख्य-

काशी-संस्कृत-सीरिज़पुस्तकमालायाः

२७

व्याकरणविभागे (४) चतुर्थपुष्पम् ।

# लघुशब्देन्दुशेखरः ।

महामहोपाध्यायश्रीनागेशभट्टविरचितः ।

( अव्ययीभावान्तो भागः )

महामहोपाध्याय श्रीनित्यानन्दपन्तपर्वतीय विरचितेन-
शेखरदीपकाख्येन टिप्पणेन समुज्ज्वलितः ।

काशिकगवर्नमेंटसंस्कृतकालेजाध्यापकव्याकरणाचार्यनेने इत्युपाह्व-
श्रीगोपालशास्त्रिकृतभूमिकया च सम्भूषितः ।

श्रीस्याद्वादसंस्कृतमहाविद्यालयव्याकरणप्रधानाध्यापक-व्याकरणकोविदव्याकरणाचार्य-
साहित्योपाध्यायाद्यनेक पदवीविभूषित-जोशीत्युपाह्वसदाशिवशास्त्रिणा
पणशीकरकुलोत्पन्नसखारामात्मजरामचन्द्रशास्त्रिणा
च परिष्कृतः संशोधितश्च ।

प्रकाशकः—

जयकृष्णदास-हरिदास गुप्तः-
चौखम्बा संस्कृत सीरिज़ आफिस,
विद्याविलास प्रेस, बनारस सिटी ।
१९९५



श्रीः ॥

श्रीगुरुः शरणम् ।

# भूमिका

विदितमेव तत्र भवतां श्रीमतां महामहिमशालिनामनेकविद्यापारदृश्वनां वैयाकरणाग्रणीनां विदुषां यत् सर्वेषु शास्त्रेष्वासेतुहिमाचलमध्ययनाध्यापनप्रचारवत्सु व्याकरणशास्त्रमिदानीं प्राथम्यमुपलभते । उक्तञ्च 'मुखं व्याकरणं स्मृतम्' इति । तत्र व्याकरणशास्त्रे 'इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः । पाणिन्यमरजैनेन्द्रा जयन्त्यष्टादि शाब्दिकाः' इति, 'ऐन्द्रञ्चान्द्रं काशकृत्स्नं कौमारं शाकटायनम् । सारस्वतञ्चापिशलं शाकलं पाणिनीयकम्' इत्याद्यभियुक्तोक्तानेकव्याकरणेष्वपि पाणिनीयव्याकरणशास्त्रमेवातिशेते । अत एव—

'पाणिनीयं महाशास्त्रं पदसाधुत्वलक्षणम् ।
सर्वोपकारकं ग्राह्यं कृत्स्नं त्याज्यं न किञ्चन' ॥

इति पराशरपुराणे प्रतिपादितम् । छान्दोग्योपनिषद्यप्यस्य व्याकरणस्य 'वेदानां वेदः' इति श्रुत्या माहात्म्यमुक्तम् ।

तदेवं प्रसिद्धे सर्वतः प्रचलितपाणिनिव्याकरणशास्त्रे सत्स्वपि शब्दकौस्तुभाद्यनेकग्रन्थेषु 'नागोजीभट्ट' कृतः 'लघुशब्देन्दुशेखरः' सर्वनिबन्धशेखरायमाणः शेखरग्रन्थोऽयं प्रसिद्धो वर्तते ।

अस्य किल ग्रन्थस्य रचयिता 'काळे' इत्युपनामा 'शिवभट्ट' सुतः सती देवीगर्भजः शृङ्गवेरपुराधीशात् 'रामसिंह' नामक नृपात् द्वादशराजतमुद्रामासिकजीविकामासाद्यानेकग्रन्थलेखनतत्परोऽभवत् ।

अस्य समयः खल्वष्टादशशताब्द्यासीत्; यतोऽयम्पण्डितराज 'जगन्नाथ' कृत रसगङ्गाधरं टीकयाऽलञ्चकार । पण्डितराजसमयश्च शाहाजान नामकस्य दिल्लीश्वरस्य सभालङ्कारभूततयाऽष्टादशशताब्द्याः प्रथमोंऽश इति निर्णीतमन्यत्र ।

अयं खलु सन्तानरहितः स्वधर्मपत्न्या सन्तानाय कृतप्रार्थनः 'शब्देन्दुशेखरः पुत्रो

मञ्जुषा चैव कन्यका' इति स्वपत्नीं सान्त्वयामास। अस्य किल 'भट्टनागेशस्य' ग्रन्थविचारतत्परतायामियमाख्यायिका श्रूयते। यदेकदा स्वगृहे कस्याश्चिद् ग्रन्थपङ्क्तेः समुल्लापनविचारमग्नेऽस्मिन् तदीयदर्शनकामनया शृङ्गवेरपुरादागतेन 'रामसिंह' नृपतिनाऽनुपपत्तिविषये पृष्टोऽयमनेकग्रन्थभागतत्पाङ्क्तिलापनानुपपत्तीः प्रस्तावितवान्। श्रुत्वा च तास्ता अनुपपत्तीर्मन्दहासेन नृपतिना 'न मया ग्रन्थानुपपत्तयः शास्त्रिमहोदयान्प्रति पृष्टाः किन्तु गार्हस्थ्यविषयकानुपपत्तिपरिहारङ्कर्तुमनसो मम तदनुपपत्तय एव प्रश्नविषयाः' इति प्रार्थिते भट्टनागेशमहोदयेन तत्र तु मदीया गृहिणी प्रष्टव्येत्युत्तरितम्। अनेन 'भट्टनागेशस्य' अहर्निशं ग्रन्थविचारमग्नता कीदृशीति स्पष्टैव प्रतिभासते।

अनेन निम्नलिखिता ग्रन्था रचितास्सन्ति। १ भाष्यप्रदीपोद्द्योतः, २ बृहच्छब्देन्दुशेखरः, ३ लघुशब्देन्दुशेखरः, ४ परिभाषेन्दुशेखरः, ५ प्रायश्चित्तेन्दुशेखरः, ६ बृहन्मञ्जूषा, ७ लघुमञ्जूषा, ८ परमलघुमञ्जूषा, ९ परमार्थसारविवरणम्, १० रसगङ्गाधरमर्मप्रकाशः, ११ काव्यप्रकाशोद्द्योतः, १२ रसतरङ्गिणीटीका, १३ रसमञ्जरीटीका, १४ सप्तशतीटीका, १५ त्रिंशत्श्लोकी (अशौच निर्णयः), १६ सापिण्ड्यनिर्णयः, १७ योगसूत्रवृत्तिः, १८ वेदान्तसूत्रवृत्तिः, १९ साङ्ख्यसूत्रवृत्तिसङ्ग्रहः, २० तिलकाख्या वाल्मिकीयरामायण टीका चेति।

तदेवं श्रीमता 'भट्टनागेशेन' विद्वन्मूर्धन्येन विरचितो ग्रन्थो 'लघुशब्देन्दुशेखरः' सर्वेष्वपि व्याकरणग्रन्थेषु मूर्धन्यभूतो वर्तते। तस्येयं 'दीपक' नाम्नी टिप्पणरूपा टीका महामहोपाध्याय गुरुवर श्री **'नित्यानन्दपन्त' पर्वतीय** महोदयकृता ह्यधुनाऽलङ्कारपदमर्हति।

यद्यपि भट्टी, विषमी, चन्द्रकला, नागेशोक्तिप्रकाशिकादयो बहवः प्रसिद्धाः मुद्रितांश्च टीकाः, परन्तु काश्यादिनगरेषु प्रचलिताध्ययनाध्यापनशैल्यनुसारिणी न तासामेकापि। यद्यपि नागेशोक्तिप्रकाशिका तादृशी वर्तते, तथापि प्रचलिताध्ययनाव्ययीभावान्तभागपर्यन्तं न सोपलभ्यते इति न पूर्णतया छात्रोपकारिका इत्यालोच्यैवेयं निर्माणपदवीमागता इति सर्वथेयमिदानीन्तनच्छात्रोपकारिण्यचिरादेव तत्संस्करणद्वयसमाप्तिमतीत्यनेन सिद्धम्।

अस्य प्रणेतारश्च महामहोपाध्याय गुरुवर श्री **नित्यानन्दपन्त महोदयाः** चतुर्विंशत्यधिकैकोनविंशतितमे वैक्रमसम्वत्सरे पौ० कृ० त्रयोदश्यां स्वजन्मना पुण्य-

बलभद्र शर्मणः
स्वा० कृष्णविद्यानन्द...
...भवन २

पुरीं काशीमलमकुर्वन्। एते च शेखर महाभाष्यादिपरिशीलनेन एकोनविंशतिवर्षदेशीये वयसि 'व्याकरणाचार्य' परीक्षायां प्राथम्येन समुत्तीर्णाः।

वेदान्त, साङ्ख्य, धर्मशास्त्र, मीमांसा, साहित्याद्याचार्यपरीक्षाणामपि विविधखण्डानि समुत्तीर्य स्वगुरुवरान् दिगन्तविश्रुतकीर्तीन् साहित्यदर्शनादिनानाशास्त्रधुरन्धरान् सी० आई० ई० पदवीजुषो परमगुरुवर **महामहोपाध्यायश्रीमत्तैलङ्गगङ्गाधरशास्त्रि-महोदयान्** सौशील्येन कुशाग्रबुद्ध्या वचनग्राहितया च समतोषयन्। ततश्च हिन्दुकॉलेज नामक विद्यालये कानिचिद्वर्षाणि राजभाषाऽध्येतृच्छात्रान् संस्कृतभाषामध्याप्य आङ्ग्लविद्यालयाध्यापनोद्विग्नमनसस्ते तत्र विद्यालये सहसैव त्यागपत्रं प्रहितवन्तः। ततः प्रभृति गृहे समागतान् संस्कृतविद्यार्थिनो महतोत्साहेन प्रेम्णा च यावज्जीवमध्यापयन्। तेषु केषाञ्चित् नामानि विशेषतउल्लेखनीयानि। महामहोपाध्याय पं० सीतारामशास्त्रिणः कलिकाता विश्वविद्यालयाध्यापकाः, लवपुरीय प्राच्यविद्यालयाध्यापकाः महामहोपाध्याय पं० माधवशास्त्रिभण्डारिमहोदयाः, काशीस्थ रणवीर-पाठशालायांभूतपूर्वाध्यापकाः पर्वतीय तारादत्तपन्त महाभागाः, इन्दोरस्थ महाविद्यालयप्रधानाध्यापकाः श्रीपादशास्त्रिणः, नेपालराजकीयपाठशालायां व्याकरणाध्यापकाः दधिराम उपाध्यायाः, दक्षिण हैदराबादस्थ वेदान्तविद्याविशारदाः बुद्धिवारोपनामक श्री लक्ष्मण शास्त्रिणः। एवंविधा अनेके विद्वाँसस्तच्छात्रत्वेनेतस्ततः प्रसृतास्सन्ति।

एतैरनेके ग्रन्थाः निर्मितास्सम्पादिताश्च सन्ति। तत्र विशेषत उल्लेखनीयाः— १ कातीयेष्टिदीपकः (दर्शपौर्णमासपद्धतिः), २ संस्कारदीपकः, ३ परिशिष्टदीपकः, ४ वर्षकृत्यदीपकः, ५ परमलघुमञ्जूषाटिप्पणम्, ६ मीमांसापरिभाषाटिप्पणम्, ७ प्रस्तुत ग्रन्थश्चेति।

तदेवं सर्वतः प्रचलितव्याकरणशास्त्राध्ययनाध्यापनशैलीमूर्धन्यभूतोऽयं **'शेखर-दीपकाख्यो'** ग्रन्थः टिप्पणापरनामा इदानन्तिनविद्वद्धुरीणैः व्याकरणशास्त्राध्यापकैः छात्रैश्च बहूपयुज्यते इत्यल्पशैरेव वर्षैरनेन तदीयतृतीयसंस्करणेन सूच्यते। अस्य तृतीयसंस्करणस्य सम्पादनमस्मत्सतीर्थ्यानां वेदान्तविद्याविशारदानां बुद्धिवारोपनामक लक्ष्मणशास्त्रिमहोदयानामन्तेवासिना पणशीकरोपनामक सखारामात्मज रामचन्द्रशास्त्रिमहाभागेन काशीस्थ स्याद्वादविद्यालयाध्यापक जोशीत्युपाह्व सदाशिव शास्त्रिणां तत्त्वावधाने महता परिश्रमेणानुष्ठितामिति द्वावपि तौ धन्यवादार्हौ।

पुनः पुनरेतद्ग्रन्थप्रकाशनेनास्मदीयपूज्यमहाभागानां गुरूणां विद्याकीर्तिं सर्वतः प्रसारयन्तो 'विद्याविलास' मुद्रणालयाध्यक्षाः श्री 'जयकृष्णदासगुप्त' -महोदया आशीराशिभिरभिनन्दनीयाः। अन्ते च श्रीमन्तं भगवन्तं श्रीकाशीविश्वेश्वरं प्रार्थयामि—यदस्य 'शेखरदीपकस्य' अस्मद्गुरुकृतेरेवमेव प्रचारेण सर्वेऽध्यापकाश्छात्राश्चैतदुपयोगेन परिष्कृतव्याकरणविद्यापारङ्गताः स्युरिति शम्।

गवर्न्मेण्ट संस्कृत कालेज
बनारस
मिति पौष कृ० ११ सं० १९९५

श्री'नित्यानन्दो'पासकः
गोपाल शास्त्री नेने

श्रीगुरुश्शरणम् ।

# लघुशब्देन्दुशेखरः ।

## म०म० पण्डितप्रवरपर्वतीयश्रीनित्यानन्दपन्तकृत-शेखरदीपकसमलङ्कृतः ।

पातञ्जले महाभाष्ये कृतभूरिपरिश्रमः ।
शिवभट्टसुतो धीमान् सतीदेव्यास्तु गर्भजः ॥ १ ॥
याचकानां कल्पतरोररिकक्षहुताशनात् ।
शृङ्गिवेरपुराधीशाद् रामतो लब्धजीविकः ॥ २ ॥
नत्वा फणीशं नागेशस्तनुतेऽर्थप्रकाशकम् ।

**पातञ्जल इति** । पतञ्जलिना निर्मितं पातञ्जलं तस्मिन् । "शेषे" (पा० सू० ४-२-९२ ) इति लक्षणसूत्रेणाण्प्रत्ययः । ननु सर्वभाष्येष्वस्यैव भाष्यस्य महत्त्वान्महाभाष्यपदेनैव पातञ्जले भाष्ये इत्यर्थलाभे पातञ्जल इति विशेषणोपादानं व्यर्थमिति चेत् । न, महात्मनां नामोच्चारणमपि मङ्गलाय भवतीति तदुपादानात् । केचित्तु चेन विनाऽपि समुच्चय इति 'पातञ्जले योगशास्त्रे महाभाष्ये व्याकरणभाष्ये च' इत्यर्थ इत्याहुः ।

**कृतभूरीति** । कृतः भूरिपरिश्रमो येन सः, कृतमहापरिश्रम इति यावत् । कृतभूरिपरिश्रम इत्यनेनात्रोक्तार्थाः सर्वे भाष्यसम्मता इति बोध्यते ।

ननु भाष्ये कृतभूरिपरिश्रम इत्युक्त्या स्वस्य बुद्धिप्रतिभा नास्तीति प्रतीयतेऽत आह—**धीमानिति** ।

**सतीदेव्या इति** । तथा च पिता साक्षाच्छिवसदृशो माता च सतीसदृशीति सत्कुलप्रसूतत्वं गम्यते । न च सतीदेव्या इत्यत्र कर्मधारये पुंवद्भावापत्तिरिति वाच्यम् । सतीं दीव्यति पातिव्रत्येन जेतुमिच्छतीति योगरूढिस्वीकारेणादोषात् ।

**अरिकक्षहुताशनादिति** । कक्षः शुष्कतृणपुञ्जः, अरय एव कक्षस्तस्य हुताशनात् अग्निसदृशादित्यर्थः ।

**नागेश इति** । न च "आत्मनाम" इति निषेधात्स्वनामोपादानमनुचितमिति वाच्यम् । "आत्मनाम" इति स्मृतौ न गृह्णीयादित्यस्य नोच्चारयेदित्यर्थेन लेखने दोषाभावात् । अत एव सर्वो व्यवहारकाण्डः सङ्गच्छते । यत्तु "कूपखनननन्यायेन स्वनामोच्चारणजं दुरितं नश्यति" इति, तन्न, नान्तरीयकपापनाशस्यैव तन्न्यायविष-

मनोरमोमार्द्धदेहं लघुशब्देन्दुशेखरम् ॥ २ ॥

ग्रन्थसमाप्तिग्रन्थप्रचारादिप्रतिबन्धकदुरितप्रशमाय समुचितऋषित्रयनमस्काररूपं मङ्गलमाचरन् शिष्यशिक्षायै व्याख्यातृश्रोतृणामनुषङ्गतो मङ्गलाय च निबध्नाति-**मुनित्रयमिति**। कारकविभक्तेर्बलवत्त्वाद् द्वितीया। **परिभाव्येति**। तच्छब्दस्य बुद्धिस्थपरामर्शकत्वात् प्राचामुक्ती-

---

यत्वात्। आत्मनामोच्चारणस्य ग्रन्थकरणनान्तरीयकत्वाभावात्। यदपि "नत्वा फणीशम्" इति मङ्गलाचरणेन स्वनामोच्चारणजं पापं नश्यति, इति, तदपि न। पुण्यपापयोः शब्दैकसमधिगम्यत्वेन "समाप्तिकामो मङ्गलमाचरेत्" इति शिष्टाचारानुमितश्रुत्या मङ्गलस्य समाप्तिफलकत्वबोधनेन अन्यफलकत्वकल्पनायाः कर्तुमशक्यत्वात्। सम्भवति दृष्टफलकत्वेऽदृष्टफलकल्पनाया अन्याय्यत्वात्। यदपि 'नागेश इति न नाम किन्तु नागः पतञ्जलिरीशः प्रवर्तकोऽन्तर्यामितयेति यौगिकम्' इति, तदपि न। अन्यस्य नाम्नोऽप्रसिद्ध्या एतादृशार्थकल्पने मानाभावात्।

**मनोरमोमार्द्धदेहमिति**। ग्रन्थपक्षे मनोरमैव उमा सैवार्धदेहो यस्येति बहुव्रीहिः। अथवा मनोरमोमाया अर्धं द्यति खण्डयतीति मनोरमोमार्धदा। "आतोऽनुपसर्गे" (पा० सू० ३-२-३) इति कः प्रत्ययः। ईहा चेष्टा यस्येत्यर्थः। एतेन परस्परं मनोरमाशेखरयोरगतार्थत्वं मनोरमोक्तासम्मतार्थानां खण्डनञ्च सूचितम्। स्वस्त्र्युक्तानां सम्मतानां ग्रहणस्याऽसम्मतानां खण्डनस्य च लोके दर्शनात्। ईश्वरपक्षे च मनोरमा मनोहरा या उमा सैवार्धदेहो यस्येत्यर्थः। अर्थप्रकाशकमित्यनेनास्मिन् ग्रन्थेऽर्थबाहुल्यमेव न शब्दबाहुल्यमिति सूचितम्।

**समुचितेति**।

"यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा।
तत्तदेवावगच्छ त्वं मम तेजोंऽशसम्भवम्" ॥ (गी० १०-४१)

इति गीतावचनेन मुनित्रयस्य व्याकरणकर्तृत्वेनेश्वरांशत्वादिति भावः।

**व्याख्यातृश्रोतृणामिति**। न चात्र "आनङृतः" (पा० सू० ६-३-२५) इत्यानङ् भवितव्यमिति वाच्यम्। पूर्वोत्तरपदयोर्विद्यायोनिसम्बन्धवाचिनोरेव तत्र ग्रहणेन श्रोतृशब्दस्य तद्वाचकत्वाभावात्तदप्राप्तेः।

**बलवत्त्वादिति**। न च [तु] विभक्तिशब्दस्य स्त्रीलिङ्गत्वेन तत्सामानाधिकरण्याद् बलवतीत्वादित्यपेक्षितमिति वाच्यम्। [न च बलवतीशब्दात् त्वप्रत्यये "त्वतलोर्गुणवचनस्य" (का० वा०) इति पुंवत्त्वं कुतो नेति वाच्यम्। सर्वनामाव्ययकृत्तद्धितावतिरिक्तप्रातिपदिकानां गुणवचनत्वस्य "आकडार" (पा० सू० १-४-१) सूत्रे भाष्ये उक्ततया बलवतीशब्दस्य मतुबन्तत्वेन तद्धितान्ततया गुणवचनत्वाभावेन तद-

स्तिरस्कृत्येत्यर्थः, मुनित्रयोक्तीर्विचार्येत्यर्थो वा । "परिभावस्तिरस्क्रिया" इति कोशात्तिरस्कारार्थकस्य धातोर्विचारार्थकत्वेऽपि न बाधकम् । धातूनामनेकार्थत्वात् । अत एव "परौ भुवोऽवज्ञाने" ( पा० सू० ३-३-५५ ) इति सङ्गच्छते । एतेन स्वग्रन्थस्य प्राचीनग्रन्थैरगतार्थता समूलत्वञ्च ध्वनितम् । भाविनोऽपि बुद्ध्या विषयीकरणादियमिति निर्देशः ।

---

प्राप्तेः, इति चेत् । न,] 'कृत्तद्धितसमासेभ्यः सम्बन्धाभिधानं भावप्रत्ययेन' इति सिद्धान्तेन बलसम्बन्धस्य स्त्रीपुंसाधारण्येन बलवच्छब्दात् त्वप्रत्ययेऽपि दोषाभावात् । अत एव 'पृथिव्या गन्धवत्त्वं लक्षणम्' इत्यादिप्रयोगाः सङ्गच्छन्ते । अन्ये तु "कुक्कुटाण्डवत्स्त्रीत्वाविवक्षायां बलवच्छब्दात् त्वप्रत्यये साध्विदम्" इत्याहुः ।

न च कृधात्वर्थफलेऽन्वयविवक्षायां द्वितीयैव प्राप्नोति, नमःपदार्थेऽन्वयविवक्षायां चतुर्थ्येव प्राप्नोतीति युगपदुभयोः प्राप्त्यभावेन कारकविभक्तेर्बलवत्त्वाद् द्वितीयेत्यसङ्गतमिति वाच्यम् । नमःशब्दस्य निपातत्वेन द्योतकतया द्योतकवाचकसमभिव्याहारे विनिगमनाविरहेण विषयतायामुभयप्रयोज्यत्वमिति सिद्धान्तेन "नमःस्वस्ति" (पा०सू० २-३-१६) इत्यस्य ['हरये काश्यां नमः' इत्यत्र काशीपदाच्चतुर्थीवारणायावश्यकेन] नमःपदप्रयोज्यविषयतानिरूपितविषयताप्रयोजकत्वेन तात्पर्यविषयीभूताच्चतुर्थ्यर्थेन कृधात्वर्थफलेऽन्वयविवक्षायामुभयोः प्राप्त्याऽसङ्गत्यभावात् ।

न च स्वावधिकोत्कर्षप्रकारकज्ञानानुकूलव्यापारस्य नमःपदार्थत्वे यत्र चैत्रो विष्णुमित्रं नमस्करोति न यज्ञदत्तं, तत्र चैत्रीयकरपुटसंवलनादिव्यापारेण चैत्रावधिकोत्कर्षप्रकारकज्ञानमुदासीनयज्ञदत्तस्यापि जातमिति यज्ञदत्तं नमस्करोतीति प्रयोगापत्तिः; इति वाच्यम् । उत्कर्षविशिष्टज्ञानानुकूलव्यापारस्य नमःपदार्थत्वेनादोषात् । उत्कर्षवैशिष्ट्यञ्च ज्ञाने स्वप्रकारकज्ञानविशेष्यसमवेतत्व-स्वप्रकारकत्वैतदुभयसम्बन्धेन । प्रकृते चोदासीनयज्ञदत्तज्ञाने स्वप्रकारकज्ञानविशेष्यसमवेतत्वाभावान्न दोषः ।

यत्तु स्वाश्रयसमवेतत्व-स्वप्रकारकत्वैतदुभयसम्बन्धेन ज्ञाने उत्कर्षवैशिष्ट्यमिति, तन्न, यत्रोत्कर्षाश्रयत्वं बाधितं तत्र नमस्करोतीति प्रयोगानुपपत्तेः यत्रोदासीनो वस्तुत उत्कृष्टस्तत्र नमस्करोतीति प्रयोगापत्तेश्च ।

न च स्थाणुं नमस्करोतीति प्रयोगानुपपत्तिः । स्थाणोरचेतनत्वेन स्वप्रकारकज्ञाने स्वप्रकारकज्ञानविशेष्यसमवेतत्वस्याऽभावादिति वाच्यम् । तत्र चेतनत्वभ्रमेण तदारोपेण देवतात्वारोपेण वा तादृशप्रयोगोपपत्तेः ।

**[समूलत्वञ्चेति** । अत्रत्यश्चकारो वाऽर्थे 'प्राचामुक्तीस्तिरस्कृत्य मुनित्रयोक्तीर्विचार्येत्यर्थो वा' इत्यत्रत्यो वाशब्दश्चार्थे वा । तेन न परस्परग्रन्थविरोधः ।]

**शामकत्वेनेति** । न च "नोदात्तोपदेशस्य" (पा० सू० ७-३-३४) इति वृद्धि-

सिद्धान्तप्रकाशकत्वेनातिदुरूहग्रन्थान्तरेभ्यः सिद्धान्तज्ञाने जायमानस्य क्लेशरूपसन्तापस्य शामकत्वेन च कौमुदीसादृश्यम्। अनेन वैयाकरण-सिद्धान्ता विषयाः, तज्ज्ञानं प्रयोजनं, तज्जिज्ञासुरधिकारीत्यादि सूचितम् ॥

---

निषेधाच्छमकत्वेनेत्यपेक्षितमिति वाच्यम्। शमक एव शामक इति स्वार्थिकाण्णन्तत्व-स्वीकारेणादोषात्। क्वचित्तु शमकत्वेनेत्येव पाठः।

ननु प्रवृत्तिमात्रं प्रति बलवदनिष्टाननुबन्धीष्टसाधनत्वप्रकारकज्ञानस्य कृतिसाध्य-त्वप्रकारकज्ञानस्य च करणत्वेन तदुत्पत्त्यर्थं ग्रन्थादाववश्यं यत्नः कर्तव्यः। निरुक्तज्ञा-नद्वयञ्चानुबन्धज्ञानेन जायते। अनुबन्धाश्च विषयप्रयोजनसम्बन्धाधिकारिभेदेन चतु-र्विधाः। ग्रन्थाध्ययनविषयकप्रवृत्तिप्रयोजकज्ञानविषयत्वमनुबन्धसामान्यलक्षणम्। तत्र विषयज्ञानादिष्टसाधनत्वप्रकारकं कृतिसाध्यत्वप्रकारकं चेति ज्ञानद्वयं जायते। वि-शिष्टबुद्धौ विशेष्यतावच्छेदकधर्मप्रकारकनिश्चयस्य कारणत्वम्। अधिकारिज्ञानेन च कृतिसाध्यत्वप्रकारकं ज्ञानञ्जायते। प्रयोजनज्ञानेन चेष्टसाधानत्वप्रकारकं ज्ञानं जायते। सम्बन्धज्ञानेन चोभयज्ञानं जायते इत्यनुबन्धचतुष्टयनिरूपणमवश्यं कर्तव्यमित्याह–अनेनेति।

**वैयाकरणसिद्धान्ता विषया इति**। चिन्त्यमिदम्। प्रवृत्तौ वैयाकरणसिद्धान्त-ज्ञानस्योद्देश्यत्वेन प्रवृत्त्युद्देश्यस्यैव विषयरूपानुबन्धत्वौचित्येन वैयाकरणसिद्धान्तज्ञानं विषय इति लेखनस्यैवौचित्यात्।

**तज्ज्ञानं प्रयोजनमिति**। इदमपि चिन्त्यम्। अन्यस्य प्रयोजनज्ञानेऽन्यत्र प्र-वृत्तेरसम्भवात्। वैयाकरणसिद्धान्तज्ञानस्य कौमुदीकरणप्रयोजनत्वेन वैयाकरणसिद्धा-न्तज्ञानत्वेन वैयाकरणसिद्धान्तज्ञानरूपविषयस्य प्रयोजनज्ञानमन्तराऽध्येतृप्रवृत्त्यसम्भ-वाद्, अनुबन्धचतुष्टयज्ञानस्यैवाध्ययनप्रवृत्तिप्रयोजकत्वाच्च। तस्मात् "रक्षोहागम" इत्यादि भाष्योक्तप्रयोजनमेव वक्तव्यम्।

**तज्जिज्ञासुरधिकारीति**। इदमपि चिन्त्यम्। तज्जिज्ञासायाश्चाण्डालादेरपि सम्भवेन तस्याप्यधिकारित्वापत्तेः। तस्मादधीतकाव्यकोशादिर्द्विजातिरधिकारीति व-क्तव्यम्।

ननु—

"संज्ञा च परिभाषा च विधिर्नियम एव च।
अतिदेशोऽधिकारश्च षड्विधं सूत्रलक्षणम्" ॥

इत्यभियुक्तोक्तषड्विधसूत्रेषु "अइउण्" (मा० सू० १) इत्यादि किं सूत्रम्? [ न च संज्ञासूत्रम्। शक्तिनियामकत्वाभावात्। नापि परिभाषा। स्वदेशे लक्ष्यासंस्कार-कबोधजनकत्वे सति विधिसूत्रैकवाक्यतया बोधजनकत्वाभावात्। अधिकारवा-रणाय सत्यन्तम्। नापि विधिः। साक्षाल्लक्ष्यसंस्कारकसाधुत्वप्रकारकबोधजनकत्वा-

**अइउण्** ( मा० सू० १ )। एषां क्रमबोधकत्वेऽपि "आदिरन्त्येन" ( पा० सू० १-१-७१ ) इत्यनेनैकवाक्यतया वृत्तिपरिच्छेदकत्वेन संज्ञासूत्रत्वम् । क्रमस्य सञ्ज्ञाद्वारैवोपयोगात् । एकवाक्यता चादिरकारादिरन्त्येनेता तत्सहशेन णकारादिना सहोच्चार्यमाण आद्यन्ताक्षिप्तानां सञ्ज्ञेति । "स्वौजस्" ( पा० सू० ४-१-२ ) इत्यादीनामप्येतदेकवाक्यतया सुबादिसञ्ज्ञासूत्रत्वं स्वादिविधायकत्वञ्चेति बोध्यम् । एषु

---

भावात् । नापि नियमः । अन्यनिवृत्तिफलकत्वे सति सिद्धार्थप्रतिपादकत्वाभावात् । नाप्यतिदेशः । आरोपाबोधकत्वात् । नाप्यधिकारः । विधिसूत्रैकवाक्यतया बोधजनकत्वाभावात् । यत्तु अधिकारलक्षणे 'स्वदेशवाक्यार्थशून्यत्वे सति' इति परिभाषात्वसाङ्कर्यवारणाय निवेश्य परिभाषालक्षणे सत्यन्तं नोपादेयमिति । तन्न, "शेषे" (पा०सू० ४-२-९२) इत्यत्राव्याप्तिप्रसङ्गात् । यदि तु "शेषे" इत्यस्यावृत्त्या एकस्य विधित्वमपरस्यैवाधिकारत्वमुच्येत तदेदमपि सुवचम् । एवञ्च षड्विधसूत्रलक्षणानाक्रान्ततया नैषां सूत्रत्वव्यवहार उचित ] इत्याह---**एषामित्यादि** ।

**क्रमबोधकत्वेऽपीति** । [तृतीयाऽर्थे सप्तमी ।] एषां साक्षात्क्रमविषयकबोधजनकत्वाभावेन क्रमेणैव ज्ञायमानानामेषां प्रत्याहारपदघटितशास्त्रजन्यार्थबोधोपयोगित्वेनेति व्याख्येयम् ।

**वृत्तिपरिच्छेदकत्वेनेति** । शक्तिनियामकत्वेनेत्यर्थः ।

**स्वादिविधायकत्वञ्चेति** । नन्वेवं "षड्विधं सूत्रलक्षणम्" इत्यस्यासङ्गतिः, स्वसमभिव्याहृतपदार्थतावच्छेदकव्याप्यमिथोविरुद्धयावद्धर्मबोधनस्य विधापदार्थत्वेन "स्वौजसमौट् (पा०सू० ४-१-२) इत्यादौ विधिसूत्रत्वसंज्ञासूत्रत्वोभयसत्त्वेन परस्परविरुद्धत्वाभावेन विधापदार्थत्वानुपपत्तेरिति चेन्मैवम् । संज्ञासूत्रत्वत्वविधिसूत्रत्वत्वादीनां परस्परविरुद्धत्वेन स्वसमभिव्याहृतपदार्थतावच्छेदकसूत्रत्वत्वव्याप्यत्वेन च विधापदार्थत्वोपपत्तेः । स्पष्टं चेदं हेत्वाभासशिरोमणौ--"उपधेयसङ्करेऽप्युपाधीनामसाङ्कर्यात्" इत्यादिना ।

परे तु "अइउण्" (मा०सू० १) इत्यादीनामत्वावच्छिन्नः साधुरित्यादिरीत्या वर्णसाधुत्वविधायकत्वेन विधिसूत्रत्वमेव । अतः "इष्टबुद्ध्यर्थश्च वर्णानामुपदेशः कर्तव्यः" इति भाष्यं सङ्गच्छते । [ नन्वेवं प्रत्येकं साधुत्वबोधकतयाऽर्थवत्त्वेन ततः सुबुत्पत्त्यापत्तिरिति चेत् । न, तेषां लक्ष्यस्थाकाराद्यनुकरणत्वेनानुकरणानां चाभेदविवक्षापक्षेऽर्थवत्त्वाभावात् । भेदविवक्षापक्षेऽर्थवत्त्वेऽपि सौत्रत्वान्न सेति ध्येयम् । ] "आदिरन्त्येनेत्यनेनैकवाक्यतया" इत्यादि मूलं तु न युक्तम् । "आदिरन्त्येन" (पा०सू० १-१-७१) इति सूत्रे आदिपदस्यान्त्यपदस्य चाक्षरसमाम्नायिकाकारादेरर्थत्वेन पदतद-

**संहिताया अविवक्षया न संहिताकार्यम् । अनुकरणत्वेन सौत्रत्वाच्च वर्णेभ्यो न विभक्त्युत्पत्तिः । कारप्रत्ययोऽपि न, बाहुलकात् ।**

---

र्थयोरेकवाक्यतायाः कुत्राप्यदर्शनात् । अन्यथा घटमानयेत्यादौ घटपदतदर्थयोरेकवाक्यतापत्तेरित्याहुः ॥

**संहिताया अविवक्षयेति** । नन्वग्रे "इको यणचि" ( पा०सू०६–१–७७ ) इत्यत्र ङमुटमाशङ्क्य सौत्रत्वान्नेत्युक्तम् , तत्रापि संहिताया अविवक्षया न ङमुडिति कस्मान्नोक्तम् ? न च "ङमो ह्रस्वादचि" ( पा० सू० ८–३–३२ ) इत्यत्र "संहितायाम्" (पा०सू०६–१–७२) इत्यधिकाराभाव इति वाच्यम् । "तयोर्य्वावचि संहितायाम्" (पा०सू० ८–२–१०८) इत्यारभ्य संहितायामित्यधिकारस्य आऽध्यायपरिसमाप्तेः सत्त्वात् । तथा च तदेवात्र समाधानं युक्तम्, एतदेव वा समाधानं तत्र युक्तमिति चेत् । न, तत्र संहिताया अविवक्षणे सूत्रद्वयापत्तेः । पूर्वं संहितापठिताष्टाध्याय्याः संहिताया अविवक्षणेन सूत्रविभागस्य भाष्यकृता कृतत्वात् । "अइउण्" (मा०सू० १) इत्यादौ संहिताया अविवक्षया प्रत्येकं सूत्रत्वेऽपि न क्षतिः । अत्वावच्छिन्नः साधुरित्वावच्छिन्नः साधुरित्यादिरीत्या वर्णसाधुत्वविधायकत्वेन प्रत्येकं सूत्रत्वस्येष्टत्वात् । एतदेव द्योतयितुं सौत्रत्वादिति समाधानं त्यक्त्वा संहिताया अविवक्षयेति समाधानमुक्तम् । चतुर्दशसूत्रीव्यवहारस्त्वनुबन्धप्रयोज्य इति बोध्यम् ॥

**सौत्रत्वाच्चेति** चो हेतौ । यतः सौत्रत्वमतोऽनुकरणत्वम् ।

[ **बाहुलकादिति** । ] स्यादेतत्–"वर्णात्कारः"( का. वा. ) इत्यस्य यदि वर्णवाचकात्कारप्रत्यय इत्यर्थस्तर्हि विसर्जनीयपदादपि कारप्रत्ययापत्तिः । न च यस्मात्कारप्रत्ययश्चिकीर्षितस्तद्घटकवृत्तिवर्णत्वव्याप्यधर्मावच्छिन्नविषयताकबोधतात्पर्येणोच्चारितात्कारप्रत्ययो भवतीत्यर्थे न दोष इति वाच्यम् । अनुनासिकपदस्य स्वघटकनकारवृत्त्यनुनासिकत्वरूपवर्णत्वव्याप्यधर्मावच्छिन्नविषयताकबोधतात्पर्येणोच्चारितत्वेन तस्मात्कारप्रत्ययापत्तेः । न च यस्मात्कारप्रत्ययश्चिकीर्षितस्तद्घटकवृत्तिवर्णत्वव्याप्यजात्यवच्छिन्नविषयताकबोधतात्पर्येणोच्चारितात्कारप्रत्ययो भवतीत्यर्थेनानुनासिकत्वस्य गुणत्वेन न दोष इति वाच्यम् । गुणपदस्य वर्णसंज्ञापक्षे धिनदीपदयोश्च स्वघटकाकारेकारवृत्तिवर्णत्वव्याप्यात्वेत्वादिजात्यवच्छिन्नविषयताकबोधतात्पर्येणोच्चरितत्वेन तेभ्यः कारप्रत्ययः स्यात् । न च स्वघटकवृत्तिर्या वर्णत्वव्याप्या जातिस्तया साक्षादवच्छिन्ना या मुख्यविशेष्यता तादृशविशेष्यताकबोधतात्पर्येणोच्चारितात्कारप्रत्ययो भवतीत्यर्थे गुणादिपदस्थले बोधीयमुख्यविशेष्यताया अन्यतमत्वादिनैव साक्षादवच्छिन्नत्वान्न दोष इति वाच्यम् । ह्रस्वदीर्घपदयोरुच्चारणार्थेकारादिघटितकिकुइत्यादिपदयोश्च साक्षात्स्वघटकवृत्तिवर्णत्वव्याप्यह्रस्वत्वदीर्घत्वकत्वादिजात्यवच्छिन्नमुख्यविशेष्यताकबोधतात्पर्येणोच्चरितत्वेन तेभ्यः कारप्रत्ययापत्तेरिति चेत् ।

यत्तु "उपजीव्यविरोधात् सन्धिर्न । तथा हि अजादिसञ्ज्ञाग्रहकाले "आद् गुणः" ( पा० सू० ६-१-८७ ) इत्यादीनामनिष्पत्त्या तदप्रवृत्तावविकृतरूपाकारादिषु गृहीताजादिपदशक्तिः पश्चादच्प्रत्याहारे ज्ञाते उपेन्द्र इवात्रापि तत्प्रवृत्तौ विरुध्येत । न हि सन्धिकार्ये कृतेऽविकृतरूपश्रवणं भवति" इति । तन्न । पुनरच्पदस्यार्थान्तरे शक्त्यग्रहेण तद्विरोधाभावात् । न च सन्धौ सन्देहः । व्याख्यानतो निर्णयसम्भवात् ।

ननु चतुर्दशसूत्र्यामक्षरसमाम्नाय इतिव्यवहारानुपपत्तिराम्नायसमाम्नायशब्दयोर्वेदे एव प्रसिद्धेरित्यत आह—**माहेश्वराणीति** । महेश्वरादागतानीत्यर्थः । महेश्वरप्रसादलब्धानीति फलितम् । एवञ्चैवमानुपूर्वीका श्रुतिरेवैषा । तत्प्रसादात्**पाणिनिना** लब्धा । श्रुतिमूलकत्वादस्यैव वेदाङ्गत्वम् । अत्र प्रमाणम्—

"येनाक्षरसमाम्नायमधिगम्य महेश्वरात् ।

---

मैवम्, हकारादिषु पुनःपुनरकारोच्चारणेन व्यञ्जनद्योतकत्वमकारे एव स्वीक्रियते नत्विकारादौ । तथा च "वर्णात्कारः" (का०वा०) इत्यस्य वर्णविशिष्टात्कारप्रत्यय इत्यर्थः । वैशिष्ट्यञ्च स्वनिष्ठवर्णत्वव्याप्यजात्यवच्छिन्नविशेष्यताप्रयोजकतापर्याप्त्यधिकरणघटितत्व—स्वनिष्ठवर्णत्वव्याप्यजात्यवच्छिन्नविशेष्यताप्रयोजकतापर्याप्त्यधिकरणेतराघटितत्वैतदुभयसम्बन्धेन । किशब्दादौ च द्वितीयसम्बन्धाभावान्न दोषः । न च "अल्लोपोऽनः" (पा०सू० ६-४-१३४) इतिसूत्रोदाहृतेऽन्कारोऽस्कार इत्यादौ कारप्रत्ययानुपपत्तिरिति वाच्यम् । "अनिनस्मिन्" ( प० ) इति परिभाषयाऽनादिषु वर्णबोधकत्वातिदेशात् । अन्ये तु एवकारो वषट्कार इत्यादाविव कारप्रत्ययादन्य एव कारशब्दस्तेन समास इत्याहुः ।

**उपजीव्यविरोधादिति** । अविकृताऽकारादिषु गृहीताजादिपदशक्तिः स्वोपजीव्याविकृतत्वविघातक "आद् गुणः" (पा०सू० ६-१-८७) इत्यादिप्रवृत्तिं प्रति निमित्तं न भवतीति भावः । **विरोधाभावादिति** । "आदिरन्त्येन" (पा०सू० १-१-७१) इति सूत्रबोधिता शक्तिरकारादिचान्तसमुदायघटकत्वावच्छिन्ने तादृशसमुदायघटकबोध्यत्वावच्छिन्ने वा न त्वविकृततादृशघटकत्वावच्छिन्ने तादृशघटकबोध्यत्वावच्छिन्ने वेत्यविकृतत्वमुपजीव्यमेव नास्तीति प्रकृते उपजीव्यविरोधाभावेन सन्निपातपरिभाषाया अप्रवृत्तिरिति भावः ।

**अस्यैव वेदाङ्गत्वमिति** । चिन्त्यमिदम् । पाणिनीयव्याकरणोत्पत्तेः प्राग्वेदस्य

कृत्स्नं व्याकरणं प्रोक्तम्" ( पा० शि० ५७ )

इति शिक्षावचनम् । "लण्सूत्रे णकारविषयाचार्यप्रवृत्तिर्ज्ञापयति— व्याख्यानत इति" इत्यादावाचार्यपदेन **महेश्वरः** । अनुबन्धाश्च **महेश्वरकृता** एवेत्यनुपदं स्फुटीभविष्यति । "ञमङणनम्" (मा० सू० ७) इत्यत्र मकारप्रत्याख्यानपरं **भाष्यं** तु किमदृष्टार्थमेव तदुच्चारणमुत दृष्टार्थमपीत्येवंविचारपरम् । सर्वत्र प्रत्याख्यानमेवम्परमेव । अन्यथाऽङ्गानामपि पारायणे धर्मश्रवणेन तत्र तत्र **पाणिनि**न्यासप्रत्याख्यानस्याप्यसङ्गतिः स्यात् । तदुक्तम् "इको यणचि" ( पा०सू०६-१-७७ ) इति सूत्रे—

"सामर्थ्ययोगान्नहि किञ्चिदत्र
पश्यामि शास्त्रे यदनर्थकं स्यात्" इति ।

किञ्चिद् दृष्टादृष्टार्थवत्, किञ्चिच्छुद्धादृष्टार्थवत्, सर्वथाऽनर्थकं न किञ्चिदिति तदर्थः । वृद्धिसूत्रस्थे—"वर्णेनाप्यनर्थकेन न भवितव्यम्" इति **भाष्य**ग्रन्थेऽनर्थकत्वं बोध्यार्थराहित्यरूपमिति न निष्प्रयोजनत्वरूपानर्थक्येन तत्र तत्र प्रत्याख्यानपर**भाष्या**सङ्गतिः । अत एव "सोऽयमक्षरसमाम्नायः पुष्पितः फलितश्चन्द्रतारकवत् प्रतिमण्डितो ब्रह्मराशिः" इति **भाष्य**मुपादायोक्तं **भर्तृहरिणा**—"यथैवेदमव्युच्छिन्नं चन्द्रतारकादि एवमस्याक्षरसमाम्नायस्य न कश्चिद् आधुनिकः कर्ताऽस्ति एवमेव वेदपारम्पर्येण स्मर्यमाणः" इति । आधुनिकः शरीरी । पुष्पितत्वं तन्मूलकशब्दशास्त्रद्वारेण । शब्दप्रयोगेण च फलितत्वम् । उक्तञ्चैतच्चतुर्दशसूत्रव्याख्यायां **नन्दिकेश्वरकृतकाशिकायाम्**—

"नृत्तावसाने नटराजराजो ननाद ढक्कां नवपञ्च१४वारम् ।
उद्धर्तुकामः सनकादिसिद्धानेतद्विमर्शे शिवसूत्रजालम् ॥
अत्र सर्वत्र सूत्रेषु अन्त्यं वर्णचतुर्दशम् ।

---

पञ्चाङ्गत्वापत्तेः । तैत्तिरीयशाखायामैन्द्रव्याकरणस्य प्रशंसादर्शनेन तस्यापि वेदमूलकत्वाच्च । **एवंविचारपरमिति** । एवं विचार्य शुद्धाऽदृष्टार्थमेवेत्येवंपरमित्यर्थः ।

**वर्णचतुर्दशमिति** । वर्णश्चतुर्दश इत्यर्थे आर्षं साधुत्वम् । अन्त्या वर्णाश्चतुर्दशेति क्वचित्पाठः ।

(१)धात्वर्थं समुपादिष्टं **पाणिन्यादीष्टसिद्धये** ॥" इति ।

धात्वर्थं धातुमूलकशब्दशास्त्रप्रवृत्त्यर्थम् । अत एव "अनुबन्धकरणार्थश्च वर्णानामुपदेशः" इत्युक्तं **भाष्ये**। अत्र करणशब्दप्रयोगेणानुबन्धानां सादित्वं सूचितम् । तत्करणञ्चोपदेशकर्तृकर्तृकमेव प्रत्यासत्तेः । तेन तद्व्यतिरिक्तस्य सर्वस्यानादित्वं सूचितम् । अत्र सनकाद्युद्धरणेच्छयाऽस्य ब्रह्मोपदेशरूपत्वं सूचितम् । तच्च (२)श्रुतित्वाभावे न सङ्गच्छते । "श्रोतव्यः श्रुतिवाक्येभ्यः" इत्युक्तेः । ऋक्तन्त्रव्याकरणे **शाकटायनो**ऽपि—"इदमक्षरच्छन्दो वर्णशः समनुक्रान्तं यथाऽऽचार्या ऊचुर्ब्रह्मा बृहस्पतये प्रोवाच बृहस्पतिरिन्द्रायेन्द्रो भरद्वाजाय भरद्वाज ऋषिभ्य ऋषयो ब्राह्मणेभ्यस्तं खल्विममक्षरसमाम्नायमित्याचक्षते, न भुक्त्वा न नक्तं प्रब्रूयाद् ब्रह्मराशिः" इति । ब्रह्मराशिरित्यस्य ब्रह्मप्रतिपादको वर्णराशिरित्यर्थः । तत्त्वञ्च **नन्दिकेश्वरकृतकाशिकायां** स्पष्टम् । अत एव "वृत्तिसमवायार्थो वर्णानामुपदेशः कर्त्तव्यः" इति **भाष्ये** उक्तम् । **पाणिने**र्लाघवेन शास्त्रप्रवृत्तिफलको यः समवायो वर्णानां क्रमेण सन्निवेशस्तदर्थं इति (३)तदर्थः । स चाणादिप्रत्याहारद्वारा शास्त्रप्रवृत्त्यर्थः । एवाञ्चायमुपदेशः **पाणिने**रन्यकृत इति स्पष्टमेवोक्तम् । मन्त्रोपदेश इतिवच्चात्रोपदेशपदप्रयोगः । अत एवास्य ज्ञाने सर्ववेदपारायणजं पुण्यं फलमिति **भाष्ये** उक्तम् । व्याकरणमुपक्रम्य "वेदानां वेदः" इति **छन्दोग**श्रुतिरप्येतत्परैवेति दिक् ।

---

( १ ) **धात्वर्थमिति** । सनकादिपक्षे धात्वर्थमित्यस्य क्रियावाचकपदसम्पत्त्यर्थमित्यर्थः । स्पष्टञ्चेदम्—"अः परमात्मा इम् मायामाश्रित्य उः व्यापकोऽण् आसीत्" इत्यादिना नन्दिकेश्वरकृतकाशिकायाम् ।

( २ ) **श्रुतित्वाभावे न सङ्गच्छते इति**। चिन्त्यमेतत् । गीतादीनां श्रुतित्वाभावेन ब्रह्मोपदेशत्वाऽसङ्गत्यापत्तेः । न च "श्रोतव्यः श्रुतिवाक्येभ्यः" इति स्मृतिविरोध इति वाच्यम् । श्रुतिवाक्येभ्य इत्यस्य श्रुत्यर्थप्रतिपादकवाक्येभ्य इत्यर्थकरणेनाविरोधात् ।

( ३ ) **तदर्थं इति**। अन्ये तु वृत्तिः—"आदिरन्त्येन" (पा० सू० १-१-७१) इतिसूत्रबोधितशक्तिः, तस्याः समवायः सम्यग्ज्ञानं तद् अर्थः प्रयोजनं यस्येत्यर्थ इत्याहुः ।

तत्प्रयोजनमाह—**सञ्ज्ञार्थानीति** । एतच्चोपपादितम् । सञ्ज्ञाप्रणयनञ्च लाघवेन शास्त्रप्रवृत्त्यर्थमिति बोध्यम् ।

सञ्ज्ञार्थत्वोपपत्तये आह—**एषामिति** ।

**अकारश्चेति** । तेन रप्रत्याहारसिद्धिः । अनन्त्यत्वात्पृथगुक्तिः । इदं "तुल्यास्य" ( पा० सू० १-१-९ ) सूत्रस्थ(१)**कैयटानु**रोधेन ।

परे त्वस्यानुनासिकत्वे "अतो ल्रः" ( पा० सू० ७-२-२ ) इति सूत्रे **पाणिनि**(२)र्लकारं नोच्चारयेत् । प्रत्याहारेणैव निर्वाहात् । किञ्चास्येत्सञ्ज्ञकत्वे बहुषु यण्पदघटितसूत्रेष्वर्द्धमात्रालाघवानुरोधेन (३)यप्रत्याहारे-

---

[ ( १ ) **कैयटानुरोधेनेति** । तत्र हि ऋऌवर्णयोः सावर्ण्ये 'प्राल्कारीयति' इत्यत्र वृद्धेः "उरण्रपरः" (पा० सू० १-१-५१) इति रपरत्ववारणपर "लपरं वक्ष्यामि" इति भाष्यव्याख्याऽवसरे "लण्" (मा०सू०६) सूत्रस्थाकारेण रप्रत्याहारमाश्रित्य रशब्दस्य रेफलकारोभयबोधकत्वान्न रपरत्वमित्युक्तं कैयटेन, तदनुरोधेनेत्यर्थः । वक्ष्यामि इत्यस्य च व्याख्यास्यामि इत्यर्थ इति तदाशयः । ]

( २ ) **लकारं नोच्चारयेदिति** । यत्तु "अतोल्रः" (पा०सू०७-२-२) इति सूत्रे लकारोच्चारणेन रप्रत्याहारोऽनित्यः, तेन "रषाभ्याम्" (पा०सू०८-४-१) "रदाभ्याम्" (पा०सू०८-२-४२) इत्यादौ न लग्रहणम् । अत एव 'प्रफुल्लतम्' इत्यत्र निष्ठानत्वाभावः, फुल्लतमाचष्टे 'फुल्तयति, फुल्तयतीति 'फुल्' इत्यत्र संयोगान्तलोपश्च सिद्ध] इति । तन्न । रप्रत्याहारोऽनित्य इत्यस्य यदि रनिष्ठा रेफलकारोभयनिरूपिता शक्तिरनित्येत्युच्यते तदा वैयाकरणानां मते शब्दानां नित्यत्वेन तन्निष्ठस्वरूपसम्बन्धरूपबोधजनकतारूपशक्तेरपि नित्यत्वेन तदनित्यत्वस्य वक्तुमशक्यत्वात् । शक्तिज्ञानतदधीनोपस्थित्यादीनां द्विक्षणावस्थायित्वेन तदनित्यत्वकथनस्याप्यनुपयुक्तत्वेन रप्रत्याहारोऽनित्य इत्यस्य तन्निष्ठशक्तिज्ञानादिकमनित्यमित्यर्थस्य वक्तुमशक्यत्वात् । न च रप्रत्याहारोऽनित्य इत्यस्य रपदं सर्वत्र रल इत्युभयतात्पर्येण नोच्चारितमित्यर्थ इति न दोष इति वाच्यम् । क्वोभयतात्पर्येणोच्चारितं क्व च नेत्यस्य व्याख्यानत एव निर्णेयत्वेन "उरण् रपरः" (पा०सू० १-१-१५१) इत्यत्र "अतो ल्रः" (पा०सू०७-२-२) इत्यत्र च रपदं रेफलकारोभयतात्पर्येणोच्चारितमन्यत्र नेति व्याख्यातुं शक्यत्वेन पुनरपि लकारोच्चारणवैयर्थ्यापत्तेः । ( ३ ) **यप्रत्याहारेणैव व्यवहरेदिति** । न च पर्यायपदानां लाघवगौरवचर्चा नाद्रियते इतीदमसङ्गतमिति वाच्यम् । "लण्" (मा०सू०६) सूत्रे णकारोच्चारणं न कर्तव्यमिति ग्रन्थतात्पर्येण यण्पदयपदयोः पर्यायत्वाभावेन परिभाषाया अप्रवृत्त्या ग्रन्थसङ्गतेः ।

णैव व्यवहरेत् । (१)किञ्चानुबन्धानामच्प्रत्याहारे ग्रहणाभावे "आचारादप्रधानत्वाल्लोपश्च बलवत्तरः" इति भाष्योक्तस्य (२)तृतीयहेतोरव्यापकत्वापत्तिः । तव लोपस्य बलवत्त्वेऽपि हल्प्रत्याहारसिद्धेः प्रागच्पदार्थनिष्पत्त्यभावेन "उपदेशेऽज्" (पा० सू० १-३-२) इत्यस्य वाक्यार्थाभावेन लणित्यकारस्येत्सञ्ज्ञालोपयोरभावेन प्रत्याहारेषु जातिग्रहणपक्षस्यैव

---

[ नन्वेवमिण्प्रत्याहारस्य अकारेणैव भावाद् यप्रत्याहारो भवेत् । ततश्च प्रत्याहारग्रहणेषु इकारमारभ्यायं यकारमारभ्य वेति सन्देहप्रसङ्गः । न च व्याख्यानतो निर्णयो भविष्यतीति वाच्यम् । सर्वत्रैवं व्याख्यानतो निर्णये शास्त्रस्याकिञ्चित्करत्वात् । इतोऽरुचेराह—(१)किञ्चेति । ]

( २ ) अव्यापकत्वापत्तिरिति । न च हेतोरव्यापकत्वं गुणः । व्यापकत्वे हि हेतुर्व्यभिचारी स्यादिति वाच्यम् । हेतोरव्यापकत्वापत्तिरित्यस्य पक्षतावच्छेदकाव्यापकत्वापत्तिरित्यर्थः । तथा च हेतोः पक्षतावच्छेदकाव्यापकत्वे भागासिद्ध्या भाष्यासङ्गतिरित्याशयात् ।

अत्रानुमानञ्चेत्थम्—अनुबन्धाः प्रत्याहारजन्यबोधविषयत्वाभाववन्तः "तस्य लोपः" (पा०सू० १-३-९) इति शास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वात् । न च "अइउण्" (मा०सू० १) इत्यादिस्थणकारादिष्वल्प्रत्याहारजन्यबोधविषयत्वस्य हल्प्रत्याहारजन्यबोधविषयत्वस्य च सत्त्वेन प्रकृतसाध्यस्याभावेन प्रकृतहेतोश्च सत्त्वेन प्रकृतहेतुर्व्यभिचारीति न तेन साध्यसिद्धिरिति वाच्यम् । स्वेतरो यः स्ववृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्नः तदबोधकप्रत्याहारजन्यबोधविषयत्वाभावस्य साध्यत्वेन अल्हल्प्रत्याहारयोश्चानुबन्धणकारादीतरस्ववृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्न "ञमङणनम्" (मा०सू०७) इत्यादिघटकणकारादिबोधकत्वेन तयोः प्रकृतसाध्यदलस्थप्रत्याहारपदग्रहणानर्हत्वेनादोषात् । [ एतेन "उक्तमनुमानं प्रत्युच्चारणं शब्दाभेदपक्षे भेदपक्षे वा ? नाद्ये, "ऋऌक्" (मा०सू० २) सूत्रस्थककारस्य "कपय्" (मा० सू०१२) सूत्रस्थककारस्य चाभेदेन "कपय्"सूत्रस्थककारस्य प्रत्याहारेऽग्रहणापत्तेः । नान्त्ये, "इको यणचि" (पा०सू० ६-१-७७) इति सूत्रस्थककारस्यानुबन्धत्वाभावेन तस्य भानप्रसङ्गात्" इत्यपास्तम् । 'तदबोधक' इत्यस्य तद्विषयकबोधजनकत्वप्रकारकतात्पर्यविषयकनिश्चयाविषयेत्यर्थः । तेनानुमानात्पूर्वं प्रत्यहाराः अनुबन्धबोधकाः तदबोधका वा इति निश्चयाभावेन साध्यशरीरे तदबोधकेतिनिवेशे स्वाश्रयापादनं निरस्तम् । ]

न च "लण्" (मा०सू०६) सूत्रस्थाकारेऽच्प्रत्याहारसिद्धेः प्रागनुबन्धत्वस्यैवाऽभावेन न हेतोः पक्षतावच्छेदकाव्यापकत्वापत्तिरिति वाच्यम् । लोपशास्त्रीयोद्देशताव-

**भाष्य**कृता सिद्धान्तिततत्वेन हल्प्रत्याहारे लणित्यकारप्रवेशे 'मामाँस्त्रायस्व' इत्यत्रानुनासिकपक्षेऽनुस्वारापत्तिर्दुर्वारा, 'सोऽस्ति' इत्यादौ (१)सुलोपाद्यापत्तिश्च । अत एव—

"प्रत्याहारेऽनुबन्धानां कथमज्ग्रहणेषु न ।"

इत्यनेन प्रत्याहारे वर्णसमाम्नाये य एतेऽक्षु अज्बोधकसूत्रेषु प्रत्याहारार्था अनुबन्धाः क्रियन्ते तेषामज्ग्रहणेन ग्रहणं कस्मान्नेत्यर्थकेनाच्प्रत्याहारे शङ्का कृता, न (२)हल्प्रत्याहारे । **भाष्ये** च "अइउण्" ( मा० सू० १ ) इत्यादिसूत्रचतुष्टयोपादानेनैवास्य प्रवृत्तिर्दर्शिता । तत्र प्राधान्यं प्रत्याहारेषु ग्रहणार्थत्वरूपं, हल्षु च तथोपदेशस्तेषाम्, अक्षु तु स्वराणा-

---

च्छेदकेत्संज्ञकत्वरूपानुबन्धत्वस्य हेतुत्वेन तस्य पक्षतावच्छेदकत्वासम्भवेन तदुपलक्षितस्य णकाराद्यन्यतमत्वस्यैव पक्षतावच्छेदकत्वेन तस्य चाच्प्रत्याहारसिद्धेः प्रागपि सत्त्वेन इत्संज्ञकत्वहेतोः तदव्यापकत्वस्य दुर्वारत्वादिति दिक् ।

( १ ) **सुलोपाद्यापत्तिश्चेति** । न च "एतत्तदोः" (पा०सू०६–१–१३२) इतिसूत्रारम्भसामर्थ्येनाकारस्य हल्त्वं नेति कल्प्यते, अन्यथा 'एष विष्णुः' 'स शम्भुः' इत्यादौ हलः परत्वेन हल्ङ्यादि (पा०सू०६–१–६८) लोपेन सिद्धेः "एतत्तदोः" (पा०सू०६–१–१३२) इति सूत्रवैयर्थ्यस्य स्पष्टत्वादिति वाच्यम् । तद्वैयर्थ्येन लाघवात् "लण्" (मा०सू०६) सूत्रस्थाकारानुनासिक्याप्रामाण्यकल्पनस्यैव ज्यायस्त्वात् । न चैवमपि रेफादिषु जातझल्त्वादेरिव "लण्" (मा०सू०६) सूत्रस्थाकारे जातहल्त्वस्यापि निवृत्तिर्भविष्यतीति न दोषः, अन्यथा झल्प्रत्याहारसिद्धिवेलायां द्वितीय "हलन्त्यम् ( पा० सू०१–३–३) इत्यस्य वाक्यार्थबोधाभावेन "शषसर्" (मा०सू०१३) इत्यत्रत्यरेफस्येत्संज्ञालोपयोरभावेन झल्ग्रहणेन तद्ग्रहणे 'गीर्भ्याम्' इत्यादौ जश्त्वाद्यापत्तिरिति वाच्यम् । इत्संज्ञालोपाभ्यां झल्त्वादेर्निवृत्तावप्युपजीव्यविरोधेन हल्त्वस्यानिवृत्तेः । "लण्" (मा०सू०६) सूत्रस्थाकारवृत्तिहल्त्वनिवृत्तिं प्रति निमित्तयोः "उपदेशेऽजनुनासिक इत्" (पा०सू०१–३–२) "तस्य लोपः" (पा०सू०१–६–९) इतीत्संज्ञालोपयोः हल्त्वमुपजीव्य प्रवर्तमानत्वात् । वस्तुतस्तु "लण्" (मा०सू०६) सूत्रस्थाकारस्याऽऽनुनासिक्येऽपि भाष्योक्ततृतीयहेतोर्नाव्यापकत्वापत्तिः । णकाराद्यन्यतमत्वशरीरे "लण्" (मा०सू०६) सूत्रस्थाकारभेदं निवेश्य अव्यापकत्वापत्तिदानस्यानुचितत्वात् । "तस्य लोपः" (पा०सू०१–३–९) इति शास्त्रीयोद्देश्यतावच्छेदकाक्रान्तियोग्यत्वस्य हेतुत्वविवक्षणेन चाव्यापकत्वापत्तेरभावाच्च ।

( २ ) **न हल्प्रत्याहारे इति** । वस्तुतो नेदमपि साधकं "लण्" (मा० सू० ६)

मेव तथोपदेश इति प्राधान्या(१)त्तेषामेव सञ्ज्ञित्वमिति **भाष्ये** स्पष्टम्। न च हशादिप्रत्याहारे टग्रहणस्यापत्तिरिति वाच्यम्। हकारादिषु पुनः-पुनरकारोच्चारणेन उच्चारणार्थवर्णरहितहलां तद्घटितप्रत्याहारे ग्रहणाभावस्य वक्तुं शक्यत्वात्; तद्विषयप्रयोगाणामनभिधानाच्च। तस्मादस्यानुनासिकत्वमप्रामाणिकम्। "उरण् रपरः" (पा० सू० १–१–५१) इत्यत्र लग्रहणं कर्तव्यमेव। ऋलृवर्णयोः सावर्ण्यवदित्याहुः।

ननु "हय" (मा० सू० ५) इत्यादावकारोच्चारणेन तस्य हल्त्वप्रसङ्गोऽत आह—**हकारादिष्विति**। "न पुनरन्तरेणाचं व्यञ्जन-

---

सूत्रस्थाकारस्याऽऽनुनासिक्याभावे, इगादिप्रत्याहारे शङ्काया अकरणवद्धल्प्रत्याहारे शङ्काया अकरणेऽपि क्षतिविरहात्। वक्ष्यमाणानामप्रधानत्वादिहेतूनां सामान्यतःप्रत्याहारजन्यबोधविषयत्वाभावसाधकत्वेन अज्ग्रहणेषु नेत्यत्र "अच्" इति प्रत्याहारमात्रोपलक्षणमित्यवश्यं वक्तव्यत्वाच्च "न चोदाहरणमादरणीयम्" इत्यभियुक्तोक्तेश्च। न च हल्षु चेत्युक्तयाऽप्राधान्यादिति हेतोः "हयवरट्" (मा० सू० ५) इत्यादिस्थानुबन्धेष्वभावेन सामान्यतः प्रत्याहारजन्यबोधविषयत्वाभावसाधकत्वमस्य नैवास्तीति वाच्यम्। अनुबन्धानां महेश्वरकृतत्वेन तदितरस्य च वेदघटकत्वेन प्राधान्यमिति "हयवरट्" (मा०सू०५) इत्यादिसूत्रस्थानुबन्धेष्वपि अप्राधान्यस्य सत्त्वात्। न चैवमपि "स्वौजसमौट्" (पा०सू०४–१–२) इत्यादिसूत्रस्थाऽनुबन्धेष्वप्राधान्याभावेन न सामान्यतः प्रत्याहारजन्यबोधविषयत्वाभावसाधकत्वमस्येति वाच्यम्। अप्राधान्यादिति हेतोः सामान्यतः प्रत्याहारजन्यबोधविषयत्वाभावसाधकत्वाभावेऽपि लोपादिति हेतोराचारादिति हेतोश्च सामान्यतः प्रत्याहारजन्यबोधविषयत्वाभावसाधकत्वेनाऽऽस्पदं प्रत्याहारमात्रोपलक्षणमिति वक्तुं शक्यत्वात्; सुबादिप्रत्याहारेऽनुबन्धग्रहणे क्षतिविरहाच्च। एवं भाष्ये "अइउण्" (मा०सू०१) इत्यादिसूत्रचतुष्टयोपादानं प्रत्याहारनियामकसूत्रमात्रोपलक्षणम्। [एवं च हलादिप्रत्याहारे नाकारस्य ग्रहणम्। हलादिषु वर्णसमूहस्य, वर्णयोः, प्रतिवर्णं वा मध्यत्वमिति विचारे बोध्यत्वेनाचार्यतात्पर्यविषयत्वमुच्चारणार्थकाकारयुक्तस्यैवेति प्रतिव्यञ्जनोत्तरमकारदर्शनेनाचार्यशैल्या तादृशस्यैव मध्यत्वबोध्यत्वदर्शनाच्च। "अतो ल्रान्तस्य" (पा०सू०७–२–२) इत्यत्र व्याख्यानानपेक्षप्रतिपत्तये स्पष्टार्थं लकारग्रहणमिति लण्सूत्रस्थाकारस्यानुनासिकत्वे न किञ्चिद्बाधकम्। लण्सूत्रस्थाकारस्य तत्र ग्रहणं तु तत्रत्याकारस्यानुनासिकत्वे प्रत्याहारार्थत्वेऽप्युच्चारणार्थत्वमपीति तद्युक्तत्वस्याक्षतत्वात्। "उरण् रपरः" (पा०सू०१–१–५१) इत्यत्र च लग्रहणं न कर्तव्यं भवतीति गुरुचरणाः]। (१)**तेषामेव संज्ञित्वमिति**। अन्ये तु "आदिरन्त्येन" (पा०सू०१–१–७१) इत्यत्र श्रुत्यादिसाजात्याच्छु-

स्योच्चारणमपि भवति" इति "उच्चैरुदात्तः" ( पा० सू० १-२-२९ ) इतिसूत्रस्थभाष्यात् "एषा ह्याचार्यस्य शैली लक्ष्यते, यत्तुल्यजातीयांस्तुल्यजातीयेषूपदिशति, अचोऽक्षु हलो हल्षु" इति प्रत्याहारेऽनुबन्धानामित्यत्र भाष्याच्चेति भावः ।

स्यादेतत् । "न विभक्तौ" (पा० सू० १-३-४ ) इत्यादेः सार्थक्याय "हलन्त्यम्" ( पा० सू० १-३-३ ) इत्यस्योपदेशेऽन्त्यं हल् इदित्यर्थस्यावश्यकत्वेन "हलन्त्यम्" ( पा० सू० १-३-३ ) "आदिरन्त्येन" ( पा० सू० १-१-७१ ) इत्यनयोः परस्परापेक्षत्वेना(१)न्योन्याश्रयाल्लकारे इत्सञ्ज्ञामबोधयित्वा हलामित्सञ्ज्ञाबोधनं **पाणिनेरयुक्तम्** । न च "हयवर" ( मा० सू० ५ ) इत्यादेरावृत्त्या "शषसर्" ( मा० सू० १३ ) इत्यन्तं समुदायमुद्दिश्य "हल्" ( मा० सू० १४ ) इत्यनेन हल्सञ्ज्ञाऽपि विधेयेति वाच्यम् । दशसूत्राऽऽवृत्तौ (२)गौरवात् ।

ननु "उपदेशे इदन्त्यम्, अच्, अनुनासिकः" इति सूत्रत्रयमस्तु, अजित्यनन्त्यार्थम्, तृतीयेऽजित्यनुवृत्तिसामर्थ्यादचेदिद्भवति तर्ह्यनुनासिक एवेति नियमाश्रयणाद्रुप्रभृतौ न दोषः, योगविभागसामर्थ्याच्चानन्तरस्येति न्यायं बाधित्वा व्यवहितस्यापि तेन नियमः, "मिदचोन्त्यात्" ( पा० सू० १-१-४७ ) इति ज्ञापकाच्च न विपरीतनियमः, एवञ्च हल्ग्रहणमपि व्यर्थमन्योन्याश्रयश्च न । न च पाणिनिसूत्रभेदे पारायणादावदृष्टहानिः । तथा च तत्र तत्र भाष्यम्—"अपाणिनीयन्तु भवति"—इति वाच्यम् । कल्प्यमानन्यासस्य लघुत्वेऽस्यादोषत्वात् । "सूत्रभेदं तमुपाचरन्ति यत्र तदेवाऽन्यत् सूत्रं क्रियते भूयो वा, यदि तदेवोपसंहृत्य क्रियते नासौ सूत्र-

---

तिघटकानामेव हलादिसंज्ञा, नाऽनुबन्धानाम् । अत एव हशादिप्रत्याहारे न टग्रहणपत्तिरित्याहुः ।

( १ ) **अन्योन्याश्रयादिति** । स्वज्ञप्त्यधीनज्ञप्त्यपेक्षत्व-स्वाधीनोत्पत्तिकापेक्षत्वान्यतरवत्त्वमन्योन्याश्रयसामान्यलक्षणम् । (२)**गौरवादिति** । चिन्त्यमिदम् । गौरवस्य सापेक्षत्वेनान्योन्याश्रयपरिहारान्तरस्याऽद्याप्यदर्शितत्वेनैतच्छङ्कासमाधानादेरसङ्गतत्वात् । तस्मात् 'पाणिनेरयुक्तम्' इत्यस्यानन्तरम् 'अतः सूत्रावृत्त्या तं परिहरति—हल-

भेदः" इति, "अच उपसर्गात्तः" (पा० सू० ७–४–४७) इति सूत्रभाष्यात् । नासौ सूत्रभेद इत्यस्य दोषाय इति शेषः । सति सम्भवे दृष्टद्वारैवाङ्गानाम(१)दृष्टार्थत्वमिति तदाशयः। अत एव तत्र तत्र ज्ञापकपरसकलभाष्योच्छेदो नेति चेन्न । योगविभागनियमज्ञापकाश्रयणेऽतिगौरवात् । न हि वर्णाभिव्यक्तिजनककण्ठाद्यभिघातगौरवमेवादर्त्तव्यं, न तु ज्ञानजनकमनोव्यापारगौरवमिति राजाज्ञाऽस्ति । न च सह आसमन्ताद् एति गच्छतीति सहेता मध्यमो वर्ण इत्यर्थ इति, अतो नान्योन्याश्रय इति वाच्यम् । अन्योन्याश्रयतत्परिहारादीन् वदता भाष्यकारेण "कटी" ( भ्वा० धा० ३२० ) "वी" ( भ्वा० धा० १०४८ ) इत्यत्र प्रश्लिष्टात् "ईङ् गतौ" ( दि० धा० ११४३ ) इत्यतश्च सह—आङ्—पूर्वात्तृजभावबोधनात् । किञ्च योगमर्यादया तत उक्तार्थालाभः । आसमन्तादित्यस्यानन्वितार्थत्वं व्यर्थत्वञ्च । रूढौ तु न मानमतः सूत्रावृत्त्या तं परिहरति—

**हलन्त्यमिति ।**

भाष्येऽप्यन्योन्याश्रयमाशङ्क्य "हलन्त्यमित्सञ्ज्ञं भवति लकारश्चेद्भवतीति वक्तव्यम्" इत्युक्त्वा "एकशेषनिर्देशाद्वा सिद्धम्—हल् च हल् च हल्, हलन्त्यमित्" इत्युक्तम् । तस्यायं भावः—कृतैकशेषेण हल्पदेन सम्बन्धसामान्यषष्ठ्या समासोऽन्त्यशब्दस्य च द्वन्द्वान्ते श्रूयमाणस्येवोभयत्रान्वयः । एवञ्च हल्सूत्रान्त्यं हल्रूपान्त्यं चेति बोधः । अन्त्ये "राहोः शिरः" इतिवत् षष्ठीति । अत्रोच्चारयितुरेकशेषनिर्देशो बोद्धुस्त्वावृत्त्या बोधः । हसमीपो लकार इत् हल्रूपान्त्यश्चेति **कैयटो**क्तव्याख्यायां तु हल् इत्सञ्ज्ञं भवति हलन्त्यश्चेदिति वदेदित्यूह्यम् ।

नन्वेवमपि "न विभक्तौ" (पा० सू० १–३–४) इति विभक्तिपदबोध्यसुप्तिङ्बोधो "हलन्त्यम्" (पा० सू० १–३–३) इति वाक्यार्थबोधोत्तरं, तद्बोधश्चापवादवाक्यार्थबोधोत्तरमित्यन्योन्याश्रयस्तदवस्थ एवेति चेत् ।

---

न्त्यमिति' इति लेखनीयम्। तदनन्तरं न चेत्यादिशङ्कासमाधी । (१) **अदृष्टार्थत्वमिति ।** वस्तुतस्तु एवमेव न्यासः पाणिनिना, कस्मान्न कृत इति पूर्वपक्ष्याशय इति नाऽपाणिनीयत्वशङ्कालेशः । एवमेव सर्वेषु लघुन्यासपूर्वपक्षेषूह्यमिति दिक् ।

न, अपवादवाक्यार्थबोधात्पूर्वं पदपदार्थोपस्थितावुत्सर्गवाक्यार्थबोधे, प्रतिबन्धकाभावात्। न ह्यभावज्ञाने (१)प्रतियोगिज्ञानस्यैव प्रतियोगिज्ञानेऽभावज्ञानस्य कारणता कस्यापि सम्मता। प्रतियोगिज्ञानं विना (२)निषेधवाक्यार्थासम्भवाच्च।

"पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गाः" इत्यस्य त्वयं भावः—लक्षणैकचक्षुष्कः उद्देश्यतावच्छेदकावच्छिन्ने सर्वत्रोत्सर्गकृतसंस्कारबुद्धावुत्सर्गापवादयोर्विषयव्यवस्थानापत्त्या भुक्तवन्तं प्रति 'मा भुक्था' इति वाक्यस्येवापवादशास्त्रवैयर्थ्यापत्त्या चापवादशास्त्रपर्यालोचनेन तद्विषयलक्ष्यसंस्कारं निर्णीय तदविषयं तत्तल्लक्ष्यं तत्तद्विषयवाक्योपप्लवद्वारोत्सर्गेण संस्करोति, अन्यथा विकल्पापत्तिरिति। यद्यपि "भुक्तवन्तं प्रति" इति न्यायो लुगादिना जातनिवृत्तेर्व्यभिचरितस्तथापि (३)तत्राप्यनुत्पत्तिरेवेति न दोषः,

---

(१) **प्रतियोगिज्ञानस्यैवेति।** चिन्त्यमिदम्। अभावः पदार्थोऽभावः प्रमेयोऽभावश्चतुर्विध इत्यादौ प्रतियोगिज्ञानाभावेऽपि अभावज्ञानस्य जायमानत्वेनाभावज्ञाने प्रतियोगिज्ञानत्वेन कार्यकारणभावस्याप्रामाणिकत्वात्। न च प्रतियोगिविशेषिताऽभावज्ञानं प्रतियोगिज्ञानमन्तरा न सम्भवतीति प्रतियोगिज्ञानं प्रतियोगिविशेषिताभावज्ञानम्प्रति कारणम्। तथा च मूलस्थाभावज्ञाने इत्यस्य प्रतियोगिविशेषिताभावज्ञाने इत्यर्थ इति नासङ्गतिरिति वाच्यम्। विशिष्टबुद्धौ विशेषणज्ञानत्वेन कार्यकारणभावस्य क्लृप्ततया तेनैव प्रतियोगिविशेषिताभावबुद्ध्युपपत्तौ निरुक्तकार्यकारणभावस्य निर्युक्तिकत्वात्।

अन्ये तु नञ्पदार्थतावच्छेदकं यद्विलक्षणं रूपं तेन रूपेणाभावज्ञानं प्रतियोगिज्ञानमन्तरा न सम्भवति, अत एव नेत्युक्तौ किन्नेति जिज्ञासाऽवश्यमुदेति, तथा चाऽभावज्ञानस्येत्यस्य नञ्पदवाच्यतावच्छेदकविलक्षणरूपेणाभावज्ञानस्येत्यर्थ इति नासङ्गतिरित्याहुः।

(२) **निषेधवाक्यार्थासम्भवाच्चेति।** इदमपि चिन्त्यम्। "न विभक्तौ" (पा० सू० १-३-४) इत्यादावित्पदस्यानुवृत्तत्वेन श्रवणेन्द्रियेणैव प्रतियोगिज्ञानस्य जायमानत्वेन पाणिनिसङ्केतसम्बन्धावच्छिन्नेत्पदत्वावच्छिन्नप्रतियोगिताकाभावत्वेन "हलन्त्यम्" (पा०सू०१-३-३) इति वाक्यार्थबोधात्प्रागपि "न विभक्तौ" (पा०सू०१-३-४) इत्यादेः शाब्दबोधसम्भवाद् निषेधसाफल्याय निषेध्यबोधसापेक्षत्वेऽपि निषेधवाक्यार्थबोधम्प्रति निषेध्यवाक्यार्थस्य कारणत्वे मानाभावाच्च।

(३) **तत्राप्यनुत्पत्तिरेवेति।** न च 'भव' इत्यादौ हेर्लुक्यपि सिपः श्रवणं स्यात्, एवं रीत्या सर्वत्रादेशस्य लुकि स्थानिनः श्रवणापत्तिरिति वाच्यम्। लुग्विधायकशा-

न्यायानङ्गीकारेऽपि विकल्पापत्तेः सत्त्वाच्च । 'अभिनिविशन्ते' इत्यस्य बुद्ध्यारूढा भवन्तीत्यर्थः । लक्ष्यैकचक्षुष्कस्तु तत्तच्छास्त्रपर्यालोचनं विनापि अपवादविषयं परित्यज्योत्सर्गेण लक्ष्यसंस्कारज्ञानीति, तस्यापि शास्त्रप्रक्रियास्मरणपूर्वकप्रयोगे एव धर्मोत्पत्तेः । तदुक्तम्—"प्रकल्प्य चापवादविषयं तत उत्सर्गः प्रवर्तते" इति । प्रकल्प्य—परित्यज्य ।

यत्तु प्रकल्प्य चेत्यस्यायमर्थः—यथा "न सम्प्रसारणे" ( पा० सू० ६।१।३७ ) इति वचनात् परस्य यणः पूर्वं सम्प्रसारणं पूर्वस्य तु तन्निमित्तः प्रतिषेधः इति अभ्यस्तसञ्ज्ञासूत्रे **कैयटः** । तन्न, "न सम्प्रसारणे" ( पा० सू० ६।१।३७ ) इति सूत्रस्थभाष्यविरोधात् । तत्र हि "एतदेव ज्ञापयति परस्य न पूर्वस्येति । यद्वा(१)"सम्प्रसारणाश्रयस्य प्रतिषेध" इत्याद्युक्तम् । न हि न्यायेन सिद्धे एवमुक्तिरुचिता । तस्मात् न्यायस्य मदुक्त

---

स्त्राणां तात्पर्यग्राहकत्वं स्वीकृत्य तत्तदादेशविधायके "सेर्ह्यपिच्च ( पा० सू० ३।४।८७ ) इत्यादौ लोट्स्थानिकसिप्त्वाद्यवच्छिन्नस्य स्थानेऽदन्ताङ्गाव्यवहितोत्तरत्वाभावविशिष्टो हित्वाद्यवच्छिन्नो भवतीति अभ्यासत्वावच्छिन्नमुद्दिश्याऽऽदीतरहल्निवृत्तिपूर्वकाऽऽदिर्हल् शिष्यते इति "हलादिश्शेषः" ( पा० सू० ७।४।६० ) इत्यत्रेवार्थस्वीकारेण सिप्त्वावच्छिन्नस्य स्थानित्वेन तन्निवृत्तिर्भवतीत्यदोषात् । "लुग्वा दुह" ( पा० सू० ७।३।७३ ) इत्यादिविभाषालुग्विषये च दन्त्याद्यात्मनेपदाव्यवहितपूर्वत्वविशिष्टदुहाद्यव्यवहितोत्तरत्व—स्वाभावत्वैतदन्यतरविशिष्टक्सत्वावच्छिन्नः च्लित्वावच्छिन्नस्य स्थाने भवतीति यत्र क्सोऽनुत्पन्नस्तत्रत्यं दुहाद्यव्यवहितोत्तरत्वाभावसामानाधिकरण्यमादाय क्स–तदभाव एतदन्यतरघटितं रूपं भवतीति च्लित्वावच्छिन्नस्य स्थानित्वेन तस्य कुत्रापि श्रवणं न भवतीति न दोषः । वस्तुतस्तु लुक्यनुत्पत्तेरन्वाख्यानं चिन्त्यमेव । अन्यादेशेष्विव स्थानिघटितस्य साधुत्वबुद्धिः प्रसक्ता आदेशघटितस्येति जातनिवृत्तेरभावेन "भुक्तवन्तं प्रति" इति न्यायविषयत्वाभावात् । भावरूपादेशविषये च स्थानपदार्थोऽन्यादृशः लुग्विषये चान्यादृश इत्यत्र प्रमाणाभावात् । भावादेशविषये च भावघटिते साधुत्वम्, लुगादिविषये चाभावघटिते साधुत्वं बोध्यते इत्येव विशेष इति दिक् ।

(१) **सम्प्रसारणाश्रयस्य प्रतिषेध इति** । "न सम्प्रसारणे" ( पा०सू० ६।१।३७ ) इति सूत्रमकृत्वा "सम्प्रसारणाच्च" (पा०सू० ६।१।१०८) इत्यत्र "सम्प्रसारणादसम्प्रसारणे" इति न्यासं कृत्वा पूर्वरूपमेव निषेद्धव्यमिति भावः । न च 'एष यूनः पश्य' इत्यत्र यणादेशस्य स्थानिवद्भावात् "एतत्तदोः" ( पा० सू० ६।१।१३२ )

एव विषय इति बोध्यम् । यदपि "अपवादवाक्यार्थं विना नोत्सर्गवाक्यार्थ इति तदर्थः" इति । तदपि न । उक्तयुक्तेः । "न विभक्तौ तुस्माः" ( पा० सू० १।३।४ ) इति शास्त्रे तुस्मपदार्थज्ञानमात्रेण पादीनामेव तद्विषयत्वाभावबुद्ध्या तेषु हलन्त्यसूत्रप्रवृत्त्या सुप्तिङ्रूपविभक्तिपदार्थज्ञानं सुलभमिति दिक् । अत्राप्युपदेश इति सम्बध्यते । तद्बललभ्यमर्थमाह—**सूत्रे इति ।**

**आदिरन्त्येन** ( पा० सू० १।१।७१ ) । आदिरिति किम् ? अन्त्यशब्देन पूर्वेषामाक्षेपादिगादिप्रत्याहारेऽकारादिग्रहणं मा भूदिति । एवमादिशब्देन परेषामाक्षेपादिणादिप्रत्याहारेषु ञादीनां ग्रहणं मा भूदित्यन्त्येनेति । आदिः अन्त्येन इत्युभयोपादाने तु न दोषः । अयमादिरन्त्यो वेत्युक्तेऽवशिष्टमपि किञ्चिदस्तीति नियमेन प्रतीतेः । परस्मिन् सति(१)यस्मात्पूर्वो नास्ति स आदिः, पूर्वस्मिन् सति यस्मात्परो नास्ति सोऽन्त्य इति अकारादिग्रहणे इकारणकारादीनामाद्यन्तत्वस्यैवानापत्तेः । अत्राद्यन्ताभ्यामवयवत्वेन बोधकाभ्यां स्वघटितः समुदाय आक्षिप्तः सञ्ज्ञी । तस्य चैकत्र लक्ष्ये प्रयोगाभावात्प्रत्येकं सञ्ज्ञित्वम् । अन्त्यस्य तु न तत्कार्यम् । तस्येत्संज्ञालोपाभ्यामपहारात् । एतत्फलितकथनमेव भाष्ये मूले च—**स्वस्य च रूपस्य इति ।** स्वमित्यनुवृत्तिपरत्वेन व्याख्यानं तु हेयमेव । अनुवृत्तौ फलाभावात् । इतेति किम् ? "ञमङणन" ( मा० सू० ७ ) इति णकारादिभिः प्रत्याहारो मा भूदिति । सहग्रहणाच्च(२)समुदाय एव सञ्ज्ञेति समुदायादेव

---

इति लोपो न स्यात् हल्परकत्वाभावात् इति वाच्यम् । "सम्प्रसारणाश्रयस्य प्रतिषेधः" इति भाष्यप्रामाण्येनैतादृशप्रयोगाणामनभिधानात् ।

(१)**यस्मात्पूर्वो नास्तीति** । स्वघटकत्व–स्वघटकवर्णध्वंसाधिकरणक्षणावृत्त्युत्पत्तिकत्वैतदुभयसम्बन्धेन समुदायविशिष्टत्वमादित्वम् । एवं स्वघटकत्व—स्वघटकवर्णप्रागभावाधिकरणक्षणावृत्त्युत्पत्तिकत्वैतदुभयसम्बन्धेन समुदायाविशिष्टत्वमन्त्यत्वं फलतीति तत्त्वम् । (२)**समुदाय एव संज्ञेति** । 'इक्' इत्यादिसमुदायः संज्ञेत्यर्थः । परे तु-सहग्रहणाच्चाऽऽदिरेव संज्ञा । नन्वादिरेव संज्ञा चेदिक इत्यादौ विशिष्टाद्विभक्तिरनुपपन्नेत्यत आह–**समुदाय एव संज्ञेति** । समुदाय इति सप्तम्यन्तं, संज्ञेत्यस्य प्रातिपदिकंसंज्ञेत्यर्थः । तथा च सहग्रहणेनेतां तात्पर्यग्राहकत्वबोधनेनाऽर्थवत्सूत्रोक्तार्थवत्त्वस्य

"इकः" इत्यादौ विभक्त्युत्पत्तिर्नादिमात्रात् । न चान्त्यस्येत्सञ्ज्ञालोपाभ्यामपहारात् "आदिरन्त्येन" ( पा० सू० १।१।७१ ) इत्यसङ्गतम् । सूत्रेष्वित्सञ्ज्ञायामपि इगादिशब्देषु तदभावात् । अन्त्येनेत्यस्येदन्त्यसदृशेनेत्यर्थात् , व्यक्तिपक्षे एवमेवौचित्यात् , सादृश्यमूलिकैव चात्र तत्त्वप्रत्यभिज्ञेत्याहुः । "अचिश्नुधातु" ( पा० सू० ६।४।७७ ) इति सूत्रे(१)इण इत्येव सिद्धे य्वोरिति निर्देशादिण् परेणैवेति "लण्" ( मा० सू० ६ ) सूत्रे भाष्ये स्पष्टम् ।

**हलन्त्यम्** ( पा० सू० १।३।३ ) । अत्र पदद्वयं, समासेऽन्त्यशब्दस्य पूर्वनिपातापत्तेः(२)कर्मधारययोग्यपदानां समासाभावस्य सूत्रकारशैलीसिद्धत्वाच्च । यद्यपि सर्वोऽपि हल् तं तं समुदायं प्रत्यन्त्यो भवति तथाप्यन्त्यपदोपदेशपदाभ्यां प्रत्यासत्त्या(३)ऽज्ञातस्वस्वरूपज्ञापकोच्चारणविषयसमुदायं प्रत्यन्त्य इह गृह्यते । अत एव मकारेत्सञ्ज्ञापरित्राणार्थस्त्थमोरुकारश्चरितार्थः । समुदायोपदेश एव सर्वत्र ऋषितात्पर्येणावयवानां नान्तरीयकतया तेषामज्ञातस्वस्वरूपज्ञापकत्वाभावात् । **उपदेशेऽन्त्य इति ।** तत्र विद्यमानमन्त्यमित्यर्थः । तेन "अइउण्" ( मा० सू० १ ) इत्यादौ णादीनां हल्प्रत्याहारसिद्ध्युत्तरं तत्सिद्धिः । अन्यत्र त्वन्तरङ्गत्वात्प्राय उच्चारणेनाभिव्यक्तस्य तदव्यवधानेनैवेत्सञ्ज्ञा । पदार्थोपस्थितिरनुबन्धविनिर्मुक्त-

---

समुदाये एव सत्त्वेन नाऽऽदिमात्राद्विभक्त्युत्पत्तिरिति । अत एव "प्रत्याहाराद्यवर्णेषु "अणुदित्" ( १।१।६९ ) सूत्रं चरितार्थम्" इति तत्रतत्रत्यग्रन्थः सङ्गच्छते । अन्यथेगादिपदेष्विकारादेरनर्थकत्वेन ककारादिचिह्नेन तस्याण्त्वेऽप्यष्टादशानां बोधो न स्यादिति "अणुदित्" ( पा० सू० १।१।६९ ) सूत्रेऽण्ग्रहणं व्यर्थमेव स्यादित्याहुः ।

ननु 'इणादिप्रत्याहारे ऋादीनां ग्रहणं मा भूत्' इत्यसङ्गतं, पूर्वणकारेणेणादिप्रत्याहारे ऋकारादिग्रहणस्याप्यनिष्टत्वादित्याशङ्क्य सिंहावलोकनन्यायेन समाधत्ते—(१) **इण इत्येव सिद्धे इति ।**

(२)**कर्मधारययोग्यपदानामिति ।** यत्र समासे तदभावे वा विशेषो नास्ति तादृशकर्मधारययोग्यपदानामित्यर्थः । एतेन "निपात एकाच्" (पा० सू० १।१।१४ ) इत्यादौ व्यभिचारादिदमसङ्गतम्" इत्यपास्तम् । समासाभावे एकोऽजिति, समासे एकाजिति तत्र विशेषसत्त्वात् । (३) **अज्ञातस्वरूपज्ञापकोच्चारणविषयसमुदाय-**

स्यैव। "उपदेशोत्तरकाला इत्सञ्ज्ञा" इति "नाज्झलौ" (पा० सू० १।१।१०) इति सूत्रभाष्यात्। 'धुट्' इत्यादौ सानुबन्धाद्विभक्तिस्तु तेनैवानुबन्धविनिर्मुक्तोपस्थितेस्तस्यैवार्थवत्त्वात्सुलभा। इत्सञ्ज्ञाकार्यं तु यत्र सञ्ज्ञा तत्राऽऽनर्थक्यात् तदुपस्थाप्य एव। स्पष्टञ्चेदं "तित्स्वरितम्" (पा० सू० ६।१।१८५) इत्यत्र **कैयटे**। वैयाकरणे चित्स्वरस्तु न। तस्येच्चकारसदृशत्वेऽपि तत्त्वाभावात्। विभक्त्यादिसञ्ज्ञापि सूत्रान्तर्गतानामेवेति तत्रैव "न विभक्तौ" (पा० सू० १।३।४) इत्यादीनां प्रवृत्तिः। अत एव "इदम इश्" (पा० सू० ५।३।३) इत्यादावित्त्वात्सवर्णग्रहणं प्राप्तमप्रत्यय इत्यनेन निषिध्यते" इति भाष्योक्तं सङ्गच्छते। यत्तु "अनेकाल्" (पा० सू० १।१।५५) सूत्रे "इशि शिद्ग्रहणाभावेऽपि शित्करणादेव सर्वादेशत्वम्" इति भाष्ये उक्तं, तस्येत्सञ्ज्ञकशकारकरणाद्(१)भूतपूर्वानेकाल्त्वमादाय सर्वादेशत्वमित्यर्थ इति न तद्विरोधः।

अत्र केचित्—अनुबन्धा अनैकान्ताः अनवयवाः। यो ह्येकान्तः स कदाचित्तत्रोपलभ्यत एव। अयन्तु न तथा, तदर्थभूते(२)विधेये कदाऽप्य-

---

मिति। स्ववृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्नविधेयताप्रयोजकतापर्याप्त्यधिकरणसमुदायमित्यर्थः। (१) **भूतपूर्वानेकाल्त्वमादायेति**। अनुबन्धघटितबोधकवृत्तिधर्माणां बोध्ये आरोपात्, अनेकाल्वृत्तिधर्मावच्छिन्नविधेयताश्रयः सर्वस्य स्थाने भवतीति "अनेकाल्" (पा० सू० १।१।५५) इत्यस्यार्थकरणाद्, बोधकवृत्त्यनेकाल्त्वादेः स्थानिवद्भावेनादेशे बोध्ये आरोपात्; श्रुतादेशं स्मृतानुबन्धमादायोपनीतभानेन वाऽनेकाल्त्वादिति भावः। न चानेकाल्त्वादेरल्त्वव्याप्यधर्मघटितत्वेनानल्विधाविति निषेधान्न स्थानिवद्भाव इति वाच्यम्। "न ल्यपि" (पा० सू० ६।४।६९) इति ज्ञापकेनाल्त्वव्याप्यधर्मघटितधर्मेऽनुबन्धघटितवृत्तिधर्मातिरिक्तेति विशेषणीयत्वात्।

यत्तु अनेकाल्बोधकबोध्यस्सर्वस्य स्थाने भवतीत्यर्थेन इश्पदबोध्यौकारादेः सर्वादेशत्वं, भूतपूर्वानेकाल्त्वमादाय सर्वादेशत्वमिति शेखरस्यात्रैव तात्पर्यमिति। तन्न, लोपानुनासिकादेशादेरपि सर्वादेशत्वापत्तेः।

(२) **विधेये कदाऽप्यदर्शनादिति**। न च हेतुवाक्यस्य दृष्टान्तवाक्यात्पूर्वं लेखनौचित्येनेदमसङ्गतमिति वाच्यम्। अनुबन्धाः बोधकनिरूपितावयवत्वाभाववन्तः, बोध्यावयवत्वेनोपलब्धिविषयत्वाभावादिति पूर्वानुमाने हेतोरसिद्धत्वपरिहारायैतद्धेतुलेखनात्। वस्तुतस्तु स्वघटितपदाघटितविभक्त्यघटितघटकस्वेतरयावद्वृत्तिश्रावणप्रत्य-

दर्शनात्। "हलन्त्यम्" (पा० सू० १।३।३) इत्यत्रान्त्यशब्दः(१)परसमीपबोधकः, "चुटू" (पा० सू० १।३।७) इत्यादावादिशब्दः पूर्वसमीपबोधकः, "अनेकाल्‌ शित्" (पा० सू० १।१।५५) इत्यादौ समीपे सामीप्यमूलकावयवत्वारोपेण बहुव्रीहिः। स्पष्टञ्चेदं "उपदेशेऽज्" (पा०सू० १।३।२) इति सूत्रे भाष्ये "मपर्यन्तस्य" (पा० सू० ७।२।९१) इति सूत्रे कैयटे च। तेन डाणलादौ इशादौ च न दोषः। अत एव "उपदेशेऽच्" (पा० सू० १।३।२) इति सूत्रे उपदेशग्रहणं चरितार्थम्। तद्धि 'अभ्र आँ अटितः' इत्यादौ "आदितश्च" (पा० सू० ७।२।१६) इतीट्प्रतिषेधाभावाय। अनेकान्तत्वे हि तत्प्राप्तिरित्याहुः।

(२)परे तु—एकान्ता एव (३)शास्त्रे तत्रोपलम्भादन्यत्रानुपलम्भाच्च।

---

क्षविषयतावच्छेदकधर्मावच्छिन्नविधेयताप्रयोजकनिरूपितावयवत्वाभाववन्त इति साध्यदलं, स्वघटितपदाघटितघटकप्रयोज्यविधेयतावच्छेदको यो विशेष्यविशेषणभावापन्नश्शृङ्खलोपनिबद्धयावत्पदार्थसङ्कुचितो धर्मस्तदवच्छिन्नत्वम्–स्वघटितपदाघटितघटकप्रयोज्यविधेयतावच्छेदकधर्मवदुत्तरो यः स्ववृत्त्यवयवत्वप्रकारकनिश्चयाभाववान् तदनुत्तरत्वं च, एतदुभयसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभावादिति हेतुदलं लेखनीयं, तेन सर्वामष्टाध्यायीं गृहीत्वा सन्निति वा गृहीत्वा नाप्रयोजकत्वशङ्का, न वा गुणशब्दगकारे, "स्थाम्नोऽकारः" (का० वा०) इत्यत्र ककारे च व्यभिचारः, न वा सर्वामष्टाध्यायीं गृहीत्वा सन्सकारे, न वा "सुप्यजातौ णिनिः" (पा० सू० ३।२।७८) इत्यत्रत्येकारे कुकि ककारे च भागासिद्धिः, न वा "काश्यादिभ्यष्ठञ्ञिठौ" (पा० सू० ४।२।११६) इत्यत्र ञिठप्रत्ययठकारे व्यभिचार इत्यन्यत्र निरूपितम्।

**(१) परसमीपबोधक इति।** चिन्त्यमिदम्। शितिकिदित्यादौ बहुव्रीह्युपपत्तये समीपेऽवयवत्वारोपस्याऽऽवश्यकत्वात्। एवमादिशब्दः पूर्वसमीपबोधक इत्यपि चिन्त्यमेव।

**(२) परे त्विति।** तदर्थभूते विधये कदाऽप्यदर्शनादिति हेतुरानङादिनकारादौ व्यभिचरितो वक्ष्यमाणहेतुना सत्प्रतिपक्षितश्च, अनवयवत्वनिश्चयाधीनः समीपेऽवयवत्वारोपः, तदधीना इत्संज्ञा, तदधीनश्च लोपः, तदधीनश्च तदर्थभूते विधेये कदाऽप्यदर्शनं, तदधीनश्चानवयवत्वनिश्चय इति चक्रकेणासिद्धिग्रस्तोऽपि। न चैकान्तवादिमतेऽपि "नानुबन्धकृतम्" (प० ७-८-९) इत्यादि परिभाषात्रयं वक्तव्यमिति वाच्यम्। शित्करणेनानुबन्धघटितबोधकवृत्तयो येऽनुबन्धस्वघटितातिरिक्ता आनुपूर्वीभिन्नाश्च धर्मास्तन्निमित्तककार्ये कर्तव्येऽनुबन्धानामविद्यमानवद्भाव इत्येकपरिभाषास्वीकारेण निर्वाहात् **(३) शास्त्रे तत्रोपलम्भादन्यत्रानुपलम्भाच्चेति।** न चायं

अनवयवो हि काकादिरेकजातीयसम्बन्धेन गृहवृक्षादिषूपलभ्यते, नैवमयम्। किञ्चानवयवत्वे ण-श-क प्रत्ययादौ णादेरित्त्वानापत्तिः। प्रत्ययादित्वाभावात्। एवमन्त्यत्वाभावादिशादेः शस्येत्वानापत्तिः। उक्तार्थलाक्षणिकत्वे तु लक्षणैव दोषः। किञ्च दघ्नचश्चकारवैयर्थ्यापत्त्याऽवयवत्वमेव न्याय्यम्। अत एव "वुच्छण्कठच्" (पा० सू० ४।२।८०) इतिसूत्रविहितके णित्त्वप्रयुक्तवृद्धिर्न। "तस्य लोपः" (पा० सू० १।३।१) इति भाष्ये "एकान्तत्वमेव न्याय्यम्" इत्युक्तेश्च। "उपदेशेऽज्" (पा० सू० १।३।२) इति सूत्रे उपदेशग्रहणन्तु स्पष्टार्थमेवेत्याहुः। सर्वत्रानुबन्धसहितनिर्देशे विधौ "गुप्तिज्किद्भ्यः" (पा० सू० ३।१।५) इत्यादौ (१)नकारेत्संज्ञकः सो भवतीत्यादिक्रमेण बोधः। अनुवादे "सन्यतः" (पा० सू० ७।४।७९) इत्यादौ च नकारेत्संज्ञके सशब्दे परे इत्यादिक्रमेण बोधः। स्पष्टञ्चेदं निष्ठासञ्ज्ञासूत्रे भाष्ये। अत एव "आटश्च" (पा० सू० ६।१।९०) इत्यादेर्नासङ्गतिः(२)। अन्यथा यत्राऽऽट् सूत्रे तत्र नाच्परो, नेष्य-

---

हेतुः पृथिव्यादीनां गुणे गन्धादौ व्यभिचरित इति वाच्यम्। सांख्यमतवद्वैयाकरणमतेऽपि अतिरिक्तद्रव्याभावेन घटकत्वरूपसाध्यस्यापि तत्र सत्त्वात्।

(१) **नकारेत्संज्ञकस्सो भवतीति**। वस्तुतस्त्वनुवादे "सन्यतः" (पा० सू० ७।४।७९) इत्यादावेवैतादृशार्थस्योपयोगो न तु विधेयसमर्पके। "गुप्तिज्किद्भ्यः सन्" (पा० सू० ३।१।५) इत्यादौ सन् भवतीत्यर्थेऽपि क्षतिविरहाद् वाक्यार्थबोधात्पूर्वम् उपदेशत्वज्ञानाभावेन इत्संज्ञाया अप्रवृत्त्या तथाबोधासम्भवाच्च। अनुवादे लक्षणया तथा बोधसम्भवेऽपि विधौ "न विधौ परः शब्दार्थः" इति न्यायेन लक्षणाया अभावेन तथा वक्तुमशक्यत्वादिति दिक्। (२)**नासङ्गतिरिति**। टकारेत्संज्ञकाऽऽकारादचि परत इत्यर्थादिति भावः।

परे तु—अनुबन्धविनिर्मुक्तपदार्थोपस्थितौ प्रमाणाभावाल्लोकप्रसिद्धम् "अदर्शनं लोपः" (पा० सू० १।१।६०) इति सूत्रसङ्केतितमर्थं विहाय लोपपदस्य शाब्दबोधविषयत्वाभावार्थकत्वस्यान्याय्यत्वात् इत्संज्ञालोपौ लुगादिवल्लक्ष्ये एव प्रवर्तेते। तस्मात् बोध्यावयवत्वमेकान्तत्वं बोध्यानवयवत्वमनेकान्तत्वमित्येव सिद्धान्तः। न च "इदम इश् अण्त्वात्सवर्णग्रहणं प्राप्नोति" इति भाष्यविरोध इति वाच्यम्। उक्तभाष्यस्य, उपदेश इति किम् अभ्र आँ अटितः, पदे किम् तन्त्रयुतम्, लोपश्चेति द्विशकारको निर्देश इत्यादिभाष्यस्य चानेकान्तपक्षाभिप्रायकत्वेनादोषादित्याहुः।

ते च तत्र वृद्धिः, यत्र प्रयोगे इष्यते वृद्धिस्तत्र नाऽऽडिति तदसङ्गतिः स्पष्टैव । अन्त्यङ्किम् ? (१)वाचालः । हल्किम् ? 'चिरिणोति' इत्यादौ धातोरन्त्यस्य मा भूत् ।

**आद्योच्चारणमिति ।** आद्यमुच्चारणमित्यर्थः, भावे घञिति भावः । तच्च प्रत्यासत्त्यैतच्छास्त्रप्रवर्त्तकाचार्याणामेव । आद्यत्वञ्चाज्ञातस्वस्वरूपज्ञापकत्वम् । उपस्याद्यर्थत्वाद्दिशेरुच्चारणक्रियत्वात् । अत एव "एकाच उपदेशे' (पा सू० ७।२।१०) इति सूत्रे कैयटेनोक्तम्—"इत्सञ्ज्ञाविधावुच्चारणवचन उपदिशिर्गृह्यते" इति, "आदेच" (पा० सू० ६।१।४५) इति सूत्रेऽपि "येषां स्वरूपज्ञापनायापूर्वमुच्चारणं तेषामेवोपदेशव्यवहारः" इति तत्र सूत्रे भाष्येऽपि "उद्देशश्च प्रातिपदिकानां नोपदेशः" इति, प्रकृतसूत्रे भाष्येऽपि "प्रत्यक्षमाख्यानमुपदेशः" इत्युक्तम् । तस्य चोक्त एवार्थः ।

परे तु "उपदेश इति किमर्थम् ? अभ्र आँ अपः । कः पुनरुद्देशो-

---

अन्ये तु बोधकावयवेष्वनुबन्धेषु बोध्यावयवत्वमारोप्यत इत्येकान्तः, अनारोपश्चाऽनेकान्तः । अत एव प्रत्याहाराद्यवर्णेषु "अणुदित्" (पा० सू०१।१।६९) सूत्रं चरितार्थमिति मूलोक्तं सङ्गच्छते । तथाहि—बोधकावयवे "ऋऌक्" (मा० सू० २) इत्यत्र ककारे बोध्यावयवत्वस्याऽऽरोपेऽयं ककार इत्संज्ञकाभिन्न इति ज्ञातुं शक्यत्वात्ककारचिन्हेनायमिकारोऽप्यणिति ज्ञातुं शक्यत इति ककारादिचिन्हेन प्रत्याहाराद्यवर्णे "अणुदित्" (पा० सू० १।१।६९) सूत्रं चरितार्थमिति सङ्गच्छते । अन्यथा प्रत्याहाराद्यवर्णानामनण्त्वेन सवर्णबोधानुदयात्तस्यासङ्गतिः स्पष्टैव । अत एव "आदिरन्त्येन" (पा० सू० १।१।७१) इति संज्ञाऽऽदेरेवेति चेत् विशिष्टाद्विभक्तिः कथमिति शङ्कायां प्रत्याहारेऽनुबन्धानां द्योतकत्वेन "अर्थवत्" (पा० सू० १।२।४५) सूत्रोक्तार्थवत्त्वविशिष्टस्यैव सेति समाधानं मनसि निधाय समुदाये एव प्रातिपदिकसंज्ञेत्यर्थकः "सहग्रहणात्समुदाय एव संज्ञा" इत्यादिशेखरः "इदम इश् अण्त्वात्सवर्णग्रहणं प्राप्नोति" इति भाष्यम्, अण् सवर्णान् गृह्णाति, घटित इत्यध्याहारसहिताण्घटितं सवर्णान् गृह्णातीत्यर्थफलकः स्वग्रन्थश्च सङ्गच्छते । अस्मिन्कल्पे चैकान्तत्वं न निष्प्रयोजनं, "सन्यतः" (पा० सू० ७।४।७९) इत्यादौ लक्षणाद्यभावरूपप्रयोजनसत्त्वादित्याहुः ।

**(१)वाचाल इति ।** न च चालित्येव सिद्धे आलच् इति गुरुनिर्देशाल्लकारस्य नेत्संज्ञेति वाच्यम् । "तनोतेर्डउः सन्वच्च" इत्यत्रेवाऽत्रापि सन्व्यभावकल्पनापत्तेः, ज्ञापकेन सूत्राक्षरखण्डनस्यायुक्तत्वाच्च ।

पदेशयोर्विशेषः" इति भाष्ये उक्तम् । यदि (१)प्रत्यक्षमाख्यानमुपदेशो गुणैः प्रापणमुद्देशस्तर्हि (२)"लटः सद्वा" (पा०सू० ३।३।१४) "निष्ठा" (पा० सू० ३।२।१०२) इति विहितानां शतृ–शानच्–क्त–क्तवतूनामवयवस्येत्सञ्ज्ञानापत्तिः । तथा "राजसूयसूर्य" ( पा० सू० ३।१।११४ ) "चित्याग्निचित्ये" (पा०सू० ३।१।१३२) इत्यादिनिपातनानुमित (३)क्यबादीनां पादेरित्त्वानापत्तिः । "वदः सुपि" (पा० सू० ३।१।१०६) इत्यत्रोच्चारितस्तु नैतत्सबन्धी । अत एव "तस्यापत्यमत इञ्" इति न्यासेऽन्यशब्दसम्बद्धापत्यार्थस्यानुक्तरूपशेषत्वमुक्तमाकरे । तस्मादत्र सूत्रे उपदेशशब्देनोद्देशस्यापि ग्रहणं वक्तव्यम् । एवम् 'अभ्र आँ अपः' इत्यादावपि प्राप्नोतीति तेषां सङ्ग्रहोऽस्य व्यावृत्तिर्येन भवति स विशेषः क इति प्रश्नः। तत्सङ्ग्रहार्थमेव लोकव्यवहारेणापि तयोः सङ्कीर्णत्वमुपपाद्यैतद्व्यावृत्तये तत्सङ्ग्रहाय च "उपदेशेनेऽनुनासिक इति वक्तव्यम् । किं पुनरुपदेशनं ? शास्त्रम्" इत्युक्तं वार्तिककृता । तत्र शास्त्रपदेन प्रयोगशासनकरणभूता धातुप्रातिपदिकप्रत्ययनिपातागमादेशाः "हलन्त्य"(पा०सू० १।३।३)सूत्रे व्यवसितपदार्थत्वेन भाष्ये उक्ता गृह्यन्ते । एवञ्च तत्सङ्ग्रहः 'अभ्र आँ' इत्येतद्व्यावृत्तिश्च सिद्धा । तस्य च वार्तिकस्य बाहुलकात्करणे घञा प्रत्याख्यानं भगवता कृतम् ।

---

(१) **प्रत्यक्षमाख्यानमिति** । तत्त्वन्तु पाणिन्युच्चरितपदविशिष्टविधेयताश्रयत्वम् । वैशिष्ट्यञ्च–स्वजन्यशाब्दबोधीयत्व–स्ववृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्नत्वैतदुभयसम्बन्धेन । यथा गां सक्थिनि कर्णे वा गृहीत्वोपदिशति अयं गौरिति । तत्र शाब्दबोधस्य शक्तिग्रहात्मकप्रत्यक्षजन्यत्वेन प्रत्यक्षीयविषयतावच्छेदकगोत्वादिधर्मावच्छिन्नविधेयताकत्वेन च लक्षणसमन्वय इति दिक् । (२) **लटः सद्वेति** । चिन्त्यमेतत् । "तौ सत्" ( पा० सू० ३।२।१२७ ) इत्यत्र शकारऋकारेत्संज्ञकातः शकारचकारेत्संज्ञकाऽऽनस्य च "तौ" इत्यनेन परामर्शात्तयोरेव संज्ञायां दोषाभावात् ।

(३) **क्यबादीनामिति** । इदमपि चिन्त्यमेव । पकारेत्संज्ञकककारेत्संज्ञकयप्रत्ययस्यैव निपातनेनानुमानात् । वस्तुतस्तु "कालेभ्यो भववत्" ( पा० सू० ४।२।३४ ) "चरणेभ्यो धर्मवत्" ( पा० सू० ४।२।४६ ) इत्याद्यातिदेशशास्त्रविहितप्रत्ययानामित्संज्ञोऽनापत्तिः । स्ववृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्नत्व–स्वज-

किञ्च "हलन्त्य"(पा० सू० १।३।३)सूत्रे भावघञन्तोपदेशपदानुवृत्तौ "भवतष्ठक्छसौ" (पा० सू० ४।२।११५) इत्यादिविहितेष्वित्सञ्ज्ञानापत्तिः । परस्य सत्त्वेन कादेरन्त्यत्वाभावात् (१) । यदि तूपदेशे (२)प्रत्ययत्वादिविशिष्टान्त्य इत् इत्यर्थ इत्युच्यते तदोपदेश इति व्यर्थम् । अन्त्यपदसामर्थ्येनैव तल्लाभात् । अत एवात्र सूत्रे उपदेशग्रहणस्य 'अनुबन्धा अनेकान्ताः' इत्यस्थितपक्षे 'अभ्र आँ अटितः' इति प्रयोजनमुक्तं, न तूत्तरार्थमित्युक्तम् । न च करणसाधनोपदेशशब्दानुवृत्त्या सिद्धे "हलन्त्य" (पा०सू० १।३।३) सूत्रे "व्यवसितान्त्यमिति वक्तव्यम् । के पुनर्व्यवसिताः ? धातुप्रातिपदिकप्रत्ययनिपातागमादेशाः" इतिवार्त्तिकानुत्थानमिति वाच्यम् । समुदायद्वाराऽवयवस्याप्युपदेशकरणत्वात्तदन्त्यस्यापि लोपापत्तिरित्याशयात् । **भाष्यकृता** चान्त्यग्रहणसामर्थ्येन प्रत्याख्यातम् । तत्रानुबन्धविशिष्टानां धातुत्वादि तु धातुत्वादियोग्यघटितत्वाद् (३)बोध्यम् । निपातानां द्योतकत्वेन ब्राह्मणवसिष्ठन्यायेन च पृथग् ग्रहणम् । व्यवसितत्वञ्च धातुत्वादिना परिच्छिन्नत्वादिति कैयटः । एवञ्चोदश्विदादिप्रातिपदिकान्त्यस्यापि लोपः प्राप्नोतीति "प्रातिपदिकानां(४) प्रतिषेधो वाच्योऽकृत्त-

---

न्यशाब्दबोधीयत्वोभयसम्बधेन पाणिन्युच्चरितपदविशिष्टविधेयताश्रयत्वरूपप्रत्यक्षाख्यानत्वाभावात् ।

(१) **अन्त्यत्वाभावादिति** । चिन्त्यमिदम् । ठक्छसावित्येतदन्त्यत्वाभावेऽपि ठग्निरूपितान्त्यत्वस्य कक्कारे सत्त्वेन दोषाभावात् । वस्तुतस्तु चित्रङि ङकारे प्राचीनोक्ताज्ञातस्वस्वरूपज्ञापकत्वरूपोपदेशत्वाभावेनेत्संज्ञानापत्तिर्बोध्या । (२) **प्रत्ययत्वादिविशिष्टान्त्यमिति** । प्रत्ययादिबोधकान्त्यमिति यावत् ।

(३) **बोध्यमिति** । वस्तुतस्तु धात्वादिपदं धात्वादिबोधकमिति व्याख्यातत्वे नैवं व्याख्यानं निरर्थकम् । (४) **प्रतिषेधो वाच्य इति** । न च चित्रङ्ङ्कारस्य, "ऐकागारिकट्" (पा०सू० ४।१।११३) इत्यत्र टकारस्य चेत्संज्ञा न स्यादिति वाच्यम् । स्ववृत्तिः प्रातिपदिकवृत्तिश्च या आनुपूर्वी तादृशानुपूर्व्यवच्छिन्नविषयताप्रयोजकानां प्रातिपदिकानां प्रतिषेधो वक्तव्यः, अकृदित्यादि तु तात्पर्यग्राहकमित्यदोषात् । तथाहि-चित्रङित्यादि चित्रशब्दत्वावच्छिन्नबोधकं, चित्रशब्दत्वञ्च न स्ववृत्त्यानुपूर्वी. या च चित्रङ्शब्दत्वरूपा स्ववृत्त्यानुपूर्वी सा च न प्रातिपदिकवृत्तीति न दोषः । न च "उद-

द्धितान्तानाम्" इति वार्त्तिककृतोक्तम् "कुम्भकारः" इत्यादौ अपवादविषयपरिहारेणोत्सर्गप्रवृत्तेः *पूर्वं प्रातिपदिकत्वे णादिलोपो न स्यादिति अकृदित्यादि। तच्च फलाभावान्नेतसञ्ज्ञेत्यादिना भाष्ये प्रत्याख्यातम्। अत्राचोच्चारणार्थकोपदेशपदानुवृत्तौ त्वस्य वार्तिकस्यानुत्थानमेव स्यात्। "उद्देशश्च प्रातिपदिकानां नोपदेशः" इति "आदेच" (पा० सू० ६।१।४५) इति सूत्रभाष्ये उक्तेः। एतद्भाष्यैकवाक्यतया पस्पशाह्निकान्तस्थे "अग्रहणप्रातिपदिकानामुपदेशः कर्त्तव्यो मञ्चको मञ्जक इति मा भूत्" इति भाष्ये उपदेशशब्दो ग्रहणं कर्त्तव्यमित्यर्थकः। तच्चानुवादरूपमेव सन्देहनिवर्त्तकमिति बोध्यम्।

नन्वेवं "तस्मिन्निति निर्दिष्टे" (पा०सू० १।१।६६) इति सूत्रे षष्ठीप्रकल्पकत्वं तस्येति पक्षे "गुप्तिज्किद्भ्यः" (पा०सू० ३।१।५) इत्यादावपि षष्ठीप्रक्लृप्त्यापत्तिः। न च सनः सनेवादेशो भविष्यतीति बाधकाभाव इति वाच्यम्। "उपदेशे इत्युच्यमाना इत्सञ्ज्ञा न प्रकल्पेत" इत्युक्तं भाष्ये, तद्विरुद्ध्येतात्रोपदेशपदाननुवृत्तौ; इति चेत् ? न, तस्यैकदेश्युक्तित्वेनासाधकत्वात्। तथा हि—तत्र "ङमो ह्रस्वादचि" (पा० सू० ८।३।३२) इत्यादौ यत्र सप्तमी पञ्चमी चेत्युभयं निर्दिश्यते तत्र किं पूर्वस्य कार्यमथ परस्येति सन्देहे "परत्वानवकाशत्वाभ्यां पञ्चमीनिर्देशो बलवान्" इति सिद्धान्तिनोक्तम्। तत एकदेशिना "यथार्थं वा षष्ठीनिर्देशः कर्त्तव्यः" इति समाधानान्तरमुक्तम्। यथाविषयं प्रागुक्तेषु कार्यिणः षष्ठ्या निर्देष्टव्या इति तदर्थः। तेषु सप्तमीनिर्देशस्य क्वचित् पूर्वत्र क्वचिदुत्तरत्रा-

---

श्वितोऽन्यतरस्याम्" (पा०सू० ४।२।१९) इत्यादौ इत्संज्ञालोपाभावप्रयोज्यं स्ववृत्त्यानुपूर्वीविषयताप्रयोजकत्वम्, एतन्निषेधप्रवृत्तिप्रयोज्यौ च इत्संज्ञालोपाभावौ इत्यन्योन्याश्रय इति वाच्यम्। इत्संज्ञालोपाभावसम्भावनाप्रयोज्या या स्ववृत्त्यानुपूर्व्यवच्छिन्नविषयताप्रयोजकत्वसंम्भावना तादृशसम्भावनाविषयीभूतानां प्रातिपदिकानां प्रतिषेधं वक्तव्यः अकृदित्यादि तात्पर्यग्राहकमित्यर्थेनादोषात्।

---

* प्रातिपदिकत्वे सम्भाविते पूर्वं प्राप्तोऽपि णादिलोपो न स्यात्, अपवादविषयपरिहारेणोत्सर्गप्रवृत्तेरित्यर्थः।

ऽऽवश्यकत्वेनोभयनिर्देशे गौरवेणैकदेश्युक्तिः । ततः परेणैकदेशिना षष्ठी-पदानुवृत्त्या "तस्मिन्" (पा०सू० १।१।६६) इत्यादेरेव षष्ठीप्रकल्पकत्व-माश्रित्य "यथार्थं वा षष्ठी" इत्येकदेश्युक्तिः प्रत्याख्याता । षष्ठीपदानुवृत्तौ गौरवादुभयोः प्रकल्पकत्ववारणाय परत्वानवकाशत्वयोः "एकः पूर्वप-रयोः" (पा० सू० ६।१।८४) इति पूर्वपरग्रहणस्य युगपत्प्रकल्पकत्वाभावे ज्ञापकस्य चावश्यकत्वाच्चेयमप्येकदेश्युक्तिः । ततः पूर्वेणैकदेशिना तत्पक्षे "गुप्तिज्" (पा०सू० ३।१।५) इत्यादौ दोषः शङ्कितः । ततः षष्ठीप्रक्लृ-प्तिवादिनैकदेशिनोक्तम्—"स्यादेष दोषो यदीत्सञ्ज्ञा आदेशं प्रतीक्षेत । तत्र खलु कृतायामित्सञ्ज्ञायां लोपे च कृते आदेशो भविष्यति । उपदेश इति हीत्सञ्ज्ञोच्यते" इति । एवञ्च त्वदुक्तिर्व्याहतेत्याशयः । तदग्रे उप-देशपदाननुवृत्तिमभिप्रेत्य "अथवा नानुत्पन्ने सनि प्रक्लृप्त्या भवितव्यम् । यदा चोत्पन्नः सन् तदा कृतसामर्थ्या पञ्चमीति प्रक्लृप्तिर्न भविष्यति" इति समाधानान्तरं कृतम् । तत्र "परत्वविशिष्टस्य सन उत्पादने पञ्चम्या उपक्षयात् प्रवृत्त्यन्तराभावान्नास्ति तस्याः प्रकल्पकत्वम्" इति तदर्थं कैयट आह । एवञ्च प्रकृतसूत्रस्थस्य सूत्रार्थप्रतिपिपादयिषया प्रवृत्तस्य भाष्यवा-र्त्तिकस्यैकदेश्युक्ततद्भाष्यबलेन प्रौढिवादत्वकल्पनं नोचितम् , लक्ष्यासिद्धेश्च । "अइउण्" (मा० सू० १) इत्यादीनामपि क्रमबोधकत्वेनार्थवत्त्वात् प्रातिप-दिकत्वम् । चित्रङः "चोः कुः" (पा०सू० ८।२।३०) इत्यादेरपि प्राति-पदिकत्वम् । लोपश्चेत्यत्रापि शकारस्य स्वरूपेणार्थवत्त्वात् प्रातिपदिकत्वम् । अनुबन्धानामेकान्तत्वे तु "लोपो यि" (पा० सू० ६।४।११८) इत्यतो लोपग्रहणेऽनुवर्त्तमाने पुनर्लोपग्रहणात् सर्वादेशत्वं बोद्धव्यम् । "एकाच उपदेशे" (पा० सू० ७।२।१०) इत्यत्रत्यः **कैयटो**ऽपि चिन्त्य एव । अन्योऽपि तज्जातीयश्चिन्त्य एव । "एकाच उपदेशे" (पा० सू०७।२।१०) "अदेच उपदेशे" (पा०सू० ६।१।४५) इत्यादौ तु भावसाधन एवेति सुधियो विभावयन्त्वित्याहुः ।

ननु शास्त्रेऽनुनासिकोच्चारणाभावात् तत्त्वज्ञानं दुर्लभमत आह—**प्रतिज्ञेति** । प्रतिज्ञाविषयानुनासिक्यवन्त इत्यर्थः । पाणिनीया इत्यस्य

पाणिनिप्रभृतिप्रोक्ता वर्णा इत्यर्थः । प्रतिज्ञाचार्यमेवमिति कथनं, वर्णान तत्त्वज्ञापको व्यवहारश्च । ताभ्यां तज्ज्ञानं सुलभमिति भावः । प्रतिज्ञातारश्च प्रत्यासत्त्यैतच्छास्त्रकर्त्तार एवेति दिक् । **निर्देशादिति** । तेषां तत्र ग्रहणे हि नासिकादौ (१)यणापत्तिरिति भावः । न चेत्वविधानसामर्थ्याद् यणभावः सिद्धः । तस्यापि प्रत्याहारेष्वनुबन्धाग्रहणज्ञापनद्वारैव यणभावकल्पकत्वौचित्यात् । साक्षाच्छास्त्रबाधकल्पनापेक्षयाऽस्यार्थस्यौचित्यात् । निर्देशादित्यस्य तन्मूलभूतेत्वविधानसामर्थ्यादित्यर्थ इति तात्पर्यम् । आदिना "तृषिमृषिकृषेः" (पा० सू० १।२।२५)"एकः पूर्व"(पा० सू० ६।१।८४) इत्यादिसङ्ग्रहः । ननु "प्रत्याहारेऽनुबन्धानां कथमज्ग्रहणेषु न" (का०वा०) इति वार्त्तिके प्रत्याहारशब्दस्य वर्णसमाम्नाये प्रसिद्धेः प्रत्याहारेष्वितामित्यनुपपन्नमत आह-**आदिरन्त्येनेतीति** । वार्त्तिके तादर्थ्यात्ताच्छब्द्यमिति भावः ।

**ऊकालोऽच्** (पा० सू० १।२।२७) । कुक्कुटरुते उकारे एकद्वित्रिमात्रत्वप्रसिद्धेरकारादयो नोक्ताः । ऊ इति (२)एकद्वित्रिमात्राणां क्रमेण प्रश्लेषनिर्देशो व्याख्यानात् । तेन स्वोच्चारणकालसदृशो लक्ष्यते । स काले

---

(१) **यणापत्तिरिति** । न च 'अनुनासिक' इत्यादौ "यस्येति च" (पा०सू० ६।४।१४८) इत्यकारलोपान्न यण्प्राप्तिः, नापीत्वप्राप्तिरिति शेखरासङ्गतिरिति वाच्यम्। "यचि भम्" (पा०सू० १।४।१८) इत्यत्र यकारसाहचर्येणाच्त्वहल्त्वोभयानाक्रान्त एवाज् गृह्यत इति भसंज्ञाया अप्रवृत्तौ "यस्येति च" (पा०सू० ६।४।१४८) इति लोपस्याप्रवृत्तेरिति भावः । वस्तुतस्तु प्रकृते नासिकाशब्दो नात्यन्तस्वार्थिककन्प्रत्ययान्तः; किन्तु णासृधातुप्रकृतिकण्वुलन्तः । अत एव "घोणा नासा च नासिका" (अ० को०व०६श्लो०८९) इति कोशः सङ्गच्छते । अन्यथा नासेत्यनेनैव सिद्धौ स्वार्थिककन्नन्तोपादानं व्यर्थं स्यात् पर्यायस्वार्थिककन्नन्तानां कोशे कुत्राप्यदर्शनात् ।

(२) **एकद्वित्रिमात्राणामिति** । न च "सरूप" (पा०सू० १।२।६४) सूत्रे शेखरे "एकादिदशान्तानां द्वन्द्वैकशेषौ न भवतोऽनभिधानात्" इति वक्ष्यमाणत्वेनेदमसङ्गतमिति वाच्यम् । तस्य सङ्कलितसंख्यातात्पर्येण द्वन्द्वैकशेषौ नेत्यर्थे तात्पर्येणादोषात्। वस्तुतस्तु 'वाक्त्वक्प्रियः' इत्यादिवद् बहुव्रीहिः सुलभः । समाहारद्वन्द्वे टच्प्रसङ्गे प्राण्यङ्गत्वादितरेतरद्वन्द्वस्याभावेन बहुव्रीहिणैव तादृशप्रयोगाः साधनीयाः । सामानाधिकरण्यं च येन केनापि पदेन न सर्वैः पदैः अपेक्ष्यते इति भाष्ये स्पष्टम्।

यस्येति बहुव्रीहिः । तत्फलितमाह—**उश्च ऊश्च उ३श्चेति** । ननु उ-कालो ह्रस्व इति वाक्ये (१)ऽण्त्वात्सवर्णग्रहणे द्वित्रिमात्रयोरपि ह्रस्वसञ्ज्ञायां 'प्रदाय' 'प्रलूय' इत्यादौ "ह्रस्वस्य" (पा० सू० ६।१।७१) इति तुक् स्यादिति चेत् ? न,ऊ अजित्येवाज्ग्रहणसामर्थ्यादूसदृशोऽजित्यर्थे सादृश्यस्य व्याख्यानात् कालकृतस्यैव ग्रहणमिति सिद्धे अधिकं कालग्रहणमुच्चारितसम्बन्धिकालसदृशकालस्यैव सञ्ज्ञा, न तु तेन गृहीतसम्बन्धिकालसदृशकालस्यापीत्यर्थेनादोषात् । तदुक्तं भाष्ये—"यावत्तपरकरणं तावदत्र कालग्रहणम्" इति । न चाजिति (२)वर्णग्रहणे जातिग्रहणस्य दुर्वारत्वात् (३)"तितउच्छत्रम्" इत्यत्र "दीर्घात्" (पा०सू० ६।१।७५) "पदान्ताद्वा" (पा०सू० ६।१।७६) इति तुगापत्तिरिति वाच्यम् । ज्ञापकसिद्धत्वेन तस्यासार्वत्रिकत्वात् (४), अन्तरङ्गत्वेन ह्रस्वत्वनिमित्तनित्यतुक एव प्राप्तेश्च । अज्ग्रहणं

---

(१) **अण्त्वात्सवर्णग्रहणे इति** । न च ककारादिचिह्नाभावेनाण्त्वाभावात्कथं "अणुदित्" (पा०सू०१।१।६९) सूत्रप्रवृत्तिरिति वाच्यम् । व्यासज्यवृत्तिधर्मानवच्छिन्ना या अण्वृत्तिविषयता तादृशविषयताप्रयोजकं पदं स्वबोध्याण्सवर्णान् गृह्णातीति ग्राहकशास्त्रस्यार्थेनादोषात् । विवेचयिष्यते चेदमग्रे ।

(२) **वर्णग्रहणे जातिग्रहणस्येति** । 'यत्र यादृशवर्णत्वव्याप्यजात्यवच्छिन्नस्य ग्रहणं तत्र तादृशजात्यवच्छिन्नमात्रारब्धसमुदाये सा जातिरतिदिश्यते" इत्येतदर्थकवर्णग्रहणे जातिग्रहणमिति परिभाषयेति भावः । (३) **तितउच्छत्रमिति** । "ऊकालोऽज्" (पा०सू० १।२।२७) इत्यत्राच्त्वजात्यवच्छिन्नस्य ग्रहणसत्त्वेनाच्त्वजात्यवच्छिन्नमात्रारब्धे अउ इति समुदायेऽच्त्वजातेरतिदेशेन तस्य दीर्घसंज्ञायां "पदान्ताद्वा" (पा०सू० ६।१।७६) इति विकल्पेन तुगापत्तिरिति भावः । (४) **असार्वत्रिकत्वादिति** । वस्तुतस्तु एतत्परिभाषाया अस्वीकारेऽपि न क्षतिः । न च 'धिप्सति' इत्यादौ "दम्भ इच्च" (पा०सू० ७।४।५६) इत्यनेन इत्वे "हलन्ताच्च" (पा०सू० १।२।१०) इति कित्त्वं न स्याद् इक्समीपाद्धलः परस्य सनो द्वितीयेन हला व्यवधानादिति वाच्यम् । "इको झल्" (पा०सू० १।२।९)"हलन्ताच्च" (पा०सू० १।२।१०) इत्यनयोः स्थाने "इग्वतो झल्" इति न्यासेनादोषात् । न च 'यियक्षते' इत्यादौ सनः कित्त्वं स्यादिति वाच्यम् । "वचिस्वपि" (पा०सू० ६।१।१५) इत्यत्र भाष्ये वच्यादिभ्यो विहिते कितीत्युक्तत्वेन सत्यपि कित्त्वे क्षत्यभावात्, पूर्वोत्तरसाहचर्येणौपदेशिकधातोरेव ग्रहणाच्च । "लिङ्सिचावात्मनेपदेषु" (पा०सू० १।२।११) इत्यत्र "उश्च" (पा०सू० १।२।१२) इतिज्ञापकान्नेगन्तस्य ग्रहणमिति 'पराजेष्ठा' इत्यादौ न दोषः ।

'प्रतक्ष्य' इत्यादौ "ह्रस्वस्य" (पा०सू० ६।१।७१) इति तुग्व्यावृत्त्यर्थम्।

**उच्चैरु** (पा०सू० १।२।२९)॥ नात्र श्रुतिकृतमुच्चैस्त्वमुपांशुप्रयोगेऽव्याप्तेः श्रुतिप्रकर्षस्याव्यवस्थितत्वाच्च, किन्तु स्थानकृतम्। उच्चैरित्यधिकरणशक्तिप्रधानम्। अधिकरणत्वञ्चोच्चारणं प्रति, तच्च ताल्वादीनां सभागत्वे एवेत्याशयेनाह—**ताल्वादीति**। इदं प्राचामनुरोधेन। वर्णसमाम्नायेऽकारस्य प्राथम्यात् कण्ठादीति वक्तुमुचितम्। एवमन्यत्रापि बोद्धव्यम्। प्रयत्नप्रेरितो वायुर्यदोर्ध्वभागे प्रतिहतोऽचं व्यञ्जयति तदा स उदात्त इति भावः। **अजिति**। "ऊकाल" (पा० सू० १।२।२७) इत्यतस्तदनुवर्त्तते। उदात्तत्वादीनामज्धर्मताया एव लोकप्रसिद्धत्वेन हल्स्वरप्राप्तौ व्यञ्जनस्याविद्यमानत्वाच्चेदं स्वरूपकथनपरं बोध्यम्। **आये इति**। यच्छब्दः "फिषोऽन्त" (फि० सू० १) इत्यन्तोदात्तः, जस्सुप्त्वादनुदात्तः, "एकादेश उदात्तेन" (पा०सू० ८।२।५) इत्येकार उदात्तः।

**अर्वाङिति**। अभिमुखवाच्यव्युत्पन्नं "फिषोऽन्त" (फि० सू० १)

---

न च "नपुंसकस्य झलचः" (पा०सू० ७।१।७२) इति सूत्रे भाष्ये "बहूर्जि" इत्यादौ नुम्वारणाय अच इत्यावर्त्य अचः परो यो झल् तदन्तस्येत्यर्थः कृतः। तथा च एतत्परिभाषाया अभावे 'तङ्क्षि' इत्यादौ नुम् न स्यात्; 'अचः परो यो झल् तदन्ताङ्गस्याभावादिति वाच्यम्। "नपुंसकस्य, न यमः" इति न्यासेनादोषात्। न च 'श्रायसौ' इत्यादौ उगिल्लक्षणनुमापत्तिः एतत्परिभाषाभावे वृद्ध्यादेशेऽच्त्वपर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नानुयोगिताकपर्याप्तिकस्थानिताकत्वस्याऽभावेन "अचः परस्मिन्" (पा०सू० १।१।५७) इति स्थानिवत्त्वाप्रवृत्तेरिति वाच्यम्। अच्त्वपर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नानुयोगिताकपर्याप्तिकस्थानितावच्छेदककादेशः स्थानिवदित्यचः परस्मिन्नित्यस्यार्थेनादोषात्। प्रकृते च स्थानितावच्छेदकं यत्पूर्वत्वं परत्वञ्च तत्पर्याप्त्यनुयोगितावच्छेदकीभूतं पूर्वपराण्वृत्तितद्व्यक्तित्वम् तदेवाच्त्वपर्याप्त्यनुयोगितावच्छेदकमिति स्थानिवत्त्वं सुलभम्। न चैवं णिलोपादेः स्थानिवत्त्वं न स्यात् अच्त्वपर्याप्त्यनुयोगितावच्छेदकधर्मस्य स्थानितावच्छेदकणित्वपर्याप्त्यनुयोगितानवच्छेदकत्वादिति वाच्यम्। "णेरनिटि" (पा०सू० ६।४।५१) इत्यस्य ण्यन्ताङ्गान्त्यालोप इत्यर्थेन स्थानितावच्छेदकाल्त्वपर्याप्त्यनुयोगिताया अच्त्वपर्याप्त्यनुयोगितायाश्चैकस्यैव धर्मस्यावच्छेदकत्वेनादोषात्। वस्तुतस्तु णित्वस्येकारेऽपि पर्याप्तत्वेन न कोऽपि दोष इति सुधियो विभावयन्तु।

इत्यन्तोदात्तम् । आद्यस्य शेषनिघातेनानुदात्तत्वम् । अर्वन्तमञ्चतीत्यर्थे कृदुत्तरपदप्रकृतिस्वरेण वाऽन्तोदात्तत्वम् ।

एकस्मिन्नच्युदात्तानुदात्तयोर्धर्मिणोर्मेलनविरोधादाह—**वर्णधर्माविति** । बाहुलकादधिकरणे घञ् । अर्शआद्यजित्यन्ये । इयं त्रिसूत्री स्पष्टार्था । लोकवेदयोरुदात्तादिव्यवहारस्य प्रसिद्धत्वात् ।

**ह्रस्वग्रहणमिति** । ह्रस्वपदघटितग्रहणमित्यर्थः । **अतन्त्रमिति** । स्वशास्त्रसङ्केतितरूपेणाबोधकमित्यर्थः, किन्त्वर्धमात्रारूपार्थबोधकमिति भावः । एवञ्च दीर्घादिष्वप्यर्धमात्रैवोदात्ता । इत आरभ्य नवसूत्र्या "अ अ" (पा०सू० ८।४।६८) इत्यतः प्रागुत्कर्षेणास्य त्रिपाद्यामपि प्रवृत्तिः । सर्वञ्चेदं भाष्ये स्पष्टम् । 'अर्धमुदात्तम्' इति वृत्तिस्तु सत्या सत्यभामेतिवद्व्याख्येया । उत्तरार्धमित्यस्य चार्धमात्रातोऽवशिष्ट उत्तरो भाग इत्यर्थः । वेदे तु यथाप्रयोगं प्रातिशाख्यादस्माच्च व्यवस्था । **तस्य चेति** । अनुदात्तस्येत्यर्थः । **उदात्तेति** । उदात्तस्वरितयोः परत्वे सतीत्यर्थः । तयोः परत्वञ्चोपस्थितानुदात्तापेक्षयैव । **अन्यत्र**—उदात्तस्वरितयोः परत्वाभावे । **प्रातिशाख्ये इति** । लोके त्वनुदात्त एवेति भावः । ह्रस्वस्वरितमुदाहरति—**क्वेति** । "किमोऽत्" (पा० सू० ५।३।१२) इत्यत्, "क्वाति" (पा० सू० ७।२।१०५) इति क्वादेशे "तित्स्वरितम् (पा० सू० ६।१।१८५) इति स्वरितः । दीर्घं तमुदाहरति—**रथानामिति** । **येऽरा इति** । "स्वरितो वाऽनुदात्ते पदादौ" (पा०सू० ८।२।६) इत्येकारः स्वरितः । "नोदात्तस्वरितोदयम्" (पा०सू० ८।४।६७) इति निषेधस्तु "उदात्तादनुदात्तस्य स्वरितः" (पा० सू० ८।४।६६) इत्यस्यैव 'अनन्तरस्य' इति न्यायात् । स्वरितपरमुदाहरति—**शतचक्रमिति** । अहेरित्यर्थेऽह्यः । वृत्रस्येत्यर्थः । "छन्दसि वा वचनं प्राङ्णौ चङ्युपधायाः" इति वचनाद् गुणाभावः । "उदात्तस्वरितयोः" (पा० सू० ८।२।३) इतिस्वरितः । "उदात्तयणो हल्पूर्वात्" (पा० सू० ६।१।१७४) इति तु न छान्दसत्वात् । यच्छब्दः "फिषः" (फि०सू० १) इत्यन्तोदात्तः, तदेकादेशश्च वा स्वरितः । **स इति** । उदात्तादिह्रस्वादिसञ्ज्ञक इत्यर्थः ।

**मुख** (पा०सू० १।१।८) उच्यतेऽसौ वचनः। बाहुलकात् कर्मणि ल्युट्। मुखसहिता नासिकेति(१) विग्रहः। तया वचन इति, "साधनं कृत" (भा०इ०) इति समासः, तदाह–**मुखसहितेत्यादि**। मुखेति किम् (२)यमानुस्वाराणामेव प्रसज्येत। एवञ्च "आङोऽनुनासिकः" (पा० सू० ६।१।१२६) यत्रानुस्वारः स्यात्। नासिकेति किम्? 'शक्ता' इत्यादौ "अनुदात्तोपदेश" (पा०सू० ६।४।३७) इत्यादिना कलोपो मा भूत्। **अष्टादशेति**। यद्यपीदं (३)न व्यक्तिपक्षे व्यक्तीनामानन्त्यात्, तथाप्यष्टादशधर्मवत्त्वमकारजातीयादेरित्यर्थः। ह्रस्वत्वादीनां (४)तत्तत्समानाधिकरणोदात्तत्वानुनासिकत्वादीनाञ्च भेदमाश्रित्येदं बोद्धव्यम्। एवमग्रेऽपि। **लृवर्णस्येति**। विवृतस्येत्यर्थः। तेन "लृति लृवा" (का०वा०) इति विधेयस्येषत्स्पृष्टस्य दीर्घत्वेऽपि न क्षतिः। **दीर्घाभावादिति**। अत एव "तुल्यास्य" (पा०सू० १।१।९) सूत्रे भाष्ये "लृति सवर्णे" (का०वा०) इत्यनेन पक्षे द्विलकारकाभावे "अकः सवर्णे" (पा०सू० ६।१।१०१) इति दीर्घत्वे 'होतॄकारः' इति ऋकारघटितप्रयोगः सङ्गच्छते। **ह्रस्वाभावादिति**। इदम् "एओङ्" (मा०सू०३) इत्यादौ भाष्ये स्पष्टम्। गानरोदनादौ चतुर्मात्राऽर्धमात्रादीनामुपलम्भेऽपि शास्त्रीयकार्ये उपयोगाभावाल्लोके प्रयोगेष्वप्रयोगाच्च नोक्ताः। अत एवानुदात्ततरस्यानुक्तिः। (५)एकश्रुतेः

---

(१) **इति विग्रह इति**। वस्तुतस्तु मुखसंहितया नासिकयेति न विग्रहः, किन्तु मुखद्वितीयया नासिकयेति। अन्यथोत्तरपदलोपस्य नित्यत्वेन मुखसहितनासिकयेति मूलस्यासङ्गत्यापत्तेरिति साम्प्रदायिकाः। अन्ये तु मुखपदं मुखसहिते लाक्षणिकं सूत्रे, शाकपार्थिवादौ पाठे न मानं, नापि प्रयोजनमित्याहुः। (२)**यमानुस्वाराणामिति**। प्रासादवासिन्यायमबुद्ध्वाऽयं ग्रन्थ इति बोध्यम्।

(३)**न व्यक्तिपक्षे इति**। चिन्त्यमिदं, जातिपक्षेऽपि व्यक्तीनामानन्त्येन धर्मत एवाष्टादशविधत्वस्योपपादनीयत्वात्। ननु स्वसमभिव्याहृतपदार्थतावच्छेदकव्याप्यमिथोविरुद्धयावद्धर्मबोधनस्य विधापदार्थत्वेन ह्रस्वत्वादयोऽष्टावेव धर्मा इति विधापदार्थानुपपत्तिरित्यत आह–(४)**तत्तत्समानाधिकरणेति**। उदात्तत्वविशिष्टानुनासिकत्वविशिष्टह्रस्वत्वमित्यादिक्रमेणाष्टादशविधत्वमिति भावः (५)**एकश्रुतेरिति**। अस्याः प्रचय इत्यपि व्यवहारः।

स्वरान्तरत्वे इदमुपलक्षणम् । तस्या लोकेऽपि सत्त्वात् ।

**तुल्यास्य ।** (पा०सू० १।१।९) । (१)तुल्यावास्यप्रयत्नौ यस्येत्यर्थः । (२)आस्ये भवमास्यं (३)व्याख्यानात् । तच्च (४)वर्णोपयोगित्वात्स्थानमेव, प्रयत्नस्य पृथगुपादानात् । प्रकृष्टो यत्न आभ्यन्तरः । तस्य वर्णोत्पत्त्यव्यवहितप्राग्भावित्वरूपप्रकर्षवत्त्वात् । (५)जनकत्वं षष्ठ्यर्थः । तत्तत्कार्यगतभेदं स्थानेष्वारोप्य भेदघटिततुल्यत्वस्य निर्वाहः । वस्तुतः सादृश्यं (६)न भेदघटितमिति भाष्यसम्मतमिति न कश्चिद्दोषः । स्पष्टञ्चेदं भाष्ये । तदाह—**ताल्वादीति ।** शिक्षायां कण्ठादीनां कण्ठत्वादिनैव स्थानतोक्त्या तद्रूपेणैवाऽऽस्यशब्देन ग्रहणमिति तद्भागभेदमादाय नोदात्तादिषु सावर्ण्यभङ्ग इति बोद्धव्यम् । यस्यैतद्द्वयं येन यदीयेनैतद्द्वयेन तुल्यमित्यर्थः । "यजुष्येकेषाम्" (पा०सू० ८।३।१०४) इति निर्देशाद् (७)यावदास्यभ-

---

(१)**तुल्याविति ।** ननु तुल्यं च तुल्यश्च इति विग्रहे "नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्" ( पा० सू० १।२।६९ ) इति सूत्रेण नपुंसकस्यैवैकशेषे 'तुल्ये' इति वक्तुमुचितम् । न च "अद्वन्द्वतत्पुरुषविशेषणानाम्" ( का० वा० ) इति वार्तिकेन तन्निषेध इति वाच्यम् । "त्यदादीनि सर्वैः" ( पा० सू० १।२।७२ ) इति सूत्रभाष्ये तस्य "त्यदादितः शेषे" इत्यस्यैव निषेधकत्वमित्युक्तत्वात् ; इति चेत् ? न, प्रवृत्तिनिमित्तनिष्ठनानाप्रकारतानिरूपितनानाविशेष्यताकबोधविषयकशब्दतन्त्रविषये एव एकशेषप्रवृत्त्या प्रकृते तुल्यत्वरूपप्रवृत्तिनिमित्तनिष्ठैकप्रकारतानिरूपितनानाविशेष्यताकबोधविषयकार्थतन्त्रस्यैव स्वीकारेणैकशेषाप्रवृत्तेः । व्यक्तिगतसंख्याभिप्रायेण च द्विवचनोपपत्तिः । 'न ब्राह्मणं हन्यात्' इत्यत्र ब्राह्मणशब्दादेकवचनन्तु जातिगतैकत्वविवक्षायां बोध्यम् । (२) **आस्ये भवमिति ।** आस्यशब्दाद्भवार्थे "अर्शआदिभ्योऽच्" ( पा०सू० ५।२।१२७ ) इत्यच् । (३) **व्याख्यानादिति ।** सूत्रे आस्यपदोपादानरूपादित्यर्थः । अन्यथा सर्वेषां वर्णानां जनकस्याऽऽस्यस्य तुल्यत्वात्तद्वैयर्थ्यं स्पष्टमेव । (४) **वर्णोपयोगित्वादिति ।** वर्णत्वव्याप्यधर्मावच्छिन्नजन्यतानिरूपितजनकतावत्त्वादिति भावः । तेन कण्ठादिभागानां न स्थानत्वम् । अत एवाकारादीनां दीर्घादिभिः सावर्ण्येन 'गङ्गीस्यात्' इत्यादिसिद्धिः । (५) **जनकत्वं षष्ठ्यर्थ इति ।** तथा च यज्जनकावास्यप्रयत्नौ यज्जनकाऽऽस्यप्रयत्नाभ्यां तुल्यौ तौ मिथः सवर्णसंज्ञौ भवतः । (६) **न भेदघटितमिति ।** "नाञ्चियुक्तमन्य" ( पा० ७५ ) इत्यत्र इवशब्दोपादानादेतद्गम्यते इत्यन्यत्र निरूपितम् । (७) **यावदास्यभवतुल्यत्वमिति ।** स्व-

वतुल्यत्वं ग्राह्यम्। अत एवैचोः सावर्ण्यमाशङ्क्य "नैतौ तुल्यस्थानौ" इति भाष्ये समाहितम्। अत एव वलयोर्न सावर्ण्यम्। तेन "तद्वानासाम्" (पा०सू० ४।४।१२५) इत्यादौ "तोर्लि" (पा०सू० ८।४।६०) इति न। अत एव प्रयत्नशब्देन यत्नमात्रग्रहणमिति पक्षे यत्किञ्चित्प्रयत्नभेदे यत्किञ्चित्प्रयत्नैक्यमादाय सवर्णसञ्ज्ञेत्यर्थौ "झरो झरि सवर्णे" (पा०सू० ८।४।६५) इति सवर्णग्रहणेन ज्ञापकेन साधितो भाष्ये। तेन स्थानांशे यावत्स्थानसाम्ये इत्येव स्वारसिकोऽर्थ इति प्रतीयते। न च यावदास्यभवतुल्यत्वविवक्षणे प्रयत्नग्रहणं व्यर्थं प्रयत्नस्याप्यास्यभवत्वात्; इति वाच्यम्। ह्रस्वदीर्घयोः सावर्ण्यानापत्तेः। तयोर्जनकानामास्यभवानां वायुसंयोगानामतुल्यत्वात्। तस्मादास्यभवानां कण्ठादीनामेव ग्रहणमिति बोधनाय तत्सार्थक्यात्। आस्येति किम्? तर्षा। "झरो झरि" (पा०सू० ८।४।६५) इति लोपो मा

---

जनकस्थानप्रयत्नजन्यत्वं—स्वाजनकस्थानप्रयत्नाजन्यत्वमिति सम्बन्धाभ्यां वर्णविशिष्टो वर्णः सवर्णसंज्ञको भवतीत्यर्थः। तेनेकारसावर्ण्यमेकारस्य न, तस्य चेकाराजनककण्ठस्थानजन्यत्वात्। नन्वेवमेकारसावर्ण्यमिकारे प्रसक्तमेकारजनकतालुस्थानजन्यत्वात्तदजनकमूर्धादिस्थानाजन्यत्वाच्च; इति चेत्? न, आद्यसम्बन्धे यावत्पदनिवेशेनेकारस्य तालुस्थानजन्यत्वेऽपि यावत्स्थानाजन्यत्वेनाऽऽद्यसम्बन्धेन वर्णवैशिष्ट्याभावात्। अथवा परस्परानिवेशेनापि वारणसम्भवात्।

तथा हि—परस्परत्वञ्च सम्बन्धविशिष्टसम्बन्धसम्बन्धित्वम्। सम्बन्धे सम्बन्धवैशिष्ट्यञ्च स्वीयप्रतियोगितासमानाधिकरणानुयोगिताकत्वं, स्वीयानुयोगितासमानाधिकरणप्रतियोगिताकत्वं, स्ववृत्तिसम्बन्धतावच्छेदकरूपवत्वं, स्वभिन्नत्वमेतच्चतुष्टयसम्बन्धेन। तथा च प्रकृते तालुस्थानजन्यत्वसम्बन्धप्रतियोगिता—कण्ठतालुस्थानजन्यत्वसम्बन्धानुयोगितयोरिकारेऽभावान्न दोषः। 'देवदत्तो यज्ञदत्तं नमति' 'यज्ञदत्तो विष्णुमित्रम्' इत्यत्र परस्परमिति प्रयोगवारणायाऽद्यौ सम्बन्धौ। तत्रैव प्रथमो नमति द्वितीयश्च प्रथमं ताडयतीत्यर्थके तद्वारणाय तृतीयः सम्बन्धः। देवदत्तः स्वं नमतीत्यत्र तद्वारणाय तुरीयः सम्बन्धः।

अथवा वर्णविशिष्टवर्णविशिष्टः सवर्णसंज्ञको भवतीत्यर्थः। उभयत्रापि वर्णवैशिष्ट्यं स्वजनकस्थानप्रयत्नजन्यत्वं—स्वाजनकस्थानप्रयत्नाजन्यत्वमिति सम्बन्धद्वयेन। प्रकृते चैकारवैशिष्ट्यस्येकारे सत्त्वेऽपि तद्वैशिष्ट्यस्यैकारेऽसत्त्वेन न दोष इत्यलमतिविस्तरेण।

भूत् । प्रयत्नेति किम् ? (१)वाक्श्चोतति । प्रेति किम् । शचयोः श्वासाघोषविवाराख्यबाह्यप्रयत्नसाम्येन (२)तत्रैव दोषात् ।

कस्य किं स्थानमित्याशङ्कायामाह—**अकुहेति** । यद्यपि सर्ववर्णोच्चारणे (३)कण्ठव्यापार आवश्यकस्तथापि चकाराद्युच्चारणे ताल्वादिव्यापारोऽपि, तथाऽकारादीनामुच्चारणे तु नेति भावः । कचयोस्तु न सावर्ण्यम् । यावत्स्थानसाम्याभावात्, भिन्नस्थानकथनवैयर्थ्यापत्तेश्च । अत्र कण्ठपदं कण्ठस्थानतत्समीपजिह्वामूलस्थानोभयपरम्(४) । तेन "कण्ठ्यावहौ"(पा० शि० १७) "जिह्वामूले तु कुः प्रोक्तः" (पा०शि० १८) इति शिक्षया न विरोधः । जिह्वामूलीयपदस्य च वर्णविशेषे रूढिरिति न व्यवहारातिप्रसङ्गः । अत एवायोगवाहेषु जिह्वामूलीयगणनं भाष्ये । तत्तद्वर्णोत्पत्तेः प्राक् तत्तत्स्थानादौ जिह्वास्पर्शाद्यनुभवेन तत्तद्वर्णानां तत्तत्स्थानत्वनिर्णयेऽपि 'अकुह' इत्यादिकथनं साधारणधर्मबोधनायानुवादकं, नत्वेतदेव कण्ठादिस्थानविधायकमिति भ्रमितव्यम् । विसर्जनीयपदेनात्र साहचर्यादकाराश्रयस्य ग्रहणम् । अत एव

"अयोगवाहा विज्ञेया आश्रयस्थानभागिनः" । (२२)

इति शिक्षया न विरोधः । **दन्ता इति** । दन्तसंयुक्तदेशा इत्यर्थः । अतो भग्नदन्तस्याप्युच्चारणं भवत्येव । उश्च पश्च ध्मायेते अनेन, तत्र भव इति योगेनोपध्मानीयस्यौष्ठ्यत्वमित्याह—**उपूपेति** । रूढत्वाच्च न व्यवहारातिप्रसङ्गः । **नासिका चेति** । चेन स्वस्ववर्गानुकूलं ताल्वादि गृह्यते ।

---

(१) **वाक्श्चोततीति** । सवर्णसंज्ञायां "झरो झरि" (पा०सू० ८।४।६५) इति शलोपापत्तिः । (२) **तत्रैव दोषादिति** । यत्किञ्चित्प्रयत्नैक्यसत्त्वेऽपि सवर्णसंज्ञेत्युक्तत्वात् ।

(३) **कण्ठव्यापार आवश्यक इति** । चिन्त्यमेतत् । चकाराद्युच्चारणे कण्ठव्यापारस्याऽऽवश्यकत्वेऽपि तेषां तत्स्थानकत्वे प्रमाणाभावात् । न हि केवलं कण्ठव्यापारस्य चकाराद्युच्चारणे उपयोगित्वेन चकारादिनिरूपितं स्थानत्वं कण्ठस्येति शक्यते वक्तुम् । किन्तु वाय्वाघाताद्यद्देशावच्छेदेन यो वर्णोऽभिव्यज्यते तन्निरूपितस्थानत्वं तद्देशस्यैव । अन्यथा सर्ववर्णानां मूर्धन्नुरआदिव्यापारावश्यकत्वादुरस्यमूर्धन्यत्वाद्यापत्तिः । (४) **उभयपरमिति** । अन्यतरपरमिति वक्तुं युक्तम् अकारादीनामपि जिह्वामूलस्थानकत्वोपपत्तेः ।

अत एवैषां प्रातिशाख्ये नासिकायां भव इत्यर्थकनासिक्यशब्देन व्यवहारः। यत्तु—

"अनुस्वारयमानां च नासिका स्थानमिष्यते।" (पा०शि २२) इति शिक्षोक्तेरेषां नासिका करणम्।

किञ्च स्थानत्वे कङयोः सावर्ण्यानापत्तिः यावत्स्थानैक्याभावात्। यत्किञ्चित्स्थानैक्येन तत्त्वे तु ञमामपि परस्परं सावर्ण्यापत्तिरिति, तन्न, कण्ठादीनामपि करणत्वस्यैव "अस्यन्त्यनेन वर्णान्" इति भाष्यात्प्रतीतेः। स्थानत्वव्यवहारस्तु वर्णाभिव्यक्तिजनकताल्वादौ वर्णजनकवायुसंयोगाधारे वर्णाधारत्वाऽऽरोपेण। तत्तत्स्थानजिह्वाग्रादिसम्बन्धेन वर्णोत्पत्त्या जिह्वाग्रादौ तत्सम्बन्धजनकप्रयत्नविशेषे स्पृष्टतादौ च करणत्वव्यवहारः। वर्णाभिव्यक्त्यनन्तरभावी सावर्ण्यानुपयुक्तश्च कण्ठविवरादिनिष्ठविकासादेरास्यबहिर्देशावच्छिन्नकार्यस्य जनको यत्नो गुणशब्देनोच्यते। अकारादिनिष्ठानुनासिक्यस्य "भेदकत्वाद् गुणस्य" इत्यादौ (१)गुणत्वेन व्यवहारस्तु कण्ठाद्यवच्छिन्नवायुसंयोगेनोत्पन्नेषु नासावच्छिन्नवायुसंयोगेन तद्रूपधर्मोत्पत्त्या। एवञ्च नासिकायास्तत्र गुणजनकत्वादनुनासिकाकारादीनां नासिकास्थानं नोक्तं मूले। "एकोऽयमात्मोदकन्नाम तस्य गुणभेदादन्यत्वं भवति अन्यदिदं शीतमन्यदिदमुष्णम्" इति दृष्टान्तपरभाष्येण तथैव प्रतीतेः। आत्माऽत्र द्रव्यम्। उदात्तत्वादीनां गुणत्वव्यवहारस्तु सावर्ण्यानुपयुक्तत्वाऽऽन्तरतम्यपरीक्षोपयोगित्वरूपसादृश्येनेति बोध्यम्। ङादीनान्तु तद्गुणरहितस्वरूपानुपलम्भेन उभयावच्छेदेन वायुसंयोगोत्तरमेव स्वरूपोत्पत्त्या विनिगमनाविरहेणोभयोः स्थानत्वम्। "अनुस्वारयमानाञ्च" (पा०शि०२२) इति शिक्षायां चेन ङादीनामपि सङ्ग्रह इति युक्तम्। 'अत एव कण्ठ्योऽकारः' इत्याद्युक्त्वा "नासिक्यान्नासिक्ययमानुस्वारानिति स्थानानि" इत्युक्तं प्रातिशाख्ये। 'नासिक्याः ङञणनमाः' इति तद्व्याख्यातारः। कङयोः साव-

(१) गुणत्वेन व्यवहारस्त्विति। "वृद्धिरादैच्" (पा०सू० १।१।१) इति सूत्रे भाष्ये इति शेषः।

र्यन्तु भवत्येव । "आस्ये तुल्यदेशप्रयत्नम्" (का०वा०) इति वार्त्तिके 'किमास्योपादाने प्रयोजनम्' इति प्रश्ने 'प्रयत्नविशेषणमास्योपादानम्' इत्युक्त्वा तद्व्यावर्त्यत्वेन बाह्यप्रयत्नान् प्रदर्श्य "यथा तृतीयास्तथा पञ्चमाः, आनुनासिक्यमेषामधिको गुणः" इति भाष्येण तस्य ब्राह्यप्रयत्नत्वोक्त्याऽत्र सूत्रे नासिकाया आस्यशब्देन, तत्रत्यप्रयत्नस्य च प्रयत्नशब्देनाग्रहणबोधनात्, नासिका आस्यबाह्येति वदतां मते तद्ग्रहणाभावाच्च । अत एव बाह्यप्रयत्नानुपक्रम्य—

"अमोऽनुनासिको न ह्रौ, नादिनो हझषः स्मृताः ।
ईषन्नादा यणश्चैव, श्वासिनस्तु खफादयः ॥ (३९)
ईषच्छ्वासाँश्चरो विद्यात्" (पा०शि० ४०) इत्युक्तं शिक्षायाम् ।

नादेति संवारघोषयोरुपलक्षणं, श्वासेति विवाराघोषयोः, न ह्रावित्युपलक्षणम् ऐचः सर्वस्य, प्लुतलृकारस्य च, अनुनासिकस्यादर्शनादित्यलम् ।

"एदैतोः" इत्यादौ लोकानुभवसिद्धार्थानुवादके तपरशास्त्राप्रवृत्त्या प्लुतानामपि तत्स्थानत्वं बोध्यम् । तथा च पाणिनीयाशिक्षा—

"कण्ठ्यावहाविचुयशास्तालव्या, ओष्ठजावुपू ।
स्युर्मूर्धन्या ऋटुरषा दन्त्या लृतुलसाः स्मृताः ॥ (१७)
जिह्वामूले तु कुः प्रोक्तो, दन्त्योष्ठ्यो वः स्मृतो बुधैः ।
एऐ तु कण्ठ्यातालव्याओऔ कण्ठोष्ठजौ स्मृतौ ॥"(१८)
"अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा ।
जिह्वामूलञ्च दन्ताश्च नासिकोष्ठौ च तालु च ॥"(१३)
"हकारं पञ्चमैर्युक्तमन्तस्थाभिश्च संयुतम् ।
उरस्यं तं विजानीयात्कण्ठ्यमाहुरसंयुतम् ॥"(१६)इति ।

यत्तु—"दन्तोष्ठादि समुदितं स्थानम्" इति, तन्न, शिक्षायां 'दन्त्योष्ठ्यः' 'कण्ठ्यतालव्यौ' इत्यादौ "तत्र भवः" (पा० सू० ४।३।५३) इत्यधिकारविहितयतः प्रत्येकमनुत्पत्त्यापत्तेः । दन्तोष्ठ्यमित्यादि त्वसङ्गतमेव । स्वाङ्गसमुदायस्य स्वाङ्गत्वाभाववच्छरीरावयवसमुदायस्य शरीरावयवत्वा-

भावात्। एतेन 'दन्तोष्ठरूपमतिरिक्तं स्थानम्' इत्यपास्तम्, "अष्टौ स्थानानि" (पा०शि० १३) इति प्रतिज्ञाविरोधाच्चेति दिक्।

सूत्रे प्रशब्देन विलक्षणार्थबोधेऽपि लोके यत्नप्रयत्नयोः पर्यायतेति ध्वनयन्नाह—**प्रयत्नो द्विधेति**। क्वचिद् यत्न इत्येव पाठः। **चतुर्धेति**। **यत्तु**—

स्वराण मूष्मणाञ्चैव विवृतं करणं स्मृतम्।
तेभ्योऽपि विवृतावेङौ ताभ्यामैचो तथैव च॥"(२१)

इति शिक्षावाक्याद्विवृततरविवृततमयोः प्रतीत्या "नाज्झलौ"(पा०सू० १।१।१०) इति सूत्रभाष्यादूष्मणामीषद्विवृतत्वस्य च प्रतीत्या चतुर्धेत्यासङ्गतमिति, तन्न, "नाज्झलौ" (पा०सू० १।१।१०) इति सूत्रेण विवृतत्वव्याप्यानामेषां सवर्णसञ्ज्ञानुपयुक्तत्वबोधनमित्याशयात्। भाष्यमते तु सन्तु सप्त प्रयत्नाः। एवञ्चैदैतोरोदौतोश्च न सावर्ण्यप्रसक्तिः प्रयत्नभेदादिति बोध्यम्। "नाज्झलौ" (पा०सू० १।१।१०) इति सूत्रमपि प्रयत्नभेदप्राप्तसावर्ण्याभावानुवादकं सत् तस्यैव बोधकम्। अत एव भाष्ये 'तन्न वक्तव्यम्' इति नोक्तम्। स्पृष्टादीनामाभ्यन्तरत्वं त्वोष्ठप्रभृतिकाकलकपर्यन्तरूपास्यान्तर्गततत्तत्स्थानेषु जिह्वाग्रादीनां स्पर्शेषत्स्पर्शदूरावस्थानसमीपावस्थानरूपाभ्यन्तरकार्यकारित्वाद्वर्णोत्पत्त्यव्यवहितप्राग्भावित्वाच्च बोध्यम्। तत्र बहूनामेकस्थानत्वेऽपि कस्यचिदुच्चारणे सम्यक्स्पर्शः कस्यचिदीषदिति शिक्षाकारोक्तिमनुभवं चानुसृत्य विवेक्तव्यम्। प्रयतनमिति नपुंसके भावे ल्युट्। प्रयत्नमित्यपपाठो नङन्तस्य पुंस्त्वात्। तथा च शिक्षा—"स्वराणामूष्मणाञ्च" (पा०शि० २१) इत्याद्यनन्तरम्—

"अचोऽस्पृष्टाः यणस्त्वीषन्नेमस्पृष्टाः शलः स्मृताः)
शेषाः स्पृष्टा हलः प्रोक्ता" (पा०शि० ३८) इति।

अचोऽस्पृष्टाः स्पर्शाभावरूपविवृतत्ववन्तः। यणस्त्वीषदिति, अनेन तेषामीषत्स्पृष्टत्वमीषद्विवृतत्वञ्च बोधितम्। नेम इत्यर्धे। तेन शलामीषद्विवृतत्वं यणपेक्षयाऽधिकविवृतत्वं चेति बोध्यम्। अत्र शिक्षोक्तव्याप्यधर्मवतां व्यापकधर्ममादाय न सावर्ण्यमिति यणां चवर्गादिभिर्न सावर्ण्यम्।

तेन 'अञ्चितः' इत्यादौ न यादिः परसवर्णः । **विवृतमेवेति** । प्रक्रियादशायां विवृतत्वं प्रतिज्ञेयमित्यर्थः । तेन दण्डाढकादौ दीर्घसिद्धिः । अन्यथा संवृतस्य ह्रस्वाकारस्य विवृतेन दीर्घेण सावर्ण्याभावात् स न स्यादिति भावः । दीर्घाकारस्य(१) विवृततरत्वन्तु पाणिनिशिक्षाऽनुक्तत्वान्नैतच्छास्त्रप्रक्रियोपयोगीति दिक् ।

तस्य प्रयोगे संवृतत्वे मानमाह—**अ अ** (पा०सू० ८।४।६८) । (२)प्रयत्नभेदाद्दीर्घाभावः(३) । अत्रोद्देश्ये सवर्णग्रहणं जातिनिर्देशो वा न, व्याख्यानात् ।

अधिकारत्वे फलमाह—**त्रिपाद्यामपीति** । अन्यथा 'गोधुङ्मान्' इत्यत्र (४)घत्वजश्त्वानुनासिकेषु भष्भावानापत्तिरिति भावः । वस्तुतो घत्वे कृते "झयः" (पा०सू० ८।२।१०) इति (५)वत्वापत्तिर्दोषः ।

---

(१) **विवृततरत्वन्त्विति** । नारदशिक्षोक्तमिति भावः ।

(२) **प्रयत्नभेदादिति** । आद्यस्य विवृतत्वादन्त्यस्य संवृतत्वात् । न चानेनैवान्त्यस्य विवृतस्य संवृतादेशे तस्यासिद्धत्वादुक्तापत्तिस्तदवस्थैवेति वाच्यम् । पृथग्द्वयोर्निर्देशेन तस्य मूलत एव संवृतत्वस्वीकारात् । (३) **दीर्घाभाव इति** । प्रयत्नभेदेनाक्षरसमाम्नायस्थाकारेणात्रत्यद्वितीयस्याग्रहेणाच्त्वाभावादित्यर्थः । अत एव "आद् गुणः" ( पा०सू० ६।१।८७ ) इति गुणोऽपि न । मूले च प्रयत्नभेदेन अद्दीर्घयोरभाव इति विग्रहः । अत्पदेन च गुणस्य ग्रहणम् । गुणेन ह्रस्वस्यैव प्राप्तेः । (४) **घत्वजश्त्वानुनासिकेषु भष्भावानापत्तिरिति** । नन्वेतेषु कृतेषु प्राप्तेषु वा ? नाद्यः, तदनन्तरं सर्वथा भष्भावाप्राप्तौ मूलासङ्गतेः । नान्त्यः, घत्वात्प्राक् झषन्तत्वाभावेन पूर्वरीत्या मूलासङ्गतेः । तस्मात् घत्वे कृते जश्त्वानुनासिकभष्भावेषु प्राप्तेषु इति व्याख्येयम् । मूलस्य चात्रैव तात्पर्यं वर्णयन्ति ।

(५) ननु जश्त्वं बाधित्वाऽपवादत्वाद् भष्भावः स्यात् । न च तं बाधित्वा परत्वात् अनुनासिकः, तं च अन्तरङ्गत्वाद् बाधित्वा जश्त्वं, तच्चापवादत्वाद् बाधित्वा भष्भाव इति चक्रकापत्तिरिति वाच्यम् । अपवादत्वाज्जश्त्वमन्तरङ्गत्वाच्चानुनासिकं बाधित्वा भष्भावसिद्धेः । कार्यकालपक्षे त्रिपाद्यामन्तरङ्गपरिभाषाप्रवृत्तेरिदानीं सुवचत्वात् । तत्र तदप्रवृत्तिबीजस्य बहिरङ्गदृष्ट्याऽन्तरङ्गासिद्धत्वरूपस्य "पूर्वत्रासिद्धम्" ( पा०सू० ८।२।१ ) इत्यस्याधिकारत्वाभावेऽसत्त्वात् । ततश्च अधिकारत्वाभावे नेदं दूषणमित्यरुचेराह—(५) **वत्वापत्तिरिति** । प्रतिपदोक्तत्वादिति भावः ।

न च ततः परत्वाज्जश्त्वानुनासिकत्वयोस्तदप्राप्तिरिति वाच्यम्। "विप्रतिषेधे परम्" (पा०सू० १।४।२) इत्यस्य यथोद्देशत्वेन त्रिपाद्यामप्रवृत्तेः। "पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्य" इत्यनेन तस्या यथोद्देशत्वस्यैव बोधनात्। अन्यथा परस्यासिद्धत्वे "विप्रतिषेध" (पा०सू० १।४।२) सूत्रस्य सिद्धत्वात्परिभाषान्तराणामिवास्यापि कार्यकालपक्षे तेनाकर्षणापत्तेः। अत एव भाष्ये वत्वमेवापादितम्। अधिकारत्वादेव "श्चुत्वं धुटि सिद्धं वाच्यम्" (का०वा०) इत्यादि चरितार्थम्। एवं च यत्रानुवृत्तिस्तस्यासिद्धत्वम्। पूर्वत्वञ्च क्वचित्सपादसप्ताध्याय्याः क्वचित्सूत्रान्तरसहितायाः। तत्रायमर्थः––"होढः" (पा०सू० ८।२।३१) इत्यादावस्योपस्थितौ वाक्यभेदेनान्वयः–हस्य ढो भवति, इदञ्च शास्त्रं पूर्वत्रासिद्धमिति। अत एव "नमुने" (पा०सू० ८।२।३) इत्यादिभिस्तन्निषेध उपपद्यते। पूर्वत्रेति सङ्ग्राहकमेव। (१)शृङ्गग्राहिकयैव तु तत्तच्छास्त्रं प्रति तस्यासिद्धत्वं प्रतिपाद्यते। तेनापवादस्य यं प्रत्यपवादत्वं तत्रासिद्धत्वाभावेऽप्यन्यत्रासिद्धत्वं भवत्येव। **असिद्धमिति**। सिद्धं निष्पन्नं, प्रवृत्तम्। "सिद्धश्च प्रत्ययविधौ" इत्यादौ तथा दर्शनात्। तद्भिन्नमसिद्धम्–अनि-

---

(१)**शृङ्गग्राहिकयेति।** तत्तच्छास्त्रमनूद्य तद्दृष्ट्याऽसिद्धत्वं बोध्यत इत्यर्थः। वस्तुतस्तु पूर्वत्वेन रूपेण सामान्यलक्षणप्रत्यासत्त्या पूर्वदृष्ट्याऽसिद्धत्वबोधनेनोपपत्तौ चिन्त्यमिदम्। न च "न मु ने" (पा०सू० ८।२।३) इतिनिषेधासङ्गतिरिति वाच्यम्। "अदसोऽसेः" (पा सू० ८।२।८०) इत्येकवाक्यतापन्न "पूर्वत्रासिद्धम्" (पा०सू० ८।२।३) इत्यत्रत्यपूर्वपदार्थे "आङो नाऽस्त्रियाम्" (पा०सू० ७।३।१२०) "टाङसि" (पा०सू० ७।१।१२) "अकः सवर्णे" (पा०सू० ६।१।१०१) इत्येतद्भिन्नत्वेन "न मुने (पा०सू० ८।२।११) इति निषेधेन सङ्कोचेनादोषात्। एवं "नलोपः सुप्स्वर" (पा०सू० ८।३।२९) इत्यनेनापि सुप्स्वरादिविधिभिन्नशास्त्रभिन्नत्वेन "नलोपः प्रातिपदिक" (पा०सू० ८ २।७) इति सूत्रैकवाक्यतापन्न "पूर्वत्रासिद्धम्" (पा०सू० ८।२।१) इत्यत्रत्यपूर्वपदार्थे सङ्कोच इति न दोषः। एवं "श्चुत्वं धुटि" (का०वा०) इति वार्तिकेन श्चुत्वविधायकैकवाक्यतापन्न "पूर्वत्र" (पा०सू० ८।२।१) इत्येतद्घटकपूर्वपदार्थे "ङः सि धुट्" (पा०सू० ८।३।२९) इत्येतद्भिन्नत्वेन सङ्कोचः। एवमपवादशास्त्रैकवाक्यतापन्न "पूर्वत्र" (पा०सू० ८।२।१) इत्येतद्घटकपूर्वपदार्थे उ-

ष्पन्नमप्रवृत्तम् । यद्यपि लोके (१)ऽनाहार्यज्ञानस्यैव प्रवर्त्तकत्वं निवर्त्तकत्वञ्च दृष्टं तथाऽपीह शास्त्रप्रामाण्यादाहार्यारोपोऽपि शास्त्रप्रवृत्तावप्रवृत्तौ च नियामक इति बोध्यम् । अत्र कार्यासिद्धत्वे 'अमू' इत्याद्यसिद्धिः । 'अद् अ औ' इति स्थिते परत्वान्मुत्वे तस्य सपादसप्ताध्यायीस्थकार्यदृष्ट्याऽसिद्धत्वेऽपि देवदत्तहन्तृहतन्यायेनाकाराभावेन (२)पररूपाद्यनापत्तिः । अतिदेशस्याऽऽरोपरूपत्वान्निरधिष्ठानारोपासम्भवेन कार्यप्रवृत्तेरत्र पक्षे आवश्यकत्वात् । शास्त्रासिद्धत्वे तु यत्राप्यन्तरङ्गत्वा(३)त्त्रैपादिकं प्रवृत्तं तत्रापि तत्तच्छास्त्रे

त्सर्गशास्त्रभिन्नत्वेन सङ्कोच इति दिक् (१) **अनाहार्यज्ञानस्येति** । बाधज्ञानसमकालिकेच्छाजन्यज्ञानमाहार्यज्ञानं, तद्भिन्नस्येत्यर्थः । (२) **पररूपाद्यनापत्तिरिति** । न च मुत्वस्यासिद्धत्वे देवदत्तहन्तृहतन्यायेन तत्स्थान्यकाराभावेऽपि अदस्शब्दाद्याकारेण त्यदाद्यत्वनिष्पन्नाकारस्य पररूपं भवत्येवेति कथं पररूपानापत्तिरिति वाच्यम् । इष्टपररूपाद्यनापत्तिरिति तदर्थस्वीकारात् । वस्तुतस्तु मुत्वशास्त्रेण स्वघटितं साधु तदितरत्सर्वमसाध्विति बोधनेन "अ अ औ" इत्यस्यासाधुत्वेन यत्किञ्चिद्बोधितसाधुत्ववत्त्येव सर्वशास्त्रप्रवृत्त्या यथाश्रुतमेव साधु । मुत्वस्यासिद्धत्वेऽपि तदधिकरणकालस्यासिद्धत्वे प्रमाणाभावेनार्धमात्राधिककालशून्यत्वरूपसंहिताया आद्याकारान्त्याकारयोरभावेन पररूपप्राप्त्यभावाच्च ।

परे तु कार्यासिद्धत्वस्य स्वीकारेऽपि "पूर्वत्रासिद्धम्" (पा०सू० ८।२।१) इत्यस्य त्रैपादिकं शास्त्रं न प्रवृत्तं तत्कृता स्थानिनिवृत्तिरपि न जातेति सम्भावनायां यद्भवति तद्भवति, यन्न भवति तन्न भवतीत्यर्थकरणेन 'अमू' इत्यादौ मुत्वे जातेऽपि मुत्वं न कृतं तत्कृता स्थानिनिवृत्तिर्न जातेति सम्भावनया उकारे एव अकारबुद्ध्या पररूपे जाते सन्नियोगशिष्टन्यायेन मकारस्यापि निवृत्तौ वृद्धौ तद्घटकमात्रोद्देश्यकविकाराभावेन तल्लक्ष्यत्वाभावात्पुनर्मुत्वे 'अमू' 'अमी' इत्यादिसिद्धिः । न च "पूर्वत्रासिद्धम्" (पा०सू० ८।२।१) इत्यस्य तादृशार्थकत्वे प्रमाणाभाव इति वाच्यम् । 'हर एहि' इत्यादौ लोपस्यासिद्धत्वेऽपि स्थानिबुद्धेरभावेन "पूर्वत्रासिद्धम्" (पा०सू० ८।२।१) इत्यस्य वैयर्थ्यापत्तेरेतादृशार्थकल्पनात् । न च 'अमूदृक्' 'अमूभ्याम्' 'अमीभिः' इत्यादौ तद्घटकमात्रोद्देश्यकविकारसत्त्वेन पुनर्मुत्वं न स्यादिति कार्यासिद्धत्वपक्षोऽसङ्गत इति वाच्यम् । "न मु ने" (पा०सू० ८।२।३) इति निषेधेन मुत्वे लक्ष्ये लक्षणन्यायो न प्रवर्तत इति कल्पनेनादोषात् । अन्यथा 'अद अ आ' इत्यस्यां दशायां परत्वान्मुत्वे तस्यासिद्धत्वात्पररूपे लक्ष्ये लक्षणन्यायेन मुत्वाप्राप्त्येनादेशगुणयोः कृतयोः मुत्वे च नादेशप्राप्त्यभावेन तद्वैयर्थ्यं स्पष्टमेवेत्याहुः ।

(३) **त्रैपादिकं प्रवृत्तमिति** । यत्तु 'तादृशप्रयोगस्याभावान्नास्योपयोगः । न

एवाभावारोपेण तन्निवृत्तिबुद्धेरभाव आदेशबुद्ध्यभावो लक्ष्ये जातत्वबुद्ध्यभावश्च। जायमानं कार्यं त्वादेशे एव स्थानिबुद्ध्या प्रवर्त्तते। "न हि रजतभ्रमप्रयुक्ता प्रवृत्तिः शुक्तिं न गोचरयति" इति न दोषः। यत्र तु सहप्रसङ्गस्तत्राप्रवृत्तिरेवाभावारोपात्। न च "पूर्वत्र न" इत्येव सूत्रमस्त्विति वाच्यम्। पूर्वशास्त्रप्राप्तौ निषेध इत्यर्थे "नलोपः सुप्" (पा०सू० ८।८।२) इति सूत्रासङ्गतेः। तद्धि नियमार्थम्। त्वद्रीत्या 'राजन् अश्व' इत्यस्यां दशायां कस्यापि पूर्वशास्त्रस्याप्राप्त्यैतन्निषेधाप्रवृत्तौ नलोपे जाते "भुक्तवन्तम्" इति न्यायेनैतदप्रवृत्तौ राजाश्वे दीर्घसिद्ध्या नियमानुपयोगात्, 'राजभ्याम्' इत्यादावपि दीर्घापत्तेश्च। 'पूर्वशास्त्रविषयसम्भावनायामित्यर्थे' 'राजभ्याम्' इत्यादौ नलोपे सुब्विधिदीर्घविषयसम्भावनया सर्वथा नलोपानापत्तेरिति (१)दिक्।

**बाह्यप्रयत्न इति।** काकलकाधस्ताद्गलविवरसङ्कोचविकासश्वासोत्पत्तिध्वनिविशेषरूपनादतद्विशेषरूपघोषाल्पघोषप्राणाल्पत्वमहत्त्वरूपकार्यकरत्वमेषाम्। तथाहि—

"आत्मा बुद्ध्या समेत्यार्थान्मनो युङ्क्ते विवक्षया।
मनः कायाग्निमाहन्ति स प्रेरयति मारुतम्॥ (पा०शि० ६)
सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः।
वर्णान् जनयते" इति शिक्षायामुक्तम्।

---

च पिपठिषतेः क्विपि 'पिपठीः' इत्यादौ अन्तरङ्गत्वात्षत्वे तस्यासिद्धत्वाद्रुत्वे तादृशलक्ष्यसम्भव इति वाच्यम्। षत्वस्यासिद्धत्वात्क्विपि अतो लोपे सुप्रत्यये "हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्" "हल्ङ्यादि" (पा०सू० ६।१।६८) लोपे पदान्तत्वेन षत्वस्याप्राप्तेः। एतन्मूलकमेव पठ्यते "असिद्धशास्त्रप्रतिबन्धकसापादिकशास्त्रप्रवृत्तिसम्भावनायां पूर्वं त्रैपादिकं न प्रवर्तते" इति, तन्न, लूनमिच्छत्या 'लून्युः' 'प्रस्तीम्युः' इत्यादिलक्ष्यसम्भवेनास्य ग्रन्थस्याऽऽवश्यकत्वात्। तत्र हि—'लूतः' इत्यत्रैव "ल्वादिभ्यः" (पा०सू० ८।२।४४) इत्यनेन नत्वे पश्चात्क्यजन्तात् क्विपि ङसि यणि च "ख्यत्यात्परस्य" (पा०सू० ६।१।११२) इत्युत्वं भवति नत्वादीनामसिद्धत्वात्। (१) **दिगिति।** अत्रेदं चिन्त्यम्—"पूर्वत्र" इत्येव सूत्रमस्तु "आमन्त्रितम्" (पा०सू० ८।१।७२) इतिसूत्रादविद्यमानवदित्यनुवर्तते इति॥

आत्मा अन्तःकरणं संस्काररूपेण स्वगतानर्थान् बुद्ध्या स्ववृत्त्या समेत्य एकबुद्धिविषयान् कृत्वा तद्बोधनेच्छया मनो युक्तं करोति, तदिच्छावन्मनः कायाग्निं जाठरमग्निमभिहन्ति, स कायाग्निः, सोदीर्णः स मारुतः उदीर्णः उर्ध्वं प्रेरित इत्यादिस्तदर्थः । एवञ्च शब्दप्रयोगेच्छयोत्पन्नयत्नाभिहताग्निना नाभिप्रदेशात्प्रेरितो वायुर्वेगान्मूर्धपर्यन्तङ्गत्वा प्रतिनिवृत्तो वक्त्रं प्राप्य उक्तयत्नसहायेन तत्तत्स्थानेषु जिह्वाग्रादिस्पर्शपूर्वकं तत्तत्स्थानान्याहत्य वर्णानभिव्यनक्ति । ततो यत्नाविशेषेण गलविवरविकासादीन् करोति, तत्र ये तत्तत्स्थानाभिघातका यत्नास्ते आस्यान्तर्गततत्तत्कार्यकारित्वादाभ्यन्तरा इत्युच्यन्ते । गलविवरविकासादिकराश्चास्यबहिर्भूतदेशे कार्यकरत्वाद् बाह्या इति । मात्राकालिकत्वादिरूपह्रस्वत्वादिकन्तु वाय्वल्पत्वमहत्त्वकृतमिति नाभिप्रदेशात्प्रेरकयत्न एव कश्चिद्विलक्षणोऽल्पं वायुं प्रेरयति कश्चिदधिकमिति तस्य वायुप्रेरणारूपङ्कार्यमास्यबाह्यदेशमिति तदपि बाह्यमेव । अत एव "अइउण्" (मा०सू० १) सूत्रे भाष्ये ह्रस्वत्वादिजनकयत्नस्यास्याविशेषणेन सवर्णसूत्रेऽग्रहणामित्युक्तम् । यद्यप्येक एव यत्नः सर्वकार्यजनको वर्णनाशकश्चेति "परः सन्निकर्षः" (पा०सू० १।४।१०९) इति सूत्रे भाष्ये उक्तं तथापि तत्तत्कार्येणोपाधिना एकस्मिन्नपि भेदमारोप्य तथा व्यवहार इति बोध्यम् । उदात्तादिजनकयत्नस्याभ्यन्तरकार्यकरत्वेऽपि उदात्तादिशब्दैर्विना बोधितानां तेषां "अनङ्गुदात्त" इत्यनेनाविवक्षाबोधनात् । सवर्णसंज्ञानुपयुक्तत्वान्तरतम्यपरीक्षोपयुक्तत्वरूपसादृश्येन बाह्येषु गणनम् । इदं ह्रस्वत्वादेरानुनासिक्यस्य चोपलक्षणम् ।

**शर इति ।** शषसाः । अनुप्रदानं बाह्यप्रयत्नः । **विवृण्वते इति ।** तदभिव्यक्त्युत्तरञ्जायमाने कण्ठविवरविकासे तेषां कर्तृत्वाविवक्षा बोध्या । विवार एषां प्रयत्न इति भावः ।

**अन्ये त्विति ।** वर्गतृतीयचतुर्थपञ्चमास्तद्यमा हकारानुस्वारौ यरलवा इत्यर्थः । नादभागिनः तत्प्रयत्नकाः । यद्यपि खयादिषु घोषाघोषान्यतरप्रयत्नमात्रेणापि प्रक्रियांशनिर्वाहस्तथापि शिक्षानुरोधेनान्येषामुक्तिः । अल्पासवः—अल्पप्राणाः । यत एतदुच्चारणोत्तरं प्राणानामल्पत्वमिव भवति ।

**वर्गेष्विति** । विद्यमानानामिति शेषः । **चतुर्णामिति** । निर्धारणे षष्ठी । अन्यतमादिति शेषः । **पूर्वसदृश इति** । सादृश्यं यत्नकृतम् । अत एवायोगवाहेषु यमानां गणनं भाष्ये "चत्वारश्च यमाः स्मृताः" (पा०शि० ४) इति पाणिनिशिक्षा च सङ्गच्छते । अयञ्च वेदे एव; तदाह—**प्रातिशाख्ये इति** । **अन्येषामिति** । अचाम्, उक्तान्यहलाञ्चेत्यर्थः । **यरलवाश्चेति** । चेनाचामपि ग्रहणम् । "सुपां सुलुक्" (पा०सू० ७।१।३९) इति सूत्रे "इकारस्यान्तर्यतो दकारः' इति भाष्यात् घोषसंवारनादाल्पप्राणत्वमचाम् । अन्यथा तदौ पर्यायेण स्याताम् । अल्पप्राणत्वानङ्गीकारे दधौ पर्यायेण स्याताम् । अचां घोषत्वं "परः सन्निकर्षः" (पा०सू० १।४।१०९) इति सूत्रे भाष्येऽपि स्पष्टम् । **अन्ये इति** । द्वितीयचतुर्थौ तद्यमौ, शषसहा अयोगवाहाश्चेत्यर्थः । जिह्वामूलीययमादीनां स्थानबाह्यप्रयत्नकथनं तु स्वरूपनिर्णयाय न तु सावर्ण्यान्तरतम्यपरीक्षादावुपयोगीति बोध्यम् ।

**अनुपयुक्ता इति** । "तुल्यास्य" (पा०सू० १।१।९) सूत्रे प्रशब्दग्रहणात् । उपयुक्तत्वे हि शछयोरपि सावर्ण्यं स्यादिति भावः । आन्तरतम्यपरीक्षा च घोषवत इत्यादिना तत्र तत्र स्फुटीभविष्यति । स्पर्शाः तत्पदव्यवहार्याः । अन्तस्थाशब्द आदन्तः । स्पर्शोष्मणोरन्तर्मध्ये तिष्ठन्तीति तदर्थः । **ऊष्माण इति** । ऊष्मा वायुस्तत्प्रधाना इत्यर्थः । एवं सोष्माण इत्यस्य वायुना सह वर्त्तन्त इत्यर्थ इति प्रातिशाख्यभाष्ये स्पष्टम् । यद्यपि वर्गद्वितीयचतुर्थयोरपि "स्थानेऽन्तरतम" (पा०सू० १।१।५०) सूत्रभाष्यादूष्मत्वं तथापि विवृतमूष्मणामित्यत्रैत एव गृह्यन्ते । अन्यथा खादीनां सावर्ण्यानापत्तौ "नाऽऽज्झलौ" (पा०सू० १।१।१०) इत्यादिनिर्देशासङ्गतिरिति भावः । **अचः स्वरा इति** । उदात्तादिभिः स्वयमेव राजन्त इति व्युत्पत्तेः, तद्धर्मत्वादुदात्तादयोऽपि स्वरा इत्युच्यन्ते । **कपाभ्यामिति** । खफयोरप्युपलक्षणम् । 'अं अः' इत्युपलक्षणमिकारादेरपि । तदाह—**अचः पराविति** ।

**ऋलृवर्णयोरिति ।** (१)आच लृवर्णश्चेति विग्रहः । "ऋत्यकः" (पा०सू० ६।१।१२८) इति प्रकृतिभावः । एतदर्थमेव वर्णोपदेशे लृकारपाठः । अन्यथा तस्यासत्त्वशङ्कयाऽस्य वचनस्यैवाशक्यत्वं स्यात् । ध्वनितञ्चेदम् "एओङ्" (मा०सू० ३) इति सूत्रशेषे भाष्ये । तत्र हि—सँय्यन्तेत्यादौ "हलोऽनन्तराः (पा०सू० १।१।७) इति सूत्रे प्रत्याहारघटकेष्वपि ग्रहणकशास्त्रप्रवृत्त्या मात्राकालिकस्य यद्वयादेः "अणुदित्" (पा०सू० १।१।६९) सूत्रेण यादिग्रहणेन ग्रहणाद् द्विव्यञ्जनाश्रयो विधिर्न प्राप्नोतीत्याशङ्क्य मात्रिकव्यञ्जनानुपदेशादनुपदिष्टस्यासत्त्वात् असत्प्रतिपत्तेरशक्यत्वाच्च "अणुदित्" (पा०सू० १।१।६९) सूत्रेण तद्ग्रहणमित्युक्तम् । न च "क्लृ ३ प्तशिखः" इत्यादौ "अनृत" इति निषेधात् प्लुतानापत्तिः । ऋलृवर्णयोः पृथगनुबन्धत्वकरणेन क्वचित्परस्पराग्राहकत्वकल्पनेनादोषात् ।

**अकारहकारयोरिति ।** एकारस्य तालव्यत्वमोकारस्यौष्ठ्यत्वमिति मते एकारशकारादीनामप्युपलक्षणमिदम् । एतेन "नाक्शलौ" इत्येव सूत्रयितुमुचितमित्यपास्तम्(२)। "हशि च" (पा०सू० ६।१।११४) इत्येव

---

(१) **आच लृवर्णश्चेति ।** ननु "आ च आ च रलौ" इति मनोरमोक्तं विहाय किमिति द्वितीयः प्रकार आश्रीयत इति चेच्छृणु, "न पदान्ताः परेऽणः सन्ति" इति भाष्यप्रामाण्येन लृकारान्तानामनभिधानेन "आ च आच रलौ" इति विग्रहस्य वक्तुमशक्यत्वादिति ।

(२) **अपास्तमिति ।** एकारशकारयोः "एकारस्य तालुमात्रजन्यत्वम्" इति मते सावर्ण्यापत्तिरिति भावः । न च शकारस्येषद्विवृतत्वेन एकारस्य विवृतत्वेन आभ्यन्तरप्रयत्नैक्याभावान्न दोष इति वाच्यम् । सूत्रकृन्मते दोषसत्त्वात् । केचित्तु, एकारादीनां केवलतालव्यत्वमिति मते इकारैकारयोः सूत्रकृन्मते सावर्ण्यस्य दुर्वारत्वेन केवलौष्ठ्यत्वादि न सूत्रकृतां मतमिति "एकारशकारयोरप्युपलक्षणमिति मूलं चिन्त्यमेवेति नाक्शलाविति न्यासे न कोऽपि दोष इत्याहुः ।

अन्ये तु तथा न्यासे "लृति लृ वा" इति विधेयस्येषत्स्पृष्टलृकारस्य लकारस्य च सवर्णसंज्ञापत्तौ 'होतॢकारः' इत्यत्र "यणो मय" (का०वा०) इति द्वित्वापत्तिः । अत एव" नाच्शलौ" इति सूत्रकरणमप्यपास्तम् । भाष्यमते तु "अणुदित्"(पा०सू० १।१।६९) सूत्रस्याप्यभावात् लृत्वजातेस्तस्मिन् लृकारेऽभावान्न दोष इत्याहुः ।

सिद्धे "अतो रोः" (पा०सू० ६।१।११३) इत्याकारे व्यावृत्त्यर्थम् ।

सूत्रे द्विवचनोपपत्तये मध्यमपदलोपिसमासं दर्शयति—**आकारसहित इति**। अत एव 'वेलासु' इति निर्देश उपपद्यते । समाहारद्वन्द्वे तु टच्प्रसङ्गोऽच्झलिति समाहारद्वन्द्वं कृत्वा आपदेन द्वन्द्वे तु अज्भिरप्याकारस्य सावर्ण्यं न स्यादिति भावः । अत एव भाष्ये प्रयत्नभेदेनैषां (१)सावर्ण्याभावः साधितः । **एतेषु परेष्विति**। इदमुपलक्षणम् । एतेषु विद्यमानस्येत्यपि बोध्यम् । तेन हकारादीनामकारादिषु परतो दीर्घादिसङ्ग्रहः। **अच्त्वं स्यादिति**। अच्पदबोद्ध्यत्वं स्यादित्यर्थः । इदं प्रत्याहारघटकेष्वपि ग्राहकशास्त्रप्रवृत्तिरिति मते व्यक्तिपक्षे च बोद्धयम् ।

**अणुदि** (पा०सू० १।१।६९)। अणमुद्दिश्य सवर्णबोधकताऽत्र विधीयते । सवर्णस्येत्यस्य (२)बोधकमिति शेषः। आदेशादौ सवर्णग्रहणवार-

(१) **सावर्ण्याभावः साधित इति**। स्यादेतत् । भाष्यकारमते प्रयत्नभेदेनाज्झलोः सावर्ण्याभावेऽपि सूत्रकृन्मते कथं सावर्ण्याभावः ? न च "तुल्यास्य" (पा०सू० १।१।९) सूत्रे "नाज्झलौ" (पा०सू० १।१।१०) इति निषेधेनाज्झल्भिन्नत्वेन सङ्कोचे नाज्झलोर्न सावर्ण्यप्रसक्तिः' इति वाच्यम् । एवं तर्हि अचां हलामपि परस्परं सवर्णसंज्ञानापत्तेरिति चेन्मैवम् । 'अज्भिन्नेन तुल्यास्यप्रयत्नमज्भिन्नं सवर्णसंज्ञं भवति' 'हल्भिन्नेन तुल्यास्यप्रयत्नं हल्भिन्नं सवर्णसंज्ञं भवति, इति "नाज्झलौ" इति तात्पर्यग्राहकेणाऽऽवृत्त्या "तुल्यास्य" (पा०सू० १।१।९) सूत्रस्यार्थद्वयकरणेनादोषात् । अत्र प्रथमवाक्येन हलां द्वितीयवाक्येनाचां सवर्णसंज्ञा बोध्या । अथवा स्वविशिष्टः सवर्णसंज्ञो भवति । वैशिष्ट्यञ्च स्ववृत्त्यच्त्वाभावहल्त्वाभावान्यतरवत्त्वं, स्वनिष्ठजन्यतानिरूपितजनकताविशिष्टजनकतानिरूपितजन्यतावत्त्वमेतदुभयसम्बन्धेन । जनकतावैशिष्ट्यञ्च स्वव्याप्यत्वं, स्वव्यापकत्वमेतदुभयसम्बन्धेनेत्यदोषात् । अथ वा "तुल्यास्य" (पा०सू० १।१।९) सूत्रोक्तप्रथमवैशिष्ट्ये स्ववृत्त्यच्त्वाभावहल्त्वाभावान्यतरवत्त्वं सबन्धो निवेशनीयः । परस्परपदार्थघटकाऽऽद्यद्वयसम्बन्धीयस्वीयपदस्थानेऽज्वृत्तीति हल्वृत्तीति च यथापूर्वं निवेशनीयम् । तथा चानुयोगित्वप्रतियोगित्वे च अज्निष्ठे हल्निष्ठे वा विवक्षिते, नचाज्निष्ठा प्रतियोगिता हल्निष्ठा चानुयोगिता, न वा हल्निष्ठा प्रतियोगिता अज्निष्ठानुयेगिता, अत्रैव "नाज्झलौ" इति तात्पर्यग्राहकमित्यदोष इति दिक् ।

(२) **बोधकमिति शेष इति**। 'घटकतयेति शेषः' इत्यपि बोध्यम् । तथा च अण्; उदिच्च, घटकतया सवर्णान् गृह्णातीति सूत्रार्थः अण्घटितमुदिच्च स्वादिसवर्णान् गृह्णातीति यावत् । एतेन "न चाणुदित्सूत्रं व्यर्थं प्रत्याहाराद्यवर्णेषु ककारादिचि-

णायाह—**प्रतीयते इति ।**

परे तु प्रत्ययग्रहणमेकदेशानुमत्या "भाव्यमानेन सवर्णानां ग्रहणं न" इति परिभाषां (१)ज्ञापयतीति युक्तम् । प्रत्ययपदस्य तदर्थत्वन्तु न युक्तं वार्त्तिककृता टित्किन्मित्सूपसंख्यानोक्तेः । **भाष्यकृता** चाप्रत्ययग्रहणमेतत्परिभाषाज्ञापकमित्युक्तम् । "ज्यादादीयसः" (पा०सू० ६।४।१६०) इति सूत्रे भाष्ये ध्वनितमिदम् । तत्र हि—"किमर्थमादित्युच्यते ज्याद इत्येवोच्यताम् । का रूपसिद्धिः ? आन्तर्यतो दीर्घो भविष्यति । एवन्तर्हीदमेव ज्ञापयति भवत्येषा परिभाषा भाव्यमानेन" इत्यादि । त्वदुक्तव्याख्याने हि पूर्वपक्षसिद्धान्तयोरुभयोरपि निर्दलत्वापत्तिः । जातिपक्षेऽप्यनयैव परिभाषया सवर्णग्रहणं वारणीयम् । व्यक्तिपक्षे गुणाभेदकत्वप्राप्तश्च वारणीयम् । तेन घटवदित्यादौ नानुनासिको वकारः । एतेनाजुदिदित्येव सिद्धेऽण्ग्रहणेन यण्सु गुणभेदकत्वं ज्ञाप्यते इति परास्तमित्याहुः ।

ननु "चोः" (पा०सू० ८।२।३) इत्यादावनुवादे कथमुदित्त्वमिति चेत् ? न, व्याकरणान्तरे एषामुदित्संज्ञकत्वेनादोषात् । उपदेशशब्दस्य करणसाधनत्वेन शास्त्रपरत्वेऽस्यापि शास्त्रत्वेनेत्त्वप्रवृत्तेः सुलभत्वाच्च । चो भिन्नक्रम इत्याह—**उदिच्चेति** । यद्यपि समुदायसवर्णिनोऽप्रसिद्धास्तस्थापि तदवयवचादिसवर्णा एवाऽत्र तत्सवर्णा बोद्धव्याः । ह्रस्वाकाराद्योरपि काल-

---

न्हेन स एवायमिति प्रत्यभिज्ञयाऽण्त्वात् "अणुदित्" (पा०सू० १।१।६९) सूत्रं चरितार्थमिति शेखरोऽसङ्गतः, प्रत्याहाराद्यवर्णस्यानर्थकत्वेन तज्जन्योपस्थित्या शाब्दबोधाजननादित्यपास्तम् । इगादिपदानां घटकतया स्वादिसवर्णग्राहकत्वेन शाब्दबोधे बाधकाभावात् । सहग्रहणेनाऽऽदेरेव संज्ञात्वेन प्रत्याहाराद्यवर्णस्यानर्थक्याभावाच्च ।

(१) **ज्ञापयतीति ।** न च पुनरपि 'ज्याद ईयसः' इत्येवोच्यताम्, लोपेनैव सिद्धेऽकारादेशविधानसामर्थ्येन पररूपाप्रवृत्त्या सवर्णदीर्घेण 'ज्यायान्' इति रूपसिद्धेरिति वाच्यम् । वृद्धशब्दाण्ण्यन्तात्क्विपि ज्यादेशे वृद्धौ पुंक्ति ईयसुनि श्रवणार्थमकारोच्चारणस्य चारितार्थ्यात् । दीर्घोच्चारणेन द्विमात्रिक एव विधेय इति पाणिनितात्पर्यावधारणेन पाणिनितात्पर्यविषयीभूतद्विमात्रिकविधानाय दीर्घोच्चारणसार्थक्येन स्त्रांशे चारितार्थ्यं नास्तीति वक्तुमशक्यत्वाच्च । दीर्घोच्चारणं विनापि 'ज्यायान्' इति रूपसिद्धिर्भवतीति पूर्वपक्षान्तरमेतत् ।

पुरुषाद्युपाधिभेदेन स्थनेषु भेदमारोप्य तुल्यस्थानत्वं सूपपादम्। **अत्रेति**। ग्राहकसूत्र एवेत्यर्थः। व्याख्यानादिति भावः। "उपसर्गादृति" (पा०सू० ६।१।९१) इत्यादितपरकरणादिति तु न युक्तम्। ऌकारग्रहणेन चारितार्थ्यात्। एवमिणपि परेणैव। "अचि श्नु" (पा०सू० ६।४।७७) इति सूत्रे इण इत्येव सिद्धे य्वोरिति गुरुनिर्देशाद्व्याख्यानाच्चेति "लण्" (मा०सू०६) सूत्रे भाष्ये स्पष्टम्। नन्वेवं "अस्य च्वौ" (पा०सू० ७।४।२३) इत्यादौ सवर्णग्रहणं न प्राप्नोति। अण्ग्रहणेन वर्णसमाम्नायस्थानामेव ग्रहणेन णकारादिचिह्नेन प्रत्याहारे तत्प्रत्यभिज्ञानेन तत्रत्याद्यवर्णोपस्थितेषु उच्चारिताभेदेन गृहीतेषु सूत्रस्य (१)चारितार्थ्येन व्यक्तिपक्षे तत्रत्यात्रत्यव्यक्त्योर्भेदेन प्रकृते प्रत्याहारघटकद्वितीयवर्णादौ चोच्चारितस्यैव ग्राहकत्वादप्रवृत्तेरिति चेत्? न,(२)जातिपक्षाश्रयणेनादोषात्। अत एवानेकतकारादीनां झल्त्वा-

---

(१) **चारितार्थ्येनेति**। अण्घटितं स्वादिसवर्णान् गृह्णातीति सूत्रार्थात्। "आदिरन्त्येन" (पा०सू० १।१।७१) इति सूत्रेण संज्ञा आदेरेवेति स्वीकाराद्वेति भावः। एतेन एकशक्तिनिरूपकार्थविषयकशाब्दबुद्धित्वावच्छिन्नं प्रत्ययपरशक्तिनिरूपकार्थविषयकतात्पर्यज्ञानं प्रतिबन्धकमिति प्रतिबध्यप्रतिबन्धकभावमूलकसकृदुच्चरितन्यायेन प्रत्याहाराद्यवर्णेनाष्टादशोपस्थितावपि प्रत्याहारनिष्ठशक्तिनिरूपकार्थविषयकतात्पर्यज्ञानस्य प्रत्याहाराद्यवर्णविषयकशाब्दबुद्धिं प्रति प्रतिबन्धकत्वेनेदमसङ्गतम्, इत्यपास्तम्। प्रत्याहारस्थले स्वाद्यवर्णे पृथक्शक्त्यभावेन निरुक्तप्रतिबध्यप्रतिबन्धकभावस्य तन्मूलकसकृदुच्चरितन्यायस्य च विषयाभावादिति दिक्।

(२) **जातिपक्षाश्रयणेनादोषादिति**। परे तु अण्बोधकं सवर्णान् गृह्णातीति सूत्रार्थः। ननु "इको यणचि" (पा०सू० ६।१।७७) इत्यादौ अण्बोधकपदसवर्णाप्रसिद्ध्या सवर्णग्रहणं न स्यात्। न चाऽण्बोधकं स्वबोध्यसवर्णान् गृह्णातीति न दोष इति वाच्यम्। अशादिप्रत्याहारस्थले स्वबोध्यदादिसवर्णतादीनामपि ग्रहणापत्तेः। न चाण्मात्रबोधकं स्वबोध्यसवर्णान् गृह्णातीति न दोष इति वाच्यम्। तत्रैव स्वबोध्याकारादिसवर्णदीर्घाकारादिग्रहणानापत्तेरिति चेत्? न, अण्बोधकं पदं स्वबोध्याण्सवर्णान् गृह्णातीत्यर्थेनादोषात्। न चैवमपि "अर्थवत्" (पा०सू० १।२।४४) इत्यत्र प्रत्ययपदस्याकारादिणान्तसमुदायघटकबोध्याकारादिबोधकत्वेन तत्रापि स्वबोध्यो योऽकारादिणान्तसमुदायघटकबोध्यः "सनाशंसभिक्ष उः" (पा०सू० ३।२।१६८) इत्यादितत्सवर्णग्रहणे "हाहा हूहू" इत्यादावपि प्रत्ययान्तभिन्नेत्यर्थकाप्रत्यय इति पर्युदासापत्तिरिति वाच्यम्। व्यासज्यवृत्तिधर्मानवच्छिन्ना या अण्वृत्तिविषयता तादृशविषयता-

दिसिद्धिः । सूत्रेऽण्ग्रहणं च न कार्यम् । "ऋऌवर्णयोः सावर्ण्यम्" इत्यनेन समानजातित्वस्यैवातिदेशेन "उपसर्गादृति" (पा०सू० ६।१।९१) इत्यादौ न दोषः । एतद्व्यतिरिक्तसवर्णे समानजातित्वसत्त्वात् । पृथगनुबन्धकरणाच्च न ऋदिल्लृदित्प्रयुक्तकार्यसङ्करः । अत्र पक्षे "अइउण्" (मा० सू० १) सूत्रशेषोक्तभाष्यरीत्या "तपर" ( पा०सू० १।१।७० )सूत्रस्य जातिग्रहणप्राप्तसवर्णग्रहणनियामकत्ववत् "अप्रत्ययः" इत्यस्य योगविभागेन तत्प्राप्तसवर्णग्रहणनिषेधकत्वात् "त्यदादीनामः" (पा०सू० १।१।७४) इत्यादौ विधेये न दोषः । एवं गुणाभेदकत्वप्राप्तसवर्णग्रहणनिषेधकत्वमप्यस्य बोद्ध्यम् । अत एव 'घटवत्' इत्यादौ मतोर्मस्य नानुनासिको वकारः । **सामर्थ्यादिति** । "एचोऽयवायावः" (पा०सू० ६।१।७८) इत्यादौ "स्थानेऽन्तरतम" ( पा०सू० १।१।५० )सूत्रेणैव निर्वाह इति वक्ष्यते । "न य्वाभ्याम्" (पा०सू० ७।३।३) इत्यत्र ऐऔ स्वरूपेण पाठ्यौ, "वृद्धिरादैच्" (पा०सू० १।१।१) इत्यत्राप्येङित्येव पाठ्यम् । तत्र गुणसूत्रे च परस्परसवर्णसञ्ज्ञावादिमते चतुर्णां ग्रहणसत्त्वात् । अत्रैतत्सूत्रवैयर्थ्योपन्यासेन तन्मूलकस्य गुणवृद्धिसञ्ज्ञाविधौ प्रत्याहारद्वयग्रहणवैयर्थ्यस्य "प्लुतावैचः" (पा०सू० ८।२।१०६) "एचोऽप्रगृह्यस्य" (पा०सू० ८।२।१०७) इत्यत्र तद्ग्रहणवैयर्थ्यस्य च सङ्ग्रहो बोध्यः । प्रयत्नभेदेनाप्यसावर्ण्यमेतयोः प्रागुक्तं न विस्मर्त्तव्यम् ।

**यद्यपीति** । इदं व्यक्तिपक्षे । "वर्णानामुपदेशस्तावदुपदेशोत्तरकालेत्सञ्ज्ञा तदुत्तरकालम् "आदिरन्त्येन" (पा०सू० १।१।७१) इति प्रत्याहारस्तदुत्तरकाला सवर्णसञ्ज्ञा तदुत्तरकालम् "अणुदित्" (पा०सू० १।१।६९)

---

प्रयोजकं स्वबोध्याण्सवर्णान् गृह्णातीत्यर्थेन प्रत्ययत्वस्य व्यासज्यवृत्तित्वेनादोषात् । नचैवमपि "ह्रस्वस्य पिति" (पा०सू० ६।१।७१) इत्यादौ ह्रस्वादिपदस्य व्यासज्यवृत्तिधर्मानवच्छिन्नाण्वृत्तिविषयताप्रयोजकत्वेन सवर्णग्रहणे 'प्रदाय' इत्यादौ तुगापत्तिरिति वाच्यम् । कालघटितधर्मानवच्छिन्ना व्यासज्यवृत्तिधर्मानवच्छिन्ना च या अण्वृत्तिविषयता तादृशविषयताप्रयोजकमित्यर्थेनादोषात् । अत एव भाष्येऽनणि झलादिप्रत्याहारे एव दोषो दत्त इत्याहुः ॥

इति, एतेन सर्वेण समुदितेन वाक्येनान्यत्र सवर्णानाङ्ग्रहणं भवति, न चात्रेकारः शकारं गृह्णाति" इति "नाज्झलौ" (पा०सू० १।१।१०) इतिसूत्रभाष्योक्तवाक्यापरिसमाप्तिन्यायादित्यर्थः। अयं भावः—"आदिरन्त्येन" (पा०सू० १।१।७१) इति प्रत्याहारसिद्धौ "नाज्झलौ" (पा०सू० १।१।१०) इत्येतद्वाक्यार्थबोधे सति निर्णीतैतद्विषयपरिहारेण सवर्णसञ्ज्ञाबोध्यनिश्चये "अणुदित्" (पा०सू० १।१।६९) सूत्रेण तावतां ग्रहणं बोधनीयम्। अन्यथा बाधकसम्भावनया "तुल्यास्य" (पा०सू० १।१।९) सूत्रजशक्तिग्रहेऽप्रामाण्यसन्देहेन "अणुदित्" (पा०सू० १।१।६९) शास्त्रजबोधानापत्तिः। न चैतद्वाक्यार्थबोधात्प्राक् तन्निश्चय इति।

**हो ढ इति**। हकारेणाऽऽकारग्रहणे सति यद्यत्प्राप्नोति तस्य सर्वस्याप्युपलक्षणमिदम्। ननु यण्सवर्णिनामप्रसिद्धेरज्ग्रहणेनैव सिद्धेऽण्ग्रहणं व्यर्थमत आह—**यवला इति**। "अमोऽनुनासिका न ह्रौ" इति शिक्षोक्तेर्यण इति नोक्तम्। तेन 'सँयन्ता' इत्यादौ परसवर्णनिष्पन्नानुनासिकयवलानाम् "अनचि च" (पा०सू० ८।४।४७) इति द्वित्वं सिद्ध्यति। "हलो यमाम्" (पा०सू० ८।४।६४) इति लोपस्तु वैकल्पिकः। अत्रेदं बोद्धयम्—व्यक्तिः पदार्थो गुणा भेदका इत्यभिमानेनात्र सूत्रेऽण्ग्रहणमिति।

"अतो भिसः" (पा०सू० ७।१।९) इत्यादौ तपरकरणात् "सहिवहोः" (पा०सू० ६।३।११२) इति सूत्रस्थवर्णग्रहणाद्व्याख्यानाच्च तपरपदे बहुव्रीहिपञ्चमीतत्पुरुषावित्याह—**तः पर इत्यादिना**। वर्णग्रहणे तु तत्सामर्थ्यादत्वावच्छिन्नसर्ववर्णग्रहणबोधनेन तपरसूत्राप्रवृत्तिः। आद्योदाहरणम् "अतो भिसः" (पा०सू० ७।१।९) इति। अन्त्योदाहरणं "वृद्धिरादैज्" (पा०सू० १।१।१) इति। यद्यप्यत्र सञ्ज्ञा तात्परा, न च तत्समकालस्तत्सवर्णो वा प्रसिद्धस्तथापि तपरकरणाद् भाष्यप्रामाण्याच्च तात्परशब्दबोद्धयो वर्णः स्वसमकालग्राहक इत्यर्थेनादोषः। इदं च विद्धयर्थमेवाण्ग्रहणाननुवृत्तेः। गुणानां भेदकतयाऽनाणि विधित्वेऽपि "वृद्धिरादैच्" (पा०सू० १।१।१) इत्यादावाकारांशे सावकाशेनानेन "अतो भिस"

(पा०सू० ७।१।९) इत्यादौ परत्वेन "अणुदित्" (पा०सू० १।१।६९) सूत्रबाधः। संख्याकृतव्यवहारस्य परस्परपरिहारेणैव दृष्टतयेह विरोधस्य सत्त्वात्। गुणानामभेदकत्वे त्वनवकाशत्वाद् बाध इति बोध्यम्। अत्राव-ध्यवधिमतोः साजात्येन वर्णस्यैव सञ्ज्ञात्वेऽपि विशिष्टाद्विभक्त्युत्पत्तिः सौत्र-त्वाद् बोध्या। तत्कालस्येत्यस्य तदुच्चारणकालसमकालस्येत्यर्थस्तदाह—**समकालस्यैवेति**। एवकारो न्यायसिद्धबाध्यबाधकभावस्यानुवादक इति भावः। जातिपक्षे तु नियमार्थमेव सवर्णग्रहणानुवृत्तेः। एवं गुणानाम-भेदकत्वमिति "वृद्धिरादैच्" (पा०सू० १।१।१) इति सूत्रभाष्यसम्मतसिद्धा-न्तपक्षेऽपि नियमार्थमेव। इदम् "आद् गुणः" (पा०सू० ६।१।८७) इत्यादौ विभक्तितकारे न प्रवर्त्तते। "उपसर्गादृति" (पा०सू० ६।१।९१) इति तपरकरणात्। "ऋदोरप्"(पा०सू० ३।३।५७) इत्यादौ दकार एवेति न दोषः। स च पञ्चमीसमासाभावे तकार इवोच्चारणार्थो मुखसु-खार्थो वा। "तपर" (पा०सू० १।१।७०) सूत्रे दकारप्रश्लेषपक्षे तु धका-रादिस्थानिको दकारो बोध्यः।

**वृद्धिरा** (पा०सू० १।१।१)। वृद्धि, आत्, ऐच् इति पदत्रय-मिति न समासान्तादिप्रवृत्तिशङ्का। तपरकरणमसन्देहार्थतया पूर्वार्थं प्रकृ-तसूत्रे भाष्येऽत्र शास्त्रे गुणानामभेदकत्वं ज्ञापकादाश्रित्य सवर्णग्रहणार्थत्वा-भावस्योक्तत्वात्। 'कृष्णौत्कण्ठ्यं' 'गङ्गौघः' इत्यादौ त्रिमात्रव्यावृत्तये परा-र्थमपि। वृद्धिशब्दोऽत्र पदपरोऽर्थपरत्वासम्भवात्। आदैचो वृद्धिपदाभिन्ना इति वाक्यार्थः। पदपदार्थयोः (१)तादात्म्यस्याङ्गीकारात्।

---

(१)**तादात्म्यस्याङ्गीकारादिति**। न च मधुशब्दोच्चारणे जिह्वाया माधु-र्यप्रसङ्गः, 'असिं' आदिशब्दोच्चारणे छेदनप्रसङ्ग इति वाच्यम्। भेदसहिष्णुरभेद इत्यत्र वास्तवो भेद इति स्वीकारेणादोषात्। अभेदस्तु इतरेतराध्यासाच्छब्दार्थप्रत्य-यानां भासते इति मञ्जूषायां निरूपितम्। अत एव "शब्दार्थप्रत्ययानामितरेतराध्या-सात्तत्संकरस्तत्प्रविभागसंयमात्सर्वभूतरुतज्ञानम्" इति पातञ्जलसूत्रं सङ्गच्छते। अत एव शब्दे पृष्टेऽपि गौरिति वदति, अर्थेऽपि गौरिति, ज्ञानेऽपि गौरिति। वस्तुतस्तु शब्दार्थयोर्वास्तवाभेदस्वीकारेऽपि न क्षतिः। न च पूर्वोक्तमाधुर्यादिप्रसङ्ग इति वाच्यम्।

"रामेति द्व्यक्षरं नाम मानभङ्गः पिनाकिनः"

इत्यादौ तयोरभेदप्रतीतेरनुभवसिद्धत्वादित्यन्यत्र विस्तरः। वृद्धिशब्दस्य सञ्ज्ञात्वं तु व्याख्यानात्। विधेयत्वेऽपि तस्य पूर्वपाठो मङ्गलार्थः। "अपृक्त एकाल्" (पा०सू० १।२।४२) इत्यादौ तथा करणं विधेयस्य प्रथमं प्रयोगेऽसाधुत्वभ्रमनिवारणायेति भाष्ये स्पष्टम्। सर्वशब्दानां सर्वार्थवाचकत्वेऽपि वाचकत्वस्य गृहीतस्यैव बोधजनकतया सञ्ज्ञासूत्राणामज्ञातशक्तिज्ञापकतया विधित्वम्। (१)किञ्च "सर्वे सर्वार्थाः" इत्यभ्युपगमो योगिदृष्टया नास्मद्दृष्टया, सर्वशब्दानामर्थानाञ्च विशिष्यज्ञानाभावात्। सामान्यतस्तथा ज्ञानञ्च न बोधोपयोगि। शास्त्रं त्वस्मदाद्युद्देशेनैव प्रवृत्तमिति बोद्धयम्। तत्रैव सङ्केतग्राहकशास्त्रकरणं स्वेच्छयैवेत्येषां यदृच्छाशब्दत्वेन व्यवहारः, स्वेच्छया सञ्ज्ञाः क्रियन्त इति च। एतदुपदेशरूपसङ्केतात्प्राक् तत्र सञ्ज्ञात्वाग्रहेण तासामनित्यत्वव्यवहारः। अत एव तत्तत्सञ्ज्ञाकरणज्ञानरूपप्रकरणादन्यार्थाग्रहणरूपनियमः कृत्रिमाकृत्रिमन्यायमूलतयोक्तः संख्यासञ्ज्ञासूत्रे भाष्ये। आर्थिकमेवामुं नियममादाय सञ्ज्ञासूत्रेषु नियमत्वव्यवहारो व्यवहाराय नियमः सञ्ज्ञायाः सञ्ज्ञिनि क्वचिदित्यादिना कृतः। वाचकताबोधकत्वेऽपि तदनुत्पादकत्वान्न शब्दार्थसम्बन्धनित्यताहानिः। आसाञ्च शिष्टप्रयुक्तत्वात्साधुत्वमित्यन्यत्र विस्तरः। कार्यकालपक्षे

---

नैयायिकादिमतेऽपि कालिकादिसम्बन्धेन मुखे मधुनः सत्त्वेन माधुर्यप्रसङ्गात् कारणतावच्छेदकसम्बन्धेन कारणसत्ताया एव कार्यनियामकत्वेन कल्पितभेदस्य शब्दस्य मुखे अवच्छेदकत्वसम्बन्धेन सत्त्वाद्वस्तुतस्तदभिन्नस्य भिन्नत्वेन कल्पितस्यार्थस्य तेन सम्बन्धेन सत्त्वेऽपि कारणतावच्छेदकसंयोगसम्बन्धेन मुखे मध्वादेरभावेनादोषादिति दिक्।

ननु वृद्धिपदमर्थबोधकं पदत्वात् गोपदवत् इत्यनुमानेनैव वृद्धिपदे आदैज्वाचकत्वं ग्रहीतुं शक्यते। न चार्थत्वेनादैज्वाचकत्वग्रहेऽपि आदैच्त्वेनादैज्वाचकत्वग्रहाय सूत्रं विधायकमिति वाच्यम्। वृद्धिपदमादैच्त्वावच्छिन्नवाचकमादैजितराबोधकत्वे सति अर्थबोधकत्वादित्यनुमानेन तत्त्वेनापि ग्रहसम्भवादित्यरुचेराह—(१) किञ्चेति। आदैजितराबोधकत्वस्यासिद्धत्वेन आदैज्वाचकत्वानुमानासम्भवादिति उत्तरग्रन्थाशयः।

"मृजेर्वृद्धिः" (पा०सू० ७।२।११४) इत्यादौ. वृद्धिपदार्थजिज्ञासायां "वृद्धिरादैच्" (पा०सू० १।१।१) इत्युपस्थित्या तदर्थबोधरूपे शक्तिग्रहे वृत्ते विधिवाक्यार्थबोधः । अत एव "ष्यङः सम्प्रसारणम्" (पा०सू० ६।१।१३) इति सूत्रे भाष्ये—"कार्यकालं सञ्ज्ञापरिभाषं भस्येत्युपस्थितमिदं भवति" "यचि भमिति" इत्युक्तम्। "ईदूदेद्" (पा०सू० १।१।११) इति सूत्रे भाष्येऽपि "कार्यकालं सञ्ज्ञापरिभाषं, प्रगृह्यः प्रकृत्येत्युपस्थितमिदं भवति ईदूदेद् द्विवचनं प्रगृह्यमिति" । "निष्ठा" (पा०सू० ३।२।१०२) इति सूत्रे कैयटोऽपि "निष्ठेत्युक्ते सञ्ज्ञावाक्यं क्तक्तवतू निष्ठेति स्मर्यते" इत्याह । अत्र पक्षे एकत्र शक्तिग्रहे वृत्तेऽपि तत्प्रदेशस्थस्यैव तत्रार्थे शक्तिरिति सम्भावनया प्रदेशान्तरस्थे बोधो न स्यादिति सर्वप्रदेशेषु तत्तत्पदशक्तिग्रहपूर्वकं विधिवाक्यार्थबोधः । यथोद्देशे तु एकदैव शक्तिग्रहात्सर्वत्र बोध इति विशेषः । एतेन 'कार्यकालपक्षे तपरत्वं स्पष्टार्थमेव । आदैच्पदार्थस्य वृद्धिविशेषणतया विधेयत्वेन सवर्णग्रहणाप्रसक्तेः । यत्र वृद्धिपदं तत्रादैजित्युपतिष्ठते इति क्रमेण सञ्ज्ञासूत्राणामर्थात्' इत्यपास्तामित्यन्यत्र विस्तरः । अत्रातद्भावितानामपि आदैचां ग्रहणं, तेन शालीयादिसिद्धिः ।

**भूवादयो**(१)(पा०सू० १।३।१) । (२)क्रियावाचिनः किम् ?

---

(१)**भूवादयो धातवः** (पा०सू० १।३।१) । भूवादयश्च भूवादयश्च भूवादय इति तन्त्रेणायं निर्देशः । एक आदिशब्दः प्रकारार्थः, अपरश्च प्रभृत्यर्थः । विशिष्टान्वृत्तिश्च । भूसाहचर्याद्वाशब्दोऽनव्ययमेव गृह्यते, वाशब्दसाहचर्याच्च भूशब्दोऽसत्त्ववाची गृह्यते इति परस्परसाहचर्यात्तादृशः क्रियावाच्येव सम्भवतीति क्रियावाचिन इति लाभाय, एकपदोपस्थापितयोरर्थयोः परस्परमभेदेनान्वयस्याव्युत्पन्नत्वेन भूवाप्रभृतयो ये भूवासदृशा इत्यभेदान्वयलाभाय, एकरूपावच्छिन्नस्य एकरूपसंसर्गेणैकरूपावच्छिन्नेऽन्वयबोधेच्छारूपसहविवक्षालाभाय च । (२)**क्रियावाचिनः किमिति** । क्रियावाचकत्वं च साध्यत्वविशिष्टत्वम् । वै० च स्वावच्छिन्ननिरूपितशक्तिपर्याप्त्यधिकरणत्वं, स्वावच्छिन्नेतरानिरूपितशक्तिनिरूपकार्थविषयकबोधतात्पर्येणोच्चरिताघटितत्वं, स्वावच्छिन्ननिरूपितशक्तिनिरूपकार्थविषयकबोधतात्पर्येणोच्चरितत्वमेतत्त्रितयसम्बन्धेन । आद्यसम्बन्धदानेन भावतिङन्तस्य न क्रियावाचकत्वम् । द्वितीयसम्बन्धदानेन दरिं द्रातीति दरिद्रा इत्यस्य न क्रियावाचकत्वम् । तृती-

विकल्पार्थकवाशब्दस्य निपातस्य धातुत्वेऽप्रातिपदिकत्वात्सुबभावे पदत्वानापत्तेः। तदुक्तौ तु न दोषः। वार्थस्य विकल्पस्य भूतभविष्यत्कालसम्बन्धाभावेन क्रियात्वाभावात्। अस्त्याद्यर्थस्यापि तत्त्वं भूतभविष्यत्कालसम्बन्धात्। भ्वादयः किम्? 'आणवयति' 'वट्टयति' इत्यादीनां धातुत्वे शास्त्रविषयतया (१)साधुत्वापत्तेः। (२)सूत्रशेषे भाष्ये स्फुटमेतत्। स्तम्भ्वादीनामुदित्त्वेन धात्वधिकारविहितकार्योद्देश्यत्वादिना स्थितपाठभ्रंशानुमानान्न तेषु दोषः।

**प्राग्रीश्व** (पा०सू० १।४।५६)। "अधिरीश्वरे" (पा०सू० १।४।९७) इत्यभिव्याप्य प्राङ्‌निपाता इत्यधिकारः। प्राक् निपाताः सन्तो गत्यादिसञ्ज्ञका इत्यर्थः। तेन ताभिः समावेशः "अधिरीश्वरे" (पा०सू० १।४।९७) "विभाषा कृञि" (पा०सू० १।४।९८) इत्यत्र निपातपदसम्बन्धश्च सिद्धः। एषां द्योतकत्वं वाचकत्वञ्च यथाकार्यं यथाप्रयोगं बोध्यमित्यन्यत्र विस्तरः।

असत्त्वे इति पर्युदासो लाघवादित्याह—**अद्रव्येति**। (३)विशेष्यतया द्रव्यभिन्नार्था इत्यर्थः। तेन क्रियाविशिष्टद्रव्यवाचिनां विप्रादिघटकप्रादीनां न। चादयः किम्? स्वरादिपठितानामसत्त्ववृत्तित्वे आद्युदात्तत्वं मा भूदिति।

---

यसम्बन्धदानेन विकल्पार्थकवाशब्दस्य न क्रियावाचकत्वम्। क्विबन्ते तु क्विपः साध्यत्वावच्छिन्नेतरकर्तृत्वबोधकत्वेऽपि तदनुच्चारणात् निरुक्तबोधतात्पर्योच्चारिताघटितत्वस्याक्षतत्वात् न क्रियावाचकत्वहानिः। धातोरेव श्रुतस्य बोधकत्वाङ्गीकारेऽपि तद्घटितत्वस्य व्यपदेशिवद्भावेन सत्त्वेऽपि अनतिदिष्टस्य घटितत्वस्यासत्त्वान्न दोषः। तादृशस्यैव सम्बन्धे निवेशनीयत्वात् इत्यलम्। **(१)साधुत्वापत्तेरिति**। न च 'आणवयति' इत्यादौ धातुसंज्ञायामपि संज्ञाशास्त्राणां साधुत्वविधायकत्वाभावात्कथं साधुत्वापत्तिरिति वाच्यम्। "भू सत्तायाम्" इत्याद्यनेकशास्त्राणां साधुत्वानुशासकत्वे महागौरवेण भूवादय इत्यस्यावृत्तिं कृत्वा धातुसंज्ञाविधायकत्वस्य साधुत्वविधायकत्वस्य च स्वीकारेणादोषात्। अत्रैव मानमाह—**(२)सूत्रशेषे भाष्ये इति**।

**(३)विशेष्यतया द्रव्यभिन्नार्था इति**। लिङ्गसंख्यान्वयितानवच्छेदकं यद्रूपं तद्रूपेतररूपावच्छिन्नविषयकबोधतात्पर्येणानुच्चारिता इत्यर्थः। तेनात्यन्तनिरर्थकानामपि निपातसंज्ञासिद्धिरिति दिक्।

**उपसर्गाः** (पा०सू० १।४।५९)। योगग्रहणं यदर्थे प्रादीनामन्वयः (१)तं प्रत्येवोपसर्गत्वादीत्यर्थबोधनाय । तेन विगताः सेचका अस्माद्विसेचको ग्राम इत्यादौ षत्वं न ।

**गतिश्चेति** । 'च' उपसर्गसञ्ज्ञासमावेशार्थः । तेन 'प्रतिप्रणीतम्' इत्यादौ गतित्वात् "गतिरनन्तरः" (पा०सू० ६।२।४९) इति स्वर उपसर्गत्वात् णत्वञ्च सिद्ध्यति । प्रादय इति योगविभागस्तु क्रियायोगाभावेऽपि निपातत्वाय । एतत्सिद्धमेवोपसर्गप्रतिरूपकस्य निपातत्वमुक्तं चाद्यन्तर्गणसूत्रेणेति दिक् । प्रपरेत्यादावनुकार्यानुकरणयोरभेदविवक्षया सुबनुत्पत्तिः । **निस्दुसिति** । अत्रेदं बोध्यम्—सान्तगूहणे रान्तस्यागूहणमेव । यत्र तु रुत्वमसिद्धं तत्र रान्तग्रहणेऽपि न सान्तगूहणं तद्दृष्ट्या रुत्वस्यासिद्धत्वात् । यत्र तु रुत्वस्य सिद्धत्वं यथा षत्वणत्वयोस्तद्विषयोपसर्गत्वप्रतिषेधपरे "दुरः षत्वणत्वयोः" (का० वा०) इति वार्त्तिके कृतरेफसान्तस्यापि गूहणम् । षत्वणत्वयोरित्यस्य तद्विधायकशास्त्रयोरित्यर्थात् । (२)अत एव सुषामादिषु दुःष्टुशब्दपाठः सार्थकः । स हि "अपदुःसुषु स्थः कुः" (उ०सू० २५) इति दुस्पूर्वकस्थाधातोः कुप्रत्यये साधुः । अन्यथा दुस्पूर्वकात्कुप्रत्यये "उपसर्गात्" (पा०सू० ८।३।६५)इत्येव षत्वे सिद्धे (३)तद्वैयर्थ्यं स्पष्टमेव । न चास्य रूढत्वेनावयवार्थाभावादुपसर्गत्वाभावः । अत्यन्तरूढेषु प्रतिष्ठानिष्ठादिषु षत्वानापत्तेः । अर्थवत्त्वारोपेण चेत्प्रकृतेऽपि । दुसः पाठस्तु 'दुरयते' इत्यादौ रुत्वासिद्धया लत्वाभावार्थ इति दिक् ।

**न वेति** (पा०सू० १।१।४४) । इतिर्लोकेऽर्थपदार्थकस्य शब्दपदार्थकत्वकृत् । यथा 'गवित्ययमाह' इत्यादावनुकरणे । इह तु "स्वं रूपम्"

---

(१)**तं प्रत्येवोपसर्गत्वादिति** । जन्यबोधविषयीभूतक्रियाविशेषविषयकतात्पर्यग्राहकत्वे सति प्राद्यन्यतमत्वमुपसर्गत्वमिति स्वीकारात् ।

ननु प्रतिपदोक्तस्य दुर एव ग्रहणं स्यान्न तु कृतरुत्वदुस इत्यत आह—(२) **अत एवेति** । (३)**तद्वैयर्थ्यं स्पष्टमेवेति** । न च दुर्पूर्वकात्स्थाधातोः "कुप्रत्यये षत्वार्थं सुषामादिषु दुःष्ठुशब्दपाठ आवश्यक इति वाच्यम् । "स्वपदुस्सु स्थः" इति न्यासेन "रोः सुपि" (पा०सू० ८।३।१६) इति नियमाद् दुरो ग्रहणमेव नेति ज्ञापक-

(पा०सू० १।१।६८) इति परिभाषणाच्छब्दपदार्थकस्यार्थपदार्थकत्वकृत्। क्वचित् पदार्थविपर्यासकत्वं यथाऽनुवादवाक्ये। स च नवाशब्दाभ्यां प्रत्येकं सम्बध्यते व्याख्यानात्। तेन नवाशब्दयोरर्थौ संज्ञिनौ। स्वं रूपमित्यस्य प्रत्याख्याने तु (१)इतिशब्दो व्यर्थ एव; अर्थे कार्यस्याबाधात्। तयोरेव संज्ञित्वे तु विभाषा श्वेः" (पा०सू० ६।१।३०) इत्यादौ नवाशब्दावादेशौ स्याताम्। प्राप्तविभाषासु नास्योपयोगः, तासां पक्षे निवृत्तिमात्रफलकत्वात्। अप्राप्तविभाषास्वपि न, तासां पक्षे विधिमात्रार्थत्वात्, अप्राप्तत्वेन निषेधासम्भवाच्च। तस्मादुभयत्र विभाषार्थमिदम्। "विभाषा श्वेः"(पा०सू० ६।१।३०) इत्यादौ एतदभावे यदि विधिमुखेन प्रवृत्तिस्तर्हि पित्स्वेव विकल्पः स्यात्। कित्सु तु नित्यमेव सम्प्रसारणं स्यात्। निषेधमुखेन प्रवृत्तौ कित्स्वेव प्रवर्त्तेत न पित्सु। उभयथा प्रवृत्तिस्तु वैरूप्याद्वाक्यभेदापत्तेश्चाशक्या। सञ्ज्ञाकरणे तु श्रुतक्रमानुरोधात्पूर्वं कित्सु निषेधस्ततः किदकिद्रूपे सर्वस्मिन् लिटि ऐकरूप्यं प्रापिते सति पक्षे भवतीत्येकरूपेण विधिमुखेनैव विकल्पः। भाष्यकृतस्तु एवं हि "हृक्रोरन्यतरस्याम् (पा०सू० १।४।५३) इत्यादावनुपपत्तिर्विभाषापदाभावात्। इतिशब्दस्य 'विभाषा' इत्यत्रापि सम्बन्धात् विभाषापदार्थः सञ्ज्ञेति तु न युक्तम्, अर्थे सञ्ज्ञात्वस्याऽदृष्टत्वात्। अर्थाक्षिप्तशब्दमात्रं सञ्ज्ञेत्यपि न युक्तम्। एकस्यार्थस्य समानफलकानेकसञ्ज्ञाकरणस्य "अनाकृतिः सञ्ज्ञा" इति वृद्धिसञ्ज्ञासूत्रस्थभाष्येण तिरस्कारात्।

स्य सुस्थत्वात्। (१)इति शब्दो व्यर्थ एवेति। वस्तुतस्तु "स्वं रूपम्" (पा० सू० १।१।६८) इत्यस्य प्रत्याख्यानेऽपि इतिशब्दो न व्यर्थः, न वा इतेः पदार्थविपर्यासकत्वम्। निषेधविकल्पौ विभाषासंज्ञाविति तात्पर्येण "न वा विभाषा" इति वाक्यस्य निराकाङ्क्षत्वात्। अत एव निषेधः, पदार्थः, विकल्पः, प्रमेयः, इत्यादि तात्पर्येण, न पदार्थः, वा प्रमेय इत्यादि न प्रयुज्यते। तस्मादितेः सर्वनामत्वेन इतेरेव निषेधविकल्पार्थकत्वं, नवेति तात्पर्यग्राहकमित्येव रमणीयः पन्थाः। 'गविरयमाह' इत्यनुकारस्थलेऽप्येवमेव। अत एव "नारद इत्यबोधि" इत्यादौ नारदपदान्न द्वितीया। अन्यथा नारदस्यैव बुद्धिं प्रति कर्मत्वेन सा दुर्वारा स्यात्। मम तु इतिपदमेव नारदार्थकं नारदपदञ्च तात्पर्यग्राहकम्। इतिशब्दादुत्पन्ना द्वितीया लुप्तेति न कोऽपि दोष इति सुधियो विभावयन्तु।

तस्मात्तत्र लक्ष्यानुसारेणैवोभयमुखेन प्रवृत्तिर्वाच्येति विभाषापदघटितेऽपि तथैवास्तु किं सूत्रेणेति जातिव्यक्तिपक्षयोरुभयोरपि सूत्रं प्रत्याचख्युः ।

**स्वं रूपं श** (पा०सू० १।१।२८) स्वं रूपमित्यस्य बोध्यमिति शेषो व्याख्यानात्; तदाह—**सञ्ज्ञेति** । "राज्ञो यत्" इत्यादौ लौकिकव्युत्पत्त्योपस्थितार्थस्य प्रत्ययेन पौर्वापर्यासम्भवात्प्रातिपदिकादित्यनेनान्वयासम्भवाच्च तदर्थकशब्दमात्रग्रहणापत्तौ नियमार्थं सूत्रम् । तत्र स्वशब्द (१)आत्मीयत्वेनार्थमाह । रूपशब्देन शब्दस्वरूपम् । एतदुभयं सञ्ज्ञीत्यर्थः । तत्रार्थो न विशेष्यः, उक्तयुक्तेः । किन्तु शब्दविशेषणम् । एवञ्चार्थविशिष्टः शब्दः सञ्ज्ञीत्यर्थवद्ग्रहणपरिभाषा सिद्धा । अत्र चार्थः कल्पितान्वयव्यतिरेककल्पितः प्रकृतिप्रत्ययादिबोध्यः शास्त्रीयोऽपि । स च मुख्यः प्रसिद्धश्चेति गौणमुख्यन्यायः 'अभिव्यक्तपदार्था ये' इति न्यायश्च सिद्धः । अत एवेयं (२)विशिष्टरूपोपादान एव, इदं सूत्रञ्च, तत्रैवार्थोपस्थितेस्तत्रैवानियमप्रसक्तेश्च, न तु वर्णग्रहणे इत्याकरे स्पष्टम् । "दाधा घु" (पा०सू० १।१।२०) इत्यस्य "ई हल्यघोः" (पा०सू० ६।४।११३) इत्यादौ चरितार्थ्येन "उपसर्गे घोः" (पा०सू० ३।३।९२) इत्यादौ "स्वं रूपम्" (पा० सू० १।१।६८) इत्यनेन परत्वाद् बाधशङ्कावारणार्थम् । **अशब्दसञ्ज्ञेति** । नात्र षष्ठीतत्पुरुषः । कर्मसञ्ज्ञादेरर्थसञ्ज्ञात्वेन निषेधाप्रवृत्तौ "कर्मण्यण्" (पा०सू० ३।२।१) इत्यादौ स्वरूपग्रहणापत्तेः । किन्तु सप्तमीतत्पुरुषः । शब्दपदेन च शब्दशास्त्रं तदाह—**शब्दशास्त्रे इति** । भाष्ये तु अर्थे कार्यस्य बाधेऽपि उपस्थितत्वात्' राज्ञः' इत्यादौ तज्जन्यबोधे (३)प्रका-

---

(१)**आत्मीयत्वेनेति** । यदर्थतात्पर्येण यदुच्चार्यते स तस्यात्मीयोऽर्थ इति भावः । स्वविषयकबोधतात्पर्येणोच्चरितत्वसम्बन्धेन शब्दं प्रति अर्थस्य विशेषणत्वमिति भावः । स्वशब्द आत्मीयत्वेनार्थमाहेति व्याख्यानाल्लभ्यते । न तु रूप्यते बोध्यते इति रूपमर्थ इति कैयटोक्तव्याख्यानेन, आवृत्त्यादिप्रसङ्गादिति परिभाषेन्दुशेखरचन्द्रिकायां द्रष्टव्यम् । (२)**विशिष्टरूपोपादान एवेति** । शब्देऽर्थे च खण्डशः शक्तिस्वीकारेण पदेनैव शब्दार्थयोरुभयोरप्युपस्थितत्वादित्यर्थः । (३)**प्रकारतया भासमानस्येति** । स्वविषयकबोधजनकत्वप्रकारकतात्पर्यविशेष्यतापर्याप्त्यधिकरणत्वसम्बन्धा-

रतया भासमानस्य राजन्शब्दस्यैव ग्रहणं भविष्यतीति व्यर्थं सूत्रम्। उपस्थितार्थत्यागे मानाभावेन तस्य विशेषणतयाऽन्वयसम्भवेन च "अर्थवत्" (प० १४)परिभाषाऽपि सिद्धा। लक्ष्यानुसारात् तत्तत्संज्ञाकरणज्ञानरूपप्रकरणाच्च षान्तसंख्यावाचकषष्शब्दस्य षट्संज्ञाकरणेन शब्दशास्त्रीयसञ्ज्ञायां स्वरूपाग्रहणज्ञापनाच्च "उपसर्गे घोः" (पा०सू० ३।३।९२) इत्यादावदोषेणाशब्दसञ्ज्ञेत्यपि व्यर्थमित्युक्तम्। अत एव जनपदापत्यपशुदेवतादिशब्देषु न दोषः। अत एव वृक्षादिषु विशेषाणां ग्रहणम्, "स्वे पुषः" (पा० सू० ३।४।४०) इत्यत्र पर्यायाणां विशेषाणां स्वरूपस्य च ग्रहणं, "सभा राजा" (पा०सू० ४।२।२३) इत्यत्र पर्यायाणामेव ग्रहणं, "पक्षिमत्स्यमृगान् हन्ति" (पा०सू० ४।४।३५) इत्यादौ मृगपक्षिणोः पर्यायाणां विशेषाणां स्वरूपस्य च ग्रहणं, मत्स्यपदेन स्वरूपस्य विशेषाणां मीनरूपपर्यायस्य च ग्रहणं सिद्ध्यति। अन्यथा तदर्थं यत्नः कर्त्तव्यः। "परेश्च घाङ्कयोः" (पा०सू० ८।२।२२) इत्यत्र घशब्देन स्वरूपग्रहणं "नदीपौर्णमासी" (पा०सू० ५।४।११०) इत्यत्र नदीपदेन च स्वरूपग्रहणं सिद्ध्यति। लक्ष्यानुसारिव्याख्यानेन च मम सर्वेष्टसिद्धिः। ज्ञापकपक्षेऽपि ज्ञापकसिद्धस्यासार्वत्रिकत्वान्न दोषः। अत एव **भगवता** ज्ञापकेन सिद्धं वचनं प्रत्याख्यातमिति (१)दिक्।

(२)**येन वि** (पा०सू० १।१।७२)। येनेति करणे तृतीया। विधि-

---

वच्छिन्नप्रकारतया भासमानस्येत्यर्थः। अस्मन्मते च प्रत्येकस्मात्समुदायाच्च प्रत्येकमतिरिच्यते इति समुदायपर्याप्तं न प्रत्येकं पर्याप्नोतीति न कस्या अपि शङ्काया अवसर इति दिक्।

(१)**इति दिगिति**। दिगर्थस्तु प्रत्याख्यानमिदमेकदेश्युक्तिः। शक्यलक्ष्यभेदेनार्थानामानन्त्येन यावतोऽर्थास्तावदावृत्तेरावश्यकत्वेनातिगौरवात्। "अणिञोः" (पा०सू० ४।१।७८) "केऽणः" (पा०सू० ७।४।१३) इत्यादीनां प्रकृत्यंसमभिव्याहारे प्रत्ययैरर्थानामनुपस्थित्या अनर्थकेऽपि प्रवृत्त्यापत्तौ प्रत्ययाप्रत्ययपरिभाषाया अभावेन च 'राका' इत्यादौ "केऽणः" (पा०सू० ७।४।१३) इति ह्रस्वो दुर्वार एव स्यादिति दिक्।

(२)**येन विधि (पा०सू० १।१।७२)**। येनेति करणतृतीयान्तेन परतन्त्रो लक्ष्यते। परतन्त्रश्च व्यापारवान्भवति। शब्दे चेतरव्यावृत्तिरूपो व्यापारः। तादृश-

रिति भावे किः । कर्मात्र विधेयं, कर्त्ता चाचार्यः प्रसिद्धत्वाल्लभ्यत एव । यत्तु "करणं कर्तृपरतन्त्रमिति तृतीयया पारतन्त्र्यं लक्ष्यते, तच्च शब्दानां विशेषणत्वेनेति (१)विशेषणमिति लब्धम्" इति, तन्न, 'सुब्विभक्तौ न लक्षणा' इत्यस्य सर्वसम्मतत्वात् । किं बहुना येषां प्रत्ययानामन्येषां वा शब्दानामर्थे विधानं कृतं शास्त्रेण, तेषामन्यत्रार्थे तदर्थे चान्येषां लक्षणयाऽपि साधुत्वाभावस्य "प्रत्ययः" (पा०सू० ३।१।१) "पुंयोगाद्" (पा०सू० ४।१।४८) इत्यादिभाष्यतो लाभात् । करणस्य व्यापारवत्त्वनियमादन्येषां च व्यापाराभावाद्विशेषणमेवात्र करणतृतीयान्तेनोच्यते । तस्य चेतरव्यावृत्तिकरणमेव व्यापारः । तदुक्तं भाष्ये—"येनेति करणे एषा तृतीयाऽन्येन चान्यस्य विधिर्भवति । यथा—चैत्रस्य सद्मानं हस्त्यश्वादिभिर्विधत्ते, एवम् अचो यदिति अचा धातोर्यतं विधत्ते" इति । अन्येन चान्यस्येति । अनेन यस्य कार्यं, यस्मिन्परतश्च, तयोरकरणत्वं दर्शितम् । अन्यस्येत्यन्यस्मिन्नित्यस्याप्युपलक्षणम् । तत्र शब्दोपस्थितविशेष्यस्य तादृशं विशेषणमेव तदन्तग्राहकम् । क्वचित्सति गमके तादृशं शब्दरूपं विशेष्यमादायापि तदन्तविधिः । तच्चान्तरङ्गत्वात्समानाधिकरणमेव । तत्र तदन्तविधौ सति तथा (२)विशेषणत्वयोग्यताप्येतत्प्रवृत्तौ निमित्तम् । अत एव "इन्हन्" (पा०सू० ६।४।

---

स्य व्यापारस्योद्देश्येऽभावादुद्देश्यतावच्छेदकं गृह्यते । स चेतरव्यावृत्तिरूपो व्यापारोऽन्तरङ्गत्वादभेदेनैव विवक्ष्यते । अभेदेन व्यावर्तकं विशेषणमेवेत्यत आह–(१)**विशेषणमिति** । एतदेवाभिप्रेत्य भाष्ये उक्तम् "अन्येन चान्यस्य विधिर्भवति" इत्यादिना । न च "अनुदात्तौ सुप्पितौ" (पा०सू० ३।१।४) "द्वितीयाटौस्स्वेनः" (पा०सू० २।४।३४) इत्यादावभेदेनेतरव्यावृत्तिरूपव्यापारवत्त्वात्तदन्तविधिना अनुदात्तान्तौ सुप्पितौ भवतः, अनुदात्तान्त एनादेशो भवतीत्यर्थः स्यादिति वाच्यम् । अनुदात्तादेर्विधेयतावच्छेदकत्वेन विधेयस्यासिद्धत्वाद्वाक्यार्थबोधात्प्राग्विधेयविशेषणेऽभेदेनेतरव्यावृत्तिरूपव्यापारवत्त्वस्याप्यसिद्ध्या तदन्तविध्यप्रवृत्तेः । जाते वाक्यार्थबोधे आकाङ्क्षाया अभावेन पुनरप्यप्रवृत्तिरिति दिक् । (२)**विशेषणत्वयोग्यतापीति** । अभेदसम्बन्धावच्छिन्नप्रकारताप्रयोजकत्वेन सम्भावितं सम्बन्धानवच्छिन्नप्रकारताप्रयोजकत्वेन सम्भावितं वा स्वबोध्यार्थनिष्ठचरमावयवतानिरूपकपरं बोध्यमिति "येन विधिस्तदन्तस्य" (पा०सू० १।१।७२) इत्यस्य वाक्यार्थबोधस्वीकारादिति भावः ।

१२) इत्यादौ इनंशे तदन्तविधिः । न हि इन् अङ्गमित्यन्वयो भवति । तदन्तस्येत्यस्य तदन्तशब्दस्येत्यर्थः । नन्वेवम् "एरच्" (पा०सू० ३।६।५६) इति 'अयः' इत्यत्र न स्यादत आह—**स्वस्य चेति** । स्वमित्यनुवृत्तं षष्ठ्या विपरिणम्यते इति भावः । "स्वं रूपम्" (पा०सू० १।१।६८) इत्यस्य प्रत्याख्याने तु तदन्तस्य चेति पाठ्यमिति बोध्यम् ।

**समासप्र** (का. वा.) **इति** । विशेषणविशेष्यभावव्यत्यासे तात्पर्यग्राहकमिदम् । एवञ्च "द्वितीयाश्रित" (पा०सू० २।१।४) इत्यादौ श्रितादयोऽधिकारप्राप्तसमर्थैरित्यस्य विशेष्यभूता इति न तदन्तविधिः । तस्य तत्प्रकृतिके लक्षणया 'सुपा' इत्यनेनान्वयः । तेन 'कृष्णं परमाश्रितः' इत्यत्र न समासः । "नडादिभ्यः फक्" (पा०सू० ४।१।९९) इत्यादावपि नडादि विशेष्यं, प्रातिपदिकं विशेषणमिति सौत्रनाडिरित्यत्र न फक् ।

**उगिद्** (का. वा.) **इति** । तेन "अतिभवती" इत्यत्र "उगितश्च" (पा०सू० ४।१।६) इति ङीप्, 'दाक्षिः' इत्यत्र "अत इञ्" (पा० सू० ४।१।९५) च सिद्धः । एवञ्चोक्तनिषेधः प्रत्ययांशे गृह्यमाणप्रातिपदिकविषये, प्रत्ययविधिविषयेण "गृह्यमाणप्रातिपदिकेन तदन्तविधिर्नास्ति" इत्यनेनैकवाक्यत्वलाभात् । "उगिद्वर्ण" (का. वा.) इति त्वेकदेशानुवाद इति बोध्यम् । अत एव "वनो र च" (पा०सू० ४।१।७) इत्यादौ "प्रत्ययग्रहणे तदन्तग्रहणम्" (प. २३) इत्यस्य नायं निषेध इति दिक् ।

**विरामः** (पा०सू० १।४।११०) । भावे घञ् । शब्दानुशासनप्रस्तावादाह—**वर्णानामिति** । (१)उच्चारणाभाव इत्यर्थः । स च व्या-

---

(१)**उच्चारणाभाव इति** । ननु यत्र देवदत्तेन 'रामाद् इत्युच्चरितं, यज्ञदत्तेन च 'घटः' इत्युच्चरितं, तत्रावसानसंज्ञा न स्यादुच्चारणाभावस्याभावादिति चेत् ? न, वर्णविशिष्टोऽभावोऽवसानसंज्ञो भवतीत्यर्थेनादोषात् । वै० चं स्वकर्मकोच्चारणकर्तृपुरुषोच्चरितवर्णप्रतियोगिकत्वम्, अर्धमात्राधिककालाव्यवायेन स्वकर्मकोच्चारणकर्तृपुरुषोच्चरितवर्णावधिकपूर्वत्वाभाववत्त्वमेतदुभयसम्बन्धेन । प्रकृते चार्धमात्राधिककालाव्यवायेन यज्ञदत्तोच्चरितवर्णावधिकपूर्वत्वेऽपि देवदत्तोच्चरितवर्णावधिकपूर्वत्वाभावान्न दोषः । यत्र देवदत्तेन 'घटाद्' इत्युच्चरितं, तेनैवार्धमात्राधिककालव्यवधानेन 'पटाद्' इत्युच्चरितं, तत्रावसानसंज्ञासिद्धयेऽर्धमात्राधिककालाव्यवायेनेति विशेषणमिति दिक् ।

स्थानात्किञ्चिद्वर्णोच्चारणानन्तरकालिक एव गृह्यते । प्रदेशाः "वाऽवसाने" (पा०सू० ८।४।५६) इत्यादयः । अभावस्यापि बुद्धिकृतं पौर्वापर्यं, वर्णवत् ।

परशब्दो नान्यार्थोऽन्यत्वस्याव्यभिचरितत्वादत आह—**अतिशयित इति** । स्वभावसिद्धार्धमात्रातिरिक्तकालव्यवायेन रहितः । तेन तद्व्यवायेन वाक्योच्चारणे सञ्ज्ञा न । सन्निकर्षश्च प्रायः परेण, क्वचित्पूर्वेणापि । अत एवावसानकार्याणां संहिताधिकारे पाठः । न चावसानसञ्ज्ञया परसत्त्वे सावकाशायाः संहितासञ्ज्ञायाः "सत्यपि सम्भवे बाधनं भवति" इति न्यायेन विषयभेदेऽपि (१)बाधः स्यादिति तदसङ्गतिरेवेति वाच्यम् । तदधिकारे तेषां पाठेन "आकडार" (पा०सू० १।४।१) सूत्रस्य स्वशास्त्रीयसञ्ज्ञामात्रविषयत्वकल्पनात् । एते तु न तथा, लोकेऽपि सत्त्वात् । तदुक्तं वार्त्तिककृता—"संहितावसानयोर्लोकविदितत्वात्" इति । न चावसानकार्ये-

---

(१)**बाधः स्यादितीति** । न च 'अ' इत्यादौ बहूनां वर्णानामभावेन संहितासंज्ञाया अप्राप्त्यां अवसानसंज्ञायाश्चारितार्थ्यादियं शङ्का असङ्गतेति वाच्यम् । एतच्छङ्कापरभाष्यप्रामाण्येन संहितासंज्ञाया अविषयाणामवसानसंज्ञाविषयलक्ष्याणामनभिधानेनादोषात्, वर्णावयवानामतिशयितसन्निधिः संहितासंज्ञः स्यादिति सूत्रार्थेन केवलम् 'अ' इत्यादावपि वर्णावयवानां सान्निध्यस्य सत्त्वेन संहितासंज्ञायाः प्राप्तिसत्त्वाच्च । वर्णेषु च वर्णावयवत्वं व्यपदेशिवद्भावेनेत्यन्ये । नन्वेवमपि गुरुलघ्वादिसंज्ञानां घिन्यादिसंज्ञाभिः समावेशार्थं समानावधिकसंज्ञयोरेव बाध्यबाधकभाव इत्यवश्यमङ्गीकर्तव्यम् । अत एव वैनूमित्यत्र वेः पूर्वनिपातो घित्वेन, लघुत्वेन च "इगन्ताच्च लघुपूर्वात्" (पा०सू० ५।१।१३१) इति अण्प्रत्ययश्च भावे सिद्धः । 'गार्गीबन्धुः' इत्यत्र "गुरोरनृतः" (पा०सू० ८।२।८६) इति प्लुतो "नदी बन्धुनि" (पा०सू० ६।२।१०९) इत्यन्तोदात्तश्च सिद्धः । तथा च प्रकृते वर्णानामतिशयितसन्निधेः संहितासंज्ञा वर्णाभावस्यावसानसंज्ञेति समानावधित्वाभावात् शङ्कासमाधाने निर्दले इति चेत् ? मैवम्, यत्किञ्चिच्छास्त्रीयोद्देश्यतावच्छेदकदलप्रविष्टधर्मविशिष्टे धर्मे एका संज्ञा तिष्ठतीत्यर्थेन सर्वदोषनिरासात् । वै० च स्वतादात्म्यं, स्वप्रतियोगिकविधेयानुयोगिकसंसर्गघटकनिरूपितत्वतुल्यसंख्याकनिरूपितत्ववत्संसर्गप्रतियोगित्वम्, एतदुभयसम्बन्धेन । प्रकृते चावसानसंज्ञाशास्त्रीयोद्देश्यतानिरूपितविधेयतावत्त्वं तद्घटकनिरूपितत्वतुल्यसंख्याकनिरूपितत्ववत्संसर्गप्रतियोगित्वस्य स्वतादात्म्यस्य च संहितासंज्ञाशास्त्रीयोद्देश्यतावच्छेदकवर्णत्वे सत्त्वेन शङ्कासमाधाने सङ्गते । अत्र चैतत्समाधानपरं भाष्यमेव मानम् । निरूपयिष्यते चेदम् "आकडार" (पा०सू० १।४।१) सूत्रव्याख्यावसरे विस्तरेणेति दिक् ।

षु संहिताधिकारासम्बन्ध एवास्तु, अग्रे च मण्डूकप्लुतिरस्त्विति वाच्यम्, सत्यामुपपत्तौ मण्डूकानुवृत्तेरयुक्तत्वात्। ध्वनितञ्चेदं "विसर्जनीयस्य सः" (पा०सू० ८।३।३४) इति सूत्रे भाष्ये। सन्निकर्षः–सामीप्यम्।

**सुप्तिङ्** (पा०सू० १।४।१४)। सुबिति सुपः पकारेण प्रत्याहार व्याख्यानात्। यद्यपि "प्रत्ययग्रहणे तदन्तग्रहणम्" (प. २३) इत्युक्तेः शब्दरूपं विशेष्यमादाय तदन्तग्रहणं सिद्धम्। प्रत्ययेन स्वप्रकृत्यवयवक समुदायस्याक्षेपात्तद्विशेषणत्वेन तदन्तविधिरिति न युक्तम्। 'इयान्' इत्यादौ तस्य तादृशसमुदायेन व्यभिचारेणाक्षेपासम्भवात्, आक्षिप्तस्य शाब्देऽनन्वयाच्च। तथाऽपि सञ्ज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणाभाव (१)ज्ञापनार्थमन्तग्रहणम्। तेन घसञ्ज्ञा तरप्तमपोरेव, न तदन्तस्य। तेन (२)'गौरीब्राह्मणितरा' इत्यत्र न ह्रस्वः। (३)एतन्निषेधसामर्थ्यादेव प्रदेशेष्वपि

---

(१)**ज्ञापनार्थमिति**। संज्ञानिष्ठविधेयतानिरूपिता या प्रत्ययमात्रवृत्तिसाक्षादुद्देश्यता, तत्प्रयोजकं पदं यत्र तत्र, तदादिविशेष्यकतदन्तग्रहणाभावज्ञापनार्थमित्यर्थः। (२)**गौरीब्राह्मणितरेति**। न च "पुंवत्कर्मधारय" (पा० सू० ६।३।४२) इति पुंवद्भावे उक्तं रूपं न स्यादिति वाच्यम्। गौरी ब्राह्मणितरा इति स्थिते परत्वात् पुंवत्त्वं बाधित्वा "घरूप" (पा०सू० ६।३।४३) इति ह्रस्वापत्तिरित्यर्थेनादोषात्, "दशवर्षा भवेद्गौरी" इति यमस्मृत्या गौरीशब्दस्य वयोवाचकत्वेन वयोवाचकानां वैकल्पिकजातिवाचकत्वस्योक्तत्वेन बहुव्रीहिसमासस्वीकारे "जातेश्च" (पा०सू० ६।३।४१) इति पुंवत्त्वनिषेधेनोक्तरूपासिद्धेश्च। यत्तु "षष्ठीतत्पुरुषः" इति, तन्न, "घरूप" (पा०सू० ६।३।४३) सूत्रे समानाधिकरणे इत्यस्यानुवृत्त्या तत्र दोषकथनासङ्गत्यापत्तेः। स्पष्टञ्चेदं "तरप्तमपौ घः" (पा०सू० १।१।२२) इति सूत्रे भाष्ये। (३)**एतन्निषेधसामर्थ्यादिति**। न च "घरूप" (पा०सू० ६।३।४३) इत्यत्रोत्तरपदविशेष्यकतदन्तविधेः "उत्तरपदाधिकारे" (प. २५) इति परिभाषया निषेधात् तदादिविशेष्यकतदन्तविधेश्च "प्रत्ययग्रहणे च" (प. २३) इति निषेधात् "गौरीब्राह्मणितरा इत्यादौ ह्रस्ववारणायायं निषेधः सार्थक इति वाच्यम्। "रात्रेः कृति" (पा०सू० ६।३।७२) इत्यादौ "उत्तरपदाधिकारे" (प. २५) इति निषेधाप्रवृत्तये प्रत्ययवृत्त्यानुपूर्व्यवच्छिन्नविषयताप्रयोजकं पदं यत्र तत्रैव तत्प्रवृत्तेः स्वीकारस्यावश्यकत्वेन, "घरूप" (६।३।४३) इत्यत्रोत्तरपदविशेष्यकतदन्तविधिनिषेधस्यैतन्निषेधसामर्थ्यादेव वक्तव्यत्वात्। न च "रदाभ्यां निष्ठातो नः" (पा०सू० ८।२।४२) इत्यत्र "प्रत्ययग्रहणे चापञ्चम्याः" (प. २४) इति निषेधात् क्तान्ततदादेः क्तवत्वन्ततदादेश्च निष्ठासंज्ञाऽभावाय "संज्ञाविधौ" (प०) इति निषेधः सार्थक इति

न तदन्तविधिः । न च ज्ञापितेऽपि व्यर्थम्, पदप्रदेशे प्रत्ययग्रहणे तदन्तग्रहणेनैव सिद्धेरिति वाच्यम् । पदत्वस्य प्रकृतिसाधारणतया पदग्रहणे प्रत्ययग्रहणस्यैवाभावात् । "यस्मात्प्रत्ययविधिः" (पा०सू० १।४।१३) इत्याद्यनुवृत्तेः पदसमुदायस्य न पदत्वम् । 'इयान्' इत्यादौ यस्मात्प्रत्ययविधिस्तदादितद्धितान्तत्वं (१)व्यपदेशिवद्भावेन बोद्धव्यम् । तेनाशास्त्रीयस्याप्येकाच्त्वादेरतिदेशात् । विशिष्टनिष्ठव्यवहारनिमित्तकार्याणि असहायेऽपि कर्त्तव्यानीति तदर्थात् । अत एव 'इयन्मात्रम्' इत्यादौ 'वत्वन्तात्स्वार्थे इति मात्रच्सिद्धिः । 'हरिषु' इत्यादौ सोस्तु नैवं पदत्वं, "हलि सर्वेषाम्" (पा०सू० ८।३।२२) इति निर्देशेन ससहाये तदप्रवृत्तेः । "निजौ चत्वार एकाचः" इति भाष्यन्तु (२)अभ्युपेत्यवादेन । ध्वनितञ्चेदम् "आदेच उपदेशे" (पा०सू० ६।१।४५) "तास्यनुदात्तेत्" (पा०सू० ६।१।१८६) इत्यादौ भाष्ये । तत्र हि 'ढौकते' इत्यौकारस्य 'हतः' इत्यादावकारस्यैजन्तोपदेशत्वमकारान्तोपदेशत्वं व्यपदेशिवद्भावेनाशङ्क्यार्थवता व्यपदेशिवद्भाव इत्युक्तम् । यो वर्णोऽर्थवांस्तेन व्यपदेशिवद्भावः । वर्णस्यार्थवत्त्वञ्च 'इयाय'

---

वाच्यम् । निष्ठासंज्ञायाः सूत्रे एव प्रवृत्तिस्वीकारेण तत्रत्यक्तादिपदस्य लक्ष्यस्थप्रत्ययमात्रबोधकत्वाभावेन प्रत्ययग्रहणपरिभाषाया अप्राप्तेः । न चैवमपि "षः प्रत्ययस्य" (पा०सू० १।३।६) इत्यत्र तदन्तविध्यभावाय निषेधः सार्थक इति वाच्यम् । तत्र प्रत्ययपदस्य लक्ष्यस्थप्रत्ययबोधकसूत्रस्थष्फादिबोधकत्वेन प्रत्ययबोधकत्वाभावेन तदन्तविधेः प्राप्त्यभावादिति दिक् । (१)**व्यपदेशिवद्भावेनेति** । 'इयान्' इत्यत्र मुख्यधर्मवदघटितत्व–मुख्यधर्मवदघटकत्व—मुख्यधर्मवदसमभिव्याहृतत्व–रूपासहायत्वस्य सत्त्वादिति भावः । वस्तुतो व्यपदेशिवद्भावेन घटकत्वघटितत्वव्यतिरिक्तधर्मानतिदेशेन प्रकृते स्थानिवद्भावेनैव तद्धितान्ततदादित्वस्याऽऽनेयतया चिन्त्यमिदम् । (२) **अभ्युपेत्यवादेनेति** । इदं भाष्यं यथा सङ्गच्छते, मूलोक्तञ्च सर्वमसङ्गतमिति च विस्तरेणान्यत्र निरूपितम् । न च 'ढौकते' इत्यादावौकारे एजन्तोपदेशत्वस्य 'हतः' इत्यादावदन्तोपदेशत्वस्य च व्यपदेशिवद्भावेनाशङ्कापरम् "आदेच उपदेशे" (पा०सू० ६।१।४५) इत्यादिसूत्रस्थं भाष्यं विरुध्यते इति वाच्यम् । तस्यैकदेश्युक्तित्वेनादोषात् । 'ढौ' इत्यत्रैजन्तत्वस्य 'ह' इत्यत्रादन्तत्वस्य च सत्त्वेनोपदेशत्वस्य व्यपदेशिवद्भावेनाऽऽनेयतया तद्विहाय केवलौकारे अकारे च उभयधर्मातिदेशाशङ्काकरणेन तस्य तत्त्वस्याऽऽवश्यकत्वाच्चेति दिक् ।

इत्य.दावसहाये एव, न तु प्रकृते इति तदर्थः। एवञ्चैकस्मिन्नित्यस्यार्थ वतेत्यनेनोक्ते इति दिक्।

**हलोऽनन्तराः** (पा०सू० १।१।७)। 'गर्गाः शतं दण्ड्यन्ताम्' इत्यत्र (१)समुदाये शतदण्डनवदत्र समुदायस्यैव सञ्ज्ञा, न प्रत्येकम्, (२)अनन्तरा इत्युक्तेश्च तस्य विशेषणताया एवौचित्यात्। यत्तु "संयुज्यन्ते वर्णा यत्रेत्यन्वर्थसञ्ज्ञाबलान्न प्रत्येकं संज्ञा" इति, तन्न, घटपटौ संयुज्येते यत्रेत्यादौ संयुज्यमानपदार्थातिरिक्तस्यैवान्यपदार्थतया प्रतीतेर्व्युत्पन्नत्वेन तदतिरिक्ततद्घटितपदवाक्यरूपसमुदायस्य सञ्ज्ञापत्तावनिष्टापत्तेः। महासञ्ज्ञा तु प्राचामनुरोधादेव। तेन 'सुदृषद्ब्राति' इत्यत्र संयोगान्तलोपो नेत्यन्यत्र विस्तरः। 'हलः' इति बहुवचनं (३)सौत्रम्, यद्वा, हलौ च हलश्चेत्येकशेषः। "स्वरितात्संहितायाम्" (पा०सू० १।२।३९) इति सूत्रेऽनुदात्तानामिति पदे तथैकशेषस्य भाष्ये करणात्। तेन द्वयोरपीति 'शिक्षा' इत्यादौ "गुरोश्च हलः" (पा०सू० ३।३।१०३) इति अप्रत्ययः सिद्ध्यति। यत्रापि बहवः श्लिष्टास्तत्रापि द्वयोर्द्वयोरेव न बहूनाम्, झलि परे संयोगादिलोपविधानात्। बहूनामपीति चिन्त्यमेव, (४)फलाभावात्। तत्र तत्राङ्गपदधा ववयवसंयोगस्यैवाश्रयणेन तादृशस्य च त्रयाणां

---

(१)**समुदाये शतदण्डनवदिति**। उद्देश्यतावच्छेदकप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नानुयोगिताकपर्याप्तिकविधेयतावत्त्वस्य संज्ञासु नियतत्वेन प्रकृतसंज्ञाशास्त्रीयोद्देश्यतावच्छेदकसाहित्यपर्याप्त्यनुयोगितावच्छेदकं यद्द्वित्वं तदेव संयोगसंज्ञापर्याप्त्यनुयोगितावच्छेदकमिति द्वयोरेव संयोगसंज्ञेति भावः। (२)**अनन्तरा इत्युक्तेश्चेति**। अयम्भावः––अनन्तरा इत्यस्याव्यवहिता इत्यर्थः। तत्र व्यवहितत्वं यत्किञ्चित्पदार्थविशिष्टद्वित्वाश्रयत्वम्। वै० च स्वावधिकोत्तरत्वसामानाधिकरण्यं, स्वावधिकपूर्वत्वसामानाधिकरण्यम्, एतदुभयसम्बन्धेन। तथा च तादृशव्यवहितत्वं द्विनिष्ठमेवेति "संयोगवद्द्विप्रयोगोऽपि विशेषावगतिहेतुः" इति न्यायेन 'अवत्सा आनीताम्' इत्यत्रेव व्यवहितभिन्नौ द्वावेव गृह्येते इति द्वयोरेव संयोगसंज्ञा न प्रत्येकम्। (३)**सौत्रमिति**। वस्तुतस्तु हलौ च हलौ च हलौ चेत्येकशेषेण द्वयोरेव संयोगसंज्ञापक्षेऽपि बहुवचनमुपपद्यते। (४)**फलाभावादिति**। न च 'मग्नः' इत्यादौ "मस्जिनशोः" (पा०सू० ७।१।६०) इति नुमि बहूनां संयोगसंज्ञाऽभावे "स्कोः" (पा०सू० ८।२।२९) इति लोपो न स्यादिति वाच्यम्। सकारजकारयोर्मध्ये नकारसत्त्वेऽप्यन्त-

संयोगस्याभावादिति भाष्ये स्पष्टम् । आनन्तर्यं व्यवधानाभावः, व्यवधानञ्च विजातीयेनैवेत्याशयेनाह—**अज्भिरिति** । अत्र कुत्वं न्याय्यम् । अत एव "हयवरट्" (मा०सू० ५) सूत्रे "अचोऽक्षु" इति भाष्यप्रयोगे कुत्वं दृश्यते । स्वैरेरव्यवहिता इति तूचिता वृत्तिः । हलः किम् ? तितउ देव । अत्र "गुरोः" (पा०सू० ८।२।८६) इति प्लुतः स्यात् । अनन्तराः किम् ? द्रप्सम् । अत्र सकारमकारयोः संयोगत्वे "स्कोः" इति लोपः स्यात् ।

**संयोगे गुरु** ( पा०सू० १।४।१९) । 'भेत्ता' इत्यादौ गुणस्तु क्नोः क्त्विसामर्थ्येन (१)भूतपूर्वलघूपधग्रहणाद् बोध्यः ।

---

र्तृकव्यवधानशून्यत्वस्य सत्त्वेन तयोः संयोगसंज्ञायां बाधकाभावादिति **केचित्** । वस्तुतस्तु "अनिदिताम्" (पा०सू० ६।४।२४) इति नलोपे 'मग्नः' इत्यत्र अवशिष्टयोः सकारजकारयोः संयोगसंज्ञायां संयोगादिलोपस्य सिद्ध्या बहूनामपीत्यस्य फलाशङ्कनं तत्रायुक्तम् , किन्तु 'मङ्क्ता' इत्यादौ "मस्जिनशोर्झलि" (पा०सू० ७।१।६०) इति सूत्रस्थेन "अन्त्यात्पूर्वो नुम् वाच्यः" (का० वा०) इति वार्तिकेन सकारजकारयोर्मध्ये नुमि बहूनां संयोगसंज्ञायां सत्यामेव संयोगादित्वात् सकारलोपः सिध्यति नान्यथेति फलदानमुचितम् । तत्र च "अन्त्यादचः पर एव नुमस्तु, वार्तिकं च माऽस्तु, तथा सति द्वयोः सकारयोः संयोगसंज्ञायां सलोपसिद्ध्या व्यर्थं बहूनां संयोगसंज्ञाविधानम्" इति शङ्किते वार्तिकानङ्गीकारे 'मग्नः' इत्यत्र नलोपो न स्यात् अनुपधात्वात् संयोगादिलोपस्यासिद्धत्वादिति उत्तरयितुमुचितमित्याहुः ।

(१)**भूतपूर्वलघूपधेति** । स्यादेतत् , भूतपूर्वेति लघौ विशेषणम् ? उत लघूपधांशे ? नाद्यः, 'गुता' इत्यादौ गुणापत्तेः । नाऽप्यन्त्यः, 'इन्दाञ्चकार' इत्यादौ गुणापत्तेरिति चेत् ? मैवम् , क्नोः क्त्विेन प्रकृत्यवयवप्रत्ययावयवोभयारब्धसंयोगानिमित्तिका गुरुसंज्ञा लघुसंज्ञां न बाधत इति कल्पनेनादोषात् । **अन्ये तु** क्नोः क्त्विेन प्रत्ययोपदेशकाले यो लघूपधस्तस्यैको गुण इति 'भिनत्ति' इत्यादौ न दोषः । न च 'तोतोर्त्ति' इत्यादौ "राल्लोपः" (पा०सू० ६।४।२१) इति वलोपे प्रत्ययोपदेशकाले लघूपधत्वाभावाद् गुणो न स्यादिति वाच्यम् । यङ्लुकश्छान्दसत्वेन छन्दस्यापाद्यमानरूपाभावात् । न चैवमपि तुर्विधातोर्वनिपि "लोपो व्योः" (पा०सू०६।१।६६) इति लोपे 'तोर्वा' इत्यादौ गुणो न स्यात्प्रत्ययोपदेशकाले लघूपधत्वाभावादिति वाच्यम् । "लोपो व्योः" (पा०सू०६।१।६६) इति सूत्रे वकारप्रत्याख्यानपरभाष्यप्रामाण्येनैतेषामनभिधानादित्याहुः । भूतपूर्वो यो लघुस्तदुपधस्येत्येवार्थः । न च 'गुता' इत्यादौ गुणः शङ्क्यः । "गाङ्कुटादिभ्यः" (पा०सू० १।२।१) इत्यत्र विहितविशेषणस्वीकारेण ङादे-

**इति सञ्ज्ञेति ।** प्रथमाध्यायस्थानां सन्धिकार्योपयोगिनीनां सञ्ज्ञानां प्रकरणमिति समाप्तमित्यर्थः । तेनाम्रेडितप्रगृह्यभसञ्ज्ञालोपसञ्ज्ञाद्यनुपन्यासेऽपि न क्षतिः । "अ अ" (पा०सू० ८।४।६८) इत्याद्युपन्यासस्तु प्रासङ्गिकः ।

## इति सञ्ज्ञाप्रकरणम् ॥

**इको गुण** (पा०सू० १।१।३) । परिभाषेयं (१)व्याख्यानात् । **गुणवृद्धिशब्दाभ्यामिति ।** गुणवृद्धिग्रहणानुवृत्त्यैव सिद्धे पुनर्गुणवृद्धिग्रहण (२)सामर्थ्यादिति भावः । अनुवर्त्तमानञ्च (३)सञ्ज्ञिपरमेव स्यात् । सञ्ज्ञाकरणेनान्यत्र (४)सञ्ज्ञिपरत्वात् । यद्वा, तदप्यनुवर्त्य गुणो वृद्धिरिति योजनयैतल्लाभः । "स्वादिषु" (पा०सू० १।४।१७) इति सूत्रेऽनुवृत्तपदपदस्य सञ्ज्ञापरताया एव (५)दृष्टत्वात् । "ष्णान्ताः"

शस्य ङित्वेन "क्ङिति च" (पा०सू० १।१।५) इति निषेधादिति परे ।

## * इति सञ्ज्ञाप्रकरणम् *

## अथ परिभाषाप्रकरणम् ।

**(१)व्याख्यानादिति ।** "नापि तच्छेषो नापि तदपवादोऽन्यदेवेदं परिभाषान्तरमसम्बद्धमनया परिभाषया" इति प्रकृतसूत्रस्थभाष्यादिति भावः । **(२)सामर्थ्यादिति ।** तेन चादेङ्निष्ठविधेयताप्रयोजकगुणपदम्, आदैज्निष्ठविधेयताप्रयोजकवृद्धिपदम्, एतदन्यतरपदघटिते शास्त्रे इक इति षष्ठ्यन्तं पदमुपतिष्ठते इत्यर्थ स्वीक्रियते । विधेयतायामदेङ्निष्ठत्वादैज्निष्ठत्वविशेषणदानाद् गुणवृद्धिसंज्ञासूत्रयोर्नास्याः प्रवृत्तिः । विधेयत्वनिवेशात् "अतो गुणे" (पा०सू० ६।१।९७) "वृद्धिर्यस्याचाम्" (पा०सू० १।१।७३) इत्यादौ नास्याः प्रवृत्तिः । गुणवृद्धिपदनिवेशात् 'त्यदादीनामः" (पा०सू० ७।२।१०२) "पथिमथ्यृभुक्षाम्" (पा०सू० ७।१।८५) इत्यादौ नास्याः प्रवृत्तिः । **(३)संज्ञिपरमेव स्यादिति ।** यस्मात्तदनुवर्तते तदीयविधेयतावच्छेदकरूपेतररूपावच्छिन्नविधेयताके संज्ञिपरमेव स्यादित्यर्थः । तेन "स्वादिषु" (पा०सू० १।४।१७) इति सूत्रेऽनुवर्तमानपदपदस्य संज्ञाशब्दपरत्वेऽपि न क्षतिः । तस्य "सुप्तिङ्" (पा०सू० १।४।१४) इतिशास्त्रीयविधेयतावच्छेदकरूपेतररूपावच्छिन्नविधेयताकत्वस्याभावात् । **(४)संज्ञिपरत्वादिति ।** अत्रापि पूर्ववदेवार्थः । **(५)दृष्टत्वादिति ।**

(पा०सू० १।१।२४) इति सूत्रे संख्यापदस्य तदन्तत्वासम्भवादर्थपरतेति बोद्धव्यम्। लक्षणप्रतिपदोक्तपरिभाषया तु नात्र निर्वाहः। तत्र 'प्रतिपदोक्तस्य' इत्यस्य साक्षादुच्चारितस्येति साक्षात्तत्तच्छब्दानुवादेन विहितस्येति वा(१)ऽर्थात्। ध्वनितञ्चेदमत्रैव भाष्ये। अस्याश्च (२)विधेयसमर्पकगुणवृद्धिपदश्रुतिर्लिङ्गं, तदाह—**विधीयेते इति**। अत एव "अतो गुणे" (पा०सू० ६।१।९७) "वृद्धिर्यस्य" (पा०सू० १।१।७३) इत्यादौ न दोषः। एतेन "शब्दपरयोः पूर्वयोर्गुणवृद्धिपदयोरनु-

---

वस्तुतस्तु पूर्वोक्तदिशा अनुपपत्तेरभावेन पूर्वकल्प एव ज्यायान्। (१)**अर्थादिति**। अयम्भावः—प्रतिपदोक्तत्वेनाभिमतं यच्छास्त्रं, लाक्षणिकत्वेनाभिमतं च यच्छास्त्रं, तादृशशास्त्रद्वयीयविधेयतावच्छेदकरूपावच्छिन्नोद्देश्यताकत्वरूपलक्षणप्रतिपदोक्तपरिभाषालिङ्गस्याभावात्, यत्किञ्चिच्छास्त्रविशिष्टत्वरूपप्रतिपदोक्तत्वस्य चाभावाद्वा। वै० च स्वीयोद्देश्यतावच्छेदकरूपावच्छिन्नविधेयताकत्वं, स्वीयोद्देश्यतावच्छेदकसमर्पकज्ञानविषयीभूताऽऽनुपूर्वीविशिष्टविधेयताकत्वम्, उभयसम्बन्धेन। आनुपूर्वीवैशिष्ट्यञ्च स्वावच्छिन्नत्वं, स्वावच्छिन्नप्रयोज्योद्देश्यतानिरूपितत्वम्, एतदन्यतरसम्बन्धेन। प्रकृते च "इको गुण" (पा०सू० १।१।३) इति शास्त्रीयोद्देश्यतावच्छेदकरूपावच्छिन्नविधेयताकत्वस्य "मिदेर्गुणः" (पा०सू० ७।३।८२) इत्यादावभावान्न लक्षणप्रतिपदोक्तपरिभाषया निर्वाह इति ध्येयम्। (२)**विधेयसमर्पकेति**। अदेङ् आदैजेतदन्यतररूपविधेयसमर्पकेत्यर्थः। अत एव "वृद्धिरादैच्" (पा०सू० १।१।१) "अदेङ्गुणः" (पा० सू० १।१।२) इत्यादौ नाऽस्याः प्रवृत्तिः। न चैवमपि "ओर्गुणः" (पा०सू० ६।४।१४६) इत्यादावेतत्प्रवृत्तिर्दुर्वारैवेति वाच्यम्। "अचोऽञ्णिति" (पा०सू० ७।२।११५) इत्यत्रत्याज्ग्रहणसामर्थ्येन वर्णरूपस्थानिनो यत्र निर्देशस्तत्र नेयमुपतिष्ठते इति कल्पनेनादोषात्। न चैवं "पुगन्तलघूपधस्य च" (पा०सू० ७।३।८६) इत्यत्रैतत्परिभाषानुपस्थितिप्रसङ्गः 'भिनत्ति' इत्यादौ गुणवारणाय पुक्यन्तः पुगन्तः, लघ्वी चासावुपधा च लघूपधं तस्य, इत्यर्थस्य शेखरे भाष्ये च कृतत्वेन वर्णरूपस्थानिनो निर्देशादिति चेत्? न, अच्त्वव्याप्यधर्मपुरस्कारेण यत्र वर्णरूपस्थानी निर्दिश्यते तत्र नेयमुपतिष्ठते इति कल्पनेनोपधात्वस्याच्त्वव्याप्यत्वाभावात्, "पुगन्त" (पा०सू० ७।३।८६) इति सूत्रे बहुव्रीहिस्वीकारात्समाहारद्वन्द्वस्य तच्छेषपंक्षोपपादनावसरे एव भाष्ये उक्तत्वेनादोषाच्च। "विधौ परिभाषोपतिष्ठते नानुवादे" इति परिभाषया प्रधानविधिसंस्कारे कर्तव्ये यावती परम्परा नाप्राप्ता ततोऽधिकपरम्परा परिभाषाप्रवृत्तिं न प्रयोजयतीति यावत्।

वृत्त्या यत्र ते पदे तत्रेदमुपतिष्ठते इत्यर्थेन "त्यदादीनामः" (पा०सू० ७।२।१०२) इत्यादिव्यावृत्तौ सिद्धायामिह गुणवृद्धी इति व्यर्थम्" इत्यपास्तम्। एतन्मूलक एव "विधौ परिभाषोपतिष्ठते, नानुवादे" इत्युद्घोषः। एवञ्च पदोपस्थापकपरिभाषाविषये 'विधीयते' इत्यस्यैवाध्याहारो बोद्धव्यः। एवञ्च "तस्मिन्निति निर्दिष्टे" (पा०सू० १।१।६६) "षष्ठीस्थाने" (पा०सू० १।१।४९) इत्यादेरनुवादेऽपि प्रवृत्तिः। तेन "प्रत्ययस्थात्कात्पूर्वस्य" (पा०सू० ७।३।४४) "उदात्तस्वरितयोर्यणः" (पा०सू० ८।२।४) इत्यादौ न दोषः। "उदीचामातः स्थाने" (पा०सू०७।३।४६) इति स्थानेग्रहणन्तु स्पष्टार्थमेव। तत्र विधिवाक्ये प्रथमाया विधेयविभक्तित्वेन तदन्तस्य (१)विधेयसमर्पकत्वानिर्णयः। अत एव गुणादिपदानामिक्पदोपस्थापनेन चरितार्थानामपि वाक्यार्थान्वयिता। तदर्थस्य तदनन्वयित्वे विधेयत्वाभावेन उपस्थापकत्वस्यैव भङ्गापत्तेः। इयञ्च 'एधिता' इत्यादौ व्यञ्जनानां गुणव्य.वृत्त्यर्थं, 'भिन्नम्' इत्यादौ निषेधप्रवृत्तये इग्लक्षणत्वसम्पत्त्यर्थञ्चेति दिक्(२)।

**प्लुतशब्दैरिति।** "ऊकाल" (पा०सू० १।२।२७) इति सूत्राद् ह्रस्वदीर्घप्लुत इति, अजिति चानुवर्त्तते; ह्रस्वेत्यादिपदञ्च तृतीयया

---

ननु "मिदेर्गुणः" (पा०सू० ७।३।८२) इत्यादिवाक्यार्थबोधमन्तरा "इको गुणवृद्धी" (पा०सू० १।१।३) इति शास्त्रीयोद्देश्यतावच्छेदकधर्मप्रकारेण ज्ञानं न सम्भवति, एतत्परिभाषावाक्यार्थबोधमन्तरा च विधिवाक्यार्थबोधो न सम्भवतीत्यन्योन्याश्रय इत्याशङ्क्याऽऽह–(१)**विधेयसमर्पकत्वनिर्णय इति।** (२)**इति दिगिति।** दिगर्थस्तु जनधातोर्डविधानसामर्थ्येन 'एधिता' इत्यादौ व्यञ्जनस्य गुणो न भवति। नकारस्य गुणेनाकारे पररूपे च 'मन्दुरजः' इत्यादिसिद्धौ तस्य डित्करणस्य व्यर्थत्वात्। एवं क्नोः कित्करणेनानिग्लक्षणस्यापि निषेधो भवतीति 'भिन्नम्' इत्यादौ न दोष इतीयं परिभाषा न कर्तव्या। न च 'लैगवायनः' इत्यादावपि निषेधः स्यादिति वाच्यम्। गित्साहचर्येण धातुविहितप्रत्यययोरेव कित्ङितोर्ग्रहणेनादोषात्। वस्तुतस्तु "सुदुरोरधिकरणे" (का०वा०) इत्यनुवर्त्य गमेरपि तद्विधानात्तत्र व्यञ्जनस्य गुणपदे मस्यौष्ठस्थानिकत्वेन ओकारप्रसक्त्या 'सुगः' 'दुर्गः' इत्यादिसिद्ध्यर्थं डित्करणस्यावश्यकत्वेन व्यञ्जनव्यावृत्त्यर्थं कमेर्णिङि 'कामयते' इत्यादौ वृद्धिनिषेधाभावायानिग्लक्षणस्य निषेध इति वक्तुमशक्यतया तत्सम्पत्तये चेयमावश्यकी।

विपरिणतमिति भावः । तेन "दिव उत्" (पा०सू० ६।१।१३१) "अष्टन आ विभक्तौ" (पा०सू० ७।२।८४) इत्यादावेतदनुपस्थितिः । शेषं प्राग्वत् ।

**आद्यन्तौ** (पा०सू० १।१।४६) । यद्यप्यत्र मिलितस्य नैकत्रान्वय इति द्वन्द्वो न प्राप्नोति, तथापि समूहयोरन्वयबोधोत्तरं "यथासंख्यम् (पा० सू० १।३।१०) इतिसूत्रारम्भसामर्थ्यात्पुनः प्रत्येकान्वयः । लोके त्वेवंरीत्या प्रयोगो(१)ऽसाधुरेवेति भाष्ये स्पष्टम् । अत्रैव "यथासंख्य" (पा०सू० १।३।१०) सूत्रोपन्यासो युक्तः । द्वन्द्वान्ते श्रूयमाणस्येच्छब्दस्य प्रत्येकं सम्बन्धः । पुरस्तादपवादन्यायेन स्थानेयोगत्वस्यायमपवादः । प्रत्ययपरत्वन्तु परत्वादमुं बाधते । तेन चरेष्टादयः परा एव भवन्ति । अत एव यत्रैतदभावे स्थानषष्ठीसम्भावना तत्रैवेदं प्रवर्त्तते; तदाह— **यस्योक्ताविति** । आद्यन्ताक्षिप्तोऽवयवी यच्छब्दार्थः । यथासंख्यसिद्धमर्थमाह—**क्रमादिति** । इताविति किम् ? टुक् पर्यायेणाद्यन्तयोर्मा भूत् ।

**मिदचो** (पा०सू०१।१।४७) । अयं बाध्यसामान्यचिन्तया स्थानेयोगत्वप्रत्ययपरत्वयोरपवादः, "तृणहः" (पा० सू० ७।३।९२) इति निर्देशात् । (२)**निर्धारणे इति** । यस्य समुदायस्य मिद्विहितस्तस्याचां

---

(१)**असाधुरेवेतीति** । वस्तुतस्तु एकरूपावच्छिन्नस्यैकरूपसंसर्गेणैकरूपावच्छिन्नेऽन्वयबोधेच्छाया एव सहविवक्षापदार्थत्वेन टित आद्यवयवे कितोऽन्त्यावयवेऽन्वयेऽप्यन्वयितावच्छेदकोभयत्वस्यैक्येन सहविवक्षाया अबाधितत्वेन द्वन्द्वः साधुरेव । अत एव'अजाविधनौ देवदत्तयज्ञदत्तौ' इत्यादौ "न ज्ञायते कोऽजाधनः कोऽविधनः" इत्येवोक्तम्, न त्वसाधुत्वम् । अत एव'एकद्विदारगुः,' 'एकद्वित्रिकलत्रपुत्रपशुमान्, 'वानप्रस्थयतिब्रह्मचारिणां भागिनः क्रमेणाऽऽचार्यसच्छिष्यधर्मभ्रात्रेकतीर्थिनः" इत्यादिनिर्देशाः सङ्गच्छन्ते । किञ्च मूलोक्तदिशा मिलितानामेकत्रान्वयबोधेच्छा यदि सहविवक्षा, तर्हि ,धवखदिरौ छिन्धि' 'घटपटौ नीलौ'इत्यादौ द्वन्द्वानापत्तिः । धवनिष्ठविभागस्य खदिरनिष्ठविभागस्य च भिन्नतया पटनिष्ठनैल्यस्य घटनिष्ठनैल्यस्य च भिन्नतया एकत्र मिलितानामन्वयाभावात् ।

(२) **निर्धारण इतीति** । निर्धारणषष्ठ्यर्थश्च, यथा 'नृणां द्विजः श्रेष्ठः' इत्यादौ श्रैष्ठ्ये नृसमुदायस्य स्वघटकवृत्तित्वं स्वघटकनिर्धार्यमाणेतरयावदवृत्तित्वं चेत्येतदुभयसम्बन्धेन वैशिष्ट्यम्, तथा प्रकृतेऽपि अन्त्यत्वे अच्समुदायस्य स्वघटकवृत्तित्वं स्वघटकान्त्याजितरयावदवृत्तित्वं चेति । यत्तु कारकशेखरे 'नृणां द्विजः' इत्यादौ नृसमुदा-

मध्ये इत्यर्थः, सौत्रमेकवचनमिति भावः । **तस्यैवेति** । यस्य विहितस्त-स्यैवेत्यर्थः । अत एव "समुदायभक्तोऽसौ नोत्सहतेऽवयवस्येगन्ततां विह-न्तुम्" इति भाष्यं सङ्गच्छते । **अन्तावयव इति** । पूर्वसूत्रात्समस्तम-प्यन्तपदमे(१)कदेशे स्वरितत्वप्रतिज्ञाबलादनुवर्त्तते इति भावः । 'मुञ्चति' इत्यादिविषये तु फलाभावादयोग्यत्वाच्चान्तावयव इत्यंशाप्रवृत्तिः ।

परिभाषाणामनियमे नियमकारिणीत्वादाह–**अनिर्धारितेति** । तेन "ऊदुपधाया गोहः" (पा०सू० ६।४।८९) इत्यत्र स्थानेयोगत्वं न । उपधापद-सन्निधानेनावयवषष्ठीत्व(२)निर्णयात् । 'स्थानेयोगा' इत्यस्य(३)स्थानपदार्थ-

---

यस्य द्विजे स्वघटकवृत्तित्व-स्वघटकद्विजेतरयावदवृत्तित्वोभयसम्बन्धेन स्वविशिष्टश्रे-ष्ठ्यवत्त्वम् इति, तन्न, "अचोऽन्त्यादि टि" (पा०सू० १।१।६४) इति सूत्रस्थतद्ग्र-न्थविरोधात् । तत्र हि "अन्त्यादीति गमकत्वात्समासः" इत्युक्तम् । भवन्मते चान्त्य-त्वेऽन्वयाभावेन निर्धार्यमाणान्त्याच्येवान्वयेन गमकत्वादित्यस्यासङ्गत्यापत्तेः, निर्धारण-हेतोः श्रैष्ठ्यादेस्सम्बन्धघटकत्वेन श्रेष्ठादिपदानां निरर्थकत्वापत्तेश्च, उद्देश्यविधेयभावानु-पपत्तेश्च, विधेयश्रैष्ठ्यादेरुद्देश्यतावच्छेदकसंसर्गघटकत्वात्, 'पुरुषोत्तमः' इत्यादौ "न निर्धारणे" (पा०सू०२।२।१०) इति षष्ठीसमासनिषेधमाशङ्क्य यतो निर्धार्यते, यश्च निर्धार-णहेतुः, यश्च निर्धार्यमाणस्तद्बोधकपदत्रयसन्निधाने एव "यतश्च निर्धारणम्" (पा०सू० २।३।४१) इति सूत्रं प्रवर्त्तते इत्युक्त्वा "उत्तमः पुरुषस्त्वन्यः" (गी०अ०१५श्लो० १७) इत्यादिगीतासहकारेण कर्मधारयसमासपरकैयटादिग्रन्थविरोधाच्च । भवन्मते निर्धार्यमाण एव निर्धारणषष्ठ्यर्थान्वयेन सामर्थ्याभावादेव षष्ठीसमासाप्राप्तेरिति दिक् । (१)**एकदेशे स्वरितत्वप्रतिज्ञानादिति** । वस्तुतस्तु एकदेशे स्वरि-तत्वप्रतिज्ञाने न फलम् । "मिदचोऽन्त्यात्" (पा०सू० १।१।४७) इत्यत्र परशब्द-स्यावयवत्वविशिष्टपरत्वावच्छिन्नवाचकत्वेन 'पूर्वं नाभेः कायस्य' इत्यादाविव परत्वेऽन्-वितयाऽन्त्याचः, अवयवत्वे च निरूपितत्वसम्बन्धेन यस्य मिद्विहितस्तस्य चान्वय-स्वीकारेण 'मुञ्चति' इत्यादावनुपपत्त्यभावात् ।

(२) **निर्णयादिति** । स्वघटकत्व-स्वघटकान्त्यालवधिकाव्यवहितपूर्वत्वोभयस-म्बन्धेन यत्किञ्चित्समुदायविशिष्टत्वमुपधात्वमिति उपधात्वस्य निरूपकांशे नित्यसाका-ङ्क्षत्वेन येन सम्बन्धेन निरूपकांशे नित्यसाकाङ्क्षं यद्रूपं तद्रूपावच्छिन्नबोधकपदसमभि-व्याहृतषष्ठ्यास्तद्रूपानुयोगिकतत्सम्बन्धेतरसम्बन्धाबोधकत्वनियमेनोपधात्वानुयोगिका-वयवत्वसम्बन्धेतरसम्बन्धाबोधकत्वादिति भावः । (३)**तन्नि[स्थानपदार्थनि]रूपि-तसम्बन्धार्थिकेति** । स्थानपदार्थानुयोगिकसम्बन्धार्थिकेत्यर्थः । एवमग्रेऽपि ।

निरूपितसम्बन्धार्थिकेत्यर्थः । स्थानेन योगो यस्या इति विग्रहे निपातनात्साधुत्वस्य भाष्ये उक्तत्वात् । 'अस्तेरनन्तरे' इत्यादेरपि अनन्तरादिनिरूपितसम्बन्धे इत्येवार्थः । षष्ठीमात्रोच्चारणे स्थानपदाद्यध्याहार इत्यन्यत्र विस्तरः । **प्रसङ्ग** इति । "दर्भाणां स्थाने शरैः प्रस्तरितव्यम्" इत्यादौ (१)तथा दर्शनात् । भावे ल्युट् स्थानशब्दे । प्रसङ्गश्च सति सम्भवेऽर्थवत

---

**(१)तथा दर्शनादिति ।** प्रसङ्गपदार्थश्च वृत्तिविशेष्यतावच्छेदकतावच्छेदकताकेष्टसाधनत्वप्रकारकभ्रमविषयत्वप्रकारकज्ञानीयविशेष्यतावच्छेदकावच्छिन्नविशेष्यताकेष्टसाधनत्वप्रकारकप्रमाविषयत्वप्रकारकज्ञानीयविशेष्यतावच्छेदकतावच्छेदकता । स्थानपदार्थतावच्छेदकवृत्तित्वान्वयिनिरूप्यनिरूपकभावश्च षष्ठ्यर्थः । तथा च "दर्भाणां स्थाने शरैः प्रस्तरितव्यम्" इत्यादौ दर्भनिरूपितवृत्तित्ववती या विशेष्यतावच्छेदकतावच्छेदकता तादृशावच्छेदकताकं यत् दर्भकरणकं प्रस्तरणम् इष्टसाधनत्वप्रकारकभ्रमविषयः इत्याकारकज्ञानं, तादृशज्ञानीयविशेष्यतावच्छेदकं यत् प्रस्तरणत्वं तदवच्छिन्नविशेष्यताकमिष्टसाधनत्वप्रकारकप्रमाविषयत्वप्रकारकं यज्ज्ञानं शरकरणकं प्रस्तरणमिष्टसाधनत्वप्रकारकप्रमाविषयः इत्याकारकं, तादृशज्ञानीयविशेष्यतावच्छेदकतावच्छेदकता शरेष्विति लक्षणसमन्वयः । एवम् "इको यणचि" (पा०सू० ६।१।७७) इत्यादावपि इग्निरूपितवृत्तित्ववती या विशेष्यतावच्छेदकतावच्छेदकता तन्निरूपकं यत् इक्कर्मकोच्चारणम् इष्टसाधनत्वप्रकारकभ्रमविषयः इत्याकारकज्ञानं, तादृशज्ञानीयविशेष्यतावच्छेदकं यदुच्चारणत्वं तदवच्छिन्नविशेष्यताकं यादिष्टसाधनत्वप्रकारकप्रमाविषयत्वप्रकारकं ज्ञानं यण्कर्मकोच्चारणम् इष्टसाधनत्वप्रकारकप्रमाविषयः इत्याकारकं, तादृशज्ञानीयविशेष्यतावच्छेदकतावच्छेदकतावान् यणिति बोधः । न च "जरायाः" (पा० सू० ७।२।१०१) इत्यादिविकल्पस्थले स्थानपदार्थत्वानुपपत्तिः, विकल्पस्थले स्थानिनोऽपि साधुत्वेन जराकर्मकोच्चारणम् इष्टसाधनत्वप्रकारकभ्रमविषयः इ याकारकज्ञानस्याभावादिति वाच्यम्, स्थानपदस्य वृत्तिविशेष्यतावच्छेदकतावच्छेदकताकेष्टसाधनत्वप्रकारकप्रमाविषयत्वप्रकारकज्ञानीयविशेष्यतावच्छेदकतावच्छेदकतायाम् इष्टसाधनत्वप्रकारकभ्रमविषयत्वप्रकारकत्वे च खण्डशक्तिस्वीकारेण विकल्पस्थले चेष्टसाधनत्वप्रकारकभ्रमविषयत्वप्रकारकत्वरूपखण्डस्य मोषस्वीकारेण चादोषात् । अत एवानेन महामूर्खेण यणः स्थाने इक् प्रयुक्तः, शराणां स्थाने दर्भाः प्रस्तरिता इत्यादावपि स्थानपदार्थोपपत्तिरिति दिक् ।

**अन्ये तु**—अभाव एव स्थानपदार्थः । प्रतियोगितयाऽभावान्वयि प्रयोज्यत्वं षष्ठ्यर्थः । अभावस्य च लिङर्थेष्टसाधनत्वेऽन्वयः । तथा च "इको यणचि" (पा०सू० ६।१।७७) इत्यादौ इक्प्रयोज्यत्वाभाववदिष्टसाधनत्ववान् यणिति बोधः । विकल्पस्थले

एव, अर्थप्रत्यायनार्थं शब्दप्रयोगात्। "इको यण्" (अष्टा०सू० ६।१।७७) इत्यादेरच्परेकारघटितशब्दस्यार्थबोधनाय प्रसङ्गे तत्परयकारघटितः प्रयोक्तव्य इत्यर्थः। "एरुः" (अष्टा०सू० ३।४।८६) इत्यादेश्च (१)तेस्तु' इति; अतो न शब्दानित्यताहानिः। किञ्च इकारबुद्धिप्रसङ्गे यकारबुद्धिरित्यर्थः। अत एव "अचः परस्मिन्" (पा०सू० १।१।५७) इत्यादि सङ्गच्छते। स्पष्टञ्चेदं "दाधाघु" (पा०सू० १।१।२०) इति सूत्र-"स्थानिवत्"(पा०सू० १।१।५६) सूत्रयोर्भाष्ये।

---

स्थानपदार्थाभावस्य विकल्पपदार्थाभावेऽन्वयः। तथा च "जराया जरस्" (पा० सू० ७।२।१०१) इत्यादौ जराप्रयोज्यत्वाभावाभाववदिष्टसाधनत्ववान् जरसिति बोधः। तथा चाभावाभावस्य प्रतियोगिरूपत्वेन विकल्पस्थले स्थान्यपीष्टसाधनमादेशोऽपीति उभयोरपि साधुत्वं सिद्ध्यतीत्याहुः।

**वस्तुतस्तु** प्रसङ्गपदार्थो ज्ञानमेव। विशेष्यत्वं विशेष्यित्वं वा षष्ठ्यर्थः। प्रकाराकाङ्क्षायां च विधेयभूतं विधेयविशेषणभूतं वा साधुत्वं प्रत्यासन्नत्वात् ज्ञाने प्रकारित्वेनान्वीयते। ज्ञानं च सामान्यशास्त्रकरणकमेव। तथा च अजव्यवहितपूर्वेग्विशेष्यकसाधुत्वप्रकारके (सामान्यशास्त्रकरणके) ज्ञाने सति यण् साधुर्भवतीति वाक्यार्थः। एवं दर्भाणां स्थाने इत्यादावपि वाक्यार्थ ऊहनीयः। एवं च विशेषशास्त्रेण उत्तरकालं यण्विशेष्यकसाधुत्वप्रकारकबोधकजननात् पूर्वं सामान्यशास्त्रेण जातस्य ज्ञानस्य भ्रमत्वं कल्प्यते। "पूर्वाबाधेन नोत्पत्तिरुत्तरस्य हि सेत्स्यति" इति न्यायात्। ततश्च अजव्यवहितपूर्वस्येकः साधुत्वभ्रमविषयत्वे सिद्धे साधुशब्दः प्रयोक्तव्य इति विध्यविषयत्वात् अप्रयोक्तव्यत्वं सिध्यति। उत्तरकालजातस्य च ज्ञानस्य बाधकाभावात् प्रामाण्यमिति तद्विषयस्य यणः प्रयोक्तव्यत्वसिद्धिः। विकल्पस्थलेऽपि "सर्वं वाक्यं सावधारणम्" इति न्यायात् जराशब्द एव साधुरिति जराशब्दमात्रविशेष्यकपूर्वशास्त्रजन्यसाधुत्वज्ञाने उत्तरकालजातेन उभयविशेष्यकसाधुत्वज्ञानेन अप्रामाण्यं बोधयितुं शक्यते एवेति नानुपपत्तिः। सामान्यशास्त्रस्य तु अन्यत्र प्रामाण्यमस्त्येवेति न शास्त्रत्वव्याघातः। यणः स्थाने इक् प्रयुक्त इत्यस्य तु यणः प्रयोक्तव्यत्वज्ञाने मौर्ख्यात् इक् प्रयुक्त इत्यर्थः। देवदत्तस्य स्थाने यज्ञदत्तोऽध्यापयतीत्यादौ तु स्थानपदार्थः कालरूपो देशरूपो वा। गदाधरेणापि "प्रसक्तिरनुमितिरापत्तिर्वा" इति वदता प्रसङ्गस्य ज्ञानरूपत्वं स्पष्टीकृतम्। प्रकृते च योग्यतया शाब्दमेव ज्ञानं ग्रहीतुमुचितमिति दिक्। (१)तेस्तुरिति। भवतीत्यस्य स्थाने भवतु इत्यादेरप्युपलक्षणमिदम्। अन्यथा शब्दानित्यत्वं दुर्वारमेव स्यात्।

**स्थानेऽन्त** (पा०सू० १।१।५०) । षष्ठीत्यनुवृत्त्या यत्र स्थान-षष्ठी तत्रेदमुपतिष्ठते इति विध्येकवाक्यतयैवास्य नियामकत्वं न तु विहितानां नियमः, 'भुक्तवन्तम्' इतिन्यायविरोधात् । फलितमाह—**प्रसङ्गे** इति । (१)**सदृशतम** इति । अर्थात्प्राप्यमाणानां मध्ये एव । अत एव 'गङ्गोदकम्' इत्यादौ त्रिमात्रो न । तमप् किम् ? 'वाग्घरिः' इत्यादौ महाप्राणत्वसाम्येन जायमानः पूर्वसवर्णो वर्गद्वितीयो मा भूत्, किन्तु नादवान् महाप्राणश्चतुर्थो 'घ' एव यथा स्यादिति । स्थानेऽन्तरतमे इति सप्तम्यन्तपाठस्तु (२)दीर्घेषु यणसिद्ध्या दुष्ट इति भाष्ये स्पष्टम् । **यत्रानेक** इति । स्थानेग्रहणे एकदेशानुवृत्त्याऽनुवर्त्तमाने पुनः स्थानेग्रहणं तृतीयया विपरिणामेन वाक्यभेदमाश्रित्य प्रसङ्गे सति सम्भवे स्थानत एवान्तरतम इत्यर्थमिति भावः । **स्थानत** इति । स्थानेनेत्यर्थः । तत्र स्थानतः—"इको यणचि" (पा०सू० ६।१।७७) इति । अर्थतः—(३)"तृज्वत्क्रोष्टुः" (पा०सू० ७।१।९५) इति, इह क्रोष्टुशब्दस्थाने पक्तृशब्दो नादेशः । गुणतस्तु 'वाग्घरिः' इत्यादौ । प्रमाणतः—(४)"अदसोऽसेः" (पा०सू० ८।२।८०) इत्यादौ ।

**तस्मिन्निति** (पा०सू० १।१।६६) । अत्र 'तस्मिन्' इति उत्त-

---

(१)**सदृशतम इतीति** । तत्त्वञ्च स्ववृत्तित्व–स्वदलभिन्नदलीयवृत्तित्व–स्वदलभिन्नदलीयादेशत्वाभिमतेतरयावदवृत्तित्वैतत्त्रितयसम्बन्धेन स्थानिविशिष्टत्वम् । अत एव "इको यणचि" (पा०सू० ६।१।७७) इत्यनेन लृकारस्य वकारो न । (२) **दीर्घेषु यणसिद्ध्येति** । सप्तम्यन्तपाठे हि स्ववृत्तित्व–स्वदलभिन्नदलीयवृत्तित्व—स्वदलभिन्नदलीयस्थानित्वाभिमतेतरयावदवृत्तित्वैतत्त्रितयसम्बन्धेनाऽऽदेशविशिष्टत्वमन्तरतमत्वं स्यात् । तथा च प्रकृते द्विमात्रान्यूनकालिकत्वमेव तादृशं स्यादिति दीर्घे यण् न स्यादिति भावः । (३) **तृज्वत्क्रोष्टुरितीति** । वस्तुतस्तु तृज्वत्त्वविधायकात्रिसूत्र्याः प्रयो॰नियमार्थत्वेनार्थत इत्यस्योदाहरणमानुमानिकस्थान्यादेशकल्पे "इको यणचि" (पा०सू० ६।१।७७) इत्यादि बोद्धव्यम् । इह सुधी उपास्य इत्यस्य स्थाने मध्वरिरिति नादेशः । (४) **अदसोऽसेरितीति** । ह्रस्वव्यञ्जनयोश्चान्तरतम्यं सार्धमात्रान्यूनकालिकत्वमिति बोध्यम् ।

रत्र* 'तस्मात्' इति च सप्तम्यन्तपदपञ्चम्यन्तपदार्थकः स्वतन्त्रस्य सर्वनाम्नो निर्देशो व्याख्यानात्, बहुलक्ष्यसंस्कारानुरोधाच्च; न तु तत्तत्पदपरम्। अन्यथा "तस्मिन्नणि च" (पा०सू० ४।३।२) "तस्मान्नुडचि" (पा०सू० ६।३।७४) "तस्माच्छसो नः" (पा०सू० ६।१।१०३) इत्यत्रैव प्रवर्त्तेयाताम्। सप्तमी तु सप्तम्यन्तानामेव तच्छब्दार्थत्वमिति बोधनाय, तद्बोध्यार्थस्य निर्दिष्टे इत्यनेन सामानाधिकरण्याय च। इतिशब्दः पुनस्तस्य तदर्थपरत्वं बोधयति। निःशब्दो नैरन्तर्ये, दिशिरुच्चारणे। एवञ्च सप्तम्यन्तार्थेऽव्यवहितोच्चारिते उपश्लिष्टस्य (१)पूर्वस्य कार्यमिति वाच्योऽर्थः।

---

(१)**पूर्वस्य कार्यमिति**। न च सप्तम्यन्तार्थेऽव्यवहितोच्चारिते उपश्लिष्टस्य पूर्वस्य कार्यमिति वाक्यार्थबोधस्वीकारेऽव्यवहितोच्चारितसप्तम्यन्तार्थोपश्लिष्टमुद्दिश्य पूर्वत्वं विधीयते इति प्रत्याय्यते, तच्चानुपपन्नम्, अव्यवहितोच्चारितसप्तम्यन्तार्थोपश्लिष्टस्य केनाप्यसिद्धत्वादिति वाच्यम्। सप्तम्यन्तार्थे उपश्लिष्टस्य कार्यम् अव्यवहितोच्चारिते पूर्वस्य बोध्यमित्येवम् उद्देश्यविधेयभावकल्पनेनादोषात्। **परे तु**—"तस्मिन्निति" (पा० सू० १।१।६६) इत्यत्र तस्मिन् इत्यौपश्लेषिकाधिकरणबोधकसप्तम्यन्तानामनुकरणम्। तथा चौपश्लेषिकाधिकरणबोधकसप्तम्यन्तपदघटिते शास्त्रे निर्दिष्टे पूर्वस्येत्युपतिष्ठते, एवं "तस्मादिति" (पा० सू० १।१।६७) इत्यत्र तस्मात् इति दिग्योगलक्षणपञ्चम्यन्तानामनुकरणम्। तथा च दिग्योगलक्षणपञ्चम्यन्तपदघटिते शास्त्रे निर्दिष्टे परस्येत्युपतिष्ठते। निर्दिष्टे इत्युभयत्र सतिसप्तमी। अथ वा "तस्मिन्" (पा०सू० १।१।६६) इति परिभाषायाम् इतिपदमौपश्लेषिकाधिकरणबोधकसप्तम्यन्तार्थोपश्लिष्टसम्बन्धिकार्यपरम्। एवं "तस्मात्" (पा० सू० १।१।६७) इति परिभाषायामपि इतिपदं पञ्चम्यन्तार्थान्वयिसम्बन्धिकार्यपरम्। तस्मिन्निति तस्मादिति च निरुक्तार्थतात्पर्यग्राहके पदे। तथा चौपश्लेषिकाधिकरणबोधकसप्तम्यन्तार्थोपश्लिष्टं कार्यमव्यवहितपूर्वसम्बन्धि बोध्यम्। एवं दिग्योगलक्षणपञ्चम्यन्तार्थान्वयिसम्बन्धि कार्यमव्यवहितोत्तरसम्बन्धि बोद्धव्यमिति क्रमेण परिभाषयोर्वाक्यार्थबोधः। न च "इको यणचि" (पा०सू० ६।१।७७) इत्यत्र अचि इत्यौपश्लेषिकाधिकरणबोधिका सप्तमी, एवम् "उदः स्था" (पा०सू० ८।४।६१) इत्यादौ 'उदः' इति दिग्योगलक्षणा पञ्चमीत्यत्र नियामकाभावादेतत्परिभाषाद्वयीयोद्देश्यासिद्धिरिति वाच्यम्। एतदुद्देश्यान्यथानुपपत्त्या असति प्रमाणान्तरेऽस्मिन् शास्त्रे यानि सप्तम्यन्तानि तानि सर्वाण्यौपश्लेषिकाधिकरणबोधकानि, यानि च पञ्चम्यन्तानि तानि सर्वाणि दिग्योगलक्षणानीति कल्पनेनादोषात्।

---

* "तस्मादित्युत्तरस्य" (पा०सू० १।१।६७) इति सूत्रे।

एवञ्चैतत्परिभाषाद्वयोपस्थितौ सप्तम्यन्तपदस्य पञ्चम्यन्तपदस्य चार्थो लिङ्गम् । अत्र सूत्रे उपश्लिष्टपदाध्याहारेण निर्दिष्टे इति औपश्लेषिकेऽधिकरणे सप्तम्येवोचिता "उपपदविभक्तेः" (प० १०२) इति न्यायात्, न तु सतिसप्तमीति "तत्र च दीयते" (पा०सू० ५।१।९६) इति सूत्रे कैयटे स्पष्टम् । "स्नुक्रमोः" (पा०सू० ७।२।३६) इति सूत्रे च **कैयट** आह—"तस्मिन्निति परिभाषायां सत्यां सत्सप्तम्याश्रयणमशक्यम्" इति । उपश्लेषः समीपवृत्तित्वं, तच्च वर्णयोर्बौद्धं द्रष्टव्यम् । एवम् "इको यणचि" (पा०सू० ६।१।७७) इत्यादावपीयमेवेति "संहितायाम्" (पा०सू० ६।१।७२) इति सूत्रे भाष्ये । तत्रोपश्लेषः पूर्वस्येव परस्याव्यवहितस्येव व्यवहितस्य चेति पूर्वस्यैवेति नियमार्थमिदमव्यवहितस्यैवेति च । अत एव लक्ष्यानुसारात् क्वचित्सतीत्यध्याहारात् सत्सप्तम्याश्रयणे नास्याः प्रवृत्तिरिति "श्नान्नलोपः (पा०सू० ६।४।२३) इत्यत्र भाष्ये उक्तम् । अत एव "कर्तृकर्मणोः कृति" (पा०सू० २।३।६५) इत्यत्र नास्याः प्रवृत्तिः, कृति सति प्रत्यासत्त्या तत्प्रकृत्यर्थकर्तृकर्मणोः षष्ठीति तदर्थात् । "तस्मात्" (पा०सू० १।१।६७) इति सूत्रे निर्दिष्टे इति निर्दिष्टादित्यर्थकं विभक्तिविपरिणामात् । सा चोत्तरस्येति दिग्योगलक्षणा इति दिग्योगलक्षणपञ्चम्यामेव तत्प्रवृत्तिः । "उदः स्था" (पा०सू० ८।४।६१) इत्यादौ च 'उदः' इति दिग्योगलक्षणा पञ्चमी । तत्रानियतदिक्शब्दाध्याहारे प्रसक्ते परशब्दस्यैवाध्याहार इति "तस्मात्" (पा० सू० १।१।६७) इत्यनेन नियम्यते । अव्यवहितोच्चारितात्पञ्चम्यन्तात्परस्येति तदर्थः । तत्फलितमाह—**सप्तमीनिर्देशेन इत्यादि**। यदि तु अर्धमात्राधिककालेन वर्णान्तरेण वा व्यवधाने उपश्लेष एव नेत्युच्यते तदा निर्दिष्टपदं संहिताधिकारश्च विफल इति "संहितायाम्" (पा०सू० ६।१।७२) इति सूत्रे भाष्ये

---

एतन्मूलकमेव पठ्यते "तस्मिन्नितिपरिभाषायां जागरूकायां सतिसप्तम्याश्रयणमयुक्तम्" इति । एतन्मूलिकैवोपपदविभक्त्यर्थे कारकविभक्त्यर्थे च यत्र तात्पर्यं प्रसज्यते तत्र कारकविभक्त्यर्थ एव तात्पर्यं कल्पनीयमित्येतदर्थिका "व्याख्यानत" (प०१) इति परिभाषाशेषभूता "उपपदविभक्तेः कारकविभक्तिर्बलीयसी" (प०१०२) इति परिभाषा

स्पष्टम् । अवग्रहे च सम्प्रदाय एव शरणमिति आनङादिविषये आदेशोत्तरमेवावग्रहोऽन्यत्र ततः प्राक् । अकृतव्यूहपरिभाषा त्वनित्या, नास्त्येव वा । "न लक्षणेन पदकारा अनुवर्त्याः, पदकारैर्नाम लक्षणमनुवर्त्यम्" इति भाष्येण तदनुरोधेन शास्त्रासङ्कोचस्य शास्त्रकरणाभावस्य च स्पष्टमुक्तत्त्वाच्च । एतेन संहिताधिकारस्तद्बहिर्भूतनामर्धमात्राधिकक्कालव्यवाये प्रवृत्तिज्ञापनार्थम् । तेन 'अग्नाविष्णू' इत्यादाववग्रहे आनङादिसिद्धिरित्यपास्तम् , "प्रत्ययः" (पा०सू० ३।१।१) "परश्च" (पा०सू० ३।१।२) इत्यादौ तू(१)त्तरांशविकला "तस्मात्" (पा०सू० १।१।६७) इति परिभाषा प्रवर्त्तते । तेन न प्रत्यया व्यवहिताः । अत एव "छन्दसि परेऽपि" (२)"व्यवहिताश्च" इति सूत्रं सार्थकम् । आगमविधावपि "आने मुक्" (पा०सू० ७।२।८२) इत्यादौ "तस्मिन्" (पा०सू० १।१।६६) इति परिभाषया पूर्वसम्बन्धित्वनिर्णयः । अत एवात्र पूर्वस्येत्यादि न स्थानषष्ठी । तत्तद्विधिभिरेव सम्बन्धस्य निर्णीतत्वेन "षष्ठी स्थाने"(पा०सू०२।१।४९)इत्यस्याप्रवृत्तेः । "गाङ्कुटादिभ्यः"(पा०सू० १।२।१)इत्यादावपि षष्ठ्यंशविकलैतत्परिभाषाप्रवृत्तिर्बोध्या । परिभाषाणां नियमत्वन्तु यदि परिभाषासूत्रं न स्यात्तदा

"तत्र च दीयते" इति कैयटे पठ्यते इत्याहुः । (१)**उत्तरांशविकलेति** । तस्मिन्निति तस्मादिति परिभाषाद्वयविषये यावानंशः सिद्धो बाधितो वा भवेत्तमंशं विहायान्यांशोपस्थापकत्वस्वीकारादिति भावः । अत्रैव प्रमाणमाह–(२)"**व्यवहिताश्च**" (पा०सू० १।४।८२) इतिसूत्रं सार्थकमिति । अन्यथा "ते प्राग्धातोः" (पा०सू० १।४।८०) इत्यत्र प्राक्पदसत्त्वेनोत्तरत्वांशानुपस्थितौ सन्नियोगशिष्टन्यायेनेतरांशस्याप्यनुपस्थितौ व्यवहितप्रयोगः सिद्ध एवेति तद्वैयर्थ्यं स्पष्टमेव । तस्मिन्निति तस्मादिति परिभाषाद्वयस्याप्यव्यवहितत्वं विधेयान्वयिषष्ठ्यर्थः पूर्वत्वम् , अव्यवहितत्वमुत्तरत्वं विधेयान्वयिषष्ठ्यर्थश्चेति प्रत्येकमंशत्रयं विधेयम् । तत्र "शि तुक्" (पा०सू० ८।३।३१) "पदान्ताद्वा" (पा०सू० ६।१।७६) इत्यादौ तस्मिन्नितिपरिभाषया अंशत्रयोपस्थितिः । "इको यणचि" (पा०सू० ६।१।४०) इत्यादौ षष्ठ्यंशस्य सिद्धत्वेन तद्रहितांशद्वयोपस्थितिः । एवं तस्मादिति परिभाषया "ङमो ह्रस्वादचि" (पा०सू०८।३।३२) इत्यादावंशत्रयोपस्थितिः । "उदः स्था" (पा०सू०८।४।६१) इत्यादौ षष्ठ्यंशस्य सिद्धत्वादंशद्वयोपस्थितिः । प्रत्ययाधिकारे षष्ठ्यंशस्य बाधितत्वादुत्तरांशस्य सिद्धत्वात्केवलाव्यवहितांशोपस्थितिरिति दिक् ।

व्यवहितादावपि प्रवृत्तिः स्यादित्येतावतेति दिक् ।

**अलोऽन्त्यस्य** (पा०सू० १।१।५२) । षष्ठी स्थाने इत्यनुवर्त्तते; तदाह--**षष्ठी** इत्यादि । स्थाने विधीयमानः स्थानषष्ठीनिर्दिष्टान्त्यस्येत्यर्थः । स्थाने इत्यादि किम् ? इट् तृच ऋकारात्पूर्वो मा भूदिति । अन्त्यस्येति साहचर्यादल इति षष्ठ्यन्तम् , अन्त्यस्याल इत्यर्थः । अल इति किम् ? पदस्येति विधीयमानं "वसुस्रंसु" (पा०सू० ८।२।७२) इति दत्वं 'स्वनडुद्भ्याम्' इत्यादावन्त्यस्य पदस्य मा भूत् । स्थाने विधीयमान इति प्रत्यासत्तिलब्धम् । एवञ्चाल एवेति, अन्त्यस्यैवेति नियमद्वयमत्र । अल्समुदायबोधकपदोत्तरं स्थानषष्ठी अस्या लिङ्गम् । (१)अत एव "इतोऽत्" (पा०सू० ७।१।८६) इत्यादौ नास्याः प्रवृत्तिः । पथ्यादीनामित्यस्यावयवषष्ठीत्वात् , इत इत्यस्याल्समुदायोत्तरत्वाभावाच्च ।

**ङिच्च** (पा०सू० १।१।५३) । अनेकालर्थमिदम् ।

**आदेः** इति । आदेरल इत्यर्थः । तेन 'द्वीपम्' इत्यादौ पान्तसमुदायस्य न ईत्वम् । अत्र परस्येत्यावर्त्तते तेन परबोधकशब्देन यत्र परस्य स्थाने विधानं, तत्रैवेदम् । तेन "नित्यं ङितः" (पा०सू३।४।९९) इत्यादौ (२)न दोषः । तत्र विकरणव्यवधाने प्रवृत्तये धातोरित्यस्य विहितविशेषणत्वात् ।

**अनेकाल् शित्** (पा०सू० १।१।५५) । शित उदाहरणम् "इदम इश्" । ननु शकारोच्चारणसामर्थ्याद् (३)भूतपूर्वानेकाल्त्वमादाय सर्वादे-

---

(१)**अत एवेति** । अल्समुदायबोधकपदोत्तरं स्थानषष्ठी अस्या लिङ्गमिति स्वीकारादेवेति भावः ।

(२)**न दोष इति** । न च "नित्यं ङितः" (पा० सू० ३।४।९९) इत्यादौ विकरणव्यवधानेऽपि प्रवृत्तये धातोरिति विहितविशेषणमेवास्तु "स उत्तमस्य" (पा०सू० ३।४।९८) इति सकारे वैयधिकरण्येन विशेषणमस्त्विति नावृत्त्युपयोग इति वाच्यम्, "क्सस्याचि" (पा०सू० ७।३।७२) इत्यादावेतदप्रवृत्तये परस्येत्यस्यावृत्तेरावश्यकत्वात् । आवृत्त्या च परत्वावच्छिन्नोद्देश्यताश्रयस्य यत्कार्यं तद् आदेरल इत्यर्थः ।

(३)**भूतपूर्वानेकाल्त्वमिति** । अनुबन्धघटितबोधकवृत्तिधर्माणां बोध्ये आरोपस्वीकारात् , अनेकाल्वृत्तिधर्मावच्छिन्नविधेयताश्रयः सर्वस्य स्थाने भवतीत्यनेकाल्सूत्रार्थस्वीकाराद्वा, औरवृत्त्यनेकाल्त्वस्य स्थानिवद्भावेन 'औ' इत्यत्रानयनाद्वेत्यन्यत्र वि-

शत्वे सिद्धे शिदिति व्यर्थम्। किञ्च सानुबन्धकनिर्देशे यथा (१)नाल्स्थानित्वं "भोभगो" (पा०सू०८।३।१७) इति सूत्रे भाष्ये उक्तम्, तथ (२)ऽऽदेशत्वमपि (३)सूत्रोपात्तस्यैवेति तद्व्यर्थम्। (४)विधौ निर्दिष्टो योऽनेकाल्स सर्वस्येति सूत्रार्थः। (५)उद्देश्यत्वविधेयत्वाख्यविषयतया बोधविषयता तु अनुबन्धविनिर्मुक्तस्येति न "अणुदित्" (पा०सू ०१।१।६९ सूत्रभाष्यविरोधः। "श्वसोः"(पा०सू० ६।४।११९) इति लोपस्य"लोपो यि"(पा०सू० ६।४।११८) इति प्रकृते पुनर्लोपग्रहणसामर्थ्यात्सर्वादेशत्वसिद्धिः। अनुबन्धानामेकान्तत्वमेव न्याय्यमित्युक्तमिति चेत्? न, "नानुबन्धकृतमनेकाल्त्वम्"(प०५) इति ज्ञापनेन (६)चारितार्थ्यात्। तेन "दि

---

स्तरः। (१)**नालः स्थानित्वमिति**। अल इत्यस्याल्त्वव्याप्यधर्मस्येत्यर्थः। स्थानित्वमित्यस्य स्थानितावच्छेदकत्वमित्यर्थः। (२)**आदेशत्वमपीति**। आदेशतावच्छेदकत्वमित्यर्थः। (३)**सूत्रोपात्तस्यैवेतीति**। सूत्रोपात्तवृत्तिधर्मस्यैवेत्यर्थः। अन्यथाऽनुबन्धविनिर्मुक्तपदार्थोपस्थितिस्वीकारेणाऽऽदेशत्वं स्थानित्वं [च]अनुबन्धविनिर्मुक्तस्यैवेति यथाश्रुतशेखरोऽसङ्गतः स्यात्। **अन्ये तु** बोधकावयवेष्वनुबन्धेषु बोध्यावयवत्वमिति स्वीकारेण सानुबन्धकादेशस्थले स्थानित्वादेशत्वयोर्व्यासज्यवृत्तित्वेन नाल्स्थानित्वमित्यस्य नाल्पर्याप्तं स्थानित्वमित्यर्थः। आदेशत्वं सूत्रोपात्तस्यैवेत्यस्य आदेशतापर्याप्तिः सूत्रोपात्तानुबन्ध, तद्बोध्याऽऽदेश, एतदुभये इत्याहुः। (४)**विधौ निर्दिष्टो योऽनेकालिति**। विधावित्यस्य विधिशास्त्रे इत्यर्थः। निर्दिष्टोऽनेकालित्यस्य निर्दिष्टवृत्तिरनेकाल्वृत्तिर्यो धर्मस्तद्धर्मावच्छिन्नविधेयताश्रय इत्यर्थः। (५)**उद्देश्यत्वविधेयत्वाख्यविषयतयेति**। धान्येन धनवानितिवदभेदस्तृतीयार्थः। तस्य च बोधविषयतायामन्वयः। अन्यथा शाब्दबोधे उद्देश्यताविधेयतानिरूपकत्वयोरसत्त्वेऽपि उद्देश्यताविधेयताविषयकत्वे मानाभावाद्यथाश्रुतमसङ्गतं स्यात्, उद्देश्यत्वविधेयत्वयोः पदार्थत्वेन शाब्दबोधासम्भवात्, पदजन्यपदार्थोपस्थित्यभावे शाब्दबोधानङ्गीकाराच्चेति दिक्। **परे तु**—यथा ज्ञानमात्रे मितिमातृभासकत्वं मितिमातृविषयकसंशयस्य कदाप्यनुदयात् स्वीक्रियते, तथा विषयताविषयकस्य संशयस्य कदाप्यनुदयाद् विषयताविषयकत्वमपि ज्ञानमात्रे स्वीक्रियते। तथा च उद्देश्यत्वविधेयत्वाख्यविषयतेत्यत्र तृतीयार्थो विषयत्वम्, तस्य निरूपितत्वसम्बन्धेन शाब्दबोधेऽन्वयः। प्रकृत्यर्थस्य च निष्ठत्वसम्बन्धेन तृतीयार्थविषयतायामन्वयः। तथा च उद्देश्यत्वविधेयत्वाख्यविषयतानिष्ठविषयतानिरूपकबोधीयविषयताऽनुबन्धविनिर्मुक्तपदार्थे एवेति यथाश्रुतमेव सङ्गतमित्याहुः। (६)**चारितार्थ्यादिति**। अनुबन्धघटितबोधकवृत्तयो ये अ

औत्" (पा०सू०७।१।८४) इत्यादीनां न सर्वादेशत्वम् । अस्य च यथेत्सञ्ज्ञा तथा वक्ष्यते । "नानेकाल् शित्" इति तु नोक्तम्, "अनन्तरस्य" इतिन्यायेन "आदेः परस्य" (पा०सू० १।१।५४) इत्यस्यैव निषेधापत्तेः । **परत्वात्** इति । "आदेः परस्य" इत्यस्यावकाशः "द्व्यन्तरुपसर्गेभ्यः" (पा०सू० ७।१।९), द्वीपम् । शित्सर्वस्य "इदम इश्" (पा०सू० ५।३।३) । एवम् "अतो भिसः" (पा०सू० ७।१।९) इत्यादिविषये "अनेकाल्" (पा०सू० १।१।५५) इत्यनेन "आदेः परस्य" (पा०सू० १।१।५३) इति परत्वाद् बाध्यते । एतेन "ङिच्च" (पा०सू० १।१।५४) इत्यत्र ङिदेवानेकालन्त्यस्येति नियमेन सिद्धेऽनेकाल्ग्रहणं व्यर्थम्" इत्यपास्तम् ।

**स्वरितेन** (पा०सू० १।३।११) । इत्थंभूतलक्षणे (१)तृतीया । (२)स्वरितत्वज्ञाप्योऽधिकारो विनियोग इत्यर्थः । स्वरितत्वञ्चेदं दोषविशेषरूपमज्झल्साधारणं स्वरूपमधिक्रियमाणपदघटका(३)जिनष्ठं वा । तच्चानुनासिक्यवत्प्रतिज्ञागम्यम् । विनियोगश्च प्रायेणोत्तरत्रोपस्थितिः, क्वचित्पूर्वत्रापि । कियद् दूरमधिकार इत्यत्रासति गमके व्याख्यानमेव शरणम् । किं च स्वरितेनाधिकारगतिः । तेन "गोस्त्रियोः" (पा०सू० १।२।४८) इत्यादौ स्त्र्यधिकारस्थप्रत्ययग्रहणमित्याद्याकरादवसेयम् । एतेन "व्याख्यानादेव निवृत्तिवदनुवृत्तिरपि भविष्यति आकाङ्क्षायान्तु सत्यामश्रुतकल्पनाया अन्याय्यत्वाच्छ्रुतापेक्षणस्य न्याय्यत्वाच्च किं सूत्रेण" इत्यपास्तम् । स्पष्टं चेदं भाष्ये । **परनित्य** इति (५०) परं विप्रतिषेधसूत्राद् बलवत् । नित्यं कृताकृतप्रसङ्गि, तद्विपरीतमनित्यम् । तत्राक्लृप्ताभावकल्पनापेक्षया क्लृप्ताभावकस्यैव तत्कल्पनं युक्तमिति तस्य बलवत्त्वे बीजम् । अन्तर्मध्ये (४)बहिरङ्गशास्त्रीयनिमित्तसमुदायमध्येऽन्तर्भूतान्यङ्गानि निमित्तानि यस्य त-

---

नुबन्धत्वघटितातिरिक्ता आनुपूर्व्यतिरिक्ताश्च धर्मास्तन्निमित्तके विधौ कर्तव्ये अनुबन्धानामविद्यमानवत्त्वमिति कल्पनेन चारितार्थ्यादिति भावः ।

(१)**तृतीयेति** । वैशिष्ट्यं तृतीयार्थः । तथा च स्वरितत्वविशिष्टमधिक्रियते इति सूत्रार्थः । तत्फलितमाह—(२)**स्वरितत्वज्ञाप्य इति** । स्वरितत्वं स्वरविशेष इति पक्षेऽप्याह—(३)**अजिनष्ठं वेति** । (४)**बहिरङ्गशास्त्रीयेति** । अत्र बहिरङ्ग-

दन्तरङ्गम्। तदीयनिमित्तसमुदायाद्बहिर्भूताङ्गकं बहिरङ्गम्। तस्य बलवत्त्वे बीजमाह—**असिद्धम्** इति। इयञ्च "वाह ऊठ्" (पा०सू०६।४।१३२) इति (१)सूत्रेण ज्ञापिता। यद्यपि "प्रत्यङ्गवर्त्ती लोको दृश्यते, मनुष्योऽयं प्रातरुत्थाय प्रथमं शरीरकार्याणि करोति ततः सुहृदां ततः सम्बन्धिनाम्" इतिन्यायमूलकत्वमस्या "अचः परस्मिन्" (पा०सू० १।१।५७) इति भाष्ये उक्तं, तथापि तेन न्यायेन युगपदप्राप्तिविषयतैव स्यात्; ज्ञापकेन तु सर्व-विषयता बोद्धयत इति "वाह ऊठ्" (पा०सू० ६।४।१३२) इति सूत्रे **कैयटे** स्पष्टम्। अन्यथा वाहः सम्प्रसारणे पूर्वरूपे च कृते ण्याश्रये गुणे

---

त्वमुपलक्षणं; न विशेषणम्। एवमुत्तरत्रान्तरङ्गत्वमप्युपलक्षणम्; अतो नान्योन्याश्रय इति भावः। (१)**सूत्रेण ज्ञापितेति**। न च "ऊडिदम्" (पा०सू० ६।१।१७१) इत्यादिना 'विश्वौहः' इत्यादौ स्वरार्थमूठ्ग्रहणमावश्यकमिति वाच्यम्। 'वाहश्छित्' 'वाहष्ठ्' इति वा न्यासेन स्वरविधायके च 'ठिदिदम्' इत्युक्त्या स्वरसिद्धेरूठ्ग्रहणस्य वैय-र्थ्येन ज्ञापकत्वात्। **यत्तु** ह्रस्वे एव उठि विधातव्ये दीर्घोठ्ग्रहणं ज्ञापकम्। स्वरविधा-यकेऽपि ह्रस्व एव पाठ्यः। "ज्वरत्वर" (पा०सू० ६।४।२०) इत्यत्र स्थानिद्वयेनाऽऽ-देशद्वयकल्पनात् 'जूरः' इत्यादौ न दोषः। "एत्येधत्यूठ्सु" (पा०सू० ६।१।८९) इत्यत्र ह्रस्व एव पठ्यते इति जनानवतीति 'जनौः' इत्यादौ न दोषः। एवं "च्छ्वोः" (पा०सू० ६।४।१९) इत्यादिना ह्रस्व एव विधीयते इति मव्यधातोः क्विपि 'मौः' इ-त्यादौ न दोष इति, तन्न, "च्छ्वोः" (पा०सू० ६।४।१९) इत्यादिना ह्रस्वे उठि विहिते 'अक्षद्यूः' इत्यादौ दीर्घश्रवणानापत्तेः। तद्भावितपक्षस्यैव सिद्धान्तसिद्धत्वे "हलः" (पा०सू०६।४।२) इति दीर्घाप्राप्तेः। अतद्भावितपक्षस्वीकारे तु 'अक्षद्यूवरुणः' इत्यादौ पूर्वरूपादिकं दुर्वारमेव। वार्त्तिकाद्यारम्भेण परिहारकरणे तु गौरवम्। आद्यु-र्वकादवधातोर्णिचि क्विपि णिलोपे च वकारोपधयोरादेशद्वये आ–उ–उ इति स्थिते "वार्णादाङ्गं बलीयः" इति न्यायेन पूर्वं वृद्धौ 'आवौः' इत्यापत्तेश्चेत्यन्यत्र विस्तरः। **केचित्तु** "ऊडिदम्" (पा०सू० ६।१।१७१) इति सूत्रे अन्वादेशे स्वरवारणाय अन्तो-दात्तादित्यनुवृत्तेः भाष्यादौ स्पष्टत्वात् पूर्वरूपे कृते जातस्य "एकादेश उदात्तेनोदात्तः" (पा०सू० ८।२।५) इति स्वरस्य त्रैपादिकत्वेनासिद्धत्वात् अन्तोदात्तोठोऽभावेनात्र स्व-राप्रवृत्तिरेवेति ज्ञापकं सुस्थमेवेत्याहुः; तन्न, "एकादेश उदात्तेन" (पा०सू० ८।२।५) इत्यस्य सिद्धकाण्डे भाष्ये पाठेन असिद्धत्वाभावात् स्वरप्रवृत्तेर्दुर्वारत्वात्। अत एव 'वृक्षावत्र' इत्यादौ आवादीनामुदात्तत्वासिद्धिः 'वोऽश्वाः' इत्यादौ तद्विषये शेषनिघात-सिद्धिश्चेति "एकादेश उदात्तेन" (पा०सू० ८।२।५) इति सूत्रे शेखरे स्पष्टम्।

"वृद्धिरेचि" (पा०सू० ६।१।८८) इति वृद्धौ "प्रष्ठौहः" इत्यादिसिद्धावूठ्-विधानं व्यर्थं स्यात् । नाजानन्तर्यपरिभाषा तु नास्त्येवेति न 'अयजे इन्द्रम्' इत्यादौ दोष इति परिभाषेन्दुशेखरे विस्तरः । अपवादस्तु वचनप्रामाण्याद् बलवान् । **अकृत**(५०) इति । न कृतो विशिष्ट ऊहस्तर्को (१)निमित्त-विनाशेऽपि कार्यस्थितिरूपः, यथा दण्डविनाशेऽपि घटस्थितिः, स यैस्ते इत्यर्थः, तदाह—**निमित्तम्** इत्यादि । तत्प्रयुक्तं कार्यं जातमपि न कुर्वन्ति—नोच्चारयन्तीत्यर्थः; इति **कैयटादयः । अन्ये** तु व्यूहोऽन्तरङ्गशास्त्रं बहिरङ्गापोहनरूपत्वात् । तत् निमित्तविनाशं दृष्ट्वा पूर्वमपि न कुर्वन्तीत्यर्थ इत्याहुः । इयं परिभाषा (२)निष्फला निर्मूलेति परिभाषेन्दुशेखरे निरूपितम् ।

## इति परिभाषाप्रकरणम् ।

---

**स्यात्** इति । कार्यशब्दवादे इदम् । **संहितायां विषये** इति । इदं कार्यिनिमित्तयोः संहितायां विषयभूतायामित्यर्थः । **स्थानत** इति । इदं "यथासंख्य" (पा०सू० १।३।१०) सूत्रे भाष्ये स्पष्टम् । जातिपक्षे यथासंख्येनापि निर्वाह इति "स्थानेऽन्तरतम" (पा०सू० १।१।५०) सूत्रे भाष्ये स्पष्टम् । अनुनासिकस्थानेऽपि निरनुनासिक एव, विधीयमानत्वेन सवर्णाग्राहकत्वात् । गुणाभेदकत्वपक्षोऽपि न विधेयाण्विषये । दीर्घादीना-मिगादिपदैरुपस्थितये प्रत्याहारेषु जातिपक्ष एवेति "अणुदित्" (पा०सू०

---

न चैवमपि सम्प्रसारणस्यासिद्धत्वेऽपि पूर्वरूपस्य तत्त्वाभावान्न स्वांशे चारिता-र्थ्यमिति वाच्यम् , "हलः" (पा०सू० ६।४।२) इति ज्ञापकेन सम्प्रसारणस्थानिक-कार्ये सम्प्रसारणत्वातिदेशेन सम्प्रसारणस्थानिकपूर्वरूपस्याप्यसिद्धत्वादिति दिक् । (१)**निमित्तविनाशेऽपीति** । निमित्तविशिष्टविनाशे इत्यर्थः । वै० च स्वप्रतियो-गिकत्वं, स्वस्थानिकादेशप्रतियोगिकत्वमेतदन्यतरसम्बन्धेन । अत एव "समर्थानाम्" (पा०सू० ४।१।८२) इति सूत्रे समर्थग्रहणं स्वांशे चरितार्थमिति परिभाषेन्दुशेखरे मूले एव स्पष्टमिति दिक् । (२)**निष्फलेति** । वस्तुतस्तु 'वैभाजित्रम्' 'घटसेदुषोः' इत्याद्यर्थं साऽत्यन्तमावश्यकीति परिभाषेन्दुचन्द्रिकायां विस्तरः ।

*** इति परिभाषाप्रकरणम् ***

---

१।१।६९) सूत्रे भाष्ये स्पष्टम्। अत एव सर्वतकारादीनां झल्त्वादिसिद्धिः। "ल्वादयः" (पा०सू ८।२।४४) इत्यादिनिर्देशादयश्च जात्याश्रयणे मानमिति दिक्। व्याकरणस्य साध्वनुशासनत्वन्तु शब्दनित्यतापक्षे शब्दानां सिद्धत्वेन शास्त्रवैयर्थ्यापत्त्या मृजिप्रसङ्गे मार्जिः साधुर्भवतीत्यादिवृद्धिसञ्ज्ञासूत्रस्थभाष्यप्रामाण्येन यदिह परिनिष्ठितत्वेन ज्ञाप्यं तत्साध्वित्यर्थापत्तिकल्प्यवाक्येन बोद्धव्यम्। कार्यशब्दवादे तु पूर्वभाष्योन्नीता—(१)नादितात्पर्यवशात्तत्कल्पनं बोद्धव्यम्। एतेन स्थानप्रमाणोभयान्तरतमे ह्रस्वेकारे चीतार्थो यण् दीर्घे कथं स्यादित्यपास्तम्। (२)स्थानत आन्तर्यस्य सर्वतो बलवत्त्वात्, "स्थानेऽन्तरतमे" इति सप्तम्यन्तपाठस्य चैतद्दूषणेनैव भाष्ये दूषितत्वादिति भावः।

चो विध्यर्थः। ध्वनितञ्चेदम् "एओङ्" (मा०सू० ३) सूत्रे भाष्ये, तदाह—**द्वे वा स्तः** इति। सूत्रकृता शाकल्यमते सर्वत्र द्वित्वाभावोक्तेरिति भावः। अवसाने द्वित्वसिद्धयेऽनचीति प्रसज्यप्रतिषेधः, तदाह—**न त्वचि** इति। इदं द्वित्वं षाष्ठद्वित्ववद् द्विःप्रयोग एव। 'यरः' इत्यादेरध्याहृतोच्चारणक्रियानिरूपित—(३)कर्मषष्ठीत्वस्यौचित्यात्। **इति धकारस्य** इति। न तु द्वित्वे पूर्वधस्थाने जश्त्वनिष्पन्नदस्यापि "लक्ष्ये लक्षणम्" इति न्यायात् विकारान्यत्वेन (४)न लक्ष्यभेद इत्यन्यत्र प्रपञ्चितम्।

---

(१)**अनादितात्पर्यवशादिति**। वस्तुतस्तु कार्यशब्दवादेऽपि शास्त्रस्य शब्दोत्पादकत्वासम्भवात्ताल्वादेरेव शब्दोत्पादकत्वेन साधूनामसाधूनाञ्च शब्दानां सिद्धतया शास्त्रस्य साधुत्वपर्यन्तं तात्पर्यकल्पनेन नित्यशब्दवाद इव मृजिप्रसङ्गे मार्जिः साधुर्भवति इत्यवश्यं वक्तव्यम्। (२)**स्थानत आन्तर्यस्येति**। स्थानघटितधर्मेण सादृश्यस्य सर्वतो बलवत्त्वादित्यर्थः। सादृश्यमतिरिक्तः पदार्थ इति मञ्जूषायां स्पष्टम्।

(३)**कर्मषष्ठीत्वस्यौचित्यादिति**। "उपपदविभक्तेः" (प० १०२) इति न्यायादिति भावः। (४)**न लक्ष्यभेद इति**। स्वीयप्राथमिकप्रवृत्तौ उपयोगित्वेनाऽऽश्रीयमाणो यावान्शब्दसमुदायः तदघटको यस्तद्घटकमात्रोद्देश्यकविकारागमातिरिक्तस्तदघटितत्वे सति स्वीयप्राथमिकप्रवृत्त्युत्तरकालिकप्राप्तिभिन्नप्राप्तिविषयाघटितत्वं तल्लक्ष्यत्वमिति स्वीकारादिति भावः। प्रकृते च जश्त्वनिष्पन्नदकारस्य निरुक्तसमुदाया-

(१)स्थान्यादेशयोर्भेदात् (२)"स्वं रूपम्" (पा०सू० १।१।६८) इत्युक्तेश्च "तत्स्थानापन्नस्तद्धर्मं लभते, यथा गुरोः स्थाने शिष्यो याज्यकुलानि गत्वाऽग्रासनादीनि लभते" इति लोकन्यायेन स्थानिकार्यमादेशे न स्यादतः स्थानिवत्सूत्रम् । **न तु स्थाऽन्यल** इति (३)प्रत्यासत्तिन्यायलब्धमिदम् ।

(४)आदेशस्य स्थानिभूतो योऽल्; (५)तत्स्थानिसम्बन्धी च योऽल्;

---

घटकत्वेऽपि निरुक्तसमुदायघटकमात्रोद्देश्यकविकारभिन्नत्वस्याभावात्तल्लक्ष्यत्वमेवेति दिक् ।

**(१)स्थान्यादेशयोर्भेदादिति ।** लौकिकस्थान्यादेशापेक्षया शास्त्रीयस्थान्यादेशयोर्वैलक्षण्यादित्यर्थः । तथाहि—यदर्थं यो यस्य स्थाने नियुज्यते स तत्कार्यमेव करोति यथा याजनार्थं गुरोः स्थाने नियुक्तः शिष्यो याजनं करोति तथाऽर्थबोधनाय शब्दप्रयोगात् स्थानिना योऽर्थो बोध्यते तत्स्थाने प्रयुक्त आदेशस्तदर्थमेव बोधयेत्; नान्यत्कार्यमिति स्थानिवत्सूत्रम् । **(२)स्वं रूपमित्युक्तेश्चेति ।** अयं भावः—यथा गुरोः स्थाने शिष्यो याज्यकुलानि गत्वा अग्रासनादीन्येव लभते न तु स्वरूपाश्रितोच्छिष्टभोजनसंवहनादि, एवं प्रकृतेऽपि 'अवधिष्ट' इत्यादौ स्वरूपाश्रितमात्मनेपदं न स्यादिति भावः । **(३)प्रत्यासत्तिन्यायलब्धमिति ।** न च "स्थानिवदादेशोऽनल्विधौ" (पा०सू० १।१।५६) इत्यत्र स्थानिपदापेक्षयाऽऽदेशपदस्यैव प्रत्यासन्नतरत्वेनेदमसङ्गतमिति वाच्यम्, "अग्निहोत्रं जुहोति, यवागूं पचति" इत्यत्रेव पाठक्रमादार्थक्रमस्य बलीयस्त्वेन आर्थक्रमे च स्थानिपदार्थस्यैव सन्निहितत्वात् ।

**(४)आदेशस्य स्थानिभूतो योऽलिति ।** स्यादेतत्, 'रामाय' इत्यादौ स्थानिभूतो योऽल् एकारः तद्वृत्ति यत्सुप्त्वं तन्निमित्तकत्वेन दीर्घे कर्तव्ये "अनल्विधौ" इति निषेधः स्यादिति चेन्मैवम् । स्थानिशब्दस्य संबन्धिशब्दत्वेनाऽऽक्षेपादादेशलाभे सिद्धे आदेशपदोपादानं स्थानितायामल्त्वव्याप्यधर्मावच्छिन्नत्वलाभार्थमित्यदोषात् । तथा च अल्त्वव्याप्यधर्मावच्छिन्नस्थानितासमानाधिकरणधर्मनिमित्तके कार्ये कर्तव्ये न स्थानिवदित्यर्थः पर्यवस्यति । "ङेर्यः" (पा०सू० ७।१।१३) इत्यादौ स्थानितावच्छेदकं ङेत्वं, तच्च नाल्त्वव्याप्यमिति 'रामाय' इत्यादौ न दोषः । नन्वेवमपि वाक्यसंस्कारपक्षे 'राम ए अत्र' इत्यत्र अल्त्वव्याप्यो धर्म एत्वं तदवच्छिन्नस्थानितासमानाधिकरणो धर्मः सुप्त्वं तन्निमित्तको विधिर्यादेश इति पुनः "अनल्विधौ" इति निषेध इति चेन्न । अल्त्वव्याप्यधर्मावच्छिन्नस्थानितानिरूपितादेशताश्रयधर्मिकारोपप्रकारीभूतधर्मनिमित्तके स्थानिवन्नेत्यर्थेन एत्वावच्छिन्नस्थानितानिरूपितादेशताश्रयत्वस्य यादेशेऽभावेनादोषात् । नन्वेवं "हल्ङ्याब्" (पा०सू० ६।१।६८) इतिसूत्रविरोधः, "ङ्याब्ग्रहणेऽदीर्घः" इति वार्तिकविरोधः, हल्ङ्यादिसूत्रीयदीर्घग्रहणप्रत्याख्यानपरभाष्यवि-

रोधः, "कृन्मेजन्तः" (पा०सू० १।१।३९) इति सूत्रस्थभाष्यविरोधः, "ग्रहोऽलिटि" (पा०सू० ७।२।३७) सूत्रस्थभाष्यविरोधश्च । तथा हि—'अतिखट्वः' 'निष्कौशाम्बिः' इत्यादौ "गोस्त्रियोः" (पा०सू० १।२।४८) इति सूत्रे "अचः" (पा० सू० ६।४।१३८) इतिपरिभाषोपस्थित्या अल्त्वव्याप्याच्त्वावच्छिन्नस्थानितानिरूपितादेशताश्रयधर्मिको यः आरोपः ह्रस्वः आप्त्ववान् ङीत्त्ववानित्याकारकस्तत्प्रकारीभूताऽऽप्त्वङीत्त्वनिमित्तकत्वेन हल्ङ्यादिलोपस्य तत्र कर्त्तव्ये स्थानिवत्त्वनिषेधस्य सिद्धत्वाद्दीर्घग्रहणस्य "ङ्याब्ग्रहणेऽदीर्घः" इति वार्तिकस्य ङी ई आ आविति प्रश्लेषस्य चोपयोगाभावात् । एवम् 'आधये' 'चिकीर्षवे' 'कुम्भकारेभ्यः' 'नगरकारेभ्यः' इत्यादौ "घेर्ङिति" (पा०सू० ७।३।१११) "बहुवचने झल्येत्" (पा०सू० ७।३।१०३) इत्यत्र "अलोऽन्त्यस्य" (पा०सू० १।१।५२) इत्यस्योपस्थित्या स्वस्यापि स्वव्याप्यत्वमिति स्वीकारादल्त्वव्याप्याल्त्वावच्छिन्नस्थानितानिरूपिताऽऽदेशताश्रयगुणैकारधर्मिकारोपप्रकारीभूतकृत्त्वानिमित्तकत्वेन अव्ययसंज्ञाया अनल्विधाविति निषेधात् "अनिकारोकारप्रकृतिरिति वा" (का०वा०) इति वार्तिकस्य सन्निपातपरिभाषया तत्प्रत्याख्यानस्य चासङ्गत्यापत्तिः। एवम् 'अग्रहीत्' इत्यादौ "ग्रहोऽलिटि" (पा०सू० ७।२।३७) इत्यत्र "अचः" (पा० सू० ६।४।१३८) इतिपरिभाषोपस्थित्याऽल्त्वव्याप्याच्त्वावच्छिन्नस्थानितानिरूपितादेशताश्रयदीर्घधर्मिकारोपप्रकारीभूतेट्त्वनिमित्तकत्वेन "इट ईटि" (पा०सू० ८।२।२८) इति सलोपे कर्तव्ये स्थानिवत्त्वाप्रवृत्त्या स्थानिवद्भावेन तत्र लोपकथनस्यासङ्गत्यापत्तिरितिचेन्मैवम् । अल्त्वव्याप्यधर्मावच्छिन्नस्थानितानिरूपिताऽऽदेशताश्रयधर्मिकारोपप्रकारीभूतधर्मेण साक्षादवच्छिन्ना योद्देश्यता तदुद्देश्यताके कार्ये कर्तव्ये स्थानिवत्त्वं स्यदर्थेन हल्ङ्यादिलोपे आप्त्वङीत्त्वयोः, अव्ययसंज्ञायां कृत्त्वस्य, सलोपे इट्त्वस्य चोद्देश्यतायाः साक्षादवच्छेदकत्वेन तेषाञ्चाल्त्वव्याप्यत्वाभावेनादोषात् ।

न चैवं स्थानितायामल्त्वव्याप्यधर्मावच्छिन्नेति निवेशोऽनुपयुक्तः । 'रामाय' इत्यादौ एकाररूपाल्निष्ठस्थानितानिरूपिताऽऽदेशताश्रयधर्मिकारोपप्रकारीभूतसुप्त्वेन "सुपि च" (पा०सू० ७।३।१०२) इति दीर्घीयोद्देश्यतायाः साक्षादनवच्छिन्नत्वादिति वाच्यम् । 'रमायाः' इत्यादौ याडर्थं तन्निवेशस्यावश्यकत्वात् । तथाहि—इकाररूपाल्निष्ठस्थानितानिरूपिताऽऽदेशताश्रयधर्मिकारोपप्रकारीभूतङिद्वचनत्वेन "याडापः" (पा०सू० ७।३।११३) इतिशास्त्रीयोद्देश्यतायाः साक्षादवच्छिन्नत्वात् । न चैवमपि 'दाम्नी' इत्यादौ द्विवचनत्वातिदेशो न स्यात्, "औङ आपः" (पा०सू० ७।१।१८) इत्यत्र औङित्यस्यौकारविभक्तेः संज्ञात्वेन अल्त्वव्याप्यो य औत्वरूपो धर्मस्तद्धर्मावच्छिन्ना या औकारनिष्ठा स्थानिता तादृशस्थानितानिरूपिता या ईकारनिष्ठाऽऽदेशता तादृशादेशताश्रयधर्मिको य आरोप ईकारः द्विवचनत्ववान् इत्याकारकस्तादृशारोपप्रकारीभूतो यो द्विवचनत्वरूपो धर्मस्तद्धर्मेण साक्षादवच्छिन्ना या "ईदूदेद् द्विवचनम्" (पा०सू० १।१।११) इति शास्त्रीयोद्देश्यता तदुद्देश्यताके विधौ स्थानिवत्त्वस्य

निषिद्धत्वादिति वाच्यम्, अल्त्वव्याप्यधर्मेण साक्षादवच्छिन्ना या स्थानिता तादृश-स्थानितानिरूपितादेशताश्रयधर्मिकारोपप्रकारीभूतधर्मेण साक्षादवच्छिन्ना योद्देश्यता तदुद्देश्यताके विधौ न स्थानिवत् इति "अनल्विधौ" इत्यस्यार्थेन "औङ आपः" (पा० सू० ७।१।१८) इत्यत्र "तस्मात्" (पा०सू० १।१।६७) इति परिभाषोपस्थाप्यं विशेष्यम्, 'औङः' इति विशेषणमिति स्वीकारेण अल्त्वव्याप्यौत्वधर्मेण "औङ आपः" (पा०सू० ७।१।१८) इतिशास्त्रीयस्थानितायाः साक्षादनवच्छिन्नत्वेनादोषात्।

**परे तु**–अल्पर्याप्तस्थानितानिरूपिताऽऽदेशताश्रयधर्मिकारोपप्रकारीभूतधर्मेण साक्षादवच्छिन्ना या उद्देश्यता तदुद्देश्यताके विधौ स्थानिवन्नेत्येवार्थः स्वीक्रियते। न चैवं 'रमायाम्' 'सर्वस्याम्' इत्यादौ याट्स्याटौ न स्याताम्, अनुबन्धविनिर्मुक्तपदार्थोपस्थितिरिति सिद्धान्तेन स्थानिताया अल्पर्याप्तत्वादिति वाच्यम्। बोधकावयवेषु अनुबन्धेषु बोध्यावयवत्वमारोप्यते इति "एकान्ता अनुबन्धाः" इत्यस्य तात्पर्येण प्रकृते च ङकारैकारोभयपर्याप्तत्वेन स्थानिताया अल्पर्याप्तत्वाभावात्। न चैवं 'साम्नी' 'लोम्नी' इत्यादौ दोषो दुरुद्धरः स्थानिताया अल्पर्याप्तत्वादिति वाच्यम्। संज्ञाविधावित्यस्यानित्यत्वेन "ईदूदेद्" (पा०सू० १।१।११) इत्यस्य ईदूदेदन्तं यद् द्विवचनं तदन्तं यत्तदादि तत् प्रगृह्यमित्यर्थेन 'साम्नी' इत्यादौ स्थानिताया अल्पर्याप्तत्वेऽपि तादृश-स्थानितानिरूपिताऽऽदेशताश्रयधर्मिकाऽऽरोपप्रकारीभूतद्विवचनत्वस्य प्रगृह्यसंज्ञीयोद्देश्यतायाः साक्षादनवच्छेदकत्वात्। एवं च स्थानितायामल्त्वव्याप्यधर्मावच्छिन्नत्वनिवेशो विफल एवेत्याहुः।

**(५)तत्स्थानिसम्बन्धी च योऽलिति।** स्थानिसम्बन्ध्यल्वृत्तिधर्मनिमित्तके कार्ये स्थानिवत्त्वं नेति यावत्। न च 'रामाय' इत्यादौ "सुपि च" (पा०सू० ७।३।१०२) इति दीर्घानापत्तिः। स्थानी एकारस्तत्सम्बन्धी योऽल् व्यपदेशिवद्भावेन स एव तद्वृत्तिर्यो धर्मः सुप्त्वं तन्निमित्तकत्वाद्दीर्घे कर्तव्ये स्थानिवत्त्वनिषेधादिति वाच्यम्। अल्वृत्तिधर्मे अल्त्वव्याप्यत्वस्य विशेषणेनादोषात्। न चैवमपि 'प्रपठ्य' इत्यादौ वलादित्वस्यातिदेशापत्तिः। वल्त्वे स्थानिसम्बन्ध्यल्वृत्तित्वस्याल्त्वव्याप्यत्वस्य च सत्त्वेऽपि इटो वलादित्वनिमित्तकत्वेन वल्त्वनिमित्तकत्वाभावेन निषेधाप्राप्तेरिति वाच्यम्। स्थानिसम्बन्धी योऽल् तद्वृत्तिर्योऽल्त्वव्याप्यो धर्मस्तद्घटितधर्मनिमित्तके कार्ये कर्तव्ये स्थानिवन्नेति द्वितीयार्थस्वीकारेणादोषात्। न चैवमपि 'बभूविव' इत्यादाविडनापत्तिः। स्थानी यो वस् तत्सम्बन्धीअल् वकारस्तद्वृत्तिर्यो धर्मो वलादित्वं तन्निमित्तक इडिति स्थानिवत्त्वनिषेधेनाऽर्धधातुकत्वस्यातिदेष्टुमशक्यत्वादिति वाच्यम्। अल्त्वव्याप्यधर्म-घटितधर्मे अतिदिदिक्षित इति विशेषणदानेन अतिदेष्टव्यार्द्धधातुकत्वे अल्त्वव्याप्यधर्मघटितत्वाभावेनादोषात्। यश्चाल्त्वव्याप्यधर्मघटितो धर्मो वलादित्वं न सोऽतिदिदिक्षित इति। ननु स्थानिसम्बन्धीतिविशेषणदानं विफलमिति चेदिष्टापत्तिरेव।

**केचित्तु**–'बभूविव' इत्यादौ दोषवारणाय आदेशावयवाद्यल्वृत्तिरिति धर्मे विशेषणम्।

तद्वृत्तिधर्माश्रये नेत्यर्थः। अत एव रेफस्थानिकविसर्गस्य रुशब्द... स्थानिवत्त्वेनेति "भोभगो" (पा०सू० ८।३।१७) इत्यत्र भाष्ये स्पष्ट... ऋधातोर्द्वित्वेऽभ्यासस्य "उरत्"(पा०सू० ७।४।६६)अत्त्वेऽरित्यस्य ह... दिः शेषस्तु–अरित्यस्य पुनः "पूर्वोऽभ्यासः" (पा०सू०६।१।४) इ... नेनाभ्यासत्वात्, तस्यापि (१)द्विरुक्तधातुपूर्वभागत्वात्। प्रक्रियाज्ञान... तथा ज्ञानस्य सुलभत्वात्।

अत एव 'धिन्वन्ति' इत्यादाविण्(२) न। उकारवृत्त्यार्धधातुक...

---

तत्र चाऽऽदिग्रहणेन बभूवतुः इत्यत्र न दोष इति; तन्न, 'कः' इत्यादौ स्थानिवत्त्वे... हलन्तत्वात् "हल्ङ्याब्भ्यः" (पा०सू० ६।१।६८) इति सुलोपापत्तेः। हल्... चाऽऽदेशादिभूतककारवृत्तित्वेन निषेधाप्रवृत्तेरिति दिक्।

(१)द्विरुक्तधातुपूर्वभागत्वादिति। ननु 'देवदत्तौ पेचतुः' इत्यादौ ... दत्तौ' इत्यादेरपि द्विरुक्तपूर्वभागत्वेनाभ्याससंज्ञापत्तिः। न च 'देवदत्तौ' इत्यादेर... ससंज्ञायामपि न दोषः, अभ्यासकार्याणामभ्याससंज्ञाप्रयोजकप्रत्ययनिमित्तक... "ह्रस्वः" (पा०सू० ७।४।५९) इत्यादेरभ्याससंज्ञाप्रयोजकप्रत्ययानिमित्तिकाज्ञाव... भ्यासस्याचो ह्रस्वो भवतीत्यर्थेन प्रकृतेऽभ्यासकार्यप्राप्त्यभावादिति वाच्यम्। ए... मपि 'ऊर्णुनाव' ऊर्णुनुविषति' इत्यादौ 'ऊर्णु' इत्यस्य अभ्याससंज्ञायां ह्रस्वाद्यापत्तेरि... चेन्मैवम्। द्विर्वचनीयविधेयताश्रय द्विर्वचनीयोद्देश्यताश्रयैतदुभयमात्रारब्धसमुदा... घटको यो द्विर्वचनीयविधेयताश्रयावधिकपूर्वत्वविशिष्टः सोऽभ्याससंज्ञको भवती... र्थेनादोषात्। प्रकृते च 'अर् ऋ' इत्यत्र एकदेशविकृतन्यायेन तादृशसमुदा... बोध्यम्। अथ वा द्विर्वचनीयविधेयताश्रयद्विर्वचनीयोद्देश्यताश्रयैतदुभयमात्रारब्ध... मुदायसमभिव्याहृतवर्णाघटितो यो द्विर्वचनीयविधेयताश्रयावधिकपूर्वत्वविशिष्टः सो... भ्याससंज्ञको भवतीति "पूर्वोऽभ्यासः" (पा०सू० ६।१।४) इत्यस्यार्थेन 'अर्ऋ' इ... समुदाये एकदेशविकृतन्यायेन तत्त्वानानयनेऽपि न क्षतिरिति दिक्।

(२) इण्नेति। ननु 'धिन्वन्ति' इत्यादौ न दोषः। इटोऽपरनिमित्तकत्वेनान्तर... तया तस्मिन्कर्तव्ये यणो बहिरङ्गत्वेनासिद्धत्वात्। न च परनिमित्तकापरनिमित्तक... शास्त्रयोराश्रीयमाणसमुदायो यत्रान्यूनानतिरिक्तस्तत्रैवापरानिमित्तकमन्तरङ्गमित्यस्य... विषयः। अत एव 'सुस्यूषति' 'दुद्यूषति' इत्यादौ यणः पूर्वं द्वित्वं न भवती... वाच्यम्। अन्तर्भूतनिमित्तकत्वान्तरङ्गत्वस्य यणि सत्त्वेनापरनिमित्तकत्वरूपान्तर... त्वस्य द्वित्वे सत्त्वेनोभयोस्तुल्यबलत्वेन परत्वाद्यणि द्वित्वे च रूपसिद्धेरितिचेन्मैवम्... अचोऽन्यानन्तर्यनिमित्तककार्यप्रवृत्त्युत्तरं यदन्तरङ्गं प्राप्नोति तत्र कर्तव्ये बहिरङ्गासि... द्धत्वं नेत्यर्थक "नाजानन्तर्ये" इतिपरिभाषया निषेधात्। अत एव 'अक्षद्यूः' इत्या...

वकारेऽनतिदेशात् । यत्तु अत्रेण्निवृत्तये स्वविधावपि स्थानिवत्त्वमपरविधाविति न्यासेन साधितं भाष्ये, सा त्वेकदेशियुक्तिः । "असिद्धवत्" (पा०-सू० ६।४।२२) सूत्रेण सिद्धस्याऽऽयन्नासन्नित्यादेस्तत्फलत्वेनोपन्यासात्, अस्यापि "अचः पूर्वत्वविज्ञानात्" (का०वा०) इति वार्त्तिके पञ्चमीसमासेन सिद्धेः कैयटेनोक्तत्वाच्च । 'प्रदीव्य' इत्यादौ च वलादिलक्षण इण्न ।

---

"लोपो व्योः" (पा०सू० ६।१।६६) इति लोपो न ।

किञ्च एः अजो यजस्तस्यापत्यं 'याजिः' इत्यादौ "न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच्" (पा०सू० ७।३।३) इति ऐजभाव आद्यार्थकानल्विधावित्यस्य प्रयोजनम् । तथाहि–"न य्वाभ्याम्" (पा०सू० ७।३।३) इति सूत्रे 'पूर्वौ' इति विधेयविशेषणम् । तथा चाल्त्वव्याप्यधर्मावच्छिन्नस्थानितानिरूपितादेशताश्रययण्धर्मिको य आरोपः यण् पदान्तत्ववानित्याकारकः तादृशारोपप्रकारीभूतपदान्तत्वेन ऐच्शास्त्रीयोद्देश्यता साक्षादवच्छिन्नेति निषेधप्रवृत्तिः स्पष्टैव । न च 'धिन्वन्ति' इत्यादौ पञ्चमीसमासेन स्थानिवत्त्वादिटः प्राप्तिरेव नेति वाच्यम् । पञ्चमीसमासेनापि स्वविधौ स्थानिवत्त्वाप्रवृत्तेः । अत एव 'भवति' इत्यादाववादेशः सिध्यति । अन्यथाऽवादेशप्रतिबन्धार्थं पञ्चमीसमासेन गुणस्य स्थानिवत्त्वं स्यादिति भावः ।

अत्रेदमवधेयम्—'आर' इत्यादौ पुनरभ्याससंज्ञायाः प्रयोजनं चिन्त्यम् । न च अल्त्वव्याप्यधर्मावच्छिन्नस्थानितानिरूपितादेशताश्रयधर्मिकारोपप्रकारीभूताभ्यासत्वनिमित्तकत्वाद्धलादिः शेषस्य"अनल्विधौ" इति निषेधः स्यादिति वाच्यम्, "हलादिः शेषः" (पा०सू० ७।४।६०) इत्यत्राभ्यासादेरेव हल उद्देश्यत्वेन तादृशप्रकारीभूताभ्यासत्वेन उद्देश्यतायाः साक्षादनवच्छिन्नत्वात् । अभ्यासत्वावच्छिन्नमुद्दिश्य आदिर्हल् शिष्यते इत्युक्त्वा दोषदानस्य "पूर्वोऽभ्यासः" (पा० सू० ६।१।४)इत्यस्य निरुक्तार्थकरणस्य चानुचितत्वात् । अत एव 'चेच्छियते' इत्यत्र हलादिःशेषो न । अन्यथा पूर्वोक्तदिशा तुग्विशिष्टस्याभ्याससंज्ञया स दुर्वारः स्यात् । मम तु द्विर्वचनीयोद्देश्यताश्रयस्यैवाभ्याससंज्ञेति तुग्विशिष्टे सा नेति न दोषः । दीर्घस्यैव तुगिति यदागमपरिभाषायाः प्राप्तिरेव नेति तथापि न दोषः । अवयवावयवन्यायस्य लौकिकत्वेनानित्यत्वादप्रवृत्त्या तेनापि न दोषः ।

किञ्च नानल्विधावित्याद्यार्थस्योपयोगोऽपि । न च 'धिन्वन्ति' इत्यत्रेडभावाय स आवश्यक इति वाच्यम् । अन्तरङ्गपरिभाषया गतार्थत्वात् । न च "नाजानन्तर्ये" (प०५१) इति निषेधः । अचोऽन्यानन्तर्यानिमित्तकं यदन्तरङ्गं प्राप्नोति तदुत्तरकालिकान्तरङ्गप्राप्त्यभावेन तदप्रवृत्तेः, तस्या असत्त्वाच्च; सत्त्वे वा तस्या अनित्यत्वाच्च । अत एव 'जगदम्बाऽत्र' इत्यादौ ह्रस्वो न । न चैवं 'याजिः' इत्यत्रैजागमाभावाय

(१)स्थान्यलित्युक्तेः (२)'बभूविव' इत्यादौ वलादिलक्षणेट्सिद्धिः। न
तत्र वलादित्वं स्थानितो लभ्यं; किन्तु स्वाश्रयमेव।

यन्निमित्तवैकल्यप्रयुक्तोपदेशाप्रवृत्तावतिदेशो मृग्यते तस्य निमित्त
(३)स्थान्यलसाधारणधर्मत्व एव निषेधप्रवृत्तेः। प्रकृते चाऽऽर्द्धधातुकत्वै
कल्यप्रयुक्ताऽप्राप्तिर्न तत्स्थान्यलसाधारणं, यच्च तादृशवल्त्वघटितं वलादि
न तद्वैकल्यप्रयुक्ताऽप्राप्तिरिति बोद्ध्यम्। प्रत्यासत्त्या च शास्त्रीयकार्ये
स्थानिवत्त्वं, तेन (४)नायकसिद्धिः।

---

सोऽर्थ आवश्यक इति वाच्यम्। "न य्वाभ्याम्" (पा०सू०७।३।३) इत्यत्र पदान्
यकारवकारयोरुद्देश्यत्वेनाल्त्वव्याप्यैक्त्वावच्छिन्नस्थानितानिरूपितादेशताश्रयधर्मिकाे
प्रकारीभूतपदान्तत्वधर्मस्यैजागमीयोद्देश्यतायाः साक्षादनवच्छेदकत्वेन 'ऐयजिः' इ
रूपस्यैवेष्टत्वात्। न चैवमपि "भोभगो" (पा०सू० ८।३।१७) इति सूत्रस्थभाष्यवि
रोध इति वाच्यम्। तस्य भाष्यस्य 'र' इत्यनुवृत्तिपरतया कथञ्चिद्योजयितुं शक्य
त्वात्, तस्यैकदेश्युक्तित्वेनादोषाच्च। अत एव 'साम्नी' इत्यादौ प्रगृह्यत्वं सिद्ध्यति
अन्यथा "संज्ञाविधौ" (प०) इति निषेधात्प्रगृह्यसंज्ञायां द्विवचनत्वस्य साक्षादुद्दे
तावच्छेदकत्वेन दोषो दुरुद्धर एवेति दिक्। (१)स्थान्यलित्युक्तेरिति। स्थान
ल्विशिष्टधर्मघटितधर्मनिमित्तके विधौ कर्तव्ये स्थानिवन्नेत्यर्थः। वै०-च स्ववृत्ति
स्ववृत्त्यल्त्वव्याप्यत्वं, स्वस्थानिकादेशावयवाल्वृत्तित्वम्–एतत्त्रितयसम्बन्धेन। स्
स्ववृत्तित्वं स्वस्थानिकादेशावयवाल्वृत्तित्वं, स्ववृत्त्यल्त्वव्याप्यत्वम्, एतत्त्रितयसम
न्धेनाल्विशिष्टत्वमिति, तन्न, 'बभूवतु': इत्यादौ आदेशावयवे वल्त्वस्य सत्त्वेन "अ
ल्विधौ" इति निषेधाप्रवृत्त्या इडापत्तेः। स्थान्यल्विशिष्टत्वानिवेशे तु स्वस्थानिकादे
वयवाल्वृत्तित्वमित्यस्य स्वस्थानिको य आदेशावयवाल् तदवृत्तित्वमित्यर्थः। तथा
स्थान्यवयवस्य तकारस्य प्राथम्यविशिष्टस्थाने स्थितेऽतुसोऽकारे वल्त्वस्यावृत्तित्वात्
द्घटितवलादित्वनिमित्तके इड्विधौ स्थानिवत्त्वनिषेधः सुलभः। एवं कः इत्यादि
स्थान्यवयवस्य मकारस्यान्त्यत्वविशिष्टस्थाने स्थिते आदेशावयवाकारे हल्त्वस्यावृ
त्वात्तदघटितहलन्तत्वनिमित्तकसुलोपेऽपि तन्निषेधासिद्धिः। एवं च न कश्चिद्दोषः
इदं च स्थानिशब्दोपादाने एव प्रत्यासत्त्या लभ्यते इति बोध्यम्। एतत्सर्वमभिप्रेत्याह–
(२)बभूविवेत्यादाविति। वस्तुतस्तु अल्त्वव्याप्यधर्मघटितधर्मे अतिदिदिक्षि
इतिविशेषणदानेन सर्वसामञ्जस्येनेदं सर्वं विफलमेवेति बोध्यम्।

(३)स्थान्यलसाधारणधर्मत्व एवेति। धर्मे स्थान्यलोऽसाधारण्यञ्च–स्थान
ल्वृत्तित्वे सति अल्मात्रवृत्तित्वम्। (४)नायकसिद्धिरिति। स्यादेतत्, "अचः प

(१)प्राधान्यात्कार्यातिदेशोऽयम् । शास्त्रातिदेशस्तु कार्यातिदेशादभि-

---

स्मिन्" (पा०सू० १।१।५७) इत्यत्रेवात्रापि अशास्त्रीयस्यातिदेशो भवतु, शब्दाधिका-राश्रयणे गौरवात् । स्थानिवदित्यत्रादेशे स्थानिवृत्तिधर्मसम्भावनायां यद् भवति तद् भवति, यन्न भवति तन्न भवतीत्यर्थः । अत एव देवयतेः क्विपि 'दयूः' इत्यत्रायादे-शप्रतिबन्धार्थमुत्तरसूत्रेण स्थानिवत्त्वन्न । न च 'एषो गमयति' इत्यस्यासिद्धिः, गमा-देशे स्थानिवृत्तिधर्मसम्भावनायामपि गकारे हल्त्वानपायात् "एतत्तदोः" (पा०सू० ६। १।१३२) इति लोपापत्तेरिति वाच्यम् । 'एष गमयति'इतिरूपस्यैवेष्टत्वात् । अत एव "सम्प्रसारणादसम्प्रसारणे" इति न्यासेन "न सम्प्रसारणे सम्प्रसारणम्" (पा०सू०६। १।३७) इति सूत्रप्रत्याख्यानं सङ्गच्छते । अन्यथा सूत्रसत्त्वे 'एष यूनः पश्य'इति, प्रत्या-ख्याने च यणः स्थानिवत्त्वात्सुलोपाभावे 'एषो यूनः पश्य' इति फलभेदेन प्रत्याख्याना-सङ्गत्यापत्तेः । मम तु "एतत्तदोः" (पा०सू० ६।१।१३२) इति प्रतिबन्धार्थम् "अचः परस्मिन्" (पा०सू० १।१।५७) इति स्थानिवत्त्वं नेति कल्पनान्न दोषः । न चैवमपि 'इयाय' इत्यादौ स्थानिवत्त्वे इयङ् न स्यादिति परिभाषेन्दुशेखरस्थशङ्काया असङ्गति-रिति वाच्यम्, इष्टापत्तेः; इति चेत् ? मैवम्, 'एकविंशः' इत्यादौ "तिविंशतेः"(पा० सू० ६।४।१४२) इति लोपस्य पररूपप्रतिबन्धार्थं स्थानिवत्त्वापत्तेरिति दिक् ।

(१)प्राधान्यादिति । स्यादेतत्, 'राम ङे' इत्यस्यां दशायां "सुपि च" (पा०सू० ७।३।१०२) इति शास्त्रस्य तद्विहितदीर्घरूपकार्यस्य वा प्राप्त्यभावेन शास्त्रकार्याति-देशयोरसम्भवादिदमसङ्गतम् । किञ्च पूर्वापरविरुद्धश्चायं ग्रन्थः । शास्त्रातिदेशमुप-क्रम्य "रामाय इत्यादौ स्थानिवद्भावेन सुप्त्वात्सुपि चेति दीर्घः" इत्यनेन निमित्ता-तिदेशस्यैवोक्तत्वात्; इति चेद् ? अत्र केचित्—प्राधान्यात्कार्यातिदेशोऽयमित्यतः प्राग् यद्यपीति पूरणीयम् । अभिन्नरूपत्वं सूचितमित्यनन्तरं "तथापि एतदुभयं न; असम्भवात्" इति पूरणीयम् । तत्रानपेक्षितार्थसन्निधान इत्यत्र किन्त्वित्यादिः । अनपेक्षितार्थेत्यत्र अर्थपदेन सामग्री गृह्यते । तथा च यत्कार्यं प्रति या सामग्री तदभावेऽपि तत्तन्निमित्तमेवानेनातिदिश्यते इति निमित्तातिदेश एवात्रेत्याहुः ।

अन्ये तु यथाश्रुतोऽपि ग्रन्थः सङ्गत एव । न च 'राम ए' इत्यस्यां दशायां "सुपि च" (पा०सू० ७।३।१०२) इति शास्त्रस्य दीर्घरूपकार्यस्य वा प्राप्त्यभावेन ग्रन्थासङ्गतिरिति वाच्यम् । "आदिरन्त्येन" (पा०सू० १।१।७१) इति शास्त्रस्य तद्विहितसुप्संज्ञारूपकार्यस्य वा प्राप्त्या ग्रन्थस्य सङ्गतत्वात् । प्रधानकार्यातिदेशा-सम्भवेऽप्रधानकार्यस्याप्रधानशास्त्रस्य वाऽतिदेष्टुं शक्यत्वात् । अत एव "तत्तन्नि-मित्तरूपकार्यव्यवहार एवानेन" इति ग्रन्थेनाप्रधानकार्यातिदेश एवोक्तः । अत एव च 'रामाय' इत्यत्र "स्थानिवद्भावेन सुप्त्वात्सुपि चेति दीर्घः" इति ग्रन्थेन सुप्संज्ञा-रूपं कार्यमेवातिदिश्यते इति बोध्यते इत्याहुः ।

न्नरूपः । तस्यापि कार्यफलकत्वादिति "तृज्वत्" (पा०सू० ७।१।९५ सूत्रे **कैयटः । भाष्येऽपि** "तत्राऽऽङ्गशास्त्रातिदेशात्सिद्धमाङ्गं यत्स्था तदतिदिश्यते" इत्युक्त्या तयोरभिन्नरूपत्वं सूचितम् । तत्रानपेक्षितार्थसन्निध नस्तत्तन्निमित्तरूपकार्यव्यवहार एवानेन । कार्यन्तु स्वशास्त्रेणैवेति । अत एव 'रामाय' इत्यादौ "स्थानिवत्त्वेन सुप्त्वात् सुपि चेति दीर्घः" इति सङ्गच्छते । 'परिवीः' इत्यादौ परत्वात् दीर्घ इति च सङ्गच्छते । यद्व किं चिन्निमित्तवैकल्येऽपि दीर्घादिकार्यमनेन क्रियते । तच्च कार्यं किमित्या काङ्क्षायां तत्स्वरूपनिर्णयस्य विधिशास्त्रमूलकत्वेन तद्देशेनैव परशास्त्रविहित त्वरूपं परत्वं तेषां बोद्ध्यम् । एतदेवाभिप्रेत्यातिदिश्यमानकार्याणामुपदेश देश एव देश इत्यभियुक्ताः ।

अत्राऽऽद्यपक्ष एव भाष्यसम्मतः । अत एव "स्थान्यल्विधिप्रतिषे कुरुवधपिबां प्रतिषेधो वक्तव्यः" इत्येतदुपपादनावसरे "स्थानिवद्भावादङ्ग संज्ञा स्वाश्रयं च लघूपधत्वादि, तत्र लघूपधगुणादिः प्राप्नोति" इत्यादि भाष्योक्तेरिति बोद्धव्यम् । एवं (१)यन्निमित्तवैकल्यप्रयुक्तोपदेशाप्रवृत्तिस्

---

परे तु स्थानिनि आदेशवृत्तिधर्मसम्भावनया यच्छास्त्रं यत्कार्यं वा प्राप्नोति तद देशेऽपि भवतीति स्थानिवदित्यस्यार्थः। आदेशवृत्तिधर्मप्रकारकस्थानिविशेष्यकसम्भा वनाप्रयोज्यप्रवृत्तिसम्भावनाविषयीभूतं शास्त्रं कार्यं वा आदेशे प्रवर्तत इति याव तथा च 'राम ए' इत्यस्यां दशायाम् अयम् एशब्दो यदि यञादिः स्यात्तर्हि "सु च" (पा०सू० ७।३।१०२) इति शास्त्रस्य तद्दीर्घस्य वा प्रवृत्तिसम्भावनाऽस्ती यथाश्रुतमेव सम्यक् । अत एवानपेक्षितार्थसन्निधान इत्यग्रिमो ग्रन्थः सङ्गच्छते । न "तत्तन्निमित्तरूपकार्यव्यवहार एव" इत्युत्तरग्रन्थासङ्गतिरिति वाच्यम् । तत्तत् निमि रूपमसाधारणं यस्य तादृशं दीर्घादिरूपं कार्यं तद्व्यवहार इत्यर्थकरणेनादोषात कार्यं तु स्वशास्त्रेणैवेत्यस्य कार्यज्ञानं स्वशास्त्रेणैवेत्यर्थः । न चैवमपि 'रामाय' इत्या "स्थानिवत्त्वेन सुप्त्वात्सुपि चेति दीर्घः" इत्यग्रिमग्रन्थासङ्गतिरिति वाच्यम् । स्था वत्त्वेनेत्यस्य "सुपि चेति दीर्घः" इत्यत्रान्वयः, सुप्त्वादित्यस्य सुप्त्वं विहायेत्य ल्यब्लोपे पञ्चमीस्वीकारादित्याहुः ।

वस्तुतस्तु प्राधान्यात्कार्यातिदेशोऽयमित्येतदारभ्य यद्वेत्येतत्पर्यन्तो ग्रन्थोऽ तु मतरीत्या योजनीयः । यद्वेत्येतदारभ्य ग्रन्थः परेतुमतरीत्या योजनीय इति दि

(१) **यन्निमित्तवैकल्यप्रयुक्तोपदेशाप्रवृत्तिरिति** । यन्निमित्ताभावप्रयो

न्निमित्तातिरिक्तसर्वनिमित्तकत्वमतिदेशस्यापि । अत एवेष्ठवद्भावेनातिदिष्टभत्वस्य वर्णाश्रयत्वमित्यादिव्यवहारः । सर्वातिदेशेष्विदं तुल्यम् । यन्निमित्तवैकल्यप्रयुक्तोपदेशाप्रवृत्तिस्तन्निमित्तं शास्त्रीयमेव प्रत्यासत्तेः ।

स्थानिवदित्युक्तेः (१)सम्बन्धिशब्दमहिम्नैवाऽऽदेशलाभे आदेशग्रहणं श्रौतस्थान्यादेशभावस्यैव ग्रहणमितिशङ्कावारणद्वारा "एरुः" (पा०सू० ३।४।८६) इत्यादौ शब्दानित्यत्ववारणाय "सर्वे सर्वपदादेशाः" इति न्यायेन कल्प्यमानस्य (२)तेस्तुरित्यानुमानिकादेशस्य सङ्ग्रहार्थम् । तेन 'पचतु' इत्यादेः पदत्वसिद्धिरिति भाष्ये स्पष्टम् ।

---

प्रधानशास्त्राप्रवृत्तिरित्यर्थः । न च 'षड्भ्याम्' इत्यादौ णिलोपे स्वादित्वाजादित्वोभयाभावप्रयुक्ता "यचि भम्" (पा०सू० १।४।१८) इत्युपदेशाप्रवृत्तिरिति तदतिरिक्तनिमित्तकत्वेनेष्ठवद्भावे वर्णाश्रयत्वाभावाद्भसंज्ञा स्यादेवेति कथं जश्त्वमिति वाच्यम् । "यन्निमित्तवैकल्य" इत्यत्र निमित्तपदेन सादृश्यप्रतियोगितावच्छेदकधर्मव्यापकधर्मस्य ग्रहणेनादोषात् । तथा हि–णिः इष्ठवद्भवति इत्यतिदेशीयसादृश्यप्रतियोगितावच्छेदकीभूतो य इष्ठत्वरूपो धर्मस्तद्व्यापकीभूतो धर्मः स्वादित्वरूपो धर्मः न त्वजादित्वरूपो 'भूयिष्ठः' इत्यादौ व्यभिचारादिति न दोषः । न चैवमपि "यचि भम्" (पा०सू० १।४।१८) इत्यत्र यचीति द्वन्द्वनिर्देशेन भसंज्ञायां यकारादित्वाजादित्वैतदन्यतरत्वेन निमित्तत्वादन्यतरत्वे सादृश्यप्रतियोगितावच्छेदकेष्ठत्वव्यापकत्वमस्त्येवेति पुनरपि तद्दोषतादवस्थ्यमेवेति वाच्यम् । "यचि" (पा०सू० १।४।१८) इत्यत्र य् इति लुप्तसप्तम्यन्तं पृथक् पदमिति स्वीकारेणादोषात् । अत एव "द्वन्द्वाच्चुदषहान्तात्समाहारे" (पा०सू० ५।४।१०६) इति टच् समासान्तो न प्रसज्यते । अथ वा "यन्निमित्तवैकल्य" इत्यत्र निमित्तपदेन सादृश्यानुयोगितावच्छेदकधर्मव्यापकीभूताभावप्रतियोगिधर्मस्यैव ग्रहणमिति न कोऽपि दोषः । तथा हि–णिः इष्ठवद्भवतीत्यत्र सादृश्यानुयोगितावच्छेदकं णित्वं तद्व्यापकीभूताभावप्रतियोगि स्वादित्वमेव न त्वजादित्वयादित्वैतदन्यतरत्, णौ अजादित्वस्य सत्त्वादिति दिक् ।

(१)**सम्बन्धिशब्दमहिम्नैवेति**। सम्बन्धिशब्दत्वञ्च–निरूपकांशे नित्यसाकाङ्क्षं यद्रूपं तद्रूपावच्छिन्नबोधकत्वम्। प्रकृते च स्थानिपदस्य स्थानितावति शक्तत्वेन स्थानिता च निरूपकांशे नित्यसाकाङ्क्षेति आदेशलाभ इति भावः । (२)**तेस्तुतीरिति**। इदमुपलक्षणम्–भवति इत्यादेः स्थाने भवतु इत्यादेरपि । अन्यथा "एरुः" (पा०सू० ३।४।८६) इत्यस्य इवर्णान्तस्य उवर्णान्त आदेशो भवतीत्यानुमानिकस्थान्यादेशभावकल्पे अवयवत्वबोधेन शब्दानित्यत्वं दुरुद्धरं स्यादिति दिक् ।

ननु तोस्तित्त्वमपि छिन्नपुच्छे शुनि श्वत्वव्यवहारवल्लोकन्यायेनै सिद्धम्। तदुक्तं–"प्राग्दीव्यतोऽण्" (पा०सू०४।१।८३) इति सूत्रे भाष्ये "दीव्यतिशब्दैकदेशदीव्यच्छब्दानुकरणमिदम्" इत्युक्त्वा "किमर्थं विकृत-निर्देशः ? (१)एतदेव ज्ञापयत्याचार्यो भवत्येषा परिभाषा "एकदेशविकृतम-नन्यवत्" इति। (२)अत एवात्र विकारोऽशास्त्रीयोऽपि। अत एव श्रायस-शब्दादणन्ताद् द्विवचने 'श्रायसौ' इत्यत्र वृद्धौ कृतायां सान्तस्योगित्त्वेना-नेन न्यायेनाङ्गतया प्राप्तो नुम् पूर्वसम्बन्धिविधित्वेन "अचः परस्मिन्" (पा० सू० १।१।५७) इति स्थानिवत्त्वेन वारितः "अचः परस्मिन्" (पा०सू० १।१।५७) इति सूत्रे **भाष्यं**। एतन्न्यायानाश्रयणे त्वङ्गत्वमेव दुर्लभम्। "अन्तादिवत्" (पा०सू० ६।१।८५) सूत्रे **भाष्यकैयटयो**रपि 'गुडोद-कम्' इत्यादावेकादेशे कृते दकशब्दस्यानेन न्यायेनो–(३)दकशब्दत्वमाश्रि-त्य "उदकेऽकेवले" (पा०सू०।६।२।९६) इति पूर्वपदान्तोदात्तत्वमुक्तम्। शब्दानित्यत्वं तु रेखागवयन्यायेन समाधेयम्। अनन्यवदित्यस्यान्यवन्नेत्यर्थः। तत्रा(४)न्यसादृश्यनिषेधेऽन्यत्वाभावः सुतरामिति चेत् ? न, अर्द्धस्यान्यत्वे जातिव्यञ्जकभूयोऽवयवदर्शनाभावेन तौ तित्त्वप्रतीतेर्न्यायेनानुपपादनात्।

---

(१) **एतदेव ज्ञापयत्याचार्य इति**। न च दीव्यतिशब्दत्वस्याक्तपरिमाणस-मानियतत्वेन तस्यातिदेशासम्भवात्कथं ज्ञापकत्वमिति वाच्यम्। दीव्यतिशब्दवृत्तिबोध-जनकत्वस्य तान्तेऽतिदेशसम्भवेन ज्ञापकत्वस्य सुस्थत्वात्। अत एव "प्राग्दीव्यतोऽ-ण्" (पा०सू० ४।१।८३) इत्यधिकारः प्रत्ययार्थबोधकपदघटिते शास्त्रे सम्बध्यते, नान्यत्र। तेन "अत इञ्" (पा०सू० ४।१।९१) इत्यादावण्पदासम्बन्धः सिद्ध्यति। एकदेशविकृतत्वं च–यादृशसमुदायैकदेशावच्छेदेन विकारो जातस्तत्समुदायविशिष्टत्व-म्। समुदायवै० च स्वघटकोद्देश्यकविकारप्रतियोगीतरयावद्घटितत्वं, स्वघटकोद्देश्यक-विकारप्रतियोग्यघटितत्वं, स्वघटकोद्देश्यकविकारघटितत्वं, स्वविशिष्टाघटितत्वमेतच्चतुष्ट-यसम्बन्धेन। सम्बन्धघटकवैशिष्ट्यं च–स्वाघटकत्वं, स्वघटकमात्रोद्देश्यकविकाराघट-कत्वमेतदुभयसम्बन्धेनेत्यन्यत्र विस्तरः। (२)**अत एवेति**। "प्राग्दीव्यतः" (पा० ४।१।८२) इत्यत्र शास्त्रीयविकाराभावेऽपि एकदेशविकृतन्यायस्वीकारादेवेत्यर्थः। (३)**उदकशब्दत्वमाश्रित्येति**। वस्तुतस्तु उदकशब्दत्वस्याक्तपरिमाणसमानियतत्वे-नेदं भाष्यमेकदेश्युक्तिः। 'गुडोदकम्' इत्यादौ "पूर्वोत्तरपदनिमित्तककार्यात्पूर्वमन्तरङ्गोऽ-प्येकादेशो न" (प०) इति परिभाषया स्वरात्पूर्वं गुणाप्रवृत्तेश्च। (४)**अन्यसादृश्य**-

किं च तिङ्सञ्ज्ञायास्तिबादिसूत्रोपात्त(१)परिच्छिन्नपरिमाणनिष्ठतया परिच्छिन्नपरिमाणार्थवाचकशब्दानां न्यूनेऽधिके वा शास्त्रव्यापारं विनाऽप्रवृत्तेः "येन विधिः" (पा०सू० १।१।७२) इति सूत्रेऽङ्गसंज्ञासूत्रे च **भाष्ये** उक्ततया तदभावात् । न्यूनाधिकत्वञ्च वैरूप्यस्योपलक्षणम् ।

न च 'तण्डुलान्' इत्यादौ स्थानिवद्भावेन प्रत्ययान्तत्वेऽपि स्वतः प्रत्ययान्तभिन्नत्वात् (२)प्रातिपदिकत्वापत्तिरिति वाच्यम् । अतिदेशस्वभावेना-(३)तिदिश्यमानधर्मविरुद्धस्वाश्रयकार्याभावात् । अत एव 'जहि' इत्यादौ निषेध इति । सादृश्यं न भेदघटितमिति प्रकृते नासङ्गतिरित्यन्यत्र विस्तरः । (१)**परिच्छिन्नपरिमाणनिष्ठतयेति ।** परिच्छिन्नपरिमाणत्वं च संख्यात्वपरिमाणत्वैतदन्यतरव्याप्यधर्मप्रकारकसंशयसामान्यानिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयताश्रयत्वम् । यद्धर्मावच्छिन्नज्ञानोत्तरं संख्यात्वव्याप्यधर्मप्रकारकः परिमाणत्वव्याप्यधर्मप्रकारको वा संशयो नोदेति तत्त्वमिति यावत् । वस्तुतस्तु तिङ्त्वस्य परिच्छिन्नपरिमाणनिष्ठत्वेऽपि परिच्छिन्नपरिमाणसमानियतत्वाभावाच्चिन्त्यमेतत्, परिच्छिन्नपरिमाणनिष्ठधर्माणामनतिदेशे न्यायस्य निर्विषयत्वापत्तेरिति दिक् ।

(२)**प्रातिपदिकत्वापत्तिरिति ।** ननु 'तण्डुलान्' इत्यादौ "तस्माच्छसो नः" (पा०सू० ६।१।१०३) इति नकारादेशस्य विधानसामर्थ्यादेव नलोपो न भवतीति को दोषः । न च सर्वस्मिन्नित्यादौ स्थानिवद्भावेन प्रत्ययान्तत्वेऽपि स्वतः प्रत्ययान्तभिन्नत्वात्प्रातिपदिकत्वे नलोपापत्तिः, नकारोच्चारणं तु 'सर्वस्मिशयः'इत्यादौ "शयवास" (पा०सू० ६।३।१८) इति सप्तम्या अलुकि संज्ञाविधौ नलोपस्यासिद्धत्वात्संयोगसंज्ञायां "संयोगे गुरु" (पा०सू० १।४।११) इति गुरुसंज्ञायां "गुरोरनृतः" (पा०सू० ८।२।८६) इति प्लुतार्थञ्चरितार्थमिति वाच्यम् । "इकोऽचि विभक्तौ" (पा० सू० ७।१।७३) इति सूत्रस्थभाष्यप्रामाण्येन संयोगसंज्ञायां नलोपस्यासिद्धत्वं न भवतीति, तन्निमित्तकगुरुसंज्ञामादाय "गुरोरनृतः (पा०सू० ८।२।८६) इति प्लुतो न भवति इति वा कल्पनेनादोषात् । अन्यथा 'त्रपुषुशयः' इत्यत्र नुमि नलोपे तस्यासिद्धत्वात्संयोगसंज्ञायां गुरुसंज्ञायां "गुरोः" (पा०सू० ८।२।८६) इति प्लुताभावायाचीत्यस्यावश्यकत्वेन भाष्योक्तज्ञापकता भज्येतेति चेन्मैवम् । नकारोच्चारणसामर्थ्येन शास्त्रबाधकल्पनापेक्षयाऽतिदिश्यमानधर्मविरुद्धस्वाश्रयकार्याभावज्ञापनस्यैवौचित्यात् । वस्तुतस्तु 'भूमिशयः' इत्यादावलुग्वारणाय "शयवास" (पा०सू० ६।३।१८) इत्यत्र "हलदन्तात्" (पा०सू० ६।३।९) इति सम्बन्धस्य कौमुद्यामेव स्पष्टत्वाद्भाष्यासङ्गतिशङ्कैव नास्तीति न तद्वलेन काचित्कल्पना सम्भवतीति बोध्यम् । (३)**अतिदिश्यमानधर्मविरुद्धेति ।** अत्र विरुद्धत्वञ्च तदभाववत्तानिश्चयमुद्रया ग्राह्यम्,

जादेशस्यासिद्धत्वे स्वाश्रयो हेर्लुग्न, सिद्धत्वासिद्धत्वयोर्विरोधात् । "असिद्धवत् (पा०सू० ६।४।२२) सूत्रं तु 'शाधि' इत्यादौ स्थानिप्रयुक्तधिभावसम्पादनेन चरितार्थम् । न च "अप्रत्ययः' इत्यस्य पर्युदासत्वे शास्त्रीयकार्याभावात्स्थानिवत्त्वं दुर्लभमिति वाच्यम् । "वेः स्कन्देरनिष्ठायाम्" (पा० सू० ८।३।७३) इति षत्वविधायके तिङन्तेषु षत्वाभावायाऽऽवश्यकेन न्याय्येन चानिष्ठायामिति पर्युदासेन वृत्त्यादिसम्मतेन पर्युदासलभ्याशास्त्रीयेऽपि शास्त्रतात्पर्यविषये शास्त्रीयवदतिदेशबोधनात् । 'विस्कन्नः' इत्यादौ हि निष्ठानत्वस्य नित्यतया स्थानिवत्त्वेनैव निष्ठात्वस्य वक्तव्यत्वात् । तस्य प्रसज्यप्रतिषेधत्वे तु लक्ष्यानुसारिव्याख्यानादेवोक्तार्थसिद्धिरिति बोद्धयम्।

**केचितु भाष्ये** "तत्स्थानापन्ने तद्धर्मलाभस्य तत्कार्यस्य च लोकन्यायेनैव सिद्धेरयमतिदेशः स्वं रूपमित्येतच्छास्त्रसत्वाद्धन्तेः कार्यं वधौ न स्यादिति" इत्युक्तम् । एवञ्च "स्वं रूपम्" (पा०सू० १।१।६८) इति शास्त्राविषये तेन सिद्धिरिति सूचितम् । एवञ्चाशास्त्रीयस्यापि धर्मस्यातिदेशो भवत्येव । अतिप्रसङ्गस्तु लक्ष्यानुसारेण क्वचिल्लोकन्यायानाश्रयणेन परिहरणीयो यदि प्राप्नोति । एवञ्च न कश्चिद्दोषः । "न पदान्त" (पा०सू० १।१।५८) इति सूत्रे 'ब्राह्मणकण्डूतिः' इत्युदाहरणाच्च क्वचित्तदनाश्रयणम् । तत्र हि कण्डूयतेः क्तिचि तत्रात्लोपे तस्य स्थानित्त्वादुवङि (१)यणि वाऽनादिष्टादचः पूर्वत्वे स्थानिद्वारके गृह्यमाणे ऊठ् न स्यादित्याहुः ।

(२)अत एव अर्थवत्सूत्रशेषे 'अप्रत्ययः' इत्यस्य पर्युदासत्वमेवोक्तं **भाष्ये**। तत्र पक्षे (३)'काण्डे' इत्यत्र पूर्वान्तवद्भावेन प्रत्ययान्तभिन्नत्वाद्दोषः

---

न तु तदभावव्याप्यवत्तानिश्चयमुद्रया । अन्यथा 'अधुः' इत्यादौ "विभाषा घ्राधेट्" (पा०सू० २।४।७८) इति लुगर्थमतिदिश्यमानं यद्धेट्त्वं तदभावव्याप्यं यत्स्वाश्रयमादन्तत्वं तत्प्रयुक्तः "आतः" (पा०सू० ३।४।११०) इति जुस् न स्यादिति दिक् ।

(१)**यणि वेति** । 'द्विधा हि कण्ड्वादयः' इत्युक्त्या धातुत्वकल्पे उवङ्, प्रातिपदिकत्वकल्पे यणिति विवेकः ।

(२)**अत एवेति** । पर्युदासलभ्याशास्त्रीयेऽपि शास्त्रीयवदतिदेशस्वीकारादेवेत्यर्थः । (३)**काण्डे इत्यत्रेति** । न च लक्ष्ये लक्षणन्यायेन पुनर्ह्रस्वाप्राप्त्या इयमाशङ्काऽयुक्तैवेति वाच्यम्, गुणस्य स्वीयप्राथमिकप्रवृत्तौ उद्देश्यतावच्छेदकत्वेनाश्रीयमाण-

शङ्कितो न तु स्वाश्रयाप्रत्ययान्तत्वेन । "क्षियो दीर्घात्" (पा०सू० ८।२।४६) इति सूत्रे **भाष्येऽपि** अतिदिश्यमानधर्मविरुद्धस्वाश्रयकार्याभाव इति स्फुटम् । तत्र हि 'क्षियः' इत्यत्रेयङर्थं प्रकृतिवदतिदेशे स्वाद्यनुत्पत्तिमाशङ्क्य "एवं तर्हि आतिदेशिकानां स्वाश्रयाणि न निवर्त्तन्ते" इति समाधायातिदिश्यमानधर्मविरुद्धस्वाश्रयनिवृत्तेरावश्यकत्वाभिप्रायेण—"अथाप्येतन्न"इत्याशङ्क्य "निर्देशसामर्थ्याद्विभाक्तिः" इत्युक्तम् । "असिद्धवत्" ( पा०सू० ६।४।२२) सूत्रे च **कैयटे** स्फुटमेतत् । **यत्तु** "गाङ्कुटादि" (पा०सू० १।२।१) सूत्रे **भाष्ये** "सृजिदृशोः"(पा०सू० ६।१।५८) इत्यत्राकितीति पर्युदासात् 'सिसृक्षति' इत्यत्र "हलन्ताच्च" (पा०सू० १।२।१०) इति कित्त्व तिदेशेऽपि अमागममाशङ्क्य प्रसज्यप्रतिषेधाश्रयणेन समाहितं, तत्तु वार्त्तिककृदुक्तमुपायान्तरं बोद्धथम् । "अनल्विधौ" इति विधिग्रहणात् (१)अलाश्रये विधावित्यर्थात् यत्र विधौ शब्दतः स्थानिस्थान्यवयवा(२)न्यतराल्वृत्तिधर्मवतस्तेन तस्मात्तस्य तस्मिंस्तदादेरित्यादिप्रकारेण विशेष्यतया विशेषणतया वा अलाश्रयणं तत्र निषेधः । 'व्यूढोरस्केन' 'द्यौः' 'द्युभ्यां' 'क इष्टः' 'प्रपठ्य' इत्युदाहरणानि । शब्दत इत्युक्ते 'अग्रहीत्' इत्यादौ (३)"इट ईटि" ( पा०सू० ८।२।२८) इति सिद्ध्यति । दीर्घविधावत्र च इट इति

---

समुदायघटकमात्रोद्देश्यकविकारभिन्नत्वेन तल्लक्ष्यत्वाभावात् । (१) **अलाश्रये विधावित्यर्थादिति** । अल्विशिष्टविधावित्यर्थः, वै० च साक्षात्स्ववृत्त्यल्त्वव्याप्यधर्मावच्छिन्नस्थानितानिरूपितादेशताश्रयधर्मिकारोपप्रकारीभूतधर्मावच्छिन्नोद्देश्यताकत्व, स्ववृत्यल्त्वव्याप्यधर्मघटितातिदिदिक्षितधर्मनिमित्तकत्वैतदन्यतरसम्बन्धेन । साक्षादित्यस्य अवच्छिन्नेत्यत्रान्वयः । निरूपितं चैतत् पुरस्तात् । शब्दतः स्थानीत्यस्य अल्त्वव्याप्यधर्मावच्छिन्नस्थानिताश्रय इत्यर्थः । अल्पर्याप्तस्थानिताश्रय इत्यर्थो वा । (२)**अन्यतराल्वृत्तिधर्मेति** । तादृशस्थानितानिरूपितादेशताश्रयधर्मिकारोपप्रकारीभूतधर्मेण साक्षादवच्छिन्नोद्देश्यतासामानाधिकरण्यं, स्ववृत्यल्त्वव्याप्यत्वम् , एतदन्यतररूपं धर्मेऽन्यतराल्वृत्तित्वं विवक्षितमिति भावः । (३)**इट ईटीति सिध्यतीति** । "ग्रहोऽलिटि" (पा०सू० ७।२।३७) इतिसूत्रीयस्थानिताया इट्त्वावच्छिन्नत्वेन स्थानितावच्छेदकेऽल्त्वव्याप्यधर्मत्वस्य अल्पर्याप्तस्थानितावच्छेदकत्वस्य वाऽभावात् , तादृशस्थानितानिरूपितादेशताश्रयधर्मिकारोपप्रकारीभूतेट्त्वस्य च "इट ईटि" (पा०सू०

समुदायाश्रयणात् । अन्यथा टस्यानुबन्धत्वादिकारस्यैवोभयत्राश्रयणमित्त्वलि्वधित्वं स्यात् । अत्र सूत्रे विशेषातिदेशोऽपि । अन्यथा इडादेरपि वल्सत्त्वात् वलादित्वस्य तद्विशेषधर्मत्वात् उपस्थितधर्मैस्तद्व्यापकधर्मैश्च विध्याकाङ्क्षापूरणे सति तदतिरिक्तविशेषग्रहणे मानाभाव इत्येतन्न्यायमूलकेन सामान्यातिदेशे (१)विशेषानतिदेशेन सिद्धौ विशेषणतयाऽलाश्रयणे निषेध इत्येतत्प्रतिपादकस्यानल इत्येव सिद्धे कृतस्य विधिग्रहणस्य वैयर्थ्यं स्यात् । हला दिक्ङिन्निमित्तकेत्वप्रतिषेधकात् (२)"नल्यपि" (पा०सू० ६।४।६९) इति लिङ्गाच्च । अनुबन्धकार्ये त्वनल्विधाविति निषेधो न, अनुबन्धानामनेकान्तत्वात्, एकान्तत्वेऽपि शिद्ग्रहणेन तेषामल्व्यवहाराभावज्ञापनात् । "नानुबन्धकृतमनेकाल्त्वम्" (प० ६) इति ज्ञापयतीति भाष्ये (३)ऽल्त्वव्यवहाराभावबोधनद्वारेति शेषः । ध्वनितञ्चेदं "क्ङिति च" (पा०सू० १।१।५) "गाङ् लिटि" (पा०सू० २।४।४९) "हलः श्नः" (पा०सू० ३।१।८३)

---

८।२।२८) इतिशास्त्रीयोद्देश्यतायाः साक्षादनवच्छेदकत्वाच्चेति भावः । (१)**विशेषानतिदेशेनेति** । सादृश्यप्रतियोगितावच्छेदकधर्मव्यापकधर्मस्यैवातिदेशो भवति; न तु सादृश्यप्रतियोगितावच्छेदकधर्माव्यापकधर्मस्येत्यर्थः । (२)**न ल्यपीति लिङ्गाच्चेति** । वस्तुतस्तु विशेषानतिदेशेऽपि न क्षतिः । "स्थानिवदादेश" (पा०सू० १।१।५६) इत्यस्य संग्रहवाक्यतया तदादेशस्तत्स्थानिवद्भवति इत्यतिदेशवाक्यकल्पनाया आवश्यकत्वेन 'प्रदाय'इत्यादौ अयं ल्यप् एतत्क्त्वावद्भवति इत्यतिदेशवाक्ये सादृश्यप्रतियोगितावच्छेदकैतत्क्त्वात्वव्यापकत्वस्य क्त्वे सत्त्वेन"नल्यपि" (पा० सू० ६।४।६९) इत्यस्य वैयर्थ्याभावात् । अत एव "जजागरतुः" इत्यादौ गुणः सिध्यति । अन्यथा "आहतुः"इत्यादौ अतुसः स्थानितसो ङितोऽपि सत्त्वेन त्वन्मतेऽतुस् तस्वद्भवति इत्यतिदेशवाक्यकल्पनया विशेषधर्मातिदेशस्वीकारेण च अविच्छिन्नल्ङितिस्वयुक्त्या गुणनिषेधो दुर्वारः स्यात् । (३)**अल्त्वव्यवहाराभावबोधनद्वारेति** । अनुबन्धघटितबोधकवृत्तयो येऽनुबन्धत्वघटितातिरिक्ता आनुपूर्वीभिन्नाश्च धर्माः तन्निमित्तके कार्ये अनुबन्धानामविद्यमानवत्त्वमिति ज्ञापनद्वारेत्यर्थः । तथा च प्रकृते कित्वस्यानुबन्धत्वघटितत्वेन तद्व्यतिरिक्तोऽल्त्वव्याप्यधर्मघटितो धर्मोऽल्विधित्वरूपो धर्मस्तद्धर्मनिमित्तकेऽनल्विधाविति निषेधे कर्तव्येऽनुबन्धककारस्याविद्यमानत्वान्न दोष इत्यर्थः । वस्तुतस्तु"न ल्यपि" (पा०सू० ६।४।६९) इति लिङ्गेन इत्पदार्थविशेष्यतानिरूपितप्रकारतावच्छेदकातिरिक्तत्वेनाल्त्वव्याप्यधर्मे विशेषणदानान्न दोष इति दिक् ।

इति सूत्रेषु **भाष्ये** । तत्राऽऽद्ये "यासुटो ङिद्वचनात् ङिदादेशा ङितो न इति ज्ञाप्यते" इत्युक्तम् । द्वितीये गाङो ङित्त्वस्य सानुबन्धकादेशे इत्कार्याभावज्ञापकतोक्ता, तिबाद्यादेशेषु पित्त्वासिद्ध्या दूषितं च ज्ञापकम् । अन्त्ये शानचः शित्त्वस्य सार्वधातुकादेशेऽनुबन्धास्थानिवत्त्वज्ञापकत्वमुक्तम्, उक्तदूषणैरेव दूषितञ्च । अन्यथाऽनल्विधाविति निषेधेन तत्त्वाप्राप्त्या ज्ञापकत्वासङ्गतिः, तिबाद्यादेशेषु पित्त्वाद्यसिद्धिश्चेति बोद्धव्यम् ।

**अचः पर** (पा०सू० १।१।५७) । आदेशग्रहणमनुवर्त्तते, तदनुरोधात् 'अचः' इति स्थानषष्ठी । 'परस्मिन्' इत्यादेशविशेषणं, तदाह—**परनिमित्त इत्यादि** । (१)अच एवादेश इत्य

(१)**अच एवाऽऽदेश इति** । अच्त्वपर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नानुयोगिताकपर्याप्तिकस्थानिताक आदेश इत्यर्थः । अच्त्वप्रतियोगिका या पर्याप्तिस्तदीया याऽनुयोगिता तदवच्छेदको यो धर्मस्स एव स्थानिताप्रतियोगिका या पर्याप्तिस्तदीयानुयोगितावच्छेदकोऽप्यपेक्षित इति यावत् । यथा 'निगाल्यते' 'कथयति' इत्यादौ अच्त्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकीभूतो धर्म इकारवृत्तितद्व्यक्तित्वम् अकारवृत्तितद्व्यक्तित्वञ्च, तदेव णिलो[पाल्लो]पीयस्थानितापर्याप्त्यनुयोगित वच्छेदकमिति लक्षणसमन्वयः । **यत्तु** अच्त्वव्याप्यधर्मावच्छिन्नस्थानितानिरूपितादेशताश्रय इति अच एव आदेश इत्यस्यार्थ इति, तन्न, 'निगाल्यते' इत्यादौ णिलोपस्य स्थानिवत्त्वानापत्तेः । अत एव 'अचः' इति चरितार्थम् । अन्यथा 'यायावरः' इत्यादौ यलोपस्य स्थानिवत्त्वेनैव "आतो लोप इटि च" (पा०सू० ६।४।६४) इति लोपानापत्त्या वरे—ग्रहणवैयर्थ्येन, "धिन्विकृण्व्योर च" (पा०सू० ३।१।८०) इति लोपेनैव सिद्धे अकारविधानेन च हलादेशो न स्थानिवदिति कल्पनेन सर्वसामञ्जस्ये तद्वैयर्थ्यं स्पष्टमेव । यदि च पिस्धातोरिगुपधलक्षणे के तदन्ताचारक्विपि तदन्तात्कर्तरि क्विपि तस्मात् आचारक्विबन्तात् "स्थेशभास" (पा०सू० ३।२।१७५) इति वरचि गुणार्थमतो लोपस्य स्थानिवत्त्वाभावाय वरे इति चरितार्थम्, एवं "धिन्विकृण्व्योर च" (पा०सू० ३।१।८०) इत्यत्रत्याकारविधानं "यथोत्तरं मुनीनां प्रामाण्यम्" (प०) इति ध्वननायाऽऽवश्यकमिति तर्हि 'हतः' इत्यादौ नलोपस्य स्थानिवत्त्वेनैव अतो लोपाप्राप्त्या तत्र लोपवारणाय कृतस्यार्धधातुके इत्यस्यावृत्त्याऽऽर्धधातुकोपदेशे यदकारान्तमित्यर्थस्य वैयर्थ्येन हलादेशो न स्थानिवदित्युक्त्यैव सामञ्जस्ये अज्ग्रहणसामर्थ्येन निरुक्तार्थलाभ इति । यदि तत्रापि राधातोः क्ते तस्माण्णिचि चङि 'अरीरतत्' इत्यादौ 'वृत्रहभ्याम्' इत्यादौ च लोपवारणायार्धधातुकोपदेशकाले

र्थः। तेन (१)मरुतमाचष्टे 'मारयति' इत्यादौ वृद्धिः । अत्र स
यदकारान्तमित्यर्थस्यावश्यकत्वम्। न च "नाग्लोपि" (पा०सू० ७।४।२) इति
प्रत्याहारग्रहणं ज्ञापकम्, अन्यथाऽज्झलादेशस्यापि स्थानिवद्भावेनैव ह्रस्ववारणे
यर्थ्यं स्पष्टमेवेति वाच्यम्। चङ्परनिर्ह्रासे स्थानिवत्त्वस्य प्रतिषिद्धत्वात् प्रत्या
ग्रहणसार्थक्यात्। एवं तर्हि चङ्परनिर्ह्रासे स्थानिवत्त्वनिषेधस्यैव प्रकृतार्थज्ञापक
सम्भवात्। न च 'अपीपठत्' इत्यादौ पठादिधातोर्णिचि तदन्तात्पुनर्णिचि
ह्रस्वार्थत्वं तस्येदानीं सम्भवति, च्ल्यादेशस्य चङः स्थानिवद्भावेऽभावात्तेदे
ह्रस्वप्रवृत्तेः कर्तुमशक्यत्वात्। न चारम्भसामर्थ्यात्तस्यापि स्थानिवद्भावस्य
इति वाच्यम्। "अचः परस्मिन्" (पा०सू० १।१।५७) इत्यत्र अचपदाकरणला
नुरोधेन हलादेशो न स्थानिवदित्येतत्कल्पनस्यैवोचितत्वात्। तस्मात् अतिरिक्तग्र
हणम् अच एवादेश इत्यर्थे ज्ञापकमिति। **अन्ये तु**–"न सम्प्रसारणे सम्प्रसार
(पा०सू० ६।१।३७) इति हलादेशो न स्थानिवदित्यत्रज्ञापकम्। अन्यथा सम्प्र
रणस्य स्थानिवद्भावे सम्प्रसारणपरकत्वाभावान्निषेधाप्रवृत्त्या तद्वैयर्थ्यं स्पष्टमेवेत्या

**परे तु** "गमहन" (पा०सू० ६।४।९८) इत्यत्र अनङीति पर्युदासस्तत्र ज्ञापक
अन्यथा अङादेशस्य स्थानिवद्भावेऽजादिपरकत्वाल्लोपाप्राप्त्या स व्यर्थ इत्याहुः।

**वस्तुतस्तु** पर्याप्तेरौत्सर्गिकत्वेन भाष्यकारेण स्पष्टमुक्तेश्च निरुक्तार्थलाभे तत्र
ज्ञापकानुसरणं वृथैवेति दिक्।

**(१)मरुतमाचष्ट इति।** ननु "वृद्धेर्लोपो बलीयान्" इत्यत्र "नाग्लोपि" (
सू० ७।४।२) इतिसूत्रस्थप्रत्याहारग्रहणज्ञापकपरभाष्यप्रामाण्येनेदुदुपधेभ्य आच
णिचोऽनभिधानस्याऽऽवश्यकत्वेनेदमुदाहरणमसङ्गतम्, स्पष्टञ्चेदं तिङन्तशेखरे
चेत्? न, प्राचीनैः लुङ्येवानभिधानस्वीकारेण तदनुसारेणास्योदाहरणस्य दाना
लाघवात् सामान्यतोऽनभिधानकल्पने तु मरमेतीति मरेत्, तमाचष्टे 'मार
इत्याद्युदाहरणं बोध्यम्। न चात्र 'स्रजयति' 'कनयति' इति भाष्योदाहरणकलि
"णिज्निमित्तककार्यप्रयोज्योपधात्ववतो वृद्धिर्न" इति वृद्धिनिषेधः शङ्क्यः। 'कथय
इत्यत्र स्थानिवद्भावेन वृद्धिवारणपरभाष्यप्रामाण्येन तत्र कार्ये लोपेतरत्वविशेषणा
स्रग्विणमाचष्टे 'स्रजयति' इत्यत्र वृद्धिवारणाय लोपेऽपि लुगितरत्वं लोपपदप्रयो
विधेयताश्रयत्वं वा विशेषणं देयम्। तथा च लुगितरः लोपपदप्रयोज्यविधेयताश्र
वा यो लोपस्तदितरकार्यप्रयोज्योपधात्ववतो वृद्धिर्नेति समुदायार्थः। न चैवं वृत्रह
माचष्टे 'वृत्रहयति' इति "हो हन्तेः" (पा०सू०७।३।५४) इति सूत्रस्थोदाहरणदा
रशेखरग्रन्थविरोधः, तत्र वृद्धेर्दुर्वारत्वादिति वाच्यम्। वृक्षव्यं वृक्षवृश्चं वाऽऽचष्टे वृक्ष
यति, वृक्षवयतेरप्रत्यये (वृक्षव्) इति भाष्योदाहरणेन पदद्वयघटिताङ्गघटको
या वृद्धिर्नेति कल्पनेन 'वृत्रहयति' इत्यत्र वृद्धेरप्राप्तेः।

(१)प्रयोगे योऽच् तत्स्थानिक इत्यर्थः; (२)न तु सूत्रे स्थानित्वेनोपात्ताच्स्थानिक इत्यर्थस्तेन णिलोपादरनेन स्थानिवत्त्वं सिद्ध्यति । अत एव चङ्परनिर्ह्रासे ण्यन्तात् णिचि 'अवीवदत्' इत्यादिसिद्ध्यर्थो निषेधः सार्थकः । अच इति किम्? (३)आगत्य, मलोपस्य स्थानिवत्त्वात् "ह्रस्वस्य" (पा० सू० ६।१।७१) इति तुग्न स्यात् । परस्मिन्निति किम्? (४)युवजानिः । निङः स्थानिवत्त्वेन यलोपो न स्यादिति । पूर्वविधाविति किम्? नैधेयः । निपूर्वाद्धाञः किप्रत्यये आतो लोपे तस्य स्थानिवद्भावाद् (५)त्र्यच्त्वव्यपदेशविरोधात्स्वाश्रयद्व्यच्त्वनिवृत्तौ ढगनापत्तेरिति दिक् ।

**केचित्तु** वृद्धेर्लोपो बलीयानित्यस्य नित्यत्वमूलकत्वमङ्गीकृत्य 'वृत्रहयति' इत्यत्र लोपवृद्ध्योरुभयोरपि नित्यत्वे परत्वाद्वृद्धौ पश्चाल्लोपे लक्ष्ये लक्षणन्यायेन न वृद्धिः, मरुतं मरेतं वाऽऽचष्टे 'मारयति' इत्यादौ तु पूर्वं वृद्धेरप्राप्त्या लोपे वृद्धिः । अत एव 'श्रायम्' इत्यत्र "यस्येतिलोपात् परत्वादादिवृद्धिः" इति कौमुदीग्रन्थः सङ्गच्छते । आदिवृद्धिलोपयोरुभयोरप्यनित्यत्वेन परत्वाद्वृद्धेः सुवचत्वात् । लोपबलवत्त्वस्य सार्वत्रिकत्वे तु तदसङ्गतिः स्पष्टैवेत्याहुः ।

तच्च "कस्येत्" (पा०सू० ४।२।२५) सूत्रस्थशेखरग्रन्थविरुद्धम् । तत्र हि तत्सूत्रस्थभाष्यादिप्रामाण्येन लोपबलवत्त्वस्य सार्वत्रिकत्वं व्यवस्थापितमिति तत्रैव द्रष्टव्यम्, विस्तरभयान्नेह प्रतन्यते । अत एव जगदाचष्टे 'जागयति' इत्यादौ वृद्धिः सिद्ध्यतीति तत्त्वम् । देवदत्तऋट् इत्यस्माण्णिचि टिलोपे 'देवदत्तापयति' इत्यादौ पुक्प्रतिबन्धार्थं टिलोपस्य स्थानिवत्त्वापत्तिरपि "अच एवादेश" इत्यर्थास्वीकारे दूषणं बोध्यमिति दिक् । **(१)प्रयोगे योऽच् तत्स्थानिक इति ।** अच्त्वपर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नानुयोगिताकपर्याप्तिकस्थानिताक इत्यर्थः । **(२)न तु सूत्रे स्थानित्वेनोपात्ताजिति ।** अच्त्वव्याप्यधर्मावच्छिन्नस्थानिताक इत्यर्थो नेत्यर्थः । **(३)आगत्येति ।** न च सूत्रे आदेशपदश्रवणात्स्थानिभूतादचः पूर्वत्वेन दृष्टस्याऽऽदेशविधौ स्थानिवदित्यर्थ इति नायं दोष इति वाच्यम्, 'बेभिदि ब्राह्मणकुलानि' इत्यादौ नुमापत्तेस्तथा स्वीकर्तुमशक्यत्वात् । **(४)युवजानिरिति ।** न च निङादेशे स्थानिवद्भावेनाऽऽकारवृद्धावपि नकारे वल्त्वानपायाल्लोपो निर्बाधः । किञ्च 'जायायो निः' इतिन्यासेनादोषः, जायाशब्दावयवयाशब्दस्य स्थाने निरित्यादेशः स्यादित्यर्थेन न्यादेशस्याच्पर्याप्तस्थानिताकत्वाभावादिति वाच्यम्, 'वैयाघ्रपद्यः' इत्यादौ पदादेशप्रतिबन्धार्थं "पादस्य लोपोऽहस्त्यादिभ्यः" (पा० सू० ५।४।१३८) इति लोपस्य स्थानिवत्त्वापत्तेरिति दिक् । **(५)त्र्यच्त्वव्यपदेशविरोधादिति ।** संख्यात्वव्याप्यकिञ्चिद्धर्मप्रकारकनिश्चयस्य संख्यात्वव्याप्यधर्मान्तरप्रकार-

अत्र स्थानिनि सति यद्भवति तदादेशेऽपि भवति, स्थानिनि (१)य
भवति तदादेशेऽपि नेति भावाभावयोरुभयोरप्यतिदेशः । तत्र भावोदाह
रणं 'निगाल्यते' इति, अन्त्योदाहरणं 'पटयति' इत्यादि । स्थानिनिमित्तं
भवत्यादेशनिमित्तकं नेति च तदर्थः । लघूपधत्वसम्पादनद्वारा लोपनिमित्तं
वृद्धिरित्याहुः ।

**स्थानिभूतादच इति** । सूत्रे श्रवणाद्व्याख्यानाच्च तस्यैव पूर्वत्वेऽ
धित्वमिति भावः । "पूर्वविधौ" इत्यस्य पूर्वसम्बन्धिन्येव शास्त्रविधेये कर्त
इत्यर्थः । तेन पूर्वपरयोर्विधौ न । तेन (२)आरतुः' इत्यादौ "ऋच्छत्यॄ

---

कज्ञानसामान्यप्रतिबन्धकत्वादित्यर्थः । **(१)यन्न भवतीति** । स्यादेतत्, देव
क्विपि 'दयूः' इत्यादौ स्थानिनि वकारे सति अभवतोऽयादेशस्य लोपादेशेऽप्यभावाप
न चादेशे स्थानिनिवृत्तिधर्मसम्भावनायां यद् भवति तद् भवति यन्न भवति तन्न भ
तीत्यर्थेन न दोषः, अत एव प्रकृतसूत्रस्थं "परस्मिन्निति किं युवजानिः, नैतदस्ति
प्रयोजनं न्यादेशघटकं नकारमादाय लोपो भविष्यति" इति **भाष्यं** सङ्गच्छते; इ
वाच्यम्, 'एषो गमयति' इत्यादौ "एतत्तदोः" (पा० सू० ६।१।१३२) इति सुलो
पत्तेरिति चेत्? मैवम्, स्थानी न निवृत्तः आदेशो न जात इति सम्भावनायां यद्भ
वति तद् भवति यन्न भवति तन्न भवति इत्यर्थेनादोषात् ।

**परे तु** आदेशे स्थानिनिवृत्तिधर्मसम्भावनायां यद् भवति तद् भवति यन्न भव
तन्न भवति इत्येवार्थः । अत एव परस्मिन्निति किं युवजानिरित्येतत्फलखण्डनपरभाष्
सङ्गच्छते । न च 'एषो गमयति' इत्यादौ सुलोपापत्तिरिति वाच्यम्, इष्टत्वा
अत एव 'एष यूनः पश्य' इत्यादौ "न सम्प्रसारणे" (पा०सू० ६।१।३७) इ
सूत्रसत्त्वे सम्प्रसारणादसम्प्रसारणे इति कल्पे च न फलभेदः । न च 'इयाय
इत्यादौ स्थानिवद्भावेनेयङ् स्यादिति शङ्काया असङ्गतिरिति वाच्यम्, युक्तिबलादस्य
सिद्धौ कस्यचिद्ग्रन्थकृतो विपरीतलेखनस्याबाधकत्वेनेष्टापत्तेरित्याहुः ।

**(२) आरतुरित्यादाविति** । ननु पूर्वस्यैव विधावित्यर्थाभावेऽपि प्रकृते 
दोषः । तथा हि ऋ अतुस् इत्यस्यां दशायां द्वित्वं बाधित्वा पूर्वं गुणे पश्चाद् द्वित्वे
स्थानिभूतादचः पूर्वत्वेन दृष्टत्वाभावेन स्थानिवत्त्वाप्राप्तेः । न च "द्विर्वचनेऽचि"
(पा०सू० १।१।५९) इति निषेधात्कथं द्वित्वात्पूर्वं गुणप्रवृत्तिरिति वाच्यम् । द्वित्व
निमित्ततापर्याप्त्यधिकरणीभूतसमुदायघटकाच्पर्याप्तनिमित्तताकत्वस्य गुणेऽभावेन "द्वि
र्वचनेऽचि" (पा०सू० १।१।५९) इति निषेधस्याप्राप्तेः । न च 'चिकीर्षामि' इत्यादौ
चिकीर्ष अ मि इति स्थिते वार्णपरिभाषया दीर्घे पूर्वस्यैव विधावित्यर्थाभावे "अतो

ताम्" (पा०सू० ७।४।११) इति गुणस्य सवर्णदीर्घे न स्थानिवत्त्वम् । वस्तुतोऽत्र पूर्वविधिशब्दे तन्त्रम् । एकस्योक्तोऽर्थः, द्वितीये भावे किः । सम्बन्धसामान्यषष्ठ्यन्तपूर्वशब्देन समासः । विधिर्भावः पूर्वसम्बन्धिभावे तत्स्थितौ स्थानिवदित्यर्थः । अत एव 'ऐनेयः' इत्यादौ "यस्येति च" (पा०सू० ६।४।१४८) इति लोपे तस्य स्थानिवत्त्वात्सन्नियोगशिष्टन्याय-प्राप्तनिवृत्तिप्रतिबन्धेन नकारस्थितिः । अत एव "न पदान्त" (पा०सू० १।१।५८) सूत्रे पञ्चेन्द्राण्यो देवता अस्य 'पञ्चेन्द्रः' इति 'लुकि न स्थानिवत्' इत्यस्योदाहरणं दत्तं **भाष्ये** । अन्यथा तत्र पूर्वत्वेन दृष्टस्य सम्बन्धिनः कस्यचिद्विधेयस्याभावात्स्थानिवत्त्वाप्राप्तिरेवेति तदसङ्गतिः स्पष्टैव । प्रकृतसूत्रेऽपि **भाष्ये** "कर्मसाधनस्य विधिशब्दस्योपादाने न सर्वमिष्टं सङ्गृहीतमिति भावसाधनो विज्ञास्यते पूर्वस्य विधानं प्रति पूर्वस्य भावं प्रति स्थानिवत्" इत्युक्तम् । तत्र भावसाधन इत्यस्य(१)सोऽपीत्यर्थः । पूर्वत्वञ्च व्यवहिताव्य-

---

गुणे" (पा०सू० ६।१।९७) इति पररूपापत्तिरिति वाच्यम्, "न हि रजतत्वभ्रम-प्रयुक्ता प्रवृत्तिः शुक्तिं न गोचरयति" इति न्यायेन पररूपेऽपि आकारस्यैव जायमानत्वात्, इति चेत् ? मैवम्, अन्धातोर्विचि पट्टशब्देन समासे तस्माच्छसि "पट्वनः" इत्यादौ "अचः परस्मिन्" (पा०सू० १।१।५०) इति स्थानिवद्भावेन संयोगसंज्ञाया अभावेन "न संयोगाद्वमन्तात्" (पा०सू० ६।४।१३७) इति निषेधानापत्तेः । पूर्वस्यैव विधावित्युक्तौ तु न दोषः । पूर्वस्यैव विधावित्यस्य पूर्वत्वपर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नानुयोगिताकपर्याप्तिकोद्देश्यताके विधौ इत्यर्थेन संयोगसंज्ञायाः पूर्वपरोभयोद्देश्यकत्वादिति दिक् ।

**(१)सोऽपीत्यर्थ इति** । वस्तुतस्तु स्थानिभूतादचः पूर्वत्वेन दृष्टस्य विधौ स्थितौ कर्तव्यायामित्यर्थास्वीकारेऽपि न क्षतिः । न च "लुकि न स्थानिवत्; पञ्चेन्द्राण्यो देवता अस्य पञ्चेन्द्रः" इति भाष्यासङ्गतिः, स्थानिभूतादचः पूर्वत्वेन दृष्टस्याऽऽनुकः कस्यापि विधेरभावात्, किञ्च 'ऐनेयः' इत्यादौ स्थानिभूतादचः पूर्वत्वेन दृष्टस्य नकारस्य कस्यापि विधेरभावेन स्थानिवत्त्वाप्रवृत्त्या तन्निवृत्त्यापत्तिः—इति वाच्यम्, स्थानिभूतादचः पूर्वत्वेन दृष्टयोरानुग्नकारयोः "सन्नियोगशिष्टानामन्यतरापाये" (प०) इति शास्त्रेण लोपे कर्तव्ये तत्प्रतिषेधार्थं स्थानिवद्भावप्रवृत्तेः सूपपादत्वात् । अत एव "कर्मसाधनस्य विधिशब्दस्योपादाने न सर्वमिष्टं सङ्गृहीतमिति भावसाधनो विज्ञास्यते" इति भाष्ये अपिशब्दो न श्रूयत इति बोध्यम् ।

वहितसाधारणम्, अव्यवहितग्रहणे मानाभावात्, स्वरे निषेधाच्च। तेन 'पटयति' इति सिद्धम्। प्रकृते च द्वित्वनिषेधे स्थानिवत्त्वप्राप्तिः।

**न पदान्त** (पा०सू० १।१।५८)। अत्र द्विर्वचनसवर्णादिग्रहणं वतिघटिता(१)न्यातिदेशानां त्रिपाद्यामपि प्रवृत्तिबोधनार्थम्। तेन 'रामः' इत्यादौ विसर्गादिसिद्धिः। अत्र विधिशब्दो (२)भावसाधनः। पदान्तेत्यत्रान्तशब्दश्चरमावयववाची। कर्मषष्ठ्या समासः। तेन 'एषो यन् हसति' इत्यादौ "एतत्तदोः" (पा०सू० ६।१।१३२) इति सुलोपो न। इणः शतरि 'यन्' इति रूपम्। तत्र यणः स्थानिवत्त्वात्। उत्वे च न स्थानिवत् अनेन निषेधात्। स्पष्टञ्चेदं **भाष्ये** इति **भाष्यप्रदीपोद्द्योते** निरूपितम्। अत्र पदेऽन्त इति सप्तमीसमासो **भाष्ये** उक्तः, तेन प्रत्यासत्त्या पदे परतः चरमावयवे कार्ये कर्त्तव्ये (३)परपदस्थाजादेशस्यैवानेन स्थानिवत्त्वनिषेध इति (४)वेतस्वान् इत्यादौ न दोषः। न चैवमपि "पूर्वत्रासि-

---

(१)**अन्यातिदेशानामिति**। इदं फलितार्थकथनं, ज्ञाप्यांशस्तु वतिघटितातिदेशास्त्रिपाद्यां प्रवर्तन्ते इत्येव। अन्यथाऽन्यातिदेशानां वतिघटितानां त्रिपाद्यां प्रवृत्तावपि स्वांशे चारितार्थ्यं दुर्निरूपं स्यात्। (२)**भावसाधन इति**। वस्तुतस्तु कर्मसाधनत्वेऽपि कर्मधारयसमासस्वीकारेण पदचरमावयवादिरूपे विधेये कर्तव्ये इत्यर्थे न कोऽपि दोष इति बोध्यम्। (३)**परपदस्थाजादेशस्यैवेति**। अत एव 'प्रत्येषिषन् देवदत्ताः' इत्यादौ जुस्प्रतिबन्धार्थं पररूपस्य न स्थानिवत्त्वानिषेध इति बोध्यम्। (४)**वेतस्वानित्यादाविति**। न च "तसौ मत्वर्थे" (पा०सू० १।४।१९) इति भसंज्ञया पदसंज्ञाया बाधात् पुनरपि रुत्वशङ्का भाष्योक्ताऽसङ्गतेति वाच्यम्, अस्मादेव भाष्यप्रामाण्यात्परम्परया पदचरमावयवसाधकस्य स्थानिवत्त्वस्यानेन न निषेध इति कल्पनेनादोषात्। तथाहि—तसाविति भसंज्ञायां कर्तव्यायां टिलोपस्थानिवद्भावस्य भसंज्ञाप्रतिबन्धद्वारा पदसंज्ञासम्पादनद्वारा रुत्वसम्पादकत्वेन परम्परया पदचरमावयवरुत्वसम्पादकत्वेन परम्परया पदचरमावयवसाधकत्वेन निषेधाऽप्रवृत्त्या स्थानिवत्त्वेन भसंज्ञाया अप्रवृत्तिः। पदसंज्ञाप्रतिबन्धार्थं स्थानिवत्त्वन्तु न भवति। अस्मादेव भाष्यप्रामाण्यात् परम्परया पदचरमावयवप्रतिबन्धकस्याप्यनेन निषेध इति कल्पनेन पदसंज्ञाप्रतिबन्धद्वारा रुत्वप्रतिबन्धकत्वेनानेन निषेधात्। अत एव 'षडिकः' इत्यादौ जश्त्वसिद्धिः। तथाहि—षडङ्गुलिदत्तशब्दाट्ठचि "ठाजादावूर्ध्वं द्वितीयादचः" (पा० सू० ५।३।८३) इति ङ्गुलिदत्तस्य लोपे "यस्येति च" (पा०सू० ६।४।१४८) इति

द्धीये न स्थानिवत्" (का०वा०) इति निषेधोऽत्र दुर्वारः । पदेऽन्त इत्यर्थेन तत्र स्थानिवत्त्वनिषेधव्यावृत्तिपर**भाष्य**प्रामाण्येन पूर्वत्रासिद्धे इत्यत्र (१)पदचरमावयवविधायकातिरिक्तस्यैव त्रैपादिकस्य ग्रहणात् । अत एव (२)महिष्मान् इत्यत्र जश्त्वं न । सूत्रे जश्पदेन (३)"झलां जश् झशि" (पा०सू०८।४।५३) इत्यस्यैव ग्रहणम् , चरसन्निहितस्यैव ग्रहणौचित्यात् ।

---

अल्लोपे भसंज्ञाप्रतिबन्धार्थमल्लोपस्थानिवद्भावस्य पदसंज्ञासम्पादनद्वारा जश्त्वसाधकत्वेनानेन निषेधाभावे स्थानिवत्त्वेन भसंज्ञाया अप्रवृत्तेस्तत्सिद्धिः । पदसंज्ञाप्रतिबन्धकस्थानिवत्त्वं तु न; तस्य पदसंज्ञाप्रतिबन्धद्वारा जश्त्वप्रतिबन्धकत्वेनानेन निषेधादिति दिक् ।

(१)**पदचरमावयवविधायकातिरिक्तस्यैवेति** । ननु—'पिपठीभ्याम्' इत्यादौ रुत्वप्रतिबन्धकस्थानिवत्वस्य निषेधो न स्यात् , "ससजुषोरुः" (पा० सू० ८।२।६६) इत्यस्य पदचरमावयवविधायकत्वेन "पूर्वत्रासिद्धीये न" (का० वा०) इत्यस्याप्रवृत्तेः । न च 'वेतस्वान्' इतिभाष्यप्रामाण्येन तद्धितनिमित्तकपदसंज्ञावच्चरमावयवविधायकातिरिक्तत्वेन "पूर्वत्रासिद्धीये न स्थानिवत्" (का० वा०) इत्यत्र सङ्कोचान्नायं दोष इति वाच्यम् , पिपठीष्ट्वम्' इत्यादौ तद्धितनिमित्तकपदसंज्ञाया एव सत्त्वेन रुत्वप्रतिबन्धार्थं स्थानिवत्वप्रवृत्तौ "र्वोः" (पा० सू० ८।२।७६) इति दीर्घानापत्तेः-इति चेत् ? न, प्रत्ययविशिष्टपदसंज्ञावच्चरमावयवविधायकातिरिक्तत्वेन सङ्कोचस्य विवक्षणीयत्वात् । वै०—च स्वप्रयोज्यत्व-स्वप्रयोज्यकार्यप्रयोज्यत्वोभयसम्बन्धेन । अस्ति च 'वेतस्वान्' इत्यादौ पदसंज्ञायां ड्मतुप्प्रयोज्यत्व-ड्मतुप्प्रयोज्यटिलोपप्रयोज्यत्वोभयसम्बन्धेन वैशिष्ट्यमिति न दोष; 'पिपठीभ्याँ' 'पिपठीष्ट्वम्' इत्यादौ तु पदसंज्ञायां भ्याम्प्रयोज्यत्वस्य सत्त्वेऽपि तत्प्रयोज्यकार्यप्रयोज्यत्वस्याभावात् , क्विप्प्रयोज्यातो लोपरूपकार्यप्रयोज्यत्वस्य सत्त्वेऽपि क्विनिमित्तकत्वस्याभावान्न दोषः । मूलन्तु लोपनिमित्तप्रत्ययनिमित्तकपदसंज्ञावत्परं पदचरमावयवेत्यत्रत्यं पदपदमिति रीत्या योज्यमिति दिक् । लोपनिमित्तप्रत्ययनिमित्तकपदसंज्ञावच्चरमावयवविधायकातिरिक्तत्वेन "पूर्वत्रासिद्धीये" (का०वा) इत्यत्र सङ्कोचे फलमाह-(२)**महिष्मानिति** । 'महिष्मान्' इत्यादौ "न पदान्त" (पा० सू० १।१।५८) सूत्रेण जश्विधौ स्थानिवत्त्वनिषेधमाशङ्क्याह-(३)**"झलां जश् झशि" इत्यस्यैवेति** । ननु "अताद्धिते" इत्यस्यारम्भप्रत्याख्यानयोः फलैक्याय "पदव्यवायेऽपि" (पा०सू०८।४।३८) इत्यत्र पदपदं पदत्वयोग्यप्रातिपदिकपरमित्यवश्यं वक्तव्यत्वेन 'माषकुम्भवापेन' इत्यादौ दोषाभावेन "उत्तरपदत्वे च" (का०वा०) इत्यत्र कार्यित्वनिवेशो विफलः । तथा च 'गोचा' इत्यादौ सुबुत्पत्त्यनन्तरं समासेऽपि "उत्तरपदत्वे च" (का०वा०) इति निषेधात्कथं "न पदा-

कार्यकालपक्षेऽपि त्रिपाद्यामन्तरङ्गपरिभाषा न प्रवर्त्तते इति वक्ष्यते इति न तयाऽस्य सिद्धिः। 'गोचा' इत्यादौ "गतिकारकोपपदानाम्"[1] (प० इत्यस्यानित्यत्वेन सुबुत्पत्त्यनन्तरमेव समासः। "उत्तरपदत्वे च" (का० वा०) इति प्रत्ययलक्षणप्रतिषेधश्च प्रत्यासत्त्योत्तरपदस्य कार्यित्वे एवेति न दोषः। पदे इति (१)पदत्वयोग्योपलक्षणं वा। अत्रेदं **भाष्यमेव** मानम्। अत्र पदचरमावयवादि(२)साधकः (३)प्रतिबन्धकश्च स्थानिव-

---

न्त" (पा०सू०१।१।५८) इति निषेध इत्याशङ्क्याह--(१)**पदत्वयोग्योपलक्षणं वेति।** (२)**साधक इति।** अत्र साधकत्वं साक्षाद्विवक्षितम्। अत एव 'वे-स्वान्' इत्यादौ रुत्वशङ्कापरं **भाष्यं** सङ्गच्छते। अन्यथा भसंज्ञाप्रतिबन्धकस्य तत्प्रति-बन्धद्वारा रुत्वसम्पादनेन परम्परया रुत्वसाधकस्य स्थानिवत्त्वस्याप्यनेन निषेधे तदस-ङ्गतिः स्पष्टैव। (३)**प्रतिबन्धकश्चेति।** अत्र च प्रतिबन्धकत्वं साक्षात्परम्परया च ग्राह्यम्। अत्रापि 'वेतस्वान्' इत्यत्र रुत्वशङ्कापरभाष्यमेव मानम्। अन्यथा पदसंज्ञा-प्रतिबन्धकस्य तत्प्रतिबन्धद्वारा पदचरमावयवप्रतिबन्धकस्थानिवत्त्वस्यानेन निषेधा-भावे पदसंज्ञाया एवाभावेन तदसङ्गतिः स्पष्टैवेति।

अत्रेदं बोध्यम्–साक्षात्पदचरमावयवसाधकः, परम्परया पदचरमावयवसाधकः, सा-क्षात्पदचरमावयवप्रतिबन्धकः, परम्परया पदचरमावयवप्रतिबन्धकश्चेति चतुर्विधः स्था-निवद्भावः प्राप्नोति। तत्र द्वितीयं वर्जयित्वा त्रिविधोऽपि स्थानिवद्भावोऽनेन निषिध्य-ते। तत्र साक्षात्पदचरमावयवसाधकस्थानिवत्त्वानिषेधे 'सध्रीचः' इत्युदाहरणम्। अत्र हि "अचः" (पा०सू० ६।४।१३८) इत्यल्लोपस्य स्थानिवद्भावः साक्षात्पदचरमावयवप-साधकः। साक्षात्पदचरमावयवप्रतिबन्धकस्थानिवत्त्वानिषेधस्य फलम्—'एषो यद्य हसति' इति। अत्र इणो यणादेशस्य स्थानिवत्त्वं साक्षात्पदचरमावयवोत्वप्रतिबन्धकम्। ननु पदसंस्कारपक्षे तत्र स्थानिभूतादचः पूर्वत्वेन दृष्टत्वाभावात्स्थानिवत्त्वाप्राप्तिः। न च देवदत्तस्य नः देवदत्तनः, तस्मादाचारक्विबन्तात्क्विपि तस्मादौप्रत्यये 'देवदत्तन् औ' इति स्थिते साक्षात्पदचरमावयवदीर्घप्रतिबन्धकस्थानिवत्त्वस्य निषेधः फलमिति वाच्यम्, दीर्घविधौ तन्निषेधात् "क्वौ लुप्तं न स्थानिवत्" (का०वा०) इति निषेधाच्च। न च दीर्घ-पदेन त्रैपादिकदीर्घस्यैव ग्रहणादिदं फलं सम्यगेवेति वाच्यम्; मानाभावात्, इति चेत्? मैवम्, 'यशस्स्त्र' इत्यस्मादाचारक्विबन्तात् "अ प्रत्ययात्" (पा०सू० ३।३।१०२) इत्यनेन अप्रत्यये गुणे तस्य स्थानिवद्भावः साक्षात्पदचरमावयवोत्वप्रतिबन्धक इति 'यशोऽराः' इति फलस्य विवक्षणेनादोषात्। परम्परया पदचरमावयवप्रतिबन्धकस्था-निवत्त्वनिषेधस्य फलं 'दध्यारः' दध्यर्चः' इति। अत्र हि "कर्मण्यण्" (पा०सू० ३।२। १) इति अण्निमित्तकवृद्धिगुणयोः स्थानिवद्भावः "अचः" (पा०सू० ६।१।१२४)

द्भावो निषिध्यते; विनिगमनाविरहात् । एतत्सूत्र**भाष्य**—"क्रमेर्णिङ्" (पा०सू० ३।१।३०) इत्यादिसूत्रभाष्यैः "पूर्वत्रासिद्धे न स्थानिवत्" इत्यवष्टभ्य वरेयलोपस्वर (१)दीर्घग्रहणवर्जं द्विर्वचनादि प्रत्याख्यातमिति लभ्यते । **निषेध इति ।** द्विर्वचनग्रहणात् "पूर्वत्रासिद्धे" इति निषेधाद्वेति भावः ।

**दकार इति** । स्थानत आन्तर्यादिति भावः ।

**अदर्शनम्** (पा०सू० १।१।६०) । स्थाने इति वर्त्तते, प्रसङ्गे सतीति तदर्थः, तदाह—**प्रसक्तस्य इति ।** शास्त्रतोऽर्थतो वेति भावः । अत्र दृशिर्ज्ञानसामान्ये । तत्र ज्ञानस्यावर्जनीयत्वेन तत्सामग्र्यन्तर्गता उच्चारणकृता (२)सत्ता निषिध्यते । तत्र प्रत्ययलोपे शास्त्रतोऽर्थतश्च प्रसक्तोच्चारणस्य लोपविधानेन तस्य तस्मिन् विषये (३)ऽनुत्पत्तेरेवान्वाख्यानं प्रत्ययल-

---

इति प्रकृतिभावसम्पादनद्वारा यण्प्रतिबन्धकः । परम्परया पदचरमावयवसाधकस्थानिवत्त्वस्य निषेधो न भवतीत्यस्य फलं 'षडिकः' इति । अत्र हि भसंज्ञाप्रतिबन्धार्थं स्थानिवद्भावः पदसंज्ञासम्पादनद्वारा पदचरमावयवत्वसम्पादकः । न च "पूर्वत्रासिद्धीये न" (का०वा०) इति निषेधः शङ्क्यः । प्रत्ययविशिष्टपदसंज्ञावच्चरमावयवविधायकातिरिक्तत्वेन सङ्कोचस्योक्तत्वात् । न चैवमपि वागाशीर्दत्तो 'वाचिकः' इत्यादौ जश्त्वापत्तिरिति वाच्यम् । "एकाक्षरपूर्वपदानामुत्तरपदलोपो वक्तव्यः" (का०वा०) इति आशीर्दत्तशब्दस्य लोपेनादोषात् । 'षडिकः' इत्यादौ 'षषष्ठाजादिवचनात्सिद्धम्' इति कुलिदत्तस्य लोप इति जश्त्वम्भवत्येवेति दिक् । **(१)दीर्घग्रहणवर्जमिति ।** न च "जनौः" इत्यादौ दीर्घविधौ स्थानिवद्भावनिषेधात् "सर्वनामस्थाने च" (पा०सू० ६।४।८) इति दीर्घापत्तिरिति वाच्यम् । 'श्रायसौं' इत्यत्रेवाङ्गसंज्ञाप्रतिबन्धार्थं स्थानिवत्त्वेन नान्ताङ्गाभावेन दीर्घाप्राप्तेः, "स्वरदीर्घयलोपेषु लोपाजादेश एव न स्थानिवत्" इति प्रतिप्रसववार्त्तिकाद्वा । अत एव ण्यन्ताण्णौ 'अहीडि' इत्यादौ 'चिण्णमुलोः' (पा०सू० ६।४।९३) इति दीर्घे कर्तव्ये स्थानिवत्त्वं नेति दिक् ।

**(२)सत्ता निषिध्यते इति ।** वस्तुतस्तु उच्चारणाभाव एव अदर्शनपदार्थः; सत्ताया अवर्जनीयत्वात् । **(३)अनुत्पत्तेरेवान्वाख्यानमिति ।** न च 'अकृत' इत्यादौ "ह्रस्वादङ्गात्" (पा०सू० ८।२।२७)इति सिचो लोपे च्लेः श्रवणापत्तिरिति वाच्यम्, "च्लेः सिच्" (पा०सू० ३।१।४४) इत्यस्य च्लित्वावच्छिन्नस्य स्थाने झलादिप्रत्ययाव्यवहितपूर्वत्वविशिष्टं यद् ह्रस्वान्तमङ्गं तदव्यवहितोत्तरत्वाभाववान् सिच्त्वावच्छिन्नो भवतीत्यर्थात् । "ह्रस्वादङ्गाद्" इति च तात्पर्यग्राहकमिति प्रागेवावोचाम । वस्तुतस्तु भावरूपादेश

क्षणार्थमिति बोध्यम् । अर्थस्यैषा सञ्ज्ञा व्याख्यानात् । **यत्तु** "प्रसक्ते किं ग्रामे तिष्ठतीत्यादौ "ल्यब्लोपे" इति पञ्चम्यापत्तेः । अस्ति चात्र स्थे ऽदर्शनम् । शास्त्रतोऽर्थतश्च न तत्प्रसक्तिरिति न दोषः" इति, तन्न, प्रत्यासत्त्या ल्यबन्तार्थकर्माधिकरणयोरेव पञ्चमीविधानेन तस्यात्राप्राप्तेः तत्त्वे तु अस्त्येवार्थतो ल्यबन्तस्य प्रसक्तिः । तस्मात् (१)त्रपु इत्यत्र क्विं ऽदर्शनसत्त्वेन प्रत्ययलक्षणेन तुगापत्तिर्दोषः । कृत्प्रत्ययेन प्रकृत्याक्षेप न । अत्रैव प्रकृतिं विनाऽतिदेशतः प्रत्ययज्ञानसत्त्वेन व्यभिचारात्तदाक्षे सम्भवात् ।

**इति पक्षे इति** । (२)विनिगमनाविरहादिति भावः । द्वित्व त्रैपादिकत्वात्तत्र न यणो बहिरङ्गासिद्धत्वम् । अत एव 'दध्यत्र' इति भाष्ये उदाहृतम् । **धकारयकारयोरिति** । तेन विसर्गादिद्वित्वेनाऽऽधिक्येऽ न क्षतिः । **द्विधामिति** । द्विधत्वं (३)प्रक्रियायां बोध्यम् । "एकस्या आकृ तेश्चरितः प्रयोगो न द्वितीयस्यास्तृतीयस्याश्च भविष्यति" इति "कृञ्चानुप्र ज्यते" (पा०सू० ३।१।४०) इति सूत्र**भाष्योक्त**न्यायेनैकस्य द्वित्वे पर तदभावोऽनुचित इति न वाच्यम्, सार्थकानेकविषये तन्न्यायाङ्गीकारात् यत्रान्याकृतिकरणे भिन्नार्थत्वसम्भावना (४)तद्विषयत्वाच्च । "हलो यमां (पा०सू० ८।४।६४) इति लोपे द्वित्वाभावे चैकधमेव रूपम् ।

---

इव अभावरूपादेशेऽपि स्थानिघटितेऽसाधुत्वम् आदेशघटिते साधुत्वमित्यन्यत्र विस्तरः

**(१) त्रपु इत्यत्रेति** । न च प्रत्ययलक्षणेन पित्कृद्बुद्धावपि ह्रस्वान्ततदादित्वाभावा त्कथं तुगापत्तिरिति वाच्यम्; 'लिट् त्रपु' इत्यादौ प्रत्ययलक्षणेन कृत्परत्वस्य स्वतः पित्कृन्निरूपिततदादित्वस्य च सत्त्वेन प्रसक्तस्येति पदाभावे तुगापत्तेः । मूलं तु 'लिट् त्रपु' इत्यादेरुपलक्षणमिति योजनीयम् ।

**(२) विनिगमनाविरहादिति** । चिन्त्यमिदम् । विनिगमनाविरहेण तात्पर्य निर्णये शाब्दबोधस्यैवानुत्पत्तेः । किन्तु भाष्ये उभयथा व्याख्याकरणेन आनुपूर्व्या द्वयं स्वीक्रियते इति बोध्यम् । ननु पूर्वधस्य जश्त्वेन दकारे द्विधामित्यनुपपन्नमित्यत आह—(३) **प्रक्रियायां बोध्यमिति** । (४)**तद्विषयत्वाच्चेति** । चो हेतौ । यतोऽन्याकृतिकरणे भिन्नार्थत्वसम्भावनाविषयोऽयं न्यायोऽतः सार्थकानेकव्यक्तिविषयोऽयं न्याय इति भावः ।

**नादिन्या** (पा०सू० ८।४।४८)। "यरोऽनुनासिके" (पा०सू० ८।४।४५) इत्यतो यर इति वर्त्तते। पुत्रशब्दस्येत्यवयवषष्ठी। 'आदिनी-शब्दे परे' इति च प्राधान्याद् यर एव विशेषणम्। सूत्रे आदिनीति ङ्य-न्तानुकरणं लुप्तसप्तमीकम्। अत एव "तत्परे च" (का० वा०) इत्यस्या-ऽऽदिनीशब्दो यस्मात्परस्तत्र परे इत्यर्थं **हरदत्तो** व्याख्यत्। अद्धातौ **माधवो**ऽप्येवमेव। ईदृशाक्रोशस्य स्त्रीष्वेव दर्शनाच्च। आक्रोशो निन्दा तदाह—**पुत्रादिनि** इति। तादृशाक्रोशस्य स्त्रीष्वेव दर्शनादाह—**पुत्र-हति** इति। "अनचि च" (पा०सू० ८।४।४७) इति सिद्धे पुत्रस्य क्तान्ते चेद्धतजग्धयोरेव, आक्रोशे एवेति नियमार्थमिदम्।

**संयुक्तेषु** इति। "त्रिप्रभृतिषु"(पा०सू० ६।४।५०) इति सूत्रे वर्णानां सजातीयानामेव ग्रहणं; परस्परसाहचर्यात्। न च तथाऽचः सम्भ-वति। अत एव (१)"अचो रहाभ्याम्"(पा०सू० ८।४।४६) इति सार्थ-कम्। निर्धारणे सप्तमी, 'अच' इत्यनुवर्त्तते, त्रिप्रभृतिसंयुक्तवर्णमध्येऽचः परस्य यरो द्वे वा न स्त इत्यर्थः। तेन 'इन्द्रः' 'राष्ट्रम्' इत्यत्र नकारष-कारयोः प्राप्तद्वित्वस्यैव निषेधविकल्पः। "अनचि च" (पा०सू० ८।४।४७) "सर्वत्रशाकल्यस्य"(पा०सू० ८।४।५१) इत्येव सिद्धे इदं सूत्र-द्वयं विकल्पस्य मतभेदप्राप्तव्यवस्थाबोधनार्थमिति बोध्यम्। "यरोऽनु-नासिके" (पा०सू० ८।४।४५)इत्यतो वेत्यनुवृत्त्या "अनचि" (पा०सू० ८।४।४७) इत्येव सिद्धे तु सूत्रत्रयमपि तथेति बोद्ध्यम्।

**अचो र** (पा०सू०८।४।४६)। अच इति श्रुतत्वाद्व्याख्यानाच्च रहाभ्यां

---

(१) **अचो रहाभ्यामिति सार्थकमिति**। न चाग्रे त्रिप्रभृतिवर्णमध्येऽचः परस्य यरो द्वे वा न स्त इति वक्ष्यमाणत्वेन "अचो रहाभ्याम्" (पा० सू० ८।४।४६) इत्यनेन चाऽचः पराभ्यां रेफहकाराभ्यां परस्य यरो द्वित्वविधानेनोभयोरेकविष-यत्वाभावेन सजातीयत्रिप्रभृतिवर्णग्रहणेऽपि न "अचो रहाभ्याम्" (पा० सू० ८।४।४६) इत्यस्य वैयर्थ्यमिति वाच्यम्। "नेमौ रहौ कार्यिणौ किन्तर्हि निमित्तं द्विर्वच-नस्य" इति भाष्यप्रामाण्येन निमित्तविषयत्वेतरद्विर्वचनीयविषयताश्रयत्वेन ग्रहणे कर्तव्ये रेफस्याविद्यमानवद्भावेनोभयोरेकविषयत्वसत्त्वेनादोषात्।

सम्बध्यते । "तस्मादित्युत्तरस्य" (पा०सू० १।१।६७)इत्येतल्लभ्यमाह
**अचः पराभ्याम्** इति ।

**वा यमि** इति । "झयो हः"(पा०सू० ८।४।६२) इत्यतोऽन्
तरस्यामित्यनुवृत्तेरिति भावः । "दीर्घादाचार्याणाम्"(पा०सू० ८।४।५
इत्युत्तरम् "अनुस्वारस्य ययि"(पा०सू० ८।४।५८) "वा पदान्तस्य
(पा०सू० ८।४।५९) "तोर्लि"(पा०सू० ८।४।६०) "उदःस्था:"(पा
सू० ८।४।६१) "झयो हो"(पा०सू० ८।४।६२) "शश्छोऽटि"(पा
सू० ८।४।६३) इति षट्सूत्रीपाठोत्तरं "झलां जश् झशि"(पा०सू
८।४।५३) "अभ्यासे चर्च"(पा०सू० ८।४।५४) "खरि च"(पा
सू० ८।४।५५) "वाऽवसाने"(पा०सू० ८।४।५६) "अणोऽप्रगृह्यस्य
(पा०सू० ८।४।५७) इति पञ्चसूत्र्याः पाठ इति (१)**भाष्य**सम्मताष्टा
ध्यायीपाठे तु "वाऽवसाने"(पा०सू० ८।४।५६) इत्यतोऽनुवृत्तिर्बोद्ध्या
स्पष्टञ्चास्य वैकल्पिकत्वं "लण्"(मा० सू० ६) सूत्रे **भाष्ये**

**आदित्य** इति । आदित्यशब्दा (२)च्छेषार्थण्यान्ताद्देवतार्थे ण्यः
"यस्येति च"(पा०सू० ६।४।१४८) इत्यल्लोपेऽनेन यलोपः । "आ
त्यस्य"(पा०सू० ६।४।१५१) इति तु न । आपत्यत्वाभावात् । ह
इति किम् ? शय्या । यमामिति किम् ? आध्नोंत् । यमीति किम्
रामाभ्याम् ।

**एचोऽय** (पा०सू० ६।१।७८) । "इचोऽचि यणयवायाव
"अवावौ यि प्रत्यये" इति सूत्रयितुमुचितामित्याहुः । यथासङ्ख्यसूत्रल
मर्थमाह—**क्रमाद्** इति । उदात्तादिगुणयुक्तानामन्यगुणकव्यावृत्ति

(१) **भाष्यसम्मताष्टाध्यायीपाठ इति** । अत एव 'उत्त्कन्दो रोगः इ
दौ "उदः स्थास्तम्भोः" (पा० सू० ८।४।६१) इति सूत्रस्थेन "उत्पूर्वस्कन्देरु
ख्यानम्" (का० वा०) इति वार्त्तिकेन पूर्वसवर्णे "खरि च" (पा० सू० ८।४।
इति चर्त्वसिद्धिः । अन्यथा चर्त्वं प्रति थस्यासिद्धत्वात्तद् दुर्लभमिति बोध्य
(२)**शेषार्थण्यान्तादिति** । अपत्यार्थण्यान्ताद्देवतार्थे ण्ये "आपत्यस्य" (पा०
६।४।१५१) इति यलोपे स्वतो द्वियकारकत्वं दुर्लभमिति भावः ।

स्थानेऽन्तरतमपरिभाषया बोद्ध्या । एतदेवाभिप्रेत्य यथासङ्ख्यसूत्रे **भाष्ये** प्रकृतसूत्रे "स्थानेऽन्तरतम"–(पा०सू० १।१।५०) सूत्रेण व्यवस्थोक्ता–(१)"संवृतावर्णस्य संवृतावर्णो विवृतावर्णस्य विवृतावर्ण" इति । एतद्भाष्यप्रामाण्येन एओ इत्यनयोरकारांशे संवृतत्वम् ; इतरांशे विवृततरत्वं, तदुपरागाच्च न संवृतत्वस्य पृथग् ग्रहणम् । ऐऔ इत्यनयोस्त्वकारांशेऽपि विवृतत्वमेवेति बोद्धव्यम् ।

**तस्य लो** (पा०सू० १।३।९) । "उपदेशेऽज्" (पा० सू० १।३।२) इत्यत इदित्यनुवृत्त्या विभक्तिविपरिणामेन च सिद्धौ 'तस्य' ग्रहणं सर्वलोपार्थम् । तेन ञिटुडूनामन्त्यस्य लोपो न । "नाऽनर्थके" (प०) इति परिभाषा तु **भाष्ये** प्रत्याख्यातैवेति दिक् । न **भवति** इति । फलाभावादिति भावः ।

**वान्तो** (पा०सू० ६।१।७९) । "येन विधिः"(पा०सू० १।१।७२) इत्यस्यापवादभूतया (२)"तस्मान्नुडचि" (पा०सू०६।३।७४) इत्याद्यर्थ-

---

**(१)संवृतावर्णस्य संवृतावर्ण इति** । तालुस्थानिकघटितसंवृतावर्णघटितस्य तालुस्थानिकघटितसंवृतावर्णघटितः, ओष्ठस्थानिकघटितसंवृतावर्णघटितस्य ओष्ठस्थानिकघटितसंवृतावर्णघटित इत्यर्थः । एवं "विवृतावर्णस्य विवृतावर्ण" इत्यस्य तालुस्थानिकघटितविवृतावर्णघटितस्य तालुस्थानिकघटितविवृतावर्णघटितः, ओष्ठस्थानिकघटितविवृतावर्णघटितस्य ओष्ठस्थानिकघटितविवृतावर्णघटित इत्यर्थः । यथाश्रुतं तु न युक्तम् । विवृतावर्णघटितत्वादौ स्वेतरयावदादेशावृत्तित्वस्याभावेन "स्थानेऽन्तरतम" (पा० सू० १।१।५०) सूत्रोक्ताऽऽन्तरतम्यस्यासम्भवात् । न च "अ अ" (पा० सू० ८।४।६८) इति सूत्रविहितसंवृतस्यासिद्धत्वेन संवृतावर्णस्य संवृतावर्ण इत्याद्यसङ्गतमिति वाच्यम् । संवृतस्यासिद्धत्वेऽपि संवृतप्रयत्नजन्यत्वस्यासिद्धत्वाभावात् संवृतप्रयत्नजन्यत्वविशिष्टघटिततालुस्थानजन्यघटितस्य संवृतप्रयत्नजन्यत्वविशिष्टघटिततालुस्थानजन्यघटित आदेशो भवतीत्यादिक्रमेणार्थेनादोषात् ।

**(२)तस्मान्नुडचीत्याद्यर्थमावश्यकयेति** । यत्तु यान्तप्रत्ययासम्भवादेव यादौ प्रत्यये इत्यर्थो भविष्यतीति "तस्मान्नुडचि" (पा० सू० ६।३।७४) इत्याद्यर्थमावश्यिकयेत्युक्तमिति, तन्न । गोमयमततीति गोमयात् तस्माण्णिचि टिलोपे लटि गोमययतीत्यादौ यान्तप्रत्ययसम्भवात् ।

यदपि प्रत्ययाव्यवहितपूर्वत्वविशिष्टौ यकाराव्यवहितपूर्वत्वविशिष्टौ च यावोदौतौ

मावश्यिकया (१)वाचनिक्या "यस्मिन्विधिस्तदादावल्ग्रहणे" (प०) इति वार्तिककृदुक्त (२)परिभाषया लब्धमर्थमाह–**यकारादाविति**। **ओदौतोरिति**। "ओदौतोरिति वक्तव्यम्" इतिवार्तिकमूलाद्याख्यानादिति भावः। "पूर्वसूत्रे वान्तौ प्रति तयोरेव स्थानित्वनिर्णयात्" इति "स्थानेऽन्तरतम" (पा०सू० १।१।५०) सूत्रस्थ**कैयटो**क्तं तु न युक्तम्। वान्तज्ञानाय सूत्रपर्यालोचनस्याऽऽवश्यकत्वेऽपि तद्वाक्यार्थपर्यालोचने मानाभावात्। "यथासंख्य" (पा० सू० १।३।१०) सूत्रसहकारेण (३)बोधोत्तयोरवावाविति सूत्रार्थ इति नात्र परिभाषाऽऽवश्यकत्वमिति, तदपि न। भाव्यातीत्यादौ प्रत्ययलक्षणेन प्रत्ययाव्यवहितपूर्वत्वस्य स्वतश्च यकाराव्यवहितपूर्वत्वस्य सत्त्वेनावादेशापत्तेः।

यदपि सर्वत्र वैयधिकरण्यान्वयेनोपपत्तौ इयं परिभाषैव नाऽऽवश्यकीति, तदपि न। सम्भवति सामानाधिकरण्येनान्वये वैयधिकरण्यान्वयस्यान्याय्यत्वात्। उष्ट्रगोयुगमित्यादौ अवादेशस्य परमकाव इत्यादौ "कोः कत्तत्पुरुषेऽचि" (पा०सू० ६।३।१०१) इति कदादेशस्य चाऽऽपत्तेश्च। "परमकावः" इति तु कुत्सितः उः कुः तस्मादपि तदन्तेन परमशब्देन समासे बोध्यम्।

वस्तुतस्तु गव्युगजिति वक्तव्ये ओकारोच्चारणान्नोष्ट्रगोयुगमित्यत्राऽवादेशापत्तिः। नचोष्ट्रगोयुगमतत्तीत्युष्ट्रगोयुगात् तस्माण्णिजन्ताण्णाचि टिलोपयोस्ततः क्विपि यलोपे तच्चरितार्थमिति वाच्यम्। इदुदुपधेभ्य आचक्षाणणिचोऽनभिधानेनैतादृशरूपस्यैवाभावात्। "कोः कत्" (पा०सू० ६।३।१०१) इति सूत्रे रथादिसाहचर्येण कुशब्दाघटितस्यैवोत्तरपदस्य ग्रहणेन "परमकावः" इत्यत्रापि न दोष इति दिक्।

(१)**वाचनिक्येति**। भाष्ये वचनरूपेण पठितयेत्यर्थः। अत्र "न ल्यपि"(पा० सू० ६।४।६९) इति, "कोः कत्तत्पुरुषे" (पा०सू० ६।३।१०१) इत्येव सिद्धे "रथवदयोश्च" (पा०सू० ६।३।१०२) इति अनेकवचने झल्येदित्येव सिद्धे "बहुवचने झल्येत्" (पा०सू० ७।३।१०३) "ओसि च" (पा०सू० ७।३।१०४) इति सूत्रद्वयकरणञ्च ज्ञापकमित्यन्यत्र विस्तरः।

(२)**परिभाषयेति**।तदर्थस्तु अभेदसम्बन्धावच्छिन्नप्रकारताप्रयोजकत्वेन सम्भावितमल्मात्रवृत्तिविषयताप्रयोजकं ससम्यन्तं पदं स्वबोध्यार्थनिष्ठाऽऽद्यवयवतानिरूपकसमुदायस्य संज्ञा भवतीति।

(३)**बोधोत्तरमिति**। वस्तुतस्तु "एचोऽयवायावः" (पा०सू० ६।१।७८) इत्यादेर्यथासंख्यसूत्रसहकारेण स्वस्थानिकत्वम्––स्वविशेष्यकापेक्षाबुद्धिविशेषविषयतासजातीयापेक्षाबुद्धिविशेषविषयतावत्त्वम् एतदुभयसम्बन्धेन एचोऽयादिषु सम्बन्धः।

त्रं तयोस्तत्त्वनिर्णयात् । अन्तरतमपरिभाषया निर्वाहे तु लक्ष्यपर्यालोचनकाले तन्निर्णयः । अत एव "पूर्वसूत्रे स्थानिविशेषलाभो यथासंख्यसम्बन्धात्, इह तु निमित्ताभावात्तल्लाभाभावः" इति षष्ठे (१)प्रकृतसूत्रे **कैयटः । गव्यमिति ।** भत्वाद्बलोपो न । यीति किम् ? गोभ्याम् । प्रत्यये किम् ? गोयानम् ।

ननु 'गव्यूतिः' इत्यत्र वस्य "हलि सर्वेषाम्" (पा०सू० ८।३।२२) इति (२)"लोपः शाकल्यस्य" (पा०सू० ८।३।१९) इति वा लोपः स्यादत आह—**वान्त इत्यत्रेति ।** न च विशेषविहितेन कार्यित्वेन लोपे वस्य निमित्तत्वबाध इति वाच्यम् । निमित्तत्वानाक्रान्ते विषये (३)कार्यित्वस्य चारितार्थ्यात् । तक्रकौण्डिन्यन्यायश्चानवकाशविषयो (४)विधेयविषय-

---

विषयतासाजात्यं च विषयतायां स्वनिरूपकापेक्षाबुद्धिनिष्ठजनकतानिरूपितजन्यतावच्छेदकसंख्यात्वव्याप्यजात्यवच्छिन्नजन्यतानिरूपितजनकतावच्छेदकत्वम्—स्वनिरूपकापेक्षाबुद्धीयैकत्वनिष्ठप्रकारतानिरूपितधर्मितात्वैकत्वावच्छिन्नधर्मितात्वैतदन्यतरवत्त्वम् एतदुभयधर्मेण इति पुनः "यथासंख्य" (पा०सू० १।३।१०) सूत्रसहकारेण बोधान्तरस्य नापेक्षेति चिन्त्यमेतत् । नच सहविवक्षाया अभावात् द्वन्द्वासाधुत्वमिति वाच्यम् । एकरूपावच्छिन्नस्यैकरूपावच्छिन्नसंसर्गेण एकरूपावच्छिन्नेऽन्वयसत्त्वेन तस्याः सत्त्वात् । **(१)प्रकृतसूत्रे कैयट इति ।** एवञ्च पूर्वपरविरुद्धत्वात् पूर्वकैयटश्चिन्त्य इति भावः । "हलि सर्वेषाम्" (पा०सू० ८।३।२२) इत्यत्र यकारस्यैवानुवृत्तिमभिप्रेत्याह–**(२)"लोपः शाकल्यस्य" इति वेति ।**

**(३)कार्यित्वस्य चारितार्थ्यादिति ।** वस्तुतस्तु विषयतयोर्यत्र व्याप्यव्यापकभावस्तत्रैव तक्रन्यायप्रवृत्तौ वल्पदप्रयोज्यनिमित्तविषयतायाः व्योरित्येतत्प्रयोज्यस्थानितायाश्च सामानाधिकरण्यस्यैव दुरुपपादत्वेन नात्र तक्रन्यायविषय इति लेखनीयम् । **(४)विधेयविषयश्चेति ।** विभिन्नविभिन्नविधेयतानिरूपितोद्देश्यदलीयविषयतयोर्यत्र व्याप्यव्यापकभावस्तद्विषय इत्यर्थः । **अथवा** विधेययोर्यत्र व्याप्यव्यापकभावस्तद्विषय इत्यर्थः । व्याप्यतावच्छेदको व्यापकतावच्छेदकश्च सम्बन्धः उद्देश्योद्देश्यतावच्छेदकादेर्विधेयेन साकं यः सम्बन्धः तत्तुल्यवित्तिवेद्यसम्बन्धो बोध्य इत्यन्यत्र विस्तरः।

अत्रेदं तत्त्वम्—एकविनियोगोद्देशेन प्रयुक्तवाक्यकदम्बघटकव्यापकधर्मावच्छिन्नबोधकपदप्रतिपाद्यतावच्छेदकावच्छिन्ने तद्वाक्यकदम्बघटकव्याप्यधर्मावच्छिन्नबोधकपदार्थतावच्छेदकावच्छिन्नातिरिक्तत्वेन सङ्कोचो भवतीत्येतत्तात्पर्यग्राहकेण धर्मयोर्यत्र व्याप्यव्यापकभावस्तद्विषयेण माठरपरिवेषणन्यायेन कार्यित्वेन निमित्तत्वबाधः कस्मा-

श्चेति स्पष्टं "तद्धितेष्वचाम्" (पा०सू० ७।२।११७) इति सूत्रे यङ्विधायके च **भाष्ये**। अन्त्ये "उत्तरयोर्विग्रहेण विशेषासम्प्रत्ययान्नित्यग्रहणानर्थक्यं क्रियासमभिहारे च नैतेभ्यो यङा भवितव्यम्" इति **भाष्ये** चेन विशेषासम्प्रत्यादित्यनुकृष्यते। अन्यथा तक्रकौण्डिन्यन्यायेन सिद्धे विशेषासम्प्रत्ययादित्यनुकर्षकचकारवैयर्थ्यापत्तिः। निरूपयिष्यते चेदं यङन्ते। तच्च वार्त्तिकेऽनुवृत्त्या यूतौ श्रूयमाणवकारान्त आदेश इत्यर्थः। सूत्रे तु न फलं, गव्यादौ भत्वेन वान्तस्य पदत्वाभावात्; लव्ये स्वत एव तदभावात् लोपाप्राप्तेः। गोशब्दादिभ्यः क्यजादावपि "नः क्ये" (पा०सू० १।४।१५) इति नियमेन पूर्वस्य पदत्वाभावात्। एवं तर्हि वार्तिके एव प्रश्लेष उचित इत्याशयेनाह—**छकाराद्वेति**। "लोपो व्योः" (पा०सू० ६।१।६६) इति सूत्रे वकारप्रत्याख्यानं तु लौकिकोदाहरणाभावेन तदर्थतया बोद्धव्यम्। अत एव "इको गुण" (पा०सू० १।१।३।) इति सूत्रे "अतो ल्रान्तस्य" (पा०सू० ७।२।२) इत्यत्र लुप्तनिर्दिष्टो वकार इत्युक्तं **भाष्ये**। शास्त्रीयसौत्रप्रयोगार्थं तदिति तदाशयः। न चैवं "विष्णवे" इत्यादौ "तस्य लोपः" (पा०सू०१।३।९) इति दुर्वारं, गव्यूतावुच्चारणस्य चारितार्थ्यादिति वाच्यम्। "गवि च युक्ते" (का० वा०) इत्यादिनिर्देशैर्वारणात्।

**परे** तु सा पूर्वपक्ष्युक्तिरिति न वकारप्रश्लेषो लोपेनोचितः। किञ्च छन्दसि सर्वविधीनां व्यवस्थितत्वान्न वलोपप्रसक्तिस्तत्रत्ये गव्यूतौ। अध्वपरिमाणेऽपि सञ्ज्ञाशब्दोऽयम्, तत्र (१)सञ्ज्ञात्वभङ्गापत्तेर्न वलोपः।

---

न्नेति शङ्कितुं युक्तम्। समाधानन्तु तस्यानित्यत्वम्, विभिन्नवाक्यघटकपदप्रतिपाद्यतावच्छेदकधर्मयोर्यत्र व्याप्यव्यापकभावस्तद्विषयोऽयं न्याय इति वा वक्तुं युक्तमिति दिक्।

(१)**संज्ञात्वभङ्गापत्तेरिति**। नच "पूर्वपदात्संज्ञायाम्" (पा० सू० ८।४।३) इत्यस्य कृतणत्वेन यत्र संज्ञात्वाऽवगमस्तत्रैव णत्वमित्यर्थेन संज्ञात्वभङ्गभिया रघुनाथादिशब्दे णत्वाभावेऽपि "हलि सर्वेषाम्" (पा० सू० ८।३।२२) "लोपः शाकल्यस्य" (पा० सू० ८।३।१९) इत्यत्र संज्ञायामित्यस्याभावेन निरुक्तार्थालाभाद् दृष्टान्तदार्ष्टान्तिकयोर्वैषम्येण लौकिकगव्यूतौ लोपो दुर्वार इति वाच्यम्, अध्वपरिमाणबोधकत्वमुपजीव्य प्रवृत्तस्यावादेशस्य अध्वपरिमाणबोधकत्वविघातकलोपप्रवर्तने प्रत्यनिमित्तत्वे

यथा 'रघुनाथ' इति सञ्ज्ञाशब्दे नित्यस्यापि णत्वस्याभावः, सर्वनामशब्दे णत्वाऽऽशङ्का तु तस्य सञ्ज्ञिविशेषे आधुनिकविनियोगात् शास्त्रानुसारिशब्दस्यैव विनियोग उचित इत्यभिप्रायेण । निरूपितञ्चैतत्सर्वादिसूत्रे भाष्यप्रदीपोद्द्योते इत्याहुः । निरूपयिष्यते चेदं "पूर्वपदात्सञ्ज्ञायाम्" (पा० सू० ८।४।३) इति सूत्रे ।

(१)**धातोस्त** (पा०सू० ६।१।८०) । धातोरित्यस्याभावे (२)प्रातिपदिकमात्रविषयो नियमः स्यात्, तथाच 'गव्यम्' इत्यत्र न स्यात्; 'ओयते' इत्यत्र च स्यात् । तदभावे सामान्यतो नियमापादनन्तु योगविभागैवकारवैयर्थ्यापत्तेरयुक्तम् । 'तन्निमित्तस्य चेद्धातोरेवे'ति नियमे बाभ्रव्यासिद्धेस्तद्वारणाय एवकारः । **लव्यमित्यादि** । अत्र गुणवृद्ध्योर्यण्णयान्निमित्तक-

---

सन्निपातपरिभाषया लोपाप्राप्त्या वकारप्रश्लेषो व्यर्थ इत्यदोषात् । त्रिपाद्यां सन्निपातपरिभाषाया अप्रवृत्त्या "लोपो व्योः" (पा० सू० ६।१।६६) इति लोपेन वकारप्रश्लेष आवश्यक एवेति **परे** । 'आत्थ' इत्यादौ कृते थत्वे ईडादिवारणाय त्रिपाद्यामपि क्वचित्तस्याः प्रवृत्तिरित्य**न्ये** ।

(१)**धातोस्तन्निमित्तस्यैव (पा०सू० ६।१।८०)** । न च "न यक्ति" इत्येव सूत्रमस्त्विति वाच्यम्, भूधातोर्विंचि तस्माद्धितार्थे यति'भोयम्' इत्यादौ वान्तादेशापत्तेः । (२)**प्रातिपदिकमात्रविषयो नियमः स्यादिति** । स्यादेतत्, नियामकशास्त्रीयोद्देश्यतावच्छेदकव्यापकं नियम्यशास्त्रीयोद्देश्यतावच्छेदकव्याप्यं च यद्रूपं तद्रूपावच्छिन्नातिरिक्तत्वेन नियम्यशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने सङ्कोचो भवतीति सिद्धान्तः । तथा च प्रातिपदिकमात्रविषय इति ग्रन्थेन यकारादिप्रत्ययाव्यवहितपूर्वत्वविशिष्टप्रातिपदिकावयवैच्त्वं सङ्कोच्यतावच्छेदकमिति लभ्यते । नच यकारादिप्रत्ययाव्यवहितपूर्वत्वविशिष्टधात्ववयवैच्त्वं सङ्कोच्यतावच्छेदकं कस्मान्नेति वाच्यम्, बाभ्रव्यादौ व्यभिचारेण निरुक्तरूपे नियामकशास्त्रीयोद्देश्यतावच्छेदकव्यापकत्वाभावात् । एवञ्च "वान्तो यि प्रत्यये" (पा०सू० ६।१।७९) इत्यत्र तद्रूपावच्छिन्नातिरिक्तत्वेन सङ्कोचे "वान्तो यि" (पा०सू० ६।१।७९) इति सूत्रमेव व्यर्थं स्यादिति चेत् ? मैवम्, 'ओयते' 'औयत' इत्यत्र वान्तादेशार्थं तच्चारितार्थ्येनादोषात् । नचैवमपि धातुग्रहणसत्त्वे धातोरेचश्चेदित्यादिमूलग्रन्थतः धात्ववयवत्वविशिष्टयादिप्रत्ययाव्यवहितपूर्वत्वविशिष्टैच्त्वावच्छिन्नातिरिक्तत्वेन सङ्कोच इति फलति, तथाच 'गव्यति' इत्यादौ वान्तादेशानापत्तिरिति वाच्यम्, यादिप्रत्ययाव्यवहितपूर्वत्वविशिष्टैजन्तधातोश्चेत्तर्हि तन्निमित्तस्यैवेति नियमस्वीकारेणादोषात् । नच तथा सति एजन्तस्थाने वान्तादेशापत्तिः ।

त्वेनैचो यादिप्रत्ययनिमित्तकता । **तन्निमित्तस्येति किमिति** । ग्र
मेव किमर्थमिति प्रश्नः । **ओयत इति** । वेञः कर्मणि लटि यकि
जादित्वात्सम्प्रसारणे "अकृत्सार्व" (पा०सू० ७।४।२५) इति दीर्घे अ
सहाऽऽद्गुणः । "न धातुलोप" (पा०सू० १।१।४) सूत्रभाष्यरीत्या नि
र्भूतधातूपसर्गकार्यस्य बहिरङ्गत्वाद्वान्तादेशे गुणोऽसिद्ध (१)इत्यरुचेराह
**औयतेति** । तस्मादेव कर्मणि लङि आडागमे वृद्धिः पूर्ववत् ।

**क्षय्यजय्यौ** (पा०सू० ६।१।८१) । क्षि क्षये, जि जये, इत्यनयो
ग्रहणं न तु क्षीष् हिंसायाम्, क्षै क्षये, इत्यनयोर्व्याख्यानात् । अत ए
"क्षिज्योरेवैचः" इति **भाष्ये** उक्तम् ।

**तस्मै प्रेति** । क्रयार्थे वस्तुनि क्रय्य इति निपात्यते इत्यर्थो, व्या
ख्यानाद् गुणभूतस्यापि तदा परामर्शः । क्रयार्थत्वञ्च फलोपधानरूपं त
इति विशेषणात्, तदाह—**क्रेतार इति** । योग्यतामात्रग्रहणे त्वव्याव
तत्स्यादिति भावः । **केचित्तु** स्वीयं धान्यादि दत्त्वा यत्र तन्मूल्यग्रह
तत्र धान्यं क्रय्यम् । यत्र तु स्वयं द्रव्यं दत्त्वा परकीयधान्यादिग्रहणं त
धान्यं क्रेयम् । (२)द्रव्ये तु न क्रय्यत्वं नापि क्रेयत्वं; किन्तु धान्यादे
शक्तिस्वभावात्, **भाष्यस्वरसो**ऽप्येवमेवेत्याहुः ।

**लोपः शा** (पा०सू० ८।३।१९) । 'भोभगोअघोअपूर्वस्य' इ
अशीति चानुवर्त्तते, तत्र ओकारान्तेषु "ओतो गार्ग्यस्य" (पा०सू० ८।३।
२०) इति बाधकमित्याशयेनाह—**अवर्णपूर्वयोरिति** । व्योरित्यनुवृ
वपि वर्णसमाम्नाये यकारस्य प्राक्पाठात्तत्क्रमेणाह—**यवयोरिति** । "
तस्मा आचष्ट" इत्यादिभाष्यप्रयोगादत्र रोरित्यस्यासम्बन्धः । इदं सूत्रं ल

---

"निर्दिश्यमान" (प०भा० १२) परिभाषया वारणात् । (१)**इत्यरुचेराहेति** । व
तस्तु "नाजानन्तर्ये" (प०भा० ५१) इति निषेधादियमरुचिरसङ्गतेति **केचित्** ।

(२)**द्रव्ये तु न क्रय्यत्वं नापि क्रेयत्वमिति** । वस्तुतस्तु द्रव्येऽपि क्र
त्वक्रेयत्वव्यवहारोऽस्त्येव । अत एव लोके आपणे प्रसारिताः पणाः क्रय्या विक्रे
क्रेतुश्च क्रेया इति लोके व्यवहारो दृश्यते । एवं रजतसुवर्णादावपि । अत एव कै
त्वित्युक्तम् ।

प्रयत्ने न; (१)शाकटायनमते तयोर्विधानेन शाकल्यमते तदभावात् । अवर्णेति किम् ? गौर्यत्र । पदान्तयोः किम् ? हरये ।

अशि किम् ? वृक्षं वेतीति वृक्षवीः, क्विप्, तमाचष्टे इति ण्यन्ताद्विच् । वृक्षव् करोति । क्विपि तूठ् स्यात् । विज्निमित्तको "लोपो व्योः" (पा० सू० ६।१।६६) इति लोपस्तु न, णिलोपटिलोपयोः स्थानिवत्त्वात्, प्रातिपदिकाण्णिजुत्पत्त्या पदत्वाभावेन परपदस्थाजादेशाभावेन च लोपस्य पदचरमावयवत्वाभावेन च "न पदान्त" (पा०सू० १।१।५८) इति निषेधाप्रवृत्तेः । (२)एतेन 'वनिमित्तको वलेपोऽत्र दुर्वार' इत्यपास्तम् । **किञ्च** स्थानिवत्त्वनिषेधं विनाऽस्य पदान्तत्वासिद्ध्याऽत्र निषेधाप्रवृत्तिः । स्थानिवत्त्वनिषेधज्ञाने पदान्तत्वज्ञानं, तन्निर्णये च स्थानिवत्त्वाभावज्ञानमित्यन्योन्याश्रयस्तत्राप्रवृत्तौ मानम् । इदञ्च "न पदान्त" (पा०सू० १।१।५८) सूत्रे **भाष्ये** स्पष्टम् ।

न च पदसञ्ज्ञायां टिलोपस्य स्थानिवत्त्वाद्वस्य पदान्तत्वमेव नास्तीत्यशीति व्यर्थमिति वाच्यम्, "पूर्वत्रासिद्धीये"(प०भा०) इति निषेधात् । साक्षात् पदत्वादिद्वारकपरम्परया वा पूर्वत्रासिद्धीयप्रापकस्य तत्प्रतिबन्धकस्य वाऽतिदेशस्य तेन (३)निषेधादिति **केचित्** ।

---

(१)**शाकटायनमते इति** । अयं भावः—ऋषिविशेषघटितशास्त्रबोधितं साधुत्वम् ऋषिविशेषो न जानाति, सामान्यतो बोधितं साधुत्वं सर्वे एव जानन्ति । तथाच "व्योर्लघु" (पा०सू० ८।३।१८) इतिशास्त्रबोधितं साधुत्वं शाकल्यो न जानातीति तयोर्लोपो न । (२)**एतेनेति** । णिलोपटिलोपयोः स्थानिवत्त्वेनेत्यर्थः ।

(३)**निषेधादिति** । साक्षात्पूर्वत्रासिद्धीयसाधकस्य, परम्परया पूर्वत्रासिद्धीयसाधकस्य, साक्षात्पूर्वत्रासिद्धीयप्रतिबन्धकस्य, परम्परया पूर्वत्रासिद्धीयप्रतिबन्धकस्य च स्थानिवद्भावस्यानेन निषेधः । तत्र साक्षात्साधकस्योदाहरणम्—किमु सन्ति । अत्र "श्नसोरल्लोपः" (पा० सू० ६।४।१११) इत्यल्लोपस्य स्थानिवद्भावः पूर्वत्रासिद्धीयस्य "मय उञो वो वा" (पा० सू० ८।३।३३) इति वत्वस्य साक्षात्साधकः । एवं वृक्षस्य वः वृक्षवः तस्मात् ण्यन्ताद्विचि वृक्षव् इत्यत्र णिलोपटिलोपयोः स्थानिवद्भावः साक्षात्पूर्वत्रासिद्धीयस्य "लोपः शाकल्यस्य" (पा० सू० ८।३।१९) इति वलोपस्य साधकः । परम्परया पूर्वत्रासिद्धीयसाधकस्योदाहरणं पिपठीस्तत्रेति । अल्लोपस्य स्थानिवद्भावः

**परे** तु "न पदान्ता (१)हलोऽणः सन्ति" इति लण्सूत्रस्थभाष्ये वृक्षवादेरनभिधानमेव। "भोभगो" इति सूत्रेऽश्ग्रहणमनर्थकमन्यत्राभावादिति वार्त्तिकाच्च। अशोऽन्यत्र तन्निमित्तकार्यिणोऽभावादिति तदर्थः। न ह्यन्यो रुरस्तीति तद्व्याख्यान**भाष्ये** रुग्रहणमुपलक्षणम्। एतदाशयमजानानैकदेशिना "उत्तरार्थं "हलि सर्वेषाम्" (पा०सू० ८।३।२२) इति 'वृक्षव् करोति' इत्यत्र मा भूत्" इत्युक्तम्। अस्य चैकदेश्युक्तित्वं "लण्" (मा०सू० ६) सूत्रस्थोक्तभाष्यविरोधेन स्पष्टमेव **कैयटेनोक्तम्**। अत एव **भाष्ये** उत्तरार्थमित्युक्त्वा "हलि सर्वेषाम्" (पा०सू० ८।३।२२) इत्यत्रैव प्रयोजनमुक्तम्। "हलि सर्वेषाम्"(पा०सू० ३।८।२२) इत्यत्र वकारनिवृत्त्यैवात्र तद्वारणसम्भवान्न तत्राप्यश्ग्रहणस्य प्रयोजनमिति तद्भाष्यमेकदेश्युक्तिरेवेत्याहुः।

**कानि सन्तीति।** वाक्यसंस्कारपक्षेऽपि पूर्वोपस्थितनिमित्तकत्वरूपान्तरङ्गत्वमादायान्तरङ्गाणां पूर्वं प्रवृत्तिरितीकारादेः स्थानिभूतादचः परत्वं वोद्धव्यम्।

**एकः पूर्व** (पा०सू० ६।१।८४)। गुण इत्यादे(२)र्विधेयसमर्पक-

---

पदसंज्ञाप्रतिबन्धद्वारा षत्वसाधकः। साक्षात्प्रतिबन्धकस्योदाहरणं राज्ञ इति। अत्राल्लोपस्य स्थानिवद्भावः साक्षात् श्चुत्वप्रतिबन्धकः। एवं पौरोहित्यं काव्यमित्यादौ "यस्येति च" (पा० सू० ६।४।१४८) इति लोपस्य स्थानिवद्भावः साक्षात् "अनचि च" (पा० सू० ८।४।४७) इति द्वित्वप्रतिबन्धकः। एवं शो तनूकरणे इत्यस्मात् घञर्थे कविधानविहितकप्रत्यये वाक्शब्देन समासे तस्मात् ण्यन्तात् क्तिचि "तितुत्र" (पा०सू० ७।२।९) इतीडागमनिषेधे वाक्श्विरित्यादौ टिलोपादेः स्थानिवद्भावः साक्षात्पूर्वत्रासिद्धीयश्चुत्वस्य प्रतिबन्धकः। परम्परया प्रतिबन्धकस्योदाहरणम्-पिपठीरिति। अत्राल्लोपस्य स्थानिवद्भावः पदसंज्ञाप्रतिबन्धद्वारा रुत्वप्रतिबन्धक इति दिक्।

(१)**हलोऽणः सन्तीति।** अत एव कर्त्रादेर्नानभिधानम्। नचैवमपि रेफान्तानां गिरादीनामनभिधानं स्यादिति वाच्यम्, पदान्ताः हल्रूपाः "अणोऽप्रगृह्यस्य" (पा०सू० ८।४।५७) इत्येतदनुनासिककार्यभाजः परेऽणो न सन्तीति भाष्याशयेन दोषात्।

(२)**विधेयसमर्पकत्वेनेति।** नच "सूत्रे लिङ्गवचनम्" (प०भा० ७३) इति परिभाषया एकत्वविवक्षा कर्तुं न शक्यते इति वाच्यम्, तस्या अनुवाद्यविषयकत्वात्। अत एवात्रत्यैकग्रहणप्रत्याख्यानपरं **भाष्यं** सङ्गच्छते।

त्वेन तत्रैकत्वसङ्ख्याया विवक्षणेनोभयोः पूर्वपरयोरेकवाक्यतयैव विधेयान्वयेन चानयोः पूलयोः कटं कुर्वित्यादित इवोभयसम्बन्ध्येकविधेयस्यैव प्रतीतेरे(१)कग्रहणं स्पष्टार्थम् ।

---

(१)एकग्रहणं स्पष्टार्थमिति । नचैकत्वसंख्याविवक्षणेऽपि एकत्वसंख्यायाः केवलान्वयित्वेनाव्यावर्तकत्वात्पूर्वपरयोः स्थाने गुणद्वयं दुर्वारं स्यादिति वाच्यम्, स्वसजातीयनिष्ठभेदप्रतियोगितानवच्छेदकैकत्वस्यैकवचनार्थत्वेनादोषात् । साजात्यञ्च स्वप्रकृत्यर्थतावच्छेदकवत्त्व–स्वसमभिव्याहृतपदार्थसंसर्गित्वोभयधर्मेण । तथाच गङ्गोदकमित्यादौ गुणद्वये एकवचनस्य स्वप्रकृत्यर्थतावच्छेदकं यत् सङ्केतसम्बन्धेन गुणपदं तद्वत्त्वं, स्वसमभिव्याहृतपदार्थौ यौ पूर्वपरौ तत्संसर्गित्वमेतदुभयधर्मेण स्वसजातीयं गुणद्वयं भवतीति तन्निष्ठो यो भेदः पूर्वगुणवृत्तिः परगुणवृत्त्येकत्ववान्नेत्याकारको भेदस्तादृशभेदीयप्रतियोगितावच्छेदकं तदेकत्वं जातम्, एवं चालनीन्यायेन परगुणवृत्तिर्यो भेदः पूर्वगुणवृत्त्येकत्ववान्नेत्याकारकस्तादृशभेदप्रतियोगितावच्छेदकं तदेकत्वं जातमिति न पूर्वपरयोः स्थाने गुणद्वयम् । एकस्मिन् गुणे तु स्वसजातीयस्स एव गुणो जात इति स्वस्मिन् स्ववृत्त्येकत्ववान्नेत्याकारकभेदाभावाद् गुणे 'घटो न' इत्यादिभेदस्यैव सत्त्वेन तादृशभेदप्रतियोगितावच्छेदकं घटत्वादिकमनवच्छेदकमेवैकत्वं जातमिति लक्षणसमन्वयः । अत एव "पशुना यजेत" इत्यादावनेकपशुकरणकयागान्नादृष्टसिद्धिः ।

ननु स्वप्रकृत्यर्थतावच्छेदकपशुत्वस्य स्वसमभिव्याहृतयागसंसर्गित्वस्य च यागीयपशुषु सर्वेषु सत्त्वात्स्वसजातीयाः सर्वेऽपि यागीयपशवो जाताः । तथाच चालनीन्यायेन सर्वाण्येवैकत्वानि स्वसजातीयनिष्ठभेदप्रतियोगितावच्छेदकानि जातानीति कथमेकैकपशुकरणकनानायागाददृष्टसिद्धिरिति चेत्? अत्र **केचित्**–"पशुना यजेत" इत्यादावेकवचनार्थैकत्वस्य स्वाश्रयपशुकरणत्वं, स्वानाश्रयपश्वकरणत्वमेतदुभयसम्बन्धेन धर्मिपारतन्त्र्येण यागेऽन्वयस्वीकारेणैकपशुकरणकयागाददृष्टसिद्धिः, अनेकपशुकरणकयागाच्चादृष्टासिद्धिश्चेत्याहुः ।

**परे** तु साजात्यघटकं स्वसमभिव्याहृतपदार्थसंसर्गित्वञ्च स्वसमभिव्याहृतपदार्थतावच्छेदकधर्मपर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नसंसर्गित्वं विवक्षितम् । तथा च "पशुना यजेत" इत्यादौ स्वसमभिव्याहृतपदार्थतावच्छेदकं यद् यागत्वं तत्पर्याप्त्यनुयोगितावच्छेदकं तद्व्यक्तित्वं तदवच्छिन्नसंसर्गित्वं तद्यागीयपशावेव न तु यागान्तरीयपशाविति एकैकपशुकरणकनानायागाददृष्टसिद्धिः ।

नचैवमपि यागत्वपर्याप्त्यनुयोगितावच्छेदकं यागान्तरगतं तद्व्यक्तित्वमपि तदवच्छिन्नसंसर्गित्वं यागान्तरीयपशावप्यस्त्येवेति दोषस्तदवस्थ एवेति वाच्यम्, एकत्व-

विशिष्टपदार्थसंसर्गित्वस्य विवक्षितत्वात्। वै० स्वनिष्ठविषयतानिरूपितविषयताश्रयत्वतात्पर्यविषयत्वसम्बन्धेन। यागान्तरस्य च एतदेकत्वनिष्ठविषयतानिरूपितविषयताश्रयत्वतात्पर्यविषयत्वाभावान्न दोषः। यद्यपि एतदेकत्वविशिष्टयागीयपशुपदार्थनिष्ठभेदप्रतियोगितावच्छेदकत्वं यागान्तरीयपशुगतैकत्वस्यापद्यते एव, तथा तदेकत्वविशिष्टयागान्तरीयपशुनिष्ठभेदप्रतियोगितावच्छेदकत्वमेतदेकत्वस्यापीति नैतावताऽपि दोषोद्धारः सम्भवति तथापि स्वसजातीयनिष्ठभेदप्रतियोगितावच्छेदकत्व–स्वतादात्म्योभयाभाववत्त्वस्य एकत्वे विवक्षणान्न दोषः। एतदेकत्वे तदेकत्वविशिष्टयागान्तरीयपशुनिष्ठभेदप्रतियोगितावच्छेदकत्वस्य सत्त्वेऽपि तत्तादात्म्याभावेन उभयाभावस्य सुलभत्वात्।

नन्वेवमनेकपशुकरणकयागादप्यदृष्टसिद्ध्यापत्तिः, सर्वेषां पशुगतानामेकत्वानां निरुक्तोभयाभावस्य सुलभत्वादिति चेत्? अत्रोच्यते, स्वसमभिव्याहृतपदार्थतावच्छेदकपर्याप्त्यनुयोगितावच्छेदकधर्मविशिष्टान्यत्वम् एकत्वे विशेषणीयम्। वै०स्वविशिष्टनिष्ठभेदप्रतियोगितावच्छेदकत्व–स्वविशिष्टवृत्तित्वोभयसम्बन्धेन। उभयत्र स्ववै०स्वावच्छिन्नसंसर्गित्व–स्वसमभिव्याहृतप्रकृत्यर्थतावच्छेदकवत्त्वोभयसम्बन्धेन। एकयागीयानेकपशुसमवेतानां सर्वेषामेकत्वानां यागगततद्व्यक्तित्ववैशिष्ट्यस्य निरुक्तोभयसम्बन्धेन सत्त्वात् तद्विशिष्टान्यत्वमिति नानेकपशुकरणकयागाददृष्टसिद्धिः। एकैकपशुकरणकानेकयागेभ्यश्चादृष्टसिद्धिः सुलभा। तत्र भिन्नभिन्नयागसम्बन्धिपशुसमवेतानामेकत्वानां तत्तद्यागगततद्व्यक्तित्ववैशिष्ट्यस्यासत्त्वेन तदन्यत्वस्य सुलभत्वात्। यत्तद्व्यक्तित्वमादाय भेदप्रतियोगितावच्छेदकत्वं तदादाय न तद्विशिष्टपदार्थवृत्तित्वं, यदादाय तद्विशिष्टपदार्थवृत्तित्वं तदादाय न तद्विशिष्टनिष्ठभेदप्रतियोगितावच्छेदकत्वमिति न कस्यापि एकत्वस्य तद्विशिष्टत्वमिति।

न चैवमेकस्यां शालायां यत्र बहवो ब्राह्मणा भुञ्जते तत्रास्यां शालायां ब्राह्मणो भुङ्क्ते इति प्रयोगापत्तिः भोजनत्वस्य प्रत्येकपर्याप्तत्वेन भोजनत्वपर्याप्त्यनुयोगितावच्छेदकतत्तद्व्यक्तित्वावच्छिन्नसंसर्गित्वस्य प्रकृत्यर्थतावच्छेदकब्राह्मणत्वस्य च प्रत्येकं ब्राह्मण एव सत्त्वेन किञ्चिद्भोजनगततद्व्यक्तित्ववैशिष्ट्यस्य पूर्वोक्तरीत्या कस्मिन्नपि एकत्वेऽसत्त्वेन तदन्यत्वस्य सुलभत्वादिति वाच्यम्, स्वसमभिव्याहृतपदार्थतावच्छेदको यो यो धर्मस्तत्पर्याप्त्यनुयोगितावच्छेदकधर्मविशिष्टान्यत्वस्य विवक्षणेन प्रकृते च शालात्वस्यापि तथात्वात् तत्पर्याप्त्यनुयोगितावच्छेदकतद्व्यक्तित्ववैशिष्ट्यस्यैव ब्राह्मणगतेषु सर्वेषु एकत्वेषु सत्त्वेन तदन्यत्वस्याभावादापत्तेरयोगात्। नचैवमपि यत्र शालायामेको ब्राह्मणो भुङ्क्तेऽपरश्च स्वपिति, तत्रास्यां शालायां ब्राह्मणो भुङ्क्ते इति प्रयोगो न स्यात्, ब्राह्मणद्वयस्यापि पूर्ववत्स्वसजातीयत्वादिति वाच्यम्, स्वसमभिव्याहृतप्रकृत्येत्यादिप्रथमसम्बन्धस्थाने स्वसमभिव्याहृतैकवचनार्थनिष्ठप्रकारतानिरूपितधर्मितावच्छेदकवत्त्वस्य विवक्षणात्। तथा च प्रकृते भोजनकर्तृत्वविशिष्टब्राह्मणत्वस्यैवानतिप्रसक्ततया धर्मितावच्छेदकत्वेन तस्य च, स्वापकर्तृत्वविशिष्टब्राह्मणेऽसत्त्वेनाऽदोषः।

उरण् (पा०सू० १।१।५१) । उः स्थाने इति "षष्ठी स्थाने"

---

*नन्वेवमपि सम्पन्नो व्रीहिरित्यादौ स्वप्रकृत्यर्थतावच्छेदकव्रीहित्वस्य स्वान्वयितावच्छेदकत्वेन तात्पर्यविषयीभूतक्षेत्रत्वपर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नसंसर्गित्वस्य च सर्वव्रीहिव्यक्तिषु सत्त्वात्स्वसजातीयनिष्ठभेदप्रतियोगितावच्छेदकान्येव सर्वाण्येकत्वानि जातीनीति तत्रैकवचनार्थैकत्वानुपपत्तिः । न च येन सम्बन्धेनैकत्वान्वयस्तत्सम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदो विविक्षितः, तथाच प्रकृते स्वाश्रयव्रीहित्ववत्त्वसम्बन्धेनैकत्वस्य व्रीहावन्वयेन तत्र स्वाश्रयव्रीहित्ववत्त्वसम्बन्धेन स्ववृत्त्येकत्ववान्नेति भेदस्याभावेन न दोष इति वाच्यम्, तथा सति सम्पन्नो व्रीहिरित्यादौ स्वसजातीयनिष्ठतादृशभेदस्याप्रसिध्या दोषतादवस्थ्यादिति चेत्? न, स्वसजातीयनिष्ठभेदप्रतियोगितावच्छेदकताऽनवच्छेदकसंसर्गनिष्ठावच्छेदकतानिरूपकप्रकारताश्रयैकत्वमेकवचनार्थ इति वक्तव्यत्वात् इति ।

ननु व्रीहिगोधूमोभयसम्पत्तिदशायां सम्पन्नो व्रीहिरिति प्रयोगो दुर्वार एव, गोधूमे प्रकृत्यर्थतावच्छेदकवत्त्वस्य अन्वयितावच्छेदकवत्त्वस्य वाऽभावेन तमादाय भेदप्रतियोगितावच्छेदकत्वस्य व्रीहिनिष्ठैकत्वे उपपादयितुमशक्यत्वादितिचेन्मैवम् । स्वप्रकृत्यर्थतावच्छेदकवत्त्वञ्च स्ववाचकविभक्तिप्रयोगप्रयोजकबुद्धिविषयतावच्छेदकावच्छिन्नधर्मवत्त्वमिति विवक्षणेनादोषात् । तथाहि उप्तेषु धान्येषु किं किं सम्पन्नमिति प्रश्ने धान्यत्वव्याप्यजात्यवच्छिन्नं बोधयानीति तात्पर्येण सम्पन्नो व्रीहिरिति वाक्यप्रयोगात्स्ववाचकविभक्तिप्रयोगप्रयोजकबुद्धिविषयतावच्छेदकं यद् धान्यत्वव्याप्यजातित्वं तदवच्छिन्नधर्मवत्त्वस्य निरुक्तस्वसमभिव्याहृतपदार्थसंसर्गित्वस्य च व्रीहाविव गोधूमेऽपि सत्त्वेन तन्निष्ठभेदप्रतियोगितावच्छेदकत्वस्यैव व्रीहिगतैकत्वेषु सत्त्वात् ।

निरुक्तैकत्वमेवैकपदप्रवृत्तिनिमित्तं बोध्यम् । तथा चैतच्छङ्कासमाधानादिकं प्रकृतेऽप्यतिदेष्टव्यमित्याहुः । विस्तरस्तु व्युत्पत्तिवादटिप्पणे द्रष्टव्यः । स्वसमभिव्याहृतपदार्थसंसर्गित्वेनैव साजात्योक्तौ तु "पशुना यजेत" इत्यादौ स्वसमभिव्याहृतपदार्थयागसंसर्गित्वस्य पुरोडाशादावपि सत्त्वेन स्वसजातीयं यत् पुरोडाशादिकं तन्निष्ठभेदप्रतियोगितावच्छेदकमेवैतत्पशुवृत्त्येकत्वं जातमित्येकपशुकरणकयागादप्यदृष्टसिद्धिर्न स्यात् । स्वप्रकृत्यर्थतावच्छेदकवत्त्वमात्रोक्तौ स्वप्रकृत्यर्थतावच्छेदकपशुत्वस्य सर्वपशुषु सत्त्वेन अयागीयपशुनिष्ठभेदप्रतियोगितावच्छेदकमेव यागीयपशुगतमेकत्वं स्यादिति एकपशुकरणकयागादप्यदृष्टसिद्धिर्न स्यादिति दिक् ।

---

* इति उत्तरं यथाश्रुतव्युत्पत्तिवादोक्तपरिष्कारमनुसृत्यैव दोषोपन्यासोऽविशेषादिति बोध्यम् ।

(पा०सू० १।१।४९) इतिपरिभाषया लब्धम्, उदात्तस्वरितयो (१)र्यण इतिवत्। "स्थानेऽन्तरतम" इत्यतः स्थानेग्रहणमनुवर्त्तते, तस्य लक्षण प्रसङ्गावस्थायामित्यर्थस्तदाह—**रपरः सन्नेवेति**। रपर इत्य(२)वयववाचिना परशब्देन (३)षष्ठ्यर्थे बहुव्रीहिस्तेनास्यावयवत्वात् यदागमा इति न्यायेन विशिष्टस्य गुणवृद्धित्वेन ऋकारस्य गुणवृद्धी अरारावेवेति (४)नियमोपपत्तिः। अत एव "रदाभ्याम्" (पा०सू० ८।२।४२) इति सूत्रे "ऋत च सेटि" (पा०सू० ६।४।१२१)इति सूत्रे च **भाष्ये**—"गुणो भवति वृद्धिर्भवतीति रेफशिरा गुणवृद्धिसञ्ज्ञकोऽभिनिर्वर्त्तते" इत्युक्तम्। स्थानेऽण् प्रसज्यमान एव रपरो भवति, पूर्वभक्तश्च रेफ इत्यर्थ इति कैयटः। अवयवत्वं वाचनिकमेव तत्सादृश्यबोधनपर्यवसायि। अन्यथा वर्णस्य वर्णान्तरावयवत्वं "हलन्ताच्च" (पा०सू० १।२।१०) इति सूत्रभाष्योक्तरीत्याऽसङ्गतं स्यात्। पञ्चम्यर्थे बहुव्रीहिणाऽनवयवत्वे तु गुणवृद्धिशब्देनाकारादेरेव रेफपरस्यैतदेकवाक्यतया विधानं स्यात्। गुणत्वादिकन्त्वकारादिनिष्ठमेव स्यादित्यु(५)क्तनियमानुपपत्तिः।

---

(१)**यण इतिवदिति**। अनेन "विधौ परिभाषोपतिष्ठते नानुवादे" इति परिभाषाऽसङ्गतेति ध्वनितम्। (२)**अवयववाचिनेति**। अवयवत्वविशिष्टपरत्वावच्छिन्नवाचिनेत्यर्थः। (३)**षष्ठ्यर्थे बहुव्रीहिरिति**। तथा च रपर इत्यस्य रेफनिष्ठावयवतानिरूपकः रेफनिष्ठपरत्वावधितावांश्च प्रसङ्गावस्थायामण् भवतीति सूत्रार्थः। (४)**नियमोपपत्तिरिति**। वस्तुतस्तु रेफविशिष्टे गुणत्वाद्यभावेऽपि न क्षतिः ऋकाराकारयोर्मूर्धन्यावयवकत्वस्य सत्त्वेन तेनैवाऽऽन्तर्येण ऋकारस्याऽरारावेवेति नियमोपपत्तेरित्यन्यत्र विस्तरः। (५)**उक्तनियमानुपपत्तिरिति**। अत्रेदं तत्त्वम् "उरण् रपरः" (पा०सू० १।१।५१) इत्यत्र परशब्दः शुद्धपरत्वावच्छिन्नवाचकः। र परो यस्मादिति पञ्चम्यर्थे बहुव्रीहिः।

नच ऋकारस्य गुणवृद्धी अरारावेवेति नियमानुपपत्तिरिति वाच्यम्। "अनान्तर्यमेवैतयोरान्तर्यम्" इति भाष्येण दत्तोत्तरत्वात्। न चैकारादावप्यनान्तर्यसत्त्वे सोऽपि स्यादिति वाच्यम्। स्ववृत्तित्वम्—स्वेतरयावदादेशावृत्तित्वम्—स्वदलभिन्नदलीयवृत्तित्वम्—एतत्त्रितयसम्बन्धेन स्वविशिष्टस्थानप्रयत्नजन्यत्वाद्यान्तर्यसत्त्वेनाऽनान्तर्यस्य एकारादावभावात्। नचैवमपि "अचो ञ्णिति" (पा०सू० ७।२।११५) इत्यादावकारनिरूपिताऽऽन्तर्यस्याऽऽकारे सत्त्वेनानान्तर्याभावादकारस्याऽरित्येवे

अत एव "वव्रे" इत्यादौ "हलादिःशेष" (पा०सू० ७।४।६०) सिद्धिः। अभ्यासावयवस्यैवानादेस्तेन निवृत्तेः । एतेनाणमनूद्य रपरत्वं विधीयते इति परास्तम् । उक्तनियमानुपपत्तेः । अत्र पक्षे क्व रपरत्वं क्व लपरत्वमिति व्यवस्थाऽनुपपत्तिस्तु न । रेफवत्स्थानिकस्य रेफपरत्वं, लकारवत्स्थानिकस्य लपरत्वमिति व्यवस्थासम्भवात् । **तत्रान्तरतम्यादिति** । स्थानत इति भावः । रेफादिद्वाराऽऽदेशस्यापि मूर्धादिस्थानत्वात् । तत्र तत्राऽऽदेशानेव रलपरानुच्चार्येदं सूत्रं न कार्यमिति तु न वाच्यम् । "आप्ज्ञप्यृधामीत्" (पा०सू० ७।४।५५) (१)"भृञामित्" (पा०सू०७।४।७६) इत्यादौ दोषापत्तेः । अत्राण् पूर्वेणैव, प्रशास्तॄणामिति निर्देशात् । वस्तुतो रप्रत्याहाराभावेन 'रपर' इत्यस्य स्थाने 'लंपर' इति पठनीयमिति "लपरत्वं वक्ष्यामि" इति तुल्यास्यसूत्र**भाष्या**ल्लभ्यते ।

**झरो झ** (पा०सू० ८।४।६५) । "झयो हः" (पा०सू० ८।४। ६२) इत्यतो (२)"वाऽवसाने" (पा०सू० ८।४।५६) इत्यतो वा विकल्पोऽनुवर्त्तते । हयवरट्सूत्रशेषे **भाष्ये** स्पष्टमिदम् । **लोपे इति ।** ऋधधातोर्झर इति भावः । **असतीति** । 'द्वित्वाभाव' इत्यनुकृष्यते ।

---

नियमो न स्यादिति वाच्यम् । "अचो ञ्णिति" (पा०सू० ७।२।११५) इत्यत्र "अत उपधाया" (पा०सू० ७।२।११६) इति सूत्रादत इत्यनुकृष्य माठरपरिवेषणन्यायेनाच्पदार्थेऽकारातिरिक्तत्वेन सङ्कोचं कृत्वा वाक्यभेदेन वृद्धिविधानेनादोषात् ।

नचैवमपि "गुणो भवति वृद्धिर्भवति रेफशिरा गुणवृद्धिसंज्ञकोऽभिनिर्वर्तते" इति भाष्यविरोध इति वाच्यम् । गुणवृद्धिसंज्ञकः रेफशिरस्कः सन्नभिनिर्वर्तते इत्यर्थकरणेनाविरोधात् । नचैवमपि "वव्रे" इत्यादौ रेफस्याभ्यासानवयवत्वेन हलादिःशेषानापत्तिरिति वाच्यम् । स्थानिवत्सूत्रस्थशेखरोक्तदिशा वरित्यस्य पुनरभ्याससंज्ञायां हलादिःशेषस्य सुवचत्वादिति दिक् ।

**(१)भृञामिदित्यादाविति ।** "भृञामिर्" इत्युच्यमानेऽपि हलादिःशेषेण रूपसिद्धौ चिन्त्योऽयं दोष इति **केचित्** । वस्तुतस्तु तथोक्तौ अनेकाल्त्वेन सर्वादेशत्वापत्तिः । किन्तु तत्र सिद्धान्तेऽपि हलादिःशेषेण रेफस्यापहारान्न रेफविधानफलमिति दोषोपन्यासोऽयुक्त एवेति बोध्यम् ।

**(२)वाऽवसाने इत्यतो वेति ।** भाष्यसम्मताष्टाध्यायीपाठरीत्येदमुक्तम् ।

**त्रिधमिति** । त्रिधकारत्वं (१)प्रक्रियाभिप्रायेण ।

न च द्वित्वभिन्ने पूर्वत्र कर्त्तव्ये परमसिद्धमित्यर्थकेन "पूर्वत्रासिद्धमद्वित्वे" (प०भा०) इत्यनेन धातुधकारस्य जश्त्वे दस्य द्वित्वमिति इदमयुक्तमिति वाच्यम् । फले विशेषाभावेन (२)तदनादरणात् । न ह्यत्र जश्त्वात्पूर्वमनन्तरं वा द्वित्वे रूपे विशेषोऽस्ति । तदनन्तरञ्जश्त्वप्रवृत्तेः । तस्य परिभाषात्वेन फलविशेषे एव प्रवृत्तेरित्यन्यत्र विस्तरः । **पञ्चमीति** । (३)विनिगमकाभावादिति भावः । (४)अत एवास्य वैकल्पिकत्वम् ।

**कृष्णैकेति** । कृष्णेति सम्बुद्ध्यन्तं (५)पृथक्पदमिति (६)कश्चित् ।

**एत्येध** (पा०सू० ६।१।८९) । ऊठ् अत्राऽऽदेश एव; व्याख्यानात् । एचीति नोठो विशेषणमूठस्त(७)त्वासम्भवात् । "एत्येधत्योः"(पा० सू० ६।१।८९) इति योगं विभज्य तयोरेवैचीति विशेषणस्य **भाष्ये** कृतत्वाच्च । तदाह-**एजाद्योरिति** । एतिरत्र इणेव प्रसिद्धत्वात् । 'उपैति'

---

(१)**प्रक्रियाभिप्रायेणेति** । परिनिष्ठिते "झलां जश्" (पा०सू० ८।४।५३) इति जश्त्वेन दस्यैव श्रवणादिति भावः । (२)**तदनादरणादिति** । नच "पूर्वत्रासिद्धम्" इति द्वित्वस्यासिद्धत्वाज्जश्त्वे दस्यैव द्वित्वमिति मूलासङ्गतिरिति वाच्यम् । तस्या अपि परिभाषात्वेन फलाभावादप्रवृत्तेः । नचैवमपि "विप्रतिषेधे परम्" (पा०सू० १।४।२) इति परत्वाज्जश्त्वे पुनरपि मूलासङ्गतिरिति वाच्यम् । तस्या अपि परिभाषात्वेन फलाभावादप्रवृत्त्या प्रथमोपस्थितद्वित्वप्रवृत्तौ बाधकाभावादिति दिक् ।

(३)**विनिगमकाभावादिति** । चिन्त्यमिदम् । विनिगमकाभावेन तात्पर्यनिर्णयाभावाच्छाब्दबोधस्यैवानापत्तेः । तस्माद्भाष्ये पक्षद्वयस्यापि स्थितत्वेनाऽऽवृत्त्या "यणो मयः" (का०वा०) इति वार्तिकस्यार्थद्वयस्वीकारादिति बोध्यम् । (४)**अत एवेति** । पक्षद्वयस्यापि **भाष्ये** स्थितत्वादेवेत्यर्थः ।

ननु कृष्णैकत्वमित्यादौ "पूरणगुण" (पा०सू० २।२।११) इति निषेधात्षष्ठीसमासो न स्यादित्याशङ्क्याऽऽह-(५)**पृथक् पदमिति** । (६)**कश्चिदिति** । अत्रारुचिबीजन्तु अनित्योऽयं गुणेन निषेधः "तदशिष्यं संज्ञाप्रमाणत्वात्" (पा०सू० १।२।५३) इति निर्देशादित्यस्य मूले एव स्फुटीकरणादिति बोध्यम् । (७)**तत्त्वासम्भवादिति** । नचावयतेः क्विपि औरित्यादावेजादिरूठ् सम्भवतीति वाच्यम् । एत्येधत्योरिति योगं विभज्य एचीत्यस्य तत्रैव विशेषणपरभाष्यप्रामाण्येनैतस्यानभिधानात् । विश्वौह इत्यादौ वृद्ध्यर्थं भगवता एचीत्येत्येधत्योरेव विशेषणमित्युक्तत्वाच्चैतस्यान-

इत्यादौ "वृद्धिरेचि (पा०सू० ६।१।८८)इत्यनेन गतार्थत्वमाशङ्क्याह— **पररूपगुणेति** । एत्येधत्योरेङि पररूपस्योठि चाऽऽद्गुणस्येति विवेकः ।

**उपैधते इति** । अत्र न सर्वादेशः । एत्येधत्याद्यवयवेऽचीत्येवं क्रमेण (१)सूत्राणामर्थात् । अयमेवार्थ इति प्रत्ययलक्षणसूत्रस्थ**भाष्य**स्वरसः । वृक्षे शाखेतिवदेत्येधत्यूठ्सु(पा०सू०६।१।८९) इति सप्तमी बोध्या । **प्रष्ठौह इति** । प्रष्ठं वहतीत्यर्थे वहेण्वौ ततः शस्यूठि सम्प्रसारणे पूर्वरूपेऽनेन वृद्धिः ।

**प्रेदिधदिति** । **परे** तु "इणीकारादौ प्रतिषेधः" (का०वा) इति वार्त्तिके एधत्यनुपादानात् "न त्वेधतेरव्यभिचारात्" इतिवृत्तेश्चास्यानभिधानमेव । "एत्येधत्योरेचीति विशेषणम्" इति **भाष्य**स्यैधत्यंशे सम्भवमात्रेणोपरञ्जकतया विशेषणमित्याशय (२)इत्याहुः । "उपैधयत" इत्यादावपि वृद्धिर्भवत्येव । प्रकृतिभागस्यैधूपत्वात् । किं च एत्येधत्यवयवेऽचीत्यर्थः प्रत्ययलक्षणसूत्र**भाष्य**सम्मत इति अत्र न दोषः ।

**पुरस्तादिति** । "पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते नोत्तरान्" इति न्यायः । अवश्यं स्वपरस्मिन्बाधनीये (३)भेदेनापेक्षायां प्रथमोपस्थितबाधेना (४)ऽऽकाङ्क्षानिवृत्तिर्हि तद्बीजम् । **असाधुरेवेति** । आङिणोरेकादेशस्य पूर्वान्ततयाऽऽङि पररूपेण बाधादिति भावः । **अर्थवद्ग्रहणे इति** । अस्या बीजं "स्वं रूपम्" (पा०सू०१।१।६८) इति

---

भिधाने न मानमिति **परे** । (१)**सूत्राणामर्थादिति** । **केचित्तु**–एजाद्येत्येधत्योरित्येव सूत्रार्थः । न च सर्वादेशत्वापत्तिरिति वाच्यम् । "अलोऽन्त्यस्य" (पा०सू० १।१।५२) "आदेः परस्य" (पा०सू० १।१।५४) इत्याभ्यां सर्वादेशत्ववारणात्सम्भवति सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वाच्च मूलोक्तमेव युक्तमिति प्राहुः । (२) **इत्याहुरिति** । **परे** तु "यथोत्तरं मुनीनां प्रामाण्यम्" इति परिभाषया "इणीकारादौ" (का०वा०) इति वार्त्तिके इणीत्येधतेरप्युपलक्षणम् । मूलोक्तं तु न युक्तम् । वार्तिकानुसारेणैधत्यंशे एचीत्युपरञ्जकमितिकल्पनापेक्षया भाष्यानुसारेण वार्त्तिके उपलक्षणतया व्याख्यानस्यैव ज्यायस्त्वात् । तथा च 'इदिधत्' इत्यस्यानभिधाने न मानमित्याहुः । (३)**भेदेनेति** । विशेषेणेत्यर्थः । (४)**आकाङ्क्षानिवृत्तिरिति** । "विप्रति" (पा०सू० १।४।२) इतिसूत्रबाधे मानाभाव इत्यपि बोध्यम् ।

सूत्रे उक्तम् । **पररूपे प्राप्ते इति ।** "पूर्वं धातुः साधनेन युज्यते" इति सिद्धान्तादिति भावः ।

**उपसर्गादृति** (पा०सू० ६।१।९१) । तपरकरणा(१)दुपऋकारीयतीत्यादौ "वा सुपि" (पा०सू० ६।१।९२) इति न वृद्धिः । सौत्रऋतिस्तु न गृह्यते; व्याख्यानात् । आदित्यनुवृत्तेन तदन्तविधिरित्याह—**अवर्णान्तादिति ।** "यस्मिन्विधिः" इति परिभाषयाऽऽह—**ऋकारादाविति ।** पूर्वपरयोस्तयोः समुदाययोरन्त्याद्योर्वर्णयोरेकादेश इत्यर्थः । उपसर्गावयवाकाराद्धात्ववयवे ऋकारे तयोः पूर्वपरयोर्वृद्धिरित्यु(२)चितम् । गतेरिति तु नोक्तम् । (३)'अच्छर्छति' इत्यादौ दोषात् ।

**अन्ता** (पा०सू०६।१।८५)। इह पूर्वपरयोरिति वर्तते; यथासंख्यञ्च, (४)अन्तादिशब्दावुपस्थितैकादेशस्थानिपरौ । पूर्वपरशब्दौ च (५)तद्घटि-

---

(१)**उपऋकारीयतीत्यादाविति ।** "उपऋकारयति, उपऋकारति" इत्यस्याप्युपलक्षणम् । (२)**उचितमिति ।** वस्तुतस्तु अवर्णान्तादुपसर्गादृकारादौ धाताविति अर्थेऽपि "अलोऽन्त्यस्य" (पा०सू० १।१।५२) "आदेः परस्य" (पा०सू० १।१।५४) इत्याभ्यां सर्वादेशतावारणान्मूलोक्तमेव युक्तमिति बोध्यम् । (३)**अच्छर्छतीति ।** अच्छ गत्यर्थेति गतित्वम् ।

( ४ ) **"अन्तादिवच्च" (पा०सू० ६।१।८५) ।** इह "एकः पूर्वपरयोः" (पा०सू० ६।१।८५) इति वर्तते । यथासङ्ख्यञ्च सम्बन्धः । पूर्वपदमेकादेशपूर्वस्थानिचरमावयवके लाक्षणिकम् । एवं परपदमेकादेशपरस्थान्याद्यावयवके लाक्षणिकम् । तथा च एकादेश एकादेशपूर्वस्थानिचरमावयवकसमुदायस्यान्तवत्स्यात्, एवमेकादेशः परस्थान्याद्यावयवकसमुदायस्यादिवत्स्यादिति सूत्रार्थः । एकादेशनिष्ठचरमावयवतानिरूपकसमुदाये एकादेशपूर्वस्थानिनिष्ठचरमावयवतानिरूपकसमुदायवृत्त्यर्थवत्पर्याप्तधर्मा अतिदेष्टव्याः, एवमेकादेशनिष्ठाद्यावयवतानिरूपकसमुदाये एकादेशपरस्थानिनिष्ठाद्यावयवतानिरूपकसमुदायवृत्त्यर्थवत्पर्याप्तधर्मा अतिदेष्टव्या इति यावत् । 'तद्वच्च' इत्येव सिद्धे "अन्तादिवच्च" (पा०सू० ६।१।८५) इति सूत्रकरणादर्थवत्पर्याप्तेत्येतल्लाभः । 'तद्वच्च' इत्युच्यमाने एकादेशस्थानिपर्याप्तधर्मस्यातिदेशः स्यात् । तथा च 'खट्वाभिः' इत्यादौ भिस ऐसाद्यापत्तिश्च स्यात् । एतन्मूलकमेवोच्यते "न वा अताद्रूप्यातिदेशात्" इति । अन्यथा वचनेन वचनान्तरप्रत्याख्यानस्यायुक्तत्वात् "वर्णाश्रयेऽन्तादिवत्त्वप्रतिषेधो वक्तव्यो न वा अताद्रूप्यातिदेशात्" इति प्रत्याख्यानमसङ्गतं स्यात् । एतत्सर्वं मनसि निधाय वक्ष्यति—**प्रातिपदिकत्वादय इत्यादि ।** (५) **तद्घटितसमुदायपर-**

तसमुदायपरौ । एवञ्च पूर्वस्य परस्य समुदायस्यान्तादिभ्यां वर्णाभ्यां पृथगवस्थिताभ्यां ये व्यवहाराः प्रातिपदिकत्वसुबन्तत्वप्रत्ययत्वादयस्ते कृतैकादेशस्य भवन्ति, न तु तद्वर्णमात्रवृत्तयोऽत्वह्रस्वत्वादय इत्यर्थस्तत्फलितमाह—**योऽयमित्यादि** । तेन रामावित्यादौ परादिवत्त्वेन औ इत्यस्य सुप्त्वे पूर्वमान्तस्यैकदेशविकृतन्यायेन प्रकृतित्वे यस्माद्विहितस्तदादितदन्तत्वमार्थसमाजग्रस्तामिति पदत्वासिद्धिः । (१)तद्वर्णमात्रवृत्तिधर्मानतिदेशात् खट्वाभिरित्यत्राऽत्वनिबन्धन ऐस्न, अयजे इन्द्रमित्यादौ सवर्णदीर्घश्च न । अत एव (२)तुक्यसिद्धवचनं चरितार्थम् । अन्यथा 'अधीत्य' इत्यादावादिवत्त्वेन ह्रस्वत्वप्रयुक्ततुक्सिद्धौ तद्वैयर्थ्यं स्पष्टमेव । तदुक्तम्—"वर्णाश्रये चान्तादिवत्त्वप्रतिषेधो वक्तव्यो; न वाऽताद्रूप्यातिदेशात्" इति । अन्तादिवर्णमात्रवृत्तिधर्मानतिदेशादिति तदर्थः । 'क्षीरपेण' इत्यादावेकारविशिष्टे (३)एकाजुत्तरपदत्वं भवत्येव । स्थानिवद्भावेन तु नैतल्लभ्यम् । अप्राधा-

---

विति । एकादेशचरमावयवकैकादेशाद्यावयवकसमुदायपरावित्यर्थः । यथाश्रुतन्तु न युक्तम् । एकादेशघटितस्वाश्वशब्दे पूर्वान्तवद्भावेनैकादेशपूर्वस्थानिचरमावयवकसमुदायवृत्तिस्वशब्दस्यातिदेशे तस्मादीरिन्शब्दे परे "स्वादीरेरिणोः"(का०वा०) इति वृद्ध्यापत्तेः । **(१) तद्वर्णमात्रवृत्तिधर्मानतिदेशादिति** । अन्तादिवर्णवृत्तिवर्णमात्रवृत्तिधर्मघटितधर्मानतिदेशादित्यर्थः । **(२) तुक्यसिद्धवचनं चरितार्थमिति** । ननु 'अधीय' इत्यादौ तुग्वारणायासिद्धवचनं चरितार्थम् । अन्यथा पूर्वान्तवद्भावेन ह्रस्वत्वस्य परादिवद्भावेन तदादित्वस्य चाऽतिदेशेन तुग्दुर्वारः स्यात् । न च 'उभयत आश्रयणे नान्तादिवत्' इति निषेधेन तुकोऽप्राप्त्याऽसिद्धवचनं व्यर्थमेवेति वाच्यम् । एतन्मते 'उभयत आश्रयणे' इत्यस्याभावादिति चेत् ? न, अन्तरङ्गे तुकि कर्तव्ये पदद्वयसम्बन्धिवर्णद्वयनिमित्तकत्वेन बहिरङ्गस्य सवर्णदीर्घस्यासिद्धत्वेनादोषात् । न च "नाजानन्तर्ये"(प० भा०) इति निषेध इति वाच्यम्, तस्या असत्त्वात् । सत्त्वे वा यत्र बहिरङ्गासिद्धत्वमन्तरङ्गशास्त्रप्रवृत्तिप्रयोजकं तत्रैव तत्प्रवृत्तिस्वीकारेण "अक्षद्यूः" इत्यादौ बहिरङ्गासिद्धत्वस्यान्तरङ्गयलोपप्रवृत्तिप्रयोजकत्वेनात्रासिद्धत्वस्यान्तरङ्गतुक्प्रवृत्तिप्रयोजकत्वाभावेनादोषादिति **केचित्** । वस्तुतस्तु 'अधीय' इत्यादौ चारितार्थ्येऽपि भावातिदेशस्य वैयर्थ्यं दुर्वारमेवेति तद् ज्ञापकमेव । अतो नाजानन्तर्यपरिभाषाया "अक्षद्यूः" इत्यादौ बहिरङ्गासिद्धत्वस्य अन्तरङ्गयण्प्रवृत्तिप्रयोजकत्वाभावविषये स्वीकारेऽपि न दोष इति दिक् । **(३) एकाजुत्तरपदत्वं भवत्येवेति** । स्यादेतत्

न्येनालाश्रयणात्। किं च एकादेशे वर्णयोरेव स्थानित्वं न समुदायस्येति भी ई भियः इत्यादावेकादेशविशिष्टे धातुत्वानापत्तिः। धातुत्वस्यैकादेशस्थानिधर्मत्वाभावात्। आनुमानिकादेशकल्पकवाक्यमन्तादिघटितसमुदायस्यैकादेशघटित आदेश इत्येव, न तु प्रत्येकं तयोः स्थानित्वबोधकं, तथा सति स्वाश्वशब्दस्य स्थानिवत्त्वेन स्वशब्दतया तत ईरिन्शब्दे वृद्ध्यापत्तेः। किं च भवत्सम्मतस्य "उभयत आश्रयणे नान्तादिवत्" इत्यस्यासङ्गतौ भवत्सम्मत 'अभीयात्' इत्याद्यसिद्धिः। स्थानिवत्त्वं तूभयत आश्रयणे इष्यत एव। अन्यथा "अचः परस्मिन्" (पा०सू० १।१।५७) इत्यस्याप्युभयत आश्रयणे ऽप्रवृत्त्यापत्तौ 'प्लायते' इत्याद्यासिद्धिरिति (१)दिक्।

---

एकाजुत्तरपदत्वस्यान्तादिवृत्तिवर्णमात्रवृत्तिधर्मघटितत्वेन कथं 'पे' इत्यत्रातिदेशः! नचान्तादिवर्णविशिष्टाल्मात्रवृत्तिधर्मघटितधर्मस्यातिदेशो न भवतीति ताद्रूप्यानतिदेशादित्यस्यार्थः। अन्तादिवर्णवै० स्ववृत्तित्व, स्वस्थानिकाऽऽदेशावृत्तित्वैतद्द्वितयसम्बन्धेन। तथाचैकाजुत्तरपदत्वघटकाच्त्वे स्वस्थानिकादेशवृत्तित्वस्यैव सत्त्वान्न दोष इति वाच्यम्, उत्तरपदाद्यच्त्वस्य ताद्रूप्यानतिदेशेनातिदेशो न भवतीति परिभाषेन्दुशेखरविरोधेनैतादृशस्यार्थस्य वक्तुमशक्यत्वादिति चेन्मवम्। स्ववृत्तित्वस्वाभाववत्त्वैतद्द्वितयसम्बन्धेन स्वविशिष्टाल्मात्रवृत्तिधर्मघटितधर्मो नायातीत्यर्थकरणेनादोषात्। अभावश्च स्वस्थानिकादेशवृत्तित्वम्—स्वनिष्ठा या अभेदसम्बन्धावच्छिन्नप्रकारतावच्छेदकता सम्बन्धानवच्छिन्नप्रकारतावच्छेदकता वा तदवच्छेदकत्वमेतदुभयसम्बन्धावच्छिन्नप्रतियोगिताको ग्राह्यः। अथवा अन्तादिवृत्तिर्वर्णमात्रवृत्तिः शाब्दबोधजनकशक्तिज्ञानीयमुख्यविशेष्यतावच्छेदकश्च यो धर्मस्तद्घटितो धर्मो नायातीत्यर्थेनादोषः। विस्तरस्तु परिभाषेन्दुटिप्पणे द्रष्टव्यः।

**परेतु** क्षीरपेणेत्यादावुत्तरपदत्वमेव पूर्वान्तवद्भावेनाऽऽनीयते, एकाच्त्वं तु स्वतः सिद्धमेवेति न कोऽपि दोष इत्याहुः।

**(१)दिगिति।** तदर्थस्तु स्थानिवत् सूत्रेणैव "अन्तादिवच्च" (पा०सू० ६।१।८५) इति सूत्रं गतार्थम्। न च 'क्षीरपेण' इत्यादावेकाजुत्तरपदत्वस्याल्त्वव्याप्यधर्मघटितत्वेनानल्विधाविति निषेधात्तदतिदेशो न स्यादिति वाच्यम्, परे त्वित्यादिना दत्तोत्तरत्वात्। न च 'भियः' इत्यादावियङ् न स्यात, धातुत्वस्य स्थान्येकदेशवृत्तित्वेन तस्य स्थानिवत्सूत्रेणातिदेष्टुमशक्यत्वादिति वाच्यम्, अर्थवत्येव स्थान्यादेशभावविश्रान्तिरितिसिद्धान्तसत्त्वेऽपि भिय इत्यादावीकारप्रश्लेषेण 'भीं' इत्यस्य 'ई' इत्यस्य चोभयोरर्थवत्त्वेन भी इत्यस्य स्थाने भी इत्यादेशः, ई इत्यस्य स्थाने ई इत्यादेशः,

**निर्देशादिति।** न च "कर्त्तरि चर्षि" (पा०सू० ३।२।१८६) इत्यादौ गुणस्य पदद्वयसम्बन्धिवर्णद्वयाश्रितत्वेन बहिरङ्गत्वाद्रेफाभावेन न विसर्ग इति वाच्यम्। गुणस्येव पदद्वयसम्बन्धिरेफखरात्मकवर्णद्वयाश्रितत्वेन विसर्गस्यापि तत्त्वात्। परनिमित्तकत्वमप्युभयोः समम्। किं च कार्यकालपक्षे त्रिपाद्यां तदुपस्थितावपि पूर्वं प्रति परस्यासिद्धत्वादन्तरङ्गाभावेन पूर्वस्यान्तरङ्गनिरूपितबहिरङ्गत्वाभावा(१)त्कथं तस्यासिद्धत्वप्रतिपादनम्। न चानया पूर्वस्यासिद्धत्वादभावेन तं प्रति परासिद्धत्वं "पूर्वत्र" (पा०सू० ८।२।१) इत्यनेन वक्तुमशक्यमिति वाच्यम्। एवं हि विनिगमनाविरहादुभयोरप्यप्रवृत्तौ विसर्गो दुर्वारः। एवञ्च विरोधात्कार्यकालपक्षेऽपि तदनुपस्थि-

'भीई' इत्यस्य स्थाने 'भी' इत्यादेश इत्यानुमानिकस्थान्यादेशानां स्थानेऽन्तरतमपरिभाषासहकारेण कल्पनेन भीवृत्तिधातुत्वस्य स्थानिवत्सूत्रेण भी इत्यादेशेऽतिदेष्टुं शक्यत्वात्। न च स्वाश्वशब्दे निरुक्तदिशा स्वशब्दत्वातिदेशे तस्मादीरिन्शब्दपरत्वे वृद्ध्यापत्तिरिति वाच्यम्, स्वाश्वशब्दे 'स्व' इत्यस्य 'अश्व' इत्यस्य समुदायस्य चार्थवत्वेऽपि स्थानेन्तरतमपरिभाषासहकारेण 'स्व' इत्यस्य स्थाने 'स्वा' इत्यादेशः, 'अश्व' इत्यस्य स्थाने 'आश्व' इत्यादेशः, 'स्व अश्व' इत्यस्य स्थाने 'स्वाश्व' इत्यादेश इति कल्पनेऽपि स्वशब्दत्वस्य स्थान्येकदेशवृत्तित्वेन स्वाश्व इत्यादेशे ऽतिदेष्टुमशक्यत्वात्। नचैवम् 'अमी' इत्यादावीत्वं न स्यादिति वाच्यम्, 'अद ई' इति स्थिते 'अद' इत्यस्य स्थाने 'अदे' इत्यादेशः, 'ई' इत्यस्य स्थाने 'ए' इत्यादेशः अद ई इत्यस्य स्थाने 'अदे' इत्यादेशः इति कल्पनेन ईकारवृत्तिबहुवचनत्वस्य 'ए' इत्यत्रातिदेष्टुं शक्यत्वेन ईत्वस्य सुवचत्वात्। नचाऽऽश्रयार्थकानल्विधावितिनिषेधः शङ्क्यः, तस्यानङ्गीकारात्। अङ्गीकारे वा आरोपप्रकारीभूतबहुवचनत्वस्य साक्षादुद्देश्यताऽनवच्छेदकत्वात्। न च "अन्तादिवत्" (पा०सू० ६।१।८५) सूत्राभावे "उभयत आश्रयणे नान्तादिवत्" इत्यस्यासङ्गतिः। न च स्थानिवत्त्वस्यैव स निषेध इति वाच्यम्, 'ग्लायते' इत्यादौ लत्वानापत्तेरिति वाच्यम्, "उभयत आश्रयणे न स्थानिवत्" इति स्थानिवत्सूत्रस्यैव निषेध इति स्वीकारेणादोषादिति दिक्। (१)**कथमिति।** न च पूर्वत्र कर्तव्ये परासिद्धत्वेऽपि तत्र कृते तदसिद्धत्वे मानाभाव इति तया जातगुणादेरसिद्धत्वं युज्यते एवेति वाच्यम्, "न भकुर्छुराम्" (पा०सू० ८।२।७९) इति सूत्रे कुर्ग्रहणेन पूर्वत्रेत्यस्य विषयसप्तमीत्वबोधनेन पूर्वशास्त्रदृष्ट्या परमसिद्धमित्येव तदर्थात्। अन्यथा 'कुर्वन्ति' इत्यत्र गुणस्येव 'कुर्यात्' इत्यत्र दीर्घस्यापि तपरत्वसामर्थ्यादेव निवृत्तौ किं तेन। अत एव 'चञ्चूर्यते' इत्यादौ दीर्घस्य 'चञ्चूर्ति' इत्यत्र गुणस्येव तपरत्वसाम-

तिरेव त्रिपादीस्थेऽन्तरङ्गे उचिता। अत एव विसर्जनीयसूत्रे **भाष्ये** इमामेव युक्तिमुक्त्वा "(१)अयुक्तोऽयं परिहारो न वा बहिरङ्गलक्षणत्वात्" इत्युक्तम्। एवञ्च तत्र तत्र वचनान्येव कार्याणि, ज्ञापकानुसरणं वा कर्तव्यम्। अत एव 'निगाल्यते' इत्यादौ लत्वाद्यर्थं "तस्य दोषः" (का०वा०) इति वचनमेवारब्धम्। अन्यथाऽन्तरङ्गत्वात् णिलोपात्पूर्वं वैकल्पिकलत्वे चक्रयत्र, माषवपनीत्यादौ बहिरङ्गासिद्धत्वेन च सिद्धे तद्वैयर्थ्यं स्पष्टमेव। **यत्तु** लक्ष्यानुरोधात्कार्यकालपक्षे उपस्थितया ऽन्तरङ्गपरिभाषया ऽऽनुमानिक्या प्रत्यक्षसिद्धस्यापि "पूर्वत्र" (पा०सू० ८।२।१) इत्यस्य बाध इति, तत्व लक्षणैकचक्षुषामादरणीयम्। अत एव "उरण्" (पा०सू० १।१।५१) इति सूत्रे "रेफस्य पूर्वान्तवत्त्वे (२)विसर्जनीयप्रतिषेधो वक्तव्यो नार्कुटाद्यर्थम्" इत्युक्तं **भाष्ये** इति दिक्।

**उपसर्गेणैवेति**। तत्सञ्ज्ञायाः (३)क्रियायोगनिमित्तत्वादित्यर्थः।

---

र्थ्यान्न निवृत्तिः। **(१)अयुक्तो ऽयं परिहार इति**। न च युक्तोऽयं परिहार इत्यर्थो न्याय्यः। अन्यथा "वृद्धिनिमित्तात्प्रतिषेधो वक्तव्यः" (का०वा०) "नामेते प्रतिषेधः" (का०वा०) "तस्य दोषः संयोगादिलोपलत्वणत्वेषु" (का०वा०) "यणः प्रतिषेधो वाच्यः" (का०वा०) "विसर्जनीयो ऽनुत्तरपदे" (का०वा०) "वृद्धिभूतानां षत्वं वक्तव्यम्" (का०वा०) इत्याद्यनेकवचनस्वीकारे गौरवादिति वाच्यम्, आर्तव आर्मतीत्, चक्रयकैत्, ह्लायते, प्राहिणोत्, कलं त्रातीति कलत्राः तस्मात्, ण्यन्तात्क्विपि कलत्र्, आर्कुटत्, ऐष्पुरुष्यदित्याद्यर्थं तत्तद्वचनानामवश्यकर्तव्यत्वेन गौरवस्य तुल्यत्वात्। अत एव–भविष्यति, सर्वेषां, रामाणाम्, राज्ञामित्यादौ षत्वणत्वश्चुत्वादिकं सिध्यति। अन्यथा ऽन्तरङ्गे षत्वादौ कर्तव्ये इट्सुड्नुडल्लोपादेरसिद्धत्वेन षत्वादिकं न स्यादिति दिक्।

**(२) विसर्जनीयप्रतिषेध इति**। "विसर्जनीयोऽनुत्तरपदे" (का० वा०) इति वार्तिकेनेत्यर्थः। अत्रोत्तरपदमर्थवत उपलक्षणम्। तथा चार्थवद्विशिष्टस्य रेफस्य विसर्गो न भवतीति तस्यार्थः।वै० स्वाव्यवहितपूर्वत्व, स्वोत्तरप्रत्ययनिमित्तकत्वोभयसम्बन्धेन। अत एव 'नार्कल्पिः' इत्यादौ न दोषः। अथवा खरं निमित्तीकृत्य तद्विशिष्टस्य रेफस्य विसर्गो न भवति। वै० स्वाव्यवहितपूर्वाच्स्थानिकत्वसम्बन्धेन। अत एव "कर्तरि चर्षि" इत्यादिनिर्देशाः सङ्गच्छन्ते। एवञ्च 'अन्तवद्भावेन पदान्तस्य रेफस्य न विसर्गः' इति वचनान्तरं न कल्पनीयं भवतीत्यपरमनुकूलम्। विस्तरस्त्वन्यत्र द्रष्टव्यः।

**(३) क्रियायोगनिमित्तत्वादिति**। जन्यबोधविषयीभूतक्रियाविशेषविषयक-

यदर्थे क्रियारूपे प्रादीनामन्वयस्तं प्रत्येवोपसर्गत्वमिति भावः । प्रकृते च (१)प्रत्यासत्त्या ऋकारादिनिमित्तोपसर्गग्रहणात्प्रगतः ऋद्धः 'प्रर्द्धः' इत्यत्र न । **पुनरिति** । प्रकृतसूत्रे **भाष्ये** स्फुटमेतत् । **सुब्धाताविति** । (२)सुबन्तप्रकृतिके धातावित्यर्थः । तुल्यास्यसूत्रे उपार्कारीयतीत्यादेरेतदुदाहरणत्वस्य **भाष्ये** उक्तत्वात् । शास्त्रे सुबन्तस्य (३)धातुप्रकृतित्वेनोक्ततया तत्प्रकृतिके इति व्याख्यानमेवोचितम् । ऋषभस्य समीपमुपर्षभं तदिच्छति उपर्षभीयतीत्यत्र तु न वृद्धिः । उपेत्यस्यानुपसर्गत्वात् । अत्रापि 'धातौ' इत्यनुवर्त्त्य वाक्यभेदेन व्याख्येयं, तेन सुब्धातावपि न प्रकृतिभावः ।

**प्रार्षभीयतीति** । अत्र "शरोऽचि" (पा०सू० ८।४।४९) इत्यस्यानुपन्यासेन व्यञ्जनात्परस्यैकस्यानेकस्य वोच्चारणे विशेषाभावेन "अचो रहाभ्याम्" (पा०सू० ८।४।४६) इत्यस्य तन्निषेधस्य चानावश्यकता सूचिता । **वाक्यभेदेनेति** । इदं वृत्तौ स्पष्टं, **भाष्ये** तु न दृश्यते । "एवे च" (का०वा०) इति वार्त्तिकं सूत्रे धातावित्यनुवृत्तेरारब्धम् । अवधारणम्—नियमः । एवशब्दस्य द्योत्यमर्थद्वयमवधारणमसम्भवरूपानवक्लृप्त्यादि च, तयोरन्त्योऽत्र एवशब्दार्थ इत्यभिप्रेत्याह—**अनवक्लृप्तावेवेति** । 'क्वेव भोक्ष्यसे' इत्युक्तेः स्थलसङ्कीर्णत्वादिना नास्ति सम्भवस्तव भोजनस्येति गम्यते ।

**अचोऽन्त्या** (पा०सू० १।१।६४) । अच इति (४)निर्धारणे

---

कतात्पर्यग्राहकत्वे सति प्राधान्यतमत्वमुपसर्गत्वमिति स्वीकारेण जन्यत्वस्य जनकांशे नित्यसाकाङ्क्षत्वेन क्रियाविशेषविषयकबोधस्य धातुनैव जन्यत्वाद्धात्वाक्षेप इति भावः । (१) **प्रत्यासत्त्येति** । यज्जन्यबोधविषयीभूतक्रियाविशेषविषयकतात्पर्यग्राहकत्वं प्रादीनां तद्धातुनिरूपितोपसर्गत्वं तेषामिति प्रगत ऋद्धः 'प्रर्द्धः' इत्यादौ गमधातुजन्यबोधविषयीभूतक्रियाविशेषविषयकतात्पर्यग्राहकत्वेन प्रशब्दस्य गमधातुनिरूपितमेवोपसर्गत्वं ; न तु ऋधधातुनिरूपितोपसर्गत्वमिति न वृद्धिरिति भावः । (२) **सुबन्तप्रकृतिक इति** । सुबन्तप्रकृतिकप्रत्ययान्तधातावित्यर्थः । यथाश्रुतं तु न युक्तम् । धातौ सुबन्तप्रकृतिकत्वस्य क्वाप्यदृष्टत्वात् । (३)**धातुप्रकृतित्वेनेति** । धातुसंज्ञाप्रयोजकप्रत्ययप्रकृतित्वेनेत्यर्थः । अन्यथा धातौ प्रत्ययत्वस्याभावेनैतदुक्तिरसङ्गता स्यात् ।

(४)**निर्धारणे षष्ठीति** । स्वार्थसमुदायस्य स्वघटकत्वम्—स्वघटकान्त्याजित-

षष्ठी। अन्ते भवो ऽन्त्यः। अन्त्यादीति (१)गमकत्वाद् बहुव्रीहिः। **मार्त्तण्ड इति।** मृताण्डादागतो मार्त्तण्डः। अण्विषये एव पररूपम्। ननु मार्त्तशब्दान्त्याच्–तकाराकारः; स आदिर्यस्येत्यन्यपदार्थो दुर्लभ इति चेत्? न, एकस्मिन्नेव समुदायरूपत्वारोपेण तदवयवत्वारोपेण च तदुपपत्तेः। एतन्मूलकमेव "व्यपदेशिवदेकस्मिन्" इति पठ्यते इत्यलम्। वस्तुत (२)आरोपस्य नात्रोपयोगः। "शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः" इति पतञ्जल्युक्तेरर्थाभावेऽपि (३)विकल्पात्मकं ज्ञानमत्र, तदपि लक्ष्यानुरोधाच्छास्त्रप्रवृत्त्युपयोगीति बोध्यम्। पतञ्जलिरिति तु अञ्जलेः पतित (४)इति विग्रहे मयूरव्यंसकादित्वात्समासे तत्रैव निपातनादितशब्दस्य लोपे पृषोदरादित्वाद्वा तल्लोपे साधु। गोनर्ददेशे कस्य चिद्देपेरञ्जलेः सन्ध्याकरणसमये पतित इत्यै(५)तिह्यात्।

**ओत्वोष्ठयोः** (का०वा०)। अत्र समर्थपरिभाषा नोपतिष्ठते; "स-

---

रयावदजवृत्त्यन्तत्ववत्त्वम्–एतदुभयसम्बन्धेनाचि, स्वघटकवृत्तित्वम्–स्वघटकान्त्याचेतरयावदजवृत्तित्वम्–एतदुभयसम्बन्धेनान्त्यत्वे वा ऽन्वयः। (१)**गमकत्वादिति।** बोधक्षमत्वादिति यावत्। अन्त्यत्वस्य निरूपकांशे नित्यसाकाङ्क्षत्वेन–यत्किञ्चित्पदार्थनिष्ठप्रकारतानिरूपितनित्यसाकाङ्क्षेतरनिष्ठविशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति मुख्यविशेष्यतासम्बन्धेनोपस्थितिः कारणमिति कार्यकारणभावमूलकस्य "पदार्थः पदार्थेनान्वेति; न तु पदार्थैकदेशेन" इति न्यायस्याप्रवृत्तेरिति भावः।

(२)**आरोपस्येति।** "विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम्" इति पतञ्जलिलक्षितविपर्ययात्मकज्ञानस्येत्यर्थः। तच्च नैयायिकमते इवान्यथाख्यातिरेव, तदभाववद्विशेष्यकतत्प्रकारकं ज्ञानमिति यावत्। 'रामाय' इत्यादौ सुप्त्वाभाववद्यशब्दविशेष्यकं सुप्त्वप्रकारकं ज्ञानं यथा। (३)**विकल्पात्मकं ज्ञानमिति।** वस्त्वविषयकत्वे सत्यपि प्रमाणाबाधितं शब्दजनितं ज्ञानमित्यर्थः। यथा पुरुषस्य चैतन्यम्; राहोः शिरः, इत्यादिवाक्यजन्यं ज्ञानम्।

ननु समासार्थं पतञ्जलिशब्दस्य मयूरव्यंसकादौ पाठस्याऽऽवश्यकत्वेन तत्रैव निपातनादितशब्दस्य लोपे तद्रूपोपपत्तौ शकन्ध्वादिषु (का०वा०) तत्पाठोऽनावश्यक इत्यभिप्रेत्याह–(४)**इति विग्रहे इति।** अनेन पतन्त्यञ्जलयो यस्मिन्नमस्कार्यत्वादिति विग्रहे तु "शकन्ध्वादिषु" (का०वा०) पाठ आवश्यक इति सूचितम्। अञ्जलेः पतित इति विग्रहे प्रमाणं दर्शयितुमाह–(५)**ऐतिह्यादिति।**

मासेऽङ्गुलेः सङ्गः" (पा०सू० ८।३।८) इत्यादौ समासग्रहणेन; पदविधिरितिसूत्रस्वरसेन; **भाष्या**दिस्वारस्येन च पदत्वेन सुबन्तत्वेन वा यत्र साक्षादुद्देश्यता तत्रैवैत(१)त्परिभाषाप्रवृत्तिस्वीकारात्। ओत्वोष्ठादिमात्रस्य पदत्वाभावात्। अवर्णादोत्वोष्ठयोराचि तद्घटितसमासे इत्यर्थाद् "दन्त्योष्ठ्यो वः स्मृतः" इतिप्रयोगासिद्धिः। अन्यथा प्रत्यासत्त्यौत्वाद्युत्तरपदकसमास एव प्रवृत्त्यापत्तौ तदसङ्गतिः स्पष्टैव। ओतुर्बिडालः।

**ओमाङो** (पा०सू० ६।१।९५)। अत्र एङीति नानुवर्त्तते, तेनेषदर्थकाऽऽङा सह ऋषभशब्दस्य समासे 'अद्य अर्षभः' इत्यत्र पररूपेऽद्यर्षभसिद्धिः। न चात्र परत्वाद्दीर्घप्रसङ्गः, प्रतिपदविधित्वञ्च निरवकाशत्वे सत्येव बाधकत्वे प्रयोजकमिदञ्च "मध्येऽपवाद" न्यायेन 'अवेहि' इत्यादौ वृद्धेरेव बाधकं स्यादिति वाच्यम्, लक्ष्यानुरोधेनात्र बाध्यसामान्यचिन्ताश्रयणात्। अन्यत्र प्रतिपदविधित्वस्य बलवत्त्वे प्रयोजकतादर्शनेन परदीर्घात्पूर्वं पररूपप्रवृत्तेश्च।

अव्यक्तशब्दार्थो **ध्वनेरिति**। अविद्यमानकत्वादिशब्दस्येत्यर्थः। तस्य चाच्छब्दोऽनुकरणे एव सम्भवतीत्याह—**अनुकरणस्येति**। अत्रालोन्त्यस्येति न प्रवर्त्तते, "नानर्थके" (प०भा० १०६) इति निषेधात्; "आम्रेडितस्य वा" इति वक्तव्ये "नाम्रेडितस्य" (पा०सू० ६।१।९९) इत्या(२)रम्भाद्वा। अत इति किम्? वटगिति।

**नाम्रेडित** (पा०सू० ६।१९।९)। अव्यक्तानुकरणस्य इति, अत इति च वर्त्तते। अव्यक्तानुकरणावयवीभूताम्रेडितावयवाच्छब्दस्येत्यर्थः।

---

(१)**परिभाषाप्रवृत्तिस्वीकारादिति**। पदसंज्ञाप्रयोजकप्रत्ययोत्पत्तिप्रयोजकसंज्ञाशास्त्रीयोद्देश्यतावच्छेदकरूपावच्छिन्नसम्पादकविधित्वस्य ओत्वोष्ठयोरित्यत्राभावादिति भावः। अत एव "समासेऽङ्गुलेः सङ्गः" (पा०सू० ८।३।८०) इत्यत्र समासग्रहणं चरितार्थम्। मूलोक्तन्तु न युक्तम्। यञादिविधौ ण्वुल्विधौ स्वार्थिकतद्धितविधौ च पदत्वेन सुबन्तत्वेन वा साक्षादवच्छिन्नोद्देश्यताकत्वस्याभावेन समर्थपरिभाषाऽनुपस्थितिप्रसङ्गादिति दिक्।

नानर्थकपरिभाषाप्रत्याख्यानेऽपि उपायमाह—(२)**आरम्भाद्वेति**।

"नाम्रेडितस्य तस्तु वा" इति न सूत्रितं वैचित्र्यार्थम्। फलकल्पनाभिनिवेशस्तु न युक्तो, भाष्यानुक्तेः। अत एव "तदधीते तद्वेद" (पा०सू० ४।२।५९) इति सूत्रे "द्विस्तद्ग्रहणं प्रमादकृतमाचार्यस्य" इति **भाष्ये** उक्तम्। लाघवानवधानलक्षणोऽत्र प्रमाद इति **कैयटः**। क तदवधानं क तदनवधानमिति तु भाष्यकृदुक्तप्रयोजने तदवधानमन्यत्रान्यदिति निर्णयम्। ननु डाचोऽभावादेतत्प्राप्तिरत आह—**बहुलवचनादिति**।

**तस्य परम्** (पा०सू० ८।१।२)। अवयववाचिपरशब्दयोगेऽत्र एव (१)ज्ञापकात् षष्ठी। 'तस्य'ग्रहणं स्पष्टार्थं, द्वे इत्यनुवर्त्य पष्ठ्या (२)विपरिणामेन सिद्धेः। अन्यद्विरुक्तपरस्य तु न सञ्ज्ञा, अष्टमे "सर्वस्य" इत्येतत्प्रकरणे सञ्ज्ञाकरणात्।

**झलां ज** (पा०सू० ८।४।५३)। अन्तग्रहणं झलीतिनिवृत्त्यर्थम्। सर्वोपकारकतया च प्रकरणान्तेऽस्य लेखः। एतेन 'श्रत्' इत्यत्रैव लेख उचित इत्यपास्तम्।

अज्झलोः सावर्ण्यनिषेधादाह—**अचि किमिति। अनिष्पत्तेरिति**। नाज्झलाविति सूत्रविषयनिर्णयेऽपवादविषय(३)परिहारेण तत्तद्वर्णीयसवर्णपदवाच्यनिर्णयोत्तरं तावतां ग्रहणस्य ग्रहणकशास्त्रबोध्यतया एतद्बोधकाले ग्रहणकशास्त्रस्य तावद्ग्रहणबोधकत्वानि(४)ष्पत्तेरित्यर्थः।

---

(१)**ज्ञापकादिति**। परशब्दस्यावयवत्वविशिष्टपरत्वावच्छिन्नवाचकत्वेन परलेऽवधितयाऽन्वयविवक्षायां पञ्चमी। अवयवत्वे निरूप्यनिरूपकभावसम्बन्धेनान्वयिविवक्षायां षष्ठीति भावः। अवयवत्वविशिष्टपूर्वत्वावच्छिन्नवाचकपूर्वशब्देऽप्येवं बोध्यम्। अत एव परं नाभेः कायस्य, पूर्वं नाभेः कायस्येत्यादिप्रयोगाः सङ्गच्छन्ते। अत एव रेफानुस्वारयोश्चावयवत्वावच्छिन्नविधेयताश्रयत्वरूपाऽऽगमत्वसिद्धिरिति दिक्। (२)**विपरिणामेनेति**। "पूर्वोऽभ्यासः" (पा०सू० ६।१।४) इत्यत्रेवेति भावः।

मूले "पदान्ते" इति पदान्तानां झलामित्यर्थः। अन्यथा सरितावित्यादौ पदान्तो यत् ताविति तत्र विद्यमानत्वाज्झलो जश्त्वं दुर्वारं स्यादिति बोध्यम्। (३)**परिहारेणेति**। अपवादशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्नातिरिक्तत्वेन सङ्कोचेनेत्यर्थः। सङ्कोचप्रकारं पूर्वमेवावोचाम। (४)**अनिष्पत्तेरितीति**। असम्भवादिति भावः। तथाहि-सवर्णपदशक्तिनिश्चयस्याणुदित्सूत्रजबोधे कारणत्वेन तन्निश्चयस्य च "नाज्झलौ"

सूत्रस्थसवर्णपदानुवृत्तिमभिप्रेत्याह—**ऋति सवर्ण इति।** तत्फलं दध्यृकारादावेतदप्रवृत्तिः। एतद्विधेययोः "अइउण्" (मा०सू० १) सूत्रानन्तरं पाठादच्त्वं, तेन तयोः स्थाने प्लुतसिद्धिस्तयोश्च (१)न रपरत्वम्। **द्विमात्रमिति।** (२)अत एव "अकः सवर्णे" (पा०सू० ६।१।१०१) इत्यनेनैव ऋकारद्वयस्य स्थाने रेफद्वयवत्तारूपगुणकृतान्तर्येण कदाचिद्रेफद्वयगर्भस्य विवृतत्वान्तर्येण कदाचिद्विवृतस्य, ऌकारे ऌकारवत्तान्तर्येण कदाचिद्विऌकारस्य कदाचिद्विवृतत्वसाम्येन रेफवत्तासाम्येन च तादृशस्य ऋकारस्य (३)सिद्ध्या विकल्पफलसिद्धिमाश्रित्यैतद्वचनद्वयं "तुल्यास्य" (पा०सू० १।१।९) इति सूत्रे **भाष्ये** प्रत्याख्यातम्। **द्वौ रेफाविति।** अत्रापि तदेव **भाष्यं** मानम्। द्विरेफत्वे हि रेफद्वयवति स्थानिन्ययं, ऌकारवत्यपर इति व्यवस्था सिद्ध्यति। **अभित इति।** द्वौ रेफावित्यनुषज्यते, तच्च द्वितीयान्तम्, अभितः पदयोगात्।

(४)"एओङ्" (मा०सू० ३) सूत्रे **भाष्ये** मातॄणामित्यादौ णत्वादिसिद्ध्यर्थमवश्यमङ्गीकर्त्तव्ये "वर्णैकदेशा वर्णग्रहणेन गृह्यन्ते" इति पक्षे प्रऌय खट्वाभिर्वाचा तरतीत्यादौ तुगैसुब्यज्लक्षणानां शङ्कायाः, "दीर्घात्" (पा०सू० ६।१।७५) इति तुग्विधानसामर्थ्यतपरकरणसामर्थ्य "नौद्यचः" (पा०सू० ४।४।७) इति सूत्रस्थनौग्रहणसामर्थ्यैर्भेदेनाप्रतिभासमानेषु वर्णावयवेषु अवयवसदृशस्वतन्त्रवर्णाश्रयकार्याभावज्ञापनरूपसमाधानस्य च करणवत् 'प्रातर्ऋतम्' इत्यत्र "रोरि" (पा०सू० ८।३।१४) इत्यस्य 'तद्ऌकारः' इत्यादौ "तोर्लि" (पा०सू० ८।४।६०) इत्यस्य

---

(पा०सू० १।१।१०) इति शास्त्रजबोधाधीनत्वेन तत्कालेऽष्टादशबोधकारणत्वस्याणुदित्सूत्रेऽसम्भवादिति। (१)**न रपरत्वमिति।** "अइउण्" (मा०सू० १) सूत्रानन्तरमेतयोः पाठेनाण्त्वाभावादिति भावः। (२) **अत एवेति।** द्विमात्रिकत्वादेवेत्यर्थः। (३)**सिद्ध्येति।** विनिगमनाविरहेण मूर्धस्थानजन्यत्वविशिष्टविवृतत्वस्य मूर्धस्थानजन्यत्वविशिष्टरेफद्वयवत्त्वस्य चाऽऽदेशतानियामकत्वादिति भावः। एवं ऌकारांशेऽपि विवृतत्वस्य दन्तस्थानजन्यत्वविशिष्टऌकारद्वयवत्त्वस्य चाऽऽदेशतानियामकत्वं बोध्यम्। वार्तिकद्वयविधेययोरभितोऽज्भक्तिसत्वे प्रमाणमाह—(४)**एओङ्(मा०सू० ३)**

च शङ्कासमाधानाकरणेन "यत्तद्रेफात्परं भक्तेः" इति "हयवरट्" (मा० सू० ५) सूत्रस्थ **भाष्येण** च ऋलृक्सूत्रस्थयोरर्धमात्राज्भागस्यामितः क्लृप्तत्वेन तथैवोचितत्वादिति भावः। **द्वौ लृकाराविति**। हल्द्वयवत्पूर्व-साहचर्यादिति भावः। अत्र ह्रस्वऋकारद्वयस्थानिकैकादेशे एव पूर्वस्य साधुत्वं ह्रस्वऋकारलृकारस्थानिकैकादेशे एवोत्तरस्य साधुत्वम्। (१)अत एव लृति न ऋकारो नाप्यृति लृकारः। (२)अत एव वार्त्तिके 'ऋति' इति तपरकरणमुत्तरवार्त्तिके 'लृति' इति च चरितार्थम्। "तुल्यास्य" (पा०सू० १।१।९) सूत्रे **भाष्ये** यदेतद्वतीति एतद्वत इति वक्ष्यामीत्येत-द्वचनाश्रयणेन "ऋलृवर्णयोः सावर्ण्यम्" (का०वा०) न कार्यमिति च सङ्गच्छते। उपस्थितरेफीयप्रयत्नत्यागे मानाभावादीषत्स्पृष्टाविमौ। विवृ-तत्वे हि विवृतऋकारलृकाराभ्यामनयोरपि ग्रहणे "अकः सवर्णे" (पा० सू० ६।१।१२७) इत्यनेनैव सिद्धे वार्त्तिकस्यैव वैयर्थ्यापत्तेः।

**एङः** (पा०सू० ६।१।१०९)। पदान्तात् किम्? भवति।

**सर्वत्र वि** (पा०सू० ६।१।१२२)। "प्रकृत्याऽन्तः" (पा०सू० ६।१।११५) इति सूत्रात्प्रकृत्येत्यनुवर्त्तते। प्रकृतिशब्दोऽत्र स्वभाववाची 'दुस्त्यजा प्रकृतिः' इत्यादौ तथा दर्शनात्। प्रकृत्या स्वभावेनावस्थान-मित्यर्थः। अत एव प्रकृतिभावे न पूर्वरूपं नाप्ययादय इति भावः। "नान्तः पादम्" इति पाठे त्वनेन सूत्रेण गोशब्दस्य यत्प्राप्तं तन्नेति व्या-ख्यानेन "नान्तः पादम्" इत्यनेनैव पूर्वरूपत्वादिकं विकल्पेन निषिध्यत इति बोद्ध्यम्।

**अवङ्** (पा०सू० ६।१।१२३)। स्फोटोऽयनं यस्य सः, स्फोट-प्रतिपादक इत्यर्थः। **स्फौटायनस्ये**तिपाठे नडादित्वं कल्प्यम्। स्फो-टायनोऽवङः स्मर्त्ता, अन्यस्तु तदभावस्येति स्मृत्यन्तरानुसन्धानद्वारेणात्र विकल्पो बोद्धव्यः। **निवृत्तमिति**। अत एव "इन्द्रे" (पा०सू०

---

**सूत्रे इत्यादि**। (१)**अत एवेति**। ह्रस्वऋकारद्वयस्थानिकमेव पूर्ववार्तिकविधेयं साधु, एवं ह्रस्वऋकारह्रस्वलृकारोभयस्थानिकमेव उत्तरवार्तिकविधेयं साध्विति स्वीकारादे-त्यर्थः। अत्रैव प्रमाणमाह—(२)**अत एवेत्यादिना**।

६।१।१२४) इति सामर्थ्यान्नित्यमिति (१)भाष्यादावुक्तम्। **गवाग्रमिति।** सन्निपातपरिभाषाया अनित्यत्वाद्दीर्घ इति बोद्धव्यम्। **व्यवस्थितेति।**

(२)"देवत्रातो गलो ग्राह इतियोगे च सद्विधिः।
मिथस्तेन विभाष्यन्ते गवाक्षः संशितव्रतः॥

तेन प्राण्यवयवे न" इति "शाच्छोः" (पा०सू० ७।४।४१) इति सूत्रे **भाष्ये** स्पष्टम्। "अग्नीत्प्रेषणे" (पा०सू० ८।२।९२) इति सूत्रे 'अग्नीदग्नीन्विहर' इत्यत्र एतद्व्यावृत्त्यर्थं वार्त्तिककृद् बहुलग्रहणघटितं न्यासं कृतवान्। तत्प्रत्याख्यानाय **भाष्ये** कृतेन विभाषेति योगविभागेन विभाषेत्यस्य व्यवस्थितविभाषात्वं ध्वनितम्। तथा "अजेर्व्यघञपोः" (पा०सू० २।४।५६) इति च व्यवस्थितविभाषेति अजेर्वीतिसूत्रे **भाष्ये** स्पष्टम्। न च (३)व्यवस्थितविभाषयेन्द्रे नित्यावङि सिद्धे "इन्द्रे च" (पा०सू० ६।१।१२४) इति व्यर्थमिति वाच्यम्, भाष्योक्तातिरिक्तव्यवस्थितविभाषाणामप्रामाणिकत्वज्ञापनार्थं तत्सत्त्वादित्याहुः।

**इन्द्रे च** (पा०सू० ६।१।१२४)। क्वचिद्भाष्यपुस्तके चशब्दरहितः पाठः। इन्द्रावयवेऽचीत्यर्थस्तेन षष्ठीतत्पुरुषोत्तरपदषष्ठीतत्पुरुषे 'गवेन्द्रयज्ञः' इत्यादाववङ्सिद्धिः। अन्यथा वाक्ये गोशब्दस्येन्द्रपरत्वासम्भवेन समासा(४)क्षेपादिन्द्रशब्दस्योत्तरपदत्व एव प्रवृत्तिः स्यात्।

"प्लुतप्रगृह्या" (पा०सू० ६।१।१२५) इत्यस्य प्रकृत्येति पाठे एव

---

**(१)भाष्यादावुक्तमिति।** 'अथ नित्यग्रहणं किमर्थम्' इत्यादिना 'पूर्वस्मिन्नेव योगे विभाषाग्रहणं निवृत्तम्' इत्यन्तेन च "प्लुतप्रगृह्याः" (पा०सू० ६।१।१२५) इति सूत्रे **भाष्यादौ** ध्वनितमित्यर्थः। **(२)देवत्रात इति।** "नुदविदोन्दत्रा" (पा०सू० ६।२।५६) "अचि विभाषा" (पा०सू० ८।२।२१) "लटः सद्वा" (पा०सू० ३।३।१४) "सर्वत्र विभाषा" (पा०सू० ६।१।१२२) "शाच्छोः" (पा०सू० ७।४।४१) एतानि कारिकोक्तलक्ष्यविषये व्यवस्थितविभाषया प्रवर्त्तन्ते इत्यर्थः। **(३)व्यवस्थितविभाषयेति।** तत्त्वञ्च विभाषाशास्त्रीयोद्देश्यतावच्छेदकव्याप्यरूपव्यापकभावाभावान्यतरविधायकत्वम्। **(४)आक्षेपादिति।** श्रुतार्थापत्त्येति भावः।

सामञ्जस्यं मत्वाऽऽह—**अथ प्रकृतीति**। न चैतद्घटकपदार्थज्ञाना प्रगृह्यत्वादिकथनं पूर्वं युक्तमिति वाच्यम्, "इन्द्रे च" (पा०सू० ६।१। १२४) इत्यत्र प्राचीनपठितनित्यग्रहणस्य प्रामादिकत्वं बोधयितुं तदव्यवहितमेतत्सूत्रलेखनात्। तत्र नित्यग्रहणे तदव्यवहितोत्तरैतत्सूत्रे तद्वैयर्थ्यं स्पष्टमेवेत्याशयेनाह—**प्लुताः प्रगृह्याश्च वक्ष्यन्ते इति**। अचीत्यनुवर्त्तमाने पुनरज्ग्रहणं प्रत्यासत्त्या यत्राचि अनयोः प्रकृतिभावस्तदज्निमित्तकार्यस्यैव तेनाभाव इत्यर्थलाभार्थं, तेन जानु उ अस्य रुजति 'जानु अस्य' इत्यादौ सवर्णदीर्घरूपसन्धि(१)र्भवत्येव। **एहि कृष्णेति**। "दूराद्धूते च" (पा०सू० ८।२।८४) इति प्लुतः। अत्र प्लुतस्याऽऽश्रयात्सिद्धत्वं बोध्यम्। **नित्यमिति किमिति**। वाग्रहणनिवृत्त्यैव तल्लाभ इति प्रश्नः। **मा भूदिति**। नित्यग्रहणसामर्थ्येन पुनर्विधानाद् बाधकविषयेऽप्य(२)यमेवेति भावः।

**इकोऽसवर्णे** (पा०सू० ६।१।१२७) "एङः" (पा०सू० ६।१

---

(१)**भवत्येवेति**। न च "प्लुतप्रगृह्या" (पा०सू० ६।१।१२५) इत्येव सिद्धे अचीत्यनुवृत्तिसामर्थ्यादेव यन्निमित्तकः प्रकृतिभावस्तदज्निमित्तकस्यैव सन्धिकार्यस्याभावोऽनेन भवतीति जानु उ अस्य रुजति 'जान्वस्य रुजति' इत्यादौ न दोष इति सूत्रे अजिति व्यर्थमिति वाच्यम्, 'जा नु उ जानू' इत्यत्र प्रकृतिभावाभावायाचीत्यनुवृत्तेः सार्थक्येन वैयर्थ्याभावान्निरुक्तकल्पनाया असम्भवात्।

(२)**अयमेवेतीति**। ननु "इको यणचि" (पा०सू० ६।१।७७) "पदस्य शाकल्यस्य ह्रस्वः" "ऋत्यकः" (पा०सू० ६।१।१२८) इत्येवं सूत्रत्रयमस्तु, तथा च 'हरी एतौ' इत्यादौ परत्वादयमेव प्रकृतिभावो यथा स्यादिति नित्यग्रहणं व्यर्थम्। नच 'इकः' इत्यपि व्यर्थं "ह्रस्वस्य पिति कृति तुक्" (पा०सू० ६।१।७१) "दीर्घात्" (पा० सू० ६।१।७५) इति सूत्राभ्यां ह्रस्वदीर्घानुवृत्त्यैव सिद्धेः। 'हे दैत्य अत्र' इत्यादौ तु परत्वात्सवर्णदीर्घेण बाधान्न यण् इति वाच्यम्, 'यातिः' इत्यादौ स्थानिवद्भावेन यणापत्तेः। पूर्वस्यैव हि विधौ स्थानिवद्भावेन सवर्णदीर्घाप्राप्त्या सवर्णदीर्घप्रवृत्तियोग्यसवर्णाच्त्वावच्छिन्नातिरिक्ताच्परकत्वस्य सत्त्वात्। गोमयशब्दादाचारक्विबन्तात् क्तिचि अतो लोपयलोपयोः 'गोमतिः' इत्यादौ यणापत्तेश्च, इति चेत्? न, "अप्लुतवदुपस्थिते" (पा०सू० ६।१।१२९) इत्यत्रासवर्णग्रहणानुवृत्तये यथाश्रुतन्यासस्याऽऽवश्यकत्वात्। अत एव "ई चाक्रवर्मणस्य" (पा०सू० ६।१।१३०) इति सूत्रस्थे ईग्रहणे

१०९) इत्यतः पदान्तादित्यनुवृत्तं प्रथमया विपरिणम्यत इत्याह—**पदान्ता इति । वेति ।** ह्रस्वयणोर्विधानसामर्थ्यात्तु न विकल्पसिद्धिः । अपदान्तादौ यणश्चरितार्थत्वात् । **सामर्थ्यादेवेति ।** चेन प्रकृतिभावाकर्षणेऽपि "ऋत्यकः" (पा०सू० ६।१।१२८) इत्यत्र चानुकृष्टत्वेन तदसम्बन्ध इति तदर्थं ह्रस्वविधानसामर्थ्यस्याऽऽवश्यकत्वेन चकारो व्यर्थ इति भावः । **भाष्ये स्थितमिति ।** प्रकृतसूत्रे इति शेषः । एतेन "ह्रस्वाभावे प्रकृतिभावार्थं चकारः" इति न्यासाद्युक्तमपास्तम् । 'चक्री अत्र' इति तु संहिताया अविवक्षायां बोद्धव्यम् । "न समासे" (का० वा०) "सिति च" (का०वा०) इति वार्त्तिकम् । **पार्श्वमिति ।** "पर्श्वा णस् वक्तव्यः" (का०वा०) इति णस् । "सिति च" (पा०सू० १।४।१६) इति पदत्वम् ।

**ऋत्यकः** (पा०सू० ६।१।१२८) । सवर्णार्थमनिगर्थश्चेदम् । होतृऋकारः । ब्रह्मऋषिः । **आर्च्छदिति ।** आटो धात्ववयवत्वेनापदान्तत्वादिति भावः* । एतेन "आटश्च" (पा०सू० ६।१।९०) इति पुनर्वृद्धिविधानार्थेन चेन "उस्योमाङ्क्षु" (का०वा०) पररूपबाधवत्प्रकृतिभावस्यापि बाधेनेष्टसिद्धिरित्यपास्तम् । **समासेऽपीति ।** (१)व्याख्यानादिति भावः । **सप्तऋषीणामिति ।** "दिक्संख्ये" (पा०सू० २।१।५०) इति समासः । प्रकरणशुद्धये प्रकृतिभावविधायकसूत्रद्वयमुपन्यस्य "प्लुतप्रगृह्या" इतिसूत्राकाङ्क्षितप्लुतप्रगृह्ययोर्मध्ये प्रथमोपात्तत्वात् प्लुतप्रकरणमारभते—

**वाक्यस्य टेः** (पा०सू० ८।२।८२) । वाक्यस्येत्यभावे पदस्य टेरित्यर्थेऽनन्त्यस्यापि पदस्य टेः प्लुतः स्यात् । तत्सत्त्वे तु वाक्यस्य टिरन्त्यपदस्यैव सम्भवतीति न दोषः । टिग्रहणाभावे प्लुतश्रुत्योपस्थिताच्परि-

---

तत्प्रत्याख्याने च न फलभेद इति वक्ष्यते इति दिक् । **(१)व्याख्यानादिति ।** पूर्वसूत्राप्राप्तियोग्यस्यैवोदाहरणस्य भाष्ये उपन्यासमूलकात् सित्साहचर्यमूलकाद्वा व्याख्यानादित्यर्थः ।

---

* पुस्तकान्तरे 'भावः' इत्यनन्तरमयम्पाठोऽस्ति—**'ईषदसमाप्तऋच्छको बहुच्छक इत्यपि व्यावर्त्यं बोध्यम्'** । इति ।

भाषयाऽजन्तस्यैव स्यात्। टिग्रहणे तु तत्सामर्थ्याट्टिनाऽचो विशेषणाद् व्यञ्जनान्तस्यापि भवति।

**प्रत्यभिवादे** (पा०सू० ८।२।८३)। प्रणामादिभिराशिषं वाच्यमानो गुर्वादिर्यत्प्रतिसम्भाषते तत्प्रत्यभिवादः, न त्वाशीर्वचनम्। शूद्रे आशीर्वादरूपप्रत्यभिवादाभावेनाऽशूद्रे इत्यस्य वैयर्थ्यापत्तेः। अत एव **भाष्ये** "अशूद्रे इति किम्? कुशल्यसि तुषजक" इत्युक्तम्। **अभिवादये इति**। नमस्कारादिपूर्वमाशीरादि वाचयामीत्यर्थः। आयुष्मानित्यायुष्मत्त्वस्य विधेयत्वात्सम्बोधनाविभक्त्यभावः। **एधीति**। भवेत्यस्याप्युपलक्षणम्। प्रत्यभिवादे शर्मादिप्रयोगो न नियतः "एचोऽप्रगृह्यस्य" (पा०सू० ८।२।१०७) इति सूत्रे प्रत्यभिवादेऽन्तस्यैचः प्लुतविधानात्। 'आयुष्मानेधि अग्निभूता ३ इ' इति **भाष्ये** तदुदाहरणाच्च। शर्मादिप्रयोगे तु तट्टेरेव प्लुतः। "शर्मान्तं नाम ब्राह्मणस्य" इत्यादिस्मृत्या तस्य नामावयवत्वबोधनात्। **स्त्रियां नेति**। स्त्रिया अपि नाम्नाऽभिवाद(१)प्रत्यभिवादे इत्यर्थस्य **भाष्य**सम्मतत्वादिति भावः। **नाम गोत्रं वेति**। अभिवादप्रत्यभिवादे नामगोत्राभ्यामेव स्मृतिषु प्रसिद्धे। तत्राधिकृतस्य पदस्येत्यस्य प्रत्यभिवादे इत्यनेन विशेषणात्प्रत्यासत्त्या प्रत्यभ्युद्यमानार्थवाचकस्यैव प्लुत इति भावः। तत्र नामशब्देन द्वादशेऽह्नि पित्रादिकृतं गृह्यते। अत एव 'आयुष्मान् भव दण्डिन्' इत्यादौ प्लुतो नेति स्पष्टं **भाष्ये**। **"भोराजन्य"** (का०वा०) **इति**। भोःशब्दस्य राजन्यवैश्य(२)वाचकनाम्नश्च टेः प्लुत इत्यर्थः। भोःशब्दस्याप्राप्ते इतरयोस्तु नामत्वात्प्राप्ते (३)विभाषेयम्।

**दूराद्धूते** (पा०सू० ८।२।८४)। यावति देशे प्राकृतप्रयत्नोच्चारितं सम्बोध्यमानो न शृणोति किं त्वधिकं प्रयत्नमपेक्षते तावद्दूरम्।

---

(१)**प्रत्यभिवादे इति**। वाक्ये इत्यध्याहारः। (२)**वाचकेति**। प्रत्यभिवादे नामगोत्रान्यतरोच्चारणस्य नियतत्वेन वार्तिके न स्वरूपग्रहणम्। भोःशब्दांशे त्वसम्भवात् स्वरूपग्रहणमेव न पर्यायग्रहणमिति भावः। (३)**विभाषेयमिति**। उभयत्र विभाषेयमित्यर्थः।

दूरादाह्वानञ्च दूराद्बोधनस्योपलक्षणं, न तु सम्बोधनविभक्तिनियामकस्याभिमुखीकृत्य बोधनरूपस्य (१)सम्बोधनस्योपलक्षणम्, 'आगच्छतु भवान्देवदत्त' इत्येवमाह्वानस्यापि सम्भवात्। (२)अत एवाऽऽकडारसूत्रे नदीगुरुसञ्ज्ञयोः समावेशे 'वात्सीबन्धुः' इत्यत्र "गुरोः" (पा०सू० ८।२।८६) इति प्लुतो "नदी बन्धुनि" (पा०सू० ६।२।१०९) इति पूर्वपदान्तोदात्तत्वञ्च फलमुक्तं **भाष्ये**। अन्यथाऽत्र सम्बोधनाभावेन "गुरोः" (पा०सू० ८।२।८६) इत्यस्याप्राप्त्या तदसङ्गतिः स्पष्टैव।

उपलक्षणत्वादसत्यप्याह्वाने भवति; तदाह—**सक्तूनित्यादि**। अत्रापि "दूराद्धूते" (पा०सू० ८।२।८४) इत्येतदनुवृत्तस्य 'पदस्य' इत्यस्य विशेषणं, तेन हूयमानार्थवाचिनः पदस्यैव टेः प्लुतः। तच्च रूढं यौगिकं वेत्यन्यदेतत्।

**हैहेप्र** (पा०सू० ८।२।२२)। हैहयोः सम्बोधनद्योतकत्वेन केवलाभ्यामपि ताभ्यां सम्बोधनदर्शनेन च तयोरपि हूयमानार्थपदत्वाद् (३)"गुरोरनृतः" (पा०सू० ८।२।८६) इत्येव सिद्धे नियमार्थमिदमित्याह—**हैहयोरेवेति**। 'हैहेऽन्ते' इत्येव सिद्धे प्रयोगग्रहणादनन्त्ययोरपि, तदाह—**हे३ रामेति**। **केचित्तु** एकं हैहेग्रहणमनन्त्यार्थम्।

---

(१)**सम्बोधनस्येति**। प्रकृतवाक्यजन्यबोधाश्रयत्वप्रकारकेच्छारूपसम्बोधनस्य नोपलक्षणमित्यर्थः। (२)**अत एवेति**। सूत्रे "दूराद्धूते" (पा०सू० ८।२।८४) इति बोधनमात्रस्योपलक्षणमिति स्वीकारादेवेत्यर्थः।

(३)**"गुरोरनृत"** (पा०सू० ८।२।८६) **इत्येव सिद्धे इति**। न च "गुरोरनृत" (पा०सू० ८।२।८६) इत्यस्य उद्देश्यतावच्छेदकं हूयमानार्थबोधकं वाक्यघटकं यत्पदं तत्सम्बन्धिऋद्भिन्नानन्त्यगुरुत्वं तत्सम्बन्धिघटितत्वञ्च। हैहे इत्यस्योद्देश्यतावच्छेदकं तु हूयमानार्थबोधकवाक्यघटकं यत् हैहेपदं तत्सम्बन्धिघटितत्वम्। तथा चानयोः सामानाधिकरण्यस्यैवाभावाद्व्याप्यव्यापकभावस्य दूरापास्तत्वेन नियम्यत्वाभिमतशास्त्रीयोद्देश्यतावच्छेदकव्याप्यरूपावच्छिन्नोद्देश्यताकत्वे सति नियम्यत्वाभिमतशास्त्रीयविधेयतावच्छेदकरूपावच्छिन्नविधेयताकत्वं नियामकत्वमिति लक्षणस्य प्रकृतेऽभावादिदमसङ्गतमिति वाच्यम्, आह्वानविषयकवाक्यघटकऋद्भिन्नानन्त्यगुरुत्वं तत्सम्बन्धिघटितत्वञ्च गुरोरनृत इत्यस्योद्देश्यतावच्छेदकमिति स्वीकारेण हैहे इत्यस्य नियामकत्वसम्भवात्।

अन्यथा "वाक्यस्य टे"रित्यधिकारादन्त्ययोरेव तयोः स्यात्, तदाह—हैहे राम इति। (१)प्रयोग इति तु—यत्र सम्बोधनोत्तरं तयोः प्रयोगस्तत्र तेनैवाभिमुख्यस्य द्योतितत्वेन द्योत्याभावादनर्थकयोरपि तयोः प्लुतार्थं, तदाह—**राम है३ इति।** अन्यथाऽप्रयुक्तयोः प्लुतासम्भवात्तद्वैयर्थ्यं स्पष्टमेव। 'हैहयो'रिति तु—तयोर्हूयमानार्थपदत्वाभावादप्राप्ते विध्यर्थम्। नियमे तु न मानं, तेनात्र प्लुतसमावेशः। एतत्सर्वं **भाष्यकैयटयोः** स्पष्टमित्याहुः। **यत्तु** अयं हूयमानार्थपदस्य टेः प्लुतस्य बाधकस्तक्रकौण्डिन्यन्यायादिति। तन्न, 'शिव हे' इत्यादौ तस्या(२)प्राप्तेस्तन्न्यायविषयाभावात्।

**गुरोर** (पा०सू० ८।२।८६)। "दूराद्धूते" (पा०सू० ८।२।८४) इत्यनुवर्त्तते, तेन दूराद् बोधन एव प्रवृत्तिः तदाह—**दूराद्धूत इति।** दूरत्वञ्चात्राविवक्षितं, तेन प्रत्यभिवादे "भोराजन्य" (का०वा०) इत्यस्य विषयेऽप्यस्य प्रवृत्तिः, तद्विषयेऽप्युपलक्ष्यबोधनसत्त्वात्। सर्वप्लुतप्रकरणस्य तु न शेषः। तथा हि सति "वाक्यस्य टे"रित्यनेन सहैवास्याप्यधिकारत्वमेव कुर्यात्। एतत्त्रयविषयमेवेदमिति प्रकृतसूत्रे "अनुदात्तं प्रश्नान्त" (पा०सू० ८।२।१००) इति सूत्रे च वृत्तौ स्पष्टम्। अपिशब्दो यथाप्राप्तटिसमुच्चयार्थः। यदि तु गुरोः सन्निधानादन्त्यो गुरुरेव समुच्चीयेत तदाऽन्त्यलघुमति अनन्त्यगुरावेतस्य, अन्त्यलघौ "दूराद्धूते च" (पा०सू० ८।२।८४) इत्यादीनां दुर्वारत्वेन प्लुतसमावेशापत्तिः। एकैकग्रहणं त्वेतद्विहितानामेव पर्यायार्थं स्यात्। तेन यत्रान्त्योऽपि गुरुरनन्त्यगुरुद्वयं वा तत्रैव पर्यायः स्यात्। (३)व्याख्यानाच्चैतदर्थलाभः। **अनन्त्यस्यापीति।** अपिनाऽन्त्यस्य गुरोरगुरोश्चेत्यर्थः। **पर्यायार्थमिति।** अन्यथा समावेशः

---

**(१)प्रयोग इति तु इति।** अयं भावः—हैहयोरित्येव सूत्रमस्तु, हैहेशब्दान्तं यद्वाक्यं तदवयवनिर्दिश्यमानावयवटेरित्यर्थः। तथा च द्वितीयं हैहेग्रहणं निर्दिश्यमानपरिभाषाया अप्रवृत्तये। हैहेऽन्तस्येत्यनेनैव निर्दिश्यमानपरिभाषाया अप्रवृत्तौ सिद्धायां द्वितीयहैहेग्रहणं तदन्तविध्यभावाय। हैहेऽन्ते हैहयोरित्येव सिद्धे प्रयोगग्रहणमनर्थकहैहयोरपि प्लुतार्थमिति। **(२)अप्राप्तेरिति।** हे इत्यस्य हूयमानार्थकत्वाभावादित्यर्थः।

**(३)व्याख्यानाच्चेति।** अनन्त्यस्यापीत्येतत्सामर्थ्यादित्यर्थः। अन्यथा एकै

स्यादिति भावः । "अनुदात्तं पदम् (पा०सू० ६।१।१५८) इति तु त्रिपाद्यां न प्रवर्त्तत इति तत्रैव (१)वक्ष्यते । प्राचामिति तु पक्षे सर्वेषां प्लुताभावार्थम् । **विकल्पत इति ।** सा च व्यवस्थितविभाषा । तेन 'अग्नीदग्नीन्विहर' इत्यादौ "अग्नीत्प्रेषणे" (पा०सू० ८।२।९२) इति न । **भाष्ये** तु "विभाषापृष्ट" (पा०सू० ८।२।९३) इति सूत्रे विभाषेति योगविभागो दर्शितः । साऽपि व्यवस्थितविभाषेति **कैयटः ।** अत एव "ओश्रावये परस्येति वक्तव्यम्" इति वचनस्य 'अग्नीदग्नीन्' इत्यादौ प्लुतनिवृत्तये कृतस्य विभाषेति योगविभागेन (२)प्रत्याख्यानं **भाष्योक्तं** सङ्गच्छते । एवञ्च **भाष्य**संमतैषा व्यवस्थितविभाषेत्याहुः ।

अप्लुतवदित्युक्त्या प्लुत इत्यध्याहारस्तदाह—**प्लुतोऽप्लुतवदिति । प्लुत एव निषिद्ध्येतेति ।** तत्स्थाने अप्लुतस्य विधानेन स एव निवर्त्तेतेत्यर्थः । प्रसज्यप्रतिषेधेन व्याख्यानं तु न युक्तम् , (३)गौरवात् । किं च तथा सति प्लुतप्रकरणे एव नोपस्थिते इति वदेत् । न च पर्युदासे 'अग्नी३ इति' इत्यादौ प्रगृह्याश्रयप्रकृतिभावं बाधित्वा परत्वादप्लुतवद्भावे दीर्घादिकं स्या(४)दिति वाच्यम् । शब्दत इतिशब्दसापेक्षाप्लु

---

कग्रहणसामर्थ्यादेतद्विहितप्लुतपर्यायस्य सिद्धत्वात्तद्वैयर्थ्यं स्पष्टमेव । (१)**वक्ष्यत इति ।** "अनुदात्तं पदम्" (पा०सू० ६।१।१५८) इति परिभाषाया उदात्तस्वरितान्यतरविधायकशास्त्रत्वस्य लिङ्गत्वेन, त्रिपाद्याश्च "पूर्वत्रासिद्धम्" (पा०सू० ८।२।१) इति सूत्रेण शास्त्रत्वेनासिद्धत्वबोधनात् उदात्तस्वरितविधायकशास्त्रत्वप्रकारकज्ञानाभावादेतस्यास्त्रिपाद्यामप्रवृत्तावुदात्तप्लुतद्वयश्रवणाभावाय एकैकग्रहणमावश्यकमिति भावः । (२)**प्रत्याख्यानमिति ।** 'अग्नीदग्नीन् विहर' इत्यत्रातिव्याप्त्यभावेऽपि "ओश्रावये परस्य च" इति वार्तिकस्य 'ओ३श्रावय' 'उद्धरोद्धर' इत्यादावव्याप्तत्वादिति भावः ।

(३)**गौरवादिति ।** असमर्थसमासस्य क्रियाध्याहारस्य चाऽऽवश्यकत्वादिति भावः । (४)**इति वाच्यमिति ।** नच कार्यातिदेशपक्षे सादृश्यानुयोगितावच्छेदकावच्छेदेन यन्निमित्तवैकल्यप्रयुक्तोपदेशाप्रवृत्तिस्तन्निमित्तातिरिक्तसर्वनिमित्तकत्वमतिदेशस्येति सिद्धान्तेन प्रगृह्याः प्रकृत्येत्यनेन प्रगृह्यभिन्नत्वेन "अकः सवर्णे" (पा०सू० ६।१।१०१) इत्यत्रत्याक्पदार्थे सङ्कोचात् प्लुतभिन्नत्वातिरिक्तस्य सवर्णाजव्यवहितपूर्वत्वविशिष्टप्रगृह्यभिन्नाक्त्वस्य अप्लुतवद्भावे निमित्तत्वेनेमे शङ्कासमाधाने निर्दले इति वाच्यम् , पर-

तवद्भावापेक्षया वर्णमात्रापेक्षप्रकृतिभावस्यान्तरङ्गत्वात् । अप्लुतवदित्यस्य प्लुतकार्यं नेत्यर्थस्तु न शब्दमर्यादालभ्यः । प्लुतेऽप्लुतसादृश्यविधानस्यैव शब्दतो लाभात् । **भाष्ये** प्लुतकार्यप्रतिषेधार्थमित्युक्तिस्तु फलितार्थाभिप्रायेणैवेति बोद्धव्यम् । **प्रगृह्याश्रये इति** । प्लुते कृतेऽपि तस्यासिद्धत्वाद्दीर्घत्वबुद्धिवत् तद्गतं प्रगृह्यत्वमनुकार्ये सुलभम् । अनुकरणे तु "प्रकृतिवदनुकरणम्" (प०भा०) इत्यतिदेशात्तत्त्वमिति भावः ।

किं मया कर्त्तव्यमिति पृष्ट आह–**चिनु हीं३इदमिति**। "विभाषा पृष्टप्रतिवचने हेः" ( पा०सू० ८।२।९३) इति प्लुतः । इदंशब्दोऽत्र वाक्यान्तरस्थ इति हेरिकारस्य वाक्यटित्वम् । **उभयत्र विभाषेयमिति** । उपस्थिते प्राप्तेऽनुपस्थिते चाप्राप्ते इत्यर्थः । विभाष्यते विकल्प्यते ; इति विभाषा । "गुरोश्च हलः" (पा०सू० ३।३।१०३) इत्यप्रत्यये टाप् , न वेति विभाषायामिति **भाष्य**प्रयोगात् । **भाष्ये** तु "किमर्थमिदमुच्यतेऽनुपस्थितार्थं, तत्र ईग्रहणेन नार्थः, अविशेषेण चाक्वर्मणस्याप्लुतवदित्येव इदमपि सिद्धं वशा इयं वशेयम्" इत्युक्तम् । तद्बलेनोपस्थिते पूर्वविप्रतिषेधेन ईग्रहणेऽपि नित्याप्लुतवद्भाव एवेष्टः । प्रत्याख्याने नित्याप्लुतवद्भावस्य येननाप्राप्तिन्यायेन वैकल्पिकतद्बोधिताभावांशबाधकत्वात् । उपस्थित इत्यस्य निवृत्त्या परविप्रतिषेधादुभयत्र विभाषेयमिति (१)**कैयटस्य** प्रमादः । मूलं तु इतिशब्दभिन्ने वैदिकेतिशब्दे

त्वादप्लुतवद्भावेन प्रगृह्याः प्रकृत्येत्यस्य बाधादवैदिकेतिशब्दाव्यवहितभिन्नप्रगृह्यभिन्नत्वेनाक्पदार्थे सङ्कोचादवैदिकेतिशब्दाव्यवहितपूर्वत्वविशिष्टप्लुतभिन्नो यः प्रगृह्यस्तद्भिन्नो योऽक् तादृशाक्त्वमेव अप्लुतवद्भावे निमित्तमिति शङ्कस्याऽऽशयः, अन्तरङ्गत्वात्प्रगृह्या इत्यनेन बाधात्सामान्यतः प्रगृह्यभिन्नत्वेनाक्पदार्थे सङ्कोचात्सवर्णाजव्यवहितपूर्वत्वविशिष्टप्रगृह्यभिन्नाक्त्वमेव अप्लुतवद्भावे निमित्तमिति समाधातुराशय इत्यदोषात्। अपवादविषये सङ्कुचितसङ्कोचो न भवतीति सिद्धान्तादिति दिक् ।

(१)**कैयटस्य प्रमाद इति । परे** तु "अप्लुतवदुपस्थिते" (पा०सू० ६।१। १२९) इति सूत्रे "इकोऽसवर्णे" (पा०सू० ६.१.१२७) इति सूत्रादसवर्ण इत्यनुवर्तते। अत एव चिनुहीतीत्यादावीग्रहणसत्त्वे विकल्पेनाप्लुतवद्भावः, प्रत्याख्यानपक्षेऽपवादत्वान्नित्याप्लुतवद्भाव इति फलभेदो न । अत एव नित्यग्रहणं किमर्थमिति भाष्योक्तप्रश्न-

चेत्येवंपरतया कथं चिद्व्याख्येयमित्यन्ये। उद्देश्यप्रतिनिर्देश्ययोरैक्यमापादयत् सर्वनाम पर्यायेण तत्तल्लिङ्गभागितार्थमिति निर्देशः।

विशेषणेन तदन्तविधिमाश्रित्याह—**ईदूदेदन्तमिति। द्विवचनमिति।** सञ्ज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिनिषेधा(१)दितिभावः। एदन्तमिति व्याख्याने फलमाह—**पचेते इति।**

**निपात ए** (पा०सू० १।१।१४)। निपात इति किम्? (२)चकारात्र। प्रत्ययस्य शास्त्रकल्पितार्थवत्त्वात्, एकाजिति कर्मधारयो वर्त्तिपदार्थप्रधानत्वेना(३)न्तरङ्गत्वाद्, "व्याहरति मृगः" इत्यादिनिर्देशाच्च। तेन प्रेदमित्यादौ न दोषः; तदाह—**एकोऽजिति। आङ्वर्ज इति।** पर्युदासस्यौचित्यात्। अत एवैकाज्नाङिति नासूत्रि। वासुदेववाचकस्य अशब्दस्य आङा सहाव्ययीभावे आ आत् अमित्यादौ (४)सत्यभिधाने

---

सङ्गच्छते। अन्यथा "इको यणचि" (पा०सू० ६।१।७७) इत्यनन्तरं "पदस्य शाकल्यस्य ह्रस्वः" "ऋत्यकः" इत्येव सिद्धे तदसङ्गतिः स्पष्टैव। एवञ्च यथाश्रुतं मूलमेव युक्तम्। नापि **कैयटस्य** प्रमाद इति प्राहुः। असवर्णे इत्यनुवृत्तौ "वद्ग्रहणाभावे अग्नी ३ इतीत्यत्र प्लुतस्य श्रवणं न स्यात्" इतिभाष्यससङ्गतिरूहनीया॥

**(१)इति भाव इति।** वस्तुतस्तु ईदूदेदन्तं यद् द्विवचनं तदन्ततदादि प्रगृह्यमित्यर्थेऽपि न दोषः। न च 'पदार्थः पदार्थेनान्वेति; न तु पदार्थैकदेशेन' इति व्युत्पत्तिविरोध इति वाच्यम्, 'गभीरायां नद्यां घोषः' "ङमो ह्रस्वादचि" (पा०सू० ८।२।३२) इत्यत्रेव द्विवचनपदमेव ईदूदेदन्तं यद् द्विवचनं तदन्ततदादिपरम्, ईदूदेदितितात्पर्यग्राहकमिति स्वीकारेणादोषात्। "संज्ञाविधौ" इति परिभाषा तु फलाभावान्न स्वीक्रियते इत्युच्छृङ्खलाः।

**(२)चकारात्रेति।** अत्र णलो मा भूदित्यर्थः। **(३)अन्तरङ्गत्वादिति।** निषादस्थपत्यधिकरणन्यायेनेति बोध्यम्। **(४)सत्यभिधाने इति।** अपरनिमित्तकत्वेनान्तरङ्गत्वात्पूर्वं नपुंसकह्रस्वे पश्चात्सवर्णदीर्घे आमित्येव स्यादिति बोधनाय सत्यभिधाने इत्युक्तम्। अत एव "अतोऽम्" (पा०सू० ७।१।२४) इति तपरकरणं चरितार्थमित्यन्यत्र निरूपितमिति **केचित्। वस्तुतस्तु** उभयोरपि लुकोः परस्परं निमित्तविनाशकत्वस्य तुल्यत्वे कस्य पूर्वं प्रवृत्तिरित्याकाङ्क्षायामन्तरङ्गत्वादेरेव प्रयोजकत्वस्य वाच्यतया आङः परस्याविभक्तेः अन्तरङ्गत्वात् "अव्ययादाप्सुपः" इति पूर्वमेव लुकि सामासिकलुकः सवर्णदीर्घनिमित्तविनाशकत्वाभावेन अन्तरङ्गत्वादेव सवर्णदीर्घे च जाते ततः सामा-

स्वत आङ्भिन्नत्वेन पूर्वान्तवत्त्वेन निपातत्वेऽपि प्रगृह्यत्वन्न। पूर्वान्तवत्त्वेनाऽऽङ्त्वातिदेशेऽतिदिश्यमानधर्म(१)विरुद्धस्वाश्रयधर्मप्रयुक्तकार्यनिवृत्तेरतिदेशस्वभावसिद्धत्वात्। ओदिति सूत्रे आ उ ओ, इत्यत्र अनाङिति "प्रतिषिद्धार्थोऽयमारम्भ" इति तु भाष्यं तु पर्युदासेऽपि गम्यस्य प्रतिषेधस्य सत्त्वान्नानुपपन्नम्। अनाङिति पर्युदासादेव निपातैकाज्रूपत्वे लब्धे निपातैकाज्ग्रहणं स्पष्टार्थम्। स्वाङ्गसमुदाये (२)स्वाङ्गत्वाभाववदच्समुदायेऽच्त्वाभावाद् अच् इत्येवाच्समुदायग्रहणाभावे सिद्धे एकग्रहणमन्यत्र (३)वर्णग्रहणे (४)जातिग्रहणार्थम्। तेन (५)घिप्सतीत्यादिसिद्धिरिति भाष्ये स्पष्टम्। जातिग्रहणार्थमित्यस्योपात्तजात्याश्रयैकानेकव्यक्तिग्रहणार्थमित्यर्थः। तेन तितउशब्दैकदेशस्य अउ इत्यस्यानुकरणे अउ अकरोदित्यत्र "अनुकरणं चनिति" (पा०सू० १।४।६२) इति निपातत्वेऽपि प्रगृह्यत्वाभाव एकग्रहणफलं बोद्धयम्। ननु ङकारस्य क्वाप्यश्रवणेन ङिदङिद्विवेको दुर्ज्ञेय इत्यत आह—**वाक्यस्मरणयोरिति।** वाक्यशब्देन स्वार्थगतमनभिमतत्वम्। स्मरणं—विस्मृतस्य स्मृतिविषयता। **एवं किल तदिति**—स्मृतार्थनिर्देशः।

---

सिक्लुकि आ इत्यस्य नपुंसकप्रातिपदिकत्वाद्ध्रस्वे "अतोऽम्" इति अम्भावे च अम् इत्यस्य सिद्धिरिति नानभिधाने एतद्बीजम्। किन्तु प्रचुरप्रयोगाभाव एव अनभिधानबीजत्वेनोत्प्रेक्षितः। "अतोऽम्" (पा०सू० ७।१।२४) इति तपरकरणस्य तु अश्व आश्वेति समाहारद्वन्द्वे सामासिकलुगुत्तरं ह्रस्वदीर्घयोर्युगपत्प्राप्तौ अपरनिमित्तकत्वेनान्तरङ्गत्वाद् ह्रस्वे ततो दीर्घे आ इत्यत्र अम्वारणार्थं चारितार्थ्यं स्पष्टमेवेत्याहुः। (१)**विरुद्धेति।** अत्र विरुद्धत्वं तदभाववत्तानिश्चयमुद्रया; न तु तदभावव्याप्यवत्तानिश्चयमुद्रया। अत एव अधुरित्यादौ "विभाषा घ्राधेट्" (पा०सू० २।४।७८) इति लुगर्थमतिदिश्यमानधेट्त्वविरुद्धस्वाश्रयादन्तत्वप्रयुक्ता "आतः" (पा०सू० ३।४।११०) इति शास्त्रेण जुस्सिद्धिरिति दिक्। (२)**स्वाङ्गत्वाभाववदिति।** स्वाङ्गत्वपर्याप्त्यभाववदित्यर्थः। (३)**वर्णग्रहणे इति।** यस्मिन् शास्त्रे यादृशवर्णत्वव्याप्यजात्यवच्छिन्नग्रहणं तत्रेत्यर्थः। (४)**जातिग्रहणार्थमिति।** तादृशजात्यवच्छिन्नमात्रारब्धसमुदाये तादृशजातेरतिदेशादित्यर्थः। (५)**घिप्सतीति।** "हलन्ताच्च" (पा०सू० १।२।१०) इत्यत्र वर्णत्वव्याप्यहल्त्वजात्यवच्छिन्नग्रहणसत्त्वात्तादृशहल्त्वव्याप्यजात्यवच्छिन्नमात्रारब्धे नभ इति समुदाये हल्त्वातिदेशेन कित्त्वं सिद्ध्यतीति भावः।

निपात इत्यनुवृत्तमोदित्यनेन विशेष्यत इत्याह—**ओदन्त इति ।** निपातसञ्ज्ञा चादिपदोपस्थित(१)चादीनां सति सम्भवेऽर्थवतामेवेति सार्थकनिपातानां निपातपदेन तत्तदर्थविशिष्टानामेवोपस्थितिरिति । गौणमुख्यन्यायेन प्रकृतसूत्रस्थनिपातपदेन गौणार्थानां न ग्रहणमिति गोऽभवदित्यादौ च्व्यन्ते नास्य प्रवृत्तिः । एवञ्च कार्यकालपक्षेऽपि च्व्यन्ता निपाता इत्यस्यानुपस्थितिरेतत्परिभाषावशात् । अव्ययसञ्ज्ञादौ तु नैतत्परिभाषाप्रवृत्तिरनित्यत्वात् । अत एवानर्थकेऽपि निपाते सा सञ्ज्ञा सिद्धयति ।

त्रपो इतीत्यादौ प्रगृह्यत्वायाह—**सम्बुद्धिनिमित्तक इति ।** सम्बुद्धिपर इति व्याख्याने तु सोर्लुका लुप्तत्वेन तत्परत्वाभावान्न स्यात् । "न लुमता" इतिनिषेधानित्यत्वं त्वगतिकगतिः। इताविति किम्? पटोऽत्र । अनार्षे किम् ? ब्रह्मबन्धवित्यब्रवीत् । संहिताया विवक्षायामप्यवादिरहितप्रयोगार्थमिदम् । तद्विवक्षा च वर्णोच्चारणे नियतेनार्धमात्राकालव्यवायेनो(२)च्चारणेच्छा । तदधिकार्द्धमात्राकालव्यवायेनोच्चारणेच्छा च तदविवक्षेति बोद्धव्यम् ।

**उञः** (पा०सू० १।१।१७) । अत्रोञ् (३)निपात एव । उञ ऊँ इत्येकसूत्रत्वे तु **शाकल्य**ग्रहणाननुवृत्तौ ऊँ इतीत्येकमेव स्यात् । प्रगृह्यसञ्ज्ञाप्रकरणेन प्रगृह्यत्वस्यादेशस्य च सह विधानात् । उ इति वितीति च न स्यात् । आदेशे प्रगृह्यत्वकार्यन्तु स्थानिवद्भावेन बोद्धव्यम् । प्रगृह्यत्वस्य साक्षादुद्देश्यसम्बन्धस्य क्लृप्ततया विधेयविशेषणत्वे मानाभावात् । **शाकल्य**ग्रहणानुवृत्तावपि प्रगृह्यत्वस्य ऊँआदेशस्य विकल्पे ऊँ इति वितीति

---

(१)**चादीनामिति ।** न च निपातपदस्य चत्वात्वादिनानाधर्मावच्छिन्नशक्तत्वेन नानार्थतया सकृदुच्चरितन्यायेनाऽऽवृत्तिमन्तरा सर्वेषां बोधानापत्तिरिति वाच्यम्, चकारादि–आतइत्येतदन्तसमुदायघटकजन्यबोधविषयतावच्छेदकधर्मावच्छिन्ने शक्तिस्वीकारेणादोषात् । (२)**उच्चारणेच्छेति ।** वस्तुतस्तु अर्धमात्राधिककालाव्यवायेनोच्चारणेच्छा तद्विवक्षा,अन्यथोच्चारणेच्छा च तदविवक्षा । मूलोक्तन्तु न युक्तम् । अर्धमात्रान्यूनकालेनोच्चारणस्थले संहितात्वानापत्तेः । अर्धमात्रान्यूनकालेन वर्णान्तरोच्चारणं नैव सम्भवतीत्यभिप्रायेण मूलमित्यपि **केचित् ।** (३)**निपात एवेति ।** लक्षणप्रतिपदो-

सिद्ध्यति; न तु उ इतीति । प्रगृह्यत्वविकल्पेन पक्षे तदभावेऽपि आस (१)तात्पर्यात् । एतदभावे निपात एकाजित्यस्याप्रवृत्तेः । तदुक्तं **भाष्ये** योगविभागं प्रदर्श्य किमर्थो योगविभागः **शाकल्य**मते ऊँ विभाषा यथा स्यात् । ऊँ इति उ इति । अन्येषामाचार्याणां मतेन वितीति । अनेन हि योगविभागस्य 'उ इति' इति रूपसिद्धिः फलमिति स्पष्टमेव (२)लभ्यते । अतो योगविभागेन व्याचष्टे **उञ इति** । (३)उञो वाचकं प्रगृह्यपदमित्यर्थः ।

शाकल्यस्येतौ प्रगृह्यमित्यनुवर्त्तते, तदाह—**उञ इतौ वेत्यादि**। विकल्पाननुवृत्तौ हि निपात एकेत्येव सिद्धे इदं व्यर्थमेव स्यात् । एवञ्च प्राप्तविभाषेयम् । ऊँ इत्यत्र शाकल्यप्रगृह्यपदयोरसम्बन्धे उञ इत्यर्थाधिकारादप्रगृह्यस्यैवादेशे तस्य "इको यण्" (पा०सू० ६।१।७७) इति यणि ऊँ इतीत्यस्यासिद्धिः, दीर्घोच्चारणवैयर्थ्यापत्तिश्च । विकल्पमात्रसम्बन्धेऽपि ऊँ इतीत्यस्यासिद्धिरिति विधानसामर्थ्यात्प्रगृह्यपदसम्बन्धः । प्रगृह्यपदमात्रसम्बन्धेऽर्थाधिकारादप्रगृह्यस्य नित्ये ऊँआदेशे ऊँ इतीति, प्रगृह्यस्य उ इतीति सिद्धेऽपि वितीति न सिद्ध्येत् ; तदाह—**उञ इतौ दीर्घोऽनुनासिक इत्यादि** । अत्र (४)विशिष्टस्य विधिरिति न वाक्यभेदः । न च प्रगृह्यत्वमादेशश्च **शाकल्य**मते इति तयोरेकप्रयोगे एव प्रवृत्तिः स्यादिति वाच्यम् , योगविभागसामर्थ्येन **शाकल्य**मते एव भावाभावकल्पनात् । वस्तुत उञनुवादेन सञ्ज्ञाऽऽदेशयोः सहविधानमेव न्याय्यम् । आदेशे स्थानिवद्भावात्प्रगृह्यकार्यम् । **भाष्ये** 'प्रगृह्यसञ्ज्ञकश्च' इत्यपि स्थानिवद्भावलब्धार्थस्वरूपकथनमिति न्यायविदो (५)विचारयन्तु ।

---

रूपरिभाषयेति भावः । (१)**तात्पर्यादिति** । प्राप्तविभाषात्वेन पक्षेऽभावविधायकत्वादितिभावः । (२)**लभ्यत इति** । वस्तुतस्तु एकयोगे प्रकरणप्राप्तस्यापि प्रगृह्यपदस्य "उञः" इत्यस्य आदेशेनैव श्रुतत्वात्सम्बन्धे अन्वयासम्भवेनात्राननुवृत्तौ शाकल्यश्रुत्यनुवृत्त्या चाऽऽदेशे विकल्पिते तदभावे "निपात एकाजनाङ्" इति नित्यसंज्ञया वितीति न स्यादिति योगविभागस्येदमेव फलम् । स्पष्टञ्चेदं **कैयटे** इति दिक् । सूत्रे षष्ठ्यर्थस्योपपत्तये आह–(३)**उञो वाचकमिति** । एवञ्च सूत्रे वाच्यवाचकभावः षष्ठ्यर्थ इति भावः । (४)**विशिष्टस्य विधिरिति** । "लोहितोष्णीषा ऋत्विजः प्रचरन्ति" इत्यत्रेवात्रापि प्रगृह्यत्वविशिष्ट ऊँ इत्यादेशो विधीयते इति भावः । (५)विचारय-

**मय उञो** (पा०सू० ८।३।३३) । (१)व्याख्यानादत्र मय् प्रत्याहारः । अस्य त्रैपादिकत्वेनासिद्धत्वान्न "प्लुतप्रगृह्या" (पा०सू० ६।१।१२५) इत्यनेन बाधः । **नानुस्वार इति** । किं वितीत्यादौ प्रगृह्यसञ्ज्ञाऽभावेऽस्यासिद्धत्वाद् "इको यण्" (पा०सू० ६।१।७७) इति यणि अनुस्वारो भवत्येव ।

ननु "यः शिष्यते स लुप्यमानार्थाभिधायी" इति न्यायेन गौरीशब्दस्य सप्तम्यर्थवृत्तित्वेऽपीकारस्य तत्त्वाभावोऽत आह—**ईदूदन्तमिति** । (२)शब्दस्वरूपस्य विशेष्यत्वात्तदन्तविधिरिति भावः । **मामकी तनू इति** । प्रगृह्येषु इतिशब्दप्रयोगस्य पदकारैर्नियमितत्वात्पदपाठे (३)प्रगृह्यत्वफलमत्र बोद्धव्यम् । ईदूतौ किम् ? अम्रा भवाति, सप्तम्या डादेशः । तपरत्वम(४)सन्देहाय । सप्तमीति किम् ? धीती मती; ह्रस्वान्ताभ्यां तृतीयैकवचनस्य पूर्वसवर्णे सवर्णदीर्घः । **अर्थग्रहणं किमिति** । न च तदभावे 'ईदूदेद्' इतिवदीदूदन्ता या सप्तमीत्यर्थापत्तिः । तथा च 'ययी' इत्यादावेव स्यात् एकादेशस्य परादिवद्भावेन सप्तमीत्वात् , न तु 'गौरी' इत्यादाविति तत्सिद्ध्यर्थं तदावश्यकमिति वाच्यम् , "ईदूतौ सप्तमी प्रगृह्यम्" "अदसः" "एच्च द्विवचनम्" इत्येव सिद्धे गुरुभूतन्यासकरणेन तत्प्रकरणापेक्षया वैजात्यबोधनादूकारांशेऽसम्भवाच्च "सञ्ज्ञाविधौ"( प० भा० ) इति तदन्तग्रहणनिषेधाप्रवृत्त्या ईदूदन्तं सप्तम्यन्तमित्यर्थेनेष्टसिद्धेरिति प्रश्नः । 'ययी' इत्यादेर(५)नभिधानमेवेति **परे** ।

---

**न्त्विति** । उभयोः सहविधाने वाक्यभेदापत्त्या गौरवाद्विशिष्टविधानमेव न्याय्यम् । अत एव भाष्ये प्रगृह्यसंज्ञकश्चेत्यनेन विशिष्टविधानमेव बोधितमिति **केचित्** । वस्तुतस्तु सहविधाने न वाक्यभेदः, स्पष्टञ्चेदं मीमांसाप्रकाशे नामधेयप्रकरणे ।

(१)**व्याख्यानादिति** । बहुलक्ष्यसंस्कारानुरोधमूलकत्वादित्यर्थः ।

(२)**शब्दस्वरूपस्येति** । सप्तम्याक्षिप्तविद्यमानपदबोधस्य इति शेषः । (३)**प्रगृह्यत्वफलमिति** । 'मामकी इति' 'तनू इति' इत्यादावित्यर्थः । (४)**असन्देहायेति** । अनण्त्वेन सवर्णाग्रहणादिति भावः । (५)**अनभिधानमेवेति** । "ईदूतौ सप्तमीत्येव" इत्यादिप्रकृतसूत्रस्थभाष्यप्रामाण्यादिति भावः ।

**वृत्ताविति।** अर्थग्रहणसामर्थ्यात् (१)सप्तम्यर्थमात्रे पर्यवसन्नमित्यर्थेनात्र। तत्संसृष्टाऽऽधेयार्थेऽपि वृत्तेर्न दोषः। "सञ्ज्ञायाम्" इति समासे जहत्स्वार्थायां वृत्तौ पूर्वपदस्याऽऽनर्थक्येऽपि "सुप्सुपा" इति समासे अजहत्स्वार्थायां प्रसक्तदोषस्योक्तरीत्यैव वारणमिति भावः। 'गौरी अधिश्रितः' इत्यत्राधिश्रयणक्रियायामेव गौरीपदबोद्धया(२)धिकरणत्वान्वय इति गौर्यधिकरणके लक्षणायां मानाभाव इति न तत्र दोषः। **वाप्यामश्व इति।** सुप्सुपेति समासः, "सञ्ज्ञायाम्" (पा०सू० २।१।४४) इति वा। ननु सञ्ज्ञायामिति समासे वाक्येन सञ्ज्ञाऽनवगमान्नित्यसमासत्वेन विग्रहोऽनुचित इति चेत्? न, तेषु समाससमानार्थकवाक्याभावेन नित्यसमाससदृशत्वेऽपि नित्यसमासत्त्वाभावात्, विभाषाधिकारबाधे मानाभावात्। नित्यसमासे हि वृत्तिघटकपदानां पृथक् प्रयोगाभाव एव। अत्र तु पृथक्प्रयोगेऽपि तद्बोद्धव्यविशिष्टार्था(३)प्रतीतिमात्रमित्याहुः।

---

(१)**सप्तम्यर्थमात्रे पर्यवसन्नमिति।** तत्त्वञ्च सप्तम्यर्थविशिष्टत्वम्, वै० च-स्वनिरूपितशक्तिपर्याप्त्यधिकरणत्व, स्वानुयोगिनिरूपितशक्त्यनधिकरणत्व, स्वप्रतियोगिनिरूपितशक्तिपर्याप्त्यधिकरणत्व, एत्रितयसम्बन्धेन। "वाप्यश्वः" इत्यादौ वृत्तौ विशिष्टशक्तिसत्त्वेन 'वापी' इत्यत्र सप्तम्यर्थाधाराधेयभावनिरूपितशक्तिपर्याप्त्यधिकरणत्वस्य स्वप्रतियोगिवापीत्वावच्छिन्ननिरूपितशक्तिपर्याप्त्यधिकरणत्वस्य च सत्त्वेऽपि स्वानुयोग्यश्वत्वावच्छिन्ननिरूपितशक्त्यनधिकरणत्वस्याभावान्न दोषः। मूलोक्तं तु न युक्तम्, 'गौरी' इत्यादेः गौरीत्वावच्छिन्नार्थवृत्तित्वेन सप्तम्यर्थमात्रपर्यवसन्नत्वाभावात्, इति **केचित्।** **अन्येतु** सप्तमीपदस्य तदन्तबोधकतया सप्तम्यन्तार्थमात्रबोधकमित्यर्थे 'गौरी अधिश्रितः' इत्यादौ दोषाभावान्मूलोक्तं युक्तमेव। किञ्च सप्तम्यर्थमात्रे पर्यवसन्नमित्यस्य पदार्थान्तरनिष्ठविशेष्यताऽनिरूपिता या सप्तम्यर्थनिष्ठा उपस्थितिविषयता तत्प्रयोजकमित्यर्थकरणेऽपि न दोष इत्याहुः।

ननु "गौरी" इत्यादौ 'गौरीपदस्याधाराधेयभावसम्बन्धेन गौरीत्वावच्छिन्नविशिष्टे लाक्षणिकतया सप्तम्यर्थानुयोगिनिरूपितशक्त्यधिकरणत्वस्यैव सत्त्वेन कथं सप्तम्यर्थविशिष्टत्वं निरुक्तत्रितयसम्बन्धेनेत्यत आह-(२)**अधिकरणत्वान्वय इति।** (३)**अप्रतीतिमात्रमिति।** अत्यन्तरूढेषु—

जहत्स्वार्था तु तत्रैव यत्र रूढिर्विरोधिनी।

इत्यभियुक्तोक्तेर्जहत्स्वार्थवृत्तेरेव स्वीकारादिति भावः।

**अणोऽप्र** (पा०सू० ८।४।५७) । अण इति किम् ? कर्त्तृ, हर्त्तृ । अत्राण् पूर्वेणैव (१)व्याख्यानात् । 'आगच्छतमग्नी' इत्यादौ प्लुतस्यासिद्धत्वात्ततः प्रागेव यथोद्देशत्वात् प्रगृह्यत्वे जाते पश्चात्प्लुते तस्याप्यनुनासिकप्रतिबन्धार्थं पुनः सञ्ज्ञेति नानुनासिकः । सञ्ज्ञायाः कार्यार्थत्वात्पुनः प्रवृत्तौ कार्यमेव बीजम् । स्थानिवत्त्वन्तु न, प्लुतस्थान्य(२)ल्वृत्तिधर्मत्वेना(३)ल्विधित्वात् । पूर्वसवर्णे कृते द्विवचनत्वन्तु (४)परादिवद्भावेन । तेन (५)ताद्रूप्यानतिदेशेऽप्येतद्धर्मातिदेशाङ्गीकारात् । अत एव 'रामौ' इत्यादौ परादिवद्भावेन सुप्त्वात्पदत्वं साधितम् "अन्तादिवत्" (पा०सू० ६।१।८५) इत्यत्र **भाष्ये** इति स्पष्टमाकरे ।

**अच्सन्धिरिति** । "सिद्धमनच्त्वाद्" इति वार्त्तिकप्रयोगेण "अल्पाच्तरम्"(पा०सू०२।२।३४) इति सौत्रप्रयोगेण "कथमनच्त्वम्" इति भाष्यप्रयोगेण च वृत्तिघटका(६)च्पदे पदान्तकार्यस्य तत्सन्निधानेन श्चुत्वस्य चाभावो बोध्यते इति **केचित्** ।

## इति स्वरसन्धिः ।

---

(१)**व्याख्यानादिति** । लण्सूत्रस्थभाष्यप्रामाण्यादित्यर्थः । (२)**अल्वृत्तिधर्मत्वेनेति** । अल्त्वव्याप्यधर्मावच्छिन्नस्थानितानिरूपितादेशताश्रयधर्मिकारोपप्रकारीभूतधर्मत्वेनेत्यर्थः । (३)**अल्विधित्वादिति** । वस्तुतस्तु अप्रगृह्यस्येत्यत्र प्रसज्यप्रतिषेधस्वीकारे असमर्थसमासकल्पनया क्रियाध्याहारेण च गौरवात्प्रसज्यप्रतिषेधस्यान्याय्यत्वाल्लाघवेन पर्युदासस्यैव युक्तत्वेनाल्त्वव्याप्याच्त्वावच्छिन्नस्थानितानिरूपितादेशताश्रयधर्मिकारोपप्रकारीभूतप्रगृह्यत्वस्य "अणोऽप्रगृह्यस्य" (पा० सू० ८।४।५७) इत्येतच्छास्त्रीयोद्देश्यतायाः साक्षादनवच्छेदकत्वेनानल्विधावित्यस्याप्राप्त्या स्थानिवद्भावेनैव प्रगृह्यत्वं सुलभमिति दिक् ।

ननु प्लुतो द्विवचनत्ववानित्याकारकारोपेऽल्त्वव्याप्यधर्मावच्छिन्नस्थानितानिरूपितादेशताश्रयधर्मिकारोपे प्रकारीभूतद्विवचनत्वस्य प्रगृह्यसंज्ञाशास्त्रीयोद्देश्यतायाः साक्षादवच्छेदकत्वेन "अनल्विधौ" इति निषेधात्कथं द्विवचनत्वमित्यत आह–(४)**परादिवद्भावेनेति** । (५)**ताद्रूप्यानतिदेशेऽपीति** । अन्तादिवृत्तिवर्णमात्रवृत्तिधर्मघटितधर्मानतिदेशेऽपीत्यर्थः ।

(६)**अच्पदे इति** । "आदिरन्त्येन" (पा०सू० १।१।७१) इति सूत्रबोधितसंज्ञामात्रस्योपलक्षणमिदम् । अत एव "अणुदित्" (पा०सू०१।१।६९) इत्यादौ इमुङभा-

**स्तोश्चु** (पा०सू० ८।४।४०)। स् इति श् इति च लुप्तविभक्तिके भिन्ने पदे। **योगे इति**। संयोगे इति तदर्थः। तेन 'चितम्' इत्यादौ न दोषः। अत्र "पदस्य" (पा०सू० ८।१।१६) इत्यधिकृतमपि (१)न सम्बध्यते, "शात्" (पा०सू० ८।४।४४) इति ज्ञापकात्। तेन 'याच्ञा' सिद्धा। शात्परस्य स्तोः श्चुत्वनिषेधकात् "शात्" इति लिङ्गादेव निमित्तकार्यिणो(२)र्यथासंख्यं न। एवमुत्तरसूत्रेऽपि "तोः षि" (पा०सू० ८।४।४३) इति ज्ञापकान्न तत्। **शकारचवर्गौ स्त इति**। यथासंख्यमिति शेषः। **हरिश्शेते इति**। "वा शरि" (पा०सू० ८।४।३६) इति विसर्गाभावे शः। **सच्चिदिति**। चुत्वस्यासिद्धत्वाज्जश्त्वे दत्वे तस्य चुत्वेन जकारे चर्त्वमिति बोद्धव्यम्। तयोरत्रालेखस्तु वैचित्र्यार्थः।

**विश्न इति**। "यजयाचयतविच्छप्रच्छरक्षो नङ्" (पा०सू० ३।३।९०) इति नङि "च्छ्वोः" (पा०सू० ६।४।१९) इति शादेशे ङित्वाद् गुणाभावः। "प्रश्ने चासन्नकाले" (पा०सू० ३।२।११७) इति निर्देशात्सम्प्रसारणाभावः।

**न पदान्ता** (पा०सू० ८।४।४२)। पदाट्टोरित्येव सिद्धेऽन्तग्रहणं (३)स्पष्टार्थम्। **टोः किमिति**। षकारस्यापि पदान्ते जश्त्वविधानादिसकलेष्टसिद्धिरिति **केचित्**। **अन्येतु**–एवं सामान्यकल्पनायाम् 'अजन्तः' 'अगन्तः' इत्यादौ जश्त्वानापत्तिः। तस्मात् 'अच्पदघटकचकारस्य चुपदग्राह्यता न भवति' इत्येवानुगतरूपेण कल्पनीयम्। तेन कुत्वश्चुत्वयोरेकरूपेणैव वारणम्। जश्त्वं तु भवत्येव। पुनश्चर्त्वेनेष्टसिद्धिः। त्रिप्रकारैरज्भिरिति "उच्चैरुदात्तः" (पा०सू० १।२।२९) इति सूत्रस्थभाष्यप्रयोगे तु असन्देहार्थं कुत्वं न। अत एव 'अचोऽन्त्यु' इत्यत्र कुत्वं दृश्यते। तत्र अच इत्येतत्समभिव्याहारेण सन्देहाभावाद् इत्याहुः।

इति स्वरसन्धिः।

---

**अथ हल्सन्धिः**। (१)**न सम्बध्यते इति**। सामानाधिकरण्येन न सम्बध्यते इत्यर्थः। अत एव 'पदस्येत्यधिकृतं वैयधिकरण्येन सम्बध्यते' इत्याग्रिमग्रन्थेन 'सादेः पदस्येति नार्थः' इति परिभाषेन्दुग्रन्थेन च न विरोधः। (२)**यथासंख्यं नेति**। अनेन स्थान्यादेशयोर्यथासंख्यमस्त्येवेति सूचितम्। एवमुत्तरसूत्रेऽपि बोध्यम्।

(३)**स्पष्टार्थमिति**। अयं भावः–पदसंज्ञाप्रयोजकप्रत्ययोत्पत्तिप्रयोजकसंज्ञाश-

त्प्रश्नः। "ह्रस्वात्तादौ" (पा०सू० ८।३।१०१) इति षत्वस्या(१)सिद्धत्वाज्जश्त्वाभाव इत्युत्तरम्। **षण्णवतिरिति**। षडधिका नवतिरिति विग्रहः। षण् णगर्य इति (२)पृथक्पदे।

**यरोनु** (पा०सू० ८।५।४५)। पदान्तस्येति किम्? (३)वेद्मि, बध्नाति। **स्पर्शे चारितार्थ इति**। उपलक्षणमिदं (४)वलयोरपि प्रवृत्तेः। एतच्च जातिपक्षे स्पष्टमेव। व्यक्तिपक्षेऽपि तादृशव्यक्तौ चरितार्थस्य एतद्व्यक्तिविषयतयोपप्लव एव नेति बोद्धव्यम्। स्पष्टञ्चेदम् "इको यणचि" (पा०सू० ६।१।७७) इत्यत्र **कैयटे**।

**परेतु** स्थानेऽन्तरतमसूत्रे सप्तम्यन्तपाठस्य **भाष्यकृता** दूषितत्वेनैतद्युक्तेरुक्तिसम्भव एव न। तस्मात् "अनुस्वारस्य" (पा०सू० ८।४।

---

त्रीयोद्देश्यतावच्छेदकरूपावच्छिन्नसम्पादकविधित्वं पदविधित्वं चास्य नेति न समर्थपरिभाषाऽप्रवृत्त्यर्थं तदिति। (१)**असिद्धत्वादिति**। 'सर्पिस् तमम्' इति स्थिते जश्त्वं बाधित्वा अपवादत्वाद्रुत्वे विसर्गे सत्वे षत्वे च विसर्गसत्वषत्वानामसिद्धत्वाज्जश्त्वाभाव इति भावः। रुत्वात्प्राक् षत्वं तु न, रुत्वदृष्ट्या तस्यासिद्धत्वात्। (२)**पृथक्पदे इति**। "दिक्संख्ये संज्ञायाम्" (पा०सू० २।१।५०) इति नियमादिति भावः।

(३)**वेद्मि बध्नातीति**। इदमुपलक्षणं 'चख्नतुः' 'जग्मतुः' इत्यादेः। **यत्तु**—"रदाभ्याम्" (पा० सू० ८।२।४२) इति दकारस्य नत्वविधानं व्यर्थं सद् अपदान्तस्य यय्यनुनासिकस्तर्हि निष्ठाऽव्यवहितपूर्वस्यैवेति नियमान्नोक्तदोष इत्यरुचेराह—**बध्नातीति**। तन्न, दस्य यदि भवति तर्हि निष्ठायामेवेति नियमस्य, दस्य यदि भवति तर्ह्यपदान्तस्यैवेति विपरीतानियमस्य चाप्यापत्तेः 'क्षुण्णः' इत्यादौ णत्वार्थं दस्थाने नकारादेशस्य चारितार्थ्याच्च। अन्यथा "प्रत्यये भाषायाम्" (का० वा०) इत्यनुनासिकस्यासिद्धत्वाण्णत्वं न स्यादिति दिक्।

(४)**वलयोरपीति**। इदमुपलक्षणं यकारस्यापि। अत एव 'मध्वाँश्चिनोषि' 'कमलाँश्चिनोषि' 'दध्याँश्चिनोषि' इत्यादौ "नश्छव्यप्रशान्"(पा०सू० ८।३।७) इति रुत्वे अनुनासिके च अनेन विकल्पो भवति। न च सप्तम्यन्तपाठे एतद्ग्रन्थप्रवृत्त्या तत्पाठे स्ववृत्तित्व, स्वदलभिन्नदलीयस्थानित्वाभिमतेतरयावत्स्थान्यवृत्तित्व, स्वदलभिन्नदलीयवृत्तित्व, एतत्रितयसम्बन्धेन आदेशविशिष्टधर्मवत्त्वरूपान्तर्यस्य ग्राह्यतया इदमसङ्गतम्, तालुस्थानजन्यत्वादौ निरुक्तवैशिष्ट्याभावात्;—इति वाच्यम्, 'एतन्मुरारिः' इत्यादौ घोषप्रयत्नवत्त्वविशिष्टाल्पप्राणवत्त्वविशिष्टस्पृष्टप्रयत्नवत्त्वविशिष्टदन्तस्थानजन्यत्वादौ, दध्याँश्चिनोषि' इत्यादौ घोषप्रयत्नवत्त्वविशिष्टाल्पप्राणवत्त्वविशिष्टेषत्स्पृष्टप्रयत्नवत्त्वावीशि-

५८) इति सूत्रात्सवर्णग्रहणमपकृष्य परः सवर्णोऽनुनासिको भवतीत्यर्थात् दोषः । तदुक्तं **भाष्ये**—"रेफेऽनुनासिकपरसवर्णत्वयोः प्रतिषेधो वक्तव्यो, न वक्तव्यो; रेफोष्मणां (१)सवर्णा न सन्ति" इति । **चिन्मयमिति।** स्वार्थिकः "तत्प्रकृतवचने" (पा०सू० ५।४।२१) इति मयट् । तत्र तदिति वाक्यभेदेन क्वचित्प्राचुर्यरूपप्रकृतवचनाभावेऽपि मयडर्थम् । अत एव 'चिन्मयं ब्रह्म' इति सामानाधिकरण्यम् । 'चिन्मात्रम्' इति क्वाचित्कोऽपपाठः, मात्रचः प्रत्ययस्यात्रोपपत्त्यभावात् । मयूरव्यंसकादिष्वेवार्थमात्रशब्देनात्र समासस्य वक्ष्यमाणत्वात् । **निपातनादिति ।** यवादिगणे 'ककुद्मान्' इति प्रकृतिप्रत्ययसमुदायः पठ्यते इति मतेनेदम् ।

**उदः स्था** (पा०सू० ८।४।६१) । "तस्मादित्युत्तरस्य" (पा०सू० १।१।६७) इति परिभाषालभ्यमर्थमाह—**उदः परयोरिति । अत्राघोषस्येति ।** समनियतत्वेनान्यतमाग्रहणे बाधकाभावेन श्वासविवारयोस्त्या-

---

ष्टतालुस्थानजन्यत्वादौ च आदेशवैशिष्ट्यसत्त्वेनादोषात् । (१)**सवर्णा न सन्तीति ।** अनुनासिका इति शेषः । एतेन रेफस्य रेफ एव सवर्णोऽस्तीतीदमसङ्गतमिति परास्तम् ।

अत्रेदमवधेयम्—प्रथमान्तपाठे स्ववृत्तित्व, स्वदलभिन्नदलीयवृत्तित्व, स्वदलभिन्नदलीयादेशत्वाभिमतेतरयावद्वृत्तित्व, एतत्त्रितयसम्बन्धेन स्थानिविशिष्टधर्मवत्त्वरूपमान्तर्यं ग्राह्यम् । "अनान्तर्यमेवैतयोरान्तर्यम्" इत्यत्र प्रतियोगिभूतमान्तर्यञ्च निरुक्तत्रितयसम्बन्धेन स्थानिविशिष्टत्वे सति आदेशविशिष्टो यो धर्मस्तद्वत्त्वं ग्राह्यम् । तादृशश्च धर्मः "सार्वधातुकार्धधातुकयोः" (पा० सू० ७।३।८४) इत्यादौ तालुस्थानजन्यत्वादिः । तदभावश्च ऋकाराकारयोः । "अचो ञ्णिति" (पा० सू० ७।२।११५) इत्यादौ अत इत्यपकर्षणेन माठरपरिवेषणन्यायेन अकारातिरिक्ताचो ग्रहणमिति न कण्ठजन्यत्वस्य स्थान्यादेशोभयवैशिष्ट्यस्य सत्त्वेन तदभावस्य ऋकाराकारोभयवृत्तित्वाभावाद्दोषापादनसम्भवः । न च तालुजन्यत्वकण्ठतालुजन्यत्वादौ अभावप्रतियोग्यान्तर्यघटकस्थानिवैशिष्ट्यसत्त्वेऽपि आदेशवैशिष्ट्याभावाद् ऐकारौकारयोरपि स्थान्यादेशोभयविशिष्टधर्मवत्त्वाभावेनानान्तर्यरूपान्तर्यसत्त्वात् तद्धर्मं गृहीत्वा ऋकारस्याऽऽकार एवेतिनियमानुपपत्तिरिति वाच्यम्, ऐकारनिष्ठविवृतावर्णसदृशघटितत्वविशिष्टकण्ठतालुजन्यत्वे औकारनिष्ठविवृतावर्णसदृशघटितत्वविशिष्टकण्ठोष्ठस्थानजन्यत्वे च स्थानिवैशिष्ट्यस्य आदेशवैशिष्ट्यस्य च सत्त्वेन तद्वत्त्वस्य च ऐकारौकारयोः सत्त्वेनान्तर्याभावस्याभावादिति दिक् । **केचित्तु** अनान्तर्यं तत्तच्छास्त्रीयस्थानिविशिष्टो यो यो धर्मस्तदभावकूटव-

णेऽपि (१)न न्यूनतेति बोद्धव्यम् । **थस्यासिद्धत्वादिति ।** त्रिपाद्यां परत्वादिति भावः । "हलो यमाम्" (पा०सू० ८।४।६४) इति सूत्रोक्तभाष्यसम्मताष्टाध्यायीपाठे तु थस्यासिद्धत्वाभावेन चर्त्वं भवत्येव । अत एव "उत्पूर्वस्कन्दे रोगे उपसंख्यानम्, उत्कन्दो रोगः" इति **भाष्यं** सङ्गच्छते । मूलन्तु प्राचामनुरोधेनेति **परे ।** न चेदं सूत्रं व्यर्थं "झलो झलि" (पा०सू० ८।२।२६) इत्यनेन सस्य लोपे उत्थानस्य सिद्धेरिति वाच्यम्, झलादौ प्रत्यये तेन लोप इत्यर्थस्या(२)नेन ज्ञापनात् । उदस्थादित्यत्र तु निर्दिश्यमानपरिभाषया निर्दिश्यमानादेरेव स्थानित्वान्न(३)दोषः ।

---

त्वम् । एवं च तालुजन्यत्वादीनां तद्वैशिष्ट्यस्य सुलभत्वात् ऐकारादेः तद्वत्त्वस्य सत्त्वेन तदभावस्य दुर्लभत्वात् मूर्धस्थानजन्यत्वादेश्च स्थानिवैशिष्ट्याभावेन स्थानिविशिष्टतालुस्थानजन्यत्वादिधर्माभावकूटवत्त्वस्य ऋकाराकारयोः सत्त्वेन नियमोपपत्तिः । "अचो ञ्णिति" (पा० सू० ७।२।११५) इत्यत्र तु पूर्वोक्त एव परिहार इत्याहुः ।

(१)**न न्यूनतेति ।** अशोकवनिकान्यायेन अन्यतमलेखनमिति भावः । (२)**अनेन ज्ञापनादिति ।** अनेन "सनीति वक्तव्यम्" (का०वा०) इति वार्तिकं नापूर्वमिति सूचितम् । वस्तुतस्तु सूत्रसत्त्वे एकतकारथकारद्वयघटितं रूपं, सूत्राभावे "झलो झलि" (पा०सू० ८।२।२६) इति लोपे थकारतकारोभयमात्रघटितं रूपमिति फलभेदेन "उदः स्था" (पा०सू० ८।४।६१) इतिसूत्रसिद्धं सनीति वार्तिकं न भवतीति बोध्यम् । "न व्यञ्जनान्" इति न्यायाश्रयणेन मूलमिति **परे ।** (३)**न दोष इति ।** न च "उदः स्थास्तम्भोः" (पा०सू० ८।४।६१) इत्यत्र विशिष्टरूपोपादानसत्त्वेन अर्थवत्परिभाषोपस्थित्या आगमसमभिव्याहारे आगमविशिष्टस्यैवार्थवत्त्वादुदस्थादित्यादौ स्थाशब्दे स्थापदप्रयोज्यार्थवत्स्थाशब्दत्वावच्छिन्नशाब्दबोधीयविषयताया अभावेन, अस्थाशब्दे षष्ठीप्रकृतिजन्यशाब्दबोधीयविषयताश्रयत्वविशिष्टषष्ठीप्रकृतिजन्यशाब्दबोधीयविषयताश्रयसमभिव्याहृतवर्णाघटितत्वरूपनिर्दिश्यमानत्वस्य सत्त्वात्कथं न दोष इति वाच्यम्, यदागमपरिभाषा लक्षणाग्राहिकेति स्वीकारेण सूत्रे स्थापदं स्थाविशिष्टे लाक्षणिकम् । वैशिष्ट्यञ्च—स्वघटितत्वं, स्वविशिष्टाघटितत्वम्, एतदुभयसम्बन्धेन । सम्बन्धघटकवैशिष्ट्यञ्च—स्वाघटकत्व, स्वनिष्ठोद्देश्यतानिरूपितावयवत्वसम्बन्धावच्छिन्नविधेयताश्रयाघटकत्व, उभयसम्बन्धेन । तथा च षष्ठीप्रकृतिजन्यविषयतायां निरुक्तोभयसम्बन्धावच्छिन्नप्रकारताख्यशाब्दबोधीयविषयतायाः स्थाशब्दे एव सत्त्वेन अस्थाशब्दे निरुक्तनिर्दिश्यमानत्वाभावेनादोषादिति दिक् ।

'झयः' इति पञ्चमीत्याह—**झयः परस्येति**। पूर्वस्येत्यनुवर्त्तते। **घोषवत इति**। समनियतत्वेऽपि विनिगमना(१)विरहात्स्वरूपप्रतिपादनाय च त्रितयग्रहणम्।

**झय इति**। पदान्तादित्यपि बोध्यम्। तेन (२)'विरप्शम्' इत्यादौ छत्वं न। **जकारे कृते इति**। छत्वमिति शेषः, पूर्वोक्तभाष्यसम्मताष्टाध्यायीपाठे चर्त्वस्य छत्वं प्रत्यासिद्धत्वात्।

**मोऽनु** (पा०सू० ८।३।२३)। पदस्येत्याधिकृतं म इत्यनेन विशेष्यत इत्याह—**मान्तस्येति**। "हलि सर्वेषाम्" (पा०सू० ८।३।२२] इत्यतो हलीत्यनुवर्त्तते। हलि किम्? राममाश्रय।

**नश्चा** (पा०सू० ८।३।२४)। चेन मोऽनुकृष्यते। अपदान्तस्य किम्? राजन्पाहि। **यशांसीति**। यशस्शब्दाद् जसः शौ "नपुंसकस्य" (पा० सू० ७।१।७२) इति नुमि "सान्त" (पा०सू० ६।४।१०) इति दीर्घः। **आक्रंस्यते इति**। क्रमेर्लृट्, "आङ उद्गमने" (पा०सू० १।३।४०) इति तङ्; स्यः।

**अनुस्वारस्य** (पा० सू० ८।४।५८)। परेति लुप्तषष्ठीकं पृथक्पदम्। अत एव "उदः स्था" (पा० सू० ८।४।६१) इत्यादौ सवर्णग्रहणानुवृत्तिः "यरोऽनुनासिके" (पा०सू० ८।४।४५) इत्यत्र तदपकर्षश्च सिद्धः। ययीति स्पष्टार्थम्। 'दंशनम्' इत्यादौ तु न दोषः, शकारसवर्णा(३)प्रसिद्धेः, प्रयत्नभेदेनाज्झलोः सावर्ण्याभावात्। *अचि अनुस्वाराभावात्।

---

(१)विरहादिति। व्याप्तिन्यायादिति भावः।

(२)विरप्शमिति। इदमुपलक्षणम्, 'चक्शौ' इत्यादेरपि। अन्यथा 'विरप्शम्' इत्यादौ छान्दसत्वादेव दोषाभावेन पदान्तादित्यस्य वैयर्थ्यापत्तेः।

(३)अप्रसिद्धेरिति। "यरोऽनुनासिके" (पा०सू० ८।४।४५) इत्यतोऽनुनासिक इत्यस्यात्रानुवृत्त्या शर्रेफसवर्णानुनासिकाप्रसिद्धेरिति भावः।

---

* अचि परे अनुस्वाराभावादित्यर्थः। स्वतन्त्रं चेदं ययीत्यस्य स्पष्टार्थत्वे लिङ्गम्।

**मो राजि** (पा०सू० ८।३।२५)। नेति सिद्धे म इत्युक्तिः "हे मपरे" (पा०सू० ८।३।२६) इत्येतद्विषये 'प्रशाम् ह्मलयति' इत्यादौ "मो नो धातोः" (पा०सू० ८।२।६४) इतिनत्वबाधनार्था । निषेधस्त्वनन्तरत्वादनुस्वारस्यैव स्यात् । ध्वनितञ्चेदम् "एतदोऽन्" (पा०सू० ५।३।५) "अमो मश्" (पा०सू० ७।१।४०) इति सूत्रयो**र्भाष्ये** ।

**हे मपरे** (पा०सू० ८।२।२६)। मपरे इति(१)बहुव्रीहिः । न तु तत्पुरुषोऽसम्भवात् । "मोऽनुस्वारः" (पा०सू० ८।३।२३) इत्यतो म इत्यनुवर्त्तते ।

(२)**यथासंख्य** (पा०सू० १।३।१०)। सम्यक् ख्यानं संख्या

---

(१)**बहुव्रीहिरिति** । पञ्चम्यर्थे इति भावः ।

(२)**यथासंख्य** । अनुपूर्वकदिशधातोः पश्चाद्भवज्ञानमर्थः । एवम् उत्पूर्वकदिशधातोः सिद्धज्ञानमर्थः। एवं प्रीतिनिर्पूर्वकदिशधातोरपूर्वज्ञानमर्थः । अस्मात्करणे घञ् । अनुदेशोद्देशप्रतिनिर्देशशब्दानां क्रमेणाकाङ्क्षाभास्यसम्बन्धोद्देश्यताश्रयविधेयताश्रया अर्थाः। तथा च सूत्रे अनुदेशपदेनोपस्थितिपश्चाद्भवशाब्दबोधविषयीभूताकाङ्क्षाभास्यसम्बन्ध उच्यते । अनोः पश्चादर्थकत्वाद्दिशेः ज्ञानार्थकत्वात् । समानामिति चावर्तते । एकत्रानुयोगित्वमपरत्र प्रतियोगित्वञ्च षष्ठ्यर्थः । समानामित्यस्य तुल्यसंख्यावतामित्यर्थः । यथासंख्यमित्यस्य संख्याकर्मकातिक्रमणकर्तृत्वाभाववानित्यर्थः । तथा च— तुल्यसंख्यप्रतियोगिकः तुल्यसंख्यानुयोगिकश्चाऽऽकाङ्क्षाभास्यसम्बन्धः संख्याकर्मकातिक्रमणकर्तृत्वाभाववान् भवतीति वाक्यार्थः । संख्याऽत्र क्रमः। क्रमश्चापेक्षाबुद्धिविशेषविषयता । आकाङ्क्षाभास्यसम्बन्धे संख्याकर्मकातिक्रमणकर्तृत्वं च स्वप्रतियोगिवृत्त्यपेक्षाबुद्धिविशेषविषयताविजातीयापेक्षाबुद्धिविशेषविषयतावदनुयोगिकत्वम् । तदभावश्च स्वप्रतियोगिवृत्त्यपेक्षाबुद्धिविशेषविषयतासजातीयापेक्षाबुद्धिविशेषविषयतावदनुयोगिकत्वम् । साजात्यञ्च स्वनिरूपकापेक्षाबुद्धिनिष्ठजनकतानिरूपितजन्यतावच्छेदकसंख्यात्वव्याप्यजात्यवच्छिन्नजन्यतानिरूपितजनकतावच्छेदकत्वं, स्ववृत्ति–स्वनिरूपकापेक्षाबुद्धीयैकत्वनिष्ठप्रकारतानिरूपितैकत्वविशिष्टत्वावच्छिन्नधर्मितात्व, स्ववृत्ति–स्वनिरूपकापेक्षाबुद्धीयैकत्वनिष्ठप्रकारतानिरूपितैकत्वानवच्छिन्नधर्मितात्वैतदन्यतरवत्त्वम् , एतदुभयधर्माभ्याम् । यथा "समूलाकृतजीवेषु हन्कृञ्ग्रहः" (पा०सू० ३।४।३६) इत्यादौ तुल्यसंख्यावत्समूलाकृतजीवप्रतियोगिकः तुल्यसंख्यावद्धन्कृञ्ग्रहानुयोगिकश्च य आकाङ्क्षाभास्याव्यवहितोत्तरत्वादिः सम्बन्धः तत्र स्वप्रतियोगिसमूलवृत्त्यपेक्षाबुद्धिविशेषविषयतासजातीयापेक्षाबुद्धिविशेषविषयतावद्धननुयोगिकत्वं; एवम् स्वप्रतियोग्यकृतवृत्त्यपेक्षाबुद्धिविशेष-

(१)क्रमवैशिष्टयेन ज्ञानम्, "यत्सांख्यैः प्राप्यते स्थानम्" इत्यत्र संख्या-

विषयतासजातीयापेक्षाबुद्धिविशेषविषयतावत्कृत्स्नानुयोगिकत्वम्, एवं स्वप्रतियोगिजातिवृत्त्यपेक्षाबुद्धिविशेषविषयतासजातीयापेक्षाबुद्धिविशेषविषयतावद्ग्रहानुयोगिकत्वमिति संख्याकर्मकातिक्रमणकर्तृत्वाभावः। संख्याकर्मकातिक्रमणकर्तृत्वञ्च स्वप्रतियोगिसमूलवृत्त्यपेक्षाबुद्धिविशेषविषयताविजातीयापेक्षाबुद्धिविशेषविषयतावत्कृत्स्नग्रहएतदन्यतरानुयोगिकत्वम्, हन्निष्ठापेक्षाबुद्धिविशेषविषयतायाः समूलनिष्ठापेक्षाबुद्धिविशेषविषयतासजातीयत्वात्, कृत्स्नग्रहनिष्ठापेक्षाबुद्धिविशेषविषयतयोश्च समूलनिष्ठापेक्षाबुद्धिविशेषविषयताविजातीयत्वाच्च।

तथा हि, कृत्स्ननिष्ठापेक्षाबुद्धिविशेषविषयतायां 'समूल इत्येकः एतद्विशिष्टोऽन्य इत्येकः' इत्याकारकापेक्षाबुद्धीयसमूलनिष्ठापेक्षाबुद्धिविशेषविषयतानिरूपकनिरुक्तापेक्षाबुद्धिनिष्ठजनकतानिरूपितजन्यतावच्छेदिका या संख्यात्वव्याप्यद्वित्वत्वजातिः, तदवच्छिन्नहन्कृत्स्ननिष्ठद्वित्वनिष्ठजन्यतानिरूपितजनकतावच्छेदकत्वस्य सत्त्वेऽपि समूलवृत्त्यपेक्षाबुद्धिविशेषविषयतावृत्तेः अन्यतरस्य पूर्वोक्तापेक्षाबुद्धीयैकत्वनिष्ठप्रकारतानिरूपितैकत्वानवच्छिन्नधर्मितात्वस्याभावात् नोभयरूपेण साजात्यमिति नातिप्रसङ्गः। एवं ग्रहनिष्ठापेक्षाबुद्धिविशेषविषयतायां समूलवृत्त्यपेक्षाबुद्धिविशेषविषयतावृत्तिस्वनिरूपकनिरुक्तापेक्षाबुद्धीयैकत्वनिष्ठप्रकारतानिरूपितैकत्वानवच्छिन्नधर्मितात्वस्यान्यतरस्य सत्त्वेऽपि समूलनिष्ठापेक्षाबुद्धिविशेषविषयतानिरूपकापेक्षाबुद्धिनिष्ठजनकतानिरूपितजन्यतावच्छेदकसंख्यात्वव्याप्यद्वित्वत्वजात्यवच्छिन्नहन्कृत्स्नवृत्तिद्वित्वनिष्ठजन्यतानिरूपितजनकतावच्छेदकत्वस्याभावात्, हन्निष्ठापेक्षाबुद्धिविशेषविषयतायां च समूलवृत्त्यपेक्षाबुद्धिविशेषविषयतानिरूपकापेक्षाबुद्धिनिष्ठजनकतानिरूपितजन्यतावच्छेदकसंख्यात्वव्याप्यद्वित्वत्वजात्यवच्छिन्नहन्वृत्तिद्वित्वनिष्ठजन्यतानिरूपितजनकतावच्छेदकत्वस्य समूलवृत्त्यपेक्षाबुद्धिविशेषविषयतावृत्तिस्वनिरूपकापेक्षाबुद्धीयैकत्वनिष्ठप्रकारतानिरूपितैकत्वानवच्छिन्नधर्मितात्वस्य च सत्वात् लक्षणसमन्वयः। एवमन्यत्राप्यूह्यमिति।

अथवा समसंख्यावतां सम्बन्धः संख्यात्वव्याप्यजातिविशिष्टो भवतीत्यर्थः। वै॰ च स्वावच्छिन्नसंख्यानिष्ठजन्यतानिरूपितजनकतावदपेक्षाबुद्धीयैकत्वावच्छिन्नविशेष्यताश्रयप्रतियोगिकत्व, स्वावच्छिन्नसंख्यानिष्ठजन्यतानिरूपितजनकतावदपेक्षाबुद्धीयैकत्वावच्छिन्नविशेष्यताश्रयानुयोगिकत्व, एतदुभयवत्त्वम्; स्वावच्छिन्नसंख्यानिष्ठजन्यतानिरूपितजनकतावदपेक्षाबुद्धीयैकत्वावच्छिन्नप्रकारताश्रयप्रतियोगिकत्व, स्वावच्छिन्नसंख्यानिष्ठजन्यतानिरूपितजनकतावदपेक्षाबुद्धीयैकत्वावच्छिन्नप्रकारताश्रयानुयोगिकत्व, एतदुभयवत्त्वम्-एतदन्यतरसम्बन्धेनेति दिक्।

(१) क्रमवैशिष्ट्येन ज्ञानमिति। वस्तुतस्तु संख्याऽत्र क्रमः। क्रमश्चापेक्षाबुद्धिविशेषविषयतेति लेखनीयम्, क्रमवैशिष्ट्येन ज्ञानपर्यन्तानुधावने फलाभावात्।

शब्दस्य ज्ञानार्थताया दृष्टत्वात्। तामनतिक्रम्य यथासंख्यम्। अनुदेशः— पश्चाद्भववाक्यार्थ(१)बोधकालिकः सम्बन्धः। साम्यं—(२)संख्यया, योग्यत्वाद्व्याख्यानाच्च। एवञ्च (३)समसङ्ख्यानां सम्बन्धो येन क्रमेण पदज्ञानं (४)पदादुपस्थितिर्वा, तेनैव क्रमेण वाक्यार्थबोधविषयः सम्बन्धस्तेषामित्यर्थः। फलितमाह—**समसम्बन्धीति**। यद्यपि (५)स्थानाख्यलौकिकप्रमाणादेव सिद्धं, तथापि "परस्मैपदानाम्" (पा०सू० ३।४।८२) "एचोऽयवायावः" (पा०सू० ६।१।७८) इत्यादौ शब्दतः सूत्रान्तरस्थक्रममादाय सम्बन्धबोधार्थम्, "आद्यन्तौ टकितौ" (पा०सू० १।१।४६) इत्यादौ समासनिर्देशे साहित्ये द्वन्द्वविधानादप्राप्तक्रमान्वयबोधनार्थञ्चेदम्। एवञ्च तत्र यथासंख्येनान्वयबोधकवाक्य(६)कल्पना एतत्प्रामाण्यात्, ततश्च बोध इति बोध्यम्। अत्र "स्वरितेन" (पा०सू० १।३।११) इत्यपकृष्यते इति "ख्यत्यात्" (पा०सू० ६।१।११२) इत्यादौ (७)नाति-

---

(१)**बोधकालिक इति**। बोधविषय इत्यर्थः। (२)**संख्ययेति**। अपेक्षाबुद्धिविशेषविषयतयेत्यर्थः। (३)**समसंख्यानामिति**। तुल्यापेक्षाबुद्धिविशेषविषयतावतामित्यर्थः। (४)**पदादुपस्थितिरिति**। पदनिष्ठशक्तिग्रहप्रयोजकशास्त्रे येन क्रमेण पदज्ञानमित्यर्थः। यथा "परस्मैपदानाम्" (पा०सू० ३।४।८२) इत्यादौ परस्मैपदपदनिष्ठशक्तिग्रहप्रयोजकं यत् "तिप्तस्झि" (पा०सू० ३।४।७८) इति शास्त्रं, तत्र येन क्रमेण पदविषयकं श्रावणप्रत्यक्षं तेनैव क्रमेण णलादयो भवन्ति। एवं येन क्रमेण पदज्ञानमित्यस्यापि येन क्रमेण पदविषयकं श्रावणप्रत्यक्षमित्यर्थो बोध्यः। यथाश्रुतं तु न युक्तम्, परस्मैपदपदेन सङ्केतसम्बन्धेन परस्मैपदवतामुपस्थित्या क्रमेणोपस्थितेरभावात्। (५)**स्थानाख्यलौकिकप्रमाणादेवेति**। यथा प्रतिपदि सुवर्णं दीयताम्, द्वितीयायां रजतम्, तृतीयायां वस्त्रम्, चैत्रेण प्रतिपदि गन्तव्यम्, मैत्रेण द्वितीयायाम्, विष्णुमित्रेण तृतीयायामित्युक्ते एतस्मै इदं दीयतामित्यनुक्तावपि चैत्राय सुवर्णमेव दीयते, मैत्राय रजतमेव, विष्णुमित्राय वस्त्रमेव दीयते, यथा वा—

'शत्रुं मित्रं विपत्तिञ्च जय रञ्जय भञ्जय।'

इत्यत्र शत्रोः कर्मत्वसम्बन्धेन जय एवाऽन्वय इत्यादि, तद्वदिति भावः। (६)**कल्पनेति**। वस्तुतस्तु टित आद्यवयवे कितोऽन्तावयवेऽन्वयेऽपि एकरूपावच्छिन्नस्यैकरूपावच्छिन्नसंसर्गेणैकरूपावच्छिन्नेऽन्वयबोधेच्छारूपसहविवक्षायाः सत्त्वाद् द्वन्द्वस्य सूपपादत्वेन नास्ति वाक्यान्तरकल्पनोपयोग इति बोध्यम्। (७)**नातिप्रसङ्ग**

प्रसङ्गः। तत्र प्रतिपत्तिकालिकमेव संख्यासाम्यमेतच्छास्त्रप्रवृत्त्युपयोगीति "ञमङणनम्" (मा०सू० ७) इति सूत्रे **भाष्ये** स्पष्टम्।

एते यवला निरनुनासिका एव विधीयमानत्वेन सवर्णाग्राहकत्वात्, जातिग्रहणप्राप्तस्येव गुणाभेदकत्वप्राप्तस्यापि 'अप्रत्यय' इत्यनेन निषेधाच्च। एवं "मय उञ" (पा०सू० ८।३।३३) (१)इत्यत्रापि। अत एव मतोर्मस्य नानुनासिको वकारः। अन्यथा (२)"तद्वानासाम्" (पा०सू० ४।४।१२५) इत्यादौ नित्यानुनासिकापत्त्या तन्निर्देशासङ्गत्यापत्तिरित्याहुः।

**चयो द्वितीया (का०वा०) इति।** "नादिन्याक्रोशे" (पा०सू० ८।४।४८) इत्यत्र **भाष्ये** इदम्। एतत्सामर्थ्यादेतत्कृताद्वितीयस्य न चर्त्वम्।

"ऊष्मोदयं प्रथमं स्पर्शमेके द्वितीयमाहुरपदान्तभाजम्"। इति **प्रातिशाख्ये**ऽपदान्तभाजमिति चर्त्वासिद्धत्वलब्धार्थानुवादः, पदान्ते जश्त्वप्रवृत्त्या चयोऽलाभात्। अत्र तु कृते न जश्त्वप्राप्तिरस्यासिद्धत्वात्। 'अफ्सरा' 'वथ्सा' इति भाष्योदाहृते छान्दसत्वाच्चर्त्वस्यासिद्धत्वं न। एवञ्च प्रातिशाख्येऽपदान्तभाजमित्युत्सर्गः। यद्वा तयोरव्युत्पन्नत्वं, न त्वप्पूर्वात्सर्त्तेरसिर्वदेः सो वेत्यन्यत्र विस्तरः।

**डः सि** (पा०सू० ८।३।२९)। 'सि' इति सप्तमी (३)षष्ठ्यर्थे;

---

इति। स्वरितत्वाभावादिति भावः। अत्रेदं तत्त्वम्—इदं सूत्रं धर्मसाम्ये एव प्रवर्तते, न तु व्यक्तिसाम्ये व्यक्तीनामानन्त्येन तत्साम्यस्य दुरुपपादत्वात्। अत एव "स्थानेऽन्तरतमः" (पा०सू० १।१।५०) इति सूत्रस्थं "संख्यातानुदेशेनाप्येतत्सिद्धम्" इति **भाष्यं** सङ्गच्छते। अन्यथा षट्षष्टेरिकां सप्तानाञ्च यणां सत्वेन साम्याभावेन तदसङ्गतिः स्पष्टैव। इदानीन्तु इत्वयत्वादीनां साम्येन तत्सङ्गतिरित्यन्यत्र विस्तरः।

(१)**इत्यत्रापीति।** अत एव 'किम् ॐ इति' इत्यादावनुनासिकस्यापि स्थाने "मय उञः" (पा०सू० ८।३।३३) इति वकारो निरनुनासिक एवेति भावः।

(२)**तद्वानासामिति।** न च "तसौ मत्वर्थे" (पा०सू० ७।४।१९) इत्यत्र दकारश्लेषाद्भत्वेन पदत्वबाधादनुनासिकाप्राप्त्या नेदं प्रमाणमिति वाच्यम्, "प्रत्ययस्थात्" (पा०सू० ७।३।४४) इति सूत्रस्थस्य "असुब्वत" इति **भाष्य**प्रयोगस्य प्रमाणत्वात्। अन्यथा "प्रत्यये भाषायाम्" (का०वा०) इति नित्यानुनासिको दुर्वारः स्यात्।

(३)**षष्ठ्यर्थे इति।** षष्ठ्यंशविकल-"तस्मिन्निति" (पा०सू० १।३।६६) परिभा-

व्याख्यानात्, तदाह—**सस्येति** । पदस्येत्यनुवर्तमानस्य वैयधिकरण्येनान्वयात्पदावयवस्य सस्येत्यर्थः । **षट्त्सन्त इति** । धुटि धस्य चर्त्वे (१)लक्ष्यभेदात्पुनर्डस्य चर्त्वम् ।

**नश्च** (पा०सू० ८।३।३०) । (२)**नकारान्तादिति** । पदस्येत्यनुवृत्तं पञ्चम्या विपरिणम्यत इति भावः । (३)वैयधिकरण्येनैवान्वय इति ङमुट्सूत्रस्थ**भाष्यस्वरसः** । **नस्य पदान्तस्येति** । अपदान्तनकारेऽनुस्वारप्रवृत्त्या फलितार्थप्रदर्शनमिदम् । नान्तस्य पदस्येत्युचितम् । **चतुष्टयमिति** । वक्ष्यमाणविकल्पैरिति भावः । तेन तुकश्चुत्वे छत्वस्यासिद्धत्वात् "चयो द्वितीयाः" (का०वा०) इति पक्षे चस्य छत्वेन छकारछकारछकारशकारघटितरूपद्वयाधिक्ये ञशानुस्वारविसर्गाणां द्वित्वविकल्पेनाऽऽधिक्येऽपि न क्षतिः ।

**ङमो** (पा०सू०८।३।३२) । पदस्येत्यनुवृत्तं सामानाधिकरण्यानुरोधात्पञ्चम्या विपरिणम्यते इत्याह—**तदन्तं यत्पदं तस्मादिति** । तत्र ङम् स्वयं ह्रस्वादितिविशेषण(४)सम्बन्धमनुभूय पदविशेषणत्वेन तदन्तपर इति भावः । ङम इति पञ्चमीबलादचीति सप्तमी (५)षष्ठ्यर्थे,

---

षोपस्थित्या सकाराव्यवहितपूर्वत्वविशिष्टो यो डकारस्तदव्यवहितोत्तरत्वविशिष्टस्य धुडित्यर्थेन सामञ्जस्यात्फलितार्थकथनमिदम् । (१)**लक्ष्यभेदादिति** । स्वीयप्राथमिकप्रवृत्तावुद्देश्यतावच्छेदकावच्छिन्नत्वेनाश्रीयमाणो यावान् शब्दसमुदायस्तदघटको यः तद्घटकमात्रोद्देश्यकविकारागमातिरिक्तस्तदघटितत्वे सति स्वीयप्राथमिकप्रवृत्त्युत्तरकालिकप्राप्तिभिन्नप्राप्तिविषयाघटितत्वं तल्लक्ष्यत्वम्, तस्याभावादिति भावः ।

(२)**नकारान्तादितीति** । सकाराव्यवहितपूर्वत्वविशिष्टो यो नकारस्तदन्ताव्यवहितोत्तरत्वविशिष्टस्य धुडित्यर्थः । (३)**वैयधिकरण्येनैवेति** । न च 'पयांसि' 'यशांसि' इत्यादावपि धुडापत्तिरिति वाच्यम्; धुटोऽसिद्धत्वादनुस्वारे कृते नकाराभावेन धुटोऽप्राप्तेः ।

**ङमो ह्रस्वात्** (पा०सू० ८।३।३२) । (४)**सम्बन्धमनुभूयेति** । 'गभीरायां नद्यां घोषः' इत्यत्र नदीपदं गाम्भीर्यविशिष्टनदीतीरे लाक्षणिकम् । गभीरायामिति तात्पर्यग्राहकमिति यथा, तथा ङम्पदमेव ह्रस्वात्परत्वविशिष्टङमन्ते लाक्षणिकम्, ह्रस्वादिति तात्पर्यग्राहकमिति भावः । (५)**षष्ठ्यर्थे इति** । वस्तुतस्तु अजव्यवहितपूर्वत्वविशिष्टो यो ङम् तदन्तं यत्पदं तदव्यवहितोत्तरस्य ङमुडित्यर्थेन साम-

तदाह—**अच इति**। सप्तमीनिर्देशस्तु लाघवार्थः। "ङम उत्तरस्याचः" इति "तस्मिन्" (पा०सू० १।१।६६) इतिसूत्रस्थ**भाष्यात्**। ङमन्तं यत्पदमिति किम्? 'अनिति' इत्यादौ ङमुण्मा भूदिति। **भाष्ये तु** विभक्तिव्यत्ययकल्पने गौरवात्पदावयवङमः परस्येति (१)वैयधिकरण्यमेवोक्तम्। 'दण्डिना' इत्यत्र ङमुडभावो मण्डूकप्लुत्या "उञि च पदे" (पा०सू० ८।३।२१) इत्यतः पदे इत्यनुवर्त्याजादेः पदस्य ङमुडित्यर्थेन बोध्यः। पदस्येत्यस्याऽऽवृत्त्या सम्बन्धेऽपि विशेषणविशेष्ययोरुभयोः सप्तम्यन्तत्वे एव तदादिविधिप्रवृत्त्या (२)तदलाभः स्यात्। एतदर्थमेवाचीति सप्तमीनिर्देशः। ङमन्तं यत्पदमित्यर्थेऽपि 'परमदण्डिना' इत्यादावेतद्वारणाय 'पदे' इत्यनुवृत्तिरावश्यक्येव। अन्तर्वर्त्तिविभक्त्या दण्डिन्नित्यस्य

---

ज्ञस्यात्फलितार्थकथनमेतत्।

(१) **वैयधिकरण्यमेवेति**। वस्तुतस्तु इदं **भाष्यमेकदेश्युक्तिः** 'अनिति' इत्यादौ पदावयवङमव्यवहितोत्तरत्वविशिष्टाचः सत्त्वेन ङमुडापत्तेः। न च "उञि च पदे" (पा०सू० ८।३।२१) इति सूत्रात्पदे इत्यनुवर्त्य अजादिपदाव्यवहितपूर्वत्वविशिष्टः पदावयवो यो ङम् तदव्यवहितोत्तरत्वविशिष्टस्य ङमुडित्यर्थेन न दोष इति वाच्यम्, अश्वस्य पुत्रोऽश्वपुत्रः न अश्वपुत्रोऽनश्वपुत्र इत्यादौ ङमुडापत्तेः। अश्व इत्यस्याजादिपदत्वान्नुटश्चानश्वपुत्र इतिपदावयवत्वाच्च। न च ङम इत्यस्यावृत्तिं कृत्वा ङमन्तपदावयवो यो ङम् अजादिपदाव्यवहितपूर्वत्वविशिष्टः, तदव्यवहितोत्तरस्य ङमुडित्यर्थेन न दोष वाच्यम्, एवमपि 'अनश्वपुत्रराजन्' इत्यादौ ङमुटो दुर्वारत्वात्। ङमन्तमनश्वपुत्रराजन्निति पदं तदवयवत्वस्य नुटि सत्त्वादश्व इत्यस्याजादिपदत्वाच्च। अजादौ पदे इत्यस्य ङमन्तपदेऽन्वयविवक्षणेनाश्वपुत्रराजन्नित्यादिदोषवारणेऽपि वैयधिकरण्येनान्वये गौरवं स्फुटमेव। तस्माद् ह्रस्वात्परो यो ङम् तदन्तं यत्पदमिति सामानाधिकरण्येनैवान्वय इति निष्कर्षः। न च **भाष्योक्तायाः** पदे इत्यस्यानुवृत्तेर्वैयर्थ्यमिति वाच्यम्, 'परमदण्डिनौ' इत्यादौ कार्यित्वनिवेशेन "उत्तरपदत्वे च" इति निषेधाप्रवृत्त्या तदनुवृत्तेर्ङमुडभावायावश्यकत्वात्।

(२) **तदलाभः स्यादिति**। सामानाधिकरण्येनान्वयबोधं प्रति समानविभक्तिकत्वस्य कारणत्वेन पदे ङम इत्यनेन तादृशबोधालाभादिति भावः। अत एव "आर्धधातुकस्येट्" (पा०सू० ७।२।३५) इति सूत्रे आदिग्रहणं चरितार्थम्। न च यत्र विशेषणविशेष्ययोरुभयोः सप्तम्यन्तत्वं तत्रैव "यस्मिन्विधिः" (प०भा० ३३) इति परिभाषाप्रवृत्तिरित्यस्य नोपयोग इति वाच्यम्, तस्यैतत्फलितार्थपरत्वात्।

पदत्वात् । "उत्तरपदत्वे च" इति प्रत्ययलक्षणनिषेधस्तु न, माषकुम्भवापेनेत्यादौ "पदव्यवायेऽपि" (पा०सू० ८।४।३८) इतिनिषेधसिद्धये तस्य यत्रोत्तरपदस्य (१)कार्यित्वं तत्रैव प्रवृत्तेः । "तेन निषेधेन सिद्धम्" इत्येत-

---

(१)कार्यित्वमिति । न च 'पूर्वदण्डिप्रियः' इत्यादौ दण्डिन्नित्यत्र नलोपकरणाय "उत्तरपदत्वे" इति निषेधाप्रवृत्तये उत्तरपदं मध्यमपदत्वानाक्रान्तमिति विवक्ष्यते; तथा च 'माषकुम्भवापेन' इत्यादौ कुम्भेत्यस्य मध्यमत्वाक्रान्तत्वाद् "उत्तरपदत्वे च" इति निषेधाप्रवृत्त्या णत्वनिषेधस्य सूपपादत्वेन कार्यित्वनिवेशो विफल इति वाच्यम्, यद्वृत्त्यारम्भकसुब्निमित्तकपदसंज्ञा चिकीर्षिता तद्वृत्तिविशिष्टत्वं मध्यमपदत्वमिति परिष्कारेणादोषात् । वै० च स्वघटकार्थवदव्यवहितपूर्वत्वं, स्वघटकार्थवदव्यवहितोत्तरत्वं, स्वघटकत्वमेतत्त्रितयसम्बन्धेन । तथा हि 'पूर्वदण्डिप्रियः' इत्यादौ पूर्व सु दण्डिन् सु प्रिय सु एतद्वृत्त्यारम्भकसुब्निमित्तकपदसंज्ञा दण्डिन्नित्यस्य चिकीर्षिता तद्वृत्तिघटकप्रियाव्यवहितपूर्वत्वस्य तद्वृत्तिघटकपूर्वाव्यवहितोत्तरत्वस्य तद्घटकत्वस्य च सत्त्वाद्दण्डिन्निति निरुक्तमध्यमत्वाक्रान्तमेवेति न प्रत्ययलक्षणनिषेधः । 'माषकुम्भवापेन' इत्यादौ तु वृत्तिद्वयम् । तत्र कुम्भपदे माष आम् कुम्भ सु इत्येतद्वृत्तिघटकाव्यवहितपूर्वत्वस्याभावान्न पूर्वोक्तवृत्तिवैशिष्टयम् । माषकुम्भ अस् वाप इत्याकारकवृत्तिवैशिष्टयस्य कुम्भपदे निरुक्तोभयसम्बन्धेन सत्त्वेऽपि न तद्वृत्त्यारम्भकसुब्निमित्तकपदसंज्ञा चिकीर्षितेति कुम्भेत्यत्र प्रत्ययलक्षणत्वार्थम् "उत्तरपदत्वे" इतिनिषेधाप्रवृत्तये कार्यित्वनिवेश आवश्यकः ।

न चैवमपि "अतद्धिते" इतिवार्तिकप्रत्याख्यानाय पदे यो व्यवाय इति सप्तमीसमास आश्रितो भाष्ये, तथा च 'माषकुम्भवापेन' 'क्षीरपकुम्भेन' इत्यादौ फलभेदवारणाय पदपदं पदत्वयोग्योपलक्षणमित्यवश्यं वक्तव्यम् । अन्यथा "गतिकारकोपपदानाम्" (प०भा०) इति सुबुत्पत्तेः प्रागेव समासेन आद्योदाहरणे पदे परतो यो व्यवायस्तस्याभावेन, अन्त्ये पदेन व्यवायस्याभावेनाऽऽरम्भप्रत्याख्यानयोः फलभेदो दुर्वारः स्यात् । तथा च 'माषकुम्भवापेन' इत्यादौ कुम्भेत्यत्र पदत्वयोग्यत्वस्य सत्त्वाण्णत्वनिषेधसिद्ध्या कार्यित्वनिवेशो विफल इति वाच्यम्, अटतीत्यट् परमश्चासावट् च परमाट् तस्मादाचारक्विबन्तात् क्तिचि "तितुत्र" (पा०सू० ७।२।९) इतीडभावे 'परमाट्तिः' इत्यादौ ष्टुत्वनिषेधाय कार्यित्वनिवेशस्यावश्यकत्वात् ।

न चैवमपि यद्वृत्त्यारम्भकेत्यादि नोच्यते, किन्तु सामान्यतः स्वघटकार्थवदव्यवहितपूर्वत्वं, स्वघटकार्थवदव्यवहितोत्तरत्वं, स्वघटकत्वमेतत्त्रितयसम्बन्धेन वृत्तिविशिष्टत्वं मध्यमत्वमित्युच्यते । तथा च 'परमाट्तिः' इत्यादौ वृत्तिघटकतिप्रत्ययाव्यवहितपूर्वत्वस्य वृत्तिघटकपरमाव्यवहितोत्तरत्वस्य च सत्त्वान्मध्यमत्वमेवेति 'परमाट्टिः' इत्येव स्यान्नतु

'परमाट्तिः' इति, "उत्तरपदत्वे" इति निषेधाप्रवृत्तेः। तथा च कार्यित्वनिवेशो विफ इति वाच्यम्, 'परमलोम्निशयः' 'परमलोम्निचरः' इत्यादौ उत्तरपदत्वेतिनिषेधप्रवृ निरुक्तोभयसम्बन्धेन यद्वृत्त्यारम्भकसुब्निमित्तिका पदसंज्ञा चिकीर्षिता तद्वृत्तिविशिष्ट स्यावश्यकत्वात्। अन्यथा लोमन्नित्यस्य मध्यमत्वाक्रान्तत्वेन निषेधाप्रवृत्त्या नलो दुर्वारः स्यात्। 'पञ्चगवधनः' इत्यादौ पञ्चन् जस् गो जस् धन सु एतद्वृत्त्यारम्भकसु न्निमित्तकपदसंज्ञायां चिकीर्षितायां तद्वृत्तिघटकटजव्यवहितपूर्वत्वस्य सत्त्वेऽपि तस्यान कत्वेन तद्घटकार्थवद्धनाव्यवहितपूर्वत्वस्य च गोशब्देऽभावात् गोपदं मध्यमत्वानाक्र न्तमेवेति न पूर्वरूपापत्तिः। न च 'परमदण्डिप्रियः' इत्यादौ दण्डिन्नित्यस्य निरुक्त ध्यमत्वानाक्रान्तत्वात्कथं नलोप इति वाच्यम्, परमदण्डिप्रकृतिकसुपः प्रत्ययलक्षणे तत्सिद्धेः। परमदण्डिन्नित्यस्य मध्यमत्वानाक्रान्तत्वेऽपि उत्तरपदत्वस्याभावात्। नन्वे वम् 'अत्रयः' 'भृगवः' इत्यादावत्रिशब्दात् षष्ठ्यन्तादपत्येऽर्थे "इतश्चानिञः" (पा० सू० ४।१।१२२) इति ढकि तस्य "अत्रिभृगु" (पा०सू० २।४।६५) इति लुकि त स्माज्जसि "जसि च" (पा०सू० ७।३।१०९) इति गुणे उत्तरपदत्वाभावादुत्तरपदत्वे निषेधाप्रवृत्त्या षष्ठ्याः प्रत्ययलक्षणेन पदान्तत्वेन पूर्वरूपापत्तिदुर्वारेति वाच्यम्, न र्त्तिके पदत्वे इत्यस्य पृथक्पदत्वेन उत्तरपदशब्दोपादानाभावेन केवलस्य 'उत्तर' इ पदस्य समासचरमावयवे रुढत्वाभावेन वृत्तिचरमावयवपरत्वमिति स्वीकारेणादोषात्।

वृत्तिचरमावयवत्वञ्च यद्वृत्त्यारम्भकसुब्निमित्तिका पदसंज्ञा चिकीर्षिता तद्वृत्तिविशि ष्टत्वम्। वै० च स्वघटकत्वं, स्वघटकार्थवदव्यवहितपूर्वत्वाभाववत्त्वम्, एतदुभयसम न्धेन। अत्रयः भृगवः इत्यादौ स्वघटकत्वं व्यपदेशिवद्भावेनेति तत्रापि लक्षणसमन्व यः। यद्वृत्त्यारम्भकेत्युक्त्या 'परमलोम्निशयः' परमलोम्निचरः' इत्यादावर्थवन्ङिप्रत्यया व्यवहितपूर्वत्वस्य सत्त्वेऽपि परम सु लोमन् सु इत्येतद्वृत्त्यारम्भकसुब्निमित्तकपदसंज्ञायाः चिकीर्षितत्वेन ङौ तद्वृत्तिघटकत्वस्याभावेन न लोमन्नित्यस्य वृत्तिचरमावयवत्वहानिः। द्वितीयसम्बन्धदानेन 'पूर्वदण्डिप्रियः' इत्यत्र दण्डिन्नित्यस्य नोत्तरत्वम्। अर्थवदित्युक्त्या पञ्चगवधन इत्यादौ गोइत्यस्य नोत्तरत्वहानिः। पञ्चन् जस् गो जस् धन सु इत्येतद्वृ त्यारम्भकसुब्निमित्तकपदसंज्ञायाश्चिकीर्षितत्वेऽपि तद्वृत्तिघटके टचि अर्थवत्त्वाभावात् तद्वृत्तिघटकार्थवद्धनाव्यवहितपूर्वत्वाभावस्य सत्त्वाच्च। तेन 'बहुसेचौ' इत्यादौ बहुच्पू र्वकसेच्इत्यस्योत्तरपदत्वसिद्धिरिति "बहुच्पूर्वस्य चापदादिविधौ" इति वार्तिकमेतत्ता त्पर्यग्राहकम्। एवञ्च कार्यित्वनिवेशो विफल एव। 'माषकुम्भवापेन' इत्यादौ यथा णत्वनिषेधः स्यात्तथा पूर्वमेवोपपादितम्। अत एव प्रकृतसूत्रार्थप्रतिपिपादयिषया प्र वृत्तं प्रकृतसूत्रस्थं 'परमदण्डिनौ' इत्यादौ "उत्तरपदत्वे" इति निषेधान्ङमुणेति भाष्यं सङ्गच्छते।

न च "उभि च पदे" (पा०सू० ८।२।२१) इतिसूत्रस्थभाष्यस्यैकदेश्युक्तिकल्प नापेक्षया तस्य तदुक्तित्वस्य न्याय्यत्वात्। अन्यथा 'राजन्कौ' इत्यत्राकचो मध्य

तसूत्रस्थभाष्योक्तिस्त्वेकदेशिन इति दिक् । "इको यणचि" (पा०सू० ६।१।७७) इति सौत्रो निर्देशः ।

**रुप्रकरणे इति** । अत एव "समः सुटि" (पा०सू० ८।३।५) इत्यादौ प्रश्लेषेण सविधानमिति **भाष्ये** उक्तम् । रोः पूर्वस्येत्युपलक्षणं (१)रुप्रकरणविधेयस्य । एवमुत्तरत्र रोः पूर्वस्मादित्यपि । अयमधिकारः । तेनोत्तरसूत्रविषये एवास्य प्रवृत्तिः, न तु "मतुवसोः" (पा०सू० ८।३।१) इत्यत्र, तत्सूत्रस्थ(२)वार्त्तिकयोश्च । अत्रेति तु—रुप्रकरण एवास्य सम्बन्धो, न त्वग्रे "ढो ढे लोपः" (पा०सू० ८।३।१३) इत्यादावित्यर्थसूचनार्थं, स्पष्टार्थमेव । तुशब्दः परस्य नित्यं रुत्वं पूर्वस्य वाऽनुनासिक इति विशेषद्योतनार्थः । पूर्वस्येत्यस्य च (३)रुस्थानिनः पूर्वस्येत्यर्थो बोध्यः ।

अनुनासिकात्पर इत्यत्रानुनासिकादिति ल्यब्लोपे पञ्चमी, व्याख्यानात् । अयमागमोऽनवयव एव, अवयवत्वे (४)मानाभावात् ।

---

पतितत्वाभावेन तद्विशिष्टस्यातिङन्तत्वात्पदत्वाभावेन नुडनापत्तेः । न च 'परमाट्तिः' इत्यादौ कार्यित्वनिवेशाभावे ष्टुत्वनिषेधो न स्यादिति वाच्यम्, अस्य लक्ष्यस्याप्रमितत्वेनेष्टापत्तेः कर्त्तुं शक्यत्वात् । लेढीति लिट्, परमश्चासौ लिट् च परमलिट्, तस्मादाचारक्विबन्ताद्वनिपि 'परमलिह्व' इत्यादीनामिवास्याप्यारम्भप्रत्याख्यानयोः फलभेदवारणायानभिधानस्यैव न्याय्यत्वाच्च । अन्यथा "उत्तरपदत्वे" इत्यारम्भकल्पे 'परमलिह्वा' इति, प्रत्याख्याने च 'परमलिढ्वा' इति फलभेदः स्यादिति दिगित्याहुः ।

(१)**रुप्रकरणविधेयस्येति** । रुप्रकरणीयविधेयाव्यवहितपूर्वस्येत्यर्थः । (२)**वार्त्तिकयोश्चेति** । अत एव "हरिवो मेदिनं त्वा" "भोभगोअघो" इत्यादौ नानुनासिक इति भावः । (३)**रुस्थानिनः पूर्वस्येति** । अत एव "समः सुटि" (पा० सू० ८।३।५) इत्यनेन सकारादेशकल्पे अनुनासिकसिद्धिरिति भावः । वस्तुतस्तु एतत्प्रकरणविधेयाव्यवहितपूर्वत्वविशिष्टस्येत्यर्थो बोध्यः । अत एव "समो वा लोपः" इति कल्पेऽप्यनुनासिकसिद्धिः । अन्यथा रुस्थान्यव्यवहितपूर्वत्वस्याभावात्स न स्यात् ।

(४)**मानाभावादिति** । चिन्त्यमिदम् । सूत्रे परशब्दस्यावयवत्वविशिष्टपरत्वावच्छिन्नवाचकत्वेन 'उरण्रपरः' 'न य्वाभ्याम्' इत्यत्रेवानुस्वारेऽवयवत्वावच्छिन्नविधेयताश्रयत्वरूपागमत्वस्वीकारे बाधकाभावात् । अत एव महाँ इन्द्र इत्यादौ "भोभगो" (पा० सू० ८।३।१७) इति यत्वं सिद्ध्यति । अन्यथाऽनुस्वारविशिष्टस्यापदत्वेन यदागमन्यायेन ग्रहणाभावे यत्वं दुरुपपादं स्यादिति दिक् ।

**खरीति**। विसर्गाक्षिप्तस्याप्यवसानस्य न सम्बन्धो (१)व्याख्या-नात्। **सो वक्तव्य इति**। "समः सुटि" (पा०सू० ८।३।५) इत्या-दिसूत्रत्रये स इत्युपसंख्याय "समः सुटि" (पा०सू० ८।३।५) इत्य-सकारं प्रश्लिष्य वा एतैः सकार एव विधेय इत्यर्थः। एवञ्चास्यासिद्ध-द्रत्वाभावेन विसर्गाभावे तत्तद्विधीनामप्राप्तिरेवेति भावः। स्पष्टं चेदं भाष्ये। विसर्गस्यानेन सत्वविधाने तु गौरवं स्फुटम्। **लोपस्यापीति**। यत्तु-

उपधारञ्जनं कुर्यान्नमो रुकरणे सति।
लोपे प्रकृतिभावे वा नोपधारञ्जनं मतम्॥

उपधारञ्जनम्—अनुनासिकानुस्वारागमरूपम्। नमोर्नकारमकारयोः। प्रकृतिभावोदाहरणं 'नॄन्पाहि' इति। तत्तु प्रातिशाख्यत्वात्तच्छाखामात्रविषय-मिति भावः। अत एव **भाष्ये**—"समादिषु सत्वं वक्तव्यम्" इत्यु-क्तम्। रुत्वपक्षे चानुनासिकाद्यापत्तिर्दोषत्वेन नोक्ता। ननु लोपपक्षे एव द्वि-त्वेन द्विसकारस्य सिद्धत्वात् "समः सुटि" इति व्यर्थमित्यत आह—**त्रिस-कारकमपीति**। "स्कोः" (पा०सू० ८।२।२९) इति लोपस्तु न, अस्यासिद्धत्वात्। पुनर्द्वित्वेन त्रिसकारस्य सिद्धिरिति तु न युक्तं, "लक्ष्ये लक्षणस्य" इति न्यायात्। एतेन "समः सुटि" (पा०सू० ८।३।५) इत्यत्र वेति पाठेनैव पक्षे मोऽनुस्वारेण सिद्धे "अनुनासिकात्परः" (पा०सू० ८।३।४) इति व्यर्थमित्यपास्तम्।

ननु व्यञ्जनात्परस्यैकस्यानेकस्य वोच्चारणे विशेषाभावोऽत आह—**अनुनासिकवतामिति**। तत्रोच्चारणे विशेषाभावकल्पने इदं वचनं व्यर्थमेव स्यादिति भावः। हयवरट्सूत्र**भाष्योक्ते** शर्षूपसंख्याने फल-माह—**अनुस्वारवतामिति**। अपिना कस्य सङ्ग्रहः। लक्ष्ये लक्षण-स्य सकृदेव प्रवृत्तेराह—**वचनान्तरेणेति**। "यणो मयः" (का०वा०) इत्यनेन। एकस्यैव शास्त्रस्य पुनः प्रवृत्तौ हि स न्याय इति भावः। पूर्व-त्रासिद्धत्वेन पूर्वद्वित्वस्य पूर्वं प्रवृत्त्या तेन द्वितीयस्य साधुत्वे बोधिते तद-

(१)**व्याख्यानादिति**। 'खरवसानयोः स' इत्येव सिद्धे "विसर्जनीयस्य सः" इत्यारम्भसामर्थ्यादिति भावः।

नन्तरं परद्वित्वप्रवृत्त्या तयोर्मध्ये पुनरन्यस्य साधुत्वं बोध्यते इति त्रितस्य निर्वाहो बोद्धव्यः । "अनचि च" (पा०सू० ८।४।४७) इत्यत्र "यणो मयः" (का०वा०) इत्यस्योपसंख्यानात् "अचो रहाभ्याम्" (पा०सू० ८। ४।४६) इत्यतस्तस्य परत्वं बोद्धव्यम् ।

**पुमः खय** (पा०सू० ८।३।६)। अम्पर इति (१)बहुव्रीहिः । **ᳲकᳲपयोरिति** । "कुप्वोः" (पा०सू० ८।३।३७) इतिसूत्रविधेययोरित्यर्थः । "इदुदुपधस्य" (पा०सू० ८।३।४१) इति सूत्रेऽप्रत्ययस्येत्यस्य प्रत्ययावयवभिन्नस्येत्यर्थादिति भावः । **अव्युत्पत्तीति** । तत्पक्षे (२)प्रकृतिप्रत्ययविभागाभावादिति भावः । **षत्वेति** । इदमनुनासिकपक्षे । अनुस्वारपक्षे तु "कुप्वोः" (पा०सू० ८।३।३७) इत्यस्यैव प्राप्तिः, अनुस्वारव्यवधानेनोदुपधत्वाभावात् । **पुंक्षीरमिति** । क्षरधातोरुपधाया ईत्वेऽच्प्रत्यये क्षीरमिति भावः ।

**नश्छव्य** (पा०सू० ८।३।७) । 'अप्रशान्' इति षष्ठ्यर्थे प्रथमा ।

**नॄन्पे** (पा०सू० ८।३।१०) । नॄनिति द्वितीयान्तानुकरणम्, षष्ठ्याः सौत्रो लुक् । नलोपस्तु सौत्रत्वान्न । एवं "कान्" (पा०सू० ८। ३।१२) इत्यत्रापि । **चाद्विसर्ग इति** । "शर्परे" (पा०सू० ८।३।३५) इति सूत्रात्तदनुकर्षश्चेनेति भावः ।

**येन नेति** । "येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधकः" इति न्यायेनेत्यर्थः । येन नेत्यादेर्यत्कर्तृका(३)वश्यप्राप्तावित्यर्थः, नञ्द्वयस्य प्रकृतार्थदार्ढ्यबोधकत्वात् । 'प्राप्त' इति भावे क्तः । (४)तदप्राप्तियोग्य-

---

(१)**बहुव्रीहिरिति** । पञ्चम्यर्थे इति भावः । (२)**प्रकृतिप्रत्ययविभागाभावादिति** । प्रकृतिप्रत्ययविभागज्ञानप्रयोज्यकार्याभावादित्यर्थः ।

(३)**अवश्यप्राप्ताविति** । अवश्यंशब्दपर्यायावश्यशब्दस्य प्राप्तिशब्देन समासः । अत एव "आवश्यकाधमर्ण्ययोः" (पा० सू० ३।३।१७०) इति निर्देशः सङ्गच्छते । अन्यथा अवश्यंशब्दस्य योपधत्वाभावाद् वुञ् न स्यात् ।

(४)**तदप्राप्तियोग्यविषयेऽचारितार्थ्यमिति** । इदं सामान्यं सर्वानुगतं रूपं, तद्विशेषाश्च सङ्कोचविशेषप्रयोजकाः—तदप्राप्तियोग्येऽचारितार्थ्येन विशिष्टं कृते चारितार्थ्यम्, तदप्राप्तियोग्येऽचारितार्थ्येन विशिष्टः कृते चारितार्थ्यस्याभावः, तद-

विषयेऽचारितार्थ्यं हि बाधकत्वे बीजम् । तदुक्तं "शर्पूर्वाः" (पा०सू० ७।४।६१) इति सूत्रे **भाष्ये**—"शर्पूर्वा इत्येतद्धलादिःशेषस्य बाधकम् ननु विषयभेदे कथं बाधकत्वम् । इदं तावदयं प्रष्टव्यः, यदि तन्नोच्येत किमिह स्यात्, हलादिः शेषश्चेत् ? नाप्राप्ते तस्मिन्नारम्भादिदं तद्बाधकं भविष्यति" इति । "अजादेर्द्वितीयस्य" (पा०सू० ६।१।२) इति सूत्रे **भाष्ये**ऽपि स्फुटमेतत् ।

**न तु शर्पर इति ।** न चास्य विसर्गस्य ≍क≍पौ दुर्वारौ, किं चास्यैव तौ स्यातां, "खरवसानयोः" (पा०सू० ८।३।१५) इति विहितस्य तु एतयोरसिद्धत्वात्सत्वमेव स्यादिति वाच्यम्, "शर्परे" (पा०सू० ८।३।३५) इति सूत्रं "कुप्वोः" (पा०सू० ८।३।३७) इत्यत्रानुवर्त्य शर्परयोः कुप्वोः ≍क≍पयोरपवादो विसर्गस्य विसर्ग इति वाक्यभेदेन व्याख्यानेनादोषात् । स्पष्टञ्चेदं **भाष्ये** ।

वार्त्तिके कान्ग्रहणं शक्यमकर्तुमित्याह—**यद्वेति ।** एवं समुग्रहणमपि त्यक्तुं शक्यम् । पुमुग्रहणं त्वावश्यकमेव, अनुनासिकपक्षे इणः परत्वेन षत्वापत्तेः । **एष्विण इति ।** गणे कृतसत्वषत्वानामेव पाठादिति

---

प्राप्तियोग्येऽचारितार्थ्येन विशिष्टा कृतेऽचारितार्थ्येन विशिष्टोत्सर्गशास्त्रप्रवृत्तिसम्भावनाप्रयोज्याऽपवादशास्त्रवैयर्थ्यसम्भावना, तदप्राप्तियोग्येऽचारितार्थ्येन विशिष्टा उत्सर्गशास्त्रप्रवृत्त्यभावसम्भावनाप्रयोज्याऽपवादशास्त्रप्रवृत्तिसम्भावना च । तत्र सामान्येन प्रथमबीजेन स्वप्रवृत्तियोग्यातिरिक्तत्वेन, द्वितीयचतुर्थाभ्यां स्वप्रवृत्तियोग्यातिरिक्तत्वेन स्वविधेयघटितातिरिक्तत्वेन च, तृतीयेन स्वप्रवृत्तियोग्यस्वीयोद्देश्यतावच्छेदकावच्छिन्नातिरिक्तत्वेन, पञ्चमेन भविष्यदपवादविषयातिरिक्तत्वेन च उत्सर्गशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने सङ्कोचो बोध्यः । वस्तुतस्तु सामान्यमात्रस्य प्रथमस्य पृथग् बाधप्रयोजकत्वकल्पनं निष्फलमेवेति बोध्यम् । विस्तरस्त्वन्यत्र द्रष्टव्यः ।

बाध्यत्वे बीजं तु–बाधकत्वेन जिघृक्षितशास्त्रीयोद्देश्यदलीयविषयताविशिष्टान्यतमत्ववद्विषयताप्रयोजकपदघटितत्वम् । वैशिष्ट्यञ्च–स्वव्यापकतावच्छेदकत्वं, स्वव्यापकतावच्छेदकवैशिष्ट्याभाववत्त्वमेतदुभयसम्बन्धेन । द्वितीयसम्बन्धे वै० च–स्वव्यापकत्वं, स्वव्याप्यत्वाभाववत्त्वं, 'स्वाश्रयव्यधिकरणविषयतावृत्तित्वमेतत्त्रितयसम्बन्धेन । प्रकृतमूलं तु प्राचामनुसारेण । 'वासः क्षौमम्'इत्यादौ यथा जिह्वामूलीयो न भवति तथा "शर्परे इति सूत्रम्" इत्यादिना शेखरे एव स्पष्टम् ।

भावः । **ञ्कञ्पयोरपवाद इति** । तद्विहितविसर्गस्यापीत्यपि बोद्धव्यम् । **काँस्कानिति** । वीप्सायां द्वित्वम् ।

**संहितायाम्** (पा०सू० ६।१।७२) । संहिता च स्वारसिकार्धमात्राकालव्यवायेनो(१)च्चारणम् । ततोऽधिकार्धमात्राकालेनोच्चारणे एतदधिकारोक्तकार्यव्यावृत्तये इदम् । तदधिककालव्यवाये तु न साधुत्वं; नापि बोध ईष्यते इति—वृद्धा इति, तेषां शास्त्रविषयतैव नेति भावः ।

**छे च** (पा०सू० ६।१।७३) । छे इत्यकार उच्चारणार्थः, तेन 'आच्छिन्नम्' इत्यत्र तुक् । "ह्रस्वस्य पिति" (पा०सू० ६।१।७१) इत्यतो ह्रस्वस्येति तुगिति च वर्त्तते । **जश्त्वेनेति** । स्वशब्दे उपपदे छ्यतेः के स्वच्छशब्दो निर्मले रूढः, एवं नञ्पूर्वाच्छादयतेर्डे अच्छशब्द इति पदान्तत्वं बोध्यम् । स्पष्टञ्चेदम**मरटिप्पणे** ।

**आङ्माङोश्च** (पा०सू० ६।१।७४) । आङ्साहचर्यान्माङव्ययमेव ।

**दीर्घस्यायामिति** । (२)वक्ष्यमाणज्ञापकाद् (३)व्याख्यानाद्वा दीर्घादिति (४)षष्ठ्यर्थे पञ्चमीति भावः । एओङ्सूत्र**भाष्ये** ध्वनितमेतत् । **चेच्छिद्यते इति** । तुको हलादिःशेषस्तु न, अभ्याससञ्ज्ञाप्रवृत्तिकाले स्थानिद्वारा साक्षाद्वा सन्निहितानां हलामेव तेन (५)निवृत्तेः ।

---

(१)**उच्चारणमिति** । अर्धमात्राधिककालाव्यवायेनोच्चारणमित्यर्थः ।

(२)**वक्ष्यमाणज्ञापकादिति** । सुराच्छायेति ज्ञापकादित्यर्थः । ननु नैतज्ज्ञापकं सम्भवति "दीर्घात्" (पा०सू० ६।१ ७५) इति सूत्रस्यापदान्तविषयत्वादुक्तलक्ष्यस्य च पदान्तविषयत्वादत आह–(३)**व्याख्यानाद्वेति** । 'वर्णैकदेशानां वर्णग्रहणेन ग्रहणमि'ति पक्षे 'अग्न इन्द्र' इत्यत्र सवर्णदीर्घं ह्रस्वाक्षराश्रयम् 'आलय' इत्यादौ "ह्रस्वस्य पिति" (पा०सू० ६।१।७१) इति तुकश्चाशङ्क्य "दीर्घे ह्रस्वाक्षराश्रयो विधिर्न भवति" इत्यर्थे "यदयं दीर्घाच्छे तुकं शास्ति" इत्युक्तं **भाष्ये** । यदि छस्यायं तुक्स्यात्तदा ह्रस्वस्य पूर्वेण, छस्य त्वनेनेति विशेषस्य स्पष्टत्वात्तस्य ज्ञापकत्वासङ्गतिरिति "एओङ्"सूत्रस्थभाष्यमूलकादित्यर्थः ।

(४)**षष्ठ्यर्थे पञ्चमीति** । वस्तुतस्तु षष्ठ्यंशविकलतस्मादिति परिभाषोपस्थित्या दीर्घाव्यवहितोत्तरत्वविशिष्टो यश्छकारः तदव्यवहितपूर्वत्वविशिष्टस्य तुगित्यर्थेन सामञ्जस्यात्फलितार्थकथनमेतत् ।

(५)**निवृत्तेरिति** । न च 'चेच्छिद्यते' इत्यादौ स्थानिवत्सूत्रोक्तदिशा तुग्विशिष्टे

अत एव "नुगतो" (पा०सू० ७।४।८५) इत्यादि चरितार्थम्।

**दीर्घात्पदान्तादिति**। (१)पदान्तस्य दीर्घस्येत्यर्थः। योग-विभागोऽनयोः "एओङ्" (मा०सू० ३) इति सूत्रे **भाष्ये** स्पष्टः। दीर्घान्तस्य पदस्येत्यर्थेन सिद्धेऽन्तग्रहणं पदान्तविधित्वमस्य, न पदविधि-त्वमितिबोधनद्वारा समर्थपरिभाषानुपस्थित्यर्थम्। तेनासामर्थ्येऽप्यस्य प्रवृ-त्तिरिति समर्थसूत्रे (२)**कैयटः**।

**इति हल्सन्धिः॥**

**विसर्जनीयस्य सः** (पा०सू० ८।३।३४)। प्राग्व्याख्यातमपि विसर्जनीयपदानुवृत्तिप्रदर्शनाय स्मारितम्।

शर्परे इति बहुव्रीहिः। विशेष्यश्चावध्यवधिमतोः साजात्याद्विसर्जनी-याक्षिप्तः खरेव। विसर्गस्य विसर्गविधौ फलमाह—**न त्वन्यदिति**। अन्यदेव विवृणोति—**इहेति**। **त्रैरूप्यमिति**। विकल्पद्वयसामर्थ्या-दिति भावः।

**सोऽप** (पा०सू० ८।३।३८)। **अपदाद्योरिति**। सूत्रे सौत्र-

---

द्विर्वचनीयविधेयताश्रयावधिकाव्यवहितपूर्वत्वस्य, एकदेशविकृतन्यायेन द्विर्वचनीयोद्दे-श्यताश्रय-द्विर्वचनीयविधेयताश्रयैतदुभयमात्रारब्धसमुदायघटकत्वस्य च सत्त्वेन पुन-रभ्याससंज्ञायाः सुलभत्वेनाभ्याससंज्ञाप्रवृत्तिकाले संनिहितत्वात्तुको हलादिः शेषो दुर्वार इति वाच्यम्, "नुगतोऽनुनासिकान्तस्य (पा०सू० ७।४।८५) इतिशास्त्रारम्भसाम-र्थ्येन हलनुबन्धकागमानां हलादिः शेषो न भवतीति कल्पनेनादोषात्। हलनुबन्धे-त्युक्त्या 'चकार' इत्यादौ रेफागमस्य हलादिः शेषो भवत्येवेति दिक्।

(१)**पदान्तस्य दीर्घस्येति**। वस्तुतस्तु पदान्तदीर्घाव्यवहितोत्तरत्वविशिष्टो यश्छकारस्तदव्यवहितपूर्वत्वविशिष्टस्य तुगित्यर्थो बोध्यः। (२)**कैयट इति**। अत्र पदसंज्ञाप्रयोजकप्रत्ययोत्पत्तिप्रयोजकसंज्ञाशास्त्रीयोद्देश्यतावच्छेदकरूपावच्छिन्नसम्पाद-कत्वरूपपदविधित्वस्याभावात्समर्थपरिभाषाऽनुपस्थित्या एकार्थीभावाभावेऽपि तुग्भव-त्येवेति अन्तग्रहणं स्पष्टार्थमेवेत्ययं कैयटश्चिन्त्य एवेति बोधितमिति दिक्।

इति हल्सन्धिः॥

त्वादेकवचनम् । **अनव्ययस्येति** । अत्राव्ययीभावातिरिक्ताव्ययस्यैव ग्रहणं, (१)व्याख्यानात् । तेन 'उपपयस्काम्यति' इत्यादौ सत्वसिद्धिरिति स्पष्टम् "अव्ययीभावश्च" (पा०सू० १।१।४१) इत्यत्र **भाष्ये । गीः काम्यतीति** । 'वाः काम्यति' इत्यस्याप्यु(२)पलक्षणमिदम् ।

**इणः षः** (पा०सू० ८।३।३९) । "इदुदुपधस्य" (पा०सू० ८। ३।४१) इत्यस्यासिद्धत्वात् 'सर्पिष्पाशम्' इत्यादौ सत्वनिवृत्त्यर्थं, 'गीष्पाशं' 'दोष्कल्पम्' इत्याद्यर्थञ्चेदम् । अत्रानव्ययस्येत्यपदादाविति काम्ये इति च सम्बद्ध्यते । तेनोच्चैःकल्पं, दोः पश्य, गीः काम्यतीत्यादौ षत्वं न । अत एवात्र प्रकरणे सर्वत्र सत्वमेव विधेयमिण उत्तरस्य विसर्गस्थानिकसस्यानेन षत्वमिति **भाष्योक्त**पक्षान्तरं सङ्गच्छते । विसर्जनीयस्थानिकेत्युक्त्या 'पुँस्पुत्रः' इत्यादौ न दोषः । तत्र हि मस्थानिकः सः । अत्र विसर्जनीयस्येत्यनुवृत्त्यैतदर्थलाभः । अनव्ययस्येत्यादि त्वत्र पक्षेऽत्र न सम्बद्ध्यते । तेन 'द्विष्कृतं' 'दुष्काम्यति' इत्यादौ षत्वसिद्धिः । 'गीः काम्यति' इत्यादौ सकाराभावादेव न दोषः । अपदादाविति च न सम्बद्ध्यते । तेन 'दुष्करोति' इति षत्वसिद्धिः । परन्त्वयं पक्षो (३)ऽसङ्गतः उत्तरसत्वस्यासिद्धत्वेन

---

**अथ विसर्गसन्धिः । (१)व्याख्यानादिति** । "अव्ययीभावस्याव्ययत्वे लुङ्मुखस्वरोपचाराः" इति **भाष्ये** परिगणनरूपादित्यर्थः । **(२)उपलक्षणमिदमिति** । वस्तुतस्तु "सोऽपदादौ" (पा०सू० ८।३।३८) इत्यत्र "काम्येरोरेव" (का०वा०) इत्यस्य "इणः षः" (पा०सू० ८।३।३९) इत्यत्र "काम्येरोरेव" इत्यस्य चैकमेव 'गीः काम्यति' इति फलम् । अन्यथा "सोऽपदादौ" (पा०सू० ८।३।३८) इत्यत्र तदभावे सत्वम्, "इणः षः" (पा०सू० ८।३।३९) इत्यत्र च तदभावे षत्वं दुर्वारं स्यात् । एवञ्चोपलक्षणतया व्याख्यानं निष्फलमेवेति दिक् ।

**(३)असङ्गत इति** । परे तु "इडाया वा" (पा०सू० ८।३।५४) इत्यतः प्राक् "इणः षः" (पा०सू० ८।३।३९) इति सूत्रं कर्तव्यम् । इण उत्तरस्य विसर्गस्थानिकसकारस्य षो भवतीति तदर्थः । विसर्गस्थानिकेत्युक्त्या 'पुँस्पुत्रः' इत्यादौ मकारस्थानिकविसर्गस्य न षः । "समः सुटि" (पा०सू० ८।३।५) "पुमः खय्यम्परे" "कानाम्रेडिते" (पा०सू० ८।३।१२) इति सूत्रत्रयेण सकारस्यैव विधानेन तस्यासिद्धत्वाद्रुत्वाद्यभावे विसर्गस्थानिकसकारस्याभावात् । "सोऽपदादौ" (पा०सू० ८।३।३८) इत्यारभ्य "इणः षः" (पा०सू० ६।३।३९) इत्यतः प्राक्तनैः सर्वैः सूत्रैः सकार एव

'निष्कृतम्' इत्यादौ षत्वासिद्धेः । "प्रकरणे प्रकरणमासिद्धं न योगे योगे" इति पक्षस्तु (१)नास्त्येव ज्ञापकासम्भवादिति "उपसर्गादसमासेऽपि" (पा० सू० ८।४।१४) इत्यत्र निरूपयिष्यामः । विसर्जनीयस्यैव षत्वमिति मूले-क्तपक्षे तु सकारषकारयोः स्वरितत्वेऽपि यथायोगं सम्बन्धो मण्डूकप्लुत्ये-त्यन्यत्र विस्तरः ।

**नमस्पु** (पा०सू० ८।३।४०) । इत उत्तरमपदादाविति न सम्ब-ध्यते, (२)व्याख्यानात् । **साक्षात्प्रभृतित्वादिति** । ऊर्यादित्वाद्ग-तित्वं, स्वरादिपठितस्य तु गतित्वाभावः, तेन साक्षात्प्रभृतिषु च्व्यर्थवचनेऽपि न क्षतिरित्यन्ये ।

**इदुदु** (पा०सू० ८।३।४१) । अप्रत्ययस्येति पर्युदासो लाघवात् । तत्र प्रत्ययपदं तत्सम्बन्धिपरं, तेन प्रत्ययसम्बन्धिभिन्नस्येत्यर्थः । अत एव 'कविभिः कृतम्'इत्यादौ न षत्वम् । स्पष्टञ्चेदं **भाष्ये** इत्य(३)न्यत्र विस्तरः ।

---

विधेयः । तथा च कुत्रचित् स एव कुत्रचित् ष एव कुत्रचिदुभयमनुवर्तते इति कल्पना न कर्तव्या भवति । किञ्च "इणः षः" (पा०सू० ८।३।३९) इत्यत्र "अन-व्ययस्य" (का०वा०) "काम्ये रोरेव" (का०वा०) इति वार्तिकद्वयसम्बन्धश्च न कर्तव्यो भवति, अपदादावित्यत्र स्वरितत्वं च न कल्पनीयं भवतीति महल्लाघवम् । उच्चैःकल्पम्, दोः पश्य, गीः काम्यतीत्यादौ विसर्गस्थानिकसकारस्यैवाभावेन षत्व-प्राप्तेः । एतेन परन्त्वयं पक्षोऽसङ्गत इत्युक्तिरेवासङ्गतेति प्राहुः ।

(१)**नास्त्येवेति** । 'भोरिछन्धि' 'भगोरिछन्धि' 'अघोरिछन्धि' 'हरिवरिछन्धि' इत्यादौ "विभाषा भवत्" "वन उपसंख्यानम्" (का०वा०) इति वार्तिकद्वय-"नश्छवि" (पा०सू० ८।३।७) इति सूत्रस्यासिद्धत्वाभावात्परत्वात्तेनैव रुत्वे अवसं-कारादेशानापत्तेरनुनासिकयोरापत्तेश्च दुर्वारत्वेन "प्रकरणे प्रकरणम्" इति प-आश्रयितुं न शक्यते इति भावः ।

(२)**व्याख्यानादिति** । 'नारायणं नमस्कृत्य' इत्यादिलक्ष्यदर्शनमूलकादित्यर्थः ।

(३)**अन्यत्र विस्तर इति** । वस्तुतस्तु प्रत्ययभिन्नविसर्गस्येदुदुपधस्य षइति सामानाधिकरण्येनान्वयेऽपि न क्षतिः । न च 'कविभिः कृतम्' इत्यादौ षत्वं दुर्वारं स्याद्भिसः प्रत्ययत्वेऽपि विसर्गस्य तद्भिन्नत्वादिति वाच्यम्, "प्रत्ययस्य लुक्" (पा० सू० १।१।६१) इति सूत्रात्प्रत्ययस्येत्यनुवृत्त्यैव सिद्धे "प्रत्ययलोपे" (पा०सू० १।१।६२) इति सूत्रे प्रत्ययग्रहणसामर्थ्येन षष्ठीप्रकृतिप्रयोज्यप्रत्ययत्वावच्छिन्नविषयता प्रत्यया-यवेऽपि स्वीक्रियते इत्यर्थेन प्रकृते विसर्गेऽपि तद्विषयतासत्त्वेन प्रत्ययभिन्नविसर्गा-

(१)**एकादेशशास्त्रेति** । एकादेशशास्त्रसम्पन्नरेफस्थानिकत्वेन विसर्जनीयस्यैकादेशशास्त्रनिमित्तकत्वं बोद्धव्यम् । स्पष्टञ्चेदमत्र सूत्रे, 'उरण् रपरः" (पा०सू० १।१।५१) इति सूत्रे च **भाष्ये** इत्यन्यत्र विस्तरः । प्रत्ययभिन्नसम्बन्धिन इति तु नार्थः । 'अग्निः करोति' इत्यादावपि प्रत्ययभिन्नसमुदायसम्बन्धित्वेन (२)षत्वापत्तेः । तपरकरणं किम् ? गीः करोति । उपधाग्रहणं व्यर्थम् "उपधा ग्रहणं न करिष्यते, इदुद्भ्यां तु परं विसर्जनीयं विशेषयिष्यामः" इति हयवरट्सूत्र**भाष्योक्तेः** ।

**तिरसोऽन्य** (पा०सू० ८।३।४२) । अत्र गतिग्रहणं नानुवर्त्तते, पराभेव तिरस्कारशब्दप्रयोगात् । अन्तर्धावेव तिरसो गतित्वात् ।

**द्विस्त्रि** (पा०सू० ८।३।४३) । 'कृत्वोऽर्थ' इति न विसर्गविशेषणं चतुःशब्देऽसम्भवात् , किन्तु द्विरादीनामित्याह—**वर्तमानानामेषामिति** । "इसुसोः" (पा०सू० ८।३।४४) इतिसूत्रवक्ष्यमाणरीत्या (३)"सुचः" इति सूत्रयितुमुचितम् , सुजन्तान्तस्य पदस्येत्यर्थात् । **चतु-**

---

वेनादोषात् । स्पष्टं चेदं प्रत्ययलोपसूत्रे शेखरे । 'प्रत्ययपदं तत्सम्बन्धिपरम्' इति शेखरस्तु यत्र पर्युदस्यमानो वर्णः, पर्युदाससमर्पकञ्च समुदायबोधकपदं, तत्र तत्पदं तदवयवे लाक्षणिकम्, यथा "नश्छव्यप्रशान्" (पा०सू० ८।३।७) "शेषो घ्यसखि" (पा० १।४।७) "अत्वसन्तस्य चाधातोः" (पा०सू० ६।४।१४) इत्यादौ, एवं प्रकृतेऽपीत्याशयेन योजनीयः ।

(१)**एकादेशशास्त्रेतीति** । 'मातुः कृपा' इत्यादौ विसर्गस्य "अन्तादिवच्च" (पा०सू० ६।१।८५) इतिसूत्रसहायेन प्रत्ययसम्बन्धित्वेन षत्वाप्राप्त्यैतज्ज्ञापनस्य नोपयोग इति तत्त्वम् । (२)**षत्वापत्तेरिति** । न च प्रत्ययभिन्नसम्बन्धिविसर्गस्य ष इत्यर्थे सर्वत्रैव प्रत्ययभिन्नसम्बन्धित्वाद्विसर्गस्य षत्वं स्यादित्यप्रत्यय इति व्यर्थं स्यात्, तत्सार्थक्याय प्रत्ययभिन्नप्रातिपदिकावयवेदुदुपधस्य विसर्गस्य ष इत्यर्थेन 'अग्निः करोति' 'कविभिः कृतम्' इत्यादौ न दोषः प्रत्ययभिन्नसमुदायसम्बन्धित्वेऽपि विसर्गस्य प्रातिपदिकावयवत्वाभावादिति वाच्यम्, 'ओजोभिःकृतम्' 'सख्युःपुत्रः' इत्याद्यलुक्समासे प्रत्ययभिन्नसम्बन्धित्वात्प्रातिपदिकावयवत्वाच्च विसर्गस्य षत्वापत्तेः ।

(३)**सुच इति सूत्रयितुमिति** । न च 'चतुष्करोति' 'चतुः करोति' इत्यादौ "द्विस्त्रिश्चतुः" (पा०सू० ८।३।४३) इति षत्वस्यासिद्धत्वात् "इदुदुपधस्य"

ष्कपाल इति। "इदुदुपधस्य" (पा०सू० ८।३।४१) इति। निषेधः। चतुःशब्दोऽव्युत्पन्न इति अप्रत्ययस्येति पर्युदासो न। अत एव "चतुष्पाद्भ्यो ढञ्" (पा०सू० ४।१।१३५) इत्यादिनिर्देशाः सङ्गच्छन्ते। 'चतुष्पञ्चाशत्' इत्यत्रापि षत्वं भवत्येव। न चेदुदुपधस्य सस्य यो विसर्ग इति हयवरट्सूत्रभाष्योक्तेः कथमत्र षत्वमिति वाच्यम्, विसर्गस्य पाठाभावेनोपधात्वासम्भवात्तत्स्थानिनिमित्तमुपधात्वं ग्राह्यमिति भाष्यतात्पर्यात्। अत एव "समः सुटि" (पा०सू० ८।३।५) इतिसूत्रभाष्ये "सम्पुङ्कानाम्" (का०वा०) इत्यनेन रुविधिरेवास्त्वित्याशङ्क्य 'पुंस्कामा' इत्यत्र षत्वापादानं सङ्गच्छते।

न च कृत्वोऽर्थे विद्यमानस्य पदस्येदुदुपधस्य यो विसर्ग इत्यर्थे 'पञ्चकृत्वः करोति' इत्यादौ दोषो, नापि 'चतुष्करोति' इत्यादावव्याप्तिरिति द्विस्त्रिश्चतुरिति व्यर्थमिति वाच्यम्, कृत्वोऽर्थे इत्यस्यासिद्धत्वेन चतुःशब्दे "इदुदुपधस्य" (पा०सू० ८।३।४१) इति नित्यषत्वापत्तेः। "प्रकरणे प्रकरणमसिद्धम्" इति पक्षस्तु "उपसर्गादसमासेऽपि" (पा०सू० ८।४।१४) इति सूत्रे कैयटे "पूर्वपदात्" (पा०सू० ८।१।१३) इति सूत्रे भाष्ये च (१)दूषित एव। "उपसर्गात्" (पा०सू० ८।३।१०३) इति सूत्रे चोपपादयिष्यते। किञ्च पूर्वत्रेति पूर्वशब्देन प्रकरणग्रहणेऽव्यवहितप्रकरणे एव त्रिपाद्यसिद्धत्वं स्यात्, न सम्पूर्णसपादसप्ताध्याय्याम्।

---

(पा०सू० ८।३।४१) इति नित्यषत्वापत्तिः। "सुचः" इति सूत्रस्य तु नापवादत्वं विसर्गस्य प्रत्ययसम्बन्धित्वेन "इदुदुपधस्य" (पा०सू० ८।३।४१) इति षत्वाप्राप्तेः 'द्विष्करोति' 'द्विः करोति' इत्यादौ चारितार्थ्यात्, इति वाच्यम्। "द्वित्रिभ्यां सुच् चतुरो लोपश्च" इति न्यासेन 'चतुष्करोति' इत्यादौ विसर्गस्य प्रत्ययसम्बन्धित्वे नित्यषत्वाप्राप्त्याऽदोषादिति दिक्। (१)दूषित एवेति। 'भोश्छिन्धि' 'भगोच्छिन्धि' 'अघोच्छिन्धि' हरिवच्छिन्धि' इत्यादावनुनासिकानुस्वारयोरापत्तेरवस्यौकारादेशानापत्तेश्चेति भावः।

ननु अव्यवहितप्रकरणस्यैव पूर्वदृष्ट्याऽसिद्धत्वे "अ अ" (पा०सू० ८।४।६८) इत्येतत्पर्यन्तानुवृत्तिप्रयोजकस्वरितत्वकरणं व्यर्थं स्यात्। किञ्च प्रतियोगासिद्धत्वकल्पे-

(१)किञ्चास्याधिकारत्वात्प्रतिसूत्रमुपस्थित्या प्रतियोगमसिद्धत्वं (२)दुर्वारमित्यन्यत्र विस्तरः ।

**इसुसोः** (पा०सू० ८।३।४४) । अत्रेसुसोः (३)प्रातिपदिकावयवयोर्ग्रहणम् । तेन 'पेचुः काष्ठैः' 'सख्युः पाकः' 'कविभिः कृतम्' इत्यादौ षत्वं न । "नित्यं समासे" (पा०सू० ८।३।४५) इति सूत्रोदाहरणे समासविषये तयोरेव सम्भवेनार्थाधिकारानुरोधात् (४)साहचर्याच्च । इसुसन्तपदावयवविसर्गस्येत्यर्थः पदस्येत्याधिकारात् । न च प्रत्ययग्रहणपरिभाषया 'परमसर्पिष्करोति' इत्यादौ (५)षत्वानापत्तिरवयवस्येसुसन्तत्वेऽपि (६)"उत्तरपदत्वे च" इति निषेधेनापदत्वादिति वाच्यम्, अनुत्तरपदस्थस्येति निषेधेन क्वचिदुपात्तविशेष्यसत्त्वेऽपि (७)शब्दरूपं विशेष्यमादाय तदन्तविधिज्ञापनेन शब्दरूपं विशेष्यमादाय प्रत्ययग्रहणपरिभाषया लब्धतदन्तार्थकस्य पदविशेषणतया (८)इसुसन्तान्तस्येत्यर्थेनादोषात् । अत एव "वनो रच" (पा०सू० ४।१।७) इत्यादौ (९)न दोषः । 'ब्राह्मणस्य सर्पिष्क-

---

प्ययं दोषस्तुल्यं इत्यत आह—(१)**किञ्चेति** । (२)**दुर्वारमिति** । यथा "प्राग्दीव्यत"(पा०सू० ४।१।८३) इत्यादौ अवधिसाजात्यादर्थपुरस्कारेण प्रत्ययविधायकेष्वेवाणादेरधिकारः, एवं "प्रकरणे प्रकरणे एवानुवर्तते" इत्येतज्ज्ञापकलिङ्गाभावात् "स्त्रियाम्" (पा०सू० ४।१।३) इत्यादेरिवास्यापि प्रतिसूत्रमनुवृत्तिर्दुर्वारेति भावः ।

(३)**प्रातिपदिकावयवयोरिति** । इस्साहचर्यादुस्तिङ्नवयवो गृह्यते, तादृशोस्साहचर्याच्चेसुवनवयवो गृह्यते । तेन प्रातिपदिकावयवयोर्ग्रहणमित्यर्थाल्लब्धमिति भावः ।

(४)**साहचर्यादिति** । निरुक्तसाहचर्यादिति भावः । (५)**षत्वानापत्तिरिति** । इसन्ततदादेरुसन्ततदादेर्विसर्गस्य ष इत्यर्थेन षत्वानापत्तिः । अधिकृतपदस्येत्यनेन सामानाधिकरण्येनान्वयेऽपि धर्मिणः सिद्धत्वेन तदादित्वधर्ममात्रोपस्थित्येसन्तमुसन्तम्—इसुस् च यस्माद्विहितौ तदादित्वविशिष्टं—यत्पदं, तत्सम्बन्धिविसर्गस्य ष इत्यर्थेन तदनापत्तिरस्त्येवेति भावः । ननु 'परमसर्पिष्करोति' इत्यादौ प्रत्ययलक्षणेन सर्पिरिति पदमिस् यस्माद्विहितस्तदादित्वविशिष्टश्चेति षत्वविकल्पो दुर्वार इत्यत आह-(६)**उत्तरपदत्वे चेति** । (७)**शब्दरूपं विशेष्यमिति** । तदादिरूपं शब्दमित्यर्थः । (८)**इसुसन्तान्तस्येति** । इसन्तमुसन्तं च यत्तदादि तदन्तं यत् पदं तस्येत्यर्थः । (९)**न दोष इति** । वन्नतं यत्तदादि तदन्तात्प्रातिपदिकादित्यर्थादिति भावः ।

रोति' इत्यादौ सापेक्षत्वेनासामर्थ्यं नाशङ्क्यं; तस्यै(१)कार्थीभावसामर्थ्यवि-षयत्वात्। (२)"अधात्वभिहितं समानाधिकरणमसमर्थवत्" इत्युक्तेः 'सर्पिः कालकम्' इत्यादौ न षत्वम्। अधात्वभिहितमित्युक्तेः 'सर्पिष्पीयते' इत्यत्र षत्वसिद्धिः। (३)धातुसहचरितप्रत्ययाभिहितार्थेन (४)समानाधिकरणमस-मर्थवन्नेति तदर्थः।

यदा तु सर्पिरादिकमव्युत्पन्नं प्रातिपदिकं पाणिनेरुणादिष्वव्युत्पत्तिः

---

**मूले—व्यपेक्षेति।** तत्त्वञ्च यत्किञ्चित्पदविशिष्टत्वम्। वै० स्वघटितत्वं, स्वप्र-योज्यविषयतानिरूपितविषयताप्रयोजकपदघटितत्वं, स्वप्रयोज्यविषयतानिरूपितत्व-भाववद्विषयताप्रयोजकपदाघटितत्वं, स्वनिष्ठशक्तिग्रहप्रयोज्यशक्तिग्रहविषयीभूतशक्ति-पर्याप्त्यनधिकरणत्वमेतच्चतुष्टयसम्बन्धेन। प्रत्येकपदेऽतिव्याप्तिवारणायाद्यसम्बन्ध-द्वयम्। 'तिष्ठतु सर्पिः पिब त्वमुदकम्' इत्यादावतिव्याप्तिवारणाय तृतीयसम्बन्धोपा-दानम्। समासेऽतिव्याप्तिवारणाय चतुर्थसम्बन्धोपादानमिति दिक्।

**(१)एकार्थीभावेति।** तत्त्वञ्च यत्किञ्चिच्छक्तिविशिष्टत्वम्। वै० स्वपर्याप्त्य-धिकरणघटितत्वं, स्वनिरूपकेतरानिरूपितशक्तिपर्याप्त्यधिकरणघटितत्वं, स्वग्रहप्रयोज्य-ग्रहविषयीभूतशक्तिपर्याप्त्यधिकरणत्वमेतत्त्रितयसम्बन्धेन। यथा 'राजपुरुषः' इत्यत्र राजत्वावच्छिन्ननिरूपितशक्तिपर्याप्त्यधिकरणराजपदघटितत्वम्, राजत्वावच्छिन्ननिरू-पितशक्तिनिरूपकेतरपुरुषत्वावच्छिन्ननिरूपितशक्तिपर्याप्त्यधिकरणघटितत्वं, राजत्वाव-च्छिन्ननिरूपितशक्तिग्रहप्रयोज्यशक्तिग्रहविषयीभूतराजसम्बन्धिपुरुषत्वावच्छिन्ननिरूपित-शक्तिपर्याप्त्यधिकरणत्वञ्च वर्तते इति लक्षणसमन्वयः।

आद्यसम्बन्धद्वयं स्वरूपकथनपरं न तु व्यावर्तकम्। तृतीयसम्बन्धोपादानं वा-क्येऽतिव्याप्तिवारणायेति दिक्।

**(२)अधात्वभिहितं समानाधिकरणमसमर्थवदिति।** धातुप्रकृतिकप्रत्य-यप्रयोज्यत्वाभाववती या विशेष्यता तन्निरूपिता या (अभेदसम्बन्धावच्छिन्ना) सम्ब-न्धानवच्छिन्ना प्रकारता तत्प्रयोजकं तन्निरूपितविशेष्यताप्रयोजकं वा व्यपेक्षारूपसाम-र्थ्याभाववदित्यर्थः। धातुप्रकृतिकप्रत्ययप्रयोज्यत्वाभाववत्त्वस्य विशेष्यतायां विशेषणोपा-दानेन 'सर्पिष्पीयते' इत्यादौ नासामर्थ्यम्, तेपदप्रयोज्यविशेष्यतानिरूपिताभेदसम्ब-न्धावच्छिन्नप्रकारताप्रयोजकत्वस्य सर्पिःपदे सत्त्वेऽपि तेपदार्थकर्मनिष्ठविशेष्यतायां धातुप्रकृतिकतिङ्प्रत्ययप्रयोज्यत्वाभावस्याभावात्। **(३)धातुसहचरितेति।** धातु-प्रकृतिकेत्यर्थः। सामान्यतः प्रत्ययपदोपादानात् 'सर्पिष्पेयम्' इत्यादावपि षत्वसिद्धि-रिति दिक्। **(४)समानाधिकरणमिति।** कालकादिपदप्रयोज्यविशेष्यतानिरूपित-सम्बन्धानवच्छिन्नप्रकारतायाः प्रयोजकं तन्निरूपितविशेष्यताप्रयोजकं वेत्यर्थः।

एवेति "आयनेयीनी" (पा०सू० ७।१।२) इति सूत्रे **भाष्ये** स्पष्टमुक्तेः । तत्र हि 'शङ्खः' इत्यादावादेशानाशङ्क्य "उणादीनां प्रतिषेधो वक्तव्यः, प्रातिपदिकविज्ञानाच्च भगवतः पाणिनेः सिद्धम्" इत्युक्तम् । "अयामन्ताल्वाय्येत्न्विष्णुषु" इति सूत्रं व्याकरणान्तररीत्यैव, सर्वनामस्थानमिति महासञ्ज्ञावत् । अत एव **भाष्ये**–'उणादयोऽव्युत्पन्नानि' इत्येवोक्तं; न तु "अनेकार्था अपि धातवः" इतिवदव्युत्पन्नान्यपीत्युक्तं, तदा "इदुदुपधस्य" (पा०सू० ८।३।४१) इति नित्ये षत्वे प्राप्तेऽनेन विकल्प इति । प्रत्ययग्रहणाभावात्तत्परिभाषानुपस्थितेः 'परमसर्पिष्करोति' इत्यादौ षत्वविकल्पः सिद्धः । "नित्यं समासे" (पा०सू० ८।३।४५) इति सूत्रमनुत्तरपदस्थस्येतिप्रतिषेधार्थम् । नित्यग्रहणं तु न कर्त्तव्यमेव । समासे नित्यषत्वस्य "इदुदुपधस्य" (पा०सू० ८।३।४१) इत्येव सिद्धेः । 'सर्पिषा' इत्यादौ षत्वं त्वत्र पक्षे क्वचिदन्यदेवेत्यर्थकाद् बहुलग्रहणादिति स्पष्टं **भाष्ये । व्यपेक्षेति ।** (१)व्याख्यानात् । एकार्थीभावसामर्थ्यग्रहणे 'परमसर्पिः कुण्डिका' इत्यादौ समासे विकल्पापत्तिः । अनुत्तरपदस्थस्येति निषेधादुत्तरसूत्रस्य न प्रवृत्तिरिति भावः ।

नन्वनेनैव सिद्धे कस्कादिषु सर्पिष्कुण्डिकाशब्दपाठो व्यर्थ इत्यत आह—**कस्कादिष्विति ।** एतेन तत्सामर्थ्यादुत्तरपदस्थस्यापि (२)षत्वमित्यपास्तम् । **व्यपेक्षाविरहेऽपीति ।** 'आनय सर्पिः, कुण्डिका तिष्ठति' इत्यादौ । **व्यपेक्षायामिति ।** 'इदं सर्पिष्कुण्डिकायाः' इत्यत्र । प्रत्ययभिन्नविसर्गस्येत्यर्थम् "इदुदुपधस्य"(पा०सू० ८।३।४१) इत्यत्र व्याचक्षाणानां व्याख्यादर्शकृतां मतेऽव्यपेक्षायां तेन सिद्धेरिति भावः । एतेन कस्कादिपाठस्याव्यपेक्षायां चारितार्थ्येन व्यपेक्षायां तस्या-

---

(१)**व्याख्यानादिति ।** उत्तरसूत्रे समासग्रहणस्य सत्त्वेन तस्यैकार्थीभावविषयकतया "इसुसोः" (पा०सू० ८।३।४४) इति सूत्रे सामर्थ्यस्य व्यपेक्षाविषयकत्वमित्येवं रूपादित्यर्थः । अन्यथा इत एव सामर्थ्यपदस्य तत्रानुवृत्तौ तत्र समासग्रहणस्य वैयर्थ्यं स्यादिति भावः । (२)**षत्वमित्यपास्तमिति ।** अत एव "अनुत्तरपदस्थ-

सिद्धत्वा(१)द्विकल्प एवोचित इत्यपास्तम् । प्रत्ययसम्बन्धिभिन्नविसर्गस्येत्यर्थे तु तदप्राप्तिरेवेति व्यपेक्षायां विकल्प एवेति बोद्ध्यम् ।

**अतः कृ** (पा०सू० ८।३।४६) । कृशब्देन (२)तदादिग्रहणं, समासाक्षिप्तोत्तरपदस्य विशेष्यत्वात् । "विष्वग्देवयोः" (पा०सू० ६।३।९२) इति सूत्रे वप्रत्ययग्रहणेन (३)धातो(४)र्विशेषणत्वे तदादिविधिज्ञापनात् । 'अयस्कुम्भी' इत्यादौ लिङ्गविशिष्टपरिभाषया सत्वं बोद्धयम् ।

**भास्कर इति ।** तपरकरणात् "अतः कृ" (पा०सू० ८।३।४६) इत्यस्याप्राप्तिः(५) ।

## इति विसर्गसन्धिः ॥

**यत्तु** स्वौजसित्यत्र रुरेव पाठ्यः, सर्वत्र सुग्रहणे रुग्रहणमेवास्त्विति । तन्न, 'यशोऽत्र' इत्यादौ रोरसिद्धत्वादु(६)त्वानापत्तेः, "अतो रोः"

स्येति किमर्थम् ? परमसर्पिःकुण्डिका" इति भाष्यं सङ्गच्छते । **(१)विकल्प एवेतीति ।** अव्युत्पत्तिपक्षेऽपि "इसुसोः" (पा०सू० ८।३।४४) इत्यस्य "इदुदुपध" (पा०सू० ८।३।४१) इतिषत्वापवादत्वादिसुसोरित्येतद्दृष्ट्या "कस्कादिषु च" (पा० सू० ८।३।४८) इत्यस्यासिद्धत्वाच्च विकल्प एवेति भावः । एवं च "व्यपेक्षायां नित्यार्थश्च" इति मूलग्रन्थो व्याख्यादर्शमते एव बोध्यः । अन्यथा कस्कादिषु तत्पाठस्य व्यपेक्षाविरहेऽसमासे चारितार्थ्येनासिद्धत्वाद्व्यपेक्षायां विकल्पो दुर्वारः स्यादिति दिक् ।

**(२)तदादिग्रहणमिति ।** सम्बन्धानवच्छिन्ना (अभेदसम्बन्धावच्छिन्ना) या प्रकारता तत्प्रयोजकं धातुबोधकसप्तम्यन्तं पदं स्वबोध्यार्थाद्यवयवकपरं बोध्यमित्यर्थिकया "धातुग्रहणे तदादिविधिः" (प०भा०) इतिपरिभाषयेति भावः । **(३)धातोरिति ।** धातुबोधकसप्तम्यन्तस्येत्यर्थः । **(४)विशेषणत्वे इति ।** सम्बन्धानवच्छिन्नविशेषणताप्रयोजकत्वे इत्यर्थः ।

**(५)अधःशिरसी पदे** (पा०सू० ८।३।४७) । अधः शिर इति च पदं पदशब्दे परे सत्वं लभते इति सूत्रार्थः ।

## इति विसर्गसन्धिः ।

**(६)उत्वानापत्तेरिति ।** न च "वौंजसमौट्" इति न्यासे राम र् इत्यस्यां दशायां विसर्गस्यासिद्धत्वात् "सुपि च" (पा०सू०७।३।१०२) इति दीर्घो दुर्वार इति

(पा०सू० ६।१।११३) इत्यस्य प्रथमैकवचने चारितार्थ्यात् । तद् ध्वनयन्नाह—**स्वौजसेति** । पदस्येत्यनुवृत्तं ससजूर्भ्यां विशेष्यते, तेन तदन्तविधिः । आदेशस्त्वलोऽन्त्यस्येत्यन्त्यस्य । तत्फलितमाह—**पदान्तस्येत्यादिना** । 'सजूः' इत्यत्र व्यपदेशिवद्भावेन सिद्धिः । "व्यपदेशिवद्भावोऽप्रातिपदिकेन" (प०भा०) "ग्रहणवता प्रातिपदिकेन तदन्तविधिर्न" (प०भा०) इति परिभाषाद्वयं (१)प्रत्ययविधिविषयमिति "असमासे निष्कादिभ्यः" (पा०सू० ५।१।२०) इत्यत्र **भाष्ये** स्पष्टम् । इदञ्चरुत्वाप-

---

स एव दोषो देय इति 'यशोऽत्र' इत्यादावुत्वानापत्तिरूपदोषपर्यन्तानुधावनं किमर्थमिति वाच्यम्, "सुपि च" इत्यस्य स्थाने "आपि च" इति "अपि च" इति वा न्यासेन दीर्घापत्तिरूपदोषवारणसम्भवात् । एवं सति रविधानेनैव सिद्धे "अहन्" (पा०सू०८।२।६८) इत्यनेन रुविधानं तु 'अहः सु' इत्यत्र "रोः सुपि" (पा०सू० ८।३।१६) इतिविसर्गार्थम्, 'अहोभ्याम्' इत्यादौ अनिष्टयत्वार्थं च स्यात् । रुविधानेनैव सिद्धे रविधानमपि 'अहर्भाति' इत्यत्र "भोभगो" (पा०सू०८।३।१७) इति यत्वं मा भूत् इत्येतदर्थम् । "रूपरात्रिरथन्तरेषु" (का०वा०) इति वार्तिकमपि सिद्धान्तानिष्टत्वार्थमेवेदानीं स्यात् । किञ्च एतद्वार्तिकसामर्थ्यात् "ससजुषो रुः" ( पा०सू० ८।२।६६) इति रोः सिद्धत्वकल्पनेऽपि "मतुवसो रु सम्बुद्धौ छन्दसि" ( पा०सू० ८।३।१) इति रुत्वस्य असिद्धत्वात् 'हरिवो मेदिनं त्वा' इत्यादौ उत्वानापत्तिः, इति न किमपि ज्ञापकमतिप्रसङ्गवारकं सम्भवतीति दिक् ।

(१) **प्रत्ययविधिविषयमिति** । इदमुपलक्षणम्-सूत्रोपात्तान्तादिशब्दविषयत्वं प्रातिपदिकविशेषविषयत्वं च "व्यपदेशिवद्भावोऽप्रातिपदिकेन" (प० भा०) इति परिभाषाया इत्यस्य, उगिद्भिन्नत्वे सति प्रत्ययभिन्नत्वे सति वर्णभिन्नत्वं ग्रहणवत्प्रातिपदिकत्वमित्येतद्विषयत्वं ग्रहणवत्परिभाषाया इत्यस्य च । अत एव "रोणी" (पा०सू०४।२।७८) "अग्रान्त" (पा०सू०५।४।१४५) "अनुदात्तादेरञ्" (पा०सू०४।२।४४) इत्यादिविषये आद्या, "उगितश्च" (पा०सू०४।१।६) "अत इञ्" (पा०सू०४।१।९५) "यञिञोश्च" (पा०सू०४।१।१०१) इत्यादौ द्वितीया च तेषां प्रत्ययविधित्वेऽपि न प्रवर्तते । तत्त्वञ्च प्रत्ययविशिष्टविधित्वम् । वै० स्वनिष्ठविधेयताप्रयोजकत्वम्, स्वनिष्ठोद्देश्यतानिरूपितविधेयताप्रयोजकत्वमेतदन्यतरसम्बन्धेन । तेन "नान्तादसंख्यादेः" (पा०सू०५।२।४९) इत्यस्यापि तत्त्वेन तत्राद्यपरिभाषाप्रवृत्त्या 'पञ्चमः' इत्यादौ व्यपदेशिवद्भावाभावेन न संख्यादित्वम् । मटः प्रत्ययत्वन्तु वक्तुमशक्यमित्यन्यत्र निरूपितम् ।

वादः । 'श्रेयान्' इत्यादौ रुत्वस्यासिद्धत्वात्संयोगान्तलोप एवेति दिक् । **यत्वस्यापवाद इति** । यदीदं न स्यात्तर्हि यत्वं प्राप्नोतीत्येतावता । कृते त्वस्मिन् यत्वस्यासिद्धत्वादुत्वगुणयोर्यत्वाप्राप्तिरेवेति भावः ।

**प्रथमयोः** (पा०सू० ६।१।१०२) । (१)व्याख्यानात् प्रथमयोरित्यनेन प्रथमाद्वितीयारूप(२)सुब्विभक्त्योर्ग्रहणम् । तदाह--**प्रथमाद्वितीययोरिति** । पूर्वग्रहणं किम् ? 'अग्नी' इत्यत्र पक्षे परसवर्णो मा

---

(१) **व्याख्यानादिति** । अत्र प्रथमयोरित्यनेन न यस्य कस्यचिद् ग्रहणं किन्तु "वा सुपि" (पा०सू०६।१।९२) इत्यतः सुब्ग्रहणानुवृत्तेः सुब्विभक्त्योरेव । तयोरपि न प्रथमवचनयोः अचीत्यधिकारात्, "तस्माच्छसः" (पा०सू०६।१।१०३) इत्यत्र कृतस्य पूर्वसवर्णदीर्घार्थकतच्छब्दस्य "दीर्घाज्जसि" (पा०सू०६।१।१०५) इति निषेधसूत्रस्य च दर्शनाच्चेत्येवंरूपादित्यर्थः ।

(२) **सुब्विभक्त्योरिति** । इदमत्राकूतम्, प्रथमयोरित्यस्य प्रथमत्वविशिष्टयोरित्यर्थः । प्रथमत्वविशिष्टे ये प्रथमाद्वितीये तद्गतं द्वित्वं द्विवचनार्थः । प्रथमत्वञ्च यादृशसंख्याविशिष्टनिरूपितं प्रथमत्वं वक्तव्यं तत्संख्याविशिष्टत्वम् । वै० स्वजनकापेक्षाबुद्धीयैकत्वनिष्ठप्रकारतानिरूपितधर्मितानाश्रयत्वं, स्वप्रयोजकापेक्षाबुद्धीयैकत्वनिष्ठप्रकारतानिरूपितधर्मितावच्छेदकताश्रयत्वमेतदुभयसम्बन्धेन । यथा सप्तत्वविशिष्टविभक्तिसमुदायनिरूपितं प्रथमत्वं वक्तव्यं तज्जनिका या अपेक्षाबुद्धिः 'इमाः षट्, एतद्विशिष्टेयमेका' इति, तदीयैकत्वनिष्ठप्रकारतानिरूपितधर्मिताश्रयत्वं सप्तम्यां, तदनाश्रयत्वं प्रथमाद्वितीयात्मकसमुदाये, एवं स्वप्रयोजिका या अपेक्षाबुद्धिः 'इमे द्वे, इमाश्चतस्रः, एतद्विशिष्टेयमेका' इति, तदीयैकत्वनिष्ठप्रकारतानिरूपितधर्मितावच्छेदकताश्रयत्वमपि प्रथमाद्वितीयात्मकसमुदाये वर्तते इति लक्षणसमन्वयः । सप्तम्यां प्रथमत्ववारणाय प्रथमसम्बन्धोपादानम् । अन्यथा 'षष्ठीसप्तम्यौ द्वे, प्रथमा द्वितीया तृतीया चतुर्थी इति चतस्रः, एतद्विशिष्टेयम्पञ्चम्येका' इत्याकारकापेक्षाबुद्धेरपि सप्तत्वसंख्योत्पत्तिप्रयोजकतया तदीयैकत्वनिष्ठप्रकारतानिरूपितधर्मितावच्छेदकताश्रयः सप्तम्यां सत्त्वेनातिव्याप्तिदुर्वारा स्यात् । प्रथमां विहाय मध्यसमुदायेऽतिव्याप्तिवारणाय द्वितीयसम्बन्धोपादानम् ।

यत्संख्याविशिष्टस्य प्रथमत्वं वक्तव्यं तत्संख्योत्तरसंख्याजनकापेक्षाबुद्धीयैकत्वावच्छिन्नविशेष्यतानिरूपितप्रकारताश्रयत्वमेव तत्त्वम् । यथा द्वित्वसंख्याविशिष्टप्रथमाद्वितीययोः प्रथमत्वं चेद्वक्तव्यं तत्संख्योत्तरसंख्या त्रित्वरूपा तत्संख्याजनिकाऽपेक्षाबुद्धिः 'एतद्द्वयविशिष्टेयमेका' इति, तदीयैकत्वावच्छिन्नविशेष्यता तृतीयायां तन्निरूपितप्रकारताश्रयत्वं प्रथमाद्वितीययोः । एवमन्यत्राप्यूह्यमित्यन्ये ।

भूदिति । दीर्घग्रहणं तु त्रिमात्रस्य स्थानिनास्त्रिमात्रो मा भूदिति । सवर्णग्रहणं तु स्पष्टार्थम् । पूर्वस्या(१)दीर्घत्वात् पूर्वजातीय इत्यर्थेनेष्टसिद्धेरिति स्पष्टं **भाष्ये । आद्गुण इति ।** "तौ सत्" (पा०सू० ३।२।१२७) इति निर्देशेन भ्रष्टावसरन्यायस्यात्र शास्त्रे(२)ऽनाश्रयणादिति भावः ।

देवदत्तहन्तृहतन्यायस्य तु (३)नात्र प्रवृत्तिः । देवदत्तहन्तृहनने हि नोज्जीवनं, (४)देवदत्तहननप्रसक्तहनने त्वस्त्येव देवदत्तजीवनं, प्रकृते तु न हननस्थानीया वृद्धिहन्तुः पूर्वसवर्णदीर्घस्य लक्ष्ये प्रवृत्तिः, किन्तु हननोद्यमसजातीयं प्रसक्तिमात्रं, प्रसक्तस्य निषेधे बाध्योज्जीवने न बाधकमिति । स्पष्टं चेदं "स्वादिषु" (पा०सू० १।४।१७) इतिसूत्रे **कैयटे** ।

**सुस्रोत इति ।** सुस्रोतस्शब्दः कस्यचित्सञ्ज्ञा । सम्बुद्धौ "दूराद्धूते च" (पा०सू० ८।२।८४) इति प्लुतः । **तत्सामर्थ्यादिति ।** प्रतियोगित्वेन तदाश्रयणसामर्थ्यादित्यर्थः,(५)आश्रयात्सिद्ध इति **भाष्यो-**

---

(१)**अदीर्घत्वादिति ।** गौरीरित्यादौ पूर्वस्य दीर्घत्वेऽपि तद्व्यक्तेर्विधातुमशक्यत्वाच्चेत्यपि बोध्यम् । (२)**अनाश्रयणादिति ।** वस्तुतस्तु भ्रष्टावसरन्यायस्यास्मिन् शास्त्रे विषय एव नेति वक्तव्यम् । तथा हि, शास्त्रस्यावसरो नाम तदीयोद्देश्यतावच्छेदकाक्रान्तिः । तथा च 'शिव उ अर्च्यः' इति स्थिते पूर्वसवर्णस्य "नादिचि" (पा०सू० ६।१।१०४) इति निषेधेन पूर्वसवर्णदीर्घोद्देश्यतावच्छेदकावच्छिन्नातिरिक्तत्वेन "आद्गुणः" (पा०सू० ६।१।८७) इत्यत्र सङ्कोचाभावेन गुणशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तेः सत्वेनावसरस्याभ्रष्टत्वात् । एवं 'त औ' इति स्थिते पूर्वोक्तदिशा वृद्धिशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तेः सत्त्वेन "तौ सत्" (पा०सू० ३।२।१२७) इत्यादिनिर्देशासङ्गतेरभावाच्च ।

(३)**नात्र प्रवृत्तिरिति ।** नात्र विषय इत्यर्थः । देवदत्तहन्तृहतन्यायविषयाभावमेवोपपादयति—(४)**देवदत्तहननप्रसक्तेत्यादिना ।** (५)**आश्रयात्सिद्ध इति ।** स्यादेतत्, अप्लुते इत्युक्त्या प्लुतस्यासिद्धत्वं न भवतीति कल्पने स्वांशे चारितार्थ्यं दुर्निरूपम् । तपरकरणेनैव प्लुतव्यावृत्त्या अप्लुतात्, अप्लुते इत्यस्य च व्यावर्त्यालाभादिति चेत् ? मैवम्, अप्लुतादितिपञ्चम्यन्तप्रयोज्या अप्लुते इतिसप्तम्यन्तप्रयोज्या वा या प्लुतभिन्नत्वावच्छिन्ना विषयता तादृशविषयतासाधकमसिद्धत्वं न भवतीति कल्पनेनादोषात् । तथाहि, 'एहि सुस्रोत ३ अत्र स्नाहि' 'तिष्ठतु पय अ३ग्निदत्त' इत्यादौ निरुक्तविषयतासाधकासिद्धत्वस्याभावेऽपि 'अतः' 'अति' इत्येतत्पदप्रयो-

क्तेः। पयस्यटति पयो ददातीत्यर्थे 'आगच्छ हे पयो३ट्' 'आगच्छ हे पयो३द' इत्यादावेकपदस्थवर्णद्वयसापेक्षमन्तरङ्गमुत्वं प्रति वाक्यसम्पादकपदान्तरसापेक्षप्लुतस्यासिद्धत्वादु(१)त्वे प्लुतसिद्धिः। अन्यथा प्लुतस्योत्वदृष्टया सिद्धत्वात्परत्वात् प्लुते आद्येऽप्लुतपरत्वाभावादन्त्येऽप्लुतात्परत्वाभावादुत्वं न स्यात्। परिभाषादृष्टया बहिरङ्गासिद्धत्वेऽपि न क्षतिः। स्वदृष्टयाऽसिद्धस्यापि परं प्रत्यसिद्धत्वप्रतिपादनसम्भवात्, स्वदृष्टयाऽविद्यमानस्य परं प्रत्यविद्यमानत्वप्रतिपादनवत्। अन्तरङ्गस्यासिद्धत्वे तु प्रतिपाद्याभावे इव कं प्रत्यसिद्धत्वं प्रतिपाद्येत। तत्राद्ये "वाक्यस्य टेः" (पा०सू० ८।२।८२) इत्यट्शब्दाकारः प्लुतः, अन्त्ये रेफदकारसंयोगपरत्वेनाकारस्य गुरुत्वात् "गुरोः" (पा०सू० ८।२।८६) इति प्लुतः। आश्रयेण तु येननाप्राप्तिन्यायेन (२)प्रत्यक्षत्वेन च पूर्वत्रासिद्धत्वमेव बाध्यते न त्विदम्। 'सुस्रोतः' इत्यादौ त्वेकवाक्यमात्रसापेक्षत्वात् प्लुतोऽन्तरङ्गो, भिन्नवाक्यस्थाकारसापेक्षत्वादुत्वं बहिरङ्गमिति स्पष्टं **भाष्ये। उकारानुबन्धेति।** उकारेत्सञ्ज्ञकरेफस्येत्यर्थ (३)इति भावः। तेन 'देव रुहि' इत्यादौ न दोषः।

---

ज्यैकमात्रिकत्वविशिष्टात्वावच्छिन्नविषयतासाधकासिद्धत्वस्य सत्त्वादुत्वं दुर्वारं स्यादिति अप्लुतादिति अप्लुते इति च स्वांशे चरितार्थमिति दिक्। प्लुतपदघटितशास्त्रदृष्ट्या प्लुतस्यासिद्धत्वं न भवतीति कल्पनेन एकम् अप्लुतपदं त्यक्तुं शक्यमिति न वाच्यम्, तथा सति तुल्यन्यायात् रुपदघटितशास्त्रदृष्ट्याऽसिद्धत्वं न भवतीतिकल्पनापत्तौ सः अर्थः रर्थः; मनसः रर्थः मनारर्थः इत्यादौ मनोरथ इत्यादाविव उत्वापत्तेः। तस्मात्तत्पदग्राह्यता आश्रयणाद्भवतीत्येव कल्पनीयम्। ततश्चोभयोः साफल्यं स्पष्टमेवेति दिक्।

(१)**उत्वे प्लुतसिद्धिरिति।** आश्रयात् प्लुतस्य 'पूर्वत्र" (पा०सू० ८।२।१) इत्यनेनासिद्धत्वं नेतिकल्पनेऽपि बहिरङ्गासिद्धत्वाभावकल्पने मानाभावादिति भावः। एतेन बहिरङ्गशास्त्रत्वमन्तरङ्गपरिभाषाप्रवृत्तौ लिङ्गमित्यपास्तम्। आगच्छ पयो३द्; आगच्छ पयो३देत्यादावन्तरङ्गपरिभाषादृष्ट्या त्रैपादिकत्वेन प्लुतस्य असिद्धत्वाद् बहिरङ्गशास्त्रत्वप्रकारकज्ञानाभावेनैतदप्रवृत्तावुत्वदृष्ट्या प्लुतस्य सिद्धत्वेन परत्वात् प्लुते उत्वानापत्तेरिति दिक्। (२)**प्रत्यक्षत्वेनेति।** आनुमानिकस्मृतिप्रमाणापेक्षया प्रत्यक्षश्रुतिप्रमाणे बलवत्त्वस्य "विरोधे त्वनपेक्षं स्यात्"(जै०सू०अ०१पा०३अधि०२सू०३) इत्यधिकरणे निरूपितत्वाद्। दुर्बलप्रमाणबाधस्यैवोचितत्वादिति भावः। (३)**इति भाव इति।**

**भोभगो** (पा०सू० ८।३।१७)। "रोः सुपि" (पा०सू० ८।३।१६) इत्यतो रोरिति वर्त्तते; न तु "रो रि" (पा०सू० ८।३।१४) इत्यतो र इति, 'प्रातरत्र' इत्यादावतिप्रसङ्गात्। अशब्दान्तद्वन्द्वेन पूर्वशब्दस्य बहुव्रीहिमभिप्रेत्याह—**एतत्पूर्वस्येति**। नन्वेवं पूर्वरूपापत्तिरत आह—**असन्धिरिति**। भगोऽघोशब्दौकारयोरकाराभ्यां प्राप्तपूर्वरूपात्मकसन्धिकार्याभाव इत्यर्थः। इदं प्राचामनुरोधेन। वस्तुतः सूत्रे (१)रान्तानामेवानुकरणमसान्धिर्न्याय्य एवेति बोद्धव्यम्।

**न ह्ययमिति**। इदम(२)र्वाचामनुसारेण। **भाष्ये** तु

---

न च "अतो रोः" (पा०सू० ६।१।११३) इति सूत्रे रोरित्यनुनासिकोकारविशिष्टमुच्चारितमिति रोरित्यस्य रुत्वावच्छिन्नस्येत्यर्थेऽपि 'देव रुहि' इत्यादावनुनासिकविशिष्टरोरभावान्न दोष इति वाच्यम्, देव रुँवर्णः' इत्यत्र सानुनासिकतया "हशि च" (पा०सू० ६।१।११४) इत्युत्वापत्तेः।

(१)**रान्तानामेवानुकरणमिति**। "विभाषा भवत्" इतिवार्तिकनिष्पन्नानामपि ग्रहणार्थं रान्तानामनुकरणमित्युक्तमिति भावः।

(२)**अर्वाचामनुसारेणेति**। वस्तुतस्तु अनल्विधावित्यस्याद्यार्थास्वीकारेण मूलं सम्यगेव। 'धिन्वन्ति' इत्यादौ पञ्चमीसमासेन स्थानिवद्भावावारणः परनिमित्तकत्वेन बहिरङ्गत्वाद्वा न दोषः। एः अजो यजस्तस्यापत्यमैयाजिरित्येव भवति; नतु याजिरिति न तदर्थमपि तत्स्वीकारः, अल्त्वव्याप्येक्त्वावच्छिन्नस्थानितानिरूपितादेशताश्रययकारधर्मिकारोपप्रकारीभूतपदान्तत्वस्य ऐजागमीयोद्देश्यतायाः साक्षादनवच्छेदकत्वेनाद्यार्थकानल्विधावित्यस्याप्राप्तेः। अत एव 'साम्नी' इत्यादौ स्थानिवद्भावेन द्विवचनत्वातिदेशात्प्रगृह्यत्वं सिद्ध्यति। अन्यथा अल्त्वव्याप्यौकारविभक्तित्वावच्छिन्नस्थानिताश्रयेकारधर्मिकारोपप्रकारीभूतद्विवचनत्वस्य प्रगृह्यसंज्ञीयोद्देश्यतायाः साक्षादवच्छेदकत्वेन स्थानिवत्त्वाप्राप्त्या द्विवचनत्वातिदेशासम्भवेन प्रगृह्यत्वं दुर्लभं स्यात्। न चाद्यार्थकानल्विधावित्यस्यास्वीकारे प्रकृतसूत्रस्थभाष्यविरोध इति वाच्यम्, "हल्ङ्याप्" (पा०सू०६।१।६८) इतिसूत्रवार्तिकभाष्यविरोधेन "कृन्मेजन्तः" (पा०सू० १।१।३९) इतिसूत्रस्थवार्तिकभाष्यविरोधेन "ग्रहोऽलिटि" (पा०सू०७।२।३७) इति सूत्रस्थभाष्यविरोधेन चैतस्यैकदेश्युक्तित्वेनादोषात्। न च स्थानितायामल्त्वव्याप्यधर्मावच्छिन्नत्वस्य, उद्देश्यतायां प्रकारीभूतधर्मेण साक्षादवच्छिन्नस्य च निवेशान्नोक्तभाष्यविरोध इति वाच्यम्, तदुभयं निवेश्य निष्फलाद्यार्थकानल्विधावितिस्वीकारापेक्षया तदुभयमनिवेश्यैतस्यैकदेश्युक्तित्वकल्पनाया एव ज्यायस्त्वादिति। निरूपितं चेदं विस्तरेण

(१)रेफस्य (२)विसर्गस्थानित्वेन (३)तद्वृत्तिरुत्वाश्रयमपीदमल्विधिरेव, स्थान्यल्वृत्तिधर्माश्रयत्वात्। 'अग्रहीत्'इत्यत्र च दीर्घे लोपे च इट्त्वेनैव निवेश इति विशेषः। अतः 'पयःसु' इत्यादौ दोषः। तत्र हि "रोः सुपि" (पा०सू० ८।३।१६) इति विसर्गः। नियमशास्त्राणि च (४)विधायकान्येव वाच्यवृत्त्या। आर्थिकार्थमादाय तु निषेधकानीति। तत्रापि रो रेफस्य विसर्ग इत्यर्थे त्वग्रहणं व्यर्थमित्युक्तम्। नन्वेवं 'हे राम'इत्यादौ सम्बुद्ध्यवयवस्य हलः सस्य लोपे तद्वृत्तिसुप्त्वस्याल्धर्मत्वेन स्थानिवत्त्वाभावे पदत्वासिद्धिरिति चेत्? न, आनुमानिकादेशस्य रामेत्यस्य स्थानिवद्भावेन सुवन्त-

---

स्थानिवत्सूत्रे टिप्पणे। **(१)रेफस्येति।** रेफत्वस्येत्यर्थः। **(२)विसर्गस्थानित्वेनेति।** विसर्गीयस्थानितावच्छेदकत्वेनेत्यर्थः। **(३)तद्वृत्तिरुत्वाश्रयमपीति।** अल्त्वव्याप्यरत्वावच्छिन्नस्थानितानिरूपितादेशताश्रयविसर्गधर्मिकारोपप्रकारीभूतसाक्षाद्रुत्वावच्छिन्नोद्देश्यताकमपीत्यर्थः।

**(४)विधायकान्येवेति।** नियमशास्त्राणां विधिमुखेन निषेधमुखेन च प्रवृत्तिर्भवति। यत्र विधिमुखेन प्रवृत्तिर्न सम्भवति तत्र निषेधमुखेनैव प्रवृत्तिः। यथा "हन्तेरत्पूर्वस्य" (पा०सू० ८।४।२२) इत्यत्र "अत्पूर्वस्य" इतिशास्त्रस्य, यथा वा "सकर्मकाणां प्रतिषेधो वक्तव्यः" (का०वा०) इति वार्तिकप्रत्याख्यानाय कृतस्य "तप" इतियोगविभागनियामकस्य "तपः कर्मकस्यैव" इत्यस्य, यथा वा "बहुव्रीहौ वा" (का०वा०) इतिवार्तिकप्रत्याख्यानाय कृतस्य "अनो बहुव्रीहेः' इत्यनुवृत्तिसहितस्य "अन्यतरस्याम्" इतिविभक्तयोगस्य नियामकस्य "उपधालोपिनो वा" इति न्यासस्य च निषेधमुखेनैव प्रवृत्तिः। तत्र विधिमुखेन प्रवृत्तिस्तु न सम्भवति, नियम्यनियामकशास्त्रयोरुभयोर्लक्ष्यासम्भवात्। निषेधमुखेन प्रवृत्तौ तु "अत्पूर्वस्य" इत्यस्यात्पूर्वभिन्नहन्तेर्नस्य णत्वं नेत्यर्थः। अत्पूर्वस्य तु हन्तेरित्यनेन। तपःकर्मकस्यैवेत्यस्य तपःकर्मकातिरिक्तपधातोः कर्मवद्भावो नेत्यर्थः। तपः कर्मकस्य तु तपः इत्यनेन भविष्यति। उपधालोपिनो वेत्यस्योपधालोपिभिन्नबहुव्रीहेर्ङीप् न भवतीत्यर्थः। उपधालोपिनि तु अन्यतरस्यामित्यनेन भविष्यतीति बहुव्रीहौ वेति न कर्तव्यम्। यत्र तु उभयमुखाभ्यां प्रवृत्तिः सम्भवति तत्र विधिमुखेनैव प्रवृत्तिः। यथा प्रकृते "रोः सुपि" (पा०सू० ८।३।१६) इत्यत्र रुभिन्नसप्तमीबहुवचनाव्यवहितपूर्वत्वविशिष्टरेफस्य विसर्गो न भवतीति निषेधमुखेन प्रवृत्तिः, सप्तमीबहुवचनाव्यवहितपूर्वत्वविशिष्टरेफातिरिक्तत्वेन "खरवसानयोः"(पा०सू० ८।३।१५) इत्यत्र सङ्कोचं कृत्वा विधिमुखेन प्रवृत्तिरपि सम्भवतीति विधिमुखेनैव प्रवृत्तिः। अत्र चेदमेव भाष्यं मानमिति दिक्।

त्वस्य तत्प्रयुक्तकार्यस्य वा लाभेन (१)तत्सिद्धेः । प्रत्ययलक्षणेनापि न प्रत्ययवृत्तिधर्मलाभः; लक्षणपदोपादानेन प्रत्ययनिमित्तककार्यस्य तन्निमित्तकव्यवहारस्य वाऽतिदेशात् । एवं 'दीर्घाहो निदाघ'इत्यादौ हल्ङ्यादिलोपे उक्तरीत्या स्थानिनि जायमानस्यासुपीति रत्वनिषेधस्यादेशे दीर्घाहन्शब्देऽतिदेशेन प्रवृत्त्या न रेफ इति (२)दिक् ।

**तेषां रोरिति** । इदञ्च निपातानाख्याय "विभाषा भवत्" (का० वा०) इति वार्त्तिकं प्रत्याचक्षाणस्य **वृत्तिकृतो** मतेन । **परे तु** तेषामपि रोरित्यर्थः । अपिना "विभाषा भवद्भगवदघवतामोच्चावस्य" इतिवार्त्तिकनिष्पन्नसङ्ग्रहः । एषामन्त्यस्य रुः स्यादवस्य चौकारः सम्बुद्धाविति तदर्थः । अवग्रहण(३)सामर्थ्यात् "अलोऽन्त्यस्य" (पा० सू० १।१।५२) इति नेति बोध्यम् । वार्त्तिकनिष्पन्नानां त्रयाणां भोस्शब्दनिपातस्य चावश्यकत्वमन्यत्र स्पष्टमित्याहुः ।

**व्योर्लघु** (पा०सू० ८।३।१८) । यद्यपि वर्णसमाम्नाये यस्य प्राथम्यात् य्वोरित्युचितं, तथापि "लोपो व्योः" (पा०सू० ६।१।६६) इति लोपवारणाय सौत्रत्वमाश्रयणीयं स्यात्, अतो व्योरित्युक्तम् । लघुतरः प्रयत्नो यस्योच्चारणे स लघुप्रयत्नतरः । अन्यपदार्थसम्बन्धोत्तरं वर्त्तिपदार्थप्रकर्षविवक्षया (४)साधुः । प्रयत्ने लघुतरत्वं चैषां

---

(१)**तत्सिद्धेरिति** । वस्तुतस्तु अल्त्वव्याप्यहल्त्वावच्छिन्नस्थानितानिरूपितादेशताश्रयलोपधर्मिकारोपप्रकारीभूतसुप्त्वस्य पदसंज्ञीयोद्देश्यतायाः साक्षादनवच्छेदकत्वेनानल्विधावित्यस्याप्राप्त्या श्रौतादेशे श्रौतस्थानिवृत्तिसुप्त्वस्य स्थानिवत्त्वेन सुलभतया आनुमानिकस्थान्यादेशभावकल्पनापर्यन्तमनुधावनं वृथेति बोध्यम् । (२)**दिगिति** । दिगर्थस्तु "रोऽसुपि" (पा०सू० ८।२।६९) इत्यस्य सुबव्यवहितपूर्वत्वविशिष्टाहन्शब्दस्य रेफादेशो न भवतीत्यर्थेन 'दीर्घाहो निदाघ' इत्यादौ अल्त्वव्याप्यहल्त्वावच्छिन्नस्थानितानिरूपितादेशताश्रयलोपधर्मिकारोपप्रकारीभूतसुप्त्वस्य रेफनिषेधशास्त्रीयोद्देश्यतायाः साक्षादनवच्छेदकत्वेन स्थानिवत्त्वेन प्रत्ययलक्षणेन वा सुप्त्वातिदेशादसुपीति निषेधाद्रत्वाभावे रुत्वे च न दोष इति दिक् । (३)**सामर्थ्यादिति** । "नानर्थके" (प०भा०) इति परिभाषायाः प्रत्याख्यानादेवमुक्तिः ।

(४)**साधुरिति** । लघुः प्रयत्नो यस्य स लघुप्रयत्नः । लघुगतप्रकर्षप्रयोज्यलघुप्रयत्नवद्गतप्रकर्षविवक्षायां सूक्ष्मवस्त्रतरः' इतिवद्विशिष्टात्तरपि लघुप्रयत्नतरशब्दः सा-

(१)शैथिल्यजनकत्वमेव। **लघूच्चारणाविति**। (२)लघुतरोच्चारणावित्यर्थः। सूत्रे सौत्रत्वादेकवचनम्। वकारोदाहरणम् 'असावादित्यः' इति **वृत्तिः**।

**ओतो** (पा०सू० ८।३।२०)। 'व्योः' इत्यत्र (३)यकारसाहचर्याद्वकारोऽपि धात्वनवयव एव। अत्राप्यर्थाधिकारात्तथैव। तेन (४)'स्मृतोवच्युत' इत्यादौ न दोषः, तदाह–**यस्येति**। तादृशवस्यासम्भवादिति भावः। 'भोभगो' इति तु नानुवर्त्तते विच्छेदात्, तद् ध्वनयन्वक्ष्यति–'**पदान्तस्य किं तोयम्**' इति। इदं लघुप्रयत्नयोर्न (५)गार्ग्यश्रुतेः, तदाह–**अलघुप्रयत्नस्येति**। **पूजार्थमिति**। व्याख्यानादिति भावः। तादृशश्च भोसादिपूर्वक एवेत्याशयेनाह–**भो अच्युतेति**।

**भाष्यानुसारिणस्तु**–भो इत्याद्यनुवृत्तेः 'स्मृतोव्' इत्यादौ न दोषः, तस्या(६)नभिधानाच्च। 'अपूर्वस्य' इति तु ओत इत्यनेन विरोधान्न सम्बध्यते। "लोपः शाकल्यस्य" (पा०सू० ८।३।१९) इत्येव भोभगो इत्याद्यनुवृत्त्या सिद्धे नित्यत्वार्थमिदमित्याहुः।

**उञि च** (पा०सू० ८।३।२१)। भोइत्यादिपूर्वस्य पूर्वेण सिद्धेराह–**अवर्णपूर्वयोरिति**। एतदपि नित्यमेव। अत्रापि (७)गार्ग्यग्रहणानुवृत्त्याऽलघुप्रयत्नस्यैव लोपः। एतेन भोइत्यादिपूर्वे लघुप्रयत्नलोपार्थमत्रापि

---

धुरिति बोध्यम्। (१)**शैथिल्यजनकत्वमेवेति**। अनेन शास्त्रेण पादमात्रिकयोरेव विधानादेतज्जनकप्रयत्ने एतद्गतशैथिल्यजनकत्वं बोध्यम्। कारणवैलक्षण्ये कार्यवैलक्षण्यस्याऽऽवश्यकत्वादिति **केचित्**। (२)**लघुतरोच्चारणाविति**। एतद्विधेययोः पादमात्रिकत्वादिति भावः।

(३)**यकारसाहचर्यादिति**। "व्योर्लघुप्रयत्नतरः" (पा०सू० ८।३।१८) इतिसूत्रविषये धात्ववयवपदान्तयकारस्यासम्भव इति भावः। (४)**स्मृतोवच्युतेति**। स्मृतां वातीति वेतीति वा स्मृतोवाः स्मृतोवीः ताभ्यां ण्यन्ताभ्यां क्विपि अच्युतशब्देन योग इतिभावः। (५)**गार्ग्यश्रुतेरिति**। ऋषिविशेषघटितसूत्रस्य ऋषिविशेषघटितसूत्रबोधितसाधुत्वाज्ञानादिति भावः।

(६)**अनभिधानाच्चेति**। "न पदान्ताः परेऽणः सन्ति" इति "लण्" (मा० सू० ६) सूत्रस्थभाष्यप्रामाण्यादिति भावः।

(७)**गार्ग्यग्रहणानुवृत्त्येति**। तथा चैतत्सूत्रस्य ऋषिविशेषघटितत्वेन ऋषिविशेषघटित"व्योर्लघु" (पा०सू० ८।३।१८) इतिसूत्रबोधितसाधुत्वस्याज्ञानाल्लघुप्रय-

तदनुवृत्तिरित्यपास्तम् । वकारोदाहरणन्तु 'असा उ एकाग्निः' इति **वृत्तिः** । (१)**उत्तरार्थमिति** । (२)"ङमो ह्रस्वादचि" (पा०सू० ८।३।३२) इत्यर्थमित्यर्थः । एतत्तत्रैव निरूपितम् । "हलि सर्वेषाम्" (पा०सू० ८। ३।२२) इत्यादौ तु न सम्बध्यते; व्यवहिते ङम इत्यत्रैव प्रयोजनकथनप- रभाष्यप्रामाण्यात् । अत एव 'लिट्त्सु' इत्यादौ धुडादयः । अन्यथा सादौ पदे इत्यर्थान्न स्युः । अत एव 'माभ्याम्' इत्यादौ "हलि सर्वेषाम्" (पा० सू० ८।३।२२) इति लोपसिद्धिरिति दिक् ।

**हलि स** (पा०सू० ८।३।२२) । 'भोभगो' इत्याद्यनुवर्त्तते । त- त्रौकारात्परस्य लघूच्चारणस्यैवानेन लोपः । अलघूच्चारणस्य तु "ओत" (पा०सू० ८।३।२०) इत्येव सिद्धम् । अपूर्वे तूभयोरपि । न चापूर्वालघु- प्रयत्ने अस्यासिद्धत्वात् "लोपः शाकल्यस्य" (पा०सू० ८।३।१९) इति प्राप्नोतीति वाच्यम् । लघुप्रयत्नस्यैवानेन लोपे "व्योः" (पा०सू० ८।३। १८) इति सूत्रेऽचीति करणेन हलि विधानाभावेनैव सिद्धावस्य सूत्रस्य वैयर्थ्यापत्त्या तद्बाधात् । न चालघुप्रयत्नयोरेव लोपः स्यात्, व्योरित्यर्था- धिकारादिति वाच्यम्, ऋषिमात्रग्रहणार्थस्य सर्वेषामित्यस्य वैयर्थ्यापत्तेः, विकल्पस्य विच्छिन्नत्वेन नित्यत्वसिद्धेः । अत्र च यकार एवानुवर्त्तते, न वकारः । वृत्तौ तथैवोक्तेः, फलाभावात्, अव्यपरे इत्यादिनिर्देशाच्च । अ- न्यथा तत्र (३)सौत्रत्वाद्याश्रयणीयं स्यात्, तदाह—**लघ्वलघूच्चारण- स्येति** ।

---

न्योः प्रवृत्तिर्न भवतीति भावः । (१)**उत्तरार्थमितीति** । स्वीयोद्देश्यतावच्छेदक- समर्पकज्ञानविषयीभूतानुपूर्वीमत्पदघटितशास्त्रविधेयत्वरूपप्रतिपदोक्तत्वस्य वेञ्निष्पन्नो- कारेऽभावादिति भावः । (२)**ङमो ह्रस्वादचीत्यर्थमिति** । वस्तुतस्तु तत्रापि न प्रयोजनमिति तत्रैव निरूपितमिति तत एवावधार्यताम् । "उञि च पदे" (पा०सू० ८।३।२१) इत्यत्र पदेग्रहणं तु अनेकान्तपक्षे उञीत्यस्येत्संज्ञकञकाराव्यवहितपूर्ववर्त्ति- बोध्ये उशब्दे इत्यर्थेन वेञ्धातुनिष्पन्नोकारस्येत्संज्ञकञकाराव्यवहितपूर्ववर्त्तिवेशब्दबो- ध्यत्वेन तत्रातिव्याप्तिवारणायेति दिक् ।

(३)**सौत्रत्वाद्याश्रयणीयं स्यादिति** । अत उत्तरम् "अत एव गव्यमित्यत्र न वलोपः" इति क्वचित्पुस्तके पाठः ।

**न तु सुपीति ।** पर्युदासे हि सुप्सदृशे प्रत्यये एव स्यात् । एवञ्च 'अहर्भाति' इत्यत्र न स्यात् । यदि तु सुब्भिन्ने शब्दे स्यात्, 'दीर्घाहो निदाघ' इत्यत्रापि स्यात् । सुबन्तेत्यर्थस्तु न, "उत्तमैकाभ्याम्" इत्यादि-निर्देशैः सप्तमीनिर्दिष्टे प्रत्यये तदन्तविध्यभाव(१)ज्ञापनात् । लक्ष्यानुरोधेन क्वचित्प्रत्ययग्रहणे (२)शब्दस्वरूपस्य (३)विशेषणताया एवाश्रयणाच्च । (४)अत एव "रदाभ्यां निष्ठा" (पा०सू० ८।२।४२) इत्यादौ (५)न दोषः । **अहरहरिति ।** "नित्यवीप्सयोः" (पा०सू० ८।१।४) इति द्वित्वम् । "न लुमता" (पा०सू० १।१।६३) इति निषेधात् (६)सुप्परत्वाभावः ।

**गतमहो रात्रिरिति ।** केचित्तु **भाष्ये** आतिदेशिकस्याहोरात्रस्यैवोदाहरणात्, "न लोपः प्रातिपदिकान्तस्य" (पा०सू० ८।२।७) इति-सूत्रे "न हि रूपरात्ररथन्तरेषु रौ रे वा विशेषोऽस्ति" इत्यत्र प्रायेण रात्रेति पाठाच्चेदृशानामनभिधानमेवेत्याहुः । **अनन्यत्वादिति ।** रात्रिशब्दान्तात् समासादचि समासान्ते "यस्येति च" (पा०सू० ६।४।१४८) इति लोपेऽ

---

**(१)ज्ञापनादिति ।** अवध्यंशे नित्यसाकाङ्क्षं यद्रूपं तद्रूपावच्छिन्नप्रत्ययमात्रवृत्ति-विषयताप्रयोजकं तदादिविशेष्यकतदन्तविधिप्रयोजकं नेत्यर्थकात् "प्रत्ययग्रहणं चापञ्चम्याः" (प०भा०) इति निषेधादिति भावः । **(२)शब्दस्वरूपस्येति ।** तदादि-रूपस्येत्यर्थः । **(३)विशेषणताया इति ।** तदादेः परो यः सुप् तदव्यवहितपूर्वत्वविशिष्टाहन्शब्दस्य रो न भवतीत्यर्थादिति भावः । **(४)अत एवेति ।** रेफान्तो दान्तश्च यस्तदादिः तदव्यहितोत्तरत्वविशिष्टा या निष्ठा तदवयवो यो निर्दिश्यमानः तदादेस्तकारस्य नकारादेशो भवतीत्यर्थस्वीकारादेवेत्यर्थः । **(५) न दोष इति ।** अनुनासिकादनुदात्तात् अशब्दादाचारक्विबन्तात् "क्विच्क्तौ च" (पा०सू० ३।३।१७४) इति क्तप्रत्यये "एकाचः" (पा०सू० ७।२।१०) इतीडभावे अतो लोपे दृषच्छब्देन योगे 'दृषत्तः' इत्यादाविति भावः । 'दृषत्तीर्णः' इत्यादौ तु निर्दिश्यमानपरिभाषयैव वारणं सम्भवतीति भावः । विस्तरस्तु परिभाषेन्दुटिप्पणे द्रष्टव्यः । **(६)सुप्परत्वाभाव इति ।** असुपीतिप्रसज्यप्रतिषेधस्वीकारेण लुप्तप्रत्ययाव्यवहितपूर्वत्वेन साक्षादवच्छिन्ना लुप्तप्रत्ययनिरूपिताङ्गसंज्ञावत्पर्याप्तधर्मेण साक्षात्परम्परया वा अवच्छिन्ना च योद्देश्यता तादृशोद्देश्यताकत्वस्यासुपीतिनिषेधे सत्त्वादिति भावः ।

पि (१)रात्रिशब्दत्वाक्षतेरिति भावः । अनुवादे रेफविशिष्टस्योपादानाद्रेफस्य रेफविधानं व्यर्थमत आह—**विसर्गापवाद इति ।**

(२)**ढ्रूलोपे** (पा०सू० ६।३।१११)। नायं तत्पुरुषोऽनीयरि 'चचार' इत्यादौ च दोषापत्तेः । नापि बहुव्रीहिर्व्यधिकरणत्वात् । अतो णिजन्तात्कर्मण्यण्युपपदसमास इत्याह—**ढरेफावित्यादि । भाष्ये** तु व्यधिकरणबहुव्रीहिरेव दर्शितः । न च 'अजर्घाः' इत्यादौ "सिपि धातोः" (पा०सू० ८।२।७४) इति रुत्वस्य, 'लीढः' इत्यादौ ढत्वादीनां 'पितू राज्यम्' इत्यादौ संयोगान्तलोपस्यासिद्धत्वात्कथं दीर्घ इति वाच्यम्, ढग्रहणेन लण्सूत्रे 'अजर्घाः' इति **भाष्योदाहरणेन** च तत्तच्छास्त्रैकवाक्यतापन्नपूर्वत्रासिद्धमितिसूत्रस्थपूर्वग्रहणेनैतत्सूत्राग्रहणबोधनात् । **अणः किमिति ।** अच इत्येव सिद्धमिति प्रश्नः । 'तृंहू' इति पाठे 'नकारजावनुस्वारपञ्चमौ' इति वृद्धोक्तेः 'अनिदिताम्" (पा०सू० ६।४।२४) इति (३)नलोप 'तृढः' इति रूपम् । अत्राण् पूर्वेणैव (४)व्याख्यानात् ।

---

(१)**रात्रिशब्दत्वाक्षतेरिति ।** वस्तुतस्त्वक्तपरिमाणे एकदेशविकृतन्यायाप्रवृत्त्या स्थानिवद्भावेन रात्रिशब्दत्वमत्र बोध्यम् ।

(२)**ढ्रूलोपे** (पा० सू० ६।३।१११)। **परे तु** लुप्यते तदिति बाहुलकात्कर्मणि घञ् । ढश्च रश्चानयोः समाहारः ढ्रं, तच्च तल्लोपश्चेति विग्रहः । निपातनात् ढ्रशब्दस्य पूर्वनिपातः । तथा च लुप्यमानढ्राव्यवहितपूर्वत्वविशिष्टाणो दीर्घ इति सूत्रार्थः । पूर्वग्रहणं तु स्पष्टार्थमेव । न च पूर्वग्रहणाभावे उत्तरपदे इत्यस्याधिकाराल्लुप्यमानढ्राद्युत्तरपदाव्यवहितपूर्वत्वविशिष्टस्याणो दीर्घ इति वाक्यार्थबोधः स्यादिति वाच्यम्, लुप्यमानढ्राद्युत्तरपदाव्यवहितपूर्वत्वविशिष्टाणोऽसम्भवात् । किञ्चास्मिन्नर्थे "ढ्रूलोपे" (पा० सू० ६।३।१११) इत्येतद्दृष्ट्या "रो रि" (पा०सू० ८।३।१४) "ढो ढे लोपः" (पा०सू० ८।३।१३) इत्यनयोरसिद्धत्वस्य बाधोऽपि न वक्तव्यो भवतीत्यपरमनुकूलम्भवति, लोपात्प्रागेव दीर्घप्रवृत्तेरित्याहुः ।

(३)**नलोपे इति ।** 'तृन्हूँ' इत्येवोपदेशः । "त्रेस्त्रयः" (पा०सू० ६।३।४८) इत्यत्र "घेर्ङिति" (पा०सू० ७।३।१११) इतिगुणादिवदनुस्वारादिना तृंहू इति रूपस्य सम्पन्नत्वेन नकारघटिते एव धातुत्वाज्ञत्वादेः सत्त्वादिति भावः । (४)**व्याख्यानादिति ।** लण्सूत्रस्थभाष्यरूपाद्व्याख्यानादिति भावः ।

(१)**विप्रतिषेधे** (पा०सू० १।४।२)। विप्रतिपूर्वात्कर्मव्यतिहारे वर्त्तमानात्सेधतेर्घञि परस्परविरोधार्थो विप्रतिषेधशब्दस्तत्र नित्यस्यावश्यकतयाऽन्तरङ्गस्य ज्ञापकादिनाऽपवादस्य वचनप्रामाण्याद् बाधकत्वे स्थिते तद्भिन्नोऽस्य विषय इत्याह—**तुल्यबलेति**। द्वयोः शास्त्रयोः क्वचिल्लब्धावकाशयोरेकत्र प्रयोगे (२)युगपदसम्भवि स्वकार्यसमर्पणञ्च सः। तत्र प्रायेणैकस्य कार्यद्वययोगक्तेऽसम्भवे एतस्य प्रवृत्तिः। यथा 'वृक्षेभ्यः' इति। तत्र हि दीर्घैत्वयोर्युगपत्प्रवृत्तौ (३)स्वस्वनिमित्तानन्तर्यासम्भवः।

---

(१)**विप्रतिषेधे (पा०सू० १।४।२)**। विप्रतिषेधे किम्? परनित्यापेक्षया पूर्वनित्यस्य, परबहिरङ्गापेक्षया पूर्वान्तरङ्गस्य च बलवत्त्वं यथा स्यात्। अन्यथा लौकिकन्यायमूलकस्य "परान्नित्यं बलवत्" इतिन्यायस्यापेक्षया, "ओमाङोश्च"(पा०सू० ६।१।९५) इत्याङ्ग्रहणलिङ्गकासिद्धपरिभाषापेक्षया च श्रुतस्य "परं कार्यम्" इति वचनस्य प्राबल्येन 'तुदति' 'मुलुनी' इत्यादौ परत्वाद् गुणनुमोरापत्तिः। विप्रतिषेधपदसत्त्वे तु निरुक्तविषये तुल्यबलविरोधाभावादेतदप्रवृत्त्या न दोष इति दिक्।

(२)**युगपदसम्भवीति**। सर्वशास्त्रेण स्वविधेयघटिते साधुत्वस्यान्यत्र चासाधुत्वस्य बोधनात् पूर्वपरशास्त्राभ्यां परस्परेण परस्परविधेयघटितयोरसाधुत्वबोधनेनासम्भव इति भावः। (३)**स्वस्वनिमित्तानन्तर्यासम्भव इति**। वस्तुतस्तु चिन्त्यमिदम्। तत्तन्निमित्तानामावृत्त्या उद्देश्यविधेयोभयविशेषणत्वकल्पने मानाभावात्फलाभावाच्च। न च तत्तन्निमित्तानामावृत्त्या उद्देश्यविधेयोभयविशेषणत्वाकल्पने आनुमानिकस्थान्यादेशभावकल्पे "इको यणचि" (पा०सू० ६।१।७७) इत्यादेः अजव्यवहितपूर्वत्वविशिष्टेग्घटितस्थाने यण्घटितं भवतीत्यादिक्रमेणार्थेन 'सुधी उपास्यः' इत्यस्य स्थाने सुध्य् इति यान्तादेशापत्तिरिति वाच्यम्। तत्तन्निमित्तस्याऽऽवृत्त्या "इको यणचि" (पा०सू० ६।१।७७) इत्यादेरजव्यवहितपूर्वत्वविशिष्टेग्घटितस्य स्थाने अजव्यवहितपूर्वत्वविशिष्टयण्घटितं भवतीत्यादिक्रमेणार्थस्वीकारेऽपि 'सुध्युपास्यः' इत्यस्य 'मध्वरिः' इत्यादेशापत्तेर्दुर्वारत्वात्। स्थानेन्तरतमपरिभाषया एतद्वारणन्त्वस्माकमपि तुल्यमित्यावृत्त्या तत्तन्निमित्तस्योभयत्रान्वयो विफल इति दिक्।

ननु विधेयविशेषणत्वाभावे 'शिष्टात्' इत्यादौ विरोधोपपादनं न सम्भवतीति तदर्थं तत्सार्थकम्। नच आनुमानिकादेशे श्रौतस्थानिसमभिव्याहृतयावद्वर्णघटितत्वस्य निवेशात् शादेशघटिते हिशब्दघटितत्वस्य तातङादेशघटिते शास्घटितत्वस्य लाभात् एकस्मिन् शास्घटितत्वशाघटितत्वयोः हिशब्दघटितत्वतातङ्घटितत्वयोश्चासम्भव इति विरोधोपपादनं सम्भवत्येवेति वाच्यम्, अर्थवति स्थानिवद्भावविश्रान्तेः शाघटितस्य तातङ्घटितस्य चाऽऽदेशस्य कल्पयितुमशक्यत्वात्। किञ्च एवं विरोधो-

क्वचित्केवलासम्भवेऽपि, यथा (१)'शिष्टात्' इत्यादौ । अत्र हि तातङ्शाभावयोर्युगपत्प्रवृत्तौ स्वस्वनिमित्तानन्तर्यासम्भवः। (२)यद्यपि तातङादेः स्थानिवत्त्वेनास्त्येव तत्, तथापि अतिदेश आदेशप्रवृत्त्युत्तरमेव, (३)न तु तत्प्रवृत्तिकाले इति युगपदसम्भवोऽस्त्येवेति परत्वात्तातङि सकृद्गतिन्यायेन (४)न शादेशः । स्पष्टञ्चेदं सर्वं प्रकृतसूत्रे "इको गुणवृद्धी" (पा०सू० १।१।३) "आदसो मात्" (पा०सू० १।१।१२) इत्यादावा(५)करे । तत्र युगपदु-

---

पपादने "आदिवृद्धिरन्त्योपधावृद्धी बाधते" इत्यत्र "परत्वाद् बाधो दीक्षितादिभिरुक्तोऽसङ्गतः विरोधाभावात्" इतिशब्दरत्नग्रन्थासङ्गतिः, तत्रापि पूर्वरीत्या विरोधस्योपपादयितुं शक्यत्वादिति चेत् ? न, एकस्मिन् युगपत् कार्यित्वनिमित्तत्वयोरसम्भव इति "अचः परस्मिन्" (पा०सू० १।१।५७) इति सूत्रस्थ**कैयटेनैव** समाधानात् । अयं भावः—कार्यित्वं कार्यरूपेण परिणामित्वम्, निमित्तत्वं कारणत्वविशेषः । नहि वस्तु स्वपरिणामकाले अन्यत् प्रति निमित्तकारणं भवितुमर्हतीति दिक् ।

**(१)शिष्टादित्यादाविति** । यत्किञ्चिदङ्गाव्यवहितोत्तरत्वविशिष्टयोस्तुह्योः स्थाने यत्किञ्चिदङ्गव्यवहितोत्तरत्वविशिष्टस्तातङ् भवतीति "तुह्योः" (पा०सू० ७।१।३५) इत्यस्य, ह्यव्यवहितपूर्वत्वविशिष्टशासः स्थाने ह्यव्यवहितपूर्वत्वविशिष्टः शा भवतीति "शा हौ" (पा०सू०६।४।३५) इत्यस्य चार्थेन 'शिष्टात्' इत्यादौ प्रकृतिप्रत्यययोः युगपत् शातातङोः प्रवृत्तौ शादेशे ह्यव्यवहितपूर्वत्वस्य, तातङि यत्किञ्चिदङ्गाव्यवहितोत्तरत्वस्य चाभावात्केवलनिमित्तानन्तर्यासम्भवः । 'वृक्षेभ्यः' इत्यादौ तु "सुपि च" (पा०सू०७।३।१०२) इत्यस्य यञादिसुबव्यवहितपूर्वत्वविशिष्टादन्ताङ्गस्य यञादिसुबव्यवहितपूर्वत्वविशिष्टो दीर्घो भवतीत्यर्थेन, "बहुवचने झल्येत्" (पा०सू० ७।३।१०३) इत्यस्य झलादिबहुवचनसुबव्यवहितपूर्वत्वविशिष्टादन्ताङ्गस्य झलादिबहुवचनसुबव्यवहितपूर्वत्वविशिष्ट एकारो भवतीत्यर्थेन च दीर्घैत्वयोर्युगपत्प्रवृत्तौ केवलासम्भवः स्वस्वनिमित्तानन्तर्यासम्भवश्चेति भावः ।

ननु 'शिष्टात्' इत्यादौ स्थानिवद्भावेन ह्यव्यवहितपूर्वत्वस्य शादेशे, यत्किञ्चिदङ्गाव्यवहितोत्तरत्वस्य च तातङि सत्त्वेन कथं स्वस्वनिमित्तानन्तर्यासम्भव इत्यभिप्रेत्याऽऽशङ्कते—**(२)यद्यपीत्यादिना** । **(३)न तु तत्प्रवृत्तिकाले इति** । तथा चातिदेशप्रवृत्तिकालिकं तत्प्राक्कालिकं च स्वस्वनिमित्तानन्तर्यासम्भवमादाय विप्रतिषेधसूत्रं प्रवर्तते इति भावः । **(४)न शादेश इति** । तातङ्विधायकशास्त्रेण स्वप्रवृत्तियोग्यातिरिक्तत्वेन स्वविधेयघटितातिरिक्तत्वेन च "शा हौ"(पा०सू० ६।४।३५) इत्यत्र सङ्कोचादिति भावः । **(५)आकर इति** । कैयट इत्यर्थः ।

भयोः कार्ययोरसम्भवात् (१)पर्यायेण तृजादिवच्छास्त्रद्वयप्रसङ्गे नियमार्थमिदम्, परमेवेति। तेन 'तिसृणाम्' इत्यत्र (२)यौगपद्यासम्भवेन परत्वाति-

---

(१)पर्यायेणेति। अयम्भावः-असति बाधके उद्देश्यतावच्छेदकावच्छेदेन विधेयान्वय इति सिद्धान्तः। अवच्छेदकावच्छेदेन विधेयान्वय इत्यस्योद्देश्यतावच्छेदकव्यापकत्वं विधेये विधेयसंसर्गे वा नियमतो भासते इत्यर्थः। तथा च "ण्वुल्तृचौ" (पा०सू० ३।१।१३३) इत्यादौ धातुत्वव्यापकत्वस्य ण्वुल्त्वादिना ण्वुलादौ बाधाण्ण्वुलादीनामन्यतमत्वेन व्यापकत्वं वक्तव्यम्। न च ताद्भिन्नभिन्नत्वरूपान्यतमत्वस्य विशेष्यविशेषणभावे विनिगमनाविरहेण नानाविधत्वात्तेषु सर्वेषु तेनैव हेतुना व्यापकतावच्छेदकत्वं स्यादिति वाच्यम्, यादृशसंख्याविशिष्टानामन्यतमत्वं वक्तव्यं तत्संख्याश्च ये तद्भेदास्तादृशभेदात्यन्ताभाववत्त्वं तदन्यतमत्वमिति परिष्कारेणादोषात्। यादृशविधेयतावच्छेदकावच्छिन्ने यादृशोद्देश्यतावच्छेदकव्यापकत्वं विवक्षितं तादृशविधेयेतरो यस्तादृशोद्देश्यतावच्छेदकावच्छिन्नोद्देश्यतानिरूपितविधेयताश्रयः तदनधिकरणं यत्तदुद्देश्यतावच्छेदकाधिकरणं तद्वृत्त्यत्यन्ताभावाप्रतियोगित्वं तदुद्देश्यतावच्छेदकव्यापकत्वं तस्मिन् विधेये। यथा "ण्वुल्तृचौ" (पा०सू० ३।१।१३३) इत्यादौ ण्वुल्त्वावच्छिन्ने धातुत्वव्यापकत्वं वक्तव्यं तत्र ण्वुल्त्वावच्छिन्नातिरिक्तो यो धातुत्वावच्छिन्नोद्देश्यतानिरूपितविधेयताश्रयस्तृजादिस्तदनधिकरणं यद्धातुत्वाधिकरणं 'कारकः' इति, तद्वृत्त्यत्यन्ताभावाप्रतियोगित्वं ण्वुलीति लक्षणसमन्वयः।

स्यादेतत्, विकल्पशास्त्रे इव "ण्वुल्तृचौ"(पा०सू० ३।१।१३३) इत्यादावपि उद्देश्यतावच्छेदकसामानाधिकरण्येनैवान्वयः स्वीक्रियतां, किमुद्देश्यतावच्छेदकावच्छेदेन विधेयान्वयेन। न च "ण्वुल्तृचौ"(पा०सू० ३।१।१३३) इत्यादावुद्देश्यतावच्छेदकसामानाधिकरण्येनान्वयस्वीकारे केवलधातुमात्रस्य 'पच्' 'पत्' इत्यादेः प्रयोगापत्तिरिति वाच्यम्, "वर्तमाने लट्" (पा०सू० ३।२।१२३) इत्यस्य वर्तमानकालेतरकालाविवक्षायां लट्प्रत्ययो भवतीत्यर्थेन तादृशापत्तेरभावात्। नचैवमपि "स्वौजसमौट्"(पा० सू० ४।१।२) इत्यादौ उद्देश्यतावच्छेदकप्रातिपदिकत्वसामानाधिकरण्येन स्वादिविधाने निर्विभक्तिकप्रातिपदिकप्रयोगापत्तिरिति वाच्यम्, "एकत्वे एकवचनम्" इत्यस्यैकत्वेतरसंख्याया अविवक्षायामेकवचनमित्यर्थेनैकवचनस्य दुर्वारत्वेन तादृशप्रयोगासम्भवात्। अत एव 'सुन्दरं पचति' इत्यादौ निरर्थकैकवचनोपपत्तिः, इति चेत्? मैवम्, रीगृदुपधस्य, इत्यनुवर्तमाने "रुग्रिकौ च लुकि" (पा०सू० ७।४।९१) इत्यत्रोद्देश्यतावच्छेदकयङ्लुगन्तसम्बन्ध्यृदुपधाभ्यासत्वसामानाधिकरण्येन रुगादेविधाने रुक् रिक् रीक् एतदघटितलक्ष्यस्यापि साधुत्वापत्तेरिति दिक्।

(२)यौगपद्यासम्भवेनेति। तिस्रादेशघटिते त्रयादेशघटिते च पूर्वपराभ्यां

स्रादेशे पुनः स्थानिवत्त्वेन (१)त्रयादेशो न। तत्पठ्यते—'सकृद्गतौ विप्रतिषेधे यद्बाधितं तद् बाधितमेव' इति।

यद्वा, यथा तुल्यबलयोरेकः प्रेष्यो भवति; स तयोः पर्यायेण कार्यं करोति, यदा तमुभौ युगपत्प्रेषयतो नानादिक्षु च कार्ये भवतस्तदो(२)भयोर्न करोति यौगपद्यासम्भवात्, तथा शास्त्रयोर्लक्ष्यप्रेष्ययोः क्वचिल्लक्ष्ये यौगपद्यासम्भवादप्रतिपत्तौ प्राप्तायामिदं 'परं भवति' इतिविद्ध्यर्थम्। तत्र कृते यदि पूर्वस्यापि निमित्तमस्ति तदा (३)तदपि भवत्येव। तत्पठ्यते—'पुनः प्रसङ्गविज्ञानात्सिद्धम्' इति। यथा 'भिन्धि' इत्यत्र परत्वात्तातङि (४)पुनर्धिर्भवति। अत्र तातङ्धिभावयोर्युगपदेकस्थानिसम्बन्धस्याङ्गरूपनिमित्तानन्तर्यस्य वा न सम्भव इति **भाष्ये** स्पष्टम्। कार्ये परत्वञ्च

---

परस्परेण साधुत्वासाधुत्वयोर्विधानादिति (१)**त्रयादेशो नेति**। "त्रेस्त्रयः" (पा० सू० ७।१।५३) इत्यत्र तिस्रादेशप्रवृत्तियोग्यातिरिक्तत्वेन तिस्रादेशघटितातिरिक्तत्वेन च सङ्कोचादिति भावः।

(२)**उभयोर्न करोतीति**। यद्यविरोधार्थीति शेषः। अत एव "यद्यसावविरोधार्थो भवति तदोभयोर्न करोति" इति **भाष्ये** दृश्यते। (३)**तदपि भवत्येवेति**। 'तिसृणाम्' इत्यादौ नुड्विधायके शास्त्रे तिस्रादेशप्रवृत्तियोग्यातिरिक्तत्वमात्रेण सङ्कोचाचादिति भावः। (४)**पुनर्धिर्भवतीति**। चिन्त्यमिदम्, भिन्तादिति रूपासिद्धेः। न च भिन्धीत्येकमेव रूपं भवति; न तु भिन्तादिति वाच्यम्। भिन्तादित्यादिसिद्धये "तातङि स्थानिवत्त्वप्रतिषेधो वक्तव्यो; न वक्तव्यः, सकृद्गतौ विप्रतिषेधे यद् बाधितं तद् बाधितमेव" इतिस्थानिवत्सूत्रभाष्यवार्तिकविरोधात्। न च "तुह्योः" (पा० सू० ७।१।३५) इति शास्त्रस्य वैकल्पिकत्वेन भावाभावोभयविधायकत्वात् तद्विधेयेनाभावेन धेर्बाधो माभूदित्येवं परतयाऽयं ग्रन्थो योजनीय इति वाच्यम्, तुह्योरितिशास्त्रस्याप्राप्तविभाषात्वेनाभावस्य सिद्धत्वात्तद्विधानासम्भवेन तत्समानाधिकरणभावस्यैव विधेयत्वात्। अन्यथा "मुचोऽकर्मकस्य" (पा० सू० ७।४।५७) इत्यस्यापि भावाभावोभयविधायकत्वे 'मुमुक्षते वत्सः' इत्यादावभावविधाने "अत्र लोपः"इत्यभ्यासलोपापत्तिः। "अत्र लोपोऽभ्यासस्य" (पा० सू० ७।४।५८) इत्यत्र अत्रेत्यस्य प्रधानविधेये इत्यर्थकरणान्न दोष इति प्रकृतग्रन्थः अभावे विधेयत्वाङ्गीकारेण सुयोज इत्यपि **कश्चित्**।

**यत्तु** 'भिन्धि' इति 'भिन्धकि' इत्यस्योपलक्षणम्। तत्र परत्वाद्ध्यादेशेऽकच्न स्यादिति, तन्न, "भिन्धकीत्यादावन्तरङ्गत्वादकचि धित्वं न स्यात्" इति**भाष्य**विरोधात्। तस्मात् 'तिसृणाम्' इत्यादौ परत्वात्तिस्रादेशे नुण्न स्यादित्यस्योपलक्षणमिदं बोध्यमि-

परशास्त्रविहितत्वम्। कार्यकालपक्षेऽप्यष्टाध्यायीपाठपरत्वमेव नियामकम्। अत एव "ङमो ह्रस्वात्" (पा०सू० ८।३।३२) इत्यादौ त्रिपादीस्थे कार्यकालपक्षे एव परिभाषयोः प्रवृत्त्या एकदेशस्थत्वेऽपि परत्वात् "तस्मादित्युत्तरस्य" (पा०सू० १।१।६७) इत्यनेनैव व्यवस्थेति सङ्गच्छते। त्रिपादीस्थेन शास्त्रेण विरुद्धपरिभाषाद्वयमध्ये परैव काल्यते आकृष्यते न पूर्वेति तत्त्वम्। सञ्ज्ञानां तु कार्यकालपक्षे (१)प्रदेशे एव (२)वाक्यार्थेन तद्बोधोत्तरमेव विरोधप्रतिसन्धानं कार्यज्ञानञ्चेति तत्रत्यपरत्वमेवैतत्सूत्रप्रवृत्तौ बीजम्। (३)अत एव 'कार्यकालपक्षेऽयादिभ्यः परैव प्रगृह्यसञ्ज्ञा' इति "अदसो मात्" (पा० सू० १।१।१२) इति सूत्रे **भाष्ये** उक्तम्। परिभाषाणां तु तत्पक्षे तद्देशत्वेऽपि स्वस्वदेशे (४)ऽर्थबोधोऽस्त्येवेति तासां पाठकृतमेव तत् एतत्सूत्रप्रवृत्तौ नियामकमिति बोध्यम्।

(५)यद्यपीयं परिभाषा (६)तथापि (७)कार्यग्रहणेन कार्यमात्रग्रहणात् "तस्मिन्" (पा० सू० १।१।६६) इति "तस्मात्" (पा० सू० १।१।६७) इतिपरिभाषयोरपि व्यवस्थापिका। कार्यकालपक्षेऽपि नैषा इक्परिभाषादिवद्विद्ध्येकवाक्यतयाऽङ्गत्वात्स्वकार्यनिष्पादिका, किन्तु वाक्यभेदेनैव कार्यं (८)व्यवस्थापयति। यथा 'वृक्षेभ्यः' इत्यत्रैत्वदीर्घत्वयोः प्राप्तयोः परमेत्वं प्रवर्तयति। एवम् "असिद्धं बहिरङ्गम्" (प० भा०) इत्यादयोऽपीति "खरवसानयोः" (पा० सू० ८।३।१५) इत्यत्र **कैयटे** स्पष्टम्। एवञ्च

---

त्यन्यत्र विस्तरः। (१)**प्रदेश एवेति**। विधिप्रदेश एवेत्यर्थः। (२)**वाक्यार्थेनेति**। साक्षात्परम्परया वा अनाहार्याप्रामाण्यज्ञानानास्कन्दितलक्ष्यधर्मिकसाधुत्वप्रकारकज्ञानोपयोगिवाक्यार्थबोधेनेत्यर्थः। (३)**अत एवेति**। यत्र निरुक्तवाक्यार्थबोधो जायते स एव शास्त्रस्य स्वीयो देश इति स्वीकारादेवेत्यर्थः। (४)**अर्थबोध इति**। निरुक्तवाक्यार्थबोध इत्यर्थः।

ननु "गुणानाञ्च परार्थत्वात्परस्परमसम्बन्धः तयोः समत्वात्" (जै०सू०) इति न्यायेन "विप्रतिषेधे परम्" (पा०सू० १।३।२) इति परिभाषया तस्मिन्नितितस्मादितिपरिभाषयोर्व्यवस्था नोचितेत्यभिप्रेत्याशङ्कते-(५)**यद्यपीत्यादिना**। समाधत्ते-(६)**तथापीत्यादिना**। (७)**कार्यग्रहणेनेति**। "विप्रतिषेधे परम्" इत्येतावतैव सिद्धे कार्यग्रहणसामर्थ्यादित्यर्थः। (८)**व्यवस्थापयतीति**। बाधबीजप्रकरणशेषत्वा-

"विप्रतिषेधे" (पा० सू० १।४।२) इत्येषा यथोद्देशैवेति स्थितम्। त्रिपाद्यां कार्यकालपक्षेऽप्य(१)प्रवृत्तेः, पूर्वदृष्ट्या परावस्थानाभावादित्यन्यत्र विस्तरः।

**इति लोपे इति।** उत्वं नित्यमिति तु न, "भोभगो" (पा०सू० ८।३।१७) इतिसूत्रोक्तरीत्या लोपस्या(२)ल्विधित्वात् स्थानिवत्त्वेन तद्धर्मातिदेशेऽपि (३)उच्चारणप्रसङ्गरूपस्थानषष्ठ्यर्थाभावेन लोपे तदप्राप्तेश्च।

**एतत्तदोः** (पा०सू० ६।१।१३२)। अनुकार्यस्वरूपभङ्गभिया कोशे इवै(४)कशेषाभावः। एतत्तदोर(५)नन्तर इत्यर्थः। तेन 'परमस

---

दिति भावः। **(१)अप्रवृत्तेरिति।** परशास्त्रमेतत्परिभाषाप्रवृत्तौ लिङ्गमिति स्वीकारेण परशास्त्रत्वप्रकारकज्ञानाभावादिति भावः।

**(२)अल्विधित्वादिति।** अल्वव्याप्यरत्वावच्छिन्नस्थानितानिरूपितादेशताश्रयधर्मिकारोपप्रकारीभूतरुत्वेन साक्षादवच्छिन्नोद्देश्यकत्वादुत्वविधायकस्येत्यर्थः। **(३)उच्चारणप्रसङ्गरूपेति।** चिन्त्यमिदम्। वृत्तिविशेष्यतावच्छेदकतावच्छेदकताकेष्टसाधनत्वप्रकारकभ्रमविषयत्वप्रकारकज्ञानीयविशेष्यतावच्छेदकावच्छिन्नविशेष्यताकेष्टसाधनत्वप्रकारकप्रमाविषयत्वप्रकारकज्ञानीयविशेष्यतावच्छेदकतावच्छेदकतारूपे, अभावरूपे, ज्ञानरूपे वा स्थानपदार्थे उच्चारणस्य अप्रविष्टत्वात्। किञ्च स्थानपदार्थस्य उच्चारणघटितत्वे "दर्भाणां स्थाने शरैः प्रस्तरितव्यम्" इत्यादौ स्थानपदार्थत्वानुपपत्तिरिति दिक्।

**(४)एकशेषाभाव इति।** चिन्त्यमिदम्। एतत्तदोरित्यनयोः त्यदादिघटकैतत्तच्छब्दबोधकत्वेऽपि त्यदाद्यर्थाबोधकत्वेन "त्यदादीनां मिथः सहोक्तौ" इति शास्त्रस्याप्राप्तेः। प्राधान्येन प्रसिद्धस्वीयसर्वार्थवाचकानामेव त्यदादीनां तत्र ग्रहणात्। किञ्च कोश इवेति दृष्टान्तोऽप्यसङ्गतः। 'विष्णुर्नारायणः' (अ० को०) इत्यादिकोशे एकरूपावच्छिन्नस्यैकरूपावच्छिन्नसंसर्गेणैकरूपावच्छिन्ने अन्वयबोधेच्छारूपसहविवक्षाया अभावेन "विरूपाणाम्" (का०वा०) इतिशास्त्राप्राप्तेः।

**(५)अनन्तर इति।** न च 'परमः स ददाति' इत्यादौ परमपदोत्तरस्य सोरपि तत्पदानन्तरत्वेन लोपापत्तिरिति वाच्यम्, एतच्छब्दसाहचर्येण तच्छब्दानन्तरस्यापि परस्य ग्रहणेनादोषात्। **यत्तु** एतत्तदर्थगतसंख्याभिधायिनः सोर्लोप इति, तन्न, 'परमः स ददाति' 'तत्कल्पम्' इत्यादौ परमपदोत्तरसोः कल्पबुत्तरसोश्च तदर्थगतसंख्याभिधायित्वेन लोपापत्तेः। न च स्वाव्यवहितोत्तरत्वं, स्वार्थगतसंख्याभिधायित्वमेतदुभयस-

ददाति' इत्यादौ न दोषः। गौणे तु न दोषः; तत्र त्यदाद्यत्वाभावेन हल्ङ्यादिलोपस्य दुर्वारत्वात्। सुइति प्रथमैकवचनमेव (१)व्याख्यानात्। **अनञ्समासे किमिति**। तस्य पूर्वपदार्थप्रधानत्वादुपसर्जनत्वात्त्यदाद्यत्वाभावेन हल्ङ्यादिलोपो दुर्वार इति प्रश्नः। उत्तरपदार्थप्रधानः स इत्युत्तरम्।

**सोऽचि** (पा०सू० ६।१।१३४)। सासिति प्रथमान्तस्य (२)लुप्तषष्ठीकमनुकरणम्। **सेमामविड्ढीति**। द्वादशाक्षरपादा जगती छन्दः। **स एवमुक्त्वेति**। लोपेऽत्र पादापूर्त्तेर्न लोप इति भावः। **अवधारणन्त्विति**। वृद्धैर्व्याख्यातमवधारणन्त्वित्यर्थः। **बहुलेत्यादि**। गमकान्तराभावादिति भावः। एवञ्च तदनुवृत्त्यैव क्वचिदप्रवृत्तौ सिद्धायामवधारणपरतया व्याख्यानं व्यर्थमिति भावः। सर्वमेतदवधारणन्त्विति तुना सूचितमित्यलम्॥

## इति स्वादिसन्धिः।

---

म्बन्धेनैतत्तद्विशिष्टसोर्लोप इत्यर्थ इति न दोष इति वाच्यम्, स्वार्थगतसंख्याभिधायित्वसम्बन्धस्य वैयर्थ्यापत्तेः, अनन्तर इति पदस्याध्याहारे उत्तरत्वरूपार्थालाभेन प्रथमसम्बन्धस्य वक्तुमशक्यत्वाच्च। नच परशब्दस्यैवाध्याहार इति वाच्यम्, एतत्तदोः इत्यस्य पञ्चम्यर्थे लक्षणापत्तेः। वस्तुतस्तु स्वाव्यवहितत्वं, स्वार्थतावच्छेदकावच्छिन्नधर्मितानिरूपितसंख्यानिष्ठप्रकारताप्रयोजकत्वमेतदुभयसम्बन्धेनैतत्तद्विशिष्टसोर्लोप इत्यर्थेन सर्वदोषनिरासो बोध्यः। (१)**व्याख्यानादिति**। सोरित्यत्रानुनासिकोच्चारणादिति भावः। (२)**लुप्तषष्ठीकमिति**। अन्यथा "ससोऽचि" इति स्यादिति भावः।

इति स्वादिसन्धिः।

## इति पञ्चसन्धिप्रकरणं समाप्तम्॥

(१)स्वादिविधौ प्रातिपदिकाधिकारात् तां सञ्ज्ञामाह—**अर्थवदिति।** अधातुरित्यादिः पर्युदासो (२)लाघवात् । **प्रत्ययान्तमिति ।** आव-

---

**अर्थवत्** (पा० सू० १।२।४५)। सन्धिप्रकरणेन सङ्गतिं प्रदर्शयितुमाह—(१)**स्वादिविधावित्यादिना ।** (२)**लाघवादिति ।** प्रसज्यप्रतिषेधे हि असमर्थसमासकल्पना वाक्यभेदः क्रियाऽध्याहारश्च कर्त्तव्यो भवतीति गौरवमिति भावः ।

स्यादेतत्, अधातुरित्यस्य धातुभिन्न इत्यर्थे धातोरपि धातुघटोभयभेदमादाय धातुभिन्नत्वेनाधातुरिति पर्युदासो व्यर्थः । नचाधातुरित्यस्य धातुत्वावच्छिन्नप्रतियोगिताकभेदवानित्यर्थः, तथाच धातुघटोभयं नेत्याकारकभेदस्य धातुनिष्ठप्रतियोगिताकत्वेऽपि धातुत्वावच्छिन्नप्रतियोगिताकत्वस्याभावात्तं भेदमादाय न दोष इति वाच्यम्, धातुघटोभयं नेत्याकारकभेदीयप्रतियोगितायां धातुत्वघटत्वद्वित्वैतत्त्रितयावच्छिन्नत्वेन 'भेदीयप्रतियोगिता धातुत्वावच्छिन्ना न' इति वक्तुमशक्यत्वेन पूर्वोक्तभेदमादाय दोषस्य दुरुद्धरत्वात्। नचाधातुरित्यस्य धातुत्वमात्रावच्छिन्नप्रतियोगिताकभेदवानित्यर्थः । तथाचोभयाभावीयप्रतियोगितायां धातुत्वेतरघटत्वाद्यवच्छिन्नत्वेन स भेदो धर्तुं न शक्यते इति नोक्तदोष इति वाच्यम्, धातुत्वस्यापि धातुत्वघटोभयभिन्नत्वेन धातुत्वावच्छिन्ना धातुत्वेतरधर्मानवच्छिन्ना या प्रतियोगिता तादृशप्रतियोगिताकभेदस्यैवाप्रसिद्धेः, इति चेत्? मैवम्, अधातुरित्यस्य धातुत्वपर्याप्ता या अवच्छेदकता तादृशावच्छेदकताकप्रतियोगिताकभेदवानित्यर्थः ।तथा च निरुक्तोभयाभावीयप्रतियोगितावच्छेदकतायां धातुत्वघटत्वद्वित्वेषु त्रिषु व्यासज्यवृत्तित्वेन धातुत्वपर्याप्तत्वाभावेनादोषात् । नच प्रत्येकमपर्याप्तस्य समुदाये पर्याप्त्यसम्भवात्समुदायस्य च प्रत्येकानतिरेकात् धातुत्वादिषु त्रिषु पर्याप्ता प्रतियोगितावच्छेदकता केवलधातुत्वे पर्याप्ता नेति वक्तुमशक्यत्वेनोक्तदोषतादवस्थ्यमिति वाच्यम्, अवयवावयविनोरिव प्रत्येकसमुदाययोरपि परस्परमस्मन्मते भिन्नत्वेन दोषाभावात् । अत एव समासग्रहणस्य **भाष्योक्त**नियामकत्वं सङ्गच्छते। अन्यथा प्रत्ययान्ततदादिसमुदायरूपसमासस्यापि प्रत्ययान्ततदादित्वेन तदसङ्गतिः स्पष्टैव ।

अथवा अधातुरित्यस्य धातुत्ववृत्त्येकत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकप्रतियोगिताकभेदवानित्यर्थः । तथाच निरुक्तोभयाभावीयप्रतियोगितावच्छेदकतायां धातुत्वादित्रितयपर्याप्तत्वेन निरुक्तोभयाभावीयप्रतियोगितावच्छेदकतायां त्रित्वावच्छिन्नानुयोगिताकपर्याप्तिकत्वस्य सत्त्वेऽपि धातुत्ववृत्त्येकत्वावच्छिन्नानुयोगिताकपर्याप्तिकत्वस्याभावेनादोषात् । नचैवमपि धातुत्ववृत्तित्वविशिष्टोभयाभावीयप्रतियोगितावच्छेदकतायाः धातुत्ववृत्त्येकत्वावच्छिन्नानुयोगिताकपर्याप्तिकत्वेन "विशिष्टं शुद्धान्नातिरिच्यते" इति न्यायेन शुद्धनिरुक्तोभयाभावीयप्रतियोगितावच्छेदकताया अपि धातुत्ववृत्त्येकत्वावच्छिन्नानुयोगिताकपर्याप्तिकत्वेनोक्तदोषतादवस्थ्यमिति वाच्यम्, धातुत्वं धातुत्वनिरूपितवृत्तित्वविशिष्टवत्, धातुत्वं निरुक्तोभयाभावीयप्रतियोगितावच्छेदकतावत् इत्याकारकप्र-

र्तिते प्रत्ययपदे प्रत्ययग्रहणपरिभाषया तदन्तग्रहणम् । "सञ्ज्ञा विधौ" (प० भा०) इति निषेधस्तु (१)प्रत्ययस्य यत्र सञ्ज्ञा तद्विषय इति भावः।

---

तीतिभ्यां वललेन पर्याप्तिद्वयेनाधिकरणताद्वयेन चोपपत्तौ अतिरिक्तधातुत्ववृत्तित्वविशिष्टनिरुक्तोभयाभावीयप्रतियोगितावच्छेदकताधिकरणत्वस्य, अतिरिक्ताया धातुत्ववृत्तित्वविशिष्टनिरुक्तोभयाभावीयप्रतियोगितावच्छेदकतापर्याप्तेश्च कल्पने मानाभावेन धातुत्ववृत्तित्वविशिष्टनिरुक्तोभयाभावीयप्रतियोगितावच्छेदकतायां धातुत्ववृत्त्येकत्वावच्छिन्नानुयोगिताकपर्याप्तिकत्वस्याभावेन शुद्धनिरुक्तोभयाभावीयप्रतियोगितावच्छेदकतायां सुतरामभावेनादोषादिति दिक् ।

'धातुत्वेन घटो न' इति व्यधिकरणधर्मावच्छिन्नप्रतियोगिताको भेदो गदाधरादिसिद्धान्ते नास्त्येवेति न तमादाय दोषः शङ्कनीयः । येषां मते प्रतीतिवलात् व्यवस्थापितः तेषां मते प्रतियोगितायां धातुनिष्ठत्वमपि विशेषणं देयम् । तेन घटनिष्ठप्रतियोगिताया धातुत्वावच्छिन्नत्वेऽपि धातुनिष्ठत्वाभावान्न दोषः । अत्र धातुनिष्ठैकत्वस्य स्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकप्रतियोगिताकत्वम्, स्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकत्वम्, एतदुभयसम्बन्धेन विशिष्टो भेद इति निष्कृष्टार्थो बोध्यः । तेन सामान्यधर्मेण विशेषभेदमादाय' विशेषधर्मेण वा सामान्यभेदमादाय नातिप्रसङ्ग इत्यलम् । ननु प्रतियोग्यवृत्तिधर्म एव भेदीयानुयोगितावच्छेदको भवतीति नियमेन प्रकृतेऽनुयोगितावच्छेदकार्थवत्त्वस्य प्रतियोगिनि धातावपि सत्त्वेन धातुभिन्नमर्थवदेति कथं बोधः ? अत एव 'द्रव्यं न घट' इत्यादिप्रतीतिर्न भवतीति चेत्! न, भेदविधेयकस्थले तादृशनियमस्वीकारेण प्रकृते धातुभेदस्य प्रातिपदिकसंज्ञानिष्ठविधेयतानिरूपितोद्देश्यतावच्छेदकत्वेनादोषात् । अत एव 'अघटं द्रव्यमानय' इत्यादिप्रयोगाः सङ्गच्छन्ते ।

**अन्ये तु** प्रतियोग्यवृत्तिरेव धर्मोऽनुयोगितावच्छेदको भवतीति सर्वत्र नियमः। परं प्रतियोगिवृत्तिरपि धर्मो भेदान्वयितावच्छेदको भवत्येव । अत एव 'अर्थवदधातु' 'अघटं द्रव्यमानय' इत्यादिप्रयोगाः सङ्गच्छन्ते । नचैवं रीत्या 'घटो न द्रव्यम्' इत्यादिप्रयोगापत्तिरिति वाच्यम्, अभावविधेयकस्थले उद्देश्यतावच्छेदकावच्छेदेन विधेयान्वय इति सिद्धान्तेनोद्देश्यतावच्छेदकद्रव्यत्वादिव्यापकत्वस्य भेदे बाधितत्वेनादोषादित्याहुः ।

**(१)प्रत्ययस्य यत्र संज्ञेति ।** संज्ञानिष्ठविधेयतानिरूपितसाक्षादुद्देश्यताप्रयोजकं यत् प्रत्ययमात्रवृत्तिविषयताप्रयोजकं पदं तत् तदादिविशेष्यकतदन्तविधिप्रयोजकं नेति "संज्ञाविधौ" (प०भा०) इत्यस्यार्थस्वीकारेण प्रकृते प्रत्ययपदं न संज्ञानिष्ठविधेयतानिरूपितसाक्षादुद्देश्यताप्रयोजकमिति न तदन्तविधिनिषेध इत्यन्यत्र निरूपितम्।

अत्र सूत्रे उत्तरसूत्रे चार्थवत्त्वम् (१)एतत्सञ्ज्ञाफलभूतविभक्तीतरस-

---

(१)एतत्संज्ञाफलभूतेति । चिकीर्षितप्रातिपदिकसंज्ञाफलभूतेत्यर्थः । विभक्तौ प्रातिपदिकसंज्ञाफलभूतत्वमुपलक्षणं न तु विशेषणमतो नान्योन्याश्रयः । अन्यथा अर्थवत्त्वज्ञानाधीना प्रातिपदिकसंज्ञा तदधीनश्चार्थवत्त्वज्ञानमित्यन्योन्याश्रयो दुरुद्धरः स्यात् । एवञ्च वस्तुतः प्रातिपदिकसंज्ञाफलभूतेत्यादिलक्षणं फलितम् ।

स्यादेतत्, खट्वा, पक्त्रिमम्, सांकूटिनम् इत्यादौ खट्व पक्त्र सांकूटिन् इत्यादीनामेतत्संज्ञाफलभूतविभक्तीतरेषां टाब्मवर्णां समभिव्याहारेणैवार्थविषयकबोध-जनकत्वादर्थवत्त्वं न स्यादिति चेत्? मैवम्, विभक्तिपदं प्रत्ययमात्रोपलक्षणमिति स्वीकारेणादोषात् । नचैवमपि प्रकृतसूत्रस्थभाष्यविरोधः । तथाहि, "अधातुरिति किमर्थम् धातोस्तु 'सुपो धातोः' इति धातुग्रहणात् ज्ञापकात् प्रातिपदिकसंज्ञा न भविष्यति, धातोः प्रातिपदिकत्वे तत्त्वादेव लुक्सिद्धेः" इत्याशङ्क्य "प्रतिषिद्धार्थमेतद् धातुग्रहणं स्यात् अपिकाकः श्येनायते" इत्युक्तम् । एतच्चानुपपन्नम्, एतत्संज्ञाफलभूतप्रत्ययेतरतिङ्समभिव्याहारेणैव श्येनायेत्यस्य लोकेऽर्थविषयकबोधजनकत्वेनार्थवत्त्वाभावदेव प्रातिपदिकत्वाप्राप्तेः प्रतिषेधानुधावनस्यायुक्तत्वादिति वाच्यम्, एतत्संज्ञाफलभूतप्रत्यय-तिङ्-एतदन्यतरेत्यादिलक्षणस्वीकारेणादोषात् । यद्वा, प्रत्ययान्तभिन्नत्वविशिष्टार्थ-वत्त्वस्य प्रातिपदिकसंज्ञाप्रयोजकत्वेन प्रत्ययान्तभिन्नत्वस्य विशेषणत्वेन पूर्वोपस्थितत्वात् तदभावप्रयोज्य एव प्रातिपदिकसंज्ञाऽभाव आपादित इति न किञ्चिदसमञ्जसमिति दिक् ।

ननु 'एधाञ्चक्रे' इत्यादावेधामित्यस्यैतत्संज्ञाफलभूतप्रत्ययतिङ्एतदन्यतरेतर-चक्रे-इत्येतत्समभिव्याहारेणैव लोकेऽर्थविषयकबोधजनकत्वेनार्थवत्त्वं न स्यात् । न च पदेतरस्यापि लक्षणघटकत्वेन न दोष इति वाच्यम्, 'पञ्चनावप्रियः' इत्यादौ पञ्चनावेत्यस्य प्रातिपदिकत्वं नेत्युत्तरग्रन्थविरोधात् । नन्वेधामित्यस्यार्थवत्त्वाभावेऽपि न क्षतिः, नचार्थवत्त्वाभावेन पदत्वाभावादेधाञ्चक्रे इत्यादावनुस्वारो न स्यादिति वाच्यम् "नश्चापदान्तस्य" (पा०सू० ८।३।२४) इत्यनेनानुस्वारसिद्धेः, इति चेत्? न, एधाञ्चक्रे इत्यादौ "तिङ्ङतिङः" (पा०सू० ८।१।२८) इति निघातानापत्तेः वैकल्पिकपरसवर्णानापत्तेश्च । नचैतत्संज्ञाफलभूतप्रत्यय-तिङ्-स्ववृत्त्येकार्थीभावाभाववत्पदैतदन्यतमेतरेत्यादिलक्षणस्वीकारेण एधामित्यस्यार्थवत्त्वं, पञ्चनावेत्यस्य तदभावश्च सिद्ध्यतीति वाच्यं 'मूलकेनोपदंशम्' इत्यादौ स्ववृत्त्येकार्थीभावाभाववत्पदेतरमूलकेनेत्येतत्समभिव्याहारेणैवोपदंशमित्यस्य लोकेऽर्थविषयकबोधजनकत्वेनार्थवत्त्वानापत्तेः । न च एतत्संज्ञाफलभूतप्रत्यय—तिङ्—स्ववृत्तिप्रातिपदिकत्वाभाववत्पदैतदन्यतमेत्यादिलक्षणस्वीकारेण न काऽपि क्षतिरिति वाच्यम्, अर्थवत्त्वपरिष्कारे प्रातिपदिकत्वप्रवेशेऽन्योन्याश्रयापत्तेः, इति चेत्? मैवम्, स्ववृत्तिसमासत्वाभाववत्पद-तिङ्-एतत्संज्ञाफलभूतप्रत्ययैतदन्यत-

मभिव्याहारानपेक्षया लोकेऽर्थविषयक (१)बोधजनकत्वम् । अन्यथाऽधातु- मेतरसमभिव्याहारानपेक्षया लोकेऽर्थविषयकबोधजनकत्वमिति परिष्कारेणादोषात्। तथाहि, 'एधाञ्चक्रे' इत्यादौ चक्रे इति स्ववृत्तिसमासत्वाभाववत्पदं, तदितरसमभिव्याहारानपेक्षया एधामित्यस्यार्थबोधकत्वादर्थवत्त्वम् । 'पञ्चनावप्रियः' इत्यादौ प्रियपदे स्ववृत्तिसमासत्वस्यैव सत्त्वेन तादृशसमासत्वाभाववदुदासीनपदेतरप्रियपदसमभिव्याहारेणैव पञ्चनावेत्यस्यार्थबोधकत्वेन न निरुक्तार्थवत्वम् । 'मूलकेनोपदंशम्' इत्यादौ मूलकेनेत्यत्रोपदंशवृत्त्येकार्थीभावसत्त्वेऽपि तद्वृत्तिसमासत्वाभावस्य सत्त्वात् तदितरसमभिव्याहारानपेक्षयाऽर्थबोधकत्वान्नार्थवरक्षतिः ।

अथ 'तन्निभः' 'कुम्भकारः' इत्यादौ निभकारादीनां पञ्चनावेत्यस्यैवोक्तरीत्याऽर्थवत्त्वं न स्यात् । न च पूर्वपदेतरत्वस्यापि लक्षणे निवेशेन नोक्तदोषः । अत एव 'एधामासतुः कल्पम्' इत्यादावासतुः कल्पमित्यादेरर्थवत्त्वं सिद्ध्यतीति वाच्यम्, 'हरिषु' इत्यादौ सोरपि निरुक्तार्थवत्त्वापत्त्या प्रत्ययपर्युदासकर्तव्यतापत्तेः । न च पूर्वपदशब्देन समासावयवस्यैव ग्रहणान्न दोष इति वाच्यम् , 'पञ्चनावप्रियपुत्रः' इत्यादौ प्रियेत्यत्र समासघटकपूर्वपदेतरत्वस्याभावेन पञ्चनावेत्यस्यार्थवत्त्वापत्तेः । न च नियतपूर्वत्ववत्सुबन्तमेव लक्षणघटकपूर्वपदशब्देन विवक्षितमिति नोक्तदोष इति वाच्यम्, कन्लुबन्ताचञ्चाशब्दात्सुपि 'चञ्चासु' इत्यादौ सोरर्थवत्त्वापत्त्या प्रत्ययपर्युदासकर्तव्यतापत्तेरिति चेत् ? न, एतत्संज्ञाफलभूतप्रत्यय, तिङ्, स्ववृत्तिसमासत्वाभाववत्पद, स्वादिष्वितिपदत्वानाश्रयनियतपूर्वत्ववत्सुबन्तैतदन्यतमेतरसमभिव्याहारानपेक्षया लोकेऽर्थविषयकबोधजनकत्वमर्थवत्त्वमिति परिष्कारेणादोषात् । स्वादिष्वितिपदत्वानाश्रयेत्युक्त्या 'चञ्चासु' इत्यादौ न दोषः । नियतेत्युक्त्या 'पञ्चनावप्रियपुत्रः' इत्यादौ न दोष इति दिक् ।

(१)**बोधजनकत्वमिति** । 'शक्तिलक्षणान्यतरज्ञानाधीनोपस्थित्या' इति शेषः। अत एव 'गावित्ययमाह' इत्यादौ गवित्यस्यानुकार्यानुकरणयोरभेदविवक्षया सादृश्यज्ञानाधीनोपस्थित्याऽर्थविषयकबोधजनकत्वेऽपि निरुक्तार्थवत्त्वाभावात्प्रातिपदिकत्वाभावेन सुबन्तत्वाभावान्न वलोपः । ·

स्यादेतत् , बोधजनकता स्वरूपयोग्यतारूपा फलोपधायकतारूपा वा गृह्यते ?। नाद्या, व्यावर्त्याभावेनार्थवद्ग्रहणवैयर्थ्यापत्तेः । नाप्यन्त्या, यादृशस्थले योग्यताज्ञानाद्यभावदशायां, बधिरस्य वा शाब्दबोधो न जातस्तत्रार्थवत्त्वानापत्तेरिति चेत् ? मैवम्, अर्थविषयकबोधतात्पर्येणोच्चरितत्वमित्यर्थविषयकबोधजनकत्वस्य परिष्कारेणादोषात्। नचैवमपि सूत्रेऽर्थवद्ग्रहणवैयर्थ्यम् , धनवनादेरर्थविषयकबोधतात्पर्येणोच्चरितत्वेन तद्घटकनकारादिर्नोच्चरित इति वक्तुमशक्यत्वादिति वाच्यम् , स्वविषयकबोधजनकत्वनिष्ठप्रकारतानिरूपिततात्पर्यविशेष्यतापर्याप्त्यधिकरणत्वमित्यर्थवत्वघटकबोधजनक-

त्वस्य परिष्कारात् । नचैवमपि प्रत्येकमपर्याप्तस्य समुदाये पर्याप्त्यसम्भवेन प्रतिवर्णं संज्ञाया दुरुद्धरत्वेनार्थवद्ग्रहणवैयर्थ्यमिति वाच्यम्, अवयवावयविनोरिव प्रत्येकसमुदाययोरपि भेदस्वीकारेणादोषात् । अत एव भाष्योक्तं समासग्रहणस्य नियमार्थत्वं सङ्गच्छते । अन्यथा प्रत्ययान्ततदादिसमुदायस्यापि प्रत्ययान्ततदादित्वेन तदसङ्गतिः स्पष्टैव ।

**अन्ये तु** अर्थविषयकबोधजनकत्वनिष्ठप्रकारतानिरूपिततात्पर्यविशेष्यतापर्याप्त्यनुयोगितावच्छेदकधर्मवत्त्वमर्थविषयकबोधजनकत्वम् । तथा च 'धनं' 'वनम्' इत्यादौ धनपदं धनत्वावच्छिन्नं बोधयत्वित्याकारकतात्पर्यीयबोधजनकत्वनिष्ठप्रकारतानिरूपितविशेष्यतापर्याप्त्यनुयोगितावच्छेदकं धनवृत्तिसमुदायत्वमेव न तु धकारादिवृत्तितद्व्यक्तित्वमिति न दोषः । नचैवमपि धकारनिरूपितवृत्तित्वविशिष्टाया पूर्वोक्ततात्पर्यीया विशेष्यता तादृशविशेष्यतापर्याप्त्यनुयोगितावच्छेदकं धकारादिवृत्तितद्व्यक्तित्वमिति 'विशिष्टं शुद्धान्नातिरिच्यते' इति न्यायेन निरुक्ततात्पर्यीयशुद्धविशेष्यतापर्याप्त्यनुयोगितावच्छेदकमपि धकारादिवृत्तितद्व्यक्तित्वं भवत्येवेति प्रतिवर्णं संज्ञा दुर्वारेत्यर्थवद्ग्रहणवैयर्थ्यं तदवस्थमेवेति वाच्यम्, धकारादिनिरूपितवृत्तित्वविशिष्टवान् निरुक्ततात्पर्यीयविशेष्यतावान् इत्याकारकप्रतीतिद्वयान्यथाऽनुपपत्त्या क्लृप्ताभ्यां पर्याप्तिभ्यामधिकरणताभ्यां चोपपत्तौ निरुक्तधकारादिवृत्तित्वविशिष्टतात्पर्यविशेष्यताया अतिरिक्ताधिकरणत्वपर्याप्त्योः कल्पने मानाभावेनादोषात् । नचैवमपि धनपदाद्धनत्वावच्छिन्नं बोद्धव्यमित्याकारकबोधविषयत्वप्रकारकतात्पर्येण 'धनमानय' इति वाक्यं धनकर्मकानयनं बोधयत्वित्याकारकवाक्यधर्मिकतात्पर्येण 'धनमानय' इतिवाक्याद्धनकर्मकानयनं बोद्धव्यमित्याकारकवाक्यार्थधर्मिकतात्पर्येण वा यत्र धनादिपदमुच्चरितं तत्र निरुक्तार्थवत्त्वं न स्यात् । बोधजनकत्वप्रकारकवत्त्वस्य निरुक्तबोधविषयत्वप्रकारकतात्पर्ययोरभावाद्वाक्यधर्मिकतात्पर्यस्थले विशेष्यतापर्याप्तिः पदेऽभावाच्चेति वाच्यम्, अर्थविषयकबोधजनकत्वनिष्ठप्रकारतानिरूपिततात्पर्यविशेष्यताविशिष्टतात्पर्यविषयतापर्याप्त्यनुयोगितावच्छेदकधर्मवत्त्वमर्थवत्त्वपरिष्कारान्तर्गतार्थविषयकबोधजनकत्वमिति स्वीकारेणादोषात् । वै० च० स्वसामानाधिकरण्यं, स्वावच्छेदकधर्मव्यापकानुपूर्वीव्याप्यधर्मावच्छिन्नत्वमेतदुभयसम्बन्धेन । तथा च पूर्वोक्तबोधविषयत्वप्रकारकतात्पर्यीयजन्यत्वसम्बन्धावच्छिन्नधनादिपदनिष्ठप्रकारताख्यविषयतायां वाक्यधर्मिकतात्पर्यीयधनादिपदनिष्ठविशेष्यतावच्छेदकताख्यविषयतायां वाक्यार्थधर्मिकतात्पर्यीयधनादिपदनिष्ठजन्यत्वसम्बन्धावच्छिन्नप्रकारतावच्छेदकताख्यविषयतायां च 'धनपदं धनं बोधयतु' इत्याकारकबोधजनकत्वप्रकारकतात्पर्यविशेष्यताया निरुक्तद्वयसम्बन्धेन वैशिष्ट्यसत्त्वान्न दोष इत्याहुः ।

**अन्ये तु** यस्यार्थवत्त्वं वक्तव्यं तन्निष्ठोद्देश्यतानिरूपितविधेयताश्रयेतरसमभिव्याहारानपेक्षया लोकेऽर्थविषयकबोधजनकत्वमर्थवत्त्वं पूर्वोत्तरसूत्रद्वयसाधारणं बोध्यम् । तथा च प्रत्ययानां तन्निष्ठोद्देश्यतानिरूपितविधेयताश्रयेतरप्रकृतिसमभिव्याहारेणैव लोके

रिति पर्युदासेन व्याख्यानादर्थवत्त्वेनैव सादृश्यग्रहणेन सिद्धेरुत्तरसूत्रे कुन्ता-दीनामनर्थकानामप्रसिद्धेस्तद्वैयर्थ्यं स्यात् ।

न च नञिवयुक्तन्यायानित्यत्वज्ञापनार्थं तत्, तदनित्यत्वज्ञापने(१)भाष्य-ऽर्थविषयकबोधजनकत्वादर्थवत्त्वाभावेन प्रत्ययपर्युदासो विफलः । अत एव 'अपि काकः श्येनायते' इति **भाष्यं** सङ्गच्छते । श्येनायेत्यस्य श्येनायनिष्ठोद्देश्यतानिरूपितविधेयता-श्रयतिङ्प्रत्ययेतरसमभिव्याहारानपेक्षया लोकेऽर्थविषयकबोधजनकत्वात् । अत एव 'पञ्चनावप्रियः' इत्यादौ पञ्चनावेत्यस्य नार्थवत्त्वम् । पञ्चनावनिष्ठोद्देश्यतानिरूपितविधेय-ताश्रयेतरप्रियसमभिव्याहारेणैव पञ्चनावेत्यस्य लोकेऽर्थविषयकबोधजनकत्वात् । अत एव 'एधाञ्चक्रे' इत्यादौ एधामित्यस्यार्थवत्त्वं सिद्ध्यति । चक्रे इत्यस्य एधान्निष्ठोद्देश्यतानिरू-पितविधेयताश्रयत्वेन तदितरसमभिव्याहारानपेक्षया एधामित्यस्य लोके अर्थविषयक-बोधजनकत्वात् ।

स्यादेतत्, 'मूलकेनोपदंशम्' इत्यादौ उपदंशमित्यस्यार्थवत्त्वं न स्यात् । उपदं-शमित्यस्य उपदंशनिष्ठोद्देश्यतानिरूपितविधेयताश्रयेतरमूलकेनेत्येतत्समभिव्याहारेणैव लोकेऽर्थविषयकबोधजनकत्वात् । एवम् 'धामासतुःकल्पम्' इत्यादावासतुःकल्पेत्यस्या-र्थवत्त्वं न स्यात् । अन्यत्रार्धधातुकादस्धातोः प्रयोगाभावेनासतुः कल्पनिष्ठोद्देश्यतानि-रूपितविधेयताश्रयेतरैधामित्येतत्समभिव्याहारेणैवाऽऽसतुःकल्पेत्यस्य लोकेऽर्थविषयक-बोधजनकत्वादिति चेत् ? मैवम्, यस्यार्थवत्त्वं वक्तव्यं तन्निष्ठोद्देश्यतानिरूपितविधेय-ताश्रय, स्वादिष्वितिपदत्वानाश्रयपूर्वपदैतदन्यतरेतरसमभिव्याहारानपेक्षया लोकेऽर्थ-विषयकबोधजनकत्वमिति परिष्कारेणादोषात् । पूर्वपदे स्वादिष्वितिपदत्वानाश्रयेत्युक्त्या 'हरिषु' 'चञ्चासु' इत्यादौ सोर्नार्थवत्त्वम् । न च 'पञ्चनावप्रियपुत्रः' इत्यादौ पञ्चनावे-त्यस्यार्थवत्त्वं स्यात् प्रियेत्यस्य पूर्वपदत्वादिति वाच्यम्, पूर्वपदेत्यत्र नियतपूर्वत्ववत्पदे-त्यस्य निवेशेनादोषात् । अत एव 'तन्निभः' 'कुम्भकारः' इत्यादौ निभकारादीनामर्थ-वत्त्वं सिद्ध्यति । निभसङ्काशनीकाशप्रतीकाशेत्यादिकोशप्रामाण्येन निभादीनां पूर्वपद-समभिव्याहाराभावेऽसाधुत्वेऽप्युपपदसमासस्य नित्यत्वेन तदभावे कारादीनामप्रयोगेऽपि तदितरसमभिव्याहारानपेक्षणादित्याहुः ।

(१)**भाष्यसम्मतदृढतरफलाभावादिति ।** भाष्यसम्मतेत्युक्त्या "अनचि च" (पा०सू० ८।४।४७) इत्यत्र पर्युदासस्वीकारेऽपि नञिवयुक्तन्यायानित्यत्वेन वागि-त्यादेर्द्वित्वासिद्धेः फलसत्त्वेऽपि **भाष्ये** प्रसज्यप्रतिषेधस्यैव स्वीकारेण, नैतत् नञिवयु-क्तन्यायानित्यत्वस्य फलमिति बोधितम् । दृढतरेत्युक्त्या "वेः स्कन्देरनिष्ठायाम्" (पा०सू० ८।३।७३) इत्यस्यैतन्न्यायानित्यत्वात्तिङन्तेऽपि प्रवृत्तिरूपफलसत्त्वेऽपि 'तिङन्ते षत्वं जायते न वा' इत्यत्र नियामकाभावान्नैतत् अनित्यत्वस्य दृढतरं फलमिति बोधितमिति दिक् ।

सम्मतदृढतरफलाभावात् (१)'अहन्' 'काण्डे' इत्यादावेतत्साध्यविभक्त्यनपेक्षत्वेऽपि तदितरानपेक्षत्वमस्त्येवेति तत्पर्युदासः सार्थकः । न च तत् केवलप्रत्ययस्य । तदुक्तम्—"संख्याया अतिशदन्तायाः" (पा० सू० ५।१।२२) इति सूत्रे **भाष्ये** "न हि लोके केवलेन प्रत्ययेनार्थो गम्यते, केन तर्हि ? सप्रकृतिकेन" इति । **हरिरप्याह**—

धात्वादीनां विशुद्धानां लौकिकोऽर्थो न विद्यते ।
कृत्तद्धितानामर्थश्च केवलानामलौकिकः ॥
प्राग्विभक्तेस्तदन्तस्य तथैवार्थो न विद्यते ॥ इति ।

(२)अत एव पदसञ्ज्ञासूत्रेऽन्तग्रहणस्य सञ्ज्ञाविधौ तदन्तविध्यभावज्ञापकत्वे "कृत्तद्धितेति सूत्रेऽन्तग्रहणं कर्त्तव्यम् । न कर्त्तव्यम् । अर्थवदिति वर्त्तते कृत्तद्धितान्तञ्चैवार्थवत् न केवलाः कृतस्तद्धिता वा" इति **भाष्य**मुपादाय 'शास्त्रीयार्थग्रहणेऽर्थवद्ग्रहणानुवृत्तिवैयर्थ्येन तदनुवृत्तिसामर्थ्याल्लौकिकार्थप्रत्यासन्नोऽभिव्यक्ततरो योऽर्थः प्रत्ययान्तेषु लक्ष्यते स आश्रीयते' इति **कैयटेनो**क्तम् । लौकिकं यत्पदं तदर्थस्य प्रत्यासन्नः शास्त्रकृत्कल्पितस्वादिप्रकृतेरर्थः प्रत्ययान्तेषु सुबन्तेषु योऽभिव्यक्ततरो लक्ष्यते बोद्धृभिः स इत्यन्वयः । **यत्तु** प्रत्ययान्तेष्वित्यस्य कृदाद्यन्तेष्वित्यर्थ इति, तन्न, तावन्मात्रेण कस्याप्यर्थस्याभिव्यक्तेरप्यभावेनाभिव्यक्ततरत्वस्य सुतरामभावात् । अर्थवत्सूत्रेऽप्येवमेवेति अनुवृत्तिसामर्थ्यादित्यनेन सूचितम् । अन्यथा तत्सामर्थ्यादित्येव वदेत् । पूर्वसूत्रे यादृशार्थवत्त्वग्रहोऽत्राप्यनुवृत्तिसामर्थ्यात्तादृशार्थवत्त्वस्यैव ग्रहः । शास्त्रीयार्थग्रहणे तु तदनुवृत्तिर्व्यर्था स्यादिति तद्भावः ।

किञ्च पूर्वसूत्रे सामान्यतोऽर्थवत्त्वग्रहणे न किञ्चित्फलं (३)प्रत्ययेष्व-

---

ननु एतत्संज्ञाफलभूतविभक्तिसमभिव्याहारापेक्षया लोकेऽर्थविषयकबोधजनकत्वमित्यनेनैव सिद्धे नञ इतरपदस्य चोपादानं व्यर्थमित्याशङ्क्याऽऽह—(१)**अहन् काण्डे इत्यादीति**। अत एव 'दधि' 'मधु' इत्यादावर्थवत्त्वं सिध्यति । अन्यथा वैयाकरणमते लुप्तविभक्त्यनुसन्धानस्यानङ्गीकारादर्थवत्त्वं न स्यात् । (२) **अत एवेति** । सूत्रद्वयसाधारणनिरुक्तार्थवत्त्वस्वीकारादेवेत्यर्थः । (३)**प्रत्ययेष्वतिव्याप्तिदानातिरिक्तमि**ति । वस्तुतस्तु अनेकभेदघटितसूत्रद्वयसाधारणगुरुतरनिरुक्तार्थवत्त्वस्वीकारस्य प्रत्ययपर्युदासखण्डनातिरिक्तं न किमपि फलमिति प्राचीनमते एव महल्लाघवमिति बोध्यम् ।

तिव्याप्तिदानातिरिक्तम्। अत एव तद्धितग्रहणस्य नियमार्थत्वाश्रयणेन (१)"ह्रस्वो नपुंसके (२)यत्तस्य" इति न्यासेन 'काण्डे' इत्यादौ ह्रस्ववारणात्फलाभावेन वा **भाष्योक्ते** तत्प्रत्याख्याने 'पञ्चनावप्रियः' इत्यादौ पञ्चनावेत्यस्यानेन न प्रातिपदिकत्वं, नाप्युत्तरसूत्रेण। प्रातिपदिकत्वे तु (३)टाबापत्तिः। एवञ्च प्रत्ययस्य प्राप्तिरेव नेति केवलप्रत्ययपर्युदासो (४)विफलः। 'दश दाडिमानि

---

**(१)ह्रस्वो नपुंसके यत्तस्येति।** यत् तस्येत्यनेन च प्रत्यासत्त्या नपुंसकत्वशक्तिपर्याप्त्यधिकरणं यत् तस्यान्त्यस्याचो ह्रस्व इति सूत्रार्थः। तदेतदाह—**(२)यत्तस्येति।** एतेन "ह्रस्वो नपुंसके यत्तस्य" इति न्यासेन सिद्धे प्रातिपदिकस्येत्यादि व्याख्यानं परास्तम्, सैद्धान्तिकन्यासापेक्षया एकपदाधिक्येन **भाष्योक्त**प्रातिपदिकग्रहणसामर्थ्योपन्यासस्यासङ्गत्यापत्तेः। नपुंसकत्वशक्तिपर्याप्त्यधिकरणस्येत्यर्थकरणेन 'वारिणी' इत्यादौ न दोष इति दिक्।

**(३)टाबापत्तिरिति।** पदार्थान्तरनिष्ठविशेष्यतानिरूपितोपस्थितीयप्रकारताप्रयोजकत्वरूपोपसर्जनत्वस्य सत्त्वेन ङीपः प्राप्तेरभावादिति भावः। क्वचिन्ङीबापत्तिरिति पाठः। तस्यायं–भावः यस्योपसर्जनत्वं वक्तव्यं तदवधिकपूर्वपदप्रयोज्यविशेष्यतानिरूपितोपस्थितीयप्रकारताप्रयोजकतापर्याप्त्यधिकरणत्वमुपसर्जनत्वम्। तथा च तादृशोपसर्जनत्वं प्रकृते नेति।

स्यादेतत्, 'पञ्चनावप्रियः' इत्यादौ पञ्चनावेत्यस्य सत्यप्यर्थवत्त्वे न क्षतिः। उत्तरपदानन्तर्यं निमित्तीकृत्य जायमानायाः समाससंज्ञायाः तद्विघातकटाबादिप्रवृत्तिं प्रत्यनिमित्तत्वामिति सन्निपातपरिभाषया तद्वारणसम्भवादिति चेत्? मैवम्, "तद्धितार्थोत्तरपद" (पा० सू० २।१।५१) इत्यादीनां संज्ञाशास्त्रत्वेन अभ्यनुज्ञावाक्यकल्पनाऽभावेनाभ्यनुज्ञावाक्यसङ्कोचकसन्निपातपरिभाषाया अप्रवृत्तेः। **वस्तुतस्तु** "यतोऽनावः" (पा० सू० ६।१।२१३) इति सूत्रस्थ**भाष्य**प्रमाण्येन विघातकशास्त्रे सङ्कोचावश्यकत्वेन "अजाद्यत" (पा० सू० ४।१।४) इत्यादेः "अयं टावादिः स्वोपजीव्यविघातकत्वाभाववान् भवति" इत्यर्थेनोपजीव्यविरोधात्पञ्चनावेत्यस्मान्न टाबादिः। किञ्च 'पञ्चनावप्रियः' इत्येतत्पर्याप्तैकार्थीभावेनैव विशिष्टे बहुव्रीहिसंज्ञाया अवान्तरे तत्पुरुषसंज्ञायाश्च सिद्धतया पञ्चनावेत्यत्र शक्तिकल्पने मानाभावात् पञ्चनावेत्यस्य अर्थविषयकबोधजनकत्वमेव न। स्पष्टञ्चेदमर्थवत्सूत्रे शब्दरत्ने इति दिक्।

**(४)विफल इति। परे तु** पूर्वोत्तरसूत्रद्वयसाधारणमर्थवत्त्वम् अर्थविषयकबोधजनकत्वप्रकारकतात्पर्यविशेष्यतापर्याप्त्यधिकरणत्वमिति।

गुरुतरलक्षणं स्वीकृत्य प्रत्ययपर्युदासखण्डनापेक्षया तत्पर्युदासं स्वीकृत्यैतल्लक्षणस्यैव लघुत्वात्। नच 'पञ्चनावप्रियः' इत्यादौ पञ्चनावेत्यस्यार्थवत्त्वं स्यादिति वाच्यम्, पञ्च

षडपूपाः' इत्यादिनिरर्थकपदसमुदाय (१)व्यावृत्तिरर्थवद्ग्रहणस्य फलम् । तत्र हि
नावेत्यत्र शक्तिकल्पने मानाभावेन विशिष्टशक्त्यैवोपपत्तेरित्यादिना दत्तोत्तरत्वात् । नच-एवमपि "सुप्तिङन्तम्" (पा० सू० १।४।१४) इतिसूत्रस्थभाष्यविरोधः । तत्र हि अन्तग्रहणेन 'संज्ञाविधौ' (पा० भा०) इति परिभाषां ज्ञापयित्वा "यद्येवं "कृत्तद्धित" (पा० सू० १।२।४६) इति सूत्रे अन्तग्रहणं कर्तव्यम् । न कर्तव्यम् । अर्थवदिति वर्तते, कृत्तद्धितान्तं चैवार्थवत्, न केवलाः कृतस्ताद्धिता वा" इत्युक्तम् । तथाच निरुक्तार्थवत्त्वस्य केवलकृत्तद्धितेष्वपि सत्त्वेन तद्विरोधः स्यादिति वाच्यम्, "कृत्तद्धितान्तं चैवार्थवत्" इत्यस्यानन्तरं 'प्रातिपदिकम्' इति, 'न केवलाः कृतस्ताद्धिता वा" इत्यस्यानन्तरं 'प्रातिपदिकानि' इति शेषो बोध्यः । तथा च "संज्ञाविधौ" (प० भा०) इत्यस्य संज्ञानिष्ठविधेयतानिरूपितसाक्षादुद्देश्यताप्रयोजकं यत्प्रत्ययमात्रवृत्तिविषयताप्रयोजकं पदं तत् तदादिविशेष्यकतदन्तविधिप्रयोजकं नेत्यर्थेन तदादिविशेष्यकतदन्तविध्यभावेऽप्यनुवृत्तार्थवद्विशेष्यकतदन्तविधेः सूपपादत्वेन कृत्तद्धितान्तं चैवार्थवत् प्रातिपदिकसंज्ञकं भवति, न केवलाः कृतस्ताद्धिता वा प्रातिपदिकसंज्ञकानि भवन्ति इत्येव भाष्यस्य सुयोजत्वेनाविरोधात् ।

एतदेवाभिप्रेत्य भाष्ये—अर्थवदिति किम्? 'धनं' 'वनम्' इति दोषं प्रदर्श्यापि सूत्रशेषे दशदाडिमानीत्यनर्थकसमुदायस्तत्फलत्वेन प्रदर्शितः । नच 'दश दाडिमानि' इत्यनर्थकसमुदायस्य समासग्रहणकृतनियमेन व्यावृत्तिर्भवतीति नैतत्फलम्, 'धनं' 'वनम्' इत्यादौ वृक्षप्रचलनन्यायेनैव प्रतिवर्णं संज्ञा नेत्युक्तमेव । तथाचार्थवद्ग्रहणं व्यर्थमिति वाच्यम्? स्वातन्त्र्येण प्रयोगार्हार्थवत्पूर्वावयवकः स्वातन्त्र्येण प्रयोगार्हार्थवदुत्तरावयवकोऽर्थविषयकबोधौपयिकाकाङ्क्षापर्याप्त्याधिकरणञ्च यः समुदायस्तस्य चेत्तर्हि समासस्यैवेति नियमशरीरस्य वक्ष्यमाणत्वेनानर्थकसमुदायेऽर्थविषयकबोधौपयिकाकाङ्क्षापर्याप्त्यधिकरणत्वस्याभावेन नियमेन व्यावृत्त्यसम्भवेनार्थवद्ग्रहणस्यावश्यकत्वात् । अत एव प्रत्ययग्रहणपरिभाषाप्रयोजनं 'देवदत्तो गार्ग्यः' इत्यस्य प्रातिपदिकसंज्ञाभावः इति भाष्योक्तं सङ्गच्छते । अन्यथा नियमेनैव तद्व्यावृत्तिसम्भवेन तदसङ्गतिः स्पष्टैव । मम त्वभेदसंसर्गकबोधं प्रति समानविभक्तिकत्वस्य तन्त्रत्वेन ( कारणत्वेन ) देवदत्तो गार्ग्येत्येतावन्मात्रेऽभेदसंसर्गकबोधौपयिकाकाङ्क्षापर्याप्त्यधिकरणत्वस्याभावेन नियमेनाव्यावृत्त्या तत्सङ्गतिरिति वक्ष्यते ।

(१)व्यावृत्तिरिति । वृक्षप्रचलनन्यायाश्रयणेनेदं दूषणं, तदनाश्रयणे तु 'धनं' 'वनम्' इत्यादौ प्रतिवर्णं संज्ञाव्यावृत्तिरेव तत्फलमिति भावः ।

ननु नियम्यत्वेनाभिमतशास्त्रीयविधेयतावच्छेदकरूपावच्छिन्नविधेयताकत्वे सति तदीयोद्देश्यतावच्छेदकरूपव्याप्यरूपावच्छिन्नोद्देश्यताकत्वं नियामकत्वमिति सिद्धान्तेन तादृशस्थले नियामकशास्त्रेण नियम्यशास्त्रे सङ्कोचः कर्तव्यः । तत्र नियामकशास्त्रीयो-

"सुपो धातु"(पा०सू०२।४।७१)इति लुगापत्तिरिति **भाष्ये** स्पष्टमिति दिक्॥

**पूर्वसूत्रेणेति ।** "प्रत्ययग्रहणे यस्मात्" (प० भा०) इति प्रत्ययान्तत्वाभावादिति भावः । (१)नियमस्य सजातीयविषयत्वात्साजात्यं दर्शयितुमाह–**पूर्वो भाग इति ।** एतेन (२)यत्तच्छब्दार्थयोरननुगतत्वेन (३)शब्दानुगमस्याप्रयोजकत्वेन (४)व्यवच्छेद्याननुगमेऽपि क्षत्यभावेन च 'यत्र सङ्घाते' इत्यादि व्यर्थमेवेत्य(५)पास्तम् । पदशब्देनात्र (६)स्वातन्त्र्येणापि प्रयोगार्हमर्थवद् गृह्यते । (७)अत एव (८)"अर्थवत्समुदायानां

---

द्देश्यतावच्छेदकं, तद्व्याप्यं, तद्व्यापकम्, नियम्यशास्त्रीयोद्देश्यतावच्छेदकं, तद्व्याप्यं, तद्व्यापकं चेति षड् रूपाण्युपस्थितानि । तत्र नियामकशास्त्रीयोद्देश्यतावच्छेदकरूपावच्छिन्नातिरिक्तत्वेन तादृशरूपव्याप्यरूपावच्छिन्नातिरिक्तत्वेन वा सङ्कोचः कर्तुं न शक्यते सुषाश्वश्रून्यांयप्रसङ्गात्, नापि नियम्यशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्नातिरिक्तत्वेन तादृशरूपव्यापकरूपावच्छिन्नातिरिक्तत्वेन वा सङ्कोचः कर्तुं शक्यते नियम्यशास्त्रवैयर्थ्यापत्तेः; किन्तु नियामकशास्त्रीयोद्देश्यतावच्छेदकव्यापकं नियम्यशास्त्रीयोद्देश्यतावच्छेदकव्याप्यं च यद्रूपं तद्रूपावच्छिन्नातिरिक्तत्वेन सङ्कोचः कर्तव्य इत्यभिप्रेत्याह–**(१)नियमस्य सजातीयविषयत्वादिति ।**

**(२)यत्तच्छब्दार्थयोरननुगतत्वेनेति ।** यत्तत्पदयोः सर्वनामत्वेन बुद्धिस्थत्वोपलक्षिततत्तद्धर्मावच्छिन्ने शक्तत्वेन बुद्धीनामानन्त्यात्तदर्थानामप्यानन्त्येनानुगमासम्भवादिति भावः । ननु बुद्धीनामानन्त्येऽपि दीक्षितबुद्धिस्थे प्रकृते यत्तत्पदयोः शक्तिरितिस्वीकारेणानुगमः सम्भवत्येवेत्यत आह––**(३)शब्दानुगमस्याप्रयोजकत्वेनेति ।** अयं भावः–दीक्षितोत्पत्तेः प्राक् तदीयबुद्धेरभावेन तदानीमपि समासग्रहणकृतनियमेनार्थवत्सूत्रे सङ्कोचस्यावश्यकत्वेनायं नियमोऽप्रयोजक इति । ननु यत्र सङ्घाते इत्याद्युपलक्षणं पदपूर्वावयवकसमुदायस्य चेत्तर्हि समासस्यैवेत्यस्य, तथा चानुगमः सम्भवत्येवेत्यत आह–**(४)व्यवच्छेद्याननुगमेऽपि क्षत्यभावेनेति ।** (५)**अपास्तमिति ।** नियमशास्त्रसार्थक्याय प्रकृते व्यवच्छेद्यानुगमस्यावश्यकत्वादिति भावः।

ननु पदपूर्वावयवकसमुदायत्वं नियामकशास्त्रीयोद्देश्यतावच्छेदकसमासत्वव्यापकं भवितुं नार्हति । 'वृषण्वसुः' 'वृषणश्वः' इत्यादौ समासत्वस्य सत्त्वेऽपि "वृषण्वस्वश्वयोः" इति वृषणित्यस्य भत्वेन पदपूर्वावयवकसमुदायत्वस्याभावादित्यत आह–**(६)स्वातन्त्र्येण प्रयोगार्हमर्थवदिति ।** **(७)अत एवेति ।** यत्र सङ्घाते पूर्वो भागः पदमिति स्वातन्त्र्येण प्रयोगार्हार्थवदित्यस्योपलक्षणमिति स्वीकारादेवेति भावः। **(८)अर्थवत्समुदायानामिति ।** अत्र तन्त्रेण षष्ठीतत्पुरुषः कर्मधारयश्च । तथाच

समासग्रहणं नियमार्थम्" इत्युक्तमत्र **भाष्ये । भाष्ये** सुबन्तानामित्यनेन (१)भेदसंसर्गद्वारकार्थवन्त उपलक्ष्यन्ते इति **कैयटेन** स्पष्टमेवो-

---

अर्थवतां ये समुदायाः तेऽर्थवन्तोऽप्यपेक्षिताः । तेषामेव नियमेन व्यावृत्तिः, न तु दश दाडिमानीत्यादीनाम् । वहुवचनं तु प्रयोगभेदाभिप्रायेण । तथाच स्वातन्त्र्येण प्रयोगार्हार्थवत्पूर्वावयवकः तादृशार्थवदुत्तरावयवकोऽर्थवांश्च यः समुदायः तस्य चेत्तर्हि समासस्यैवेति नियमस्वरूपमिति भावः । अत एव पूर्वसूत्रेऽर्थवदित्यस्य 'दश दाडिमानि' इत्यनर्थकपदसमुदायव्यावृत्तिस्तत्फलमुक्तं **भाष्ये** । अन्यथा समासग्रहणकृतानियमेनैव तद्व्यावृत्तौ तदसङ्गतिः स्पष्टैवेति दिक् ।

(१)**भेदसंसर्गद्वारकार्थवन्त इति** । न च 'नीलो घटः' इत्यत्राभेदसंसर्गद्वारकार्थवत्त्वेन समासग्रहणकृतानियमेन वारणं न स्यादिति वाच्यम्, भेदे सति संसर्गद्वारकार्थवन्त इत्यर्थस्य विवक्षणेनादोषात् । तथाहि, भेदे सतीत्यस्मात् पूर्वं शक्तेरित्यध्याहार्यम्, संसर्गश्च विशेष्यविशेषणभावरूपः । तथा च शक्तिभेदे सति आकाङ्क्षाभास्यविशेष्यविशेषणभावप्रयोजकार्थवन्त इति फलितम् । 'नीलो घटः' इत्यत्र नीलपदघटपदयोः शक्तिभेदेन तादृशविशेष्यविशेषणभावप्रयोजकार्थवत्समुदायत्वसत्त्वेन च न दोषः । **वस्तुतस्तु** शक्तिविशिष्टसंसर्गकविशेष्यविशेषणभावप्रयोजकार्थवन्त इति वक्तव्यम् । वै० च स्वनिरूपकार्थप्रतियोगिकत्व, स्वनिरूपकार्थानुयोगिकत्वैतदन्यतरवत्त्वम्, स्वनिरूपकार्थभिन्नार्थप्रतियोगिकत्व, स्वनिरूपकार्थभिन्नार्थानुयोगिकत्वैतदन्यतरवत्त्वमेतदुभयसम्बन्धेन । शक्तिश्च पदनिष्ठा गृह्यते । तथा च 'गवित्ययमाह' 'अस्य गो श्रृणु' इत्यादौ न दोषः । तत्राऽऽद्ये गोपदस्यानुकरणत्वेन सादृशज्ञानेनैवानुकार्योपस्थितौ शक्तिकल्पनस्य तत्राभावेऽपि इति पदे शक्तिसत्त्वेन तन्निरूपकार्थानुयोगिकत्वं गवितिपदद्वयजन्याऽऽकाङ्क्षाभास्यसम्बन्धे, एवं स्वनिष्ठशक्तिनिरूपकार्थभिन्नो गोपदार्थस्तत्प्रतियोगिकत्वञ्चेति तादृशविशेष्यविशेषणभावप्रयोजकत्वेन 'गवित्ययमाह' इत्यस्य समासग्रहणकृतनियमेन व्यावृत्त्या न प्रातिपदिकत्वम् । अन्त्ये चैतच्छब्दनिष्ठशक्तिनिरूपकार्थप्रतियोगिकत्वमेतत्पदनिष्ठशक्तिनिरूपकार्थभिन्नो गोपदार्थस्तदनुयोगिकत्वञ्च अस्य गो इति पदद्वयाकाङ्क्षाभास्यविशेष्यविशेषणभावे इति तत्रापि न प्रातिपदिकत्वम् । अन्यथा गोपदे शक्तेरभावेन शक्तिभेदस्य वक्तुमशक्यतया प्रातिपदिकत्वापत्तिर्दुर्वारा स्यात् । नचैवमपि 'देवदत्तो गार्ग्यः' इत्येतद्घटकदेवदत्तो गार्ग्येत्यस्यार्थवत्त्वेन समासग्रहणकृतानियमेनैव व्यावृत्तौ प्रत्ययग्रहणपरिभाषाफलत्वेनोपादानं **भाष्योक्त**मसङ्गतं स्यादिति वाच्यम्, पदविशिष्टसमुदायत्वं भेदसंसर्गद्वारकार्थवत्त्वमिति परिष्कारेणादोषात् । वै० च स्वनिष्ठशक्तिविशिष्टसंसर्गकविशेष्यविशेषणभावप्रयोजकत्वं, स्वनिष्ठशक्तिनिरूपकार्थबोधौपयिकाकाङ्क्षापर्याप्त्यधिकरणत्वमेतदुभयसम्बन्धेन । देवदत्तोगार्ग्येत्यत्र प्रथमसम्बन्धसत्त्वेऽपि देव-

क्तम् । तेन 'गवित्ययमाह' इत्यादौ गोइत्यादीनां (१)सुबन्तत्वाभावेऽपि न समुदायस्य प्रातिपदिकत्वम् अनुकरणस्यानितिपरस्यापि प्रयोगसत्त्वेन तावन्मात्रस्यापि पृथक्प्रयोगार्हत्वात् । 'बहुपटवः' इत्यादौ प्रातिपदिकत्वसिद्धये (२)स्वातन्त्र्येणेति । तत्र पूर्वं इत्याक्षिप्तपरेषामपि

---

दत्तपदार्थनिष्ठविशेष्यतानिरूपिताभेदसम्बन्धावच्छिन्नगार्ग्यत्वावच्छिन्नप्रकारताकशाब्दबोधे स्वन्तदेवदत्तपदसमभिव्याहृतस्वन्तगार्ग्यपदस्य प्रयोजकतया तादृशाकाङ्क्षापर्याप्तेः स्वन्ते एव सत्वेन तद्रहिते द्वितीयसम्बन्धाभावेनादोषात् । राज्ञः पुरुषेत्यस्य तु स्वत्वसम्बन्धावच्छिन्नराजत्वावच्छिन्नप्रकारताकपुरुषत्वावच्छिन्नविशेष्यताकशाब्दबोधीयाकाङ्क्षायाः राज्ञः-पुरुषेण, पुरुषायेति विभिन्नविभक्त्यन्तानुरोधेन सर्वत्र समानबोधाय षष्ठ्यन्तराजपदसमभिव्याहृतविभक्तिरहितपुरुषपदमात्रे क्लृप्ततया तादृशाकाङ्क्षापर्याप्त्यधिकरणत्वेन तादृशविशेष्यविशेषणभावप्रयोजकत्वेन च व्यावृत्तिर्निर्बाधैवेति दिक्।

**(१)सुबन्तत्वाभावेऽपीति** । सादृश्यज्ञानाधीनोपस्थित्या अर्थबोधकत्वेऽपि शक्तिलक्षणान्यतरज्ञानाधीनोपस्थित्या अर्थबोधकत्वाभावेन प्रातिपदिकत्वाभावादिति भावः।

**(२)स्वातन्त्र्येणेतीति** । स्यादेतत्, स्वातन्त्र्येण प्रयोगार्हार्थवत्वं पूर्वसूत्र इव एतत्सूत्संज्ञाफलभूतेत्यादि यदि परिष्क्रियते तर्हि पञ्चगवधनेत्यादौ पञ्चगवेत्यस्य तादृशार्थवत्त्वस्याभावेन निरुक्तरूपे (स्वातन्त्र्येण प्रयोगार्हार्थवत्पूर्वावयवक इत्याद्युक्ते) नियामकशास्त्रीयोद्देश्यतावच्छेदकसमासत्वव्यापकत्वं न स्यात् तत्र समासत्वस्य सत्त्वेऽप्यर्थवत्पूर्वावयवकत्वस्याभावात् । किञ्च 'राज्ञः पुरुषौ' इत्यादौ पुरुषेत्यस्य चिकीर्षितप्रातिपदिकसंज्ञाफलभूतप्रत्ययेतर 'औ' समभिव्याहारेणैव लोके अर्थविषयकबोधजनकत्वेन राज्ञः पुरुषेति समुदाये स्वातन्त्र्येण प्रयोगार्हार्थवदुत्तरावयवकत्वाभावेन समासग्रहणकृतनियमेन तद्व्यावृत्तिर्न स्यादिति चेत् ? मैवम्, प्रातिपदिकसंज्ञाफलभूतप्रत्यय-पद-एतदन्यतरेतरसमभिव्याहारानपेक्षया लोकेऽर्थविषयकबोधजनकत्वं स्वातन्त्र्येण प्रयोगार्हार्थवत्त्वमिति परिष्कारेणादोषात् । 'राज्ञः पुरुषौ' इत्यादौ औविभक्तेरपि प्रातिपदिकसंज्ञाफलभूतत्वेन तदितरसमभिव्याहारानपेक्षया लोकेऽर्थविषयकबोधजनकत्वेन तत्र समासग्रहणकृतनियमेन व्यावृत्तिः सिध्यति । 'पञ्चगवधनः' 'तान्निभः' 'कुम्भकारः' 'एधांचक्रे' एधामासतुः कल्पं' 'मूलकेनोपदंशम्' इत्यादौ धन, तत्, कुम्भ, चक्रे, एधाम्, मूलकेन, इत्यादिषु प्रातिपदिकसंज्ञाफलभूतप्रत्ययेतरत्वस्य सत्त्वेऽपि पदेतरत्वस्याभावात् प्रातिपदिकसंज्ञाफलभूतप्रत्यय-पद-एतदन्यतरेतरसमभिव्याहारानपेक्षया पञ्चगव, निभ, कार, एधाम्, आसतुःकल्पम्, उपदशम्, इत्यादीनां स्वातन्त्र्येण प्रयोगार्हार्थवत्त्वं निर्बाधम् । न च 'चञ्चासु' 'हरिषु' इत्यादौ सोः निरुक्तस्वातन्त्र्यप्रयोगार्हार्थवत्त्वापत्तिरिति वाच्यम्, इष्टापत्तेः, सोः निरुक्तार्थवत्त्वसत्त्वेऽपि पूर्वभागप्रकृतेस्त-

(१)स्वातन्त्र्येण प्रयोगार्हार्थवतामेव ग्रहणात् (२)'पुत्रकाम्या' इत्यादौ न दोषः । (३)अत एवाङ्गसञ्ज्ञासूत्रे **भाष्ये** "प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम्" (प०भा०) इति परिभाषायाः फलनिरूपणावसरे 'देवदत्तो गार्ग्यः' इति समुदायस्य यञन्तत्वेन प्राप्तप्रातिपदिकसञ्ज्ञाऽभावः (४)फलत्वेनोक्तः । यथाश्रुतमूलोक्तनियमे तु नियमेनैव तदप्राप्त्या **भाष्या-**

---

दभावाच्च। एवमेवोत्तरभागस्यापि स्वातन्त्र्येण प्रयोगार्हार्थवत्त्वं परिष्करणीयमिति दिक्।

**(१)स्वातन्त्र्येण प्रयोगार्हार्थवतामेवेति** । उक्त एवार्थः। **(२)पुत्रकाम्येत्यादाविति** । "अ प्रत्ययात्" (पा०सू० ३।३।१०२) इतिसूत्रविहिताकारप्रत्ययस्य पुत्रकाम्येत्यनेन साकं सामर्थ्येन केवलकाम्यप्रत्ययेनैकार्थीभावाभावेन काम्येत्यत्र शक्त्यभावेन अर्थविषयकबोधजनकत्वप्रकारकतात्पर्यविशेष्यताया अभावेन निरुक्तार्थवत्त्वाभावादिति भावः। **(३)अत एवेति** । उत्तरभागोऽपि स्वातन्त्र्येण प्रयोगार्हार्थवानपेक्षित इति स्वीकारादेवेत्यर्थः **(४)फलत्वेनोक्त इति** । न च 'देवदत्तो गार्ग्यः' इत्यादौ देवदत्तोगार्ग्येत्यस्य चिकीर्षितप्रातिपदिकसंज्ञाफलभूतप्रत्ययेतरसुसमभिव्याहारेणैव लोकेऽर्थविषयकबोधजनकत्वेनार्थवत्सूत्रोक्तार्थवत्त्वाभावादेतत्फलकथनं भाष्योक्तमसङ्गतमिति वाच्यम्, अर्थवदन्तं यत्तद्धितान्तमित्यर्थस्वीकारेण देवदत्तो गार्ग्येत्यस्यार्थवदन्तत्वेन तद्धितान्तत्वेन च तत्सङ्गतेः।

स्यादेतत्, 'देवदत्तेन कृतम्' इत्यादौ कृतेत्यस्य 'देवदत्तो गार्ग्यः' इत्यादौ गार्ग्येत्यस्यापि प्रातिपदिकसंज्ञाफलभूतप्रत्यय--पद—एतदन्यतरेतरसमभिव्याहारानपेक्षया लोकेऽर्थविषयकबोधजनकत्वरूपस्वातन्त्र्यप्रयोगार्हार्थवत्त्वस्य सत्त्वात्समासग्रहणकृतनियमेनैव वारणात्पुनरपि प्रत्ययग्रहणपरिभाषाफलकथनासङ्गतिरिति वाच्यम्, यः समुदायः समासग्रहणकृतानियमशरीराक्रान्तत्वेन विवक्षितः तत्पर्याप्ता यौपस्थापकशक्तिरानुभविकशक्तिरित्येतदन्यतरा तन्निरूपकार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकप्रातिपदिकसंज्ञाफलभूतप्रत्यय--पद–एतदन्यतरेतरसमभिव्याहारानपेक्षया लोकेऽर्थविषयकबोधजनकत्वं स्वातन्त्र्येण प्रयोगार्हार्थवत्त्वमिति परिष्कारेणादोषात्। तथाहि, अभेदसम्बन्धावच्छिन्ना (सम्बन्धानवच्छिन्ना) या गार्ग्यत्वावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपितदेवदत्तत्वावच्छिन्नविशेष्यताकशाब्दानुभवत्वावच्छिन्नं प्रति स्वन्तदेवदत्तपदसमभिव्याहृतस्वन्तगार्ग्यपदत्वप्रकारकज्ञानस्य कारणत्वेन देवदत्तोगार्ग्येत्यत्र औपस्थापकशक्तेरानुभविकशक्तेर्वा पर्याप्तेरभावेन देवदत्तोगार्ग्य इत्येतत्पर्याप्तानुभविकशक्त्यौपस्थापकशक्त्यन्यतरनिरूपकार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकप्रातिपदिकसंज्ञाफलभूतविभक्तीतरत्वेन गार्ग्यपदोत्तरसोः तत्समभिव्याहारापेक्षयैव गार्ग्येत्यस्य लोके अर्थविषयकबोधजनकत्वेन निरुक्तार्थवत्त्वाभावान्न समासग्रहणकृतानिय-

सङ्गतिः स्पष्टैव । एतेन 'वृषण्वसुः' इत्यादौ पूर्वभागस्य भत्वात्पूर्वो भागः पदमित्ययुक्तमित्य(१)पास्तम् ।

**वाक्यस्य नेति** । प्रातिपदिकत्वे हि सुपः श्रवणानापत्तिः । 'पिण्डीम्' इत्यादौ वाक्यैकदेशप्रयोगेऽलुक्समासे चाङ्गाधिकारविहितसुप्प्रत्ययनिमित्तककार्याणां सुबादेशानाञ्च चारितार्थ्यं, विकल्पेन समासविधानञ्च स्वराद्यर्थमिति भावः । शशशृङ्गादिपदानाञ्च बौद्धे शशशृङ्गादौ शक्तिरिति पूर्वेणैव प्रातिपदिकत्वं सिद्धम् । स्वप्नाद्यनुरोधेन च बौद्धपदार्थस्या(२)ऽऽवश्यकत्वम् । अक्षौहिणीरथन्तरादिपदेषु अवयवानामत्यन्तानिरर्थकानामप्यन्यत्र दृष्टार्थारोपेण प्रातिपदिकत्वसुबुत्पत्त्यादिना यथाकथञ्चित्साधुत्वान्वाख्यानं बोध्यम् ।

**अधिकारोऽयमिति** । सञ्ज्ञाऽधिकार इत्यर्थः । सञ्ज्ञात्वावगमस्तु व्याख्यानात् । विकारागमानान्तु न तत्सञ्ज्ञा, 'प्रत्यय' इति महासञ्ज्ञया स्वस्वप्रकृत्यन्यतरार्थप्रत्यायकस्यैव तत्सञ्ज्ञकत्वात् । स्वप्रकृत्यर्थत्वञ्च धातुपाठकोशादौ तमुच्चार्य्य बोधितत्वम् । अत एव नभवधाद्यादेशानां न सञ्ज्ञा । तेषां स्थान्यर्थेनैवार्थवत्त्वं, न तु स्वार्थोऽस्ति । अत एव कोशादौ तदर्थाकथनम् । एतदर्थमेव **भाष्ये** स्वीयमर्थं प्रत्याययन्तीति विग्रहे

---

मेन व्यावृत्तिरिति **भाष्य**सङ्गतिः । 'देवदत्तेन कृतम्' इत्यादौ तु भेदसंसर्गकदेवदत्तप्रकारककृतपदार्थविशेष्यकशाब्दबुद्धित्वावच्छिन्नं प्रति तृतीयान्तदेवदत्तपदसमभिव्याहृतकृतपदत्वप्रकारकं ज्ञानमेव कारणम् , न तु तादृशामन्तकृतपदत्वप्रकारकं ज्ञानम् । अन्यथा 'देवदत्तेन कृतेन' 'देवदत्तेन कृताय' इत्यादौ शाब्दानुभवानुदयप्रसङ्गात् । तथाच देवदत्तेन कृतेत्येतत्पर्याप्तानुभविकशक्तिनिरूपकार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजिकैवाऽम्विभक्तिरिति तदितरसमभिव्याहारानपेक्षया कृतेत्यस्य लोके अर्थविषयकबोधजनकत्वेन निरुक्तार्थवत्त्वस्य सत्त्वेन देवदत्तेनकृतेत्यस्य समासग्रहणकृतनियमेन व्यावृत्तिश्च सिध्यतीति दिक् ।

(१)**अपास्तमिति** । 'वृषण्वसुः' इत्यादौ व्यभिचारेण समासत्वव्यापकत्वस्य पदपूर्वावयवकसमुदायेऽभावेऽपि स्वातन्त्र्येण प्रयोगार्हार्थवत्पूर्वावयवकसमुदाये सत्त्वादिति भावः । (२)**आवश्यकत्वमिति** । ज्ञानमात्रं प्रति विषयस्य कारणत्वेन अतीतानागतविषयकज्ञानोपपत्तये बौद्धविषयकल्पना आवश्यकीति भावः ।

स्वीयपदोपादानम्। **भाष्य**प्रामाण्याच्च तदर्थान्तर्भावेण प्रत्ययशब्दस्य वृत्तिः।

**यत्तु** विकारागमादेशानां देशांशे निराकाङ्क्षत्वात् "परश्च" (पा० सू० ३।१।२) इत्यस्यानुपस्थितौ तत्सन्नियोगशिष्टप्रत्ययसञ्ज्ञाया अप्रवृत्तिरिति, तन्न, श्नमकज्बहुच्(१)प्रवृत्त्यापत्तेः। किञ्च 'लविषीय' इत्यत्र विशेषविहितत्वात्परत्वाच्च पूर्वं सीयुटि ततो लादेशे प्रत्ययसञ्ज्ञासन्नियोगेनेटो विधीयमानमाद्युदात्तत्वं सीयुट एव स्यादत आगमानुदात्तत्वं वक्तव्यमिति "आद्युदात्तश्च" (पा०सू० ३।१।३) इतिसूत्रस्थ**भाष्यकैयटा**सङ्गतिः। लस्थानिकत्वेन देशांशे निराकाङ्क्षत्वेन "परश्च" (पा०सू० ३।१।२) इत्यस्याप्रवृत्तौ (२)"प्रत्ययः" (पा०सू० ३।१।१) इत्यस्याप्यप्रवृत्तौ तत्सन्नियोगकथनासङ्गतेरिति दिक्।

**परश्च** (पा०सू० ३।१।२)। "गुप्तिज्किद्भ्यः" (पा०सू० ३।१।५) इत्यादावपादानत्वासम्भवाद्दिग्योगलक्षणा पञ्चमी। तत्र परः पूर्वो वेत्यत्रानियमेनाध्याहारे प्रसक्ते पर एवेति नियमार्थमिदम्। "गापोष्टक्" (पा० सू० ३।२।८) इत्यादावपि षष्ठ्यर्थ आनन्तर्यं पूर्वपरसाधारणमित्यानियमोऽ-

---

(१)**अप्रवृत्त्यापत्तेरिति**। ननु श्नमि शकारस्य इत्सञ्ज्ञार्थं, 'सर्विका' इत्यादौ इत्वार्थमकचि प्रत्ययत्वस्यावश्यकत्वेऽपि बहुचि प्रत्ययत्वे किं प्रयोजनम्? नच ईषदूनः उः बहुः तस्मात् क्यचि "सर्वप्रातिपदिकानां क्यचि लालसायाम्" (का० वा०) इत्यनेन सुकि 'बहुष्यति' इत्यादौ पूर्वान्तवत्त्वेन प्रत्ययत्वमादाय षत्वार्थं बहुचः प्रत्ययत्वमावश्यकमिति वाच्यम्, तस्य वार्तिकस्य दधिमधुमात्रविषयकत्वस्य शेखरे वक्ष्यमाणत्वात्; इति चेत्? न, ईषदूनः उः बहुः तस्मादाचारक्विबन्तात्कर्तरि क्विपि नपुंसकह्रस्वे च बहिति जाते तस्मादाचारक्विबन्ताद्बनिपि 'बह्वा' इत्यादौ "लोपश्चास्यान्यतरस्यां म्वोः" (पा०सू० ६।४।१०७) इत्यनेन पूर्वान्तवद्भावेन प्रत्ययत्वमादाय उतो लोपार्थं बहुचः प्रत्ययत्वस्यावश्यकत्वादिति दिक्।

(२)**प्रत्यय इत्यस्याप्यप्रवृत्ताविति**। वस्तुतस्तु "भोभगो" (पा०सू० ८।३।१७) इतिसूत्रस्थभाष्यरीत्या प्रत्ययत्वस्य स्थान्यलाश्रितधर्मत्वेन तदनुवृत्तिरावश्यकी। नच स्वस्वप्रकृत्यन्यतरार्थप्रत्यायकत्वरूपप्रत्ययत्वस्याभावात्कथं तिबाद्यादेशानां प्रत्ययत्वमिति वाच्यम्, "लः कर्मणि" (पा० सू० ३।४।६९) इति शास्त्रेण लादेशानां कर्माद्यर्थकत्वस्योक्तत्वेन स्वार्थप्रत्यायकत्वस्य सत्त्वात्।

स्त्येव। अत्र "तस्मात्" (पा०सू० १।१।६७) इतिपरिभाषोत्तराङ्गनि-कला (१)प्रवर्तते इत्यव्यवहिता एव प्रत्ययाः। न चैवं षष्ठ्यंशविकलं सम्पूर्णं सूत्रमुपतिष्ठतां; किं "परश्च" (पा०सू० ३।१।२) इत्यनेनेति वाच्यम्, प्रकृत्यर्थमात्रविवक्षायां केवलप्रकृतेः पच् पत् इत्यादेः (२)प्रयोगो मा भूदिति प्रत्ययः परो भवत्येवेति नियमार्थत्वात्। तेन 'न केवला प्रकृतिः प्रयोक्तव्या, नापि केवलः प्रत्ययः' इति सिद्धम्। अनुकरणे तु अभेदविवक्षया(३)ऽर्थवत्त्वाभावात्प्रातिपदिकत्वाभावेन प्रकृतित्वाभावात् 'गावित्ययमाह' इत्यादौ नानुपपत्तिः। प्रकृतित्वं (४)प्रत्ययविधावुद्देश्यतावच्छेदका-

---

(१)प्रवर्तत इति। उत्तरत्वांशस्य सिद्धत्वात् प्रत्ययविधौ षष्ठ्यंशस्य बाधितत्वाच्च केवलाव्यवहितत्वांश एवोपतिष्ठते इति भावः। (२)प्रयोगो मा भूदितीति। स्यादेतत्, "वर्तमाने लट्" (पा०सू० ३।२।१२३) इत्यस्य वर्तमानकालेतरकालाविवक्षायां धातोर्लट् भवतीत्यर्थेन, "प्रातिपदिकार्थ" (पा०सू० २।३।४६) इत्यस्य प्रातिपदिकार्थेतरार्थाविवक्षायां प्रथमा भवतीत्यर्थेन एकस्मिन्नेकवचनमित्यस्य एकत्वेतरसंख्याया अविवक्षायामेकवचनं भवतीत्यर्थेन च धातोर्लटः, प्रातिपदिकात्प्रथमैकवचनस्य च दुर्वारत्वेन केवलप्रकृतेः प्रयोगो नैव प्राप्नोतीति "परश्च" (पा०सू० ३।१।२) इति सूत्रं पुनरपि व्यर्थमिति चेत्? मैवम्, वाक्ये वाक्यैकदेशन्यायेन 'पिण्डीं' 'पिधेहि' इतिवत् पदे पदैकदेशन्यायेन 'सत्या' 'भामा' 'देवः' 'दत्तः' इतिवच्च समभिव्याहारनियन्तृककार्यविषयेऽपि "सुध्युपास्यः" इत्येतत्तात्पर्येण सुध्य् इति यान्तस्य, 'पाचकः' इत्येतत्तात्पर्येण 'पच्' 'अकः' इत्यादेः प्रयोगस्य च वारणाय समभिव्याहारनियन्तृककार्याणां तत्समभिव्याहाराभावे असाधुत्वबोधनाय "परश्च" (पा०सू० ३।१।२) इति सूत्रस्याऽऽवश्यकत्वादिति दिक्।

(३)अर्थवत्त्वाभावादिति। सादृश्यज्ञानाधीनोपस्थित्याऽर्थविषयकबोधजनकत्वेऽपि शक्तिलक्षणान्यतरज्ञानाधीनोपस्थित्याऽर्थविषयकबोधजनकत्वस्याभावादित्यर्थः। (४)प्रत्ययविधाविति। औत्सर्गिकैकवचनविधावित्यर्थः। यथाश्रुतं तु न युक्तम्। तस्य यावत्प्रत्ययविधौ इत्यर्थे कस्यापि सकलप्रत्ययोद्देश्यत्वासम्भवेनासम्भवापत्तेः, यस्य कस्यचित्प्रत्ययस्य ग्रहणे तु तद्धितप्रत्ययविधौ सुबन्तस्योद्देश्यतया तस्य प्रकृतित्वापत्त्या तावन्मात्रस्यापि प्रयोगानापत्तेः। प्रत्ययविधावुद्देश्यतावच्छेदकाक्रान्तत्वमिति। स्यादेतत्, स्वस्वप्रकृत्यन्यतरार्थप्रत्यायकत्वरूपप्रत्ययत्वशरीरे प्रकृतित्वस्य, मूलोक्तप्रकृतित्वशरीरे प्रत्ययत्वस्य च पतितत्वादन्योन्याश्रय इति चेत्? मैवम्, आगमभिन्न आदेशभिन्नश्च यस्तृतीयचतुर्थपञ्चमाध्यायविधेयस्तन्निष्ठविधेयतानिरूपि-

क्रान्तत्वम् । अयं न्यायः शास्त्राबोधितान्यतरप्रयोगविषयः, अत एव 'लिङ्' 'इयान्' इत्यादौ न दोषः । अत्र प्रकृतिविशेषोद्देशेनैव प्रत्ययानां विधानात् 'नापि केवलः' इति न्यायमूलकम् । एतन्मूलकमेव पठ्यते "अपदं न प्रयुञ्जीत" इति । अपरिनिष्ठितमिति तदर्थः । परिनिष्ठितत्वञ्च अप्रवृत्तनित्यविध्युद्देश्यतावच्छेदकानाक्रान्तत्वम् । निहते तिङन्तादावव्याप्तिवारणाया(१)प्रवृत्तेति । वैकल्पिकेडागमोद्देश्यतावच्छेदकाक्रान्ते 'सेद्धा' इत्यादावव्याप्तिवारणाय नित्येतीति दिक् ।

**ङ्याप्प्रातिपदिकात्** (पा०सू० ४।१।१) । समाहारद्वन्द्वः । ननु "परश्च" (पा०सू० ३।१।२) इत्यनेन (२)प्रकृतेराक्षेपात्प्रातिपदिकाधिकारो व्यर्थः । तिङन्तात्तु न (३)द्वितीयादिः संख्याऽभावात्, संख्यायास्तिङो(४)क्तत्वाच्च । धातुभ्यस्तु न तिङामपवादत्वात् । तस्येत्यादिसमर्थविभक्तिनिर्देशात्, तमब्विधौ "तिङश्च" (पा०सू० ५।३।५६) इति ज्ञापकाच्च न तेभ्यस्तद्धितव्यावृत्त्यर्थः; इति चेत्? न, तदभावे 'स्वार्थद्रव्यलिङ्गसंख्याकारकप्रयुक्तकार्यैः (५)संस्कृतस्य बहिर्भूतापत्यादियोगः, इति "कुत्सिते" (पा०सू० ५।३।७४) इतिसूत्रभाष्योक्तन्यायेन "तस्यापत्यम्" (पा०सू० ४।१।९२) इत्यादौ (६)तत्सम्बन्ध्यपत्यमित्याद्यर्थे प्रथ-

---

तोद्देश्यताश्रयत्वं प्रकृतित्वमिति प्रकृतित्वपरिष्कारेण, अवध्यंशे नित्यसाकाङ्क्षं यद्रूपं तद्रूपावच्छिन्नतृतीयचतुर्थपञ्चमाध्यायघटकपदप्रयोज्यविधेयताश्रयत्वं प्रत्ययत्वमिति प्रत्ययत्वस्य परिष्कारेण वाऽदोषात् । (१)**अप्रवृत्तेतीति** । इदं विशेषणं लक्ष्ये लक्षणन्यायप्रयोज्यसङ्कोचमबुध्वा दत्तम् । अन्यथा तेन न्यायेन स्वस्मिन् स्वविधेयघटितातिरिक्तत्वेन सङ्कोचात्स्वप्रवृत्त्युत्तरं स्वीयोद्देश्यतावच्छेदकाक्रान्तेरभावादिदं विशेषणं व्यर्थम् ।
(२)**प्रकृतेराक्षेपादिति** । परत्वस्यावध्यंशे नित्यसाकाङ्क्षत्वादिति भावः । (३)**द्वितीयादिरिति** । प्रथमायास्तु तद्विधायकसूत्रे 'प्रातिपदिकार्थ' इति सत्त्वेन तिङन्तार्थे न प्राप्तिरिति भावः । एतेन प्रथमोपस्थितत्वात् प्रथमादिरिति वक्तुमुचितमित्यपास्तम् । (४)**उक्तत्वाच्चेति** । 'उक्तार्थानामप्रयोगः' इतिन्यायेन तिङन्तान्न सुबुत्पत्तिरिति भावः । (५)**संस्कृतस्येति** । स्वार्थद्रव्यलिङ्गसङ्ख्याकारकाणां क्रमेणोपस्थित्या येन क्रमेणार्थोपस्थितिस्तेन क्रमेण शब्दप्रादुर्भावेण येन क्रमेण च शब्दप्रादुर्भावस्तेन क्रमेण तत्प्रयुक्तकार्यप्रवृत्तेरिति भावः । (६)**तत्सम्बन्ध्यपत्यमिति** । विशिष्टार्थे प्रत्ययानां विधानेऽपि प्राप्ताप्राप्तविवेकन्यायेन "लोहितोष्णीषा ऋत्विजः

मोच्चारितबोध्यात्प्रत्यय इत्यर्थस्य सत्त्वेन च सार्थकतद्धितानां सुबन्तादुत्पत्त्या अनुदात्तादेरित्यस्य प्राधान्यादुपस्थितसुबन्तविशेषणत्वापत्तौ सर्वस्य विकारः'सार्वः' इत्यत्राञनापत्तेः, (१)"सर्वस्य सुपि" (पा०सू० ६।१।१९१) इत्याद्युदात्तत्वात्। तदधिकारसामर्थ्यात्तु प्रातिपदिकस्यैव तद्विशेषणमिति न दोषः। सर्वशब्दस्यो(२)ञ्छादिपाठेनान्तोदात्तत्वात्। स्पष्टञ्चेदमत्र **भाष्ये**।

न च "अन्तरङ्गानपि"इति न्यायेन लुङ्निमित्तप्रत्ययात्पूर्वमाद्युदात्ताप्राप्तया तस्य सुबन्तविशेषणत्वेऽपि न दोष इति वाच्यम्, तेन न्यायेन धर्मिग्राहकमानाद(३)न्तरङ्गनिमित्तविनाशकलुक एव प्राबल्यबोधनेन दोषात्। "सर्वस्य सुपि" (पा०सू० ६।१।१९१) इत्यत्र सौवरीणां सप्तमीनां तदन्तसप्तमीत्वात् प्रत्यये परतः (४)पूर्वकार्यत्वाभावेन 'न लुमता" (पा०सू०

---

प्रचरन्ति" इतिवदपत्यादिमात्रार्थकत्वं प्रत्ययानामिति बोध्यम्। (१)**सर्वस्य सुपीति**। 'सौवर्यः सप्तम्यः तदन्तसप्तम्यः' इति "भीह्री" (पा० सू० ६।१।१९२) इतिसूत्रस्थेन 'प्रत्ययात्पूर्वं पिति' इत्यनेन ज्ञापितया परिभाषया सुबन्तस्य सर्वशब्दस्याऽऽदिरुदात्त इति तदर्थः। (२)**उञ्छादिपाठेनेति**। "स्वाङ्गशिटामदन्तानाम्" (शा० फि० २१) इत्याद्युदात्तबाधनार्थमयं पाठ इति भावः। नच पूर्वं सर्वशब्दस्योञ्छादिपाठेनान्तोदात्तत्वेऽपि पश्चात् "सर्वस्य सुपि" (पा० सू० ६।१।१९१) इत्यनेनाऽऽद्युदात्ततयोञ्छादिषु तत्पाठो व्यर्थ एवेति वाच्यम्, "अल्पाच्तरम्" (पा० सू० २।२।३४) इति निर्देशेन तरप्प्रत्ययस्यात्यन्तस्वार्थिकत्वबोधनात् सर्वशब्दादत्यन्तस्वार्थिके तरपि कृते तत्रान्तोदात्तश्रवणार्थम्, आचारक्विबन्ताल्लटि 'सर्वति' इत्यादौ तच्छ्रवणार्थं च तस्य चारितार्थ्यात्। न च 'सर्वति' इत्यादौ "धातोः" (पा० सू० ६।१।१६२) इत्यन्तोदात्तत्वम्, तस्य नामधातुष्वप्रवृत्तेः। अत एव काम्यचश्चित्त्वं चरितार्थमिति दिक्।

(३)**अन्तरङ्गनिमित्तविनाशकलुक एवेति**। लुक्यन्तरङ्गनिमित्तविनाशकेतिविशेषणदानाद् 'अतिभवकान्' इत्यत्राकच् सिध्यति। अन्यथा लुक्यन्तरङ्गनिमित्तविनाशकत्वाभावस्य सत्त्वेऽपि समाससंज्ञायां तत्सत्त्वेनाकज्न स्यात्। अत एव 'अर्णुहि' इत्यादावन्तरङ्गनिमित्तविनाशकत्वाभावाल्लुकः पूर्वं गुणे संयोगपूर्वकत्वाद्य लुक्। एवं 'राजपुत्री' इत्यादौ बहिरङ्गसमासादेः प्राक् शार्ङ्गरवादिपाठान् ङीनि "ञ्नित्यादिर्नित्यम्" (पा० सू० ६।१।१९७) इत्याद्युदात्तत्वं सिध्यतीति दिक्।

(४)**पूर्वकार्यत्वाभावेनेति**। लुप्तप्रत्ययाव्यवहितपूर्वत्वेन साक्षादवच्छिन्ना लुप्तप्रत्ययनिमित्तकाङ्गसंज्ञावत्पर्याप्तधर्मेण साक्षात्परम्परया वा अवच्छिन्ना या उद्देश्यता

१।१।६३) इत्यस्याप्राप्तौ प्रत्ययलक्षणेन सुबन्ततया तस्यान्तरङ्गनिमित्तविनाशकत्वाभावात् । अत एव सर्वस्तोमादिबहुव्रीहेराद्युदात्तत्वसिद्धिः । न चानुदात्तादिप्रकृतिकषष्ठ्यन्तादित्यर्थेन न दोष इति वाच्यम् । "गर्गादिभ्यः" (पा०सू० ४।१।१०५) इत्यादौ सुबन्तं प्रति गर्गादीनां विशेषणत्वासम्भवादगत्या लक्षणास्वीकारेऽपि प्रकृते लक्षणायां (१)मानाभावात् । वस्तुतस्तत्रापि न लक्षणा । गर्गादिरूपात्प्रातिपदिकात्तत्सम्बन्ध्यपत्यमित्यर्थे प्रत्यय इत्यर्थे प्रातिपदिकात्परत्वं तद्व्यवधानेन (२)भविष्यति । तदव्यतिरिक्तव्यवधाने तु न, मानाभावात् । एतच्च मतुप्सूत्रे **कैयटे** स्पष्टमित्यन्यत्र विस्तरः ।

(३)**लिङ्गविशिष्टस्येति** । इयञ्च (४)प्रातिपदिकसामान्यग्रहणे (५)तद्विशेषग्रहणे च । अनया परिभाषया ङ्याब्ग्रहणवैयर्थ्यस्य **भाष्ये**

---

तादृशोद्देश्यताकत्वस्य "सर्वस्य सुपि" (पा० सू० ६।१।१९१) इत्यत्राभावेन "न लुमता" (पा० सू० १।१।६३) इति निषेधाप्रवृत्तेरिति भावः । (१)**मानाभावादिति** । "तस्य विकारः" (पा० सू० ४।३।१३४) इत्यादौ तस्येत्यस्य षष्ठ्यन्ततदाद्यर्थबोधकत्वेन तदेकदेशषष्ठ्यां 'पदार्थः पदार्थेन' इति न्यायेनानुदात्तादिप्रकृतिकेत्यस्यान्वयासम्भवाच्चेत्यपि बोध्यम् । (२)**भविष्यतीति** । "घकालतनेषु" (पा० सू० ६।३।१७) इतिज्ञापकात् 'स्वार्थे परिपूर्णमर्थान्तरेण युज्यते' इति "कुत्सिते" (पा सू० ५।३।७४) इतिसूत्रस्थ**भाष्य**प्राप्तन्यायाच्चेति भावः ।

(३)**लिङ्गविशिष्टस्येतीति** । लिङ्गबोधकप्रत्ययविशिष्टस्येत्यर्थः । वै० च स्वघटितत्वं, स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयघटितत्वं, स्वविशिष्टाघटितत्वमेतत्त्रितयसम्बन्धेन । स्ववैशिष्ट्यञ्च–स्वेतरत्वं, स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयेतरत्वमेतदुभयसम्बन्धेन । (४)**प्रातिपदिकसामान्यग्रहणे इति** । प्रातिपदिकत्वेन रूपेण तद्ग्रहणे इत्यर्थः । (५)**तद्विशेषग्रहण इति** । प्रातिपदिकत्वव्याप्यधर्मावच्छिन्नग्रहणे इत्यर्थः । नन्वेवं "कुमारः श्रमणादिभिः" (पा० सू० २।१।७०) इति ज्ञापकासङ्गतिः । कुमारशब्दत्वस्य 'कुमार क्रीडायाम्' इति धातावपि सत्त्वेन प्रातिपदिकत्वव्याप्यत्वस्य कुमारशब्देऽभावात् । नच समर्थकुमारशब्दत्वं प्रातिपदिकत्वव्याप्यं भवत्येवेति न दोष इति वाच्यम्, अदन्तप्रातिपदिकत्वस्यापि प्रातिपदिकत्वव्याप्यत्वेनाज्ञया रमाशब्देऽतिदेशेन "अत इञ्" (पा०सू० ४।१।९५) इतीञापत्तेः, इतिचेत् ? न, तद्विशेषग्रहणे इत्यस्य पदप्रतिपाद्यप्रातिपदिकत्वव्याप्यधर्मावच्छिन्नस्य ग्रहणे इत्यर्थेनादन्त-

शङ्कितत्वाद् ; विशेषविषये बहुतरोदाहरणदानाच्च । स्त्रीप्रत्ययसमभिव्याहारे प्रातिपदिकत्वतद्व्याप्य(१)धर्मा विशिष्टेऽनेनातिदिश्यन्ते । अत एव "बहुव्रीहेरूधसः" (पा०सू० ४।१।२५) इति सूत्रे **भाष्ये** "नद्यृतश्च" (पा०सू० ५।४।१५३) इत्यस्य नद्यन्तबहुव्रीहेरित्यर्थे 'कुण्डोध्नी' इत्यत्र कप्राप्तिः । अन्यथा तु ङ्यन्तस्य बहुव्रीहित्वाभावात्तदसङ्गतिः । (२)नद्यन्तानां यो बहुव्रीहिरित्यर्थेन च परिहृत इत्यन्यत् ।

समासान्तेषु तत्परिभाषाऽभावस्तु ङ्याप्सूत्र**भाष्यो**क्तो (३)ऽवयवविषय एव । समुदायविषये तत्प्रवृत्तावपि दोषाभावेन तदंशे तदप्रवृत्तौ न मानमित्याशयः । **ङ्याबन्तादिति ।** ङ्याब्ग्रहणं स्त्रीप्रत्ययमात्रोपलक्षणम् । तेन 'ब्रह्मबन्धूतरा' 'युवतितरा' इत्यादेः सिद्धिः । "जातेश्च" (पा०सू० ६।३।४१) इति निषेधान्न पुंवत्त्वम्, वयोवाचिनां वैकल्पिकजातिकार्यस्य वक्ष्यमाणत्वात्

---

प्रातिपदिकत्वस्य वाक्यप्रतिपाद्यत्वेन, कुमारपदस्य समर्थकुमारप्रकृतिके लक्षणया समर्थकुमारत्वस्य च पदप्रतिपाद्यत्वेनादोषात् ।

**अन्येतु** तद्विशेषणग्रहणे इत्यस्य प्रातिपदिकमात्रग्रहणे इत्यर्थः । तत्त्वञ्च प्रातिपदिकमात्रवृत्तिविषयताप्रयोजकत्वम् । विषयतायां प्रातिपदिकमात्रवृत्तित्वञ्च प्रातिपदिकवृत्तित्वे सति प्रातिपदिकेतरनिरूपितवृत्तित्वाभाववत्त्वम् । अभावश्च सामानाधिकरण्येनान्वयाप्रयोज्यो विवक्षितः । तथाच अत्पदप्रयोज्यविषयतायां प्रातिपदिकेतरनिरूपितवृत्तित्वाभावश्च अत्पदार्थस्य प्रातिपदिकपदार्थेन साकं सामानाधिकरण्येनान्वयप्रयोज्य एवेति न दोष इत्याहुः ।

(१)**धर्मा इति ।** 'लिङ्गबोधकप्रत्ययनिष्ठविधेयतानिरूपितोद्देश्यताश्रयपर्याप्ता' इति शेषः । (२)**नद्यन्तानां यो बहुव्रीहिरिति ।** नद्यन्तोत्तरपदकबहुव्रीहिरित्यर्थः ।

(३)**अवयवविषय एवेति ।** अत एव अतिशयिताः श्रेयांसो यस्यां नगर्यां सा अतिश्रेयसी, अः अतिश्रेयसी यस्मिन् स 'आतिश्रेयसी' अतिशयिताः भ्रातरो यस्यां नगर्यामतिभ्रात्री, अः अतिभ्रात्री यस्य स 'आतिभ्रात्रिः' इत्यादौ "ईयसश्च" (पा०सू० ५।४।१५६) "वन्दिते भ्रातुः" (पा०सू० ५।४।१५७) इति कन्निषेधः, कियतः समीपमुपकियतं तस्मात् ण्यन्तात्क्विपि उगित्त्वात् ङीपि उपाकियती, आ उपकियती यस्मिन् 'ओपकियतम्' इत्यत्र "अव्ययीभावे शरत्प्रभृतिभ्यः" (पा०सू० ५।४।१०७) इति टच्च सिध्यति ।

**तद्धित इति ।** एतच्च समासान्ततिप्रत्ययाद्यतिरिक्तपरं व्याख्यानात् । एतेन 'यूनीतिः' 'बहुगोमतीका' इति स्यादित्यपास्तम् । एवञ्च स्त्रीप्रत्ययेषु, अत्यन्तस्वार्थिकानारभ्य तद्धितेषु च ङ्याब्ग्रहणासम्बन्धो व्याख्यानात् । अत एव 'लोहिनिका' इत्येतत्सिद्धये "लोहितात्लिङ्गबाधनं वा" इति (१)चरितार्थम् । अत्यन्तस्वार्थिकानां सुबुत्पत्तेः पूर्वमुत्पत्तिरिति "सर्वस्य द्वे" (पा०सू० ८।१।१) इति सूत्रे **भाष्ये** स्पष्टं, **कैयटे** च । तत्र हि पदस्येत्यस्य प्रयोजनं—द्विपदिकेत्यादौ द्वित्वसंख्यायुक्तपदार्थस्य वीप्सितत्वात् वीप्सायामेकत्वलक्षणसंख्याया अनन्तर्भावात्समासाद्विभक्त्यभावेन पदत्वाभावात्प्राक् तद्धितोपत्तेर्द्विर्वचनाभाव (२)इत्युक्तम् । "पुंयोगाद्" (पा०सू० ४।१।४८) इति सूत्रे **भाष्येऽ**प्येतत्स्फुटम् । तत्र हि "गतिकारकोपपदानाम्" (प०भा०) इत्यस्याः 'साङ्कूटिनम्' इति प्रयोजनमुक्तम् । तत्र हि अभिविधौ भाव इनुणि कूटिन्शब्दादण्प्रत्ययविभक्त्योः प्राप्तयोः स्वार्थिकत्वेनान्तरङ्गत्वादाणि कूटिन्नित्यस्यैव वृद्धिः स्यादित्युक्तम् । तस्यापि सुबन्तादुत्पत्तौ तु पूर्वं सुपि इनुणन्तत्वरूपाधिकसापेक्षत्वेन बहिरङ्गतयाऽणः पूर्वं समासे विशिष्टादणि रूपसिद्धौ (३)**भाष्या**सङ्गतिः । प्राक्सुबुत्पत्तेः समासे तु उक्तरीत्यैवान्तरङ्गत्वात्पूर्वं समासे ततो विशिष्टादणिति साङ्कूटिनासिद्धिरित्यन्यत्र विस्तरः ।

**स्वौजस** (पा०सू० ४।१।२) । सूत्रे (४)समाहारद्वन्द्वः । **टङपा-**

---

(१)**चरितार्थमिति ।** अन्यथा 'लोहिनिका' इत्यादौ ङ्यन्तादेव तद्धितोपत्त्या तत्सिद्ध्यर्थं तद्वार्तिकप्रणयनमसङ्गतं स्यादिति भावः । (२)**इत्युक्तमिति ।** अयं भावः 'द्विपदिका' इत्यादौ द्वीत्यस्य पादेत्यस्य च पदत्वेऽपि तदर्थमात्रगतवीप्साया अभावाद्विशिष्टस्य च पदत्वाभावात्तद्धितान्तेन वीप्साया उक्तत्वाच्च न द्विर्भावः । स्वार्थिकप्रत्ययानां सुबुत्पत्त्युत्तरमुत्पत्तौ तु द्विपादेत्यस्यापि प्रत्ययलक्षणेन पदत्वाद्भाष्यासङ्गतिः स्पष्टैवेति । (३)**भाष्यासङ्गतिरिति ।** वस्तुतस्तु संकूटिन्निति शब्दस्वरूपसमुदायस्य अणुसमासयोः समानत्वेन बहिरङ्गत्वाभावेन परत्वादाणि 'सङ्कौटिनम्' इति स्यादिति भाष्योक्तदूषणं सञ्चच्छत एवेति नैतद्भाष्यं सुबुत्पत्तेः प्राक् स्वार्थिकप्रत्ययोत्पत्तौ नवीनमते मानम् । किन्तु प्राचीनैस्तथा स्वीकारेण तन्मते एवासङ्गत्यभिधानमिति दिक् ।

(४)**समाहारद्वन्द्व इति ।** तृतीयाद्विवचन'भ्याम्' पर्यन्तं समाहारद्वन्द्वं कृत्वा

**श्चेत इति** । न च फलाभावः; लोपस्यैव फलत्वात् । (१)तत्र तत्रेतरव्यावृत्त्या चरितार्थानां लोपफलकत्वस्वीकारे बाधकाभावात् । काम्यजादौ तु लोपे सति वर्णोच्चारणवैयर्थ्यान्न तन्मात्रफलिकेत्सञ्ज्ञेति बोध्यम् ।

"न विभक्तौ" (पा०सू० १।३।४) इति निषेधोपयोगिनीं विभक्तिसञ्ज्ञामाह-**विभक्तिश्च** (पा०सू० १।४।१०४) । चकार एकसञ्ज्ञाधिकारेऽपि पुरुषवचनसञ्ज्ञाभ्यां (२)समावेशार्थः । अन्यथा पर्यायः स्यात् । "सुपः" (पा०सू० १।४।१०३) इति सूत्रं, "तिङस्त्रीणि" (पा०सू० १।४।१०१) इति सूत्रात्तिङ इति चानुवर्तते । "प्रथमयोः" (पा०सू० ६।१।१०२) इत्यादौ व्याख्यानात्प्राचां वैयाकरणानां प्रथमाद्वितीयापदवाच्ययोर्ग्रहणं बोध्यम् । अन्यथा "औजसोः पूर्व" इत्येव वदेत् । विभक्तिप्रदेशेषु सुप्तिङिति न वक्तुं शक्यम् । 'यत्र' 'तत्र'इत्यादौ त्यदाद्यत्वानापत्तेः । तेषां सुप्सञ्ज्ञा त्वशक्या, 'एतर्हि' इत्यादौ "सुपि च" (पा०सू० ७।३।१०२) इति (३)दीर्घापत्तेः । **सप्तम्यन्ता इति** । स्त्रीलिङ्गा इति

---

तदनन्तरं चतुर्थीद्विवचन'भ्याम्'पर्यन्तं समाहारद्वन्द्वं कृत्वा तदनन्तरं पञ्चमीद्विवचन'भ्याम्' पर्यन्तं समाहारद्वन्द्वं कृत्वा तदनन्तरं षष्ठीद्विवचन 'ओस्' पर्यन्तं समाहारद्वन्द्वं कृत्वा ततश्चावशिष्टानां समाहारद्वन्द्वं कृत्वा सर्वेषां समाहारद्वन्द्वानां समाहारद्वन्द्व इति भावः । अत एव भ्यामोः भ्यसोः ओसोश्च नैकशेषः । ननु "एचोऽयवायावः" (पा०सू० ६।१।७८) इत्यादाविव लोपमात्रफलकत्वे इत्संज्ञैव न स्यादत आह--(१)तत्र तत्रेत्यादिना ।

(२)**समावेशार्थ इति** । वस्तुतस्तु स्वतादात्म्यं, स्वप्रतियोगिकविधेयानुयोगिकसंसर्गघटकनिरूपितत्वसमसंख्याकनिरूपितत्ववत्संसर्गप्रतियोगिकत्वमेतदुभयसम्बन्धेन यत्किञ्चिच्छास्त्रीयोद्देश्यतावच्छेदकविशिष्टोद्देश्यतावच्छेदककत्वरूपसमानावधित्वस्य तत्र स्वीकारेण "विभक्तिश्च" (पा०सू० १।४।१०४) इति शास्त्रीयोद्देश्यतावच्छेदकतिङ्त्वस्य "तिङस्त्रीणि" (पा०सू० १।४।१०१) इतिशास्त्रीयोद्देश्यतावच्छेदकतिङ्त्वे तादात्म्यस्य सत्त्वेऽपि तदीयोद्देश्यतावच्छेदकतावच्छेदकातिङ्त्वे स्वप्रतियोगिकविधेयानुयोगिकसंसर्गघटकनिरूपितत्वसमसङ्ख्याकनिरूपितत्ववत्संसर्गप्रातियोगित्वस्याभावेन समानावधित्वाभावादाकडारसूत्राप्राप्तया चकारः सुप्तिङनुवृत्तिमात्रफलक एवेति बोध्यम् ।

(३)**दीर्घापत्तेरिति** । ननु 'एतर्हि' इत्यादौ "इदमोर्हिल्" (पा०सू० ५।३।१६) इत्यत्र 'इदमो ऽर्हिल्' इतिच्छेदेन न दीर्घापत्तिः । तथाच "प्रागिदशः सुप्" इति

शेषः । **प्राचाम्** वैयाकरणान्तराणाम् । **इहापि** अस्मिन् व्याकरणेऽपि ।

**सुपः** (पा०सू० १।४।१०३) । सुबिति प्रत्याहारात्षष्ठ्यत्र ।

**द्व्येकयोः** (पा०सू० १।४।२२) । नियमार्थे इमे । इह सूत्रे द्व्येकशब्दौ संख्यापरौ, न संख्येयपरौ बहुवचनापत्तेः, तदाह—**द्वित्वैकत्वयोरिति** । लौकिकप्रयोगे तु 'आदशतः संख्याः संख्येये' इति **कोशभाष्याद्युक्तेः** संख्येयपरत्वे एव प्रायः साधुत्वम् । क्वचित्संख्यापरत्वेऽपि संख्येयगतसंख्यारोपेण साधुत्वम् । अत एव कस्य द्वित्वे इत्याद्यर्थे 'कयोर्द्वयोः' 'केषां बहुषु' इति **भाष्ये** प्रयुक्तमिति बोध्यम् । एकशब्दो द्विशब्दसाहचर्यात्संख्यावाच्येव । एकग्रहणन्त्यक्त्वैकवचनमुत्सर्गः कर्तव्यस्तेनाव्ययेभ्यः 'पचतिकल्पम्' इत्यादौ च व्यर्थैकवचनप्रयोगसिद्धिरिति "तद्धितश्च" (पा०सू० १।१।३८) इति सूत्रे **भाष्ये** स्पष्टम् ।

**बहुषु** (पा०सू० १।४।२१) । बहुशब्दोऽत्र त्रित्वादिपरार्द्धान्तसंख्यानां व्यापको यो धर्मविशेषो बहुत्वं तत्परः । बहुवचनं स्वाश्रयगतबहुत्वं धर्मे आरोप्य कृतम् । तेन वैपुल्यवाचिनो न ग्रहणम् । 'दाराः' इत्यादौ त्ववयवादिगतबहुत्वस्यावयविन्यारोपो बोध्यः । स च कोशवृद्धव्यवहारानुसारेणैवेति नातिप्रसङ्गः । 'भर्तृदारयोरस्तेजसोः' इत्यादौ **वृत्तौ** तु द्विवचनमेव, आरोपे मानाभावात् । अत एव "द्व्येकयोः" इति सङ्गच्छते । एतेनैकस्मिन्नपि 'गुरवः समागताः' इत्यादि समर्थितम् । अन्वर्थसञ्ज्ञयैव सिद्धे इदं सूत्रद्वयं स्पष्टार्थम् । **राम इति** । रुत्वे (१)एकदेशविकृतन्यायेन सुबन्ततया पदत्वाद्विसर्गः ।

---

न्यासे न दोषः । नचार्हिंलिति न्यासे 'एतर्हि' इत्यादौ "एतेतौ रथोः" (पा०सू० ५।३।४) इत्यनेनैतादेशानापत्तिरिति वाच्यम् , 'एतेतावथोः' इति न्यासं कृत्वा अकारादौ थकारादौ च प्राग्दिशीये परे इदमेतदोः एत इत इत्यादेशौ स्त इत्यर्थेनादोषात्, इति चेत् ? न, 'सदा' 'सर्वदा' इत्यादौ दाप्रत्ययस्य सुप्संज्ञायां "सर्वस्य सुपि" इत्याद्युदात्ततापत्तेः । कतरशब्दात् ण्यन्तात्क्विपि तस्मात्तसिल्प्रत्यये 'कतस्तः' इत्यादौ तसिलः सुप्त्वेन "रोःसुपि" (पा०सू० ८।३।१६) इति नियमाद्विसर्गाभावेन सत्वानापत्तेश्चेति दिक् । (१)**एकदेशविकृतन्यायेनेति** । *स्थानिवद्भावेनेत्यर्थः ।

---

*आनुमानिकस्थानिवद्भावेनेत्यर्थः ।

(१)सरूपाणामे (पा० सू० १।२।६४)। "वृद्धो यूना" (पा० सू० १।२।६५) इति सूत्रादेवकारो (२)ऽपकृष्यत इत्याह—सरूपाणां

(१) सरूपाणामे (पा०सू० १।२।६४)। (२)अपकृष्यत इति। स्यादेतत्, सरूपाणामिति निर्धारणे षष्ठी। सारूप्यवदारब्धसमुदायघटकानामित्यर्थः। तत्र न तावत् अपकृष्टैवकारः सारूप्यवदारब्धसमुदायघटकानामित्यनन्तरं योजयितुं शक्यः। सारूप्यवदारब्धसमुदायघटकानामेवैकः शिष्यते इत्युच्यमाने एवपदवैयर्थ्यापत्तेः। नापि सारूप्यवदारब्धसमुदायानन्तरं योजयितुं शक्यः। सारूप्यवदारब्धसमुदायमात्रघटकानामित्युच्यमानेऽप्येवपदवैयर्थ्यापत्तेः। नापि सारूप्यवदित्यनन्तरं योजयितुं शक्यः सारूप्यवन्मात्रारब्धसमुदायघटकानामित्युच्यमानेऽपि जननीपरिच्छेत्तृवाचिनोर्मातृशब्दयोर्भ्यामादौ समुदायस्य सारूप्यवन्मात्रारब्धत्वेनैकशेषापत्तेः। नापि सारूप्यानन्तरं योजयितुं शक्यः। सारूप्यमात्रवदारब्धसमुदायघटकानामित्युच्यमाने मृगीवाचकहरिणीशब्दस्य वर्णवाचकहरिणीशब्दस्य तद्धितादौ वैरूप्यसत्त्वेन 'हरिणीहरिणी' इति समुदाये सारूप्यमात्रवदारब्धत्वस्याभावेन तयोरेकशेषानापत्तेः, इति चेत्। मैवम्। विभक्तौ परतः सारूप्यमेव येषां दृष्टं तेषामेकः शिष्यते इतिसूत्रार्थकरणेनादोषात्। तथाच हरिणीशब्दयोर्विभक्तौ परतः सारूप्यस्यैव दर्शनादेकशेषः सिद्ध्यति। मातृशब्दयोस्तु औजसादिषु वैरूप्यदर्शनान्नैकशेष इति दिक्।

अत्रेदं विचार्यते, विभक्तौ परतः सारूप्यमेव येषां तेषां तत्त्वं किम्? न तावत् स्ववृत्ति-विभक्त्यव्यवहितपूर्वत्वसमानाधिकरणयावद्रूपवत्त्वसम्बन्धेन स्वविशिष्टत्वं तत्त्वम्। नित्यबहुवचनान्ताक्षतशब्दस्य क्षतशून्यार्थकसर्वविभक्त्यन्ताक्षतशब्दस्य चैकशेषानापत्तेः। विभक्त्यव्यवहितपूर्वत्वविशिष्टसर्वविभक्त्यन्ताक्षतशब्दवृत्त्येकविंशतिरूपवत्त्वस्य नित्यबहुवचनान्ताक्षतशब्देऽभावात्। नापि स्वाव्यवहितोत्तरत्वप्रकारकयावद्विभक्तिविशेष्यकसम्भावनाप्रयोज्यतावद्विभक्त्यव्यवहितपूर्वत्वप्रकारकयावद्रूपविशेष्यकसम्भावनाप्रयोज्यतावद्रूपवत्त्वप्रकारकसम्भावनाविशेष्यत्वसम्बन्धेन स्वविशिष्टत्वं तत्त्वम्। यद्यस्मान्नित्यबहुवचनान्ताक्षतशब्दाद्यावत्यो विभक्तयो भवेयुः तावद्विभक्त्यव्यवहितपूर्वत्ववन्ति यावन्ति रूपाणि भवेयुः तावद्रूपवानयं भवेदित्याकारकसम्भावनाविशेष्यत्वसम्बन्धेन निरुक्ताक्षतशब्दयोः परस्परवैशिष्ट्यसत्त्वेन दोषाभावेऽपि संज्ञाभूतसर्वशब्दस्य सर्वनामसर्वशब्दस्य च स्वाव्यवहितोत्तरत्वप्रकारकयावद्विभक्तिविशेष्यिका या सम्भावना अस्मात्संज्ञाभूतसर्वशब्दाद्यावत्यो विभक्तयो भवेयुरित्याकारिका तादृशसम्भावनाप्रयोज्या या तावद्विभक्त्यव्यवहितपूर्वत्वप्रकारकयावद्रूपविशेष्यिका सम्भावना तावद्विभक्त्यव्यवहितपूर्वत्ववन्ति यावन्ति रूपाणि भवेयुरित्याकारिका तादृशसम्भावनाप्रयोज्या या तावद्रूपवत्त्वप्रकारिका सम्भावना 'तावद्रूपवानयं

भवेत्' इत्याकारिका तादृशसम्भावनाविशेष्यत्वसम्बन्धेन परस्परं वैशिष्ट्यसत्त्वेनैकशेषापत्तेः । न चेष्टापत्तिः, यथा 'समाननगरे समानैव वृत्तिर्येषां तेषामेको गुरुर्भवति अन्ये तस्य शिष्या भवन्ति' इति वाक्यस्य काश्यां प्रयागे गयायां च व्यत्ययेन याजनाध्यापनप्रतिग्रहान् कुर्वन्तो ब्राह्मणा न विषयाः तथा विभक्तौ परतः सारूप्यमेव येषां तेषामेकः शिष्यते अन्ये लुप्यन्ते इतिवाक्यस्यापि संज्ञाभूतसर्वशब्दसर्वनामसंज्ञकसर्वशब्दविषयकत्वस्य वक्तुमशक्यत्वात्; इति चेत् । मैवम् । स्ववृत्तिरूपविशिष्टरूपवद्भिन्नत्वमिति परिष्कारेणादोषात् । रूपवैशिष्ट्यञ्च रूपे स्वभिन्नत्वं, स्वाश्रयप्रकृतिकविभक्तिवृत्तिविभक्तिविभाजकधर्मवद्विभक्त्यव्यवहितपूर्वत्वसामानाधिकरण्यमेतदुभयसम्बन्धेन । संज्ञाभूतसर्वशब्दस्य सर्वनामसंज्ञकसर्वशब्दस्य च नैकशेषः । स्वं संज्ञाभूतसर्वशब्दः तद्वृत्तिरूपं 'सर्वाय' इत्यत्र 'सर्वा' इति, तद्भिन्नत्वस्य स्वाश्रयप्रकृतिकविभक्तिवृत्तिविभक्तिविभाजकङेत्वावच्छिन्नाव्यवहितपूर्वत्वसामानाधिकरण्यस्य च 'सर्वस्मै' इत्यत्र 'सर्व' इत्याकारकरूपे सत्त्वेन स्ववृत्तिरूपविशिष्टरूपवद्भिन्नत्वरूपतत्त्वस्याभावात् । नित्यबहुवचनान्ताक्षतशब्देऽपि न दोषः 'अक्षतेभ्यः' इत्यत्र 'अक्षते' इत्येतद्रूपभिन्नत्वस्य 'अक्षताय' इत्यत्र सत्त्वेऽपि स्वाश्रयप्रकृतिकभ्यस्वृत्तिविभक्तिविभाजकभ्यस्त्वधर्मवद्विभक्त्यव्यवहितपूर्वत्वसामानाधिकरण्यस्याभावेन निरुक्ततत्त्वस्य सत्त्वात् । एवं समाननगरे समानैव वृत्तिर्येषां तेषां तत्त्वमपि स्ववृत्तिवृत्तिविशिष्टवृत्तिमद्भिन्नत्वमिति परिष्करणीयम् । वृत्तिवैशिष्ट्यञ्च वृत्तौ स्वभिन्नत्वं, स्वाश्रयनगरवृत्तिनगरत्वव्याप्यधर्मसामानाधिकरण्यमेतदुभयसम्बन्धेन ।

नचैवमपि मति—जराशब्दादावेकशेषानापत्तिः । तथाहि, स्ववृत्तिरूपं 'मत्यै' इत्यत्र 'मत्' इति तद्भिन्नत्वस्य, स्वाश्रयप्रकृतिकविभक्तिवृत्तिविभक्तिविभाजकङेत्वधर्मावच्छिन्नाव्यवहितपूर्वत्वसामानाधिकरण्यस्य च 'मतये' इत्यत्र 'मतय्' इतिरूपे सत्त्वेन स्ववृत्तिरूपविशिष्टरूपवद्भिन्नत्वस्याभावादिति वाच्यम् । स्वभिन्नत्वमित्यत्र स्वविशिष्टभिन्नत्वमिति निवेशेनादोषात् । वै० च स्वसामानाधिकरण्यं, स्वाश्रयप्रकृतिकविभक्तिवृत्तिविभक्तिविभाजकधर्मवद्विभक्त्यव्यवहितपूर्वत्वसामानाधिकरण्यमेतदुभयसम्बन्धेन । मत्य् इत्येतद्रूपसामानाधिकरण्यस्य, एतद्रूपाश्रयप्रकृतिकविभक्तिवृत्तिविभक्तिविभाजकधर्मवद्विभक्त्यव्यवहितपूर्वत्वसामानाधिकरण्यस्य च 'मतय्' इतिरूपे सत्त्वेन स्वविशिष्टभिन्नत्वस्याभावात् ।

संज्ञाभूत-सर्वनाम—सर्वशब्दयोरेकशेषवारणाय द्वितीयसम्बन्धदानम् । अन्यथा स्वसामानाधिकरण्येन 'सर्वाय' इत्यत्रत्य 'सर्वा' इति रूपवैशिष्ट्यस्य 'सर्व' 'सर्वे' इत्यादिसर्वरूपेषु सत्त्वेन 'सर्वस्मै' इत्यत्रत्य 'सर्व' इति रूपे स्वविशिष्टभिन्नत्वाभावात् तद्घटितनिरुक्तोभयसम्बन्धेन रूपवैशिष्ट्यस्य तत्राभावेन । उदासीनघटादिशब्दरूपे एव रूपवैशिष्ट्यसत्त्वेन तद्वद्भिन्नत्वस्य सर्वनामसर्वशब्दे सुलभत्वादेकशेषापत्तिर्दुर्वारा । स्वाश्रयप्रकृतिकेत्यादिद्वितीयसम्बन्धोपादाने तु न दोषः । 'सर्वाय' इत्यत्रत्य 'सर्वा'

इति रूपवैशिष्ट्यस्य स्वसामानाधिकरण्य, स्वाश्रयप्रकृतिकविभक्तिवृत्तिविभक्तिविभाजक- धर्मवद्विभक्त्यव्यवहितपूर्वत्वसामानाधिकरण्योभयसम्बन्धेन 'सर्वा' इति रूपे एव सत्त्वेन 'सर्व' 'सर्वे' इत्यादिरूपेषु तदभावात् स्वविशिष्टभिन्नत्वघटितनिरुक्तोभय- सम्बन्धेन रूपवैशिष्ट्यस्य 'सर्वस्मै' इत्यत्रत्य 'सर्व' इति रूपे सत्त्वेन रूपविशिष्ट- रूपवद्भिन्नत्वाभावात्।

स्वाश्रयप्रकृतिकेत्यादिद्वितीयसम्बन्धमात्रोपादाने तु 'घट' इत्यादिरूपवैशिष्ट्यस्य पटादिशब्दरूपेष्वपि सम्भवात् स्वविशिष्टभिन्नत्वस्य कुत्राप्यसम्भवात् तद्घटितनि- रुक्तोभयसम्बन्धेन रूपविशिष्टत्वस्यापि न कुत्रापि सम्भव इति तादृशरूपवद्भिन्नत्वस्य सर्वत्रैव सुलभत्वात्सर्वत्रैकशेषापत्तिः। अप्रसिद्धप्रतियोगिकाभावानङ्गीकारे तु न कुत्रा- प्येकशेषः स्यात्। यद्यपि स्वाश्रयप्रकृतिकेत्यादिद्वितीयसम्बन्धेन स्वाविशिष्टं यत् तद्भिन्नत्वमात्रं हरितवर्णविशिष्टस्त्रीवाचकहरिणीशब्दस्य 'हारितः' इति तद्धिते परे वर्तमाने 'हारित्' इति रूपे हरिणस्त्रीवाचकहरिणीशब्दवृत्तिरूपवैशिष्ट्यस्य निरु- सम्बन्धेन अभावात्सम्भवति, तस्य रूपस्य विभक्त्यव्यवहितपूर्वत्वाभावात्, तथा तत्रैवाव्याप्तिवारणाय सिद्धान्ते स्वविशिष्टभिन्नत्व—स्वाश्रयप्रकृतिकविभक्तिवृत्तिवि- भक्तिविभाजकधर्मवद्विभक्त्यव्यवहितपूर्वत्वसामानाधिकरण्योभयसम्बन्धेन रूपवैशिष्ट्यस्य रूपे उपात्तत्वात् स्वविशिष्टभिन्नत्वघटकस्वसामानाधिकरण्यसम्बन्धानुपादाने स्वाविशि- ष्टभिन्नत्वसम्भवेऽपि स्वाश्रयप्रकृतिकेत्यादिद्वितीयसम्बन्धस्य पूर्वोक्ते 'हारित्' इति रूपेऽसत्त्वात् न रूपविशिष्टरूपस्य कुत्रापि सम्भवः इति सर्वत्रैकशेषापत्तिर्दुर्वारैव। अतः स्वविशिष्टभिन्नत्वघटकवैशिष्ट्ये प्रथमसम्बन्धोपादानम्। तदुपादाने तु पटादि- शब्दरूपाणां घटादिशब्दरूपसामानाधिकरण्याभावात् तद्विशिष्टभिन्नत्वेन स्वाश्रय- प्रकृतिकविभक्तिवृत्तिविभक्तिविभाजकधर्मवद्विभक्त्यव्यवहितपूर्वत्वसामानाधिकरण्येन च रूपविशिष्टत्वात्तद्भिन्नत्वाऽभावेन घटपटादिशब्दानां नैकशेषः। मत्यादिशब्दानां चोक्तरीत्या रूपविशिष्टरूपवद्भिन्नत्वस्य सुलभत्वात् एकशेषः सिध्यतीति बोध्यम्।

नचैवमपि नित्यैकवचनान्तैकशब्दस्य नित्यद्विवचनान्तद्विशब्दस्य चैकशेषापत्तिः, द्वाभ्यामित्यत्र 'द्वा' इतिरूपविशिष्टभिन्नत्वस्य 'एकस्मै' इत्यत्र 'एक' इति रूपे सत्त्वे- ऽपि स्वाश्रयप्रकृतिकविभक्तिवृत्तिविभक्तिविभाजकधर्मवद्विभक्त्यव्यवहितपूर्वत्वस्याभा- वादिति वाच्यम्। स्ववृत्तिरूपविशिष्टरूपवद्भिन्नत्वे सति स्ववृत्तिरूपविशिष्टरूपवत्त्वं तत्त्वमिति परिष्कारेणादोषात्। सत्यन्तदले रूपवैशिष्ट्यमुक्तमेव। द्वितीयदले रूपवै- च रूपे स्वाश्रयप्रकृतिकविभक्तिवृत्तिविभक्तिविभाजकधर्मवद्विभक्त्यव्यवहितपूर्वत्वसामा- नाधिकरण्यसम्बन्धेन। द्वितीयदलदानादेकद्विशब्दयोर्नैकशेषः। प्रथमदले रूपे रूप- वैशिष्ट्यघटकस्वविशिष्टभिन्नत्वसम्बन्धदानात् मतिजरादिशब्दानामेकशेषः सिद्धः। स्वविशिष्टभिन्नत्वघटकवैशिष्ट्ये स्वाश्रयप्रकृतिकेत्यादिसम्बन्धदानात् संज्ञाभूतसर्वशब्द- सर्वनामसंज्ञकसर्वशब्दयोर्नैकशेषः। तत्रैव स्वाश्रयप्रकृतिकविभक्तिवृत्तिविभक्तिविभा-

जकधर्मवद्विभक्त्यव्यवहितपूर्वत्वसामानाधिकरण्यमात्रोक्तावसम्भवः पूर्वमुपपादितः। रूपवैशिष्ट्ये स्वाश्रयप्रकृतिकेत्यादिमात्रोक्तौ सर्वेषामेव पटादिशब्दरूपाणां घटादिशब्दरूपवैशिष्ट्यस्य स्वाश्रयप्रकृतिकविभक्तिवृत्तिविभक्तिविभाजकधर्मवद्विभक्त्यव्यवहितपूर्वत्वसामानाधिकरण्यसम्बन्धेन सत्त्वात्तद्वत्त्वस्यैव सर्वत्र विद्यमानत्वेन तद्वद्भिन्नत्वस्य न कुत्रापि सम्भव इति दिक्।

यद्वा, शब्दप्रकृतिकविभक्तिविशिष्टः शब्दः शिष्यते इत्यर्थः। वै०स्वविशिष्टरूपवद्भिन्नत्व–स्वविशिष्टरूपवत्त्वोभयसम्बन्धेन। प्रथमवै० स्वाव्यवहितपूर्वत्वविशिष्टरूपत्वावच्छिन्नप्रतियोगिताकभेदवत्त्व––स्ववृत्तिविभक्तिविभाजकधर्मवद्विभक्त्यव्यवहितपूर्वत्वसामानाधिकरण्योभयसम्बन्धेन। द्वितीयवै० एतद्घटकद्वितीयसम्बन्धेनैव। तत्र स्वविशिष्टरूपवत्त्वसम्बन्धोपादानम् एकद्व्यादिशब्दानामेकशेषवारणाय। स्वविशिष्टरूपवद्भिन्नत्वसम्बन्धोपादानं घटपटादिशब्दानां जननीपरिच्छेत्तृवाचिनोर्मातृशब्दयोश्चैकशेषवारणाय। स्वाव्यवहितपूर्वत्वविशिष्टरूपभिन्नत्वं विहाय विशिष्टरूपत्वावच्छिन्नेत्युपादानं मत्यादिशब्दानामेकशेषसिद्धये। शब्दवृत्तिरूपसामान्यभेदं विहाय विभक्त्यव्यवहितपूर्वत्वविशिष्टरूपसामान्यभेदोपादानं वर्णविशिष्टवाचकहरिणीशब्दमृगीवाचकहरिणीशब्दयोरेकशेषसिद्ध्यर्थम्। प्रथमवैशिष्ट्ये स्ववृत्तिविभक्तिविभाजकेत्यादिद्वितीयसम्बन्धोपादानं नित्यबहुवचनान्तसर्वविभक्त्यन्ताक्षतशब्दयोरेकशेषसिद्धये। संज्ञाभूतसर्वनामसर्वशब्दयोस्तु नैकशेषः। 'सर्वाय' इति ङेविभक्तिवैशिष्ट्यस्य सर्वस्मै इति रूपे सत्त्वेन विभक्तिविशिष्टरूपवद्भिन्नत्वाभावादित्यलम्।

**परे तु** एवकारापकर्षे न मानम्। अत एव "प्रातिपदिकानामेकशेषे मातृमात्रोः प्रतिषेधो वक्तव्यः, माता जनयित्री, माता च परिच्छेत्ता, तयोरपि क्वचित्सारूप्यं दृश्यते" इति प्रातिपदिकैकशेषे एव शङ्का कृता; न तु विभक्त्यन्तैकशेषादिकल्पे भाष्ये। अन्यथाऽस्मिन्कल्पे इव तेष्वपि कल्पेषु "मातृमात्रोः प्रतिषेधो वक्तव्यः" इति वचनमारब्धव्यं स्यात्। अत एव "किमुच्यते प्रातिपदिकानामेकशेषे मातृमात्रोः प्रतिषेधो वक्तव्य इति, न पुनर्यस्यापि विभक्त्यन्तानामेकशेषः, तेनापि मातृमात्रोः प्रतिषेधो वक्तव्यः स्यात्। तस्यापि ह्येतानि क्वचिद्विभक्त्यन्तानि सरूपाणि मातृभ्यां च मातृभ्यां चेति। अथ मतमेतद्विभक्त्यन्तानां सारूप्ये भवितव्यमेवैकशेषेणेति प्रातिपदिकानामेकशेषे दोषो भवति" इति **भाष्यं** सङ्गच्छते। अन्यथा एकस्य सूत्रस्य व्याख्याभेदेन एकस्यैव लक्ष्यस्य साधुत्वमसाधुत्वं च स्यात्। एतद्भाष्यैकवाक्यतया "मातृमात्रोः प्रतिषेधो वक्तव्यः" इति सामान्यत आरब्धमपि वार्तिकं सर्वनामस्थानविभक्तिपरत्वविषयं बोध्यम्। अन्यथा विभक्त्यन्तैकशेषवादिमते 'मातृभ्याम्' इत्यादावेकशेषो भवति, प्रातिपदिकैकशेषवादिमते एकशेषो न स्यादिति फलभेदः स्यात्। तथा च जननीपरिच्छेत्तृवाचकयोर्भ्यामि सारूप्यसत्त्वात्प्रातिपदिकैकशेषवादिमतेऽप्येकशेषो भवत्येव। केवलं सर्वनामस्थाने एव न भवति; तत्र वैरूप्यात्।

**वेति**। तेन जननीपरिच्छेत्तृवाचिनोर्मातृशब्दयो(१)र्भ्यामि (२)नैकशेषः। न चैकविभक्ताविति व्यर्थं 'यानि सरूपाण्येव' इत्युक्त्यैवोक्तदोषवारणादिति वाच्यम्, हरिणस्त्रीवाचकहरिणीशब्दस्य हरितवर्णविशिष्टस्त्रीवाचकहरिणीशब्दस्य चैकशेषानापत्तेः। पुंवद्भावेन तद्धितादौ (३)वैरूप्यात्। **दृष्टानीति**। लौकिके प्रयोगे इति शेषः। एकशेषश्चायमनैमित्तिकत्वेनान्तरङ्गत्वाद्विभक्त्युत्पत्तेः पूर्वमेवेति एतद्विषये द्वन्द्वप्राप्तिरेव नेति बोध्यम्।

ननु (४)तन्त्रेणैव सिद्धेरिदं व्यर्थम् यथा 'अक्षा भज्यन्तां भुज्यन्तां दीव्यन्ताम्' इत्यत्राक्षा इति कारकस्य सकृदुपादानेऽपि सर्वत्रान्वयः। तन्त्रकारणं

---

नच "मातृमात्रोः प्रतिषेधः" इति वार्तिके एकशेषाकरणेनैवकारापकर्षोऽस्तीति गम्यते, अन्यथा ओसि जननीपरिच्छेत्तृवाचिनोः सारूप्यसत्त्वेन "मात्रोः प्रतिषेधो वक्तव्यः" इत्येव वक्तव्यं स्यादिति वाच्यम्, अनुकरणस्वरूपभङ्गभियैकशेषाकरणेनादोषादित्याहुः।

अत्रेदमवधेयम्, सरूपाणामिति निर्धारणे षष्ठी। निर्धारणषष्ठीप्रकृत्यर्थस्य च निर्धार्यमाणे स्वघटकत्वं, स्वघटकनिर्धार्यमाणत्वाभिमतेतरावृत्तिविधेयवत्त्वमेतदुभयसम्बन्धेनान्वयः। यथा 'नृणां नृषु वा द्विजः श्रेष्ठः' इत्यत्र निर्धारणषष्ठीप्रकृत्यर्थस्य नृत्वावच्छिन्नसमुदायस्य स्वघटकत्वं द्विजे तथा स्वघटकनिर्धार्यमाणत्वाभिमतद्विजेतरशूद्रावृत्ति यच्छ्रैष्ठ्यं तद्वत्त्वमपीत्युभयसम्बन्धेन निर्धार्यमाणे द्विजेऽन्वयः। प्रथमसम्बन्धोपादानेन 'नृणां सिंहः श्रेष्ठः' इत्यादिप्रयोगो न। तत्र द्वितीयसम्बन्धोपादानेन 'नृणां ब्राह्मणः प्रमेयः' इत्यादि च न, तत्र निर्धारणषष्ठीप्रकृत्यर्थनृसमुदायघटकनिर्धार्यमाणत्वाभिमतब्राह्मणेतरशूद्रादिवृत्तित्वेन विधेयस्य प्रमेयत्वस्य तदवृत्तिविधेयत्वाभावात्। निरूपयिष्यते चेदं "यतश्च निर्धारणम्" (पा०सू० २।३।४१) इति सूत्रव्याख्यावसरे विस्तरेण। तथाच प्रकृते निर्धारणप्रकृत्यर्थ–सारूप्यवत्समुदायघटकनिर्धार्यमाणत्वाभिमतैकत्वसंख्याविशिष्टेतरस्याप्रसिद्धेरन्वयानुपपत्त्या शाब्दबोधासम्भवः। एकत्वस्य केवलान्वयित्वात्, इति चेत् ? न, एकशब्दस्य प्रथमवाचकस्य प्रकृतसूत्रे ग्रहणेन तदितरद्वितीयादीनां प्रसिद्ध्याऽन्वयसम्भवेनादोषात्। एकशब्दस्य च प्रथमवाचकत्वं वृद्धैरुक्तम्—

एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा।
साधारणे समानेऽल्पे संख्यायाञ्च प्रयुज्यते॥ इति।

(१)**भ्यामीति**। भ्यामि सारूप्यसत्त्वेऽपीत्यर्थः। (२)**नैकशेष इति**। सर्वासु च विभक्तिष्वेकशेषो न भवतीत्यर्थः। (३)**वैरूप्यादिति**। हरिणस्त्रीवाचकहरिणीशब्दस्य हारिणेति, हरितवर्णविशिष्टस्त्रीवाचकहरिणीशब्दस्य हारितेति वैरूप्यादित्यर्थः। (४) **तन्त्रेणैवेति**। नानाफलकसमानकालिक [illegible] एकफलोद्देशेनैक

तु शब्दानां (१)तुल्यरूपता । एवम् (२)'अक्षो भज्यतां भुज्यतां दीव्यताम्' इत्यपि । तन्त्रं द्वेधा—शब्दतन्त्रमर्थतन्त्रञ्च । शब्दस्य (३)पर्यायपरिवृत्त्यसहत्वे आद्यम्, यथा 'अक्षाः' इत्यादौ । (४)तत्सहत्वे त्वन्त्यम्, यथा 'घटाः' इत्यादौ । तत्राक्षा भज्यन्तां भुज्यन्तामित्यादावन्वयिपदार्थभेदाद् बोद्धुरावृत्त्यैव बोधः । उच्चारणन्तु तन्त्रेण । अन्वयिपदार्थस्यैकत्वे तु (५)एकोपस्थित्यैवान्वयः, यथा 'अक्षान्पश्य' 'घटान् पश्य' इत्यादौ, इति चेत् ? सत्यम्, सरूपाणामेकशेष एवेतिनियमार्थत्वात् । तत्फलं तु (६)प्रत्यर्थं शब्दनिवेशस्यापि दर्शनेन कदाचित्तादृशप्रयोगे प्राप्तद्वन्द्वस्य निवृत्तिः । स चायं नियमो विभक्तौ यानि (७)सरूपाण्येव तद्विषयः, सहविवक्षाविषयश्च ।

---

व्यापारकरणं तन्त्रम् । (१)तुल्यरूपतेति । स्ववृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मेणेत्यर्थः । एतेन बहुवचनसद्भावे एव तन्त्रेण निर्देशो नान्यथेति परास्तम् । तदाह-(२)अक्ष इति । नन्वत्राक्षशब्दस्य शकटाक्षविभीतकाक्षदेवनाक्षेतिबह्वर्थकत्वेन बहुवचनापत्तिरिति चेत् ? न, विभक्त्यन्तस्य तन्त्रस्वीकारेण विशिष्टस्याप्रातिपदिकत्वेन बहुवचनाप्राप्तेः । (३)पर्यायपरिवृत्त्यसहत्वे इति । पर्यायस्य या परिवृत्तिः स्वप्रयोगाभावेऽपि स्वबोध्ययावत्सु प्रवृत्तिस्तस्यासहत्वे इत्यर्थः । यस्य शब्दस्य तन्त्रेण निर्देशः कर्तव्यः तत्पर्यायशब्दान्तरासम्भवे शब्दतन्त्रमिति यावत् ।

(४)तत्सहत्वे इति । यस्य शब्दस्य तन्त्रेण निर्देशः कर्तव्यस्तत्पर्यायशब्दान्तरसम्भवे अर्थतन्त्रमिति यावत् ।

वस्तुतस्तु प्रवृत्तिनिमित्तनिष्ठैकप्रकारतानिरूपितनानाविशेष्यताको बोधो यत्र सम्भवति तत्रार्थतन्त्रम् । यथा 'घटाः' इत्यादौ । अत्र हि घटत्वनिष्ठैकप्रकारतानिरूपितनानाघटनिष्ठविशेष्यताकबोधसम्भवादर्थतन्त्रम् । प्रवृत्तिनिमित्तनिष्ठनानाप्रकारतानिरूपितनानाविशेष्यताको बोधो यत्र तत्र शब्दतन्त्रम् । यथा 'घटाः' इत्यत्रैव, घटत्वनिष्ठनानाप्रकारतानिरूपितनानाघटनिष्ठविशेष्यताकबोधसम्भवात् । नानार्थस्थले च शब्दतन्त्रमेव । यथा 'अक्षाः' इत्यादौ । अत्र हि प्रवृत्तिनिमित्तस्यैकस्याभावेन प्रवृत्तिनिमित्तनिष्ठनानाप्रकारतानिरूपितनानाविशेष्यताकबोधस्यैव सम्भवादिति दिक् ।

(५)एकोपस्थित्यैवेति । एकरूपपुरस्कारेण नानार्थोपस्थित्योपस्थितेषु तेषु समभिव्याहृतपदार्थान्वयसम्भवादित्यर्थः । (६)प्रत्यर्थमिति । अत्रार्थपदेन प्रवृत्तिनिमित्तनिष्ठप्रकारता ग्राह्या । तथाच यावत्यः प्रवृत्तिनिमित्तनिष्ठप्रकारतास्तावच्छब्दप्रयोगः कर्तव्य इत्यर्थः । अत एव घटोऽयं घटोऽयं घटोऽयमिति प्रवृत्तिनिमित्तनिष्ठप्रकारताभेदेनैकप्रवृत्तिनिमित्तस्थलेऽपि नानाशब्दप्रयोगः कृतो भाष्ये (७)सरूपाण्ये-

(१)अत एव विभक्त्यन्तानामेकशेष इति पक्षे 'द्वन्द्वप्रतिषेधो वक्तव्यः' इत्याशङ्क्य 'अनवकाश एकशेषो द्वन्द्वं बाधिष्यते' इति **भाष्ये** उक्तम्। किञ्चासहविवक्षायामपि तत्प्रवृत्तौ सहविवक्षायां द्वन्द्वस्येवान्यत्र कर्मधारयस्यापि बाधापत्तौ (२)'सारवसारवोर्मिजः' इत्यादिप्रयोगविरोधापत्तिः। असहविवक्षाविषयेण विभक्त्यन्ततन्त्रेण (३)'ब्राह्मणाभ्यां कृतं देहि' (४)'पयो जरयति' इत्यादि 'नीलोत्पलस्पर्धिनी (५)नेत्रे तनुर्वा हरेः' इति (६)'विद्वन्मानसहंस' इतिवच्चेष्टमेवेति बोद्ध्यम्। न चासहविवक्षाव तन्त्रसत्त्वे 'इदित' इति गुरुनिर्देशो व्यर्थः, (७)अन्यपदार्थावगतये तत्त्वात्। इद्यस्य धातोरिति करणे तु गौरवम्। एतच्च सूत्रं भाष्ये (८)प्रत्याख्यातम् (९)अर्थावर्थौ प्रति यदर्थानर्थान्प्रति च यत्तदपि प्रत्ये

---

वेति। अत्र यद्वक्तव्यं तत्पूर्वमेवावोचाम। एकशेषस्य सहविवक्षाविषयकत्वे प्रमा दर्शयति-(१)**अत एवेति**। (२)**सारवसारवेति**। आरवैः सहिताः सारवाः सरय्वां भवाः सारवाः। सारवाश्च ताः सारवाश्चोर्मयस्तासु जात इत्यर्थः। (३)**ब्राह्मणाभ्यामिति**। तृतीयान्तं चतुर्थ्यन्तञ्च। (४)**पय इति**। प्रथमान्तं द्वितीयान्तं च। (५) **नेत्रे तनुर्वा हरेरिति**। काव्यप्रकाशे लिङ्गवचनश्लेषोदाहरणमिदमुक्तं नवमोल्लासे। (६)**विद्वन्मानसहंसेति**। विदुषां मानसाभिन्नं यन्मानसं सरस्तत्रत्यहंस इत्याद्यर्थः। अत्र शब्दानां तुल्यरूपत्वस्य कारणस्य सत्त्वात्तन्त्रम्। तदुक्तम्—

> अक्षादिषु यथा भिन्ना भक्षिभञ्जिदिविक्रियाः।
> प्रयोगकालभेदेऽपि प्रतिभेदं पृथक् स्थिताः॥
> अक्षाणां तन्त्रिणां तन्त्रे उपायस्तुल्यरूपता॥ इति।

(७)**अन्यपदार्थावगतये इति**। चिन्त्यमिदम्, चक्षिङ्धातौ नुम्वारणाय 'इच्चासाविच्च' इति कर्मधारयसमासे स्वीकृत्येदन्तधातोर्नुम् भवतीति "इदितो नुम् धातोः" (पा०सू० ७।१।५८) इतिसूत्रार्थस्याऽऽवश्यकत्वात्। (८)**प्रत्याख्यातमिति**। अत्र प्रातिपदिकतन्त्रमाश्रित्यैव प्रत्याख्यानं बोध्यम्। मातृमात्रोस्तु अर्थाभिधानान्नैकशेषः। एतेन प्रत्याख्यानमेकदेश्युक्तिः। विभक्त्यन्ततन्त्रे 'ब्राह्मणाभ्याम्' इत्यत्र करणत्वविशिष्टब्राह्मणद्वयस्य सम्प्रदानत्ववशिष्टब्राह्मणद्वयस्य प्रतीतिरिति ब्राह्मणचतुष्टयप्रतीतिवत् 'मातृभ्याम्' इति तृतीयाद्विवचनेनापि मातृचतुष्टयस्य प्रतीत्यापत्त्या फलभेदात्। एकशेषे तु मातृद्वयस्य प्रतीतिः स्पष्टैवेति परास्तम्। (९)**अर्थावर्थौ प्रति यदर्थानर्थान् प्रति चेति**। अत्राप्यर्थपदेन प्रवृत्तिनिमित्तनिष्ठप्रकारतैव ग्राह्या।

मेवेत्याश्रयणेन। अनेकघटादिपदानां साहित्ये वृत्तिरेव नानभिधानात्। एकस्यैव त्वनेकार्थस्य तत्र वृत्तिरभिधानस्वाभाव्यादिति तदाशयः। "द्विर्वचनेऽचि' (पा०सू० १।१।५९) इत्यादावेकशेषशब्दस्तु **भाष्ये** तन्त्रपरः। स चोच्चारयितुः, बोद्धुस्त्वावृत्तिरेवेति बोद्ध्यम्।

एकविभक्तावित्यत्रैकपदं तु स्पष्टार्थम्; एकस्यामपि विभक्तौ यानि विरूपाणि नेत्यर्थं स्पष्टं बोधयितुम्। ध्वनितञ्चेदं "विभक्तिः सारूप्ये उपलक्षणम्" इति **भाष्ये** एकपदानुच्चारणेन। समाहारद्वन्द्वविषये तु नैकशेषः 'एकवच्चास्यान्यतरस्याम्' इत्यनेनैकशेषविषयपदानां समाहारे (१)वृत्त्यभावबोधनात्। 'न ब्राह्मणं हन्यात्' इत्यादौ तु जातिपक्षेणैव (२)निर्वाहः। अत एव तत्र व्यक्तिपक्षे 'यं कञ्चिद् ब्राह्मणमहत्वा कृती स्यात्' इति (३)दूषणं **भाष्ये** उक्तम्।

शेषशब्दार्थश्चेतरनिवृत्तिपूर्वकमवस्थानं, तदाह--**एक एवेति**। एकेति लुप्तविभक्त्यन्तं पृथक्पदम्। अत एव तत्र सरूपाणामित्यस्यान्वयः। तत्रावस्थानस्य सिद्धतया निवृत्तिरेव विधेया। तत्र 'शिष्यमाणं लुप्यमानार्थाभिधायि' इति न्यायेन श्रूयमाणपदवृत्त्या बोधः। धातुषु तु नास्य प्रवृत्तिः एकनिष्ठानेकव्यापाराणामिवानेकनिष्ठानामप्येकधातुत एव निवृत्तभेदानां प्रतीत्याऽनेकधातुप्रयोगाप्रसक्तेः।

सरूपाणां किम्? घटपटौ। 'शेष' इत्येतन्मात्रोक्तौ द्विबहोरपि शेषः प्रसज्येत। एक इत्येतावदुक्तौ त्वेक आदेश इत्यर्थः स्यात्। तथा चाश्वश्चाश्वश्चेत्यादौ कदाचिद् द्व्युदात्तवत्त्वद्व्यनुदात्तवत्त्वरूपसाम्यमादायोभय-(४)स्वरितैकादेशः प्रसज्येत। न च "अक्षस्यादेवनस्य" (शां० फि०

(१)**वृत्त्यभावबोधनादिति**। नचान्यतरस्यांग्रहणसामर्थ्येन इतरेतरयोगविषये एव वृत्तिर्नेति कस्मान्न कल्प्यते, तावतापि अन्यतरस्यामित्यस्य सार्थक्यसम्भवादिति वाच्यम्, सरूपाणामित्यादिनिर्देशाऽन्यथाऽनुपपत्त्या एकशेषविषयपदानां समाहारे वृत्तिर्नेति कल्पनाया एवोचितत्वात्। (२)**निर्वाह इति**। 'न ब्राह्मणं हन्यात्' इत्यादौ ब्राह्मणत्वनिष्ठैकप्रकारतानिरूपितनानाविशेष्यताकबोधतात्पर्येणेदं ब्राह्मणपदमुच्चरितामित्यर्थतन्त्रेण निर्वाह इत्यर्थः। (३)**दूषणमिति**। आवृत्तिमकृत्वा तन्त्रं चानङ्गीकृत्य ब्राह्मणत्वनिष्ठैकप्रकारतानिरूपितैकविशेष्यताकबोधपरत्वे इत्यर्थः। (४)**स्वरितैका-**

२।३५) इति फिट्सूत्रेण शकटाक्षे आद्युदात्तस्य देवनाक्षे "फिषः" (शां० फि० १।१) इत्यन्तोदात्तस्य चैकशेषे कदाचिदन्तोदात्तस्यापि शेषः स्यादिति वाच्यम्; (१)'स्वरभिन्नानां यस्योत्तरस्वरविधिः' इति वचनेनैव निर्वाहात्। एकादिदशान्तसंख्यावाचिनामेकशेषद्वन्द्वाव(२)नाभिधानान्न भवतः। विंशत्यादौ त्विष्ट एवैकशेष इत्यलम्।

**चुटू** (पा०सू० १।३।७)। "आदिर्ञिटुडवः" (पा०सू० १।३।५) इत्यत आदिरिति "षः प्रत्ययस्य" (पा०सू० १।३।६) इत्यतः प्रत्ययस्येति चानुवर्त्तते, तदाह–(३)**प्रत्ययाद्याविति**। तेन वाचाटे नेत्त्वम्। प्रत्ययेति किम्? चामरादावित्त्वं (४)मा भूदिति। चुञ्चुप्चणपो(५)र्यादित्वात् (६)परनिमित्तयलोपस्य बहिरङ्गासिद्धत्वात्प्रत्ययादित्वाभावान्नेत्त्वम्।

**न विभक्तौ** (पा०सू० १।३।४)। "हलन्त्यम्" (पा०सू० १।३।३) इत्यस्य (७)निषेधोऽयम्। अनित्यमिदं थमोर्मकारपरित्राणार्थादुदित्कदेश इति।

---

नन्विश्च इश्चेत्येकशेषे इकारैकादेशस्यालरूपत्वाद् "अलोऽन्त्यस्य" (पा०सू० १।१।५२) इत्यन्त्यस्यैव कृते सवर्णदीर्घे च पूर्वसवर्णस्य "दीर्घाज्जसि च" (पा०सू० ६।१।१०५) इति निषेधेन यणादेशे 'यौ' इति स्यात्, शेषग्रहणसत्त्वे तु 'ई' इति भवतीति लक्ष्यदोषसत्त्वे किमर्थं स्वरदोषपर्यन्तानुधावनमिति चेत्? न, लोपश् इतिवत् एकश् इति विवक्षणेन शित्त्वात्सर्वादेशे 'ई' इति लक्ष्यस्य निर्वाधात्। विवरणकारास्तु–रमागमन्यायेन सरूपाणामिति बहुवचनश्रुत्या प्रत्येकं स्थानित्वात्सर्वनिवृत्तेरदोष इत्याहुः। (१)**स्वरभिन्नानामिति**। स्वरा भिन्ना येषामिति विग्रहः। भिन्नस्वरकाणामिति यावत्। (२)**अनभिधानादिति**। सङ्कलितसंख्यातात्पर्येणेत्यर्थः। अत एव "ऊकालः" (पा०सू० १।२।२७) इतिसूत्रे शेखरे 'एकद्वित्रिमात्राणाम्' इति प्रयोगः सङ्गच्छते इत्यादि तत्रैव निरूपितम्।

**चुटू** (पा०सू० १।३।७)। (३)**प्रत्ययाद्याविताति**। प्रत्ययबोधकाद्यावित्यर्थः। (४)**मा भूदितीति**। न च चामरशब्दचकारस्येत्सञ्ज्ञायामपि चितः प्रत्ययस्यैवान्तोदात्तत्वविधानान्न दोष इति वाच्यम्। चित्त्वसामर्थ्येन प्रत्ययत्वाभावेऽपि अन्तोदात्तत्वं भविष्यतीति कल्पनापत्त्या दोषात्। (५)**यादित्वादिति**। तथा च प्रत्ययबोधकाऽऽदित्वस्य चुञ्चुप्चणवादौ चकारेऽभावान्न दोष इति भावः। समाधानान्तरमप्याह—(६)**परनिमित्तेत्यादि**। वस्तुतस्तु बहिरङ्गासिद्धत्वस्य नोपयोगः, प्रत्ययबोधकाऽऽदित्वस्याभावादेवेत्संज्ञाया अप्राप्तेः।

(७)**निषेधोयऽमिति**। "अनन्तरस्य विधिः' इति न्यायादिति भावः।

रणात्। तेन "किमोऽत्" (पा०सू० ५।३।१२) 'क' इति सिद्धम्। प्राग्दिशीयत्वादयं विभक्तिः। अत एव दानीमो मस्य नेत्त्वमिति **नव्याः**। **भाष्ये** तु प्राग्दिशीयेष्वस्याप्रवृत्तावुदित्त्वं ज्ञापकमित्युक्त्वा "दानीञ्च" (पा०सू० ५।३।१८) इति सूत्रे "लोपो व्योः" (पा०सू० ६।१।६६) इति लोपेन यकारं प्रश्लिष्येत्सञ्ज्ञा वारिता। अन्यत्रानित्यत्वस्य (१)फलाभावाच्चैवमेवोक्तम्। लोपस्यासिद्धत्वाच्च नान्त्यत्वमिति बोध्यम्। विभक्तौ किम्? "अचो यत्" (पा०सू० ३।१।९७)।

**अतो गुणे** (पा०सू० ६।१।९७)। "उस्यपदान्तात्" (पा०सू० ६।१।९६) इत्यतः 'अपदान्तात्' इति "एङि पररूपम्" (पा०सू० ६।१।९४) इत्यतः पररूपमिति चानुवर्त्तते। **पुरस्तादिति**। अत एव "नादिचि"(पा०सू० ६।३।१०४) इतीज्ग्रहणं चरितार्थम्। तद्धि 'रामाः' 'रामान्' इत्यादौ निषेधाभावाय। पररूपेण पूर्वसवर्णदीर्घबाधे हि तद्वैयर्थ्यं स्पष्टमेव। **नोत्तरानिति**। अनन्तरापेक्षयोत्तरान् (२)व्यवहितानित्यर्थः।

**एकवचनं सं** (पा० सू० २।३।४९)। "सुः सम्बुद्धिः" इत्यु-(३)चितम्। "सम्बोधने च" (पा०सू० २।३।४७) इत्यतः सम्बोधने इत्यनुवृत्तेः सप्तमीबहुवचने (४)न दोषः। सम्बुद्धौ अङ्गस्य गुण इति व्यवहारा(५)न्न तदन्तस्य सञ्ज्ञा। तस्मात्पारायणादावदृष्टार्थमेव न्यास

---

(१)**फलाभावादिति**। नच "इटोऽत्" (पा०सू० ३।४।१०६) "औत्" (पा०सू० ७।३।१२८) इत्यादौ "न विभक्तौ" (पा०सू० १।३।४) इति निषेधाप्रवृत्तये सामान्यतः थमोरुकारोच्चारणेन न विभक्ताविति-निषेधानित्यत्वं कल्पनीयमिति वाच्यम्, "तपरस्तत्कालस्य" (पा०सू० १।१।७०) इति शास्त्रेण 'अत्' 'औत्' इत्यादीनां सञ्ज्ञात्वेनादोषात्।

(२)**व्यवहितानिति**। उत्सर्गकर्तृकव्यवधानवत इत्यर्थः।

(३)**उचितमिति**। न च सप्तमीबहुवचनसुपोऽपि "सुः सम्बुद्धिः" इति न्यासे सम्बुद्धिसञ्ज्ञापत्तिरिति वाच्यम्, तदनुबन्धकपरिभाषया दोषाभावात्। (४)**न दोष इति**। वस्तुतस्तु "सुः सम्बुद्धिः" इत्यत्रानुनासिकोकारनिर्देशेन बहुवचनसुपो व्यावृत्त्या तन्न्यासकल्पे सम्बोधन इत्यनुवृत्तेः फलं 'रामः' इत्यत्र प्रथमैकवचनस्य लोपो नेति बोद्ध्यम्। (५)**न तदन्तस्य सञ्ज्ञेति**। यादृशसञ्ज्ञापुरस्कारेण प्रत्ययानाम-

इति बोध्यम् । **सम्बुद्ध्याक्षिप्तस्येति** । सम्बुद्धेः प्रत्ययत्वेन यस्मात्स विहितस्तदादीत्यंशोपस्थितिः । स चात्र योग्यतया पञ्चम्यन्त इति भावः। प्रत्यये गृह्यमाणे यस्मात्स विहित इत्याद्युपतिष्ठत इति "प्रत्ययग्रहणे यस्मात्स विहितः" (पा०भा०) इत्यादिपरिभाषार्थ इति "अङ्गस्य"

---

ज्ञाधिकारे निमित्तत्वेनोपादानं तत्सञ्ज्ञाशास्त्रे तदादिविशेष्यकतदन्तविधिर्न भवतीति ज्ञापनादिति भावः । नच "सञ्ज्ञाविधौ" (प० भा०) इति तदन्तविधिनिषेधादेतत्कल्पनाया नोपयोग इति वाच्यम्, इयं परिभाषाऽनुपयुक्तेति तात्पर्येणैतद्ग्रन्थप्रवृत्तेः। अत एव "अर्थवदधातुरप्रत्ययः" (पा० सू० १।२।४५) "प्रथमचरमतया" (पा०सू० १।१।३३) "विभाषा प्रकरणे तीयस्य" (का० वा०) "कृत्तद्धित" (पा०सू० १।२।४६) "कृन्मेजन्तः" (पा०सू० १।१।३९) "तद्धितश्चा" (पा०सू० १।१।३८) "क्त्वातो" (पा०सू० १।१।४०) "सामन्त्रितम्" (पा०सू० २।३।४८) इत्यादिषु तदन्तविधिः सिध्यति । अन्यथा निरुक्तस्थलेषु तदन्तविधिसिद्धये महान् यत्नः कर्त्तव्यः स्यादिति गौरवं स्यात् ।

न च "कृदतिङ्" (पा०सू० ३।१।९३) "ते तद्राजाः" (पा०सू० ४।१।१७४) "ञ्यादयस्तद्राजाः" (पा०सू० ५।३।११९) "तिङ्शित्सार्वधातुकम्" (पा०सू० ३।४।११) "आर्धधातुकं शेषः" (पा०सू० ३।४।११४) "लिट् च" (पा०सू० ३।४।११५) इत्यादौ एतत्परिभाषाऽभावे तदन्तविधिः स्यादिति वाच्यम् । चतुर्थपञ्चमयोः प्रातिपदिकादित्यधिकारसत्त्वेन तृतीयाध्याये "धातोः" (पा०सू० ३।१।९१) इत्यधिकारसत्त्वेन च "प्रत्ययग्रहणे चापञ्चम्याः" (प०भा०) इतिपरिभाषया तदन्तविधिनिषेधस्य सिद्धत्वात् । न च "क्तक्तवतू निष्ठा" (पा०सू० १।२।२६) इत्यादौ तदन्तविधिः स्यादिति वाच्यम्, क्तपदस्य प्रत्ययमात्रवृत्तिविषयताप्रयोजकत्वाभावेन क्तवतुपदस्य च प्रत्ययबोधकत्वाभावेन प्रत्ययग्रहणपरिभाषायास्तत्राप्रवृत्तेः । नचैवमपि "घः प्रत्ययस्य" (पा०सू० १।३।६) इत्यादौ तदन्तविधिः स्यादिति वाच्यम्, तत्र प्रत्ययपदस्य प्रत्ययबोधकपरत्वेन प्रत्ययबोधकबोधकत्वेऽपि प्रत्ययमात्रवृत्तिविषयताप्रयोजकत्वरूपप्रत्ययबोधकत्वाभावेन प्रत्ययग्रहणपरिभाषाया अप्रवृत्तेः । न चैवमपि "ईदूदेद्द्विवचनम्" (पा०सू० १।१।११) इत्यादौ तदन्तविधिप्रसङ्ग इति वाच्यम्, श्रुतानुमितपरिभाषया ईदूदेदित्यस्य द्विवचने एव विशेषणेन सत्यपि तदन्तविधौ क्षत्यभावात् । नचैवमपि "तरप्तमपौ घः" (पा०सू० १।१।२२) इत्यादौ तदन्तविधिप्रसङ्गो दुर्वार इति वाच्यम्, "परौ तरप्तमपौ घः" इतिन्यासेन कस्मात् पराविति नियतावध्याकाङ्क्षायामुपस्थितप्रातिपदिकादित्यस्यान्वयेन 'प्रत्ययग्रहणे च' (प० भा०) इति परिभाषया तदन्तविधेरभावादिति दिक् ।

(पा०सू० ६।४।१) इति सूत्रे **भाष्ये** स्पष्टम् । अनुमानरूपाऽऽक्षेपस्तु नात्र, फलाभावात् । यथा पीनत्वानुपपत्त्याऽनुमीयमानरात्रिभोजनस्य पीनत्वोपपत्तिः फलं, न तथा एतत्सूत्रे तदनुमानेन सम्बुद्ध्युपपत्तिर्भवति । किञ्च प्रत्ययस्योत्पत्तावङ्गापेक्षत्वेऽपि ज्ञाने तदपेक्षत्वाभावेन शास्त्रे तदाक्षेपे मानाभावः । अत एव "अङ्गस्य" इतिसूत्रे तत्स्थाने 'प्रत्यये' इत्यधिकारः कार्य इति पक्षे 'प्राकरोत्' इत्यादौ उपसर्गात्पूर्वमडादिः स्यादित्याशङ्क्य "प्रत्ययग्रहणे यस्मात्स विहितस्तदादेः" (प०भा०) इति परिभाषोपस्थित्या समाहितं **भाष्ये** न त्वङ्गाक्षेपेणेति(१)दिक् ।

---

(१)दिगिति । नन्वङ्गस्याऽऽक्षेपाभावे 'कतरद्' इत्यादौ दोषो दुरुद्धरः, ह्रस्वान्ततदाद्यव्यवहितोत्तरत्वविशिष्टस्य सम्बुद्ध्यवयवहलः सत्त्वात् । 'भवामि' 'भविष्यामि' इत्यादौ दीर्घसम्पत्तये तदादेरित्यत्र स आदिर्यस्येति बहुव्रीहेरावश्यकत्वात् । न च ह्रस्वान्ततदादेरित्यस्य सम्बुद्धौ विशेषणत्वेन न दोष इति वाच्यम्, 'कुल' इत्यादौ मकारस्य लोपानापत्तेः इति चेत् ? मैवम्, एङ्साहचर्यात् ह्रस्वस्यापि सम्बुद्ध्यनवयवस्य ग्रहणेनादोषात् । वस्तुतस्तु एवं साहचर्येण 'कतरद्'इत्यादौ दोषवारणे तदादेरित्यस्योपस्थित्या शेखरोक्तमङ्गाक्षेपस्य खण्डनं वृथैव स्यात् । तस्मात् अङ्गसंज्ञासूत्रे तदादिपदेन प्रत्ययाव्यवहितपूर्वस्यैव ग्रहणात् तन्मूलकपरिभाषायामपि प्रत्ययाव्यवहितपूर्वस्यैवादितानिरूपकस्य ग्रहणम् । ततश्च 'कतरत्' इत्यादौ अकारान्तस्य तदव्यवहितपूर्वत्वाभावान्न दोषः । 'भवामि' इत्यादौ मिप्रत्ययाव्यवहितपूर्वत्वं प्रकृतिनिष्ठाऽऽदितानिरूपकत्वं च शबाद्यन्तसमुदायस्य स्पष्टमेवेति दिक् ।

अत्रेदं बोध्यम्, अव्यवहितोत्तरत्वसम्बन्धेन अङ्गत्वव्याप्यत्वस्य सम्बुद्धौ सत्त्वेन तयाऽङ्गाक्षेपेऽपि आक्षिप्तस्य शाब्दबोधेऽनन्वयात् 'कतरत्'इत्यादौ दोषवारणं साहचर्यमन्तरा न सम्भवतीति परममूलोक्तं न सम्यक् । शेखरोक्तखण्डनं तु न सम्यक् अनुमाने व्याप्तिज्ञानस्यैव कारणत्वेन व्याप्येन व्यापकानुमाने बाधकाभावात् । न च श्रुतार्थापत्त्याऽङ्गस्येत्यस्याक्षेप इति परममूलोक्तं सङ्गतमेवेति वाच्यम्, तदभाववत्तानिश्चयमुद्रया तदभावव्याप्यवत्तानिश्चयमुद्रया वा परस्परविरुद्धयोर्धर्मयोर्विरोधपरिहारस्यैवार्थापत्तेः फलत्वेन तादृशविरुद्धधर्मद्वयोपादानस्याभावेनार्थापत्तिविषयत्वस्यात्राभावात् । शेखरोक्तं फलाभावेन परममूलोक्तखण्डनं तु न युक्तम् । 'पीनो देवदत्तः' इत्यादौ पीनत्वोपपत्तिरूपफलवद् अङ्गाक्षेपेण प्रत्ययत्वोपपत्तिरूपफलस्य सत्त्वात् । किञ्चेत्याद्युक्तं शेखरोक्तमसङ्गतमेव धूमोत्पत्तौ वह्नेरपेक्षासत्त्वेऽपि धूमज्ञाने वह्नेरनपेक्षणेन धूमेन वह्नेरनुमानस्यासङ्गत्यापत्तेरिति दिक् ।

**अङ्गस्य**—उक्तार्थस्य। "हल्ङ्याब्" (पा०सू० ६।१।६८) इति सूत्राद्धलित्यनुवर्त्तते। **हे कतरदिति।** प्रकृत्यकारस्य टिलोपेनापहारादिति भावः। नन्वङ्गात्परस्याः सम्बुद्धेरवयवस्य हलो लोप इत्युचितम्, सम्बुद्ध्याक्षिप्तस्य सम्बुद्ध्यैवान्वयस्योचितत्वादत आह—**कुलेतीति।** अत्र परत्वात्पूर्वरूपे उभयत आश्रयणेऽन्तादिवद्भावाभावात् (१)तत्स्वीकारेऽपि ह्रस्वसम्बुद्ध्योः पौर्वापर्यव्यवहारासम्भवात्, (२)ताद्रूप्यानतिदेशाच्च ह्रस्वान्ताङ्गात्परसम्बुद्धेरभावान्मलोपो न स्यात्। एवञ्च लक्ष्यानुरोधादन्याक्षिप्तस्याप्यन्यत्रान्वय इति भावः। एतदर्थमेव "हल्लुप्यते सम्बुद्धेश्चेत्" इति व्याख्यातम्, मस्य सम्बुद्धित्वाभावाद्। अर्द्धविकारेणैकदेशविकृतन्यायेनापि न सम्बुद्धित्वम्, एकवचनसञ्ज्ञासम्बुद्धिसंज्ञयोरक्तपरिमाणनिष्ठतया तयोस्तेन न्यायेनालाभाच्च। मकारस्या(३)देशत्वाभावाच्च नात्र स्थानि-

---

अत्रेदं तत्त्वम्—'कतरद्'इत्यादौ अद्डि डित्करणसामर्थ्यादेव अद्डादेशाश्रयदाय प्राप्तसम्बुद्धिलोपवारणम्। न चाद्डो डित्करणं "प्रथमयोः पूर्वसवर्णः" (पा० सू० ६।१।१०२) इति पूर्वसवर्णदीर्घबोधनार्थमिति वाच्यम्, दुकि विधातव्ये अद्-देशविधानसामर्थ्येन पूर्वसवर्णदीर्घवारणेन डित्करणवैयर्थ्यस्य सुस्थत्वात्।

**अन्ये** तु एङ्साहचर्याद् ह्रस्वः प्रकृत्यवयवो गृह्यत इति 'कतरद्' इत्यादौ न दोषः। सम्बुद्ध्यनवयवत्वेन साहचर्यं स्वीकृत्य 'कतरद्' इत्यादौ दोषवारणं तु न सम्यक्, 'कुल'इत्यादौ परादिवद्भावेन सम्बुद्धित्वात् सम्बुद्ध्यनवयवह्रस्वाभावेन लोपनापत्तेरित्याहुः।

**(१)तत्स्वीकारेऽपीति।** "उभयत आश्रयणे" इति परिभाषाया अनङ्गीकारेण एकस्मिन्नादेशे अन्तवत्त्वादिवत्त्वोभयस्वीकारेऽपि व्यपवर्गबुद्धेरभावादित्यर्थः। **(२)ताद्रूप्यानतिदेशादिति।** अन्तादिवृत्तिर्यो वर्णत्वव्याप्यो धर्मस्तद्घटितधर्मस्यानतिदेशादित्यर्थः। वस्तुतस्तु चिन्त्यमिदम्, 'क्षीरपेण' इत्यादौ पे इत्यत्रैकाउत्तरपदत्वस्यातिदेशाय 'अन्तादिवृत्तिर्वर्णमात्रवृत्तिस्तत्स्थानिकादेशावृत्तिश्च यो धर्मस्तद्घटितो धर्मो नायाति' इति 'ताद्रूप्यानितिदेशाद्' इत्यस्यार्थस्य वक्तव्यतया ह्रस्वत्वेऽन्तादिवृत्तित्ववर्णमात्रवृत्तित्वोभयसत्त्वेऽपि तत्स्थानिकादेशावृत्तित्वस्याभावेन ह्रस्वान्तत्वस्यातिदेष्टुं शक्यत्वात्। निरूपितश्चायमर्थोऽन्तादिसूत्रव्याख्यावसरे विस्तरेणेति तत एवावधार्यताम्।

**(३)आदेशत्वाभावादिति।** ननु "अतोऽम्" (पा०सू० ७।१।२४) इत्यत्र 'म्' इतिच्छेदः क्रियते इति कल्पे स्थानिवद्भावेन सम्बुद्धित्वमायास्यत्येव। एतत्कल्पे

द्भावः । अत एव "रामम्" इत्यादौ "सुपि च" (पा०सू० ७।३।१०२) इति दीर्घो न । न च सम्बुद्धित्वस्य सकारमात्रनिष्ठत्वेन स्थानिभूताल्धर्मत्वेनामः (१)सम्बुद्धित्वाभावे कथं मस्य सम्बुद्ध्यवयवत्वमिति वाच्यम्, सुप्सञ्ज्ञाया उकारविशिष्टे सत्त्वेन तदुपस्थाप्ये जायमानैकवचनसञ्ज्ञाया विशिष्टे सत्त्वेन सम्बुद्धिसञ्ज्ञायामित्सञ्ज्ञोकारविशिष्टस्यैवोद्देश्यत्वेन तस्यानल्विधित्वात् । एतेनादड्डादेशेनैव नपुंसकत्वाभिव्यक्तौ कुलेतीति व्यर्थमित्यपास्तम् ।

**एङ्ग्रहणं किमिति ।** 'हरे' 'विष्णो' इत्यादावङ्गाधिकारस्थात्

'ज्ञानम्' इत्यादौ "सुपि च" (पा०सू० ७।३।१०२) इति दीर्घापत्तिस्तु "अदन्तमङ्गं निमित्तीकृत्य जायमानो मादेशस्तद्विघातकं "सुपि च" इति दीर्घं प्रति निमित्तं न भवति" इत्यर्थकसन्निपातपरिभाषया वारणीया । न च 'रामाय' इत्यादौ "सुपि च" (पा०सू० ७।३।१०२) इति दीर्घसम्पत्तये "सुपिचेति दीर्घविषये सन्निपातपरिभाषा न प्रवर्त्तते" इति कल्पनाज् 'ज्ञानम्' इत्यादौ दीर्घो दुर्वारः स्यादिति वाच्यम्, 'कष्टाय' इतिनिर्देशेन सन्निपातपरिभाषाप्रयोज्ये स्वोपजीव्यविघातकत्वाभाववान्' इति सङ्कोचे "ङेर्यः" (पा०सू० ७।१।१३) इत्येतन्मात्रभिन्नत्वेन सङ्कोचं कृत्वा सङ्कुचितसङ्कोचस्य "सुपि च" इत्यत्र करणेन 'ज्ञानम्' इत्यादौ दीर्घवारणात् । अत एव 'सुपिचेति दीर्घो यद्यपि परस्तथापीह न प्रवर्तते' इति कौमुदीग्रन्थः सङ्गच्छते, इति चेत् ? न, सुपिचेत्यत्र सन्निपातपरिभाषाप्रयोज्ये 'स्वोपजीव्यविघातकत्वाभाववान् इति सङ्कोचे "ङेर्यः" (पा०सू० ७।१।१३) इत्येतन्मात्रभिन्नत्वेन सङ्कोचं कृत्वा सङ्कुचितसङ्कोचे प्रमाणाभावेन ज्ञानमित्यादौ सुपिचेति दीर्घापत्तेस्तदवस्थतया 'म्' इतिच्छेदस्य कर्त्तुमशक्यत्वात् । अत एव मादेशकल्पे 'कुण्डाम्' इति प्राप्नोति इति दीर्घापत्तिरुक्ता भाष्ये । "न पुनरन्तरेणाचं व्यञ्जनस्योच्चारणमपि भवति" इति "उच्चैरुदात्तः" (पा०सू० १।२।२९) इतिसूत्रस्थभाष्येण मकारमात्रस्यादेशत्वासम्भवाच्च ।

(१)**सम्बुद्धित्वाभावे इति ।** "अतोऽम्" (पा०सू० ७।१।२४) इत्यत्र स्थानितायाः सुप्त्वावच्छिन्नत्वेनाल्त्वव्याप्यधर्म्मावच्छिन्नत्वस्याभावात्, सम्बुद्धित्वस्य 'हे कतरद्' इत्यादौ अदितिसमुदाये सत्त्वेनाल्त्वव्याप्यत्वाभावाच्च अल्त्वव्याप्यधर्मावच्छिन्नस्थानितानिरूपितादेशताश्रयधर्मिकारोपप्रकारीभूतधर्मेण साक्षादवच्छिन्ना या उद्देश्यता तदुद्देश्यताके कार्ये कर्त्तव्ये स्थानिवन्न भवतीत्यर्थकानल्विधावित्यस्य, अतिदिदिक्षिताल्त्वव्याप्यधर्मघटितधर्मस्यातिदेशो न भवतीति द्वितीयार्थकानल्विधावित्यस्य च प्राप्त्यभावेन सम्बुद्धित्वैकवचनत्वे स्थानिवद्भावेनायास्यत एवेति चिन्त्यमिदम् । आरोपप्रकारीभूतसम्बुद्धित्वेन "एङ्ह्रस्वात्सम्बुद्धेः" (पा०सू० ६।१।६९) इतिशास्त्रीयोद्देश्यतायाः साक्षादनवच्छिन्नत्वाच्च ।

(१)परनिमित्तापेक्षाच्च गुणात्पूर्वं ह्रस्वान्तत्वादेव सिद्धिः। सेप्रभृतीनां सम्बो-धने (२)प्रयोगसत्त्वे एग्रहणेनैव सिद्धेः प्रत्याहारग्रहणं व्यर्थमिति प्रश्नः। **ह्रे इति।** सामर्थ्यादेवात्र सन्निपातपरिभाषा न, गुणात्सम्बुद्धेरिति वचने एङ्ह्रस्वग्रहणसामर्थ्याच्च। अत एव 'हे लक्ष्मि' इत्यादौ लोपसिद्धिः। **परत्वादिति** अभ्युच्चयः। **नित्यत्वाच्चेति।** चेना(३)नवकाशत्व-सङ्ग्रहः। नपुंसके 'त्रपो' इत्यादावस्यापि लुका बाध इत्यन्यत्।

**अमि पूर्वः**(४) (पा०सू० ६।१।१०७)। पूर्वसवर्ण इत्यनुवृत्त्यैव सिद्धे पूर्वग्रहणं तु 'रामम्' इत्यादौ द्विमात्रवारणाय।

**लशकु** (पा०सू० १।३।८)। समाहारद्वन्द्वः। अतद्धिते किम्? "कर्णललाटात्कनलङ्कारे" (पा०सू० ४।३।६५) कर्णिका। कित्त्वफलं त्वादिवृद्धिः स्यात्। आदिग्रहणाद् वृङः षाकनो न। तस्य कित्त्वे गुणो न स्यात्।

**तस्माच्छ** (पा०सू० ६।१।१०३]। पुंसीति पञ्चम्यर्थे सप्तमी।

---

(१)**परनिमित्तापेक्षाच्चेति।** चिन्त्यमिदम्, "एङ्ह्रस्वाद्" (पा०सू० ६।१।६९) इत्यत्रापरनिमित्तकत्वस्य सत्त्वेऽपि "अचस्तास्वद्"(पा०सू० ७।२।६१) इत्यादिसूत्रस्थभाष्यसङ्गमनाय 'अपूर्वनिमित्तकत्वे सति' इत्यस्य 'अपरनिमित्तकत्व-मन्तरङ्गत्वम्' इत्यत्रावश्यं निवेशनीयतया लोपस्याऽपूर्वनिमित्तकत्वाभावात् अपर-निमित्तकैङ्ह्रस्वादितिशास्त्रस्य, परनिमित्तकस्य "ह्रस्वस्य गुणः" (पा०सू० ७।३।१०८) इतिशास्त्रस्य चाश्रीयमाणशब्दसमुदायस्य अन्यूनानतिरिक्तत्वाभावाच्च। निरूपितं चेदमन्तरङ्गपरिभाषाटिप्पणे। (२)**प्रयोगसत्त्वे इति।** 'नहि पदान्तादेङो ह्रस्वः' इतिभाष्यप्रामाण्येन एकारान्तानामनभिधानमेवेतिबोधनायेदम्। (३)**अनवका-शत्वसङ्ग्रह इति।** तदप्राप्तियोग्येऽचारितार्थ्यरूपबाधबीजस्य सत्त्वादिति भावः। वस्तुतस्तु सम्बुद्धिलोपे कृते प्रत्ययलक्षणेन गुणस्य चारितार्थ्यादनवकाशत्वादिति समञ्जसमेव।

(४)**अमि पूर्वः** (पा०सू० ६।१।१०७)। प्रत्ययग्रहणपरिभाषया 'यस्मात्प्रत्य-यविधिस्तदादि' इत्युपतिष्ठते, तच्च पञ्चम्यन्तं षष्ठ्यन्तं वा। आद्ये तदादेः परो भूतो योऽम्यच् तस्मिन् परतः पूर्वरूपमित्यर्थः। अन्त्ये अगन्ततदादेरम्यचि परतः पूर्वरूप-मित्यर्थः। अत एव 'हे देवदत्त अमू' इत्यादावनेन पूर्वरूपं न।

पुंसो विहितस्येत्यर्थः, (१)तत्र विद्यमानाद्विहितस्येत्यर्थो वा । तस्मादिति किम् ? (२)एतान् गाः पश्य । पुंसि किम् ? मतीः ।

**अट्कु** (पा०सू० ७।४।२) । **बाधितुमिति** । तेन 'पर्याणद्धम्' इत्यत्र "उपसर्गादसमासेऽपि" (पा०सू० ८।४।१४) इति णत्वसिद्धिरिति भावः । **अयोगवाहानामिति** । न विद्यते योगो वर्णसमाम्नाये येषां तेऽयोगाः । अनुपदिष्टत्वादुपदिष्टैरगृहीतत्वाच्चेत्यर्थः । ते च ते वाहयन्ति प्रयोगं निर्वाहयन्ति ते वाहाः । ते चानुस्वारविसर्गजिह्वामूलीयोपध्मानीययमाः । अत एव 'उरःकेण' इत्यादौ विसर्गव्यवधानेऽपि णत्वसिद्धिः । तदुक्तं **भाष्ये**—"नार्थो नुम्ग्रहणेनानुस्वारे कृतेऽड्व्यवाये इत्येव सिद्धम्" इति । 'आदर्शेन' इत्यादौ तु नातिप्रसङ्गः अडतिरिक्तव्यवायात् । 'तस्माद्' इत्युपस्थितं निर्दिष्टग्रहणमेतत्समभिव्याहारे (३)अडादिव्यतिरिक्ता-

---

(१)**तत्र विद्यमानाद्विहितस्येति** । पुंस्त्वावच्छिन्नमुख्यविशेष्यताकबोधतात्पर्येणोच्चरिताद्विहितस्येत्यर्थः, 'प्रधानाप्रधान' इति न्यायात् । अत एव 'राजकुमारीः पश्य' इत्यादौ नानेनादेशः । अन्यथा राजकुमारीशब्दस्य पुंस्त्वावच्छिन्नविषयताकबोधतात्पर्येणोच्चरितत्वेन तस्माच्छसो नकारो दुर्वारः स्यात् । (२)**एतान् गाः पश्येति** । "अकः सवर्णे" (पा०सू० ६।१।१०१) इति सूत्राद्दीर्घपदमनुवर्त्य पञ्चम्यन्तत्वेन विपरिणमय्य दीर्घात्परीभूतो यश्शसः सकारस्तस्य नकारादेशः स्यादित्यर्थेन 'लिहः' इत्यादौ दोषो नास्तीति प्रश्नकर्तुराशयः । वस्तुतस्तु दीर्घपदमनुवर्त्य पञ्चम्यन्तत्वेन विपरिणामेऽपि तस्य शस्येवान्वयः स्यात् श्रुतत्वात् । तथा च रामानित्यादौ दीर्घात्परीभूतशसोऽभावेन अव्याप्तिः स्यादिति नायं प्रश्नकर्तुराशयः, किन्तु दीर्घपदमनुवर्त्य सकारं च प्रश्लिष्य दीर्घात्परीभूतो यः शसः सकारस्तस्य नः स्यादित्यर्थकरणेन न दोष इति प्रश्नाशय इति ।

(३)**अडादिव्यतिरिक्ताव्यवहितपरमिति** । चिन्त्यमिदम्, "अट्कुप्वाङ्" (पा०सू० ८।४।२) इति सूत्रे अव्यवहितत्वांशस्य बाधात् तद्विकलांशस्योपस्थित्या अडादीतरत्वेनाव्यवहितपदार्थे सङ्कोचस्य कर्तुमशक्यत्वात् । "तस्मिन्" (पा०सू० १।१।६६) इति "तस्मात्" (पा०सू० १।१।६७) इति परिभाषे हि योंऽशो बाधितः सिद्धो वा तमंशं परित्यज्य अन्यांशविशिष्टे उपतिष्ठेते । यथा प्रत्ययविधौ परश्चेत्यधिकारेण उत्तरत्वांशस्य सिद्धत्वात् तदंशरहिता "तस्माद्" (पा०सू० १।१।६७) इत्युपतिष्ठते । तथा च "प्रत्ययस्थात्" (पा०सू० ७।३।४४) इत्युक्त्योत्तरत्वांशस्य बाधितत्वात्तदंशरहितोपतिष्ठते । एवं व्यवायेऽपीत्युक्त्याऽव्यवहितत्वांशस्य बाधितत्वात्तद-

व्यवहितपरम्। तदुक्तं—"णत्वेऽन्यव्यवाये प्रतिषेधो वक्तव्यो; न वाऽन्येन व्यवेतत्वात्" इति ग्रन्थेन। एतदुत्तरम् "अटा व्यवायसत्त्वात्प्राप्नोत्येव, अटैव व्यवाये इत्यर्थात्" इत्यादि भाष्यमेकदेशिनोरुक्तिप्रत्युक्तिपरम्। "चुटूतुलशर्व्यवाये न" इति प्रतियोगिज्ञानसापेक्षनिषेधबोधकगुरुन्यासेन सिद्धे "अट्कुप्वाङ्" इत्युक्त्वा 'एतैरेव व्यवाये' इत्यर्थं वदता तस्यास्तदुक्तित्व-ध्वननात्। **एतद्वार्तिकमतम्।**

**भाष्ये** तु "रषाभ्याम्" (पा०सू० ८।४।१) इति सूत्रे "ऋवर्णान्नस्य" (का०वा०) इत्यस्य प्रत्याख्यानाय 'व्यवाये' इति योगं विभज्य 'अट्कुप्वाङ्नुम्भिः' इत्येतत् 'एतैरेवाक्षरसमाम्नायिकैर्व्यवाये नान्यैः' इत्यर्थकं व्याख्यातम्। तदा तु 'आदर्शेन' इत्यादौ (१)प्राप्तिरेव नेति बोद्धव्यम्।

---

नुपस्थितौ तत्र कथमडादीतरत्वेन सङ्कोच इति विभाव्यताम्। तथा च 'आदर्शेन' इत्यादौ णत्वं दुर्वारमेवेति बोध्यम्।

(१)**प्राप्तिरेव नेति**। इदमपि चिन्त्यमेव, नियमस्थले हि नियामकशास्त्रीयोद्देश्यतावच्छेदकव्यापकं नियम्यशास्त्रीयोद्देश्यतावच्छेदकव्याप्यं च यद्रूपं तद्रूपावच्छिन्नातिरिक्तत्वेन नियम्यशास्त्रे सङ्कोचं कृत्वा नियमशास्त्राणां विधिमुखेन प्रवृत्तिरित्येकः कल्पः। अथवा निरुक्तरूपावच्छिन्ने नियामकशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्नातिरिक्तत्वेन सङ्कोचं कृत्वा नञमध्याहृत्य नियमशास्त्राणां निषेधमुखेन प्रवृत्तिरित्यपरः। तथा च प्रकृते आद्यकल्पे 'व्यवायेऽपि' इत्यत्र नियम्यशास्त्रीयोद्देश्यतावच्छेदकव्याप्य-अट्कुप्वाङिति नियामकशास्त्रीयोद्देश्यतावच्छेदकव्यापकाक्षरसमाम्नायिकत्वावच्छिन्नातिरिक्तत्वेन सङ्कोचं कृत्वा 'अट्कुप्वाङ्' इत्यस्य विधायकत्वे 'आदर्शेन' इत्यादौ अडादिव्यवधानसत्त्वात् 'अट्कुप्वाङ्' इत्यनेन, 'अट्कुप्वाङ्' इत्यत्र वाऽडादिकर्तृकव्यवधानवद्भिन्नो य आक्षरसमाम्नायिककर्तृकव्यवधानवान् तस्य नस्य णत्वं न भवतीति निषेधमुखेन प्रवृत्तौ 'व्यवायेऽपि' इत्यनेन वा 'आदर्शेन' इत्यादौ णत्वस्य दुर्वारत्वात्। अत एव "रषाभ्याम्" (पा०सू० ८।४।१) इतिसूत्रभाष्ये 'मातॄणाम्' इत्याद्यर्थं "णत्वे ऋकारग्रहणं कर्त्तव्यम्" इति वार्तिकमुक्त्वा 'अट्कुप्वाङ्' इति योगविभागेन नियमं च स्वीकृत्य तद् वार्त्तिकं प्रत्याख्याय "अट्कुप्वाङ्" (पा०सू० ८।४।२) इति सूत्रे 'आदर्शेन' इत्यादौ णत्ववारणाय "अटा व्यवाये णत्वे अन्यव्यवाये प्रतिषेधो वक्तव्यः" इति वार्त्तिकमुक्तम्। अन्यथा पूर्वसूत्रे एव 'आदर्शेन' इत्यादौ नियमेनैव णत्ववारणादेतद्वार्त्तिकानुत्थानं स्यात्। भाष्यकारेण चोक्तम्—"व्यवायेऽपीति योगो विभज्यते, अट्कुप्वाङिति नियमार्थम्" इत्यादि। अथ च 'अटैव व्यवाये भवति' किं वक्तव्य-

**णत्वे इति** । (१)णकारे इत्यर्थः ।

**पदान्तस्य** (पा०सू० ८।४।३७) । "न भाभू" (पा०सू० ८।४।३४) इति सूत्रान्नेति वर्त्तते । अत्र सूत्रे "अनन्तरस्य" इत्यादिव्यवस्थापकन्यायानाम(२)प्रवृत्तिर्बोध्या, (३)'अपदान्तस्य' इत्यनुवर्त्यैतस्य **भाष्ये** प्रत्याख्यानात् ।

**यस्मात्प्र** (पा०सू० १।४।१३) । 'यस्माद्' इति 'तदादि' इति त-

---

मेतत् ? न हि । कथमनुच्यमानं गंस्यते ? अड्ग्रहणसामर्थ्यात् । यदि हि अटा चान्येन च व्यवाये स्याद्, अड्ग्रहणमनर्थकं स्यात्, व्यवाये नो णो भवतीत्येव ब्रूयात् । अस्ति चान्यदड्ग्रहणस्य प्रयोजनम् । किम् ? योऽनिर्दिष्टैरेव व्यवायस्तत्र मा भूत्-कृत्स्नम्, मृत्स्नेति । यद्येवं प्रयोजनं स्यात् शर्व्यवाये नेत्येव ब्रूयात्" इति **भाष्ये** समाहितम् । "चुटुतुलशर्व्यवाये न" इति मूलोक्तं चिन्त्यमेव **भाष्ये** अदर्शनात् । तस्माच्छर्व्यवाये नेत्येव सिद्धे अट्कुप्वाङिति गुरुन्यासकरणादट्कुप्वाङ्नुम्भिरेव व्यवाये णत्वं भवतीति सूत्रार्थ इति 'आदर्शेन' इत्यादौ णत्वं न भवतीति । नच शर्व्यवाये नेति न्यासकल्पे 'आर्न्धीत्' इत्यादौ णत्वं स्यात्, यथाश्रुतन्यासे चाडादिव्यवधानाभावाण्णत्वं न स्यादिति फलभेद इति वाच्यम्, तुशर्व्यवायेनेत्येव सिद्धे अट्कुप्वाङ् इति गुरुन्यासकरणेन निरुक्तार्थस्य लाभात् । **भाष्ये** शर्व्यवाये नेत्यपि तुशर्व्यवाये नेत्यस्यैवोपलक्षणमिति दिक् ।

**(१)णकारे इत्यर्थ इति** । अयं भावः—णपदस्य णत्वावच्छिन्नाभिन्नो यो णपदवाच्यः तत्र शक्तिः । तथाच प्रत्ययप्रकृतिणपदजन्यबोधे णत्वावच्छिन्नस्य प्रकारीभूतत्वात् त्वप्रत्ययार्थोऽपि णकार इति । अत एव "कुत्वं कस्मान्न भवति" इति **भाष्ये**ऽपि कुपदस्य कवर्गाभिन्नो यः कुपदवाच्यः तत्र शक्त्या कुत्वं कस्मान्न भवतीत्यस्य कवर्गः कस्मान्न भवतीत्यर्थः । तथाच "वृद्धिरादैज्" (पा० सू० १।१।१) इत्यादौ "कुत्वं कस्मान्न भवति" इत्यस्य सङ्केतसम्बन्धेन कुपदं कस्मान्न तिष्ठति इति प्रश्नाशय इत्याहुः ।

**परे तु** शब्दब्रह्मवादिमते धर्मी सर्वत्रैक एव सत्यज्ञानानन्दस्वरूपोऽखण्डोऽखण्डानन्दैकरसः सर्वज्ञः सर्वशक्तिमानिति तस्य विधातुमशक्यत्वात् धर्मा एव विधेयाः । तथाच कुत्वं कस्मान्न भवतीति यथाश्रुतमेव समीचीनम् । प्रत्युत कुर्भवतीत्यादेरेव कुत्वं भवतीत्यर्थः कर्त्तव्यः । तथाच णत्वे इत्यस्य णकार इत्यर्थ इति व्याख्यानमसमञ्जसमेवेत्याहुः ।

**(२)अप्रवृत्तिर्बोध्येति** । सर्वणत्वविधिकाण्डानन्तरं णत्वनिषेधकाण्डारम्भादिति भावः । प्रमाणान्तरमप्याह-**(३)अपदान्तस्येत्यादि** ।

च्छब्दाकाङ्क्षापूरणाय । **तदादीति** । तत् प्रकृतिरूपमादि(१)र्यस्ये-त्यर्थः । प्रत्यासत्तिन्यायलब्धार्थमाह–(२)**तस्मिन्प्रत्यये** इति। 'गुणः कृतात्मसंस्कारः' इति न्यायेनात्रापि "तस्मिन्" (पा०सू० १।१।६६) इति (३)परिभाषाप्रवृत्तिः । प्रकृतिमात्रस्य तु व्यपदेशिवद्भावेन तदा-दित्वं बोध्यम् । **स्त्री इयतीति** । इदं शब्दाद्वतुपि वस्य "किमिदंभ्यां वो घः" (पा०सू० ५।२।४०) इतिघादेशे तस्येयादेशे "इदं किमोः" (पा०सू० ६।३।९०) इतीशि "यस्य" (पा०सू० ६।४।१८४) इति लोपे ङीपि 'इयती' इति रूपम् । न च तत्र परतः स्त्रीशब्दस्येयङाद्यापत्तिरूपो दोषो न, यस्येतिलोपस्याभयत्वादसिद्धत्वेनात्र तदप्राप्तेरिति वाच्यम्; व्याश्रय-त्वेनाभीयासिद्धत्वाप्राप्तेः । तत्र हि समानाश्रयत्वमसिद्धत्वाश्रयशास्त्रसम्ब-न्धिनिमित्तसमुदाया(४)न्यूनानतिरिक्ताश्रयकत्वम् । अस्ति च यस्येतिलोपा-

---

(१)**यस्येत्यर्थ इति** । प्रत्ययनिष्ठविधेयतानिरूपितोद्देश्यताश्रयनिष्ठावयवयवतादि-रूपक इति भावः । (२)**तस्मिन्प्रत्यय इति** । तथा च स्वनिष्ठविधेयतानिरूपितोद्दे-श्यताश्रयाद्यवयवकत्वं, स्वाव्यवहितपूर्वत्वमेतदुभयसम्बन्धेन प्रत्ययविशिष्टत्वमङ्गत्वमिति फलितम् । (३)**परिभाषाप्रवृत्तिरिति** । औपश्लेषिकाधिकरणबोधकसप्तम्यन्तघटि-तत्वरूपतस्मिन्निति परिभाषाशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वादिति भावः ।

(४)**अन्यूनानातिरिक्ताश्रयकत्वमिति** । तत्त्वञ्च—यत्किञ्चिदाभीयशास्त्रवै-शिष्ट्यम् । वैशिष्ट्यं च स्वविशिष्टत्वं, स्वीयोद्देश्यतावच्छेदकावच्छिन्नत्वेन आश्रीयमाणो यावान् शब्दसमुदायः तत्समाभिव्याहृतो यः तदघटितशब्दसमुदायाश्रयकत्वमेतदन्य-तरसम्बन्धेन । प्रथमसम्बन्धवैशिष्ट्यं च स्वीयोद्देश्यतावच्छेदकरूपावच्छिन्नोद्देश्यता-कत्व, स्वीयविधेयतावच्छेदकरूपावच्छिन्नविधेयताकत्वोभयसम्बन्धेन । प्रथमसम्बन्धा-नुपादाने चिणो लुग्दृष्ट्या चिणोलुकोऽसिद्धत्वं न स्यात् । द्वितीयसम्बन्धे 'शब्दसमु-दायः' इति विशेषणानुपादाने 'जहि' इत्यादौ "अतो हेः" (पा० सू० ६।४।१०५) इति दृष्टया "हन्तेर्जः" (पा०सू० ६।४।३६) इत्यस्यासिद्धत्वं न स्यात् तयोरर्थे न्यूना-धिकभावस्य सत्त्वात् । समभिव्याहृत इत्युपादानात् स्थान्यादेशयोः भिन्नस्वरूपमादाय न दोषः । एतेन यथाश्रुतमूलरीत्या 'जहि' इत्यादौ हेर्लुकि कर्त्तव्ये जादेशस्यासिद्धत्वा-नापत्तिः, चिणोलुग्दृष्ट्या चिणो लुकोऽसिद्धत्वानापत्तिश्चेति परास्तम्, मूलोक्तान्यूनान-तिरिक्तसमुदायाश्रयकत्वमित्यस्य निरुक्तलक्षणोपलक्षणत्वात् । 'चङ्क्रायिता' इत्यादौ यङन्ताल्लुटि "यस्य हलः" (पा०सू०६।४।४९) इति लोपे कर्त्तव्ये "ये विभाषा" (पा०सू० ६।४।४९) इत्यात्वस्यासिद्धत्वं न, तस्य लोपापेक्षया न्यूननिमित्तकत्वात्।

पेक्षया "स्त्रियाः" (पा०सू० ६।४।७९) इति सूत्रेऽधिकस्य स्त्रीशब्दस्यापेक्षा । प्रत्यासत्त्याऽजादिप्रत्ययनिरूपिताङ्ग एवेयङ्प्रवृत्त्या स्त्रीशब्दस्य सुनिरूपिताङ्गत्वेऽपि न दोषः । विधिग्रहणादेव (१)'भनक्ति' इत्यादौ "अतो दीर्घो यञि" (पा०सू० ७।३।१०१) इति न । तदादिग्रहणं 'करोमि' इत्यादौ विकरणस्य गुणार्थम् । **प्रत्ययविशिष्टस्येति ।** तथा सत्यङ्गेन प्रत्ययपरत्वलाभानापत्तौ 'वव्रश्च' इत्यस्यासिद्धिः । किञ्च 'राजपुरुषः' इत्यादौ "न लुमता" (पा०सू० १।१।६३) इति (२)निषेधात्पूर्वपदे पदत्वाभावेन नलोपानापत्तिरिति भावः । **ततोऽप्यधिकस्य वेति ।** 'देवदत्त ओदनमपाक्षीत्' इत्यादौ देवदत्तादिशब्दोत्तरसुपं निमित्तीकृत्य लुङ्पर्यन्तमङ्गत्वात्तस्य लुङ्परत्वेन देवात्पूर्वमप्यडापत्तिः, अङ्गसञ्ज्ञायाः प्रत्ययनिमित्तत्वाभावेन लुङादिनिरूपिताङ्गस्येत्यर्थस्य दुर्लभत्वादिति भावः ।

**टाङसि** (पा०सू० ७।१।२) । अङ्गस्येति षष्ठ्या "अतो भिसः" (पा०सू० ७।१।९) इत्यतोऽनुवृत्तेनात इत्यनेन पञ्चम्यन्तेन सामानाधिकरण्यानुरोधात्पञ्चम्या विपरिणाम इत्याह—**अकारान्तादिति ।** अकारान्तरेषामङ्गसञ्ज्ञानिमित्तटादीनामित्यर्थ इति पक्षान्तरं **भाष्ये ।** किञ्चाद-

---

'पपुषः इत्यादौ "वसोः सम्प्रसारणम्" (पा० सू० ६।४।१३१) इति सम्प्रसारणस्य "आतो लोपः" (पा०सू० ६।४।६४) इत्यालोपे कर्तव्ये नासिद्धत्वं सम्प्रसारणस्य अधिकापेक्षत्वात् ।

(१)**भनक्तीत्यादाविति ।** अयम्भावः—प्रत्ययेऽङ्गमित्येव सिद्धे यस्मात् प्रत्ययस्तदादि प्रत्ययेऽङ्गमिति करणाद् यदवधिकपरत्वावच्छिन्नविधेयताश्रयो यः प्रत्ययः तस्मिन् परतः तदादि अङ्गसञ्ज्ञं स्यादिति 'स्त्री इयती' इत्यादौ स्त्रीशब्दावधिकाव्यवहितपरत्वावच्छिन्नविधेयताश्रयत्वस्य वतुप्यभावात् स्त्रीशब्दस्याङ्गसञ्ज्ञा न प्राप्नोतीति विधिग्रहणं किमर्थमिति प्रश्नः । 'भनक्ति' इत्यादौ "मिदचोऽन्त्याद्" (पा०सू० १।१।४७) इति परिभाषया भकारोत्तराकारावधिकपरत्वावच्छिन्नविधेयताश्रयत्वस्य श्नमि सत्त्वेनाकारस्याङ्गसञ्ज्ञायाम् "अतो दीर्घो यञि" (पा०सू० ७।३।१०१) इति दीर्घापत्तिरिति भावः । (२)**निषेधादिति ।** लुप्तप्रत्ययाव्यवहितपूर्वत्वनिमित्तके इत्यर्थालाभेनेति शेषः ।

न्तादङ्गादित्यर्थेऽपि 'ब्राह्मणभिस्सा' इत्यादावतिप्रसङ्गः। ब्राह्मणेत्यस्यापि "युवोरनाकौ" (पा०सू० ७।१।१) इतिसूत्र**भाष्योक्त**रीत्याऽन्तर्वर्तिनिमित्त्याऽङ्गत्वात्। अर्थवत्परिभाषया प्रत्ययग्रहणपरिभाषया वा प्रत्ययस्यैव भिसो ग्रहणे त्वेषामङ्गाधिकारे पाठो व्यर्थः। भिसः प्रत्ययस्यैव ग्रहणे हि प्रत्यासत्त्या तन्निरूपिताङ्गस्य ग्रहणमिति युज्येते वक्तुं, नान्यथा। इदमेव हि "अतो भिसः" (पा०सू० ७।१।९) इत्यत्राङ्गाधिकारस्य प्रयोजनं **भाष्ये** दत्तमित्यलम्।

**सुपि च** (पा०सू० ७।३।१०२)। "अतो दीर्घो यञि" (पा०सू० ७।३।१०१) इत्यनुवर्तते। यञीत्यनेनाल्त्वात्तदादिविधिरित्याह-**यञादाविति।**

**ङेर्यः** (पा०सू० ७।१।१३)। चतुर्थ्येकवचनस्यैव ग्रहणं व्याख्यानादित्याह-**ङेइत्येतस्येति। सन्निपातेति।** उपजीव्यविरोधन्यायमूलैषा। सन्निपातः (१)संश्लेषस्तन्निमित्तको यो विधिः स तं सन्निपातं यो विहन्ति स तद्विघातस्तस्यानिमित्तमित्यर्थः। न च यञादित्वसापेक्षदीर्घस्य बहिरङ्गतयाऽसिद्धत्वान्नात्र सन्निपातविघात इति वाच्यम्, आरोपितासिद्धत्वेऽपि वस्तुतस्तद्विघातस्य जायमानत्वेन तत्प्रवृत्तेः। (२)किञ्चान्तरङ्गे कर्त्तव्ये बहिरङ्गासिद्धत्वेऽपि तत्र कृतेऽसिद्धत्वे मानाभावः। (३)किञ्चा- (४)तिदेशिकसन्निपातविघाताभावमादायैतदप्रवृत्तौ 'गौरि' इत्यादौ सम्बु-

---

(१)**संश्लेष इति।** उपजीव्यमात्रस्योपलक्षणमिदम्। ननु शास्त्रे ज्ञानमेव प्रवृत्तिनिवृत्तिनियामकम्। अन्यथा अतिदेशशास्त्रप्रणयनं व्यर्थं स्यात्। तथाच "सुपि च" (पा०सू० ७।३।१०२) इति दीर्घस्य बहिरङ्गासिद्धत्वे तद्धर्म्मिकस्योपजीव्यविघातकत्वप्रकारकज्ञानस्य अभावाद् "ङेर्यः" (पा०सू० ७।१।१३) इतिशास्त्रं "सुपि च" इति शास्त्रस्याभ्यनुज्ञां ददात्येवेत्यरुचेराह--(२)**किञ्चेति।** ननु 'रामाय' इत्यादौ यादेशस्य जातत्वेऽपि "ङेर्यः" इति शास्त्रस्य--'स्वप्रवृत्त्युत्तरकालिकप्रवृत्तिमच्छास्त्रेण यस्य साधुत्वं बोध्यते तदपि साधु' इति अभ्यनुज्ञादानसमये तत्समानकालप्राप्तिकसुपिचेतिशास्त्रस्याऽसिद्धत्वं वक्तुं शक्यते इत्यरुचेराह-(३)**किञ्चेति।** (४)**आतिदेशिकेति।** आतिदेशिकपदार्थतावच्छेदकातिदेशपदार्थे यदागमन्यायासिद्धादि

द्विलोपेऽपि स्थानिवत्त्वेन ह्रस्वनिमित्तविघाताभावात्तत्रैतस्या अतिव्याप्तिपर-**भाष्यासङ्गतिः** । सन्निपातस्याशास्त्रीयत्वान्नात्र स्थानिवत्त्वमिति चेत्तत्रासिद्धत्वमपि कथमिति वद ।

कार्यस्य निमित्तं (१)ययोः सन्निपात(२)स्तयोः सूत्रे उपादानमपेक्षितमिति तु नाग्रहः । अत एव 'दाक्षिः' इत्यत्राकारान्तप्रकृतीञ्सन्निपातनिमित्ताऽङ्गसञ्ज्ञाऽनया परिभाषयाऽल्लोपस्य निमित्तं न स्यादित्याशङ्क्यानित्यत्वेन समाहितं **भाष्ये** कृन्मेजन्तसूत्रे । न ह्यङ्गसंज्ञायामदन्तस्याङ्गसञ्ज्ञेत्युक्तमस्ति । न च कष्टायेत्यस्य "अकृत्सार्व" (पा०सू० ७।४।२५) इतिदीर्घेणोपपत्तेरनित्यताज्ञापकत्वं कथमिति वाच्यम्, तस्यापि सन्निपातपरिभाषयाऽप्राप्तेः । (३)विरोधाभावात् (४)फले विशेषाभावाच्च परत्वेऽप्यकृदिति (५)नोपन्यस्तम् । तस्याकृदित्यादिपर्युदासेनासुप्येव प्रवृत्तिरित्यन्ये ।

---

रिक्तत्वेन एकदेशविकृतन्यायसिद्धातिरिक्तत्वेन च सङ्कोचः कर्त्तव्यः । अत एव 'येषाम्' 'तेषाम्' 'शैवः' 'गार्ग्यः' इत्यादौ सुडागमयस्येतिलोपौ सिद्धौ । अन्यथा विभक्तिं निमित्तीकृत्य जायमानमत्वं तदानन्तर्यविघातकसुट्प्रवृत्तिं प्रति, शिव गर्ग रूपप्रातिपदिकं निमित्तीकृत्य जायमानोऽण् यञ् तादृशप्रातिपदिकविघातकयस्येतिलोपं प्रति च निमित्तं न स्यात् । मम तु यदागमन्यायेन सामित्यत्र विभक्तित्वस्य, एकदेशविकृतन्यायेन यस्येतिलोपेऽपि शिव गर्ग प्रातिपदिकत्वस्य सत्त्वान्नोपजीव्यविरोधः । अत एव 'स एषां ग्रामणीः" इति निर्देशो, "वर्णाश्रयः प्रत्ययो वर्णविचालस्यानिमित्तम्" इति वार्त्तिके वर्णाश्रयविशेषणं च सङ्गच्छते ।

(१)**ययोरिति** । यद्रूपावच्छिन्नयोरित्यर्थः । (२)**तयोरिति** । तद्रूपावच्छिन्नयोरित्यर्थः ।

(३)**विरोधाभावादिति** । चिन्त्यमिदम् । 'रामाय' इत्यादौ "सुपि च" (पा०सू० ७।३।१०२) इति "अकृत्सार्वधातुकयोर्दीर्घः" (पा०सू० ७।४।२५) इत्युभाभ्यामेकस्य दीर्घस्य विधातुमशक्यत्वादेकस्य शास्त्रस्य विधायकत्वमपरस्यानुवादकत्वञ्च वक्तव्यम्, तथा च कस्य विधायकत्वं कस्यानुवादकत्वमित्यत्र विनिगमकाभावाद् विरोधस्य सत्त्वात् । इत एवारुचेराह-(४)**फले इति** । (५)**नोपन्यस्तमिति** । केचित्तु-"अकृत्सार्वधातुकयोः" (पा०सू० ७।४।२५) इति पर्युदासाद्धातुत्वव्याप्यधर्मावच्छिन्नोद्देश्यतानिरूपितविधेयताश्रये यादौ प्रत्यये परतस्तेन दीर्घ इति नात्र तस्य प्राप्तिरित्याहुः, तन्न, 'कष्टायते' इत्यादौ दीर्घानापत्तेः ।

ननु "सुपि च" (पा० सू० ७।३।१०२) इति सूत्रं माऽस्तु, 'रामाय' इति सार्व-

**झलि किमिति** । "उतो वृद्धिः" (पा०सू० ७।३।८९) इत्य... हलीत्येवानुवर्त्य सन्निपातपरिभाषया 'रामाणाम्' इत्यत्र न दोष इति प्रश्नः झल्ग्रहणमेत्त्वे सन्निपातपरिभाषाया अप्रवृत्तिज्ञापनार्थम् । तेन 'सर्वेषाम्' इत्यादावेत्वसिद्धिरित्युत्तरम् । एतेन 'बहुवचने किम् ? रामस्य' इति व्याख्या...

---

धातुके इत्यस्यानुवृत्त्या "अतो दीर्घो यञि" (पा०सू० ७।३।१०१) इति दीर्घे... ण सिद्धम्, इति चेत् ? न, तत्र तदनुवृत्त्यभावे 'केशवः' 'अञ्जना' इत्यादौ दीर्घापत्तेः न च आरकनि आकारोच्चारणसामर्थ्येन तद्धितेषु "अतो दीर्घो यञि" (पा०सू० ७।३।१०१) इयस्याप्रवृत्तिज्ञापनान्न दोषः । अन्यथा शृङ्गवृन्दशब्दाभ्यां "शृङ्गवृन्दाभ्यामारकन्" इति सूत्रेण रकन्मात्रविधाने तस्य यञादित्वेनोक्तसूत्रेण दीर्घे 'शृङ्गारकः' 'वृन्दारकः' इत्यनयोः सिद्धौ तद्वैयर्थ्यं स्पष्टमेव; इति वाच्यम्, शृङ्गशब्दात् णिजन्तात् क्विपि ततः प्रत्यये तत्राकारश्रवणार्थं तस्यावश्यकत्वात् । न चैतादृशरूपाणां तत्र सिद्धे आकारोच्चारणस्यान्यतो विधानार्थत्वज्ञापनपरभाष्यप्रामाण्येन णिजन्तप्रकृतिक क्विबन्तात्तद्धिताभावकल्पनेनानभिधानमेव । अन्यथा गोधाशब्दाण्णिचि ततः क्विबन्ताद्ढकि आरकि च फलभेदस्य स्पष्टतया भाष्यासङ्गत्यापत्तेः, इति वाच्यम्, वासुदेवार्जुनाभ्यां कन्विधानेन 'वासुदेवकः' इत्यादीनां सिद्धौ वुन्विधानस्य व्यर्थतापत्तेः तद्धि वासुदेवशब्दाण्ण्यन्तात्क्विबन्ताद् 'वासुदेवकः' इत्यर्थम् । न चेदानीं तदभिधानं यदर्थं तत्सार्थकं स्यात् । किञ्च "आरगुदीचाम्" (पा०सू० ४।१।१३०) इति सूत्रे भाष्यम् "आरगुदीचाम्" इत्यत्र आकारप्रश्लेषतात्पर्यकम् । तेन आकारान्तात् गोधाशब्दादित्यर्थः । तेन क्विबन्तेऽपि न फलभेदः । अन्यथा गोधाशब्दस्य ऋच्छन्दे समासे तस्य पूर्वान्तवत्त्वेन गोधाशब्देन ग्रहणे तत आरकि 'गौधरारः' इत्यर्थे ...कारस्यावश्यकत्वेन फलभेदावश्यम्भावादिति दिक् ।

मूले—**बहुवचने किम् ? राम इति** । ननु "स्वौजस्" (पा०सू० ४।१।२) इत्यत्र वौंजसिति न्यासेन रामशब्दाद्धुप्रत्यये तस्य झलादित्वाभावेन नात्र दोषः न चैवं तस्य यञादित्वेन "सुपि च" (पा०सू० ७।३।१०२) इति दीर्घापत्तिरिति वाच्यम्, सुपि चेत्यस्य स्थाने "आपि च" इति न्यासेन तस्य च तृतीयादिविभक्तावित्यर्थेन तदप्राप्तेः । न च छन्दसि प्रथमायाः "सुपां सुलुक्" (पा०सू० ७।१।३९) इति यादेशे दीर्घानापत्तिः । छान्दसत्वेन तत्राऽऽपाद्यमानरूपाभावेनादोषात्, इत्याशयेनाह—**रामस्येति** । नन्वत्रापि "टाङसि" (पा०सू० ७।१।१२) इति सूत्रेऽस्य निर्दिश्याऽस्यादेशे "अतो गुणे" (पा०सू० ६।१।९७) इति पररूपेण न दोषः । चास्यादेशविधाने 'अमुष्य' इत्यत्र सकारस्येणःपरत्वाभावात्षत्वानापत्तिः, अद ...त्यत्र मुत्वस्यासिद्धत्वापूर्वं पररूपे पश्चान्मुत्वे इणः परत्वेन सस्य षत्वसिद्धेः । ...

तम् । (१)'रामाभ्याम्' इत्यपि प्रत्युदाहरणं बोद्धव्यम् । "बहुवचने झली-*क्" इति तु न सूत्रितम् 'ज्ञानयोः' इत्यादौ (२)नुमापत्तेः ।

**जश्त्वमिति** । बाधित्वेति शेषः । अवसाने चर्त्वस्य पदान्त-जश्त्वा(३)पवादत्वात् । **द्वित्वे रूपेति** । 'पूर्वत्रासिद्धमद्वित्वे' इति

---

'अस्य' इत्यत्र प्रत्ययस्य हलादित्वाभावेन हलि लोपानापत्तौ तदसिद्धिः, "आपि लापोऽकः" "अन् टौसोः" इति न्यासेन सिद्धेः । इत्यरुचेराह (१)**रामाभ्यामिति** ।

(२)**नुमापत्तेरिति** । ज्ञान ओसिति स्थिते "ओसि च" (पा०सू० ७।३।१०४) इत्यनेन इगागमे "वार्णादाङ्गम्" (प० भा०) इतिपरिभाषया "इकोऽचि" (पा०सू० ७।१।७३) इति नुमापत्तिरिति भावः । न च वार्णशास्त्रीयस्थानितावच्छेदकपर्याप्त्य-नुयोगितावच्छेदकधर्मावच्छिन्नानुयोगिताकपर्याप्तिकस्थानिताकत्वरूपसमानस्थानिकत्वस्य "इकोऽचि विभक्तौ" (पा०सू० ७।१।७३) इत्यत्राभावाद् वार्णपरिभाषाया अप्र-वृत्तौ अन्तरङ्गत्वाद् गुणे इगन्तत्वाभावान्नुमोऽप्राप्त्या 'ज्ञानयोः' इत्यादौ न दोष इति वाच्यम्, ज्ञानशब्देन अशब्देन समासे तस्मादाचारक्विबन्तात्कर्तरि क्विपि नपुंसक-ह्रस्वे परमशब्देन समासे परमज्ञान ओसिति स्थिते इकि जाते इयङि निरुक्तसमानस्था-निकत्वस्य सत्त्वेनेयङादेशापत्तेः । न च "एरनेकाचः" (पा०सू० ६।४।८२) इति यणि निरुक्तं 'परमज्ञानयोः' इति रूपं सिध्यतीति वाच्यम्, सपूर्वपदस्य चेद् गति-कारकपूर्वपदस्यैवेति नियमपरेण "गतिकारकपूर्वस्यैवेष्यते" इति वार्त्तिकेन यणोऽप्राप्ते-रिति दिक् ।

(३)**अपवादत्वादिति** । तदप्राप्तियोग्येऽचारितार्थ्यविशिष्टस्य कृते चारितार्थ्य-

---

*इटि तु गङ्गे इत्यादौ गुणे तस्य पञ्चमीसमासेन स्थानिव-त्त्वात् "एङः" (पा०सू० ६।१।१०९) इत्यस्याप्राप्तौ व्यवधानाद् "ह-ल्ङ्याब्" (पा०सू० ६।१।६८) इत्यस्य चाप्राप्तौ *सम्बुद्धिलोपाना-पत्तिः" इति केषुचित्पुस्तकेष्वधिकः पाठः ।

---

टि० ***सम्बुद्धिलोपानापत्तिरिति** । न च 'गङ्गे' इत्यादौ पञ्चमीसमास-स्यानित्यत्वादप्रवृत्तौ एङन्तत्वादेव सम्बुद्धिलोपः सिद्ध्यतीति न दोष इति वाच्यम्, 'एभिः' इत्यादौ भिस इटि हलादित्वाभावेन हलि लोपानापत्तेः । **केचित्तु** "आपि लोपोऽकः" "अन् टौसोः" इति न्यासः क्रियते, हलीति न क्रियते । तथाच 'एभिः' इत्यादौ न दोष इति 'बहुवचने झलीट्' इति न्यासः सम्यगेव । "हलि लोपः" (पा० सू० ७।२।११३) इत्यत्र हल्ग्रहणाभावे प्रथमैकवचने "इदोऽय् पुंसि" (पा०सू० ७।२।१११) "यः सौ" (पा०सू० ७।२।११०) इत्याभ्याम्, औ–जस्–अम्–औट्–शस्सु "दश्च" (पा०सू० ७।२।१०९) इति बाधात् न तत्रातिप्रसङ्ग इत्याहुः ।

न्यायाच्चर्त्वोत्तरं द्वित्वं बोध्यम्। **तादेश इति।** अन्यथा "खरि च" (पा०सू० ८।४।५५) इति चर्त्वेन सिद्धावि(१)दं व्यर्थं स्यादिति भावः।

---

स्य सत्त्वादिति भावः। ननु "वाऽवसाने" (पा०सू० ८।४।५६) इति चर्त्वस्य जश्त्वापवादत्वे 'रत्नमुट्' इति रूपं न स्यात्। 'रत्नमुष्' इति दशायां जश्त्वचर्त्वयोः प्राप्तावपवादत्वात्पूर्वं चर्त्वप्रवृत्त्या महाप्राणप्रयत्नसाम्येन षकाररूपे चर्त्वे तदभावपक्षे जश्त्वे लक्ष्येलक्षणन्यायेन पुनश्चर्त्वाप्रवृत्तेः। "ष्णान्ता षट्" (पा०सू० १।१।२४) इति निर्देशानुपपत्त्या इष्टापत्तिस्तु कर्तुं न शक्यते; इति चेत्? न, उद्देश्यदलप्रविष्टविषयतावच्छेदकधर्मयोर्यत्रव्याप्यव्यापकभावः तत्र माठरकौण्डिन्यन्यायप्रवृत्तौ तेन न्यायेन एकविनियोगोद्देशप्रयुक्तवाक्यकदम्बघटकव्यापकधर्मावच्छिन्नबाधकपदप्रतिपाद्यतावच्छेदकावच्छिन्ने तद्वाक्यकदम्बघटकव्याप्यधर्मावच्छिन्नबाधकपदप्रतिपाद्यतावच्छेदकावच्छिन्नातिरिक्तत्वेन सङ्कोचात्। प्रकृते 'जश्त्वचर्त्वे करवाणि' इति विनियोगोद्देशेन प्रयुक्तः "झलां जश् झशि" (पा०सू० ८।४।५३) "अभ्यासे चर्च" (पा०सू० ८।४।५४) "खरि च" (पा०सू० ८।४।५५) "वाऽवसाने" (पा०सू० ८।४।५६) इति वाक्यकदम्बस्तद्घटकव्यापकधर्मावच्छिन्नबोधकं झल्पदं तत्प्रतिपाद्यतावच्छेदकझल्त्वावच्छिन्ने च पदार्थतावच्छेदकचर्त्वावच्छिन्नातिरिक्तत्वेन सङ्कोचे 'रत्नमुष्' इति दशायां चरतिरिक्तझलोऽभावात् "वाऽवसाने" (पा०सू० ८।४।५६) इत्यस्याप्रवृत्तौ जश्त्वे "वाऽवसाने" (पा०सू० ८।४।५६) इति चर्त्वे 'रत्नमुट्' 'रत्नमुड्' इतिरूपद्वयसिद्धेः। अत एव शसिदद्योरेत्वाभ्यासलोपनिषेधः सङ्गच्छते। चरतिरिक्तझलामभावेन "अभ्यासे चर्च" (पा०सू० ८।४।५४) इत्यस्याप्रवृत्तेः। तथाच अनादेशादेरित्यत्र 'आदेशो वैरूप्यसम्पादक एव गृह्यते' इत्यादि न वक्तव्यम्। एतदर्थज्ञापकताया एव तस्योचितत्वादिति दिक्।

(१)**इदं व्यर्थं स्यादिति।** न च "अच उपसर्गात्तः" (पा०सू० ७।४।४७) इतिसूत्रात् त इत्यनुवृत्त्या "सः स्यार्धधातुके" (पा०सू० ७।४।४९) इति तादेशे 'घत्स्यति' इत्यादौ "चयो द्वितीयाः" (का०वा०) इति द्वितीयादेशो भवति, चर्त्वे तु तस्यासिद्धत्वाद् द्वितीयादेशो न स्यादिति वाच्यम्, तावन्मात्रप्रयोजनकत्वे तपदे एतत्सूत्रपर्यन्तानुवृत्तिप्रयोजकस्वरितत्वमकृत्वा "सः स्यार्धधातुके" (पा०सू० ७।४।४९) इत्यनेनादेशमात्रविधाने स्थानेऽन्तरतमपरिभाषया सस्य स्थाने अर्थादेव तो भवतीति तस्यासिद्धत्वाभावाद् द्वितीयादेशसम्पत्तेः। एतत्सूचनायैव "सः सीति तादेश आरभ्यते" इति तादेशपदोपादानम्। तादेशो न कर्तव्यः, तत्स्थाने आदेशमात्रं विधातव्यमान्तरतम्यात् त एव भवतीति **कौमुद्यर्थः।** नचैवमपि "सः स्यार्धधातुके" (पा०सू० ७।४।४९) इत्यत्र तपदस्यानुवृत्त्यभावेन सकारास्य स्थाने कदाचित्तकारः कदाचित्सकारश्चाऽऽन्तरतम्याद्भविष्यति, त इत्यस्यानुवृत्तौ तु त एव भविष्यतीति फल

**ह्रस्वन** (पा०सू० ७।१।५४) । ह्रस्वनद्याप इति पञ्चमी । "आमि सर्वनाम्नः" (पा०सू० ७।१।५२) इत्यत आमीति वर्तते । तच्च षष्ठ्या (१)विपरिणम्यते "नामि" (पा०सू० ६।४।३) इति लिङ्गादित्याह–**ह्रस्वान्तादित्यादि** । आमत्र षष्ठीबहुवचनमेव; न तु ङेरामादीति स्पष्टं **भाष्ये** ।

यत्तु नुडिति विभज्य सामान्येन नुड् विधेयः । नद्याप इति दीर्घान्ताच्चेन्नद्याप एवेति नियमार्थमिति दीर्घेषु न दोषः । हलन्ताच्चेत् षट्चतुर्भ्य एवेति नियम इति हलन्तेषु न दोषः । एवञ्च ह्रस्वग्रहणं न कार्यमिति; तन्न, नद्याप इत्यस्य (२)स्त्रीलिङ्गानाञ्चेन्नद्याप एवेति नियमपरतयाऽ-

---

भेद इति वाच्यम्, सकारादेशे तकारादेशे वा "खरि च" (पा०सू० ८।४।५५) इति चर्त्वस्य दुर्वारतया तकारघटितस्य 'घत्स्यति'इत्यस्य सम्पत्त्या तपदानुवृत्तौ अननुवृत्तौ वा फलभेदाभावादिति दिक् । 'अन्तरतम' इत्यस्य 'सदृशतम' इत्यर्थात् सादृश्यस्य भेदघटितत्वेन सस्य स्थाने तकार एव भविष्यति; न तु सकार इति वैयाकरणसिद्धान्तानभिज्ञस्य कस्यचित् शङ्कां दूरीकर्तुं 'सादृश्यं न भेदघटितम्' इति सिद्धान्तमभिप्रेत्य ज्ञापकमुपन्यस्यति–**अत एव सःसीति तादेश इति** । इत्थं च आदेशमात्रविधाने कदाचित् सकारोऽपि स्यादिति शङ्का नोचिता, सादृश्यस्य भेदघटितत्वपक्षे सकारस्य स्थाने सकाराप्राप्तेः । वस्तुतस्तु पूर्वोक्तमाठरकौण्डिन्यन्यायेन चरतिरिक्तत्वेन झल्पदार्थे सङ्कोचे सकारस्थाने चर्त्वं नैव प्राप्नोति । सः सीति तादेशविधानमपि न्यायप्रवृत्तावेवोपोद्बलकमित्याहुः ।

**(१)विपरिणम्यते इति** । वस्तुतस्तु विपरिणामाभावेऽपि "उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्" (प०भा०) इति परिभाषया षष्ठ्यंशसहितायाः "तस्माद्" (पा०सू० १।१।६७) इतिपरिभाषाया उपस्थित्या षष्ठ्यंशविकलायाः "तस्मिन्" (पा०सू० १।१।६६) इतिपरिभाषाया उपस्थित्या चामव्यवहितपूर्वत्वविशिष्टं यद्ध्रस्वान्तमावन्तं नद्यन्तञ्चाङ्गं तदव्यवहितोत्तरत्वविशिष्टस्य नुड् भवतीत्यर्थेन सामञ्जस्यम् ।

**(२)स्त्रीलिङ्गानां चेदिति** । वस्तुतस्तु कुमारीशब्दात्क्यजन्तात् क्विपि तस्मादामि 'कुमारीणां ब्राह्मणानाम्' इत्यत्र कुमारीशब्दे स्त्रीलिङ्गत्वस्याभावेन नद्यन्तत्वस्य च सत्त्वेन, वनिताशब्दादाचारक्विबन्तात्कर्त्तरि क्विपि 'वनितानां ब्राह्मणानाम्' इत्यादौ वनिताशब्दे स्त्रीलिङ्गत्वस्याभावादाबन्तत्वस्य च सत्त्वेन स्त्रीलिङ्गाव्यवहितोत्तरत्वविशिष्टाम्त्वे नियम्यनुडितिशास्त्रीयोद्देश्यतावच्छेदकाम्त्वव्याप्यत्वस्य सत्त्वेऽपि नियामकनद्याप इतिशास्त्रीयोद्देश्यतावच्छेदकनद्यन्तावन्ताङ्गाव्यवहितोत्तरत्वविशिष्टाम्त्वव्यापक-

पि व्याख्यातुं शक्यत्वेन नदीत्वाप्त्वयोर्ह्रस्वेऽपि दृष्टत्वेन त्वदुक्तनियमे दृढतरमानाभावेन च 'मर्तीनाम्' इत्यादौ नुडनापत्तेः।

**नामि** (पा०सू० ६।४।३)। "ढ्रूलोपे" (पा०सू० ६।३।१११) इत्यतो दीर्घ इत्यनुवर्त्तते। अङ्गस्येति किम्? चर्मणाम्। ननु 'आमि' इत्येवास्तु, नित्यत्वात्पूर्वं दीर्घेऽपि ह्रस्वान्तान्नुडित्येतत्सामर्थ्यात् (१)भूतपूर्वह्रस्वान्तत्वमादाय नुट्सिद्धेः। न च "नृ च" (पा०सू० ६।४।६) इति दीर्घविकल्पात् 'नृणाम्' इत्यत्र नुट् चरितार्थः, (२)नृनद्याप इत्येव

---

त्वस्य-नद्यन्तावन्ताङ्गाव्यवहितोत्तरत्वविशिष्टाम्त्वाधिकरण-कुमारीणां वनितानां ब्राह्मणानाम् इत्येतद्घटक-वृत्त्यभावप्रतियोगित्वस्य स्त्रीलिङ्गाव्यवहितोत्तरत्वविशिष्टाम्त्वे सत्त्वेन अभावात् स्त्रीलिङ्गानां चेन्नद्यन्तावन्तानामेवेति नियमो न सम्भवतीति 'मतीनाम्' इत्यादौ न दोषः। तस्मान्नियमद्वयाश्रयणे गौरवान्नद्याप इति न्यासः कर्तुं न शक्यत इत्येव वक्तव्यम्।

**(१)भूतपूर्वह्रस्वान्तत्वमिति।** पञ्चमीसमासेन स्थानिवद्भावाद् ह्रस्वान्तत्वातिदेशेनेति भावः। **(२)नृनद्याप इत्येव सिद्धेरिति।** ननु "ह्रस्वनद्यापः" इति कल्पे नृ-आमिति स्थिते नित्यत्वात् "नृ च" (पा०सू० ६।४।६) इतिदीर्घे ह्रस्वान्तत्वाभावान्नुटोऽप्राप्तया यणि 'न्राम्' इति, दीर्घाभावे 'नृणाम्' इति रूपद्वयम्, 'नृनद्यापः' इति न्यासकल्पे तूभयत्र नुटि 'नृणां' 'नृणाम्' इति फलभेदः। एवं नृशब्दादाचारक्विबन्तात्कर्त्तरि क्विपि तुकि तस्मादामि नृत् आमित्यत्र 'ह्रस्वनद्यापः' इति कल्पे नुण्न भवति, 'नृनद्यापः' इति न्यासे च भविष्यतीति फलभेदः। एवं नृशब्दस्य ऋशब्देन समासे तत आमि सूत्रपक्षे नुडभावो, न्यासपक्षे च नुडिति फलभेदः, इति चेत्? अत्र **केचित्**, नृनद्याप इति न्यासे शेखरतात्पर्यं, तपरकरणसामर्थ्याच्च ह्रस्वऋकारान्तस्यैव नृशब्दस्य ग्रहणं न तु दीर्घान्तस्य तुगन्तस्य वेति न पूर्वोक्तफलभेदा इत्याहुः। **परेतु** "नद्यापो नुट्" "नुर्वा" इति आमीतिसूत्रकल्पे न्यासः क्रियते, "नृ च" (पा०सू० ६।४।६) इति सूत्रं च न क्रियते। "नुर्वा" इति च तक्रकौण्डिन्यन्यायेनामीत्येतदप्राप्तियोग्येऽचारितार्थ्यस्य कृते चारितार्थ्यस्य च सत्त्वाद्दीर्घस्य बाधकमिति नुट्कल्पे 'नृणाम्' इति तदभावे 'न्राम' इति न फलभेदः। नन्वेतन्न्यासकरणे योगद्वयकरणप्रयुक्तं गौरवमेवेति चेत्? न, "नृ च" (पा०सू० ६।४।६) इतिसूत्राकरणेन सिद्धान्तासिद्धसमयोगद्वयेन ह्रस्वपदाकरणप्रयुक्तलाघवस्यैव सत्त्वात्। एवं नद्याप्साहचर्यान्नृशब्दोऽप्यजन्तो गृह्यते इति 'नृताम्' इत्यत्रापि न फलभेदः। पञ्चमीसमासेन स्थानिवद्भावान्नृऋशब्दयोः समासेऽपि नुण्न भवतीति न तत्रापि फलभेद इत्याहुः।

सिद्धेः । तदुक्तं **भाष्ये**–(१)"नैकमुदाहरणं योगारम्भं प्रयोजयति" इति । 'तिसृणाम्' इति "षट्" (पा०सू० ७।१।५५) इत्यत्र त्रेरित्यनुवृत्त्या (२)सिद्धमिति **भाष्ये** एव स्पष्टम् । एतेन 'ऋन्नद्यापः' इति न्यासे **भाष्य**तात्पर्यमित्यपास्तम् । 'चतसृणां' 'प्रियचतसृणाम्' इत्यत्र "षट्चतुर्भ्यः" (पा०सू० ७।१।५५) इति सिद्धम् । गौणे तदप्रवृत्तौ तु न मानम् । बहुवचनन्तु लाघवार्थम् । द्विवचने हि 'चतुर्भ्याम्' इति गुरुनिर्देशः स्यात्, नैकमुदाहरणमिति प्रकृतसूत्रस्थ**भाष्य**विरोधश्च । समाहारद्वन्द्वेन निर्देशे कार्ये बहुवचननिर्देशस्तदर्थ इति तु न युक्तम्; "अस्थिदधि" (पा०सू० ७।१।७५) "तिसृभ्यो जसः" (पा०सू० ६।१।६६) इत्यादौ (३)व्यभिचारात् ।

**न च**–"अङ्गाधिकारे पञ्चम्या यदुच्यते गृह्यमाणविभक्तेस्तद्भवति" इति सर्वादिसूत्र**भाष्याद्** गृह्यमाणाद्विहितविभक्तेरित्यर्थकादस्य नुटो गौणेऽप्रवृत्तिः । "षड्भ्यः" (पा०सू० ७।१।२२) इत्यत्रापि विहितविशेषणमेवेत्याशयेन 'परमपञ्च' इत्यादौ लुगभावमाशङ्क्य 'षट्प्रधान एष समासः' इत्युक्तम् । समासस्य षट्प्रधानत्वेन (४)संख्याप्रकारकसङ्ख्येय-

---

(१)**नैकमुदाहरणमिति** । सामान्यधर्मावच्छिन्नोद्देश्यताकं शास्त्रमेकमुदाहरणं न प्रयोजयतीत्यर्थः । तेन "अग्नेर्ढक्"(पा०सू० ४।२।३३) इत्यादिकरणेऽपि न दोष इति भावः । (२)**सिद्धमिति** । नचामीति कल्पे 'ह्रस्वनद्यापः" इति सूत्रे ह्रस्वग्रहणसत्त्वे त्रिशब्दादामि त्रयादेशे नित्यत्वाद्दीर्घे ह्रस्वान्तत्वाभावान्नुडभावे 'त्रयाम्' इति, ह्रस्वग्रहणाभावे "षट्चतुर्भ्यः" (पा०सू० ७।१।५५ ) इत्यत्र त्रेरित्यनुवृत्तिकल्पे त्रयादेशे दीर्घे स्थानिद्भावेन त्रिशब्दत्वस्य सत्त्वान्नुटि 'त्रयाणाम्' इति च रूपमिति फलभेद इति वाच्यम्, षट्चतुर्साहचर्येणानकारान्तत्रिशब्दस्यैव ग्रहणे त्रयादेशे नुटोऽप्राप्त्या 'त्रयाम्' इत्येव रूपं भवतीति फलभेदाभावात् । 'त्रिताम्' इत्यादावपि साहचर्यादिना फलभेदः परिहरणीय इति दिक् ।

(३)**व्यभिचारादिति** । "अस्थिदधि" (पा०सू० ७।१।७५) इत्यस्य बहुवचननिर्देशेन गौणेऽप्रवृत्तौ 'प्रियसक्थ्ना ब्राह्मणेन' इत्यादावनङ्भवनापत्तिरिति भावः । (४)**संख्याप्रकारकसंख्येयविशेष्यकबोधजनकत्वेनेति** । न च संख्याप्रकारकसंख्येयविशेष्यकबोधजनकत्वरूपसंख्यावाचकत्वस्य 'राजानः' इत्यादौ बहुत्वप्रकारकबहुत्वविशिष्टविशेष्यकबोधजनकत्वस्य राजन्शब्दे सत्त्वेन सत्त्वात् षट्त्वापत्तिरिति

वाच्यम्, सङ्ख्याप्रकारकसंख्येयमुख्यविशेष्यकोपस्थितिजनकत्वं संख्यावाचकत्वमि- परिष्कारेणादोषात्। अत एव संख्यानिष्ठप्रकारतानिरूपितसंख्येयनिष्ठमुख्यविशेष्य- कोपस्थितिजनकत्वरूपसंख्यावाचकत्वस्य 'प्रियपञ्चा द्रौपदी' इत्यादौ पञ्चन् शब्दे सत्त्वे "न षट्" (पा०सू० ४।१।१०) इति निषेधः सिध्यति। नन्वेवं 'दण्डिन इव त्रिदण्डिनः' इत्यादौ संख्याप्रकारकसंख्येयमुख्यविशेष्यकोपस्थितिजनकत्वस्य सत्त्वे संख्यावाचकत्वात्षट्सञ्ज्ञापत्तिः। न चेष्टापत्तिः, "स्वं रूपम्" (पा०सू० १।१।६८) इति सूत्रस्थाशब्दसंज्ञेत्यस्य प्रत्याख्यानपरभाष्यविरोधापत्तेः। तत्र हि "शब्दशास्त्री- यसञ्ज्ञाविषये स्वरूपग्रहणं न भवति षान्तस्य षट्सञ्ज्ञाविधानसामर्थ्यात् अन्यथा "षड्भ्यो लुक्" (पा०सू० ७।१।२२) इत्यादौ स्वरूपस्य, संज्ञाविधा- नसामर्थ्यात् षट्सञ्ज्ञकनान्तस्य च ग्रहणे "ष्णान्ता" (पा०सू० १।१।२४) इत्यत्र षेति व्यर्थं स्यादित्युक्तम्। उक्तस्य च संख्यानिष्ठप्रकारतानिरूपित- संख्येयनिष्ठमुख्यविशेष्यताकोपस्थितिजनकत्वरूपसंख्यावाचकत्वस्य 'परमषट्' इत्या- दावपि सत्त्वेन तस्य षट्सञ्ज्ञार्थं षान्तग्रहणस्यावश्यकत्वेन स्वरूपग्रहणपक्षे विशिष्टाद्विहितत्वेन 'षष्' इति स्वरूपाद्विहितत्वाभावेन जश्शसोर्लुगनापत्तेरिति भाष्य- सङ्गतिः स्पष्टैवेति चेत्? न, यस्य संख्यावाचकत्वं वक्तव्यं, तदन्तपर्याप्तप्रयोज- कतानिरूपितप्रयोज्यतावती या विशेष्यता तादृशविशेष्यतानिरूपितप्रकारत्वासमाना- करणा या संख्यानिष्ठप्रकारतानिरूपितसंख्येयनिष्ठविशेष्यता तादृशविशेष्यताप्रयोजक- तापर्याप्त्यधिकरणत्वं संख्यावाचकत्वमिति परिष्कारेणादोषात्। 'प्रियपञ्चा द्रौपदी' इत्यादौ पञ्चन्नित्यत्र बहुव्रीहिप्राक्कालिकस्य निरुक्तसंख्यावाचकत्वस्य सत्वात् "न षट्" (पा०सू० ४।१।१०) इति निषेधः सिध्यति। तत्र भूतपूर्वषट्त्वग्रहणस्य परि- भाषेन्दुशेखर अन्तरङ्गपरिभाषाव्याख्यानावसरे स्पष्टत्वात्। 'प्रियपञ्चानः' इत्यादौ बहुव्रीहिप्रयोज्यविशेष्यतानिरूपितप्रकारतासामानाधिकरण्यमेव संख्येयनिष्ठविशेष्यताया इति नातिव्याप्तिः। 'त्रिदण्डिनः' इत्यादौ च संख्येयनिष्ठाविशेष्यताप्रयोजकता- पर्याप्तिः त्रिइत्येतन्मात्रस्य न तु त्रिदण्डिन् इत्यस्येति न तत्राप्यतिप्रसङ्गः। न च 'परमषट्' इत्यत्र षष्शब्दस्य षट्सञ्ज्ञायामपि ततो विहितत्वाभावात् परमषट्शब्दात् लुगनापत्तिरिति वाच्यम्। षड्भ्यो विहितयोर्जश्शसोरित्यस्य षट्सञ्ज्ञकनिष्ठोद्देश्यता- निरूपितविधेयताश्रययोरित्यर्थकरणेन तत्र चोद्देश्यताया अपर्य्याप्ताया अपि ग्रहणे 'परमषट्' इत्यादौ षषि अपर्य्याप्तोद्देश्यतायाः सत्त्वेनादोषात्।

परे तु सङ्ख्याविशिष्टत्वं सङ्ख्यावाचकत्वम्। वैशिष्ट्यं च स्वनिष्ठप्रकारतानिरूपि- तसङ्ख्येयनिष्ठनिरवच्छिन्नविशेष्यताप्रयोजकतापर्याप्त्यधिकरणान्तत्वं, स्वावच्छिन्नप्रकार- तानिरूपितविशेष्यताप्रयोजकतापर्याप्त्यनधिकरणत्वमेतदुभयसम्बन्धेन। तथाच पञ्च- पञ्चन्नित्यस्य प्रियपञ्चन्घटकपञ्चन्नित्यस्य च सङ्ख्यावाचकत्वं सिद्ध्यति। द्वितीयस- म्बन्धदानात्प्रियपञ्चन्निति विशिष्टस्य न षट्सञ्ज्ञा। संख्यावच्छिन्नप्रकारतानिरूपि-

विशेष्यकबोधजनकत्वेन षट्त्वसत्त्वान्न दोष इति तदर्थः। "ष्णान्ता" (पा०सू० १।१।२४) इत्यत्र लोके गणनायां प्रसिद्धानामेव ग्रहणमित्यत्र न मानम्। प्रकृतेऽपि तथैव, षड्भ्य इत्यादौ पञ्चम्या विरुद्धविभक्तित्वादङ्गस्येत्यनेन सम्बन्धायोग्यत्वाद् विहितेत्यध्याहारेण प्रत्ययविशेषणतैवेति **भाष्योक्तेः**, इति गौणे नुटोऽप्रवृत्तिः,–इति वाच्यम्, "नामि" (पा०सू० ६।४।३) इति सूत्रस्थोक्त**भाष्य**प्रामाण्यान्नुड्विधायके विहितपदानध्याहारेण षडादिभ्यः परस्याङ्गसञ्ज्ञानिमित्तस्यामो नुडित्यर्थेन गौणेऽपि प्रवृत्तेः। "अतो भिस:"(पा०सू० ७।१।९) इत्यादावङ्गस्येत्यस्यैवमन्वयस्यैवाङ्गसञ्ज्ञासूत्रे **भाष्ये** उक्तत्वात्। अत एव 'परमचतुर्णाम्'इत्यादौ नुट्।

यद्यप्येवं "षड्भ्यः" (पा०सू० ७।१।२२) "अद्ड् डतरादिभ्यः" (पा०सू० ७।१।२५) इत्यनयोरपि वक्तुं शक्यं, तथापि लक्ष्यानुसारात्तत्र विहितविशेषणम्। 'विरुद्धविभक्तित्वात्' इति **भाष्योक्त**युक्तिस्त्वेकदेशिन इति बोद्धयम्। "अद्ड् डतरादिभ्यः" (पा०सू० ७।१।२५) "षड्भ्यो लुक्" (पा०सू० ७।१।२२) इत्यनयोरेव सर्वादिसूत्रे **भाष्ये** उपन्यासाच्च। "षड्भ्यः" (पा०सू० ७।१।२२) इत्यादेः षडर्थगतसंख्या-

---

न्यपदार्थनिष्ठविशेष्यताप्रयोजकतापर्याप्तेः विशिष्टे सत्त्वात्। 'प्रियपञ्चा द्रौपदी' इत्यत्र पञ्चन् इत्येतन्मात्रस्य तादृशविशेष्यताप्रयोजकतापर्याप्तेरसत्त्वेन तन्मात्रस्य षट्त्वं सिध्यतीति तदन्तत्वाद्विशिष्टे निषेधः सिध्यति, स्त्रीप्रत्यये तदन्तविधेः सत्त्वात्। प्रथमसम्बन्धदानात् त्रिदण्डिन्नित्यादेर्न षट्सञ्ज्ञा। तत्र दण्डिसादृश्यस्यापि अवच्छेदकत्वेन समासार्थविशेष्यताया निरवच्छिन्नत्वाभावात्। त्रिपदमात्रस्य तथा सत्त्वेऽपि तस्य नान्तत्वाभावेन विशिष्टे त्रिपदान्तत्वाभावेन च नातिप्रसङ्गः। परमपञ्चन्नित्यत्र तु पञ्चन् इत्यस्य तादृशविशेष्यताप्रयोजकत्वस्य सत्त्वेन तदन्तत्वात् षट्त्वसिद्धिः। एवञ्च न क्वचिद् दोषः। "स्व रूपम्" (पा०सू० १।१।६८) इति सूत्रस्थाशब्दसंज्ञेत्यस्य प्रत्याख्यानाय "ष्णान्ता" (पा०सू० १।१।२४) इत्यत्रत्यषग्रहणस्य शब्दशास्त्रीयसंज्ञायां स्वरूपग्रहणं न भवति इत्येतज्ज्ञापकतापरं **भाष्यं** तु "षड्भ्यो लुक्" (पा०सू० ७।१।१२) इत्यत्र विहितविशेषणाश्रयणेऽपि स्वरूपनिष्ठोद्देश्यताया अपर्याप्त्या ग्रहणेन योजनीयम्। तथा सति 'प्रियषषः' इत्यादौ अतिव्याप्तिः षट्संज्ञकसाहचर्यात् अन्यपदार्थनिष्ठविशेष्यताप्रयोजकतापर्याप्त्यनधिकरणस्यैव षष् इति स्वरूपस्य ग्रहणेन निरसनीयेत्याहुः।

भिधायिजश्शसोरित्यादिक्रमेणार्थ इति **कैयटोक्तं** तु "अदड् डतरादिभ्यः" (पा०सू० ७।१।२५) इतिसूत्रे **भाष्य**विरोधादिभिर्दूषयिष्यते । न च 'पदां' 'दताम्' इत्यादावतिप्रसङ्गः, ह्रस्वत्वं नाम—मात्राकालिकाच्त्वं, तत्र सामर्थ्याद्विशेष्यभूतमात्राकालिकत्वांशे एव भूतपूर्वगत्याऽऽश्रयणं न तु विशे- ष्यभूताच्त्वांशेऽपीत्यदोषात् ; इति चेत् ? न, "नोपधायाः" (पा०सू० ६।४।७) इत्युत्तरार्थत्वात् । तेन 'चर्मणाम्' इत्यादौ दीर्घाभावः सिद्ध इति (१)दिक् ।

---

(१)**दिगिति** । तदर्थस्तु "येन विधिस्तदन्तस्य" (पा०सू० १।१।७२) इति शास्त्रप्रवृत्तिं विना संख्यावाचकत्वशरीरे प्रयोजकतापर्याप्त्यधिकरणान्तत्वनिवेशे मानम् । ततश्च परमपञ्चन्नित्यादेः षट्त्वं दुर्लभम् , पञ्चन्नित्यादेः तत्सम्भवेऽपि ततो विहितत्वाभावात् 'परमपञ्च' इत्यादौ "षड्भ्यः" (पा०सू० ७।१।२२) इति लुगनापत्तिः । 'षड्भ्य' इत्यत्र स्वनिष्ठोद्देश्यताया अपर्याप्ताया ग्रहणे 'प्रियपञ्चानः' इत्यत्रापि पञ्च- शब्दस्य संख्यावाचकत्वेन तत्रापर्याप्त्योद्देश्यतायाः सत्त्वाज्जसो लुगापत्तिः । द्वितीयः- म्बन्धे प्रयोजकताऽनधिकरणत्वमात्रनिवेशे 'प्रियपञ्चा द्रौपदी' इत्यत्रापि उत्तरपद- षट्त्वानापत्तौ "न षट्" (पा० सू० ४।१।१०) इति डाब्निषेधानापत्तिः । तत्र भूत- वैषट्त्वमित्यस्य पूर्वं जातषट्त्वस्यारोप इत्यर्थः, न तु बहुव्रीहिप्राक्कालिकस्य तस्य ग्रहणे प्रमाणम् , इति न तेन निर्वाहः । अतो गृह्यमाणविभक्तेरित्यस्य गृह्यमाणार्था- न्वयिन्या विभक्तेरित्यर्थः । अर्थद्वारकं च विधानमाश्रयणीयामिति भावः । तथा च "षड्भ्यः" (पा० सू० ७।१।२२) इत्यस्य षडर्थान्वयिनोर्जश्शसोर्लुगित्यर्थः । षडर्थगत- संख्याभिधायिनोरिति यावत् । एवञ्च 'परमषट्' इत्यत्र जश्शसोः षडर्थगतसंख्याभि- धायित्वेन लुक् सिद्धः । 'प्रियपञ्चानः' इत्यत्र च जसोऽन्यपदार्थगतसंख्याभिधायकत्वा- दन्यपदार्थस्य च षडर्थत्वाभावान्न दोषः । न चैवं 'षट् ब्राह्मणाः' इत्यत्र ब्राह्मणपदो- त्तरजसो लुगापत्तिः तस्य षडर्थगतसंख्याभिधायित्वात् , इति वाच्यम् , षडर्थतावच्छे- दकावच्छिन्नधर्मितानिरूपितसंख्यानिष्ठप्रकारताप्रयोजकजश्शसोर्लुगित्यर्थस्य विवक्षित- त्वेन ब्राह्मणपदोत्तरजस्प्रयोज्यसंख्यानिष्ठप्रकारतानिरूपितधर्मितायाः ब्राह्मणत्वावच्छि- न्नत्वेन षडर्थतावच्छेदकावच्छिन्नत्वाभावेनादोषात् । नन्वेवमपि 'षट्काः' 'षट्कल्प- इत्यादौ प्रत्ययार्थस्य प्रकारत्वेन जसः षडर्थगतसंख्याभिधायित्वाल्लुग् दुर्वारः । न च षडर्थतावच्छेदकमात्रावच्छिन्नेतिविवक्षणेन प्रकृते जसर्थसंख्यानिष्ठप्रकारतानिरूपितध- र्मितायाः षडर्थातिरिक्तप्रत्ययार्थतावच्छेदकावच्छिन्नत्वेन न दोष इति वाच्यम् , 'पर- मपञ्च' इत्यत्रापि तादृशधर्मितायाः परमत्वावच्छिन्नत्वेन लुगनापत्तेः, इति चेत् ? न, षड्विशिष्टविभक्तेर्लुगित्यर्थेनादोषात् । वैशिष्ट्यञ्च—स्वार्थतावच्छेदकावच्छिन्नधर्मिता-

**परिभाषाविरोधादिति ।** सर्वत्रानित्यत्वाश्रयणे मानाभाव इति भावः। कृताकृतप्रसङ्गित्वात् "नामि" (पा०सू० ६।४।३) इति नित्यम्। न च विशेषाभावेन फलाभावान्न कृते तत्प्राप्तिरिति वाच्यम्, विशेषाभावेऽपि पर्जन्यन्यायेन शास्त्रप्रवृत्तेः "इको झल्" (पा०सू० १।२।९) इति सूत्रे **भाष्ये** उक्तत्वात् । "आयादयः" (पा०सू० ३।१।३१) इति सूत्रे **भाष्ये** स्यादिभिः परत्वादायादि(१)बाधमाशङ्क्य "अनवकाशत्वादायादयः। न च 'गोपायति' इत्यादिरवकाशः अत्रापि शपः स्यादेः प्राप्तेः। न च नास्ति विशेषः । अन्यदिदानीमिदमुच्यते नास्ति विशेष इति। यदुक्तम्—आयादीनां स्यादिभिरव्याप्तोऽवकाश इति, स नास्त्यवकाशः" इति (२)**भाष्योक्तेश्च**ेत्यपि बोद्धव्यम् ।

---

रूपितसंख्यानिष्ठप्रकारताप्रयोजकत्वं, स्वाव्यवहितत्वमेतदुभयसम्बन्धेन । 'षट्काः' 'षट्कल्पाः' इत्यादावाद्यसम्बन्धसत्त्वेऽपि द्वितीयस्यासत्त्वान्न दोष इति। किञ्च बहुवचनान्तविरुद्धविभक्त्युपादाने अङ्गाधिकारे सर्वत्र गृह्यमाणार्थगतसंख्याभिधायिविभक्तेर्ग्रहणे "अतो भिस ऐस्" (पा०सू० ७।१।९) इत्यादौ न कुत्रापि दोष इति "षट्चतुर्भ्यः" (पा०सू० ७।१।५५) इत्यत्रापि तादृशविभक्तेरेव ग्रहणमुचितम्। ततश्च गौणे तदप्रवृत्तौ 'प्रियचतसृणाम्' इत्याद्यसिद्धिरिति "ऋन्नद्याप" इति न्यासे एव भाष्यतात्पर्यम्। अत एव 'धाता' 'धातृणाम्' इति तैत्तिरीयपाठे नुट्सिद्धिरिति ह्रस्वग्रहणवैयर्थ्यमुपपद्यते । "नैकमुदाहरणम्" इति **भाष्यं** तु 'व्याप्यधर्मावच्छिन्नोद्देश्यताकं लक्ष्यं व्यापकधर्मावच्छिन्नोद्देश्यताकशास्त्रप्रणयनप्रयोजकं न भवति' इत्यर्थकम् इति ह्रस्वत्वस्य ऋत्वव्यापकत्वात् सुयोजम्। 'परमकृतरत्' इत्यादौ अदड्डादेशो भवत्येव "अङ्गाधिकारे" इति भाष्यस्यैकदेश्युक्तित्वे मानाभावात्। अतिप्रसङ्गस्य पूर्वोक्तार्थकल्पनेनाभावादित्याहुः।

**(१)बाधमाशङ्क्येति ।** परत्वात्स्यादिषु पश्चादायप्रत्यये आर्धधातुकोपदेशेऽकारान्तत्वाभावाद् "अतो लोपः" (पा०सू० ६।४।४८) इति न स्यादिति भावः।
**(२)भाष्योक्तेश्चेति ।** न च—इदं **भाष्यम्**—'आयादयो वा" "सार्वधातुके नित्यम्" इति न्यासपरम्, तथाच यथाश्रुतन्यासकल्पे गोपायिष्यति, गोपिष्यति, गोप्स्यति, इति रूपत्रयं भवति, एतन्न्यासकल्पे चापवादत्वात् "सार्वधातुके" इति नित्यायप्रत्यये गोपायिष्यति इत्येकमेव रूपं स्यादिति फलभेद इति वाच्यम्, "आयादयो वा" "आर्धधातुके" "सार्वधातुके नित्यम्" इति न्यासपरत्वेन भाष्यस्यादोषात्। अत्रार्धधातुके इति शास्त्रं "सार्वधातुके नित्यम्" इतिनित्यायप्रत्ययबाधनायेति न फलभेदः।

**आरम्भेति ।** यत्तु 'कतीनाम्' इत्यत्र "षट्चतुर्भ्यः" (पा०सू० ७।१।५५) इति नुटि सन्निपातपरिभाषाया अप्राप्तेः सावकाशत्वमस्त्येवेति; तन्न, न ह्येकमित्युक्तन्यायेन (१)'कतेर्नामि' इत्येव सिद्धे सामान्यसूत्रारम्भेत्यर्थात् । एवञ्च "न तिसृचतसृ" (पा०सू० ६।४।४) इत्यकरणेन लाघवमिति भावः । नुटीति तु (२)नोक्तम् ।

**अपदान्तस्य** (पा०सू० ८।३।५५) । ष इत्येव सिद्धे मूर्धन्यग्रहणम् "इणः षीध्वम्" (पा०सू० ८।३।७८) इत्यत्र ढविधानार्थं, "रषाभ्याम्" (पा०सू० ८।४।१) इत्यत्रानुवृत्त्यर्थञ्च । एवञ्च तत्र षग्रहणं, "पदान्तस्य" (पा०सू० ८।४।३७) इति च न कर्त्तव्यमिति भाष्ये स्पष्टम् ।

**इण्कोः** (पा०सू० ८।३।५७) । वर्गग्रहणञ्चर्त्वस्यासिद्धत्वात् 'सक्षु' इत्याद्यर्थम् ।

**आदेश** (पा०सू० ६।१।४५) । प्रत्ययशब्दस्तदवयवेपरो (३)व्या-

---

(१)**कतेर्नामीत्येव सिद्ध इति ।** न च कतेर्नामीति न्यासेऽपि षट्सञ्ज्ञकं निमित्तीकृत्य जायमानो नुट् स्वोपजीव्यषट्संज्ञकत्वविघातककतेर्नामीत्येतत्प्रवृत्तिं प्रति निमित्तं न स्यादिति पुनरपि सन्निपातपरिभाषाविरोध इति वाच्यम्, षट्संज्ञकत्वस्यैकदेशविकृतन्यायेन दीर्घे जातेऽपि सत्त्वेन सन्निपातविघाताभावात् । न चातिदेशिकसन्निपातविघाताभावमादायैतत्परिभाषाप्रवृत्तिप्रतिबन्धो न भवतीति वाच्यम्, तत्रैकदेशविकृतन्यायातिरिक्तातिदेशस्य ग्रहणमिति पूर्वमेवोक्तत्वात् ।

(२)**नोक्तमिति ।** 'भृज्ञः' इत्यादौ दीर्घापत्तेरिति भावः । न च "भृजः किदुच" इत्यत्र नुगेव क्रियत इति न दोष इति वाच्यम्, 'अनश्वः' 'अनेषकः' इत्यादौ प्रत्ययलक्षणेनाङ्गत्वस्य नुट्परकत्वस्य च सत्त्वेन दीर्घापत्तेः । तत्रापि नुगेव क्रियत इति न दोष इति तु न वाच्यम्, 'अनेषकः' इत्यादावेव ङमुडापत्तेः ।

(३)**व्याख्यानादिति ।** "लोपे प्रत्ययलक्षणम्" इत्यनेन सिद्धे "प्रत्ययलोपे प्रत्ययलक्षणम्" इति करणात्प्रत्ययावयवे प्रत्ययत्वं स्वीक्रियत इति व्याख्यानादिति भावः । अत एव 'कविभिः कृतम्' इत्यादौ प्रत्ययरूपो यो विसर्गस्तस्य षत्वं न भवतीति सामानाधिकरण्येनान्वयेऽपि "इदुदुपधस्य" (पा०सू० ८।३।४१) इति षत्वं भवति । न च-प्रत्ययावयवे प्रत्ययत्वस्वीकारे अचिश्नुसूत्रेऽज्रूपे प्रत्यये इयङुवङौ भवत इत्यर्थे 'श्रियौ' 'भ्रुवौ' इत्यत्रैव इयङुवङौ स्यातां; न तु 'श्रियः' 'भ्रुवः' इत्या-

ख्यानात्, सातेः षत्वनिषेधाल्लिङ्गाच्च; तदाह—**प्रत्ययावयवेत्यादि। विवृताघोषस्येति।** विवृतत्वरूपाभ्यन्तरप्रयत्नवतोऽघोषरूपबाह्यप्रयत्नवतश्चेत्यर्थः। ठकारवारणायाद्यम्। ऋकारवारणाय द्वितीयम्। **रामस्येति।** "टाङसि" (पा०सू० ७।१।१२) इतिसूत्रे सकारोच्चारणं तु "इण्कोः" (पा०सू० ८।३।५७) इत्यनुवृत्तावेव तात्पर्यग्राहकमिति भावः।

**(१)सर्वादीनि** (पा०सू० १।१।२७)। (२)तद्गुणसंविज्ञानो

---

दाविति भाष्यविरोधः, जसवयवाकारेऽपि भवन्मते प्रत्ययत्वस्य सत्त्वात्; एवं 'रामाणाम्' इत्यादौ प्रत्ययावयवे आमि प्रत्ययत्वस्य सत्त्वेन रामानित्यस्य भसंज्ञायां परत्वादल्लोपापत्तिश्च। एवं 'भूयात्' इत्यादौ प्रत्ययावयवतकारमात्रे प्रत्ययत्वस्वीकारेऽपृक्तसंज्ञायां हल्ङ्यादिलोपापत्तिरित्याद्यादिदूषणगणपातः, इति वाच्यम्, षष्ठीप्रकृतिप्रत्ययपदप्रयोज्या या विषयता तादृशविषयताश्रयत्वेन प्रत्ययावयवोऽपि गृह्यत इति विवक्षणेन सर्वसामञ्जस्यादिति दिक्।

**(१)सर्वादीनि (पा०सू० १।१।२७)। (२)तद्गुणसंविज्ञान इति।** तस्यान्यपदार्थस्य गुणा उपसर्जनानि, वृत्तिघटकपदार्था इति यावत् संविज्ञायन्ते यत्र स बहुव्रीहिस्तद्गुणसंविज्ञान इत्यर्थः। क्रियान्वयित्वेनेति शेषः। तथाच एकक्रियान्वयित्वेन वृत्तिघटकपदार्थविशिष्टान्यपदार्थवाचकत्वं तद्गुणसंविज्ञानबहुव्रीहित्वम्। यथा 'लम्बकर्णमानय' इत्यत्रान्यपदार्थस्यानयनक्रियायामन्वये वृत्तिघटकपदार्थस्य श्रोत्रस्यापि तस्यामन्वयोऽनुभवसिद्ध इति लम्बकर्ण इति तद्गुणसंविज्ञानो बहुव्रीहिः। प्रकृते च समुदायरूपान्यपदार्थान्वयिसर्वनामसंज्ञासत्तारूपक्रियायां सर्वशब्दस्यान्वय इति तद्गुणसंविज्ञानम्। तत्र च समुदायस्यैकत्र प्रयोगासम्भवेन तद्घटकानामेव तत्रान्वय इत्यन्यत्। न चैवं नागो यज्ञोपवीतं यस्य तत्कर्मकभोजनतात्पर्येण 'नागयज्ञोपवीतं भोजय' इति प्रयुक्ते वृत्तिघटकयज्ञोपवीतपदार्थस्यान्यपदार्थान्वयिभोजनक्रियान्वयासम्भवात्तस्य बहुव्रीहेस्तत्त्वानापत्तिरिति वाच्यम्, संयोगसमवायान्यतरसम्बन्धेन वृत्तिघटकपदार्थविशिष्टान्यपदार्थवाचकत्वं तत्त्वमिति विवक्षणेन यज्ञोपवीतस्य संयोगसम्बन्धेनान्यपदार्थे पुरुषेऽन्वयेन तत्त्वाक्षतेः। 'लम्बकर्णमानय' इत्यत्रापि कर्णपदार्थस्य खरपदार्थे समवायसम्बन्धेनान्वयोऽस्त्येव। प्रकृतेऽपि सर्वशब्दस्य समुदायेऽवयवावयविनोः समवायात् समवायसम्बन्धेनान्वय इति सर्वं समञ्जसम्।

**केचित्तु**—विशेषणोपलक्षणाभ्यां तद्गुणातद्गुणत्वे बहुव्रीहिस्थले वदन्ति। यथा 'चित्रगुः' इति। अन्यपदार्थस्य यदा कार्यान्वयित्वविवक्षायां गोस्वामित्वसद्भावः तदा तद्गुणसंविज्ञानो बहुव्रीहिः। यदा च तदानीं गोस्वामित्वाभावेऽपि कदाचित् गवां दर्शनेन तस्मिन् चित्रगुशब्दप्रयोगस्तदाऽतद्गुणसंविज्ञानो बहुव्रीहिः। लम्बकर्णना-

वहुव्रीहिः । आदिशब्दोऽवयववाची । तेन सर्वशब्दघटित उद्भूतावयव-भेदः समूहः समासार्थ इति वहुवचनम् । उद्भूतावयवभेद इत्यस्यारोपितावयवगतसंख्य इत्यर्थः । तत्र वैयर्थ्यादप्रवृत्तावपि अवयवेषु प्रवर्त्तमानाऽ-(१)विशेषात् सर्वशब्देऽपि भवति । सर्वनामानीत्यत्र "पूर्वपदात्" (पा० सू० ८।४।३) इति णत्वमत एव (२)निपातनान्न । नाप्राप्ते णत्वे कृतस्य निपातनस्य तद्बाधकत्वात् णत्वसहितमसाधु इति स्पष्टं **भाष्ये** । 'प्रयोजनं सर्वनामाव्ययसंज्ञायाम्' इतिवार्त्तिकात् शब्दरूपाविशेष्यमादाय ज्ञापकात्तदन्तविधिरित्याह—**द्वन्द्वे चेतीति** । (३)प्रथमार्थे सप्तमी । द्वन्द्वः सर्वनामसंज्ञो नेति तदर्थः । न हि तदन्तविधिं विना (४)समुदाये सञ्ज्ञा-

---

गयज्ञोपवीतयोस्तु विशिष्टस्य क्रियान्वयकाले कर्णयज्ञोपवीतयोरुक्तसम्बन्धाभ्यां सत्त्वविवक्षणेन तत्राऽऽद्य एवेति बोध्यम् ।

(१)**अविशेषादिति** । सर्वशब्दनिष्ठाद्यावयवतानिरूपकसमुदायघटकत्वस्य विश्वादिशब्देष्विव सर्वशब्देऽपि सत्त्वादित्यर्थः । (२)**निपातनान्नेति** । न च-कृतणत्वेन यत्र संज्ञाया अवगमस्तत्रैव "पूर्वपदाद्" (पा०सू० ८।४।३) इति णत्वं भवति, अत एव रघुनाथादिशब्दे न णत्वम् , तथाच प्रकृते कृतणत्वेन संज्ञाऽनवगमात् णत्वप्राप्तिरेव नेतीदमसङ्गतमिति वाच्यम्, पाणिनिना कृतणत्वे संज्ञाकरणे कृतणत्वेन संज्ञावगमसम्भवाण्णत्वप्राप्तेरित्याशयात् । रघुनाथादिशब्दानां तु अनादिसंज्ञात्वेन तत्रैवं वक्तुमशक्यत्वात् ।

(३)**प्रथमार्थे सप्तमीति** । वस्तुतस्तु "आकाशे त्रिदिवे नाकः" (अ०को०) इत्यादाविव वाचकत्वं सप्तम्यर्थः । तथाच वाचकतासम्बन्धेन सर्वनामपदं द्वन्द्वे न तिष्ठतीति यथाश्रुतमेव सङ्गतमिति प्रथमार्थे सप्तमीत्यस्य नोपयोगः । (४)**समुदाये इति** । न च अश्व इतरश्वानयोस्समाहार एतरम् । अश्वान्यश्वानयोस्समाहार आन्यम् इत्यादौ परादिवद्भावेन सर्वादित्वस्य सत्त्वात्सर्वनामसञ्ज्ञानिषेधार्थं "द्वन्द्वे च" (पा०सू० १।१।३१) इति सूत्रं चरितार्थमिति कथं तदन्तविधिज्ञापकत्वम्, फलं च स्मायाद्यभावः, इति वाच्यम्, पूर्वोत्तरनिमित्तककार्यात्पूर्वमन्तरङ्गोऽप्येकादेशो नेतरस्य वस्तुतः पूर्वोत्तरानिमित्तककार्ये कर्तव्येऽन्तरङ्गत्वाज्जातोऽप्येकादेशोऽसिद्धो भवतीत्यर्थः । तथाच "द्वन्द्वे च" (पा०सू० १।१।३१) इति निषेधस्य वस्तुतः पूर्वोत्तरपदनिमित्तकत्वेन तस्मिन् कर्त्तव्ये जातस्याप्येकादेशस्यासिद्धत्वेन "द्वन्द्वे च" इति निषेधवैयर्थ्यस्य स्पष्टत्वात् । अत एव "सरूपाणाम्" (पा०सू० १।२।६४) इत्यत्र विभक्तौ परतः प्रातिपदिकैकशेषकल्पे विभक्त्यन्तानामेकशेषकल्पे च न फलभेदः ।

प्रवृत्तिरस्ति, या निषिद्ध्येतेति भावः । ननु तदन्तस्यापि सर्वनामत्वे "सर्वनाम्नः स्मै" (पा०सू० ७।१।१४) इत्यादिषु सर्वनाम्नो विहितस्य ङेः स्मै इत्यर्थाश्रयणेनातिसर्वादौ दोषाभावादुपसर्जनप्रतिषेधो न कार्य इति (१)भाष्यसूचितं विरुद्ध्येतेति चेत् ? न, "प्रयोजनं सर्वनामाव्ययसञ्ज्ञायाम्" इति तदन्तविधिसूत्रस्थ**वार्त्तिकभाष्य**विरोधेनास्य **भाष्य**स्यै(२)कदेश्युक्तित्वात् । इत एव वाऽरुचे**र्भाष्ये** पक्षान्तरोपादानम् ।

---

अन्यथा 'रामौ' इत्यादौ राम सु राम सु इत्यनयोस्सारूप्याद्विभक्त्यन्तैकशेषकल्पे एकशेषो भवति, विभक्तौ परतः सरूपाणामेकशेषकल्पे च राम राम औ इति स्थितेऽन्तरङ्गत्वात् वृद्धौ परादिवद्भावेन विभक्तिपरकत्वस्य सत्त्वेऽपि राम इत्यस्य राम् इत्यनेन साख्याभावादेकशेषो न स्यादिति फलभेदः स्यात् । मम तु वस्तुतः पूर्वोत्तरनिमित्तकैकशेषे कर्त्तव्ये एकादेशस्यासिद्धत्वात्सारूप्यमस्त्येवेति न फलभेदः । (१)**भाष्यसूचितमिति** । "अङ्गाधिकारे पञ्चम्या यदुच्यते तद् गृह्यमाणविभक्तेर्भवति" इति **भाष्यस्य** गृह्यमाणाद्विहितविभक्तेरित्यर्थकरणेनेतिभावः ।

(२)**एकदेश्युक्तित्वादिति** । वस्तुतस्तु नेदं भाष्यमेकदेश्युक्तिः । तथा हि, भाष्ये "सञ्ज्ञोपसर्ज्जनानां प्रतिषेधो वक्तव्यः" इत्युक्त्वा "पूर्वपरा" (पा०० सू. १।१।३४) इति सूत्रेऽसञ्ज्ञायामिति योगं विभज्य यानि सर्वादीनि तान्यसञ्ज्ञायां द्रष्टव्यानीति सञ्ज्ञाभूतानां सर्वादिषु पाठाभावादेव पर्युदास इति सञ्ज्ञाप्रतिषेधोऽनर्थक इत्युक्त्वोपसर्ज्जनप्रतिषेधखण्डनाय समाधानत्रयमुक्तम् । तत्र प्रथमं तावद् "अनुपसर्ज्जनात्"(पा०सू० ४।१।१४) इतियोगः प्रत्याख्यायते इति । अनुपसर्ज्जन अआदिति छेदं कृत्वा अ इत्यनेन त्यदादीनामः अदित्यनेनाद्ड्डतरादिभ्य इत्यद्ड् चानुपसर्ज्जनस्यैव भवतीति 'अतितत्' 'अतिकतरं कुलम्' इत्यादौ न दोष इत्युक्तम् ।

तस्यायम्भावः—स्त्रियामित्यस्य गृह्यमाणविशेषणत्वाद् 'बहुकुरुचरा' इत्यादौ टिदर्थगतस्त्रीत्वस्यासत्त्वान्न ङीपः प्राप्तिरित्यनुपसर्ज्जनाधिकारो व्यर्थः । स्त्रीप्रत्ययप्रकरणे सर्वत्र "वनोर च" (पा०सू० ४।१।७) इत्येतद्विहाय स्त्रियामिति गृह्यमाणविशेषणमेव । न च 'कुम्भकारेयः' इत्यापत्तिवारणाय तदन्तविधिज्ञापनार्थमनुपसर्ज्जनाधिकारः सार्थक इति वाच्यम्, अनुपसर्ज्जनाधिकाराभावेऽपि "शूद्रा चामहत्" (का०वा०) इत्यत्रामहत्पूर्वेतिपर्युदासेन सामान्यतः स्त्रीप्रत्ययप्रकरणे तदन्तविधिरस्तीति ज्ञापयितुं शक्यत्वात् । न चापिशलेन प्रोक्तां मीमांसामधीते 'आपिशला ब्राह्मणी' इत्यादावण्णन्तत्वप्रयुक्तङीब्वारणायानुपसर्ज्जनाधिकारः सार्थक इति वाच्यम्, प्रोक्ताणर्थगतस्त्रीत्वमादायैकवारं ङीपो जातत्वेन लक्ष्येलक्षणन्यायेन पुनस्तस्याप्राप्त्याऽध्येत्रणो लुप्तत्वेनाऽणो योऽकारस्तदन्तादित्यर्थेन "वर्णाश्रये

नास्ति प्रत्ययलक्षणम्" (प०भा०) इति परिभाषयाऽणि योऽकारस्तदन्तत्वस्य तुमशक्यत्वादध्येत्रर्थगतस्त्रीत्वमादाय ङीपोऽप्राप्तेरनुपसर्ज्जनाधिकारस्योपयोगाभावात् न चैवमपि 'अतिसर्वाय' इत्यादौ स्मायाद्यापत्तिर्दुर्वारा अअद्डावेवानुपसर्ज्जने भवत इत्युक्तत्वादिति वाच्यम्, "डाबुभाभ्यामन्यतरस्याम्" (पा०सू० ४।१।१३) इतिसूत्रादन्यतरस्यामित्यनुवर्त्यान्यतरस्य अनुपसर्जनस्य आमिति विवक्षणेनादो षात्। तथा हि अन्यतरस्येत्यत्रान्यतरशब्दोऽर्शआद्यजन्तः। तथाचान्यतरस्येत्य स्यान्यतरशब्दघटितसर्वविश्वेत्यादि समुदायस्येत्यर्थः। तत्रानुपसर्ज्जन आम् ज्ञा मित्यर्थः। आमिति अम्धातोर्गत्यर्थाद्भावे क्विप्। ये गत्यर्थास्ते ज्ञानार्था इति प्र अम्धातुर्ज्ञानार्थकः। अनुपसर्ज्जनेति लुप्तषष्ठ्यन्तं पदम्। अ अदिति प्रकृतार्थक स्योदाहरणम्।

द्वितीयं च समाधानम्--"अथवा अङ्गाधिकारे पञ्चम्या यदुच्यते गृह्यमाणवि भक्तेस्तद् भवति" इति। तस्यायम्भावः---"सर्व्वनाम्नः स्मै" (पा०सू० ७।१।१४) "ङसिङ्योः स्मात्स्मिनौ" (पा०सू० ७।१।१५) "जसः शीः" (पा०सू० ७।१।१७) "आमि सर्व्वनाम्नः सुट्" (पा०सू० ७।१।५२) "अद्ड् डतरादिभ्यः पञ्चभ्यः" (पा०सू० ७।१।२५) "त्यदादीनामः" (पा०सू० ७।२।१०२) इत्यादौ "सप्तम्याः त्रल्" (पा०सू० ५।३।१०) इत्यादौ च सर्वत्र स्वाव्यवहितोत्तरत्वं, स्वार्थगतसङ्ख्या भिधायित्वमेतदुभयसम्बन्धेन स्वविशिष्टङेप्रभृतीनां स्मायाद्यादेशा भवन्तीत्यर्थ इ 'अतितत्' 'अतिकतरं कुलम्' 'अतिसर्वाय' इत्यादौ न दोषः। गृह्यमाणविभक्तेरि भाष्यस्य गृह्यमाणार्थगतसङ्ख्याभिधायिविभक्तेरित्यर्थः। एतत्कल्पे च "सर्वादीनि" (पा०सू० १।१।२७) इत्यत्र तदन्तविधिर्नास्तीति 'अतिसर्वाय' इत्यादौ सर्वनामार्थ गतसङ्ख्याभिधायिङेप्रत्ययस्याभावान्न स्मायादेशः। 'परमसर्वस्मै' इत्यादौ तु समु दायस्य सर्वनामत्वाभावेऽपि ङेप्रत्ययस्य सर्वनामार्थगतसङ्ख्याभिधायित्वस्य सर्व नामाव्यवहितोत्तरत्वस्य च सत्त्वान्न दोषः।

अथवा सर्वेषां नामानि सर्वनामानीति तृतीयं समाधानमुक्तम्। अत्र कल्पे च "प्रयोजनं सर्वनामाव्ययसञ्ज्ञायाम्" इति वार्तिकेन "सर्वादीनि" (पा०सू० १।१।२७) इत्यत्र तदन्तविधिरस्तीति "सञ्ज्ञोपसर्ज्जनप्रतिषेधः" इति वार्त्तिककल्पे तत्प्रत्या ख्यानकल्पेषु त्रिषु च न फलभेद इति भावः। न च-तृतीयकल्पेऽपि तदन्तविधेर्नो पयोगः 'परमसर्वस्मै' इत्यादावङ्गाधिकारे तदन्तविधिनैव दोषाभावात्, 'अतिसर्वाय' इत्यादौ सर्वेत्यस्य सर्वादित्वमेव नास्ति पदार्थान्तरोपादानात् 'परमसर्वत्र' इत्यादौ तु सर्वनाम्नः परीभूता या सप्तमी तदन्तात्परेत्यर्थ इति न दोषः; इति वाच्यम्, 'मासपूर्वाय' इत्यादौ 'वर्णाश्रमेतराणाम्' इत्यादौ च स्मायादिवारणाय विहितविशेष णस्यावश्यकत्वेन 'मासपूर्वाय' इत्यादाविव 'परमसर्वस्मै' इत्यादावपि स्मायाद्यादेशा नापत्त्या तदन्तविधेरावश्यकत्वादिति दिक्।

न च ऋष्युक्तपक्षेषु नारुचिरिति भ्रमितव्यम् । वृद्धिसञ्ज्ञासूत्रे "अपरितुष्यन् खल्वपि भवान् 'अनाकृतिः' 'लिङ्गेन वा' इत्याह" इति **वार्त्तिककारं** प्रति **भाष्योक्तेः** ।

**अकच्चेति** । "कुत्सिते" (पा०सू० ५।३।७४) इतिसूत्रोक्त**भाष्य**रीत्या संख्याकारकाभ्यां पूर्णार्थस्येतरान्वयेन सुबन्तादेव तद्धितोत्पत्तेः, प्रत्यासत्त्या सर्वनामप्रकृतिकसुबन्तात्तदर्थगतकुत्साविवक्षायां सर्वनामावयवटेः प्रागकजित्यर्थात्तदन्तसञ्ज्ञाऽभावे तदसिद्धिरिति भावः । एवमेव त्रलाद्यसिद्धिर्बोद्धव्या । एतेनावयवनिष्ठसर्वनामत्वेन तत्सिद्धिरित्यपास्तम् ।

**जसः शी** (पा०सू० ७।१।१७) । दीर्घोच्चारणमुत्तरार्थं 'वारिणी' इति । **अदन्तादिति**—परस्येत्यनेनान्वेति । अत इत्यस्याङ्गविशेषणतया अदन्तादङ्गादित्यर्थः । सर्वनाम्न इति तु (१)विहितविशेषणम् । तस्य तु नाङ्गं विशेष्यमावृत्तौ (२)मानाभावात् । तेन 'वर्णाश्रमेतराः' 'मासपूर्वाः' इत्यत्र न । अत एव "विभाषा जसि" (पा०सू० १।१।३२) इति (३)चरितार्थम् । अङ्गसञ्ज्ञानिमित्तस्यादन्तात्सर्वनाम्नो विहितस्येत्यर्थस्तु न, 'ते' 'तेषाम्' इत्याद्यसिद्धेः । अत्वविधौ विषयसप्तमी तु न "तस्मिन्"

---

(१)**विहितविशेषणमिति** । वस्तुतस्तु "जसः शी"(पा०सू० ७।१।१७) इत्यस्य सर्वनामाभिन्नं यददन्तमङ्गं (तदादि वा) ततः परीभूतस्य जसः शी भवतीत्यर्थकरणेन 'वर्णाश्रमेतराः' इत्यादौ दोषाभावेन विहितविशेषणं व्यर्थम्, "तस्माद्" (पा०सू० १।१।६७)इति परिभाषायां जागरूकायां विहितपदाध्याहारस्य कर्त्तुमशक्यत्वात् ।

(२)**मानाभावादिति** । तस्मिन्निति परिभाषाशास्त्रीयोद्देश्यतावच्छेदकसम्पत्तये 'असति प्रमाणान्तरे यावत्यः सप्तम्यस्ताः सर्वा औपश्लेषिकाधिकरणबोधिका मन्तव्याः' इत्येतन्मूलकव्याख्यानपरिभाषाशेषभूत—"उपपदविभक्तेः कारकविभक्तिर्बलीयसी" (प०भा०) इतिपरिभाषाबाधे मानाभावादिति भावः । (३)**चरितार्थमिति** । "द्वन्द्वे च" (पा०सू० १।१।३१) इति निषेधे प्राप्ते शीभावे कर्त्तव्ये विकल्पेन निषेधार्थं तत् । यदि "द्वन्द्वे च" इति निषेधेन शीभावो न प्रतिषिध्येत तर्हि "विभाषा जसि" (पा०सू० १।१।३२) इति शीभावे कर्तव्ये विकल्पेन सर्वनामसञ्ज्ञानिषेधो व्यर्थः स्यादिति भावः, "द्वन्द्वे च" इत्यनेन समुदायस्य निषेधेऽपि अवयवस्य निषेधाभावात् सर्वनामान्ताङ्गात्परत्वे शीभावस्य दुर्वारत्वेन "विभाषा जसि" इत्यनेन शीभावे कर्तव्ये द्वन्द्वस्य सर्वनामसञ्ज्ञाविकल्पस्योपयोगाभावात् ।

(पा०सू० १।१।६६) इतिपरिभाषाबाधे मानाभावात् । **प्रागित्सञ्ज्ञाया इति ।** प्रत्ययादित्वज्ञानाभावात्तज्ज्ञानाभाव इति भावः ।

**परे तु** अनुबन्धत्वयोग्यतयाऽत्रापि तन्निषेधप्रवृत्त्या शित्त्वादेः सर्वादेशः । इत्सञ्ज्ञायोग्यशकारवत्त्वमेव तत्सूत्रे शित्त्वम् । अत एव काणोर्विषये "नानुबन्धकृतमसारूप्यम्" (प०भा०) इति विकल्पाभावः । (१)अन्यथा कादीनां कादेर्वाक्यार्थबोधोत्तरं प्रत्ययत्वज्ञाने इत्सञ्ज्ञादेः प्रवृत्त्या वाक्यार्थबोधरूपतत्प्रवृत्तिकालेऽनुबन्धज्ञानाभावेन विकल्पो दुर्वारः, पश्चादनुबन्धत्वज्ञानेऽपि जातनिवृत्त्ययोगात् । यदि तत्र पश्चात्तज्ज्ञाने तन्निवृत्तिस्तर्ह्यत्रापि पश्चात्तत्त्वज्ञाने सर्वादेशत्वस्यापि निवृत्त्यापत्तिः । (२)ध्वनितञ्चेदं "लुटः प्रथमस्य" (पा०सू० २।४।८५) "अनेकाल्शित्" (पा०सू० १।१।५५) इत्यादिसूत्रेषु **भाष्ये** इति (३)प्राहुः ।

---

(१)**अन्यथा**—अनुबन्धपदस्य सङ्केतसम्बन्धेनेत्पदविशिष्टार्थकत्वे ।

(२)**ध्वनितमिति ।** "लुटः प्रथमस्य" (पा०सू० २।४।८५) इतिसूत्रभाष्ये "डाविकारस्य शित्करणं सर्वादेशार्थम् । डाविकारः शित्कर्तव्यः । किं प्रयोजनम्? सर्वादेशार्थम् । शित्सर्वस्येति सर्वादेशो यथा स्यात् अक्रियमाणे हि शकारेऽलोऽन्त्यस्य विधयो भवन्ति इत्यन्त्यस्य प्रसज्येत" इत्युक्तम् । अत्र **कैयटः**—"डाविकार इति । डादेश इत्यर्थः । नानुबन्धकृतमनेकाल्त्वमित्यन्त्यस्य स्यादिति डाश्वक्तव्यः" इत्याह । तदग्रे **भाष्ये**—"सिद्धमलोऽन्त्यविकारात् । सिद्धमेतत् । कथम् ? अलोऽन्त्यविकारात् । अस्त्वयमलोऽन्त्यस्य । का रूपसिद्धिः ? कर्त्ता । डिति टेर्लोपात् लोपः । डिति टेर्लोपेन लोपो भविष्यति । अभत्वान्न प्राप्नोति । डित्करणसामर्थ्याद् भविष्यति" इत्युक्तम्" । "डितीति । आकारे डिति परतः सतकारस्य टिसंज्ञकस्य लोपो डित्करणसामर्थ्याद्भविष्यति" इति । एतद्भाष्ये अन्त्यादेशत्वमभ्युपेत्य टिलोपेन समाहितम् । पूर्वपक्षिणा च डादेशस्य शित्त्वं कर्तव्यमित्युक्तम् । एतेन ध्वनितम् । यद्यनुबन्धपदस्यानुबन्धत्वयोग्ये लक्षणा न स्यात् तदा आदेशप्रवृत्तिकालेऽप्युक्तरीत्याऽनुबन्धत्वाभावेन "नानुबन्ध" (प०भा०) इत्यस्याप्राप्त्याऽनेकाल्त्वेनैव सर्वादेशत्वे सिद्धे पूर्वपक्षसमाधानयोर्निर्दलत्वापत्तिरिति । (३)**प्राहुरिति ।** न च डादिविषये सर्वादेशत्वं विनाऽनुबन्धत्वस्याभावादानुपूर्व्यात्सर्वादेशत्वं सिद्धमिति परिभाषेन्दुशेखरग्रन्थविरोध इति वाच्यम्, डादिविषये सर्वादेशत्वाभावेन प्रत्ययादित्वाभावादित्सञ्ज्ञाअप्रवृत्त्या स्वोपजीव्यानुबन्धत्वविघातादुपजीव्यविरोधेन डादिविषये नानुबन्धकृतमिति परिभाषाया अप्रवृत्तावपि प्रकृते एतत्परिभाषाप्रवृत्तावपि शित्वात् सर्वादेशस्य

**अतः सर्वनाम्न इति ।** अदन्तादङ्गात् परस्य (१)सर्वनाम्नो विहितस्येत्यर्थः । तेन 'मासपूर्वाय' इत्यत्र स्मै न ।

**ङसिङ्योः** (पा०सू० ७।१।१५) । स्मात्स्मिनोः "हलन्त्यम्" (पा०सू० १।३।३) इति न "न विभक्तौ" (पा०सू० १।३।४) इति निषेधात् । यद्यपि इत्त्वप्रवृत्तिकाले न विभक्तित्वज्ञानं, तथापि विभक्ताविन्त्यस्य विभक्तित्वयोग्ये इत्यर्थान्न दोषः । अत एव सूत्रे तुग्रहणं चरितार्थम् ।

(२)**आमि स्त** (पा०सू० ७।१।५२) । "आज्जसेरसुक्" (पा०

---

जायमानत्वेन स्वोपजीव्यानुबन्धत्वविघातस्याभावान्नानुबन्धकृतमिति परिभाषया शी सर्वादेशो न भवतीति परिभाषेन्दुशेखरग्रन्थविरोधाभावात् ।

**अन्ये तु** "मिदचोऽन्त्यात्परः" (पा०सू० १।१।४७) "आद्यन्तौ टकितौ" (पा०सू० १।१।४६) "ङिच्च" (पा०सू० १।१।५३) इत्यादिवत् "अनेकाल्शित्सर्वस्य" (पा०सू० १।१।५५) इत्यप्यनन्यार्थङित्त्वादिष्विवानन्यार्थशित्त्वेष्वेव प्रवर्त्तते । अत एव तातङि ङिच्चेत्यादि न प्रवर्त्तते । तथा चानुबन्धत्वघटितधर्मनिमित्तकपरिभाषाशास्त्रमनन्यार्थेत्सञ्ज्ञकेष्वेव प्रवर्त्तते इति "जसः शी" (पा०सू० ७।१।१७) इत्यादावनेकाल्त्वादेव सर्वादेशः, जसः शीति शकारस्य 'विभाषा ङिश्योः" (पा०सू० ६।४।१३६) इत्यादौ विशेषणार्थतया चारितार्थ्येनानन्यार्थत्वाभावात् । अत एवानन्यार्थङित्त्वेष्विति प्रतीकमुपादाय "तद्बलकल्प्यमानार्थानुवाद एव ङिच्चेत्येतत्, अर्थान्तरकल्पनानिवृत्त्यर्थमिति भावः । परिभाषाणां च प्रायेण पक्षप्राप्तार्थानुवादेनार्थान्तरानिवृत्त्यर्थत्वं "व्रीहीनवहन्ति" इत्यादिवदिति स्पष्टमेवेति शेखरोक्तं सङ्गच्छते । यद्वा, "नानुबन्धकृतमनेकाल्त्वम्" (प०भा०) इति परिभाषायामनुबन्धपदमनुबन्धत्वयोग्यपरमित्यत्र न मानम्, पूर्वभाष्यं तु एकदेश्युक्तिः, अत्र तथास्वीकारे फलाभावात् । अत एवानायासेन ङाणलादौ सर्वादेशत्वं सिद्धमित्याहुः ।

(१)**सर्वनाम्नो विहितस्येति ।** अस्यापि पूर्ववदेव सर्वनामाभिन्नं यददन्तमङ्गं तदादि वा, तस्मात्परस्य ङेइत्येतस्य स्मै भवतीत्यर्थ इति 'वर्णाश्रमेतराय' इत्यादौ न दोष इति बोध्यम् । एवं "ङसिङ्योः स्मात्स्मिनौ" (पा०सू० ७।१।१५) इत्यस्यापि सर्वनामाभिन्नं यददन्तमङ्गन्तदादि वा, ततः परयोर्ङसिङ्योः स्मात्स्मिनौ भवत इति 'मासपूर्वात्' 'मासपूर्वे' इत्यादौ न दोषः । एवमेव "आमि सर्वनाम्नः सुट्" (पा०सू० ७।१।५२) इत्यस्यापि सर्वनामाभिन्नं यददन्तमङ्गं, तदादि वा, तस्मात्परस्यामः सुडित्यर्थ इति 'वर्णाश्रमेतराणाम्' इत्यादौ दोषाभाव इति सुधियो विभावयन्तु ।

(२)**आमि सर्वनाम्नः सुट्** (पा०सू० ७।१।५२) । आमीति सप्तम्याः

सू० ७।१।५०) इत्यत आदिति वर्त्तते । **पञ्चत्रिंशदिति** । तेन सर्वा-र्थप्रतिपादकत्वेऽपि कृत्स्नसकलादिशब्दानां नेति भावः । सर्वविश्वौ बुद्धि-स्था(१)नेकसंख्याकावयवारब्धसमुदाये (२)शक्तौ । तस्य समुदायस्य-(३)नुद्भूतावयवभेदत्वे एकवचनं, यथा 'सर्वो लोकः' इति । तादृक्समुदा-यद्वयादिविवक्षायां द्विवचनादि—'सर्वौ व्यूहौ' 'सर्वे व्यूहाः' इति । यदाऽप्यु-(४)द्भूतावयवभेदसमुदायविवक्षा; तदाऽपि बहुवचनं—'सर्वे घटाः' इति।

---

"त्रेस्त्रयः" (पा०सू० ७।१।५३) इत्यादौ चारितार्थ्येन, आदिति पञ्चम्या "आज्जसे-रसुक्" (पा०सू० ७।१।५०) इत्यादौ चारितार्थ्येन परत्वात्पञ्चमीनिर्दिशस्य प्रवृत्ते "तस्माद्" (पा०सू० १।१।६७) इतिपरिभाषा षष्ठ्यंशसहितोपतिष्ठते, "तस्मिन्" (पा०सू० १।१।६६) इतिपरिभाषा च षष्ठ्यंशविकला । तथा चाऽऽऽव्यवहितपूर्वत्व-विशिष्टं यत्सर्वनामाभिन्नमदन्तमङ्गं तदव्यवहितोत्तरत्वविशिष्टस्य सुडिति सूत्रार्थः। **(१)अनेकसङ्ख्याकावयवारब्धेति** । अनेकसङ्ख्याकावयवारब्धत्वं विना समु-दायत्वस्यैवासम्पत्त्या समुदाये इदं विशेषणमुपरञ्जकमिति बोध्यम्। **(२)शक्ताविति**। वस्तुतस्तु विधेयव्याप्या या उद्देश्यतावच्छेदकव्यापिका पर्याप्तिस्तत्पर्याप्तिकयावत्त्वा-च्छिन्ने तयोः शक्तिर्बोध्या । तेन 'सर्वाणि द्रव्याणि रूपवन्ति' इति न प्रयोगः। उद्दे-श्यतावच्छेदकद्रव्यत्वव्यापकपर्याप्तेः विधेयरूपवत्त्वाव्याप्यत्वात् । वाय्वादौ तदभावात् 'सर्वे घटा रूपवन्तः' इत्यत्र तु घटत्वव्यापकपर्याप्तेः रूपवत्त्वव्याप्यत्वात्तादृशप्रयोगो-पपत्तिः । यदि तु प्रक्रान्तविषयिण्येव मूलोक्ता शक्तिरिति, तदा मूलोक्तिरपि साध्व्येव घटादयः सन्ति, जलं शीतमस्ति, अग्न्यादिकं तेजः, (एतानि) 'सर्वाणि द्रव्याणि रूपवन्ति' इति प्रयोगदर्शनात् अनेकत्वावच्छिन्नेऽपि तयोः शक्तिः, तेन 'सर्वं गगनं' इत्यादयो न प्रयोगा इत्यन्यत्र विस्तरः । **(३)अनुद्भूतावयवभेदत्वे इति**। समुदायत्वगता समुदायगता वा यत्रैकत्वसङ्ख्या विवक्ष्यते तत्रानुद्भूतावयवभेदत्वं बोध्यम् । **(४)उद्भूतावयवभेदसमुदायविवक्षेति** । अवयवगतबहुत्वसङ्ख्या-विवक्षेत्यर्थः ।

परममूले-**द्वित्वविशिष्टस्य वाचक इति** । स्वानधिकरणवृत्तित्व, स्वसजाती-यमात्रवृत्तित्वोभयसम्बन्धेन स्वविशिष्टं यद् द्वित्वं तत्समानाधिकरणभेदप्रतियोगितावच्छेदकतासम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववद्द्वित्वमुभशब्दप्रवृत्तिनिमित्तं बोध्यम्। साजात्यं च एकवचनार्थैकत्वपरिष्कारघटकसाजात्यवत् स्वसमभिव्याहृतपदार्थसंसर्गि-विशिष्टप्रकृत्यर्थतावच्छेदकवत्त्वरूपेण ग्राह्यम् । इदमेव द्वित्वं द्विवचनार्थोऽपि । यथा 'उभौ घटपटौ' इत्यादौ स्वं द्वित्वं तदनधिकरणवृत्तित्वं, स्वसजातीयमात्रवृत्तित्वं-दुभयसम्बन्धेन स्वाविशिष्टद्वित्वस्याप्रसिद्धावपि तद्वद्वृत्तिभेदप्रतियोगितावच्छेदक

**पूर्वपरावर** (पा०सू० १।१।३४)। व्यवस्थाऽसंज्ञावर्त्तिन एवेमे सर्वादय इत्यर्थः। एवमुत्तरसूत्रद्वयेऽपि।

**नित्यं द्विवचनान्त इति**। द्विवचनान्त एवेत्यर्थः। **अकजर्थ इति**। ननु काकचोः को विशेषः? प्रत्ययस्वरचित्स्वराभ्यामन्तोदात्तत्वस्यैव सत्त्वात्। न च सुबन्तात्तद्धितोत्पत्त्या चित्त्वप्रयुक्तमन्तोदात्तत्वम् 'उभकाभ्याम्' इत्यादौ सुबन्तस्य, के तु प्रकृतेरिति विशेष इति वाच्यम्, तद्धितविधौ प्रातिपदिकादित्यधिकारेण प्रातिपदिकस्यैव प्रकृतित्वात्। स च जायमानो न्यायात्सुबन्तात्पर इत्यन्यदेतत्। युष्मदस्मद्विषये तु वचनात्सुबन्तस्यैव प्रकृतित्वं, तस्यैव टेः प्रागकजिति बोध्यम्। न

---

रूपसम्बन्धस्यैतद्द्वित्वेऽभावात्स्वाभाववत्त्वं स्वस्मिन् सुलभमिति लक्षणसमन्वयः। भूतले घटादित्रयदशायां मेषत्रयादेर्यागसम्बन्धित्वे च नानाद्वित्वानां स्वानधिकरणवृत्तित्व, स्वसजातीयमात्रवृत्तित्वोभयसम्बन्धेन द्वित्ववैशिष्ट्यस्य परस्परं सत्त्वात् चालनीन्यायेन सर्वेषामेव स्वविशिष्टद्वित्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वमेवेति सम्बन्धप्रसिद्धिः। तथाच तत्र तादृशसम्बन्धस्यैव सत्त्वात् तत्सम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्त्वं दुर्लभमिति न तत्र तादृशप्रयोगः, नवा मेषत्रयादिकरणकयागादृष्टसिद्ध्यापत्तिः। स्वसजातीयमात्रवृत्तित्वनिवेशाद् 'उभौ घटाकाशौ' इत्यादौ यत्किञ्चिद्घटाकाशोभयवृत्तिद्वित्वे यत्किञ्चिद्घटाकाशोभयगतद्वित्ववैशिष्ट्यस्य सत्त्वेऽपि न निरुक्तद्वित्वलक्षणाव्याप्तिः। सङ्ख्यामात्रं "द्वित्वं नोभशब्दप्रवृत्तिनिमित्तं न वा द्विवचनार्थः 'उभावाकाशौ' इत्यादिप्रयोगाणां प्रामाण्यापत्तेः, धवद्वयखदिरद्वयतात्पर्येण 'धवखदिरौ छिन्धि' इत्यादिप्रयोगाणां प्रामाण्यापत्तेश्च। न च द्वित्वत्वेन रूपेण नानाद्वित्वावगाहिबोधोऽव्युत्पन्न इति वाच्यम्; 'सारस्वतौ मेषौ भवतः' 'ब्राह्मणाभ्यां ब्राह्मणाभ्यां देहि' इत्यादौ द्वित्वत्वेन नानाद्वित्वावगाहिबोधदर्शनेनैतादृशद्वित्वावगाहिबोधो न भवतीति वक्तुमशक्यत्वात्। न चैवमपि 'उभावाकाशौ' इत्यादिप्रयोगवारणार्थमुद्देश्यतावच्छेदकव्याप्यत्वविशिष्टपर्याप्तिसम्बन्धेन द्वित्वस्यान्वय इति विवक्षणेनोक्तदोषानवकाशान्न परिष्कृतद्वित्वमुभशब्दप्रवृत्तिनिमित्तं, न वा द्विवचनार्थ इति कथनस्योपयोग इति वाच्यम्, 'उभौ धवखदिरौ छिन्धि' इत्यादावुद्देश्यतावच्छेदकधवत्वव्याप्यत्वस्य खदिरत्वव्याप्यत्वस्य च द्वित्वेऽभावेनैकैकधवैकैकखदिरतात्पर्येण तादृशप्रयोगानापत्तेः। तादृशप्रयोगोपपत्तये शुद्धपर्याप्तिसम्बन्धेन द्वित्वस्यान्वयस्वीकारे धवद्वयखदिरद्वयतात्पर्येण 'उभौ धवखदिरौ छिन्धि' इतिप्रयोगस्य 'उभावाकाशौ' इत्यादिप्रयोगस्य चापत्तेर्दुर्वारत्वादिति दिक्।

चाकचि तन्मध्यपतितन्यायेन तस्योभग्रहणेन ग्रहणे उभकाववयवौ यस्ये-त्यर्थे उभकशब्दादयचि 'उभकयः' इति रूपं, के तु नेति विशेषः, "कश्चेदानीं काकचोर्विशेषः" इति भाष्यप्रामाण्येन तेषामनभिधानादिति शङ्कते—**न चेति** ।

**द्विवचनपरत्वाभावेनेति** । अकचि तन्मध्यपतितन्यायेनोभ-शब्दस्य द्विवचनपरत्वं, के तु तेन व्यवधानान्न तस्य तत्त्वमित्यर्थः । "उभादुदात्तः" (पा०सू० ५।२।४४) इतिसूत्रे **भाष्यकृता**ऽयचः प्रत्ययान्तरत्वेन व्याख्यानान्महाविभाषासम्बन्धस्यावश्यकत्वेन नित्यग्रहणमयोगं सद् योगविभागेनोभशब्दाद्वृत्तिविषयेऽत्यन्तस्वार्थिकायज्विधानार्थम् । अयञ्च तद्विषये सुबुत्पत्तेः पूर्वमेव, स्वार्थिकत्वेनान्तरङ्गत्वात् । अत एवायज्विशिष्टस्योभस्य सर्वनामत्वात्सर्वनामप्रकृतिकसप्तम्याद्यन्तत्वेन त्रलाद्युत्पत्तिः । अत्र नित्यशब्दस्य वाच्यार्थविरोधान्महाविभाषाया असम्बन्धः । अयमप्याद्युदात्त एवोदात्तग्रहणानुवृत्तेः । अयञ्च वार्तिकप्रामाण्याद्यत्रो(१)भशब्द-स्यो(२)भयशब्दस्य वा द्विवचनविषयत्वाभावसम्भावना तत्रैव । अत एव

---

(१)**उभशब्दस्येति** । अयच्प्रवृत्त्यभावसम्भावनाप्रयोज्या यत्रोभशब्दस्य द्विवचनपरत्वसम्भावना ततोऽन्यत्रायजिति भावः । यद्युभशब्दादयच् न स्यात्तर्हि उभशब्दस्य द्विवचनपरत्वं स्यादिति यत्र सम्भाव्यते ततोऽन्यत्रायच् साधुरिति यावत् । अत एव 'उभे भद्रे' इति सिद्धम् । यद्युभशब्दादयच् न स्यात्तर्हि टापि पूर्वान्तवद्भावेन टावन्ते उभशब्दत्वस्य सत्त्वाद् द्विवचनपरकत्वमेवेति तत्रायचोऽसाधुत्वात् । नन्वेवं 'उभतयो' इति रूपं न स्यात्, यद्ययज् न स्यात् तर्हि तयपि तेन व्यवधानादुभशब्दस्य द्विवचनपरकत्वाभावेन अपवादायज्विषयत्वेनोत्सर्गतयपोऽप्रवृत्तेः । एवं भाष्यकृन्मते 'उभयतः' 'उभयत्र' इत्याद्यसिद्ध्यापत्तिश्च । यद्ययज्न स्यात्तर्हि उभशब्दस्य सर्वादौ पाठाभावात्तत्प्रकृतिकसप्तम्याः सर्वनामप्रकृतिकत्वाभावेन त्रलाद्यनुत्पत्तौ उभशब्दस्य द्विवचनपरत्वमेवेति ततोऽन्यत्र न जातमिति तत्रायचः साधुत्वस्य दुरुपपादत्वादिति चेत्तत्राह-(२)**उभयशब्दस्य वेति** । अयच्प्रवृत्तिसम्भावनाप्रयोज्या यत्रोभयशब्दस्य द्विवचनपरत्वसम्भावना ततोऽन्यत्रायच् साधुरिति भावः । तथाच 'उभतयो' इति रूपं, भाष्यमते 'उभयत्र' इत्यादि च सिद्ध्यति । यद्युभशब्दादयच् स्यात्तर्हि अयजन्तस्य द्विवचनपरत्वमेवेति ततोऽन्यत्रेति न जातमिति अपवादविषयत्वाभावेनोत्सर्गतयप्प्रवृत्तेः । एवं यद्युभशब्दादयच् स्यात्तर्हि भाष्यमते

'उभयोर्वासः' इत्यादौ "शयवास" (पा०सू० ६।३।१८) इत्यलुकि नायच् । तद्ध्वनयन् वार्तिकमाह—**उभयोऽन्यत्रेति । द्विवचनपरत्वाभावे इति** । तत्परत्वविषयत्वाभावे इत्यर्थः । 'उभयो मणिः' इत्यादौ तु न "लिट्यभ्यासस्योभयेषाम्" (पा०सू० ६।१।१७) इति निर्देशेन योगविभागस्ये(१)ष्टसिद्ध्यर्थत्वेन च तस्य क्वचिद्प्रवृत्तेः । अतो रूपाद्यन्ते नायच्, रूपादेरस्मादनभिधानमेव वा । (२)अयच्यकच् तु न

---

ऽयजन्तोभयशब्दस्य सर्वादौ पाठात्सर्वनामत्वेन तदुत्तरसप्तम्याः सर्वनामप्रकृतिकत्वेन तस्मात् त्रलि उभयशब्दस्य द्विवचनपरकत्वाभावेनायचः साधुत्वस्य सूपपादत्वादिति दिक् ।

**(१)इष्टसिद्ध्यर्थत्वेन चेति ।** चिन्त्यमिदम्, विभक्तयोगद्वयमध्येऽन्यतरेणान्यतरस्य यत्र वैयर्थ्यं तादृशातोधातोरित्यादिविषय एव "योगविभागादिष्टसिद्धिः" इतिपरिभाषाप्रवृत्तिस्वीकारेण प्रकृते चावयवार्थायचोऽत्यन्तस्वार्थिकायचश्चैकेन योगेन विधातुमशक्यतयाऽपरयोगवैयर्थ्यस्य वक्तुमशक्यत्वात् । अन्यतरेणान्यतरयोगवैयर्थ्यस्यैतत्परिभाषाबीजत्वाच्च, तथैव स्वयमप्युक्तत्वाच्च । न चैवमपि 'उभे भद्रे' इति न स्यात् । यद्युभशब्दादयच् स्यात्तर्हि तदन्तात् "टिड्ढा" (पा०सू० ४।१।१५) इति ङीपि तेन व्यवधानादुभयशब्दस्य द्विवचने परकत्वन्नास्तीति ततोऽन्यत्रेति जातमिति अयजापत्तेरिति वाच्यम्, ङीप्यपि तदन्ते लिङ्गविशिष्टपरिभाषया उभयशब्दत्वस्य सत्त्वेन उभयशब्दस्य द्विवचनपरकत्वस्यैव सत्त्वात् । न च "विभक्तौ लिङ्गविशिष्टाग्रहणम्" (प०भा०) इति ङ्यन्ते लिङ्गविशिष्टपरिभाषया उभयशब्दत्वन्नायास्यतीति वाच्यम्, विभक्तिनिमित्तककार्ये कर्तव्ये एव तत्परिभाषायाः प्रवृत्त्या अयचो द्विवचनपरकत्वाभावनिमित्तकत्वेन विभक्तिनिमित्तकत्वाभावात् तदप्रवृत्तेः । यत्तु उभयसम्भावनाया ग्रहणेन 'उभे भद्रे' इत्यत्र पूर्वोक्तरीत्याऽऽद्यसम्भावनायाः सत्त्वेनोत्तरसम्भावनाया असत्त्वेऽपि ततोऽन्यत्र न जातमित्यदोषः, मूलोक्तवाशब्दस्तु चार्थे इति बोध्यमिति केचित्; तन्न, 'उभयत्र' इत्यत्रापि अयच्प्रवृत्त्यभावसम्भावनाप्रयोज्या उभशब्दस्य गणे पाठाभावेन त्रलाद्यनुत्पत्त्या द्विवचनपरत्वसम्भावना वर्तते इति ततोऽन्यत्रजातत्वाभावेन तदसिद्ध्यापत्तेरिति ।

ननु अयच्प्रवृत्तिसम्भावनाप्रयोज्या यत्रोभयशब्दस्य द्विवचनपरकत्वसम्भावना ततोऽन्यत्रायचः साधुत्वस्य स्वीकारे सर्वादौ पुनरप्युभशब्दस्य पाठो व्यर्थः । यद्युभशब्दादयच् स्यादयजन्तोभयशब्दस्य सर्वादौ पाठात्सर्वनामत्वादकच्युभयशब्दस्य द्विवचनपरत्वमेवेति ततोऽन्यत्रेति न जातमित्ययचोऽसाधुत्वात् केऽपि 'उभकौ' इतिरूपसिद्धेरत आह—**(२)अयच्यकच् तु न वाच्य इति ।** अयच्प्रवृत्तिसम्भावना-

वाच्यः, (१)उपजीव्यत्वेन कस्यैव प्राप्तेः। अपवादस्त्व(२)न्यत्र चरितार्थः।

अत्रेदं चिन्त्यम्, अकज्विधावेवोभग्रहणेन सिद्धे सञ्ज्ञाप्रणयनं (३)किमर्थम्? अभिव्यक्तपदार्थकत्वात्संज्ञाव्यावृत्तिः, सर्वनामसाहचर्याच्च। अत एवोपसर्जनव्यावृत्तिरपि। "उभयोऽन्यत्र" इति वार्तिके तयप्समानार्थकोऽप्ययज् गृह्यते 'उभयो मणिः' 'उभये देवमनुष्याः, इति भाष्ये तदुदाहरणात्। स्वार्थिकस्य च ग्रहणं, तदुपक्रमेण वार्त्तिकप्रवृत्तेः। एकावयवद्वयारब्धमणिद्वयविवक्षयोद्भूतावयवभेदाविवक्षया वा द्विवचनमस्यासाध्वेव। एतन्मूलकमेवोभयस्यासर्वविभक्तित्वं "तद्धितश्च" (पा०सू० १।१।३८) इतिसूत्रे **कैयटे**नोक्तं, तदाह—**कैयट इति**। **हरदत्त इति**। अत्रारुचिबीजं प्रागुक्त**भाष्य**विरोधः।

**भाष्ये** तूभशब्दपाठः प्रत्याख्यातः। कप्रत्ययस्याज्ञाताद्यर्थविशिष्टस्वार्थे विधानेन (४)द्वित्वसंख्याप्रकारकसंख्येयविशेष्यकबोधविषयार्थानुवा-

---

प्रयोज्या योभयशब्दस्य द्विवचनपरकत्वसम्भावना तस्यां कर्तव्यायामकच्प्रवृत्तिरत्र न कर्तव्येत्यर्थः। अत्र हेतुमाह—(१)**उपजीव्यत्वेन कस्यैव प्राप्तेरिति**। 'यद्युभशब्दादयच् स्यात्तर्हि अयजन्तोभयशब्दस्य सर्वादौ पाठात्सर्वनामत्वादकच् स्यात् इति अकच्प्रवृत्तिसम्भावनायां 'यदि कप्रत्ययः स्यात्तर्हि द्विवचनलोपेन द्विवचनपरकत्वं न स्यात्' इतिद्विवचनपरकत्वाभावसम्भावनाद्वारा कस्योपजीव्यत्वादिति भावः। (२)**अन्यत्रेति**। उपजीव्योपजीवकभावस्याभावविषये 'सर्विका' इत्यत्रेति भावः।

(३)**किमर्थमिति**। न च सर्वादावुभशब्दपाठेऽकज्विधौ पाठे वा लाघवाभावाद्विशेषाभावेनेयमाशङ्काऽसङ्गतेति वाच्यम्, सर्वादावुभशब्दपाठे 'उभे भद्रे' इत्यादावन्तोदात्तदर्शनेन "स्वाङ्गशिटाम्" (शां०फि० २९) इत्याद्युदात्तत्वबाधनार्थमुञ्छादिषु उभशब्दपाठस्यावश्यकत्वेनोभयत्र पाठे गौरवेणाकज्विधावेवोभशब्दस्य ग्रहणं कस्मान्न क्रियत इति शङ्कायाः समीचीनत्वात्।

(४)**द्वित्वसंख्याप्रकारकेति**। स्यादेतत्, यदि द्वित्वसंख्याप्रकारकसंख्येयविशेष्यकबोधजनकत्वं द्विवचनत्वं तर्हि घटपदादपि द्वित्वसंख्याप्रकारकसंख्येयविशेष्यकबोधजननात्तस्यापि द्विवचनत्वापत्तौ उभयोर्घटौ 'उभयघटौ' इत्यादावयच् न स्यात्, उभशब्दस्य उभयशब्दस्य वा द्विवचनपरकत्वस्यैव सत्त्वात्। न च द्वित्वसंख्याप्रकारकसंख्येयविशेष्यकोपस्थितिजनकत्वं द्विवचनत्वमिति नोक्तदोष इति वाच्यम्, त्रतसिलादेरपि द्वित्वसंख्याप्रकारकसंख्येयविशेष्यकोपस्थितिजनकत्वेन तस्यापि निरुक्तद्विवचनत्वापत्तौ त्रतसिलादेर्द्विवचनत्व ... 'उभौ' ... विरोधात्,

दकत्वरूपद्विवचनत्वेन वार्त्तिके द्विवचनशब्देन तस्यापि ग्रहणमुभशब्दग्रहणवत् । अत एव उभयोरुभौ 'उभोभौ' इत्यादौ नायच् । तदुक्तं **भाष्ये**-"क्रेऽप्यन्तरेण वचनं द्विवचनपरो भविष्यति । कथं ? स्वार्थिकाः प्रत्ययाः प्रकृतितोऽविशिष्टा भवन्तीति प्रकृतिग्रहणेन स्वार्थिकानामपि ग्रहणं भवति" इति । **इति** हेतोः, **प्रकृतेः** कादिप्रकृतेरुभशब्दस्य ग्राहकेण द्विवचनशब्देन स्वार्थिकस्यापि ग्रहणमिति तदर्थः । त्रतसिलौ तु विभक्त्यन्तस्य स्वार्थे विहिताविति (१)तत्तत्कारकशक्तिप्रधानावेवेति न तयोरुक्तद्विवचनत्वमिति ।

**तस्मात्** उभयशब्दात् । **जसीति** । अवयवद्वयारब्धसमुदायबहुत्वविवक्षायामित्यर्थः । **अन्तरङ्गत्वादिति** । (२)सर्वार्थबोधकत्वरू-

---

इत्यादावौविभक्तेर्द्वित्वसंख्याप्रकारकसंख्येयविशेष्यकोपस्थितिजनकत्वस्याभावेन निरुक्तद्विवचनत्वस्यानापत्तेश्चेति चेत् ? मैवम्, यस्य द्विवचनत्वं वक्तव्यं तत्प्रयोज्यप्रधानतानिरूपिताप्रधानत्वासमानाधिकरणा या द्वित्वसंख्यानिष्ठप्रकारतानिरूपितसंख्येयनिष्ठप्रधानता तादृशप्रधानताप्रयोजकत्वं द्विवचनत्वमिति परिष्कारेणादोषात् । तथा हि प्रधानता नाम संसर्गताविशेष्यतासाधारणो विषयताविशेषः । तथा च 'उभयत्र' इत्यादौ सप्तम्यन्तात् त्रलाद्युत्पत्त्या त्रल्पदप्रयोज्याऽऽधाराधेयभावसंसर्गनिष्ठप्रधानतानिरूपिताप्रधानत्वसामानाधिकरण्यैव द्वित्वसंख्यानिष्ठप्रकारतानिरूपितसंख्येयनिष्ठा प्रधानता जातेति त्रतसिलादेर्नोक्तद्विवचनत्वम् । कप्रत्ययस्य प्रातिपदिकादेवोत्पत्त्या संसर्गनिष्ठप्रधानताख्या विषयता न कपदप्रयोज्येति कस्य नोक्तद्विवचनत्वभङ्ग इति । तदेतत्सर्वं ध्वनयन्नाह-(१)**तत्तत्कारकशक्तिप्रधानाविति** ।

**परे तु** 'स्वार्थिकाः प्रत्ययाः प्रकृतितोऽविशिष्टा भवन्ति' इत्यस्य यदागमपरिभाषावत् स्वार्थिकप्रत्ययप्रकृतिपर्याप्तधर्माः स्वार्थिकप्रत्ययान्ते तदादावतिदिश्यन्ते इत्यर्थः । प्रकृतिग्रहणेन स्वार्थिकप्रत्ययविशिष्टस्य ग्रहणमिति यावत् । वैशिष्ट्यञ्च स्वघटितत्वं, स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयघटितत्वं, स्वविशिष्टाघटितत्वमेतत्त्रितयसम्बन्धेन । सम्बन्धघटकवैशिष्ट्यं तु स्वेतरत्व, स्वीयविधेयतानिरूपितोद्देश्यताश्रयेतरत्वोभयसम्बन्धेन बोध्यम् । तथाचोभशब्दग्रहणेनोभकशब्दस्यापि ग्रहणात्केऽप्युभशब्दस्य द्विवचनपरत्वमेवेत्युभशब्दपाठो व्यर्थः । अत एव प्रकृतितोऽभिन्ना इत्यर्थकं 'प्रकृतितोऽविशिष्टाः' इति भाष्यं सङ्गच्छते । जराशब्दात् कप्रत्यये जरसादेशस्तु निर्दिश्यमानत्वाभावान्न । श्वशुरकशब्दात् "राजश्वशुराद्यत्" ( पा०सू० ४।१।१३७ ) इति यदादेरतिप्रसङ्गस्त्वनभिधानाद्वारणीय इत्याहुः ।

(२)**सर्वार्थबोधकत्वरूपार्थस्येति** । प्राधान्येन स्वीयसर्वार्थवाचकत्वरूपार्थ-

पार्थस्योभयत्रापि निमित्तत्वेन न तत्कृतं नित्यसञ्ज्ञाया बाहिरङ्गत्वम्। अत एव सञ्ज्ञोपसर्जनप्रथमादिशब्दे न विकल्पः, अर्थकृतबहिरङ्गत्वस्यानाश्रयणाच्चेति भावः। इदमर्वाचामनुरोधेन।

**परे तु** अस्य (१)पक्षेऽभावबोधकतया "निषेधाश्च बलीयांसः" इत्यनेनास्य प्राप्तिः। किञ्च न "अन्तरङ्गं बलीयः" इत्यस्या अत्र विषये युगपत्प्राप्त्यभावात्, सञ्ज्ञानां बाध्यबाधकभावाभावेन प्रातिपदिकसञ्ज्ञासमकालमेव (२)सर्वनामसञ्ज्ञाप्रवृत्तेः।

अत एव 'उभये' इत्यत्र सर्वनाम्नो विहितत्वेन (३)शीभावसिद्धिः। पूर्वापरेत्यादि तु पक्षे तदभावमात्रबोधकम्। "असिद्धं बहिरङ्गम्" (प०भा०) इत्यपि न, अन्तरङ्गोत्तरं बहिरङ्गप्राप्तेः। अन्तरङ्गे कर्त्तव्ये बहिरङ्गासिद्धत्वेऽपि तत्प्रवृत्त्युत्तरं बहिरङ्गप्रवृत्तेरनया(४)वारयितुमशक्यत्वात्। बहुशस्तथा दृष्टत्वात्। तदुत्तरमप्येतत्प्रवृत्त्या पूर्वादिष्विव पक्षे तदभावविशिष्टे साधुत्वबोधनस्य शक्यत्वात्। जसीति विषयसप्तमीतिपक्षेऽपि प्रातिपदिकादिसञ्ज्ञोत्तरमेवास्याः प्रवृत्तिस्तदुत्तरमेव तद्विषयात्, स्थानिवदतिदेशस्येत्यर्थः।

---

(१)**पक्षेऽभावबोधकतयेति**। अयं भावः--'प्रथमचरम' (पा०सू० १।१।३३) इतिविकल्पस्य नेमशब्दे प्राप्ते अन्यत्राप्राप्ते उभयत्रविभाषात्वेन पक्षेऽभावस्यापि विधायकत्वेनावृत्त्या नञं चाध्याहृत्य प्रथमादीनां सर्वनामसंज्ञा न भवतीति पूर्वं सामान्यतो निषिध्य पश्चादुद्देश्यतावच्छेदकसामानाधिकरण्येन विधेयान्वयाद्विकल्पेन सर्वनामसंज्ञाविधाने "निषेधाश्च बलीयांसः" इति न्यायेन 'उभे' इत्यादौ "प्रथमचरम" (पा०सू० १।१।३३) इति विकल्पस्यैवापत्तेरिति भावः। (२)**सर्वनामसंज्ञाप्रवृत्तेरिति**। वस्तुतस्तु "उपसञ्जनिष्यमाणनिमित्तोऽप्यपवाद उपसञ्जातनिमित्तमप्युत्सर्गं बाधते" इति न्यायेन यदि नित्या सञ्ज्ञा न स्यादस्माज्जसि अपवादः "प्रथमचरम" (पा०सू० १।१।३३) इतिविकल्पः स्यादिति सम्भावनायाः सत्त्वेन भविष्यदपवादविषयातिरिक्तत्वेन सङ्कोचात्पूर्वरीत्या निषेधशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्नातिरिक्तत्वेन "सर्वादीनि" (पा०सू० १।१।२७) इत्यत्र सङ्कोचान्नित्यसंज्ञाया अप्रवृत्तेरिदमयुक्तम्।

(३)**शीभावसिद्धिरिति**। वस्तुतस्तु जसुत्पत्त्यनन्तरं सर्वनामसंज्ञायामपि सर्वनामसंज्ञकाभिन्नं यददन्तमङ्गं ततः परस्य जसः शी स्यादित्यर्थकरणेन 'वर्णाश्रमेतराः' इत्यादौ दोषाभावाद्विहितपदाध्याहारस्य पूर्वमेव खण्डितत्वात् जसुत्पत्त्यनन्तरमपि सर्वनामसंज्ञायां नोक्तदोष इति बोध्यम्। (४)**वारयितुमशक्यत्वादिति**। बहु-

शप्रापिताया (१)निरवकाशत्वाच्च, प्रत्यक्षस्य स्थानिवद्भावस्यानुमानिक्याऽनया (२)बाधायोगाच्च; सर्वनामसञ्ज्ञायामु(३)क्तयुक्त्या यथोद्देशपक्षस्यैवौ-(४)चित्यात् । (५)अत एव "तयादेशे उभयप्रतिषेधः । तयपो ग्रहणेन ग्रहणात् जसि विभाषा प्राप्नोति" इति स्थानिवत्सूत्रस्थं **वार्त्तिकम्** "अयच् प्रत्ययान्तरम्" इति सूत्राशयप्रदर्शनेन **भाष्ये** प्रत्याख्यातं, न त्वन्तरङ्गन्यायबलेन । 'उभयी' इत्यत्र ङीप्तु "टिड्ढा"(पा०सू० ४।१।१५) इतिसूत्रे मात्रशब्दादारभ्यायचश्चकारात्प्रत्याहाराश्रयणेन सिद्धः । अत इत्यनुवृत्त्या च 'कति' इत्यादौ नातिप्रसङ्गः । तयब्ग्रहणन्तु सूत्रे (६)ऽवयुत्या-

---

तस्तु नित्यसंज्ञाप्रवृत्तिकाले विकल्पस्याप्राप्तिरूपमेव बहिरङ्गत्वं "प्रथमचरम" (पा०सू० १।१।३३) इत्यस्य मूलकृतोऽभिप्रेतमिति नेदं दूषणं सम्यक् । **(१)निरवकाशत्वाच्चेति** । चिन्त्यमिदम्, "प्रथमचरम"इतिशास्त्रस्यात्र प्रवृत्तेरभावेन "स्थानिवद्" (पा०सू० १।१।५६) इत्यतिदेशार्थमन्यत्संज्ञाशास्त्रमन्यविषयेऽन्यदिति वक्तुमशक्यत्वेन निरवकाशत्वस्य दुरुपपादत्वात् । न च 'उभये' इत्येतल्लक्ष्यसिद्ध्यर्थं व्यक्तिपक्षे उपप्लुतं प्रथमचरमेतिशास्त्रं निरवकाशमिति वक्तुं युक्तम्, एवन्तर्हि उभये इतिलक्ष्यार्थमुपप्लुतस्य "सर्वादीनि सर्वनामानि" (पा०सू० १।१।२७) इतिशास्त्रस्यापि निरवकाशत्वस्य तुल्यत्वात् । **(२)बाधायोगाच्चेति** । इदमपि चिन्त्यमेव, नित्यसंज्ञाप्रवृत्तिकाले विकल्पसंज्ञाया अप्रवृत्त्या नित्यसंज्ञाप्रवृत्तिकाले परस्य निमित्ताभावादप्रवृत्तिरूपं बहिरङ्गत्वमिति वदितुर्मते प्रत्यक्षस्थानिवदितिशास्त्रस्य ज्ञापकसिद्धत्वेनानुमानिक्या "असिद्धं बहिरङ्गम्" (प०भा०) इतिपरिभाषया बाधायोगादिति कथनस्यायुक्तत्वात् । **(३)उक्तयुक्त्येति** । सर्वनाम्नो विहितत्वेन "जसः शी" (पा०सू० ७।१।१७) इत्यादिसमासत्तये प्रातिपदिकसंज्ञासमकालमेव सर्वनामसंज्ञा भवतीत्युक्तयुक्त्येत्यर्थः । **(४)औचित्यादिति** । अन्यथा कार्यकालपक्षे जसुत्तरमेव सर्वनामसंज्ञानिमित्तकशीभावरूपकार्यप्राप्त्या जसुत्पत्त्यनन्तरं संज्ञायां जसः सर्वनाम्नो विहितत्वाभावेन शीभावो न स्यादिति भावः । **(५)अत एवेति** । "निषेधाश्च बलीयांसः" इतिन्यायेन "प्रथमचरम" (पा०सू० १।१।३३) इतिशास्त्रस्योभयत्रविभाषात्वेन पूर्वं निषेधमुखेन प्रवृत्त्युपपत्तये कल्पितात् निषेधशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्नातिरिक्तत्वेन "सर्वादीनि" (पा०सू० १।१।२७) इत्यत्र सङ्कोचान्नित्यसंज्ञाया अप्राप्त्या, पक्षे सर्वनामसंज्ञासम्पत्तये कल्पितेन 'विभाषा जसि सर्वनामसंज्ञा भवति' इतिवाक्येन 'उभये' इत्यादौ विकल्पेन संज्ञा प्राप्नोति इति स्वीकारादेवेत्यर्थः ।

**(६)अवयुत्यानुवाद इति** । पृथक्कृत्यैकदेशानुवाद इत्यर्थः । अत्रेदं तत्त्वम्-

नुवादः । द्वित्रिशब्दप्रकृतिकायजन्तस्य जसःशीविषयेऽनभिधानमेव, पुंस्येव वाऽनभिधानमिति तदाशय इति वदन्ति ।

**तथापीहेति** । 'प्रत्ययग्रहणे तदन्तग्रहणम्' इति 'प्रयोजनं सर्वनामाव्ययसञ्ज्ञायाम्' इति च तदन्तविधिद्वयेन डतरान्तान्तेत्याद्यर्थे परमकतरस्य, व्यपदेशिवद्भावेन कतरस्य च (१)सञ्ज्ञा सिद्धेति भावः । तत्र मान-

---

"धातोर्द्वये प्रत्ययाः सुपस्तिङश्च" इतिभाष्ये 'द्वये' इति प्रयोगदर्शनेन द्वित्रिशब्दप्रकृतिकायजन्तस्यानभिधानकथनं साहसमात्रमेव । तयादेशकल्पे 'द्वये' 'द्वयाः'; अयच् प्रत्ययान्तरमिति कल्पे च 'द्वयाः' इति फलभेदस्तु न, "उभादुदात्तो नित्यम्" (पा०सू० ५।२।४४) इत्यनेनायचः प्रत्ययान्तरत्वेन विधानेऽपि "द्वित्रिभ्यां तयस्यायज्वा" (पा०सू० ५।२।४६) इति सूत्रेण तयस्यैवायज्विधानात् । अत एव "तयादेशे उभयप्रतिषेधः" इति वार्तिके उभयग्रहणं सङ्गच्छते । अन्यथा तयादेश इत्येव ब्रूयात् । तथाच 'द्वये' 'द्वयाः' इत्यत्र विकल्पो भवत्येव । "उभादुदात्तः" (पा०सू० ५।२।४४) इति सूत्रे तयस्येत्यननुवर्त्योभशब्दात् स्वातन्त्र्येणाऽयज्विधेयो, "द्वित्रिभ्यां तयस्य" (पा०सू० ५।२।४६) इत्यनेन तु तयपः स्थाने इति तद्भावः । आदेशकल्पे "तयादेशे उभयप्रतिषेधः" इति वार्तिकेन स्थानिवत्त्वनिषेधात् , अयच् प्रत्ययान्तरमिति कल्पे च "प्रथम" (पा०सू० १।१।३३) इत्यस्याप्राप्त्या विकल्पाभावेन 'उभये' इत्येकमेव रूपमित्यत्राप्यारम्भप्रत्याख्यानयोर्वैषम्याभावः । एवञ्च तदनभिधाने मानाभाव इति **केचित्** ।

**वस्तुतस्तु** आदेशकल्पे "तयादेशे उभयप्रतिषेधः" इति वार्त्तिककरणरूपगौरवेणायच् प्रत्ययान्तरमितिकल्पो भगवता स्वीकृतः । तथा चायच् प्रत्ययान्तरमिति कल्पे "द्वित्रिभ्याम्" ( पा० सू० ५।२।४६ ) इतिसूत्रे तयस्येति पदं न कर्तव्यं भवति । एवं "टिड्ढाण्" ( पा० सू० ४।१।१५ ) इतिसूत्रे मात्रजिति प्रत्याहाराश्रयणेन तत्रत्यतयब्ग्रहणमपि न कर्तव्यम्भवति । एवं "प्रथमचरम" ( पा० सू० १।१।३३ ) इति सूत्रे तयग्रहणं, "तयादेशे उभयप्रतिषेधः" इति वार्त्तिकञ्च न कर्तव्यम्भवतीति महल्लाघवम् । एवञ्च तदनभिधाने एव भाष्यतात्पर्यम् । 'उभयी' इत्यत्रेव 'द्वयी' इत्यत्रापि ङीब् भवत्येव, "द्वित्रिभ्यां तयस्य" (पा० सू० ५।२।४६) इत्यत्र तयग्रहणमकृत्वा द्वित्रिभ्यां विकल्पेनायच्प्रत्ययस्यैव तेन विधातुं शक्यत्वात् । अत एव 'द्वयं द्वयी स्यात्' इति कोशः सङ्गच्छते । "धातोर्द्वये प्रत्ययाः" इति **भाष्यं** तु धातोर्द्वये आख्यातप्रातिपदिकार्थविषय इत्यर्थविवक्षणेन कथञ्चित्सङ्गमनयिमिति दिक् ।

(१)**संज्ञा सिद्धेति भाव इति** । वस्तुतस्तु अत्रत्यशेखरो मूलञ्चैतदुभयमपि चिन्त्यमेव । साक्षात्सर्वनामसंज्ञानिष्ठविधेयतानिरूपितोद्देश्यताप्रयोजकत्वस्य सर्वादिपदे

माह—**केवलयोरिति प्रयोजनाभावात्** । फलाभावादित्यर्थः । अदन्ताद्ङ्गात्परस्य (१)सर्वनाम्नो विहितस्येत्येव "जसः शी" (पा० सू० ७।१।१७) इत्यादेरर्थादिति भावः । ननु डतरग्रहणेनैव सिद्धेऽन्यतरशब्द-पाठो व्यर्थोऽत आह—**अन्यतरेति** । किंयत्तद्भ्य एव तयोर्विधानादिति भावः । **अपुरीति** । पूःशब्दस्य (२)विशेष्यत्वेनेत्यर्थः । तद् ध्वनयन् स्त्रियामुदाहरति—**अन्तरायामिति** ।

एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा ।
साधारणे समानेऽल्पे संख्यायां च प्रयुज्यते ॥

**इति केचित्** । केवले—असहाये । तत्र संख्याऽन्यार्थासहायवाची "ष्णान्ता षट्" (पा०सू० १।१।२४) "बहुषु बहुवचनम्" (पा०सू० १।४।२१) "एकादाकिनिच्च" (पा०सू० ५।३।५२) इत्यादिसूत्रेषु **भाष्ये** स्पष्टमुक्तः । "एको गोत्रे" (पा०सू० ४।१।९३) इतिसूत्रशेषे **भाष्ये** प्रथमार्थोऽपि उक्तः । साधारणसमानार्थयोः संख्यावाचिन एवार्थतः पर्यवसानम्, यथा 'तेनैकादिक्' 'चैत्रमैत्रयोरेका माता' इत्यादौ । "सर्वस्य द्वे" (पा०सू० ८।१।१) इतिसूत्रे 'एकैकशः' इति **भाष्यमु**पादाय 'केचिदाहुरल्पार्थोऽप्येकशब्दोऽस्ति' इति वदता **कैयटेन** केचिदि-

---

सत्त्वेऽपि प्रत्ययमात्रवृत्तिविषयताप्रयोजकत्वस्य तत्राभावेन, सर्वादिगणान्तर्गतडतरडतमेत्यत्र प्रत्ययमात्रवृत्तिविषयताप्रयोजकत्वस्य सत्त्वेऽपि सर्वनामसंज्ञानिष्ठविधेयतानिरूपितोद्देश्यताप्रयोजकत्वस्य साक्षादभावेन साक्षात्संज्ञानिष्ठविधेयतानिरूपितप्रत्ययमात्रवृत्त्युद्देश्यताप्रयोजकं पदं तदादिविशेष्यकतदन्तविधिप्रयोजकं नेत्यर्थिकायाः "संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणन्नास्ति" (प० भा) इति परिभाषायाः प्रकृते प्राप्त्यभावात् ।

(१)**सर्वनाम्नो विहितस्येति** । अत्रापि पूर्ववत्सर्वनामाभिन्नं यददन्तमङ्गं तस्मात्परस्येत्यर्थो बोद्धव्यः । (२)**विशेष्यत्वे नेति** । विशेष्यताप्रयोजकत्वे नेत्यर्थः । तथाच पूःपदप्रयोज्यविशेष्यतानिरूपितप्रकारताप्रयोजकेतरस्यैवान्तरशब्दस्य "अन्तरं बहिर्योगे" इति गणसूत्रे ग्रहणमिति भावः । वस्तुतस्तु अपुरीत्यस्य पूःशब्दार्थस्य विशेष्यत्वे नेति व्याख्यानमिति स्त्रीत्वविशिष्टपूःशब्दार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकेतरान्तरशब्दस्य 'अन्तरं बहिर्योगे' इति गणसूत्रे ग्रहणमिति 'अन्तरायां नगर्याम्' इत्यादिसिद्धिः ।

त्युक्त्या तदर्थकाभावो ध्वनित एव । एवं च प्रधानार्थे (१)न दृढं मानम्।

**स्वाभिधेयापेक्षावधीति** समस्तः पाठः । नियमेना(२)व-धिसापेक्षेऽर्थे वर्त्तमानपूर्वादीनामित्यर्थः । **दक्षिणा गाथका** इति। उत्कर्षस्यावधिसापेक्षत्वादत्र व्यवस्थाऽस्तीत्याग्रहे तु 'उत्तरे प्रत्युत्तरे च शक्तः' इति प्रत्युदाहरणं बोध्यम् । **उत्तराः कुरव इति** । सुमेर्ववधि-कपरदेशत्वरूपोपाधिविशिष्टकुरुषु उत्तरशब्दः शब्दं प्रवृत्तिनिमित्तीकृत्य वर्त्तते इति व्यवस्थाविषयत्वं बोद्धव्यम् । दिग्वाचकपूर्वादिशब्दानां (३)मध्याह्न-

---

(१)**न दृढं मानमिति** । चिन्त्यमिदम्, अर्थनिर्णयस्य कोशाद्यधीनत्वेन तद्-निर्णायके शब्दशास्त्रे महाभाष्ये मुख्यार्थैकशब्दादर्शनमात्रेण प्रधानेऽर्थे न दृढं मानमितिकथनस्य साहसमात्रत्वात्, "एके मुख्यान्यकेवलाः" (अ०को०) इति कोशस्य तदर्थे मानत्वाच्च, "नेत्येकेऽसेर्हि दृश्यते" इति वार्तिके मुख्यार्थैकशब्दस्य, "सर्वो लोपमेके" इति भाष्ये मुख्यार्थैकशब्दस्य दर्शनाच्च, शब्दार्थनिर्णयस्य लौकिका-न्वयव्यतिरेकसिद्धत्वाच्चेति दिक् ।

(२)**अवधिसापेक्षेऽर्थे इति** । अवध्यंशे नित्यसाकाङ्क्षं यद्रूपं तद्रूपावच्छिन्न-वाचकत्वमेव व्यवस्थावाचकत्वम् । यद्धर्मावच्छिन्नज्ञानोत्तरमवधिविशेषविषयिणी जिज्ञासा नियमेनोदेति तद्धर्मावच्छिन्नवाचकत्वमिति यावत् । (३)**मध्याह्नसूर्यसंयो-गीति** । वस्तुतो नेदं दिग्वाचकपूर्वादिपदप्रवृत्तिनिमित्तम् । एवं सति दाक्षिणात्या-नाम् "उदङ्मुखः प्राङ्मुखो वा त्रिवारमुपस्पृशेत्" इत्यादिविधीनाङ्कर्तुमशक्यत्वं स्यात्, तद्दृष्ट्या सर्वस्यैव दक्षिणदिक्त्वात् । एवमेव पाश्चात्यानां "दक्षिणाभिमुखः सन् श्राद्धादिविधिं कुर्यात्" इत्यादिविधीनाङ्कर्तुमशक्यत्वमेव स्यादिति दिग्वाचक-पूर्वादिपदानां यत् प्रवृत्तिनिमित्तमुक्तं मूले, तद् देशवाचिनां बोध्यं, देशवाचकपूर्वा-दिशब्दानां च यदुक्तं तद् दिग्वाचिनां बोध्यमिति केचित् । मध्याह्नसूर्यसंयोगिदेशाव-धिकोदयाचलसन्निहितादिदेशोपाध्यवच्छिन्नत्वस्य दिग्धर्मत्वेन तत्तदवधिकोदयाचल-सन्निहितत्वादेर्देशधर्मत्वेन यथाश्रुतमेव दिग्देशवाचिनां पूर्वादिशब्दानां प्रवृत्तिनिमित्त-मुचितम् । 'प्रयागात् काशी पूर्वा' इत्यादौ पूर्वादिशब्दा देशवाचका एव, तत्तदव-धिकोदयाचलसन्निहितत्वादिधर्मविशिष्टदेशस्यैव बोध्यमानत्वात् । मध्याह्नस्य देशभेदेन भेदात् तात्कालिकसूर्यसंयोगिदेशभेदस्य आवश्यकत्वेन तदवधिकोदयाचलसन्निहिता-दिदेशरूपोपाधेर्भेदात् तदवच्छिन्नप्राच्यादिदिशां भेदेन न दाक्षिणात्यादीनां "प्राङ्मुखः त्रिवारमुपस्पृशेत्" "दक्षिणाभिमुखः श्राद्धं कुर्यात्" इत्यादिविध्यनुष्ठानाशक्यत्वम् । 'अयं पूर्वो देशः' 'अयं पश्चिमः' 'अयं दक्षिणः' 'अयमुत्तरः' इतिव्यवहारस्तु लङ्कातः प्रवृत्ताया मेरुं यावद्गतायाः कुरुक्षेत्रादिदेशस्पर्शिन्या मध्यरेखाया मध्यभागमुज्ज-

सूर्यसंयोगिदेशावधिकोदयाचलास्ताचलसन्निहितदेशतत्कालिकसूर्यसम्मुखया-वद्देशतत्कालिकतत्पृष्ठस्थयावद्देशरूपोपाधिविशिष्टदिशि' तत्तच्छब्दं प्रवृत्ति-निमित्तीकृत्य प्रवृत्तिरिति उपाध्यन्तर्गततया व्यवस्थाऽस्त्येव, मद्ध्याह्ने सूर्यस्योदङ्मुखत्वात्। देशवृत्तीनां तत्तदवधिकोदयाचलसन्निहितत्वादि प्रवृत्तिनिमित्तमित्यन्यत्र विस्तरः।

अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्ये।
छिद्रात्मीयविनाबहिरवसरमद्ध्येऽन्तरात्मनि च ॥ (अ०को०)

इतिकोशोक्तार्थान्तरव्युदासार्थमाह—**अन्तरं बहिर्योगेति**। अयं त्रिसूत्र्या क्रियमाणः सञ्ज्ञाविकल्पो जसाधारे शीभाव एव, न त्वक-जाद्युदात्तत्वादाविति बोद्धव्यम्।

**न बहुव्रीहौ** (पा०सू० १।१।२९)। **चिकीर्षिते इति** अध्याहारलभ्यम्। प्राचीनवृत्तिकृद्रीत्येदं व्याख्यानम्। नेदं सूत्रं बहुव्रीहे-स्तत्त्वनिषेधकमुपसर्जनप्रतिषेधेन सिद्धेः। **प्रक्रियावाक्य इति**। अलौकिके इत्यर्थः। न चालौकिके समासप्रवृत्त्यैकार्थीभावस्यापि तत्रैव कल्पनादुपसर्जनत्वादेव समास इव तत्रापि निषेधः सिद्ध इति वाच्यम्, तत्रैकार्थीभावस्यारोपेऽपि (१)स्वार्थविशिष्टार्थान्तरबोधकत्वरूपोपसर्जनत्वा-

---

यिनीप्रदेशमुपाधिं स्वीकृत्य तदवधिकोदयाचलसन्निहितत्वादिकं प्रवृत्तिनिमित्तीकृत्य पूर्वादिशब्दानां प्रवृत्त्या उपपादनीयः। यद्वा, तत्र देशशब्देन दिगेवोच्यते। पूर्वो देश इत्यस्य मध्यरेखामध्यभागावधिकोदयाचलसन्निहितदेशरूपोपाध्यवच्छिन्ना दिगि-त्यर्थः, एवमुत्तरत्रापि बोध्यम्। अत एव रामायणे किष्किन्धाकाण्डे 'पूर्वां दिशं' 'दक्षिणां दिशम्' इत्यादिना दिग्विभाग एवोक्तः। अत एव 'चतस्रो दिशः' इति व्यवहारोपपत्तिः। अन्यथोपाधीनामानन्त्याद्पधेयदिशामप्यानन्त्यमेव स्यात्। तस्मात् वैपरीत्यकल्पनं मूलाशयाज्ञानमूलकमेवेत्यन्ये।

(१)**स्वार्थविशिष्टार्थान्तरबोधकत्वरूपेति**। पदार्थान्तरनिष्ठविशेष्यता-निरूपितोपस्थितीयप्रकारताप्रयोजकत्वरूपोपसर्जनत्वस्यालौकिकविग्रहवाक्ये 'युष्मद् सु' इत्यत्राभावादिति भावः। अतिदिश्यमानधर्मसमनियतधर्मानिमित्तककार्याभावस्याति-देशस्वभावसिद्धत्वेन समाससंज्ञार्थमलौकिकविग्रहवाक्ये एकार्थीभावस्यारोपेऽपि तत्स-मनियतोपसर्जनत्वनिमित्तकसर्वनामसंज्ञानिषेधस्य वक्तुमशक्यत्वात्। अत एव 'अति

भावेन 'अतिभवकान्' इत्यत्रैव प्राप्तस्याकचोऽभावार्थं सञ्ज्ञानिषेध इत्यर्थे तात्पर्यात्। लौकिके तु नास्य प्रवृत्तिस्तत्र समासस्य चिकीर्षितत्वाभावात्, अतिक्रान्त इत्यादिना पूर्वोक्तस्य लौकिकवाक्यस्य समासस्य च दृष्टान्तद्व यमुच्यते। (१)अकृतव्यूहपरिभाषा तु नास्त्येवेति भावः। **भाष्यकारस्त्विति।**

अकच्स्वरौ तु कर्त्तव्यौ प्रत्यङ्गं मुक्तसंशयम्।

इति **भाष्योक्तेः वृत्तिकृ**द्रीत्येदं व्याख्यानमयुक्तमिति भावः।

ननु स्मृतिद्वयप्रामाण्याद्विकल्पोऽस्तु' कथं प्रत्याख्यानमत आह— **यथोत्तरमिति।** एतच्च "धिन्विकृण्व्योर च" [(पा०सू० ३।१।८०) इतिसूत्रे **भाष्ये** (२)ध्वनितम्। एवञ्च वृत्तिकृदुक्तार्थकं नेदम्। तस्मादुपसर्जनप्रतिषेधानुवादकम्। **यद्वा,** वार्त्तिककृता तस्य कृतत्वात् सूत्रकृतेदमारब्धम्। सञ्ज्ञाया अन्वर्थत्वमपि भाष्यकृदूहितमेव न सूत्रकृदूहितमिति "विभाषा दिक्" (पा०सू० १।१।२८) इति सूत्रे (३)**कैयटे** स्पष्टम्। सूत्रे सप्तमीनिर्देशः (४)प्रथमार्थ एव। अत एव वृत्तिकृदुक्तः प्रक्रियावाक्ये निषेध इत्यर्थो **भाष्यकृता** बहुव्रीहिपदस्य तदर्थवाक्यस्थपदलक्षणया साधितः। अन्यथा मूलोक्तरीत्या सिद्धे तादृशलक्षणाप्रयासो व्यर्थः स्यादिति तत्त्वम्।

---

भवत् अम्' इत्यलौकिकविग्रहवाक्ये अकज् भवति। ननु अति भवत् अम् इत्यस्यां दशायामकचो निमित्तस्य सर्वनामत्वस्य समासोत्तरं वक्ष्यमाणतया अकृतव्यूहपरिभाषया पूर्वमप्यकच् न प्रवर्तेतेत्यत आह-(१)**अकृतेति।** (२)**ध्वनितमिति।** तत्र हि लोपविधानेऽपि "न धातुलोप" (पा०सू० १।१।४) इति सूत्रेण 'धिनोति' इत्यादौ गुणनिषेधे सिद्धेऽकारादेशविधानं किमर्थमित्याशङ्क्य तत्प्रत्याख्यानपक्षे स्वनिबद्धावाय तद्विधानमित्युक्तम्। यदि पूर्वमुनिरुत्तरमुन्यभिप्रेतं न जानीयात्तर्हि प्रत्याख्यानस्य भाष्यकृत्कृतत्वेन तत्र पक्षे तत्सिद्ध्यर्थं सूत्रकारकृतमकारादेशविधानमसङ्गतं स्यादिति निरुक्तं ध्वन्यते। (३)**कैयटे स्पष्टमिति।** अत्रारुचिबीजन्तु महर्षीणां सर्वज्ञत्वभङ्गः। अतोऽस्मिन् शास्त्रे उत्तरमुनितात्पर्यानुसारेणैव पूर्वमुनेस्तात्पर्यमवधारणीयमिति बोध्यम्। (४)**प्रथमार्थ एवेति।** वस्तुतस्तु वाचकत्वं सप्तम्यर्थं इत्युक्ते बहुव्रीहौ वाचकतासम्बन्धेन सर्वनामपदं न तिष्ठतीति "न बहुव्रीहौ" (पा०सू०

**तदनुगुणानामेवेति ।** प्राधान्येनोपस्थितिविषयप्रसिद्धस्वीयसर्वार्थवाचकत्वसमानाधिकरणसर्वनामपदवत्त्वेन (१)बोधकमहासञ्ज्ञया सर्वार्थोपस्थापकसर्वादीनामनुकरणावश्यकत्वेनेतरेषामनुकरणे मानाभावः । नामपदस्वारस्येन प्राधान्येनेत्यस्य लाभः । उपसर्जनं हि–(२)इतरविशेषणतयैवोपस्थापकमिति तेन तद्व्यावृत्तिः । पूर्वादिसङ्ग्रहाय स्वीयसर्वार्थेति । सञ्ज्ञाव्यावृत्तये "अभिव्यक्त" इतिन्यायमूलकं प्रसिद्धेतीति भावः ।

सर्वादिसूत्रस्य चायमर्थः–सर्वादीनि तदन्तानि चोक्तसर्वार्थवाचकत्वसमानाधिकरणसर्वनामपदवन्तीति । तत्र प्राप्ताप्राप्तविवेकन्यायेन सर्वनामपदवत्त्वांशे एव विधिः, सर्वार्थवाचकत्वस्य लोकतः सिद्धेः । एतेनान्वर्थसंज्ञोपस्थितसर्वार्थवाचकस्य विशेष्यतया सर्वादीनीत्यस्य तद्विशेषणत्वात्तदन्तविधिरित्यपास्तम्, एकपदोपस्थाप्ययोरर्थयोः परस्परमुद्देश्यविधेयभावेनान्वयस्याव्युत्पन्नत्वात्, रूढ्यर्थयोगार्थयोरन्यतरवियोगेनान्यत्रान्वयायोगाच्च । तदन्ते सर्वार्थवाचकत्वं त्ववयवद्वारा बोद्धव्यम् । एतेन तदाक्षिप्तस्य विशेष्यतेत्यपास्तम्, तद्विनाऽनुपपत्त्यभावेनाक्षेपायोगादाक्षिप्तस्य शाब्देऽन्वये मानाभावाच्च ।

**केचित्तु** आवृत्त्या एकस्योद्देश्यताऽपरस्य विधेयतेति वदन्ति । परन्त्वाद्यः पक्ष (३)इतो लघुरिति बोद्धव्यम् । **सन्निवेशादिति ।** तदनुमानादित्यर्थः । अत्रोपसर्जनत्वमि(४)तरविशेषणत्वेनार्थोपस्थापकत्वम् ।

---

१।१।२९) इत्यस्यार्थ इति यथाश्रुतमपि सम्यक् । (१)**बोधकमहासंज्ञयेति ।** महासंज्ञालब्धेऽर्थे प्राधान्येनोपस्थितिविषयेतिनिवेशादुपसर्जनव्यावृत्तिः । प्रसिद्धेति निवेशात् संज्ञाव्यावृत्तिः । स्वीयसर्वार्थेतिनिवेशात् सर्वादिप्रवृत्तिनिमित्तेतररूपेण सर्वार्थवाचकत्वस्याभावेऽपि स्वीयप्रवृत्तिनिमित्तपुरस्कारेण सर्वार्थवाचकत्वमव्याहतमिति बोध्यते ।

(२)**इतरविशेषणतयैवोपस्थापकमिति ।** पदार्थान्तरनिष्ठविशेष्यतानिरूपितप्रकारतासम्बन्धेनोपस्थापकत्वमुपसर्जनत्वमिति भावः । (३)**इतो लघुरिति ।** सर्वाद्यन्तानि शब्दस्वरूपाणि प्राधान्येनोपस्थितिविषयप्रसिद्धस्वीयसर्वार्थवाचकत्वविशिष्टसर्वनामपदवन्तीति प्रथमकल्पे एकमेव वाक्यमितिलाघवम् । सर्वाद्यन्तानि प्रसिद्धस्वीयसर्वार्थवाचकानि, तानि च सर्वनामपदवन्तीति द्वितीयकल्पे वाक्यद्वयमिति गौरवम् ।

(४)**इतरविशेषणत्वेनार्थोपस्थापकत्वमिति ।** पदार्थान्तरनिष्ठविशेष्यता-

"तदोः सः" (पा०सू० ७।२।१०६) इतिसूत्रे अदस एव दस्य नान्यस्ये-ति (१)नियमे "द्रीयतेरप्रत्यये द्र इति प्राप्नोति, स्व इति चेष्यते; यथालक्षणमप्रयुक्ते" इति **भाष्यं** तु प्रकृतसूत्रनञ्सूत्रादिस्थानेक**भाष्यविरोधे**-(२)कदेश्युक्तिरिति न तद्विरोधः।

**तृतीयासमासे** (पा०सू० १।१।३०)। "द्वन्द्वे च" (पा०सू० १।१।३१) इतिसूत्रस्थाकरोक्तरीत्या "न बहुव्रीहौ" (पा०सू० १।१।२९) इतिसूत्रस्थाकररीत्या च (३)प्रथमार्थे सप्तमी। अयमपि। समासस्यैव निं-नावयवानाम्।

---

निरूपितोपस्थितीयप्रकारताप्रयोजकत्वमुपसर्जनत्वमिति यावत्। **अन्ये तु** पदान्तरा-निष्ठविशेष्यतानिरूपितोपस्थितीयप्रकारताप्रयोजकत्वमुपसर्जनत्वम्। अत एव "द्रीय-तेरप्रत्यये द्र इति प्राप्नोति स्व इति चेष्यते" इति **भाष्यं** सङ्गच्छते। अन्यथा उप-र्जनत्वासत्वाप्राप्त्या तदसङ्गतिः स्पष्टैव। न च "यथालक्षणमप्रयुक्ते" इत्यत्राऽलक्षणे-तिच्छेदः, लक्षणपदं लक्षणप्रवृत्तिपरमुपचारात्, तथा चाप्रयुक्ते लक्षणप्रवृत्त्यभावयोग्ये-त्यर्थ इति एतस्यानभिधानमिति वाच्यम्, प्रवृत्तौ लक्षणास्वीकारे गौरवात्, अल-क्षणमितिच्छेदे मानाभावाच्च, पदार्थानतिवृत्तावव्ययीभावं स्वीकृत्य अप्रयुक्तेऽपि लक्षणमनतिक्रम्य प्रयोगः कर्तव्य इत्यर्थस्यैव 'यथालक्षणमप्रयुक्ते' इति भाष्यस्य न्या-य्यत्वादित्याहुः।

**परे तु** सर्वादिविशिष्टत्वमुपसर्जनत्वम्। वैशिष्ट्यञ्च-स्वान्तपर्याप्तशक्तिनिरूपित-निष्ठविशेष्यतानिरूपितोपस्थितीयप्रकारताप्रयोजकत्वसम्बन्धेन। अत एव 'सर्वेषामुप-' 'परस्मैपदम्' 'अतिभवकान्' 'सर्वस्मिन्नुशयः' इत्यादिषु सुट्स्मायादयः सिद्ध्यन्ति। अन्यथा पूर्वोक्तलक्षणद्वयस्यापि सर्वादिशब्देषु सत्त्वेनोपसर्जनत्वात्सुडादयो न स्युः। न च "द्रीयतेरप्रत्यये द्र इति प्राप्नोति, स्व इति चेष्यते" इति भाष्यविरोधो निरुक्तो-पसर्जनत्वस्य सत्त्वादिति वाच्यम्, स्वावधिकपूर्वपदप्रयोज्यविशेष्यतानिरूपितोप-स्थितीयप्रकारताप्रयोजकतापर्याप्त्यधिकरणत्वसम्बन्धेन सर्वादिविशिष्टत्वमुपसर्जनत्व-स्वीकारादित्याहुः।

**(१)नियमे इति।** "तदोः सः सौ" (पा०सू० ७।२।१०६) इत्यत्रानन्त्यवि-त्यस्य खण्डनाय कृतेन 'अदसः' इति योगविभागेन 'दस्य सत्वं भवति चेददस एव' इति नियमे इत्यर्थः। **(२)एकदेश्युक्तिरिति।** चिन्त्यमिदम्, पूर्वोक्तदिशा सिद्धा-न्त्युक्तित्वस्य समर्थयितुं शक्यत्वात्। **(३)प्रथमार्थे सप्तमीति।** वस्तुतस्तु वाचक-सप्तम्यर्थं स्वीकृत्य वाचकतासम्बन्धेन तृतीयासमासे तृतीयासमासार्थवाक्ये न सर्वना-मपदं पाणिनिसङ्केतसम्बन्धेन न तिष्ठतीत्यर्थस्वीकारेण सामञ्जस्यात्, प्रथमान्ते

**समुदायस्येति ।**

अकच्स्वरौ तु कर्त्तव्यौ (१)प्रत्यङ्गं (२)मुक्तसंशयम् ।

इति **भाष्योक्त्या** एतत्प्रकरणविषयस्मृत्या एतत्प्रकरणस्थसप्तमीनिर्देशानां (३)प्रथमार्थकत्वमिति तस्यावयवसञ्ज्ञानिषेधकत्वाभाव उचितः। किञ्चावयवमात्रस्य निषेधे 'वर्णाश्रमेतराणाम्' इत्यत्र सर्वार्थवाचकसर्वाद्यन्तत्वेन समुदायसञ्ज्ञायां (४)सुडापत्तिः । तस्य सञ्ज्ञानिषेधेऽपि सर्वार्थवाचकसर्वादित्वानपायात् । अवयवस्य, व्यपदेशिवद्भावेन समुदायस्य च द्वन्द्वे विद्यमानत्वेन निषेधे तु अवयवस्य निषेधे फलाभावः । न च त्वच्छब्दस्य तान्तत्वे काकचोर्विशेषेण फलम्, द्वन्द्वावयवमात्रे सुन्दरादिविशेषणान्वयाभाववत् (५)कुत्सादिविवक्षाया अभावात्, समुदाये तद्विवक्षायां समुदायोत्तरप्रत्ययेनावयवगतकुत्सादेरपि बोधेनोक्तार्थत्वादवयवेभ्यः पृथक् तदनुत्पत्तेः । अन्यथा तव प्रत्येकं कप्रत्ययोत्पत्त्यापत्तिः । अत एवोक्तं **भाष्ये** 'अकज् हि न भवति' इति "विभाषा जसि" (पा०सू० १।१।३२) इति सूत्रे । समुदायकुत्साविवक्षायामिति तदर्थः । (६)कृताकचा समासस्तु भवत्येव । तत्र सर्वार्थत्वादनेन विकल्पो भवत्येव । (७)'त्वदधरमधुरमधूनि

---

विपरिणामो वृथेति बोध्यम् । **(१)प्रत्यङ्गमिति ।** अन्तरङ्गमित्यर्थः । **(२)मुक्तसंशयमिति ।** क्रियाविशेषणमेतत् । निःसंशयमन्तरङ्गत्वात् समासात्प्रागेव अकच्स्वरौ कर्तव्यावित्यर्थः । **(३)प्रथमार्थकत्वमिति ।** इदमपि चिन्त्यमेवोक्तयुक्तेः । **(४)सुडापत्तिरिति । परे** तु "न बहुव्रीहौ" (पा०सू० १।१।२९) "तृतीयासमासे" (पा०सू० १।१।३०) "द्वन्द्वे च" (पा०सू० १।१।३१) इति निषेधैस्तद्घटकानि सर्वादीनि न भवन्तीति सर्वादित्वमेव निषिध्यते, न सर्वनामसंज्ञा । तथाच 'वर्णाश्रमेतराणाम्' इत्यत्र इतरशब्दस्य सर्वादित्वनिषेधे तदन्तस्य सर्वनामसंज्ञाया दूरापास्तत्वेन सुटोऽप्रवृत्तिः । एवञ्च यथाश्रुतसप्तम्यः समीचीना एव घटकत्वस्य सप्तम्यर्थत्वे क्षतिविरहात् । न चावयवस्य सर्वादित्वनिषेधे सर्वनामत्वाभावादकच् न स्यादिति वाच्यम्,

अकच्स्वरौ तु कर्त्तव्यौ प्रत्यङ्गं मुक्तसंशयम् ।

इति **भाष्येण** समासात्प्रागेव अकच्प्रवृत्तेरित्याहुः । **(५)कुत्सादिविवक्षाया अभावादिति ।** वृत्त्युत्तरामिति शेषः । वृत्तेः प्राक् कुत्सादिविवक्षायां तु अन्तरङ्गत्वादकच् भवत्येवेति बोध्यम् । तदेतद् ध्वनयन्नाह—**(६)कृताकचा समासस्त्वति ।** **(७)त्वदधरमधुरेति ।** **अन्ये** तु राधिकाऽत्यन्तविरहोत्कलिततया स्वाधरे

पिबन्तम्' इति **जयदेव**प्रयोगबलेनान्यार्थकत्वच्छब्दस्य सत्त्वेऽपि तस्य सर्वनामत्वे मानाभावात्, बहुसम्मतत्वाच्च। एतेन (१)'न बहुव्रीहाविति-दस्यापि द्वन्द्वे चिकीर्षिते इत्यर्थः' इत्यपास्तम्, फलाभावात्। जसाश्रये शीभावे एव विकल्पविधायकस्य "विभाषा जसि" (पा०सू० १।१।३२) इत्यस्यासङ्गतेश्चेति भावः। उद्भूतावयवभेदसमूहस्य द्वन्द्वे विशेष्यतयोपस-र्जने सञ्ज्ञाया अप्राप्त्या "द्वन्द्वे च" (पा०सू० १।१।३१) इत्यपि "न बहुव्रीहौ" (पा०सू० १।१।२९) इतिवदिति तत्त्वम्। अत एव "गोस्त्रियोः" (पा० सू० १।२।४८) इति सूत्रे 'कुक्कुटमयूर्यौ' इत्यादौ ह्रस्ववारणाय (२)'द्वन्द्वे न' इति वचनमारब्धमिति दिक्।

**नाकजिति**। समुदायनिष्ठकुत्साबोधकोऽकज् नेत्यर्थः।

**प्रथमचरम** (पा०सू० १।१।३३)। अत्र सूत्रे 'न' इति न सम्बध्यते; प्रथमादिष्वसम्भवात्। 'जसि' इत्यनुवृत्तेरर्थाधिकारादयमपि शीभावे एव विकल्पस्तदाह—**जसः कार्यं प्रतीति। तयः** "संख्याया अवयवे तयप्" (पा०सू० ५।२।४२) इति तदन्ता इत्यत्र (३)हेतुरुक्तः।

---

कृष्णाधरत्वभ्रमेण मधुपानं कुर्वतीति बोधयितुं त्वदधरमधुरेत्यत्र त्वच्छब्दो युष्मच्छब्द एवेत्याहुः। (१)**न बहुव्रीहाविति**। अयम्भावः—"चार्थे द्वन्द्वः" (पा०सू० २।२।२९) इत्यनेन इतरेतरयोगसमाहारयोर्द्वन्द्वो विधीयते। तत्र घटपटौ घटपटमित्युभयत्रापि घटपटोभयप्रकारकसमुदायविशेष्यकबोधस्यैव जननात् परस्परान्वयोपपत्तये घटत्वाव-च्छिन्नप्रकारतानिरूपिता या पटनिष्ठा समुदायत्वावच्छिन्ना विशेष्यता तादृशविशेष्य-तात्वावच्छिन्ना या पटत्वावच्छिन्नप्रकारतानिरूपितसमुदायत्वावच्छिन्ना घटनिष्ठा विशे-ष्यता तादृशविशेष्यताकबोधस्यौचित्येन समुदायत्वावच्छिन्नविशेष्यतानिरूपितोपसर्जनी-तीयप्रकारताप्रयोजकत्वस्य 'वर्णाश्रमेतरे' 'वर्णाश्रमेतराः' इत्यादावितरशब्दे सत्त्वेन निरुक्तोपसर्जनत्वस्य सत्त्वात् द्वन्द्वघटकानामुपसर्जनत्वादेव पाठात्पर्युदासे सिद्धे "द्वन्द्वे च" (पा०सू० १।१।३१) इति सूत्रमपि न बहुव्रीहावितिवन्न कर्तव्यमेव। एवञ्च द्वन्द्व-स्थले अवयवगतसंख्या यदा विवक्ष्यते तदा इतरेतरयोगः, समुदायगतं समुदायगतं वा यत्रैकत्वं विवक्ष्यते तदा समाहारद्वन्द्वः, उभयत्रापि द्वन्द्वविषये समुदायवि-शेष्यकावयवप्रकारकबोध इति सुधियो विभावयन्तु। एतत्सर्वं प्रमाणयन्नाह-(२)**द्वन्द्वे नेति वचनमारब्धमिति**।

(३)**हेतुरुक्त इति**। केवलतयस्य सर्वनामसंज्ञायामपि "जसः शी" (पा०सू०

द्वितीयतृतीयौ "द्वेस्तीयः" (पा०सू० ५।२।५४) "त्रेः सम्प्रसारणं च" (पा०सू० ५।२।५५) इति साधू । **अर्थवादिति** । (१)प्रतिपदोक्तस्येत्यपि बोध्यम् । तेनान्नन्ते आद्युदात्तस्य 'द्वितीयाय भागाय' इत्येव, अनभावे तु स्मै भवत्येव ।

**जराया** (पा०सू० ७।२।१०१) । "अष्टन" (पा०सू० ७।२।८४) इत्यतो विभक्ताविति, "अचि र" (पा०सू० ७।२।१००) इत्यतः अचीत्यनुवर्त्तते, तदादिविधिश्चेत्याह—**अजादाविति** । 'जरसौ' इत्यादौ तु व्यपदेशिवद्भावेन । विभक्तौ किम् ? जराया इदं (२)जारम् । प्रतिपत्तिलाघवाय जराया (३)असुङ् न कृतः । **पदाङ्गाधिकारे इति** । पदमङ्गं

---

७।१।१७) इत्यत्र विहितविशेषणस्य सत्त्वेन फलाभावादिति भावः । (१)**प्रतिपदोक्तस्येत्यपीति** । 'द्वितीयाय भागाय' इत्यादौ 'पूरणाद्भागे तीयादन्" (पा०सू० ५।३।४८) इत्यनि तस्य तीयप्रत्ययार्थेनैवार्थवत्त्वात्तत्रार्थवद्ग्रहणपरिभाषया वारणं न भवतीति लक्षणप्रतिपदोक्तपरिभाषाऽवश्यं शरणीकरणीयेति तथैव परिभाषया 'पटुजातीयाय' इत्यादावपि वारणं भवतीति भावः । लाक्षणिकभिन्नत्वं प्रतिपदोक्तत्वमितिनिष्कर्षे तु अर्थवत्परिभाषासञ्चार आवश्यक इति बोध्यम् ॥

(२)**जारमिति** । न च शरदादौ 'जराया जरस् च' इत्यन्तर्गणसूत्रस्य वैयर्थ्यापत्तेन 'तद्धिते चेत्समासान्त एव' इतिनियमेनैव 'जारम्' इत्यादौ दोषवारणाद्विभक्ताविति व्यर्थमिति वाच्यम्, जराशब्दात् क्यजन्तात्क्विपि "क्याचि च" (पा०सू० ७।४।३३) इतीत्वे अल्लोपयलोपयोः कृतयोः जरीत्यादौ अल्लोपस्य "अचः परस्मिन्" (पा०सू० १।१।५७) इति स्थानिवद्भावेन अच्परकत्वाद् जरसादेशापत्तेः, जराशब्दादाचारक्विबन्तात्तव्यदादौ इटि आतो लोपं बाधित्वा परत्वाज्जरसादेशापत्तेश्च । वस्तुतस्तु अन्तर्गणसूत्रस्य नित्यार्थतया चारितार्थ्यात् न नियामकत्वसम्भव इति बोध्यम् ।

(३)**असुङ् न कृत इति** । वस्तुतस्तु द्वितीयान्तजराशब्दस्य पदद्वित्वे अत्यादिशब्देन समासे तत औविभक्तौ अतिजराजरा औ इति स्थिते स्थानिवद्भावेन जराशब्दत्वाज्जरसि 'अतिजरसौ' इति रूपं भवति, असुङ्पक्षे तु 'अतिजराजरसौ' इति फलभेदात् तथा न्यासः कर्तुं न शक्यते इति बोध्यम् । द्वित्वस्य पदस्थानिकत्वं च 'पौनःपुनिकः' इत्यादौ प्रातिपदिकत्वसिद्ध्या ठगादिसिद्ध्यर्थमिति "सर्वस्य द्वे" (पा०सू० ८।१।१) इतिसूत्रे शेखरे एव स्पष्टम् । यत्तु जराशब्दात् ण्यन्तात् क्विपि टिलोपे तस्मादौविभक्तौ जर् औ इति स्थिते असुङ्पक्षे 'जसौ' इति, आदेशकल्पे 'जरसौ' इति

च (१)विशेष्यं विशेषणेन तदन्तविधिरिति भावः। पदशब्देनोत्तरपदाधि-कारः केवलपदाधिकारश्च गृह्यते इति "येन विधिः" (पा०सू० १।१।७२) इत्यत्राकरे स्पष्टम्। **निर्दिश्यमानस्येति**। "षष्ठी स्थानेयोगा" (पा०सू० १।१।४९) इतिसूत्रमावर्त्तते, आवृत्तस्य चायमर्थः–(२)षष्ठ्यन्त-मुच्चार्यमाणमेव स्थानेन युज्यते न प्रतीयमानमिति, तेनेदं सिद्धमिति भावः।

नन्वयं जरशब्दो न जराशब्दोऽत आह—**एकदेशेति**। स्थानि-वत्सूत्रेण (३)इति भावः, जरा इत्यक्तपरिमाणस्य ग्रहात्। अनेन स्थानिवु-

---

फलभेद इति; तन्न, णिलोपस्य स्थानिवद्भावेन जरसादेशस्यैवाप्राप्तेः। एतेन जरा-अत्तीति जरात्, तस्मात् ण्यन्तात् क्विपि निरुक्तादिशा फलभेदादसुङ् न कर्तुं शक्य इति परास्तम्, णिलोपस्थानिवत्त्वस्य दुर्वारत्वात् जरात् इत्यस्य पूर्वस्थानिभूतजराः-वद्वावयवेतरतकारघटितत्वेन तत्र पूर्वान्तवद्भावेन जराशब्दत्वस्य दुर्लभतया तदर्थे जर इत्यत्र सुतरां दुर्लभत्वाच्च। जराशब्दस्य ऋशब्देन समासे एकादेशे जरशब्दः जसादिविभक्तौ फलभेदापादनं तु अतिस्थूलम्, तत्र "अतो गुणे" (पा०सू० ६।१।९७) इति पररूपेण फलभेदाभावात्।

(१)**विशेष्यमिति**। विशेष्यमेवेत्यर्थः। एवञ्च पदाधिकारेऽङ्गाधिकारे उत्तरप-दाधिकारे चासति प्रमाणान्तरे पदस्याङ्गस्योत्तरपदस्य च विशेष्यत्वमेवेतीयं परिभा-बोधयति। एतेन एतत्परिभाषावत् "तस्मिन्" (पा०सू० १।१।६६) इत्यादिपरिभा-षालभ्यार्थमादाय 'अव्यवहितपूर्वस्य कार्याणि भवन्ति' इत्यादिपरिभाषाः सिद्ध्ये-रित्यपास्तम्, पदाङ्गाधिकारयोरसति मानान्तरे पदस्याङ्गस्य च विशेष्यत्वमेवेतिबोधक-परिभाषायाः सार्थक्यात्। अन्यथा "गर्गादिभ्यो यञ्" (पा०सू० ४।१।१०५) इत्या-प्रातिपदिकादित्यस्य विशेषणत्ववत् अङ्गस्य पदस्य च कदाचिद्विशेषणत्वं स्यात् ततश्च अतिजरसौ इत्यादौ जराशब्दस्याजादिविभक्तिनिरूपिताङ्गत्वाभावाज्जरसादे-नापत्तिरिति भावः।

(२)**षष्ठ्यन्तमिति**। षष्ठी अन्ते यस्य तत् षष्ठ्यन्तम्। अन्तशब्दःसमीपवाची षष्ठीप्रकृतिरित्यर्थः, यत इति सूत्रे शेषं कृत्वा यतः षष्ठी सा स्थानपदार्थानुयोगिक-म्बन्धप्रतियोगिनी भवतीति सूत्रार्थेन तथैव लाभात्। तत्र निर्दिश्यमानत्वं षष्ठीप्र-तिविशिष्टप्रकारताश्रयत्वम्। षष्ठीप्रकृतिवैशिष्ट्यञ्च स्वजन्यशाब्दबोधीयत्वं, स्वपर्या-प्रयोजकतानिरूपितप्रयोज्यतावत्त्वं, स्वपर्याप्तप्रयोजकतानिरूपितप्रयोज्यतावद्विशेष्य-निरूपितत्वमेतत्त्रितयसम्बन्धेन। विस्तरस्तु परिभाषेन्दुटिप्पणे द्रष्टव्य इति दिक्।

(३)**इति भाव इति**। संख्यात्वपरिमाणत्वैतदन्यतरव्याप्यधर्मप्रकारकसंशयसामान्य-निष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकनिष्ठावच्छेदकपरिमाणत्वसमनियत

द्धयैव कार्यप्रवृत्त्या "निर्दिश्यमानस्य" (प०भा०) इतिपरिभाषाबाधाभावो बोद्धव्यः । "येन विधिस्तदन्तस्य" इत्यस्य तु सञ्ज्ञासूत्रत्वात् सूत्रस्थजराशब्दो जराशब्दान्तपर इति तदन्ते आदेशप्रवृत्तौ परिभाषाविरोधः स्पष्ट एवेति दिक् । **निर्जरसेति** । अत्र "स्वादिषु" (पा०सू० १।४।१७) इति पदत्वेन रुत्वं न, भत्वेन पदत्वबाधात् । सूत्रेषूत्तरस्थस्य पूर्वत्रापकर्षवदग्रे लेखो वैचित्र्यायेति बोद्धव्यम् । **पक्षे इति** । जरसादेशाभावपक्षे इति भावः । इदमर्वाचामनुरोधेन ।

**परे तु** 'विभक्त्यादेशेभ्यः परत्वाज्जरस्' इत्यसङ्गतम् , विभक्त्यादेशानामेव पूर्वविप्रतिषेधेनेष्टत्वात् । अत एव "जरायाः" (पा०सू० ७।२।१०१) इति सूत्रे 'अजरांसि' इत्यत्र 'नुम्जरसोः प्राप्तयोर्विप्रतिषेधेन जरस्' इति **भाष्योक्तं** सङ्गच्छते । अन्यथा त्वद्रीत्या शिभावात्पूर्वमेव जरसः प्रवृत्तौ तदा सर्वनामस्थानत्वाभावाद् नुमा विप्रतिषेधविचारासङ्गतिः स्पष्टैव । मम तु पूर्वविप्रतिषेधेन जरसः पूर्वं शिभावे प्रवृत्ते तत्सङ्गतिः स्पष्टैव । अत एव "टाङसि" (पा०सू० ७।१।१२) इतिसूत्रे **कैयटेनोक्तं**— "**भाष्यकारः** सन्निपातपरिभाषया जरसादेशमनभ्युपयन्नतिजरेणातिजरादिति भाव्यं न त्वतिजरसिनाऽतिजरसादिति गौरवमुद्भावितवान्" इति । भवद्रीत्या पूर्वं जरसादेशे इनाद्यप्राप्त्या, तदभावपक्षे च तस्याप्राप्त्या 'सन्निपातपरिभाषया जरसादेशमनभ्युपयन्' इत्यस्यासङ्गतिः स्पष्टैव ।

**वृत्तिकारोऽ**प्याह—"अतिजरसिन अतिजरसादिति **केचिदि**च्छन्ति, यथा तु **भाष्यं** तथा नैतदिष्यते इति लक्ष्यते" इति । नपुंसकद्वितीयैकवचनेऽपि लुग्बाधेन "अतोऽम्" (पा०सू० ७।१।२४) इत्यमि सन्निपातपरिभाषया जरसभावः । न च तत्र न अकारान्तसन्निपातकृत एवाजादिः, किन्तु तदभावेऽपि । एषा तु सन्निपातलक्षणविधिं विना न यस्य प्रवृत्तियोग्यता तत्रैवेति अत्र भवत्येव जरसिति वाच्यम् , मानाभावात् "टाङसि" (पा०सू० ७।१।१२) इतिसूत्रस्थेनातिजरेणेत्येतद्विषय-

धर्मनिमित्तककार्यस्यैकदेशविकृतन्यायेनातिदेष्टुमशक्यत्वेन निरुक्तात्परिमाणचतुष्टसमनियतजराशब्दत्वस्यैकदेशविकृतन्यायेनाऽऽनेतुमशक्यत्वादिति ।

**कैयटेन** विरोधाच्च । ध्वनितञ्चेदं "जरायाः" (पा०सू० ७।२।१०१) इति सूत्रे **भाष्ये** । तत्र हि पूर्वपक्षिणा 'अतिजरसं पश्येत्यत्र लुक् कस्मान्न' इति पृष्टे, परेण 'प्रथमैकवचनेऽप्यातिजरसं तिष्ठतीत्यत्रापि कुतो लुङ् न शङ्क्यते' इति पृष्टे, पूर्वपक्षिणा 'प्रथमैकवचनेऽम्भावोत्तरमेव जरस्, तत्र जरसि कृते सन्निपातपरिभाषया न लुक्' इति विशेष उक्तः। यद्वा 'अम्भावे कृते सन्निपातपरिभाषया न जरस्' इतिपाठभेदेन विशेष उक्तः। ततः परेण 'यद्येवम् अतिजरसम् अतिजरसैरित्यत्र न प्राप्नोति जरस्' इति-द्वितीयैकवचनादौ शङ्किते; सिद्धान्तिना—इष्टमेवैतदतिजरमतिजरैरिति भवि-तव्यमिति । अत्र विशेषोपपादनेऽन्त्यपाठ एव युक्तः । अन्यथा लुकः प्रथमैकवचने तेनाभावे उपपादिते द्वितीयैकवचनेऽपि तेन न्यायेन लुको-ऽप्राप्तौ विशेषोक्तिरसङ्गतेति बोद्धव्यम् । एवं स्त्रियां जरसादेशे कृते "याडापः" (पा०सू० ७।३।११३) इत्यादीनामाकारप्रश्लेषेण वारणं विफलमेव तेषां परत्वात् । अतिखट्वशब्दे तेषां वारणाय तु प्रश्लेष आवश्यक इत्याहुः ।

**परे तु** जरसादेशाद् विभक्तिसम्बन्धिकार्यमात्रं पूर्वविप्रतिषेधेन। तेन 'जराणाम्' इत्यादावामि पूर्वं नुटि जरसोऽभाव एव । एवं च "ह्रस्व-नद्यापः" (पा०सू० ७।१।५४) इत्यत्राऽऽकारप्रश्लेषे न फलं, नापि मानम् । अत एव 'ङ्याब्ग्रहणेऽदीर्घः' इतिवज्जरसादेशस्य स्थानिवत्त्व-प्रतिषेधो वार्तिककृता नाऽऽरब्ध (१)इत्याहुः ।

---

(१)**इत्याहुरिति** । वस्तुतस्तु विभक्तिसम्बन्धिकार्यमात्रात्प्रागेव जरस् । यत्र जरसादेशस्य परत्वं तत्र "विप्रतिषेधे परम्" (पा०सू० १।४।२) इति जरस् । यथा 'अतिजरांसि' । यत्र याडादयः पराः तत्रापि पूर्वविप्रतिषेधेन जरस् । यथा 'जरसे' इत्यादौ याटम्बाधित्वा जरस् । अत एव "जरसोऽवकाशः 'जरसा' 'जरसे' इति" **भाष्यं** सङ्गच्छते । अन्यथा "याडापः" (पा०सू० ७।३।११३) इत्यनेन याटि अजादि-विभक्तिपरकत्वाभावेन जरसोऽप्राप्त्या तदसङ्गतिः स्पष्टैव ।

अत एव "अथेह लुक् कस्मान्न भवति अतिजरसम्पश्येति ? किं पुनः कारणं द्वितीयैकवचनमेवोदाह्रियते न पुनः प्रथमैकवचनमपि अतिजरसं तिष्ठतीति ? अस्त्यत्र विशेषः, नात्राकृतेऽम्भावे जरस्भावः प्राप्नोति । किं कारणम् ? अचीत्युच्यते" इति भाष्यं तदप्राप्तियोग्ये चारितार्थ्याभावविशिष्ट कृते नाचितार्थ्याभावविशिष्टा याऽपवाद

**परिभाषाया अनित्यत्वमिति ।** इनातोरिकारदीर्घोच्चारणम्, एसि कर्त्तव्ये ऐस्करणञ्च तदनित्यत्वे मूलमिति तदभिमानः । **षष्ठ्येक-**

---

शास्त्रप्रवृत्त्यनन्तरोत्सर्गशास्त्रप्रवृत्तिसम्भावनाप्रयोज्यवैयर्थ्यसम्भावना तादृशसम्भावना-रूपबाधकत्ववीजवता "अतोऽम्" (पा०सू० ७।१।२४) इति शास्त्रेण "स्वमोर्नपुंसकात्" (पा०सू० ७।१।२३) इतिसूत्रे स्वप्रवृत्तियोग्यातिरिक्तत्वेन स्वविधेयघटितातिरिक्तत्वेन च सङ्कोचाद् 'अतिजरसं तिष्ठति' इत्यत्र प्रथमैकवचनजरसादेशे कृते अम्-घटितातिरिक्तस्वमोरभावेन लुकोऽप्राप्तिरिति द्वितीयैकवचने एव लुक् कस्मान्न भवतीति शङ्कोचिता, न तु प्रथमैकवचने इति विशेषप्रदर्शकं सङ्गच्छते । अन्यथा द्वितीयैकवचनेऽपि भवद्रीत्याऽमादेशे सन्निपातपरिभाषया तत्रापि जरसोऽप्रवृत्तौ इदं भाष्यमसङ्गतं स्यात् । मम तु परत्वाज्जरसि द्वितीयैकवचने लुक्कस्मान्नेति शङ्का युज्यते ।

अग्रेऽपि 'यदा च जरस्भावः कृतः तदो लुग् न भविष्यति सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति' इति सिद्धान्तिना समाहितम् । अत एवाग्रे पूर्वपक्ष्येकदेशिना 'यद्येवमतिजरसमातजरसैरित्यत्र न प्राप्नोति । अतिजरमातिजरैरिति भवितव्यम्' इति प्रथमैकवचनतृतीयाबहुवचनयोः शङ्का कृता । ततः सिद्धान्तिना इष्टापत्तिं मत्वा 'गोनर्दीय आह–इष्टमेवैतत्संगृहीतम्भवति अतिजरमातिजरैरिति भवितव्यम् । सत्यामेतस्यां परिभाषायां सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य" इत्युक्तं सङ्गच्छते । अन्यथा विशेषोपपादन एव लुगैसोः सन्निपातपरिभाषया जरसोऽप्राप्त्या इमे शङ्कासमाधानेऽसङ्गते स्याताम् ।

न च 'नुमोऽनङ्जरसौ भवतो विप्रतिषधेन, अतिजरांसि ब्राह्मणकुलानि' इति भाष्यविरोधः । भवद्रीत्या शिभावादेव परत्वाज्जरसि नुम्जरसोर्विप्रतिषेधविचारस्यासङ्गत्यापत्तेरिति वाच्यम्, अतिजर अस् इति स्थिते परमपि जरसादेशम्बाधित्वा नित्यत्वाच्छिः कस्मान्न भवतीति शङ्काम्मनसि निधाय श्यादेशे कृतेऽपि परत्वान्नुमं बाधित्वा जरसेव भविष्यतीति जरसादेशोऽपि नित्य इति बोधयितुं तद्वार्त्तिकप्रवृत्तेः, अग्रिमभाष्येण तथैव लाभात् । एतेन यद्वाऽम्भावे कृते सन्निपातपरिभाषया न जरसिति पाठभेदेन विशेषोपपादनम्, एवं स्त्रियां जरसादेशे कृते "याडापः" (पा०सू० ७।३।११३) इत्यादीनामाकारप्रश्लेषेण वारणे विफलमेव तेषां परत्वादिति कथनं च परास्तम्, पूर्वोक्तभाष्यप्रामाण्येन पूर्वविप्रतिषेधेन जरसि याडादिवारणाय प्रश्लेषस्यावश्यकत्वात् । न च "टाङसिङसाम्" (पा०सू० ७।१।१२) इतिसूत्रस्थेन 'अतिजरेण' इत्येतद्विषयकेण कैयटेन विरोध इति वाच्यम्, अतिजर आ इतिस्थिते जरसभावपक्षे इनादौ कृते तदनन्तरं कुतो न जरसिति शङ्कां मनसि निधाय "सन्निपात" इत्यादिग्रन्थस्य प्रवृत्त्या तत्सङ्गतेः । जरसादेशस्य स्थानिवत्त्वप्रतिषेधोऽपि 'ज्याद्ग्रहणे ह्रस्वः' इति वक्तव्ये 'अदीर्घः' इत्युक्त्यैव तत्संग्रहेणाऽऽरब्ध एवेत्यन्ये ।

**वचने इति ।** एकसूत्रोपात्तत्वात्स्यादेशविषयेऽपि पूर्वविप्रतिषेध इति तद्भावः । **एतच्च भाष्येति ।** इनातोरिकारदीर्घोच्चारणप्रत्याख्यानपरभाष्येत्यर्थः, 'इष्टमेवैतत्सङ्गृहीतमतिजरमतिजरैरिति भवितव्यम्' इति "जराया" (पा०सू० ७।१।१०१) इति सूत्रस्थ**भाष्येति** चार्थ इत्यन्यत्र विस्तरः ।

**पद्दन्नो** (पा०सू० ६।१।६३) । आदेशैः (१)स्वानुरूपाः स्थानिन आक्षिप्यन्ते इत्याह—**पाददन्तेति ।** "अनुदात्तस्य चर्दुपधस्य" (पा०सू० ६।१।५९) इत्यतोऽन्यतरस्यामित्यनुवर्त्तते । अत एव तुल्यास्यसूत्रादि**भाष्ये** 'आस्ये तुल्यः' 'पादेनोपहतं' 'मासेन पूर्वाय' इत्यादिप्रयोगाः "हृदयस्य प्रियः" (पा०सू० ४।४।९५) इति सौत्रप्रयोगाश्चोपपन्ना भवन्ति । "ये च तद्धिते" (पा०सू० ६।१।६१) इतिसूत्रस्थे "वा केशेषु" (का०वा०) इतिवार्त्तिके वाग्रहणन्तु तत्र सूत्रे वाग्रहणासम्बन्धबोधकम् ।

यद्यपि निशाशब्दस्य निश्शब्दप्रकृतिकत्वेन **भागुरि**मतसिद्धया ऽऽपो वैकल्पिकत्वेन च वाक् वाचेत्युभयवन्निशिनशयोः सूत्रे निश्ग्रहणं विनाऽपि सिद्धिः, तथापि सुटि हलन्तस्यासाधुत्वबोधनायात्र ग्रहणमिति **वृत्त्यनुसारिणः ।**

**परे तु** "अनुदात्तस्य" (पा०सू० ६।१।१६१) इतिसूत्रेऽन्यतरस्यामित्यस्य स्वरितत्वं नास्ति । अत एव "शीर्षश्छन्दसि" (पा०सू ६।१।६०) इति सूत्रे 'शीर्षन्नितिप्रकृत्यन्तरं द्रष्टव्यम्, आदेशत्वे हि छन्दसि शिरःसुशब्दस्य प्रयोगो न स्यात्' इत्युक्तं **भाष्ये ।** अन्यथा विकल्पानुवृत्त्याऽऽदेशत्वेऽपि दोषाभावेन तदसङ्गतिः स्पष्टैव । "ये च तद्धिते" (पा०सू० ६।१।६१) इत्यत्र चाऽऽदेशत्वाय शिरसो ग्रहणं कर्त्तव्यमित्युक्तं, "

(१)**स्वानुरूपा इति ।** तत्त्वञ्च—स्वाबोध्यार्थबोधकत्वं, स्वघटकव्यञ्जनघटितत्वमेतदुभयसम्बन्धेन पदादिविशिष्टत्वम् । आद्यसम्बन्धदानेन आसनशब्दस्य सकारादिघटितत्वेऽपि नादेशः । द्वितीयसम्बन्धदानेन चरणशब्दस्य न पदादेश इति तत्र क्लीबत्वात् 'पन्दि' इति न । एवं रात्रिशब्दस्य न निशादेश इति 'इदमहर्निशागतम्' इत्यादौ न "रूपरात्रि" (का०वा०) इति रुत्वमिति बोध्यम् ।

केशेषु" इति च वक्तव्यमित्युक्तम् । तस्मात् शसादिविषयाणि प्रकृत्यन्तराण्येव पदादयः । एवं मांस्पृत्स्नवोऽपि । अत एव नस्पृतोः स्थानिवद्भावादाबन्तत्वमादाय 'नसां' 'पृताम्' इत्यादौ न नुडादिः । "नासिकाया नस् यत्तस्क्षुद्रेषु" (का०वा०) इतिवार्त्तिके आदेशत्वमेव, नासिकाया इत्युक्तेः । अत एव तद्विषये 'नासिकाक्षुद्रः' इत्यादि न । अत एव पदादिषु, "मांस्पृत्स्नूनामुपसंख्यानम्" इतिवार्त्तिके स्थानिनिर्देशो न कृत इत्याहुः ।

**प्रत्याहार इति ।** व्याख्यानादौटष्टकारेणेति भावः । (१)**अक्लीबस्येति ।** पर्युदासपरतयाऽप्यस्य **भाष्ये** व्याख्यानात् लघुत्वाच्चेति भावः । प्रसज्यप्रतिषेधेन व्याख्यानेऽत एव ज्ञापकात्केषांचिदसमर्थसमासानां साधुत्वं बोद्धव्यम् ।

**स्वादिषु** (पा०सू० १।४।१७) । सुरत्र प्रथमैकवचनम् । आदिशब्देन कबन्तानां ग्रहणं (२)व्याख्यानात् तदाह—**कप्प्रत्ययाव-**

---

(१)**अक्लीबस्येतीति ।** अनन्तर इति शेषः । तथा चाक्लीबस्यानन्तरः प्रत्यासत्त्याऽक्लीबप्रकृतिकश्च सुट् सर्वनामस्थानसंज्ञक इति सूत्रार्थः । स्यादेतत् , 'सुडशी' इत्येवोच्यताम् । प्रथमैकवचन अमा बाधेन 'ज्ञानम्' इत्यादौ न नुम् । न च 'वारि' इत्यत्र तदापत्तिः, "न लुमता" (पा०सू० १।१।६३) इतिनिषेधेन सर्वनामस्थानपरकत्वाभावेन नुमः प्राप्त्यभावात् । 'वारिणी' इत्यत्र नुमि "सर्वनामस्थाने च" (पा०सू० ६।४।८) इतिदीर्घस्तु न शङ्क्यः, श्याः सर्वनामस्थानसंज्ञाया अशीत्यनेन पर्युदस्तत्वात् । नापि 'कतरद्' इत्यादावद्डादेशस्य सर्वनामस्थानसंज्ञायामङ्गस्य भत्वाभावेन टिलोपानापत्तिः, डित्त्वसामर्थ्येन तत्सिद्धेः । न च अशीति पर्युदासेन 'रमे' इत्यत्र श्यादेशस्य सर्वनामस्थानत्वाभावेन भसंज्ञया "यस्य" (पा०सू० ६।४।१४८) इति लोपापत्तिरिति वाच्यम् , श्यां तस्य 'औङः श्यां प्रतिषेधः' (का०वा०) इति निषेधात् । यदि 'सर्वे' 'इत्यत्र श्यादेशस्य औङ्स्थानिकत्वाभावेन तदापत्तिरिति चेद् , वार्त्तिके औङ्ग्रहणमपि न कार्यम् , तेन न दोषः इति । न च श्यामिति स्त्रीलिङ्गनिर्देशेन स्त्रियामेव प्रवृत्तौ पुनरपि तदवस्थैव 'सर्वे' इत्यत्रापत्तिरिति वाच्यम् , विभक्तिविशेषणत्वार्थं स्त्रीलिङ्गनिर्देशेन तस्य विवक्षाया अत्राभावात् , इति चेत् ? न, द्वितीयैकवचने 'अतिजरसम्' इत्यत्र झलन्तलक्षणनुमापत्तेरिति दिक् ।

(२)**व्याख्यानादिति ।** प्रथमायामित्येव वक्तव्ये असर्वनामस्थानग्रहणेन प्रत्यासत्तिन्यायकपिञ्जलन्यायाप्रवृत्तौ व्याप्तिन्यायरूपादित्यर्थः ।

धीति। (१)तदन्तेष्वित्यर्थः।

**यचि भम्** (पा०सू० १।४।१८)। समाहारद्वन्द्वे सौत्रत्वा टच्। यचीत्यनेन स्वादेर्विशेषणात्तदादिविधिः। **असर्वनामेति**। तेन 'सुपादौ' इत्यादौ पादः पन्न। भसञ्ज्ञा पदत्वकार्यप्रतिबन्धरूपेऽर्थाके येऽपि कार्ये भवति, नपदान्तसूत्रस्थभाष्यप्रामाण्यात्।

(२)**आकडारा**(पा०सू० १।४।१)। "प्राक्कडारात्"(पा०सू०२।१।३) इति नावधिः; तत्पुरुषो द्विगुश्चेति लिङ्गात्, समावेशार्थं हि तादित्याह-

---

"स्वादिषु" (पा०सू० १।४।१७) "यचि भम्" (पा०सू० १।४।१८) इत्युभ त्रापि प्रत्ययस्य निमित्तत्वेनोपादानं यत्र तत्रापि प्रत्ययग्रहणपरिभाषया तदादिवि शेषोपस्थित्या तदादेरेव पदसंज्ञाभसंज्ञे भवत इति बोधयन्नाह-(१)तदन्तेष्वित्यर्थ इति। असर्वनामस्थानकप्रत्ययान्तस्वादप्रत्ययाव्यवहितपूर्वत्वविशिष्टं पदसंज्ञं स्या दित्याद्यर्थः।

(२)**आकडारा (पा०सू० १।४।१)**। अत्रैकपदप्रवृत्तिनिमित्तं स्वसमभिव्या हृतपदार्थसंसर्गित्वविशिष्टप्रकृत्यर्थतावच्छेदकवत्त्वरूपेण स्वसजातीयनिष्ठभेदप्रतियोगि तानवच्छेदकैकत्वं बोध्यम्। विस्तरस्तु "एकः पूर्वपरयोः" (पा०सू० ६।१।८४) इत्यत्र द्रष्टव्यः। एका संज्ञा भवतीत्यस्य इत आरभ्य "कडाराः कर्मधारये" (पा०सू० २।२।३८) इत्यतः प्राक् स्वीयोद्देश्यतावच्छेदकविशिष्टोद्देश्यतावच्छेदककसंज्ञान्त रसामानाधिकरण्याभावविशिष्टा संज्ञा भवतीत्यर्थः। स्वीयोद्देश्यतावच्छेदकविशिष्ट श्चोद्देश्यतावच्छेदकं स्वतादात्म्यम्, स्वप्रतियोगिको विधेयानुयोगिको यः संसर्गः तद श संसर्गघटकनिरूपितत्वसमसंख्याकनिरूपितत्ववान् यः संसर्गः तत्संसर्गप्रतियोगि त्वम्, एतदुभयसम्बन्धेन। अत एव 'परमदध्ना' इत्यादौ तत्पुरुषबहुव्रीह्यादिसंज्ञा भिरङ्गसंज्ञायाः, 'वैत्रम्' इत्यत्र घिलघुसंज्ञयोः, 'गार्गीबन्धुः' इत्यादौ गुरुसंज्ञाया नदी संज्ञायाः, अङ्गसंज्ञया भपदसंज्ञयोश्च समावेशः सिद्ध्यति। अन्यथा 'परमदध्ने' इत्यादौ परया तत्पुरुषसंज्ञया अङ्गसंज्ञाबाधेनानङादेशः, 'वैत्रम्' 'उभे अपि वर्णस्य' इति पक्षे निरवकाशया घिसंज्ञया लघुसंज्ञाबाधे "इगन्ताच्च लघुपूर्वात्" (पा०सू० ५।१। १३१) इत्यण्, गार्गीबन्धुः इत्यादौ निरवकाशया नदीसंज्ञया गुरुसंज्ञाबाधे "गुरोर नृतः" (पा०सू० ८।२।८६) इति प्लुतश्च न स्यात्।

लक्षणसमन्वयस्तु—यथा भसंज्ञाशास्त्रीयोद्देश्यतावच्छेदकतदादित्वस्य पदसंज्ञा शास्त्रीयोद्देश्यतावच्छेदकतदादित्वे स्वतादात्म्यस्य, स्वप्रतियोगिको यः स्वनिष्ठावच्छे दकतानिरूपितोद्देश्यतानिरूपितविषयतावत्त्वरूपो विधेयानुयोगिकः संसर्गस्तत्संसर्गघट कनिरूपितत्वसमसंख्याकनिरूपितत्ववत्संसर्गप्रतियोगित्वस्य च सत्त्वाद्बोध्यः। नचात्र

**कडारा इत्यादि ।** व्याप्त्यर्थकाऽऽङा 'आचार्थात्' इति वक्तुं युक्तम् । **एकैवेति ।** (१)संख्यावाच्येकशब्दोपादानादवधारणं सम्पद्यत इति भावः । **या परेति ।** द्वयोः सावकाशयोः परा, निरवकाशत्वे तु सैवेत्यर्थः । आभ्यामेव बाधसिद्धिस्तु न; अन्यत्र तव्यदादौ कृत्कृत्यप्रत्ययसञ्ज्ञादीनां समावेशदर्शनेन विरोधाभावाद् विप्रतिषेधाप्रवृत्तेः । लौकिकस्य तक्रकौण्डिन्यन्यायस्यापि लोके सञ्ज्ञाविषये(२)ऽदर्शनेन शास्त्रेऽपि संज्ञाविषयेऽप्रवृत्तेश्च । **तेनेति ।** अनवकाशत्वेनेत्यर्थः ।

परोदाहरणं तु 'अपादानमुत्तराणि कारकाणि बाधन्ते' इत्याद्याकरे स्पष्टम् । विरोधाद्यभावेन विप्रतिषेधसूत्राद्य(३)प्रवृत्तावपि परत्वादेरन्यत्र

---

संज्ञाशास्त्रीयोद्देश्यतावच्छेदकतदादित्ववैशिष्ट्यस्य भपदसंज्ञाशास्त्रीयोद्देश्यतावच्छेदकतदादित्वे सत्त्वात्तयोः समावेशो न स्यादिति वाच्यम्, अङ्गसंज्ञायामव्यवहितपूर्वं यत्तदादि तदेवोद्देश्यं, भपदसंज्ञयोश्च तदाद्यभिन्नं यदव्यवहितपूर्वं तदुद्देश्यमिति स्वप्रतियोगिकसंसर्गघटकनिरूपितत्वतुल्यसंख्याकनिरूपितत्ववत्संसर्गप्रतियोगित्वस्य तदादित्वयोरभावेनाव्यवहितपूर्वत्वतदादित्वयोश्च तादात्म्यस्याभावेन परस्परमुद्देश्यतावच्छेदकवैशिष्ट्यस्य उद्देश्यतावच्छेदकेऽभावेनादोषात् । एवं ययोः बाध्यबाधकभावो नेष्यते तत्र विशेष्यविशेषणभावव्यत्यासेन निरुक्तसमानोद्देश्यतावच्छेदकत्वविघटनं बोध्यम् । कारकाधिकारस्थसंज्ञानां तु न कदाचिदपि समावेशः । सर्वत्र कारकत्वस्यैवोद्देश्यतावच्छेदकत्वेन निरुक्तसमानोद्देश्यतावच्छेदककत्वस्यैव सत्त्वात् । "सिति च" (पा०सू० १।४।१६) इत्यत्र सित्त्वस्य प्रत्ययत्वव्याप्यधर्मत्वेन प्रत्ययग्रहणपरिभाषयोपस्थितस्य तदादेरित्यस्योद्देश्यत्वेन भसंज्ञायां चाव्यवहितपूर्वस्य तत्त्वेन पदसंज्ञया भसंज्ञाबाधापत्तौ 'पार्श्वम्' इत्यत्र "ओर्गुणः" (पा०सू० ६।४।१४६) इतिगुणापत्तिरिति तु न शङ्कनीयम् । "सिति च" (पा०सू० १।४।१६) इत्यत्रापि "तस्मिन्" (पा०सू० १।१।६६) इति परिभाषोपस्थितपूर्वत्वांशस्यैव विशेष्यत्वविवक्षणेन तदाद्यभिन्नाव्यवहितपूर्वत्वस्यैवोभयत्राप्युद्देश्यतावच्छेदकतया समानावधिकत्वेन भसंज्ञाबाधाक्षतेरदोषात् । सिदन्तस्य तदादेरिति तु नार्थः "संज्ञाविधौ" (प०भा०) इति निषेधात् । **(१)संख्यावाचीति ।** निरुक्तसंख्यावाचीत्यर्थः । **(२)अदर्शनेनेति ।** विरोधे हि बलीयसा दुर्बलं बाध्यते इति न्यायेन विरोधाभावेन तक्रकौण्डिन्यन्यायस्याप्रवृत्तेरिति भावः ।

**(३)अप्रवृत्तावपीति ।** चिन्त्यमिदम् । "आकडारादेका संज्ञा" (पा०सू० १।४।१) इत्यनेन निरुक्तसमानोद्देश्यतावच्छेदककसंज्ञान्तरसामानाधिकरण्याभावस्य निरुक्तसमानोद्देश्यतावच्छेदककसंज्ञायां बोधनेन विप्रतिषेधस्य सत्त्वेन विप्रतिषेधशास्त्र-

बलवत्त्वेन दृष्टतयाऽत्रापि तेन व्यवस्था । अपादानादिसञ्ज्ञानां समावेशे तु तत्कार्ययोः (१)पर्यायापत्तिर्दोषः । भपदसंज्ञयोः समावेशे तु 'राज्ञः' इत्यादौ नलोपस्यापत्तिर्बोध्या । न च 'राजन्यः' इत्यादौ "सुप्तिङन्तम्" (पा०सू० १।४।१४) इति पदत्वं दुर्वारम्, परया भसञ्ज्ञया तु न बाध्य-स्तस्या अन्तरङ्गत्वादिति वाच्यम्, (२)समानावधिकाया अन्तरङ्गाया अप-नया बाध्यसामान्यचिन्तयाऽपवादत्वेनैव बाधादित्याहुः ।

आकडारस्थसञ्ज्ञासु च यथोद्देशपक्ष एवेत्यदद्र्यङ्शब्दे निरूपयि-ष्यते । भपदसञ्ज्ञाविधावङ्गप्रकरणे भस्येत्यस्य पाठेनाङ्गमित्यनुवर्त्याङ्गं स्यात्, पदं भवति, भं भवतीत्यर्थेन ताभ्यां तस्य (३)समावेश एव न पर्याय इति बोद्ध्यम् । पुरुषसञ्ज्ञापरस्मैपदसञ्ज्ञयोरपि "णलुत्तमो वा" (पा०सू० ७।१।९१) इति ज्ञापकात्समावेशः । गुरुलघुसञ्ज्ञे वर्णस्य, नदीघिसञ्ज्ञे तदन्तस्येति भिन्नावधिकत्वात्समाविशतः । उभे अपि वर्णस्येति पक्ष आक्षे-उपलभ्यमानोऽप्येकदेशिन एव समावेशानुपपादादिति दिक् । यलोप इति । "हलि सर्वेषाम्" (पा०सू० ८।३।२२) इत्यनेनेत्यर्थः ।

**अल्लोपोऽनः** (पा०सू० ६।४।१३४) । तपरकरणं किम् ? अ-नितेः क्विपि 'आनः' इत्यादौ लोपाभावाय । अन्त्वं त्वत्रैकदेशविकृतन्या-येनेत्यन्यत्र विस्तरः । **पूर्वस्मादिति** । "अचः परस्मिन्" (पा०सू० १।१।५७) इत्यत्र 'पूर्वविधौ' इत्यस्यावृत्त्या पञ्चमीसमासाश्रयणादयमर्थो लभ्यते इति भावः । तेन (४)'प्रत्यैषिषन्' इत्यादिसिद्धिः । अन्यथा जुसः

---

प्रवृत्तौ बाधकाभावात् । (१)**पर्यायापत्तिरिति** । वस्तुतस्तु संज्ञयोरविरोधेन समा-वेशेऽपि तत्प्रयुक्तकार्ययोर्विरोधस्य सत्त्वेन 'गां दोग्धि' इत्यादौ द्वितीयाबाधेन पञ्च-म्यापत्तौ वैपरीत्यापत्तिरापादयितुं न्याय्या । (२)**समानावधिकाया इति** । समा-नावधिकत्वञ्च निरुक्तोभयसम्बन्धेन स्वीयोद्देश्यतावच्छेदकविशिष्टोद्देश्यतावच्छेद-कत्वं बोध्यम् । तेन 'ईबन्धुः' इत्यत्र गुरुनदीसंज्ञयोः परिष्कृतसमानावधिकत्वाभावे समावेशाद् "गुरोरनृतः" (पा०सू० ८।२।८६) इति प्लुतौ, "नदी बन्धुनि" (पा०सू० ६।२।१०९) इति पूर्वपदान्तोदात्तत्वञ्च सिद्ध्यति । (३)**समावेश एवेति** । विरुद्ध-समानोद्देश्यतावच्छेदकत्वस्याभावादिति भावः । एवमुत्तरत्रापि बोध्यम् ।

(४)**प्रत्यैषिषन्निति** । न च जुसः पदचरमावयवत्वेन "न पदान्त" (पा०सू०

स्यात् । अत एव "उभे अभ्यस्तम्" (पा०सू० ६।१।५) इति सूत्रे उभेग्रहणं यत्रोभे श्रूयेते तत्रैवाभ्यस्तसञ्ज्ञार्थम् 'ऐर्सन्' इत्यत्राभ्यस्तलक्षणो जुस् मा भूदित्युक्ते शपैकादेशस्य पूर्वविधाविति पञ्चमीसमासेन स्थानिवत्त्वाज्जुसोऽप्राप्तेरसति प्रयोजने उभेग्रहणं सहार्थमित्युक्तम् । तेन उभे यत्र श्रूयेते इत्यर्थेऽपि 'प्रत्यैषिषन्' इति सिद्धये आवश्यकेन पञ्चमीसमासेन तत्सिद्धावुभेग्रहणं सहार्थमिति तद्भावः ।

**इति पक्षे त्विति** । तुनाऽस्यानित्यत्वं सूचितम् । 'प्रविगणय्य' इति **भाष्यो**दाहरणमपि तदनित्यत्वे एव सङ्गच्छते । अत एव 'हे गौः' इत्यत्र वृद्धेः स्थानिवत्त्वान्न सम्बुद्धिलोपः । पूर्वस्मान्निमित्तत्वेनाऽऽश्रितादिति व्याख्याने तु न मानम् ।

(के(*)चित्तु पूर्वस्माद(१)व्यवहितपरस्यैव कार्ये स्थानिवत्त्वम् । 'प्रविगणय्य' इत्यादौ तु स्थानिवद्भावलब्धाकारस्यैव व्यपदेशिवद्भावेन लघुपूर्वत्वमादाय न दोष इति तदनित्यत्वे न मानमित्या(२)हुः ) ।

**पूर्वत्रासिद्धे नेति** । अतिदेशदृष्ट्या त्रिपाद्या असिद्धत्वेन न्यायसिद्धानुवादोऽयम् । तत्फलं त्वतिदेशान्तराणां वतिघटितानां त्रिपाद्यां प्रवृ-

---

१।१।५८) इति स्थानिवत्त्वनिषेधः शङ्क्यः, पदे अन्त इति सप्तमीसमासस्य सिद्धान्तितत्वेन पदपरकचरमावयवत्वस्य जुस्यभावेन निषेधाप्रवृत्तेः । न चैवमपि 'प्रत्यैषिषन्देवदत्ताः' इत्यादौ पदपरकत्वस्य चरमावयवे जुसि सत्त्वेन पुनरपि तन्निषेधः शङ्क्यः, इत एव दोषात्तत्र प्रत्यासत्त्या परपदस्थाजादेशस्यैव ग्रहणमित्यदोषात् ।

(१)**अव्यवहितपरस्यैवेति** । न च 'भवति' इत्यादौ पञ्चमीसमासेन गुणस्य स्थानिवद्भावादवादेशो न स्यादिति वाच्यम् , स्वविधौ पञ्चमीसमासेनापि स्थानिवद्भावस्याप्रवृत्तेः । अत्राव्यवहितपरत्वं श्रूयमाणम्बोध्यम् । (२)**आहुरिति** । अत्रारुचिबीजन्तु 'प्रविगणय्य' इतिभाष्यासङ्गतिः, स्थानिभूतादचः पूर्वत्वेन दृष्टो यो णकारस्तदव्यवहितोत्तरत्वस्य श्रूयमाणस्य णौ सत्त्वेनाल्लोपस्य स्थानिवद्भावेन एकस्मिन्नित्युक्त्याऽसहाये एव व्यपदेशिवद्भावस्य प्रवृत्तेर्निर्णीततया प्रकृते व्यपदेशिवद्भावाप्रवृत्तौ लघुपूर्वशब्देन अकारस्य ग्रहणायोगात् , लघुपूर्वाण्णकाराच्च णेरव्यवहितपरत्वाभावेन णेरयादेशानापत्तेः ।

---

* कंसान्तर्गतं बहुषु पुस्तकेषु नास्ति ।

त्तिबोधनम् । अत एव (१)'अमी' 'क्षीरपेण' इत्यादौ मीत्वणत्वे भवतः। अत्रैकारस्यादस्सम्बन्धित्वं, पे इत्यस्यैकाजुत्तरपदत्वञ्चान्तवद्भावाधीनम् । **तस्य दोष इति ।** इदं वाचनिकमेव । "न मु ने" (पा०सू० ८।३।३) इति सूत्रे 'न' इति योगविभागस्तु **भाष्ये** न दृश्यते । अत एव सिद्ध-काण्डं वार्त्तिककृताऽऽरब्धं, "नलोपः सुप्" (पा०सू० ८।२।२) इति सूत्रञ्च सूत्रकृता ।

**प्रकारार्थमिति ।** प्रकारः सादृश्यं, तच्च सुप्त्वेन । 'मांसपचनी' इत्यादावपि "न लुमता" (पा०सू० १।१।६३) इतिनिषेधानित्यत्वाच्छ-सादिपरत्वं बोध्यम् । शब्दत्वेन सादृश्यमित्यन्ये, तन्न, "वा शोकष्यञ्रो-गेषु" (पा०सू० ६।३।५१) इत्यस्य वैयर्थ्यापत्तेः, "नासिकाया यत्तस्-क्षुद्रेषु नस्" इति **भाष्य**पठितवार्त्तिकस्य(२)वैयर्थ्यापत्तेश्च । "आसन्न

---

**(१)अमी क्षीरपेणेत्यादाविति ।** "अन्तादिवच्च" (पा०सू० ६।१।८५) इति सूत्रं न कर्तव्यमिति मते "स्थानिवदादेशोऽनल्विधौ" (पा०सू० १।१।५६) इत्यस्य त्रिपाद्यामपि प्रवृत्त्या तेनानयोः सिद्धिर्बोध्येत्यन्तादिवत्सूत्रे विस्तरे निरूपितम् ।

**(२)वैयर्थ्यापत्तेरिति ।** विरुद्धोऽर्थो यस्य स व्यर्थः, तस्य भावो वैयर्थ्यं तस्माद्विरुद्धार्थत्वापत्तेरित्यर्थः । तथाहि-'नासिक्यं नगरं' 'नासिक्यो वर्णः' इत्यत्र नसादेशवारणाय कृतम्—'अवर्णनगरयोः' इतिवार्त्तिकं परिमुखादौ पाठेन 'नासिक्यो वर्णः' इति, सङ्काशादिषु पाठात् 'नासिक्यं नगरम्' इति च साधयित्वा प्रत्याख्यातम् । शब्दत्वेन सादृश्यग्रहणे—प्रत्याख्यानकल्पे "पद्दन्" (पा०सू० ६।१।६३) इति विक-ल्पेन नसादेशे 'नासिक्यं' 'नास्यम्' इति वृद्धिघटितं वर्णे रूपद्वयम्, एवं नगरेऽपि आरम्भपक्षे च "नस् नासिकायाः" (का०वा०) इति वार्त्तिकप्राप्तादेशस्य निषेधे "पद्दन्" (पा०सू० ६।१।६३) इति विकल्पेन नसादेश 'नासिक्यं' 'नस्यम्' इति रूप-द्वयं स्यादिति फलभेदेन प्रत्याख्यानासङ्गत्यापत्त्या विरुद्धार्थत्वापत्तिः । मम तु सुप्त्वेन सादृश्यात् "न लुमता" (पा०सू० १।१।६३) इति निषेधेन नसादेशाप्राप्त्योभयपक्षेऽपि 'नासिक्यम्' इत्येकमेव रूपमिति फलभेदाभावात् न प्रत्याख्यानासङ्गतिः । एतेन "नस् नासिकाया" (का०वा०) इति वार्त्तिकस्य स्थानिघटितस्यासाधुत्वबोधनायाऽऽवश्यक-मिति वैयर्थ्याभावादिदमसङ्गतमित्यपास्तम् ।

स्यादेतत्, "स्वान्तं हृन्मानसं मनः" (अ०को० १।४।३१) "पदङ्घ्रिश्चरणोऽस्त्रि-

प्राणमूचुः" इत्यत्रापि तद्वदेव शसादिपरत्वम् । अत्र 'सुप्रभृतिषु' इति वाच्ये 'शस्प्रभृतिषु' इत्युक्त्याऽन्यत्र क्वचिदेव प्रवृत्तिर्बोध्यते । अत एव पद्दन्निशां ग्रहणं चरितार्थम् । तेषां द्विविधानामपि कोशसिद्धतया तत्र व्यवस्थार्थताया एव वक्तव्यतया सुप्प्रत्ययमात्रे प्रवृत्तौ तस्या असम्भवेन तद्वैयर्थ्यं स्पष्टमेव । प्रकारार्थत्वे प्रमाणमाह—**भाष्ये इति** । तत्र हि "शस्प्रभृतिष्वित्युच्यते, अशस्प्रभृतिष्वपि दृश्यते—शलादोषणी कुलद्दोषणी याचते महादेवः" इत्युक्तम् । आद्यस्याध्रिगुप्रैषे पठ्यमानस्य शलाकाकारे दोषणी इत्यर्थः । छान्दसः कादिलोपः । एतेन दोष इत्यकारान्तस्य दूषणवाचिनो दोषन्नादेश इत्यपास्तम् ।

**तेन पदङ्घ्रिरिति** । न च कोशस्थपदादीनां पादाद्यादेशत्वे पादादिभ्यः पृथक्पदादिवचनं तत्र व्यर्थम् । न हि स्थान्यादेशयोः पृथगुपादाने प्रयोजनमस्ति, स्थान्युपादानेनैव तदर्थाभिधानसमर्थादेशस्याप्यर्थबोधनात् । अत एव नसाद्यादेशानां कोशेऽनुपन्यास इति वाच्यम्, पदादीनां भाष्यरीत्याऽनादेशत्वात् । तत्त्वेऽपि "तृज्वत्क्रोष्टुः" (पा०सू० ७।१।९५) इतिवद्व्यवस्थार्थमस्यावश्यकत्वेन सौ परतो हृदादीनां प्रयोगार्थं प्रकारार्थत्वस्यावश्यकत्वात् । स्पष्टं चेदं "वा शोक" (पा०सू० ६।३।५१) इति सूत्रे **मूले** ।

(१)कोशे शब्दा अर्थपरा एव । शक्तिग्रहस्तु पदत्वहेतुका(२)नुमा-

---

याम्" (अ०को० २।६।७१) इत्यत्र हृत्पच्छब्दयोः शब्दस्वरूपपरतया, स्वरूपतो हृदयत्वप्रकारकहृदयविशेष्यकबोधतात्पर्येणोच्चरितहृदयशब्दस्य, एवं स्वरूपतश्चरणत्वप्रकारकचरणविशेष्यकबोधतात्पर्येणोच्चरितपादशब्दस्य हृदादेशपदादेशयोर्विधानेन प्रकृते हृत्पदादेशयोरप्राप्त्या 'तेन "पदङ्घ्रिश्चरणोऽस्त्रियाम्" "स्वान्तं हृन्मानसं मनः" इति सङ्गच्छते' इति कौमुदी असङ्गता । एतेन स्वान्तं हृत् पदङ्घ्रिरित्यादौ शब्देऽर्थस्यापि प्रकारीभूततया भानात् चरणहृदयविषयकबोधतात्पर्येणोच्चरितत्वमस्त्येवेति कौमुदी सङ्गतैवेति परास्तम्, स्वरूपतः चरणत्वादिप्रकारकचरणादिमुख्यविशेष्यकबोधतात्पर्येणोच्चरितत्वस्याभावेनादेशाप्रवृत्तेः कौमुद्यसङ्गतेस्तदवस्थत्वादित्यत आह—(१)**कोशे शब्दा अर्थपरा एवेति** ।

(२)**अनुमानेनेति** । इदं विष्णुपदं नारायणत्वावच्छिन्नार्थनिरूपितशक्तिमद्;

नेन सामान्यत एव। एवञ्च "विष्णुर्नारायणः" (अम०को० १।१।१८) इत्यादौ विष्णुपदार्थाभिन्नो नारायणपदार्थ इति क्रमेण बोध इत्यादि मञ्जू

---

नारायणपदघटितप्रघट्टकघटकत्वादित्यनुमानेनेत्यर्थः। अगृहीतशक्तिकपदघटितप्रघट्टक घटकेषु कोशाच्छक्तिग्रहो न भवति। पदत्वहेतुकानुमानेनार्थबोधकत्वग्रहस्तु अर्थत्व प्रकारकार्थविशेष्यकबोधमेव जनयति, न तु स्वरूपतः शक्यतावच्छेदकधर्मप्रकारकं धमिति पदत्वहेतुकानुमानं विफलमेव। न चार्थत्वस्योपलक्षणत्वात्तद्धर्मप्रकारकशा बोधस्यानुदयेऽप्यर्थत्वेन रूपेण तत्तच्छक्यतावच्छेदकधर्मप्रकारकमेव शक्तिज्ञानं भवतीति निरुक्तहेतुपर्यन्तानुधावनं व्यर्थमिति वाच्यम्, विशेषधर्मप्रकारकशक्तिज्ञानाभावदशायामुपलक्षितधर्मप्रकारकशाब्दबोधस्य 'तमानय' इत्यनन्तरं 'कमानयामि' इति प्रश्नदर्शनेनानुभवसिद्धत्वाभावाद् विशेषधर्मप्रकारकशक्तिज्ञानस्य चानेनानुमानेनासम्भवात् अर्थत्वप्रकारकचरणविशेष्यकबोधतात्पर्येणोच्चरितत्वस्यार्थत्वप्रकारकहृदयविशेष्यकबोध तात्पर्येणोच्चरितत्वस्य च सत्त्वेऽपि स्वरूपतश्चरणत्वप्रकारकचरणविशेष्यकबोधतात्पर्ये णोच्चरितत्वस्य, स्वरूपतो हृदयत्वप्रकारकहृदयविशेष्यकबोधतात्पर्येणोच्चरितत्वस्य चाभा वेनाऽऽदेशाप्राप्त्या कौमुद्यसङ्गत्यापत्तेस्तदवस्थत्वात्। तस्मात्पूर्वोक्तानुमानेन पर्यायघ टितप्रघट्टकघटकपदशक्तिग्रहवतः पुरुषस्य स्वरूपतः तद्धर्मप्रकारकशक्तिज्ञानञ्जायते इति सर्वं समञ्जसमिति केचिदाहुः।

**परे तु**–"सिंहो. मृगेन्द्रः पञ्चास्यः" (अ०को० २।५।१) इत्यादौ अगृहीतश क्तिकपदानाम् 'इदं पदं क्वचिदर्थे शक्तम्; साधुपदत्वात्' इत्येवं साधुपदत्वलिङ्गेन अर्थ त्वेन शक्तिग्रहे वृत्ते तत्तत्पदप्रकारिकायामर्थत्वप्रकारिकायां चोपस्थितौ 'सिंहपदार्था भिन्नो मृगेन्द्रपदार्थः' इत्येवं वाक्यार्थबोधे पदानामपि समानार्थकत्वग्रहाद् व्यवहारा दिना कस्मिंश्चित्सिंहादिपदे विशिष्य तत्तद्रूपेण गृहीतशक्तिकस्य पुंसः हर्यादिपदान्त रेषु 'इदं पदं सिंहत्वावच्छिन्ननिरूपितशक्तिमत् सिंहत्वावच्छिन्ननिरूपितशक्तिमत्सिंहा दिपदसमानार्थकत्वात्' इत्येवं सर्वेषु एकप्रघट्टकीयेषु पर्यायेषु शक्तिग्रहो विशिष्य जायते। ततश्च लोके प्रयुक्तहर्यादिपदेभ्यः विशिष्य सिंहत्वादिना बोधः, न तु कोशे प्रयुक्त सिंहादिपदेभ्यः विशिष्य सिंहत्वादिना बोधः, विरूपेणोपस्थित्यभावेन अभेदान्वय बोधासम्भवात्। तस्मात् तत्तत्पदार्थत्वादिना बोधार्थं पदत्वलिङ्गकानुमानं सफलमेव। न च कोश विशिष्यबोधाभावे विशिष्य हृदयत्वादिना बोधतात्पर्येणोच्चरितहृदयशब्दस्यैव हृदाद्यादेशविधायकपद्दन्नितिशास्त्राप्रवृत्तौ प्रभृतिग्रहणप्रकारार्थत्वफलतया पदङ्घ्रिरित्यादिकोशोपन्यासो मूलकारस्यासङ्गतः स्यादिति वाच्यम्, विशिष्य तत्तद्बोधतात्पर्येणोच्चरिते एव शास्त्रप्रवृत्तिरित्यत्र प्रमाणाभावात्। अत एव विशिष्यावगतवामदेवादिबोधकेषु अस्मदादिप्रयुक्तवामदेवादिशब्देषु "वामदेवाड् ड्यड्ड्यौ"

षायां नामार्थवादे विस्तरेण निरूपितम् । 'एतत्पदममुकवाचकम्' इति शक्तिग्रहस्तु स्वस्वप्रसिद्धिमादाय तत्तत्पुरुषस्यानियतः पश्चान्मनसैव । 'अघ्न्ये देवि सरस्वति इडे काव्ये विहव्ये एतानि तेऽघ्न्ये नामानि' इत्यादौ यत एतानि तव नामानि अतस्त्वदभिन्ना एषामर्था इति बोधः । अत एव "नामन्त्रिते समानाधिकरणे" (पा०सू० ८।१।७३) इतिसूत्र**भाष्ये** सामान्यवचनमित्यस्य इदं प्रत्युदाहरणं दत्तम् । अन्यथैकार्थबोधकत्वरूपसामानाधिकरण्यस्याप्यभावात्तदसङ्गतिः स्पष्टैव । एकशेषस्तु न, तथा सति तत्तच्छब्दस्वरूपस्य सम्यग्(१)बोधानापत्तेः । अनेकशब्दानां स्वरूपबोधनपूर्वमेकार्थबोधने कोशतात्पर्यात् । अत एव "यत्तदेतेभ्यः" (पा०सू० ५।१।३९) इत्यादौ **पाणिनि**नैकशेषो न कृतः । एतेन कोशे शब्दानां शब्दपरता, अत एवैकशेषो न । अर्थपरत्वन्तु न सम्भवति इतः पूर्वं शक्तिग्रहाभावात् । एते शब्दा एकार्था इति बोधः । एवञ्चात्र प्रकारार्थत्वाभावेऽपि न क्षतिरित्यपास्तमिति (२)दिक् ।

**संख्यावि** (पा०सू० ६।३।११०) । 'सायेभ्यः'इति वक्तव्ये पूर्वग्रहणमुत्तरपदे इत्यधिकृतस्य षष्ठ्यन्तत्वलाभाय । एतेन 'द्व्यहप्रियः' इत्येवैतदुदाहरणमित्यपास्तम् ।

---

(पा०सू० ४।२।९) इत्यादिशास्त्रप्रवृत्तिरित्याहुरिति दिक् । (१)**बोधानापत्तेरिति** । वस्तुतस्तु एकरूपावच्छिन्नस्य एकरूपावच्छिन्नसंसर्गेणैकरूपावच्छिन्नेऽन्वसबोधेच्छारूपसहविवक्षायाः कोशेऽभावेनैवैकशेषाप्रवृत्तिरिति बोध्यम् ।

(२)**दिगिति** । अन्ये तु कोशे शब्दानामर्थपरत्वं सर्वत्र न सम्भवति "विधुर्विष्णौ चन्द्रमसि" (अ०को० ३।३।९९) इत्यादावर्थपरत्वस्यासम्भवात् । सर्वत्र शब्दपरत्वमपि न,

सत्कृत्यालङ्कृतां कन्यां यो ददाति स कूकुदः (अ०को० ३।१।१४) इत्यत्र शब्दपरत्वासम्भवात् । कौमुदीयोजनन्त्वेवम्—असर्वविभक्तिकपदानां "लाजाः पुंभूम्नि चाक्षताः" (अ०को० २।९।४७) "नासत्यावश्विनौ दस्रौ" (अ०को० १।१।५४) "दाराः पुम्भूम्नि" (अ०को० २।६।६) इत्यादिवत् पदाद्यादेशस्य शसादिष्वेव प्रयोग इत्येव वक्तव्ये सामान्यतः पदङ्घ्रिरितिकरणं, स्वान्तं हृन्मानसं मन इतिकरणं च प्रभृतिग्रहणं प्रकारार्थमित्यत्र मानमित्याहुः ।

**विश्वपा इति।** विश्वं पातीति विग्रहे "आतोऽनुपसर्गे" (पा०सू० ३।२।३) इति प्राप्ते वाऽसरूपन्यायेन "आतो मनिन् क्वनिब्वनिपश्च" (पा०सू० ३।२।७४) इति चेन विच्। स चाऽऽदन्तेभ्यो लोके। 'कीलालप आगतम्' इति "विभाषा पूर्वाह्ण" (पा०सू० ४।३।२४) इति सूत्रे **भाष्य**प्रयोगात्। क्विपस्त्वादन्तेभ्यो **भाष्या**नुक्तक्विब्भ्योऽनभिधानमेव। अत एव "यू स्त्र्याख्यौ" (पा०सू० १।४।३) इत्यत्र विजुक्तं **भाष्ये,** न तु क्विप्। अत एव 'शंस्थाः' इत्यादिप्रयोगेषु **भाष्यकृता** इत्वं न कृतमिति **केचित्।** अन्ये (१)क्विपमेवाहुः।

**दीर्घाज्जस** (पा०सू० ६।१।१०५)। चेन 'इचि' इत्यनुकर्षः। 'दीर्घाच्छसेव' इति नियमपरं "दीर्घाच्छसि" इत्येव तु न सूत्रितम्, दीर्घादेव शसीतिविपरीतनियमापत्तेः। प्रत्याहारेषु जातिपक्षाश्रयणाद् प्राप्तिः। **न्याय्यत्वादिति।** जसि पूर्वसवर्णदीर्घनिषेधस्य न्याय्यत्वादित्यर्थः। **धातोः किं हाहानिति।** अव्युत्पन्नामिदम्। अस्य क्विबन्तशब्दत्वे तु 'सान्' इति प्रत्युदाहरणम्।

**परे तु** 'क्त्वः' 'श्नः' इत्यादिसिद्ध्यर्थम् "आतोऽनापः" इति वक्तव्यम् इत्युक्ते 'आत' इति योगविभागेन तत्संसाद्ध्य तत्प्रत्याख्यानं

---

(१)**क्विपमेवाहुरिति।** परे तु "ईत्वमवकारादाविति वाच्यम्" इति 'कीलालवसापावानः पिबत' 'घृतं घृतपावानः पिबत' इत्यादावीत्ववारणाय कृतं वार्तिकं भगवता पावान इति वनिपा साधयित्वा प्रत्याख्यातम्। 'विश्वपाः' 'शंस्थाः' इत्यादौ वार्तिकमते ईत्वाप्राप्त्या भाष्यमते ईत्वप्राप्त्याऽऽरम्भप्रत्याख्यानयोः फलभेदेन प्रत्याख्यानासङ्गत्यापत्तेः 'ईत्वमवकारादौ' (का०वा०) इति वार्तिकस्य श्रूयमाणवकारादावीत्वं न भवतीत्यर्थः। तथा च 'विश्वपाः' 'शंस्थाः' इत्यादौ न फलभेद इति। एवञ्च क्विपि वकारस्य श्रूयमाणत्वाभावेन निषेधाप्रवृत्तौ ईत्वस्य दुर्वारतया विजेव। अत्र मानं 'कीलालप आगतम्' इति भाष्यप्रयोग एव। अत एव "यू स्त्र्याख्यौ" (पा०सू० १।४।३) इत्यत्र विच्कथनं भाष्योक्तं सङ्गच्छते। एवञ्च आदन्तेभ्य आचारक्विबन्तेभ्यः कर्तरि क्विपि फलभेदाभावेनाऽऽचारक्विपोऽनभिधाने न मानम्। न च वार्तिकस्य 'पीवा' 'पीवानः' इति लक्ष्यासिद्धिरिति वाच्यम्, एतदुद्धारायैव भगवता वार्तिकस्य प्रत्याख्यानात् यथोत्तरं मुनीनां प्रामाण्यमिति सिद्धान्ताच्चेत्याहुः।

**भाष्ये** । एवञ्च साशब्दादेर्यद्यभिधानं तदा योगविभागेन लोप इष्ट एव । सूत्रे धातुग्रहणमाबन्तनिवृत्त्यर्थमेव **भाष्यवार्त्तिककृतो**रज्ञानकल्पनापेक्षयेदृशार्थकल्पनस्यैवौचित्यात् । आबन्तादाचारक्विबेव न, तक्किबन्ताद्वा कर्त्तृक्विब् न; अनभिधानादिति न तत्र सूत्रवार्तिकयोर्विरोधः । (१)अत एव "प्रथमयोः" (पा०सू० ६।१।१०२) इतिसूत्र**भाष्ये** पररूपं बाद्ध्यसामान्यचिन्तया दीर्घमात्रस्य बाधकमिति पक्षे 'रामान्' इत्यादिसिद्ध्यर्थम् 'अतो दीर्घ' इति, 'सुपि च' इति चानुवर्त्तमाने "बहुवचने झल्येत्" (पा०सू० ६।३।१०३) इति सूत्रे बहुवचने इति योगविभागेन पररूपबाधकं दीर्घं विधाय 'रामाणाम्' इत्यादावनेन दीर्घे परत्वात्कृते 'अग्नीनाम्' इत्यादौ सावकाशस्य नुटोऽप्राप्तिमाशङ्क्य "ह्रस्वनद्यापः" (पा० सू० ७।१।५४) इति सूत्रे "आज्जसेः" (पा०सू० ७।१।५०) इत्यत आद्ग्रहणानुवृत्त्या समाधाय 'कीलालपाम्' इत्यादौ नुड्विधायके 'आतो धातोः' इत्यनुवर्त्य लोपेन नुड्बाधकेन समाहितम् । नुड्विधायके आब्ग्रहणं न कार्यमिति तदाशयः । अधात्ववयवाकारान्तानां लोपाभावे तु (२)तदसङ्गतिः स्पष्टैवेत्याहुः ।

---

(१)**अत एवेति** । धातुग्रहणमाबन्तानिवृत्त्यर्थमेवेति स्वीकारादेवेत्यर्थः। (२)**तदसङ्गतिरिति** । यथाश्रुतन्यासे ह्रस्वान्तत्वाभावान्न नुट् प्राप्नोति, "ह्रस्वनद्यापः" (पा०सू० ७।१।५४) इत्यत्राऽऽदित्यनुवर्त्यादन्तान्नुडितिकल्पे च नुड् भवतीति फलभेदाद् **भाष्या**सङ्गतिरिति भावः ।

परे तु "आतो धातोः" (पा०सू० ६।४।१४०) इति सूत्रकृन्मते, "आतोऽनापः" इतिवार्त्तिककृन्मते, "आतः" इति योगविभागेन तद्वार्त्तिकप्रत्याख्यानपरभाष्यमते च फलभेदवारणाय "आतो धातोः" (पा०सू० ६।४।१४०) इति सूत्रे आत इतिपदं स्त्रीत्वबोधकतापर्याप्त्यधिकरणघटकाऽऽकारभिन्नाऽऽकारपरम् । तथाच सामित्यादावाकारस्य लोपे नुटोऽप्राप्त्या "प्रथमयोः" (पा०सू० ६।१।१०२) इतिसूत्रस्थभाष्यमते फलभेदाभावेनानभिधाने न दृढम्मानम् । न च धातुपदं निरूक्तार्थपरं भवत्विति वाच्यम् । सूत्रे आत इत्यस्य वैयर्थ्यापत्तेः, आत इतिविभक्तसूत्रस्य लक्ष्यासम्भवाद्भाष्यकृत्कृतयोगविभागस्य वैयर्थ्यापत्तेश्च । एवं धातुग्रहणमाबन्तनिवृत्त्यर्थमिति शेखरग्रन्थाऽसङ्गतः "न मु ने" (पा०सू० ८।३।३) इति निर्देशासङ्गतेः । ना इत्यस्य आबन्त-

**क्त्वः श्न इति** । क्त्वाप्रत्ययस्य इडित्याद्यर्थकं 'क्त्व इट्' 'दृ
शस्येत्त्वम्' इत्यादिप्रयोगस्थमत्रोदाहरणम् । एतेनाऽऽचारक्विबन्तात् कर्तृ
क्विपा एते प्रयोगा निर्वाह्या इत्यपास्तम्, आचारक्विबन्तप्रकृतिककर्तृक्वि
न्तस्य **भाष्ये** क्वाप्यनुपन्यासेन तेभ्यः कर्तृक्विपोऽनभिधानस्यैव लाभात्

(१)**जसि च** (पा०सू० ७।३।१०९) । ह्रस्वस्य गुण इति वर्तते

---

भिन्नत्वेन तत्र लोपस्य दुर्वारतया 'नि' इति रूपस्यैव त्वन्मते लाभात्। असम
आत्पदं स्त्रीत्वावच्छिन्नबोधकघटकाकारभिन्नाकारपरमित्युक्तत्वेन नाशब्दस्य च स्त्री
ङ्गत्वेन लोपाप्राप्त्या नासङ्गतिः । न च भवन्मते "प्रथमयोः" (पा०सू० ६।१।
इतिसूत्रस्थभाष्यविरोधः । तत्र हि 'कीलालपाम्' इत्यादौ लोपार्थं नुड्विधायके
धातोरित्यनुवृत्तिं कृत्वा योगविभागेन समाहितम्, भवन्मते आत इत्यनुवृत्ता
कीलालं पान्तीति कीलालपाः स्त्रियस्तासामित्यर्थके 'कीलालपाम्' इति प्रयोगे आ
स्य स्त्रीत्वावच्छिन्नबोधकघटकाकारभिन्नत्वाभावेन तत्र लोपार्थं कृताया आत इत्यनु
व्यर्थत्वात् । नागेशमते च न भाष्यविरोधः 'प्रियहाहाम्' इत्यादौ "आतो धातोः"
(पा०सू० ६।४।१०४) इत्यस्य चारितार्थ्येन नुड्विधायके आत इत्यनुवृत्तेरावश्यक
दिति वाच्यम्, आत इत्येतत्साहचर्येण "आज्जसेः" (पा०सू० ७।१।५०) इति सू
दनुवृत्ताऽऽत्पदस्यापि स्त्रीत्वबोधकाकारभिन्नाकारपरत्वेन 'प्रियहाहाम्' इत्यादौ नुटो
प्राप्त्या तत्र लोपार्थमातोधातोरित्यनुवृत्तेरावश्यकत्वात् ।

अत एव ङ्याप्सूत्रे **भाष्ये** आबन्तस्थले पूर्वान्तवद्भावेनैव सिद्धे आब्ग्रहणं कि
र्थमित्याशङ्क्य 'बहुदामा' इत्यादि डाबन्तविषयं प्रयोजनमुक्तं संगच्छते । अन्य
'क्त्वायाम्' इत्यादिभाष्यप्रयोगेण 'क्त्वः' इत्यादिप्रयोगेण च क्त्वाशब्दस्य स्त्रीपुंलि
त्वानुमानेन 'क्त्वायाम्' इत्यादिप्रयोगे याडुपपत्तये टाबर्थमजादौ क्त्वाशब्दपाठस्या
कत्वेन त्वन्मते आबन्तभिन्नक्त्वासम्बन्धी य आकारस्तदन्तस्याबन्तभिन्नत्वेन
परतो भसंज्ञायां लोपे टाब्विषये एव आब्ग्रहणस्य प्रयोजनसत्त्वेन डाप्पर्यन्तमा
प्रयोजनानुधावनमसङ्गतं स्यात् । मम तु स्त्रीत्वावच्छिन्नबोधकघटकाकारभिन्नाकार
भावेन लोपाभावे पूर्वान्तवद्भावेन 'क्त्वायाम्' इत्यादौ प्रातिपदिकत्वमायातीति
र्यन्तमनुधावनं सङ्गच्छते इति प्राहुः ।

(१)**जसि च** (पा०सू० ७।३।१०९) । न च 'जिति च' इत्येव सूत्रमस्तु ह्र
स्येति च नानुवर्तनीयमिति 'अबिभयुः' इत्यादावपि अनेनैव गुणसिद्धिरिति "
च" (पा०सू० ७।३।८३) इति सूत्रं न कर्तव्यं भवतीति महल्लाघवमिति वाच्य
'भूयासुः' 'जागृयुः' इत्यादौ गुणापत्तेः । न च "जुसि च" (पा०सू० ७।३।८३)
स्य स्थाने तत् पठ्यते, इक्परिभाषा चोपस्थाप्यते, तथा च "क्ङिति च" (पा०

**ह्रस्वस्य** (पा०सू० ७।३।१०८)। "सम्बुद्धौ च" (पा०सू० ७।३।१०६) इत्यतः संबुद्धाविति वर्त्तते।

**शेषो घ्य** (पा०सू० १।४।७)। "यू स्त्र्याख्यौ" (पा०सू० १।४।३) इत्यतो यू इति, "ङिति ह्रस्वश्च" (पा०सू० १।४।६) इत्यतो ह्रस्व इति च वर्त्तते। शेषपदार्थमाह—**अनदीत्यादि। तदन्तमिति।** अनुवृत्तयुभ्यां शेषपदार्थस्य विशेषणात्तदन्तलाभ इति भावः। ननु 'मत्यै' इत्यत्रानवकाशत्वान्नदीसञ्ज्ञैव भविष्यतीति शेषग्रहणं व्यर्थमत आह—**एकसञ्ज्ञेति। अधिकारादिति।** "कडाराः कर्मधारये" (पा०सू० २।२।३८) इत्येतत्पर्यन्तं तस्य बुद्धिस्थत्वादित्यर्थः। **स्पष्टार्थमिति।** स्पष्टतया तदन्तविधिलाभार्थमि(१)ति भावः। **मात्रे इति।** "ऋतो ङि" (पा०सू० ७।३।११०) इति तु यू इत्यनुवृत्तावेव तात्पर्यग्राहकमिति भावः।

**आङो ना** (पा०सू० ७।३।१२०)। पुंसीति तु नोक्तम्, 'अमुना कुलेन' इत्यत्र मुत्वस्यासिद्धत्वान्नुमनापत्तौ पुंस्त्वाभावेन नाभावस्याप्य-

---

१।१।५) इति निषेधाद्, अचीत्यनुवर्तनाद्वा नोक्तदोष इति वाच्यम्, 'वातप्रम्यः' 'नियः' 'लक्ष्म्यः' इत्यत्रापि गुणापत्तेः। न च लक्ष्म्यः' इत्यादौ गुणे पूर्वसवर्णदीर्घाप्राप्त्या "दीर्घाज्जसि च" (पा०सू० ६।१।१०५) इतिसूत्रस्थजस्ग्रहणं जसि परतो दीर्घान्तस्य गुणो न भवतीत्यत्र ज्ञापकं भविष्यतीति वाच्यम्, लक्ष्मीशब्दात् क्यजन्तात् क्विपि अल्लोपयलोपयोः निष्पन्नाल्लक्ष्मीशब्दात् जसि प्राप्तपूर्वसवर्णदीर्घनिषेधार्थं तस्यावश्यकत्वात्। तत्र अल्लोपस्य स्थानिवद्भावेन गुणस्याप्राप्तेः। पूर्वस्यैव विधौ स्थानिवद्भावेन पूर्वसवर्णे कर्तव्ये तु न स्थानिवत्त्वप्राप्तिरिति दिक्।

(१)**इति भाव इति।** न च 'गवां पत्यै' इत्यादौ "पतिः समास एव" (पा०सू० १।४।८) इतिनियमाद् घिसंज्ञाया अप्राप्त्या तत्र नदीसंज्ञायाश्चरितार्थत्वात् 'मत्यै' इत्यादौ परत्वाद् घिसंज्ञा मा भूदित्येतदर्थं शेषग्रहणमावश्यकमिति वाच्यम् 'ङिति पतिश्च' इत्येव कर्तव्ये नद्येकमिति न्यायेन "ङिति ह्रस्वश्च" (पा०सू० १।४।६) इत्यस्य वैयर्थ्येन तेन स्वविषये घिसंज्ञाबाधेन 'मत्यै' इत्यादौ पक्षे नदीसंज्ञा भविष्यतीति शेषग्रहणं स्पष्टार्थमित्याशयात्। वस्तुतस्तु पतिः समास एवेत्यनेन बाधेऽपि असङ्कुचितविषयतायाः सत्त्वेन न चारितार्थ्यशङ्काऽवकाशः। स्पष्टं चेदम् "अहन्" (पा०सू० ८।२।६८) इति सूत्रे **शेखरे**।

नापत्तौ रूपासिद्धेः। (१)"न मु ने" (पा०सू० ८।२।३) इति निषेधस्तु न नुमि 'न मु टादेश' इति (२)वार्त्तिकविरोधात्। अत एव सूत्रकृता 'नि' इतिवत् 'नि' इति नोक्तम्। तथा सति तन्त्रेण नकारनिर्देशोऽपि सम्भाव्येत। आगन्तुनाऽकारेण तस्यापि ने इति निर्देशेन तन्त्रस्वीकारे लक्ष्यज्ञानगौरवमिति न किञ्चिल्लाघवमिति स्पष्टं **भाष्ये**। **आङितीति** ङकारविशिष्टा सञ्ज्ञा न त्वस्य ङस्येत्त्वम्। अत एव 'हरिणा' 'मत्या' इत्यादौ न गुणः। एवम् "औङ आपः" (पा०सू० ७।१।१८) इत्यत्रापि। अत एवासम्भवे एवापवादत्वमिति वार्त्तिकमतेऽपि 'रमे' इत्यादौ न याट्।

**घेर्ङितीति** (पा०सू० ७।३।१११)। "सुपि च" (पा०सू० ७।३।१०२) इत्यतः सुपीति वर्त्तते। तेन 'पट्वी' इति सिद्धम्। न च 'घेर्ङि' इत्येव सूत्रं कार्यं, ङकारादावित्यर्थः, 'प्रबाहवा' इत्यत्र "आङ्याजयारामुपसंख्यानम्" (का०वा०) इत्याङादेशस्तु ङा इत्येव वक्तुं शक्यः, इति वाच्यम्; 'मत्याम्' इत्यादौ "आण्नद्याः" (पा०सू० ७।३।११२) इत्याडागमापत्तेः, अल्विधित्वेन स्थानिवत्त्वाभावात्। इद्ग्रहणे त्वनुबन्धकार्यत्वेन स्थानिवत्त्वं स्पष्टमि(३)ति दिक्।

---

(१)**न मु ने इति निषेधस्तु न नुमि इति।** सैद्धान्तिके न्यासे इति शेषः। (२)**वार्त्तिकविरोधादिति।** न च "आङो ना पुंसि" इतिन्यासकल्पे नुम्यपि "न मु ने" (पा०सू० ८।३।३) इति प्रवर्तिष्यत इति 'अमुना कुलेन' इत्यादौ मुत्वस्य सिद्धत्वान्नुम्प्रवृत्तौ पुंस्त्वाभावेन नाभावस्याप्रवृत्तावपि न रूपासिद्धिरिति वाच्यम्; 'अमुष्मै कुलाय' इत्यादौ मुत्वस्य सिद्धत्वान्नुमापत्तेः, स्मायादेशानापत्तेश्चेति भावः।

**घेर्ङितीति** (पा०सू० ७।३।१११)। (३)**इति दिगिति।** दिगर्थस्तु-"नानुबन्धकृतमनेकाल्त्वम्" (प०भा०) इत्यस्य अनुबन्धमात्रवृत्तिविषयताप्रयोजकपदप्रतिपाद्यतावच्छेदकधर्मघटिततत्तद्धर्मातिरिक्ता आनुपूर्व्यतिरिक्ताश्च येऽनुबन्धघटितबोधकधर्मास्तन्निमित्तके कार्ये कर्त्तव्येऽनुबन्धा अविद्यमानवद्भवन्तीत्यर्थकरणाद् "न ल्यपि" (पा०सू० ६।४।६९) इति प्रामाण्याद् अनुबन्धमात्रवृत्तिविषयताप्रयोजकपदप्रतिपाद्यतावच्छेदकेतरो योऽल्त्वव्याप्यो धर्मस्तद्घटितातिदिदिक्षितधर्मनिमित्तके विधौ कर्त्तव्ये स्थानिवन्न भवतीति 'अनल्विधौ' इत्यस्यार्थकरणात्, ङेर्ङ्आमादेशकरणाद्वा 'मत्याम्' इत्यादौ दोषाभावाद् घेर्ङीत्येव सुवचमिति।

**ङसिङ** (पा०सू० ६।१।११०)। एङो द्वित्वेऽपि अस्वरितत्वाद्य-थासंख्यं न। * (१)'ङितश्च' इति तु नासूत्रि "ऋत उत्" (पा०सू० ६।१।१११) इत्यत्र ऋदन्तात् ङितोऽति परे पूर्वरूपमित्यर्थे 'जाग्रति' इत्यादौ दोषः स्यादिति।) ङसोरित्येव सिद्धे ङसिग्रहणं स्पष्टार्थम्।

**अच्च घेः** (पा०सू० ७।३।११९)। इदुद्भ्यामिति किम्? 'घेः परस्य ङेरौदच्च' इति, 'ङिप्रकृतेर्घेरौदच्च' इति वाऽर्थो मा भूदिति अदौतो-स्तपरत्वं मुखसुखार्थम्। इत्सञ्ज्ञायां च "तस्य लोपः" (पा०सू० १।३।९) इति तयोर्लोपः। न चौतो विभक्तित्वात् "न विभक्तौ" (पा०सू० १।३।४) इति निषेधात् कथमित्सञ्ज्ञेति वाच्यं, मुखसुखार्थमित्यस्य तदेव प्रयोजनं न तु कार्यान्तरं, नापि प्रयोगे श्रवणमित्यर्थात्तत्त्वप्रतिज्ञयैव "न विभक्तौ" (पा०सू० १।३।४) इत्यस्य तत्राप्रवृत्तेः। अत एव "इद्वृद्धौ" (पा०सू० ६।३।२८) "पत्यावैश्वर्ये" (पा०सू० ६।२।१८) इत्यादिनि-र्देशाः (२)सङ्गच्छन्ते। यदि तूच्चारणार्थानां विनैव शास्त्रमपगमः स्यात्, तदा इत्सञ्ज्ञकानामपि तद्वदेव निवृत्तिरस्तु, किं तस्य लोप इत्यनेन? स्वभावादस्योभयत्रापि समत्वात्। ध्वनितञ्चेदं "तस्य लोपः" (पा०सू० १।३।९) इत्यत्र **भाष्ये** इति "दिव औत्" (पा०सू० ७।१।८४) सूत्रे निरूपयिष्यामः।

न चैवम् 'अग्नौ' इत्यत्रौतः स्वरितत्वापत्तिः, न च 'प्रत्ययाप्रत्यययोः' (प०भा०) इत्येव सिद्धे पुनः 'तिति प्रत्ययग्रहणं कर्तव्यम्' (का०वा०)

---

(१)**ङितश्चेति तु नासूत्रीति।** आ समन्ताद् ओ वासुदेवो यस्मिन्नगरे तद् आ, ततो वहुचि पुनर्नपुंसकह्रस्वे बह्व इति जाते तत आचारक्विपि लङि शपि "आङ्का-र्यस्य सम्भावानायां वार्णे पूर्वं न प्रवर्तते" इति यणोऽप्रवृत्तौ लघूपधगुणे 'बह्वो अ अत्' इति स्थिते पररूपे परादिवद्भावेन ङित्सम्बन्ध्यतपरकत्वस्य सत्त्वेन पूर्वरूपापत्तेः, इहा-र्थमपि ङसिङसोश्चेति बोध्यम्।

(२)**सङ्गच्छन्ते इति।** वस्तुतस्तु "तपरस्तत्कालस्य" (पा०सू० १।१।७०) इतिशास्त्रेण अत्, आत् इत्यादीनामेव संज्ञात्वबोधेनन नेत्संज्ञाप्राप्तिरिति बोध्यम्।

---

* कंसान्तर्गतं केषुचित् पुस्तकेषु नास्ति।

इति वार्त्तिकादौपदेशिकप्रत्ययत्ववत्येव तत्प्रवृत्तिरिति वाच्यम्, तस्याः
भाषाया लक्ष्यसिद्धये **भाष्यकृता** क्वाप्य(१)नाश्रयणात्। स्पष्टं
"तित्स्वरितम्" (पा०सू० ६।१।१८५) इत्यत्र **कैयटे**। "अङ्ग
(पा०सू० ६।४।१) इति सूत्रे **भाष्ये** तु तत्प्रत्याख्यानायैकदेशि
सोक्ता, न तु सिद्धान्तिनेति स्पष्टं तद्विदाम्। "श्नान्नलोपः" (पा०सू०
४।२३) इति सूत्रे **भाष्येऽ**पि ध्वनितस्तदभावः, इति वाच्यम्, प्रत्यय
ग्रहणमित्यस्य विधानकालिकप्रत्ययत्ववद्ग्रहणमित्यर्थात्। अत एवाऽङ्गे
दित्त्वमाश्रित्य तत्प्रत्याख्यानेन फलभेदो नेति दिक्।

**अनङ् सौ** (पा०सू० ११।९३)। साविति प्रथमैकवचनम्
म्बुद्धाविति पर्युदासात्। नकाराकारस्तूच्चारणार्थं इत्सञ्ज्ञकः।

(२)**अलोऽन्त्यात्** (पा०सू० १।१।६५)। अवध्यवधिमतोः
त्यादाह-**पूर्वो वर्ण इति**। अत एव 'शिष्टः' इत्यादौ शा इति
दायस्य "शास इत्" (पा०सू० ६।४।३४) इतीत्वं न। (३)पञ्चम्य
ल्ग्रहणाच्च शस्य न।

**सर्वनामस्थाने** (पा०सू०६।४।८)। "नोपधायाः" (पा०सू०
७) इति, "ढ्रलोपे" (पा०सू० ६।३।१११) इत्यतो दीर्घ इति चानुवर्त्त

---

(१)**अनाश्रयणादिति**। चिन्त्यमिदम्, "वसोः सम्प्रसारणम्" (पा०सू० ६।४।
"वसुस्रंसु" (पा०सू० ८।२।७२) "वले" (पा०सू० ६।३।११८) "वनोरच" (पा०
४।१।७) "न पदान्तात्" (पा०सू० ८।४।४२) इत्याद्यर्थं परिभाषाया आवश्यक
एकदेश्युक्तित्वमात्रेण परिभाषा न स्वीक्रियत इति वक्तुमशक्यत्वात्। अन्यथा
वा बहिरङ्गलक्षणत्वाद्वा" इत्यनेन अन्तरङ्गपरिभाषाया एकदेश्युक्तित्वबोधनेन
अपि लक्ष्यसिद्ध्यनुपयुक्तत्वापत्तेः। विस्तरस्तु परिभाषेन्दुटिप्पणे द्रष्टव्य इति दिक्।

(२)**अलोऽन्त्यात्पूर्व** (पा०सू० १।१।६५)। उपधात्वञ्च—यत्किञ्चित्
विशिष्टत्वम्। वैशिष्ट्यञ्च—स्वघटकत्वं, स्वघटकान्त्यालव्यवहितपूर्वत्वमित्युभय
न्धेन। अत्रान्त्यालोऽवधित्वेन तदव्यवहितपूर्वोऽपि अलेव गृह्यते अवध्यवधि
साजात्यादिति 'शिष्टः' इत्यादौ न दोष इति भावः। (३)**पञ्चम्यन्ताल्ग्रह
दिति**। "गुणः कृतात्मसंस्कारः" इति न्यायात् संज्ञाशास्त्रेऽपि "तस्मिन्" (पा०
१।१।६६) इतिपरिभाषाप्रवृत्तिरिति भावः।

**अपृक्त** (पा०सू० १।२।४१)। अपृक्त इति पुंस्त्वमाविवक्षितम्। अत एवापृक्तं हलिति सङ्गच्छते। अपृक्तप्रदेशेषु हल्ग्रहणेनैव सिद्धे सञ्ज्ञा-विधानमदृष्टार्थम्।

**हल्ङ्याप्** (पा०सू० ६।१।६८) सुतिसीति पृथक् पदम्। **हल-न्तादिति**। सुतिसीनां प्रत्ययत्वेनोपस्थितस्य यस्मात्स विहितस्तदादेरित्यस्य विशेष्यत्वेन (१)तदन्तलाभ इति भावः। एवं ङ्याबंशे तदुपस्थितत्या ङ्यावन्तान्तादित्यर्थो द्रष्टव्यः। **हल्ङ्याब्भ्यः किमिति**। 'रामः' इत्यादौ दीर्घान्तत्वाभावान्न दोष इति प्रश्नः। 'दीर्घात्किं निष्कौशाम्बिरति-खट्वः' इत्यारभ्य 'संयोगान्तलोपस्यासिद्धत्वाद्' इत्यन्तोऽपपाठः, मनोरमायां दर्शनात्। **सखेति**। यद्यप्यत्रैव "सख्युरसम्बुद्धौ" (पा०सू० ७।१।९२) इति लेख उचितस्तथापि नान्तलक्षणदीर्घेणैव सिद्धेः "अत उपधायाः" (पा०सू० ७।२।११६) इत्यपेक्षया नित्यत्वेन तस्यैवौचित्याच्चात्र नोक्तम्।

**अचो ञ्णिति** (पा०सू० ७।२।११५)। "मृजेर्वृद्धिः" (पा०सू० ७।२।११४) इत्यतो वृद्धिरित्यनुवर्त्तते, अङ्गस्येति चाधिकृतं, तदाह—**अङ्गस्य वृद्धिरिति**।

**ख्यत्यादिति**। उच्चारणार्थाकारेण कृतयणः प्रयोगस्थस्यानुक-रणादविशेषेणोभयोर्ग्रहणमित्याह—**खितीत्यादि**। ङस्यादिपरस्तादृशः खिखीतितीशब्दप्रकृतिक एव सम्भवतीति भावः। **सुसखेति**। "न पूजनात्" (पा०सू० ५।४।६९) इति निषेधाद् "राजाहः सखिभ्यः" (पा०सू० ५।४।९१) इति टज् न। **समुदायस्येति**। असखीत्यस्य (२)स-

---

(१)**तदन्तलाभ इति**। सुतिसिभिस्तदादिरिति धर्मी उपस्थापनीयो, ङ्या-ब्भ्यां तदादिरिति धर्मी उपस्थापनीयो वेत्यत्र नियामकाभावेन विनिगमनाविरहा-दुभाभ्यां धर्म्युपस्थितौ सुतिसीत्येतदुपस्थितं तदादिं विशेष्यीकृत्य तदन्तविधिना ङ्यावन्तं यत्तदादि तदन्तं यत्तदादि तस्मात्परीभूतं सुतिसीत्येतदपृक्तं हल्लुप्यते इति सूत्रार्थ इति भावः।

(२)**सखिभिन्नावयवाविति**। न च सखिभिन्नं खीति तदवयवेकारस्य घि-संज्ञा दुर्वारैवेति वाच्यम्, पर्युदासन्यायेन सखिभिन्नं यत्प्रातिपदिकं तदवयवेकारोकार-

खिभिन्नावयवाविति वर्णसंज्ञापक्षेऽर्थः । (१)अत्र पक्षे पर्युदं तद्भिन्नप्रातिपदिकान्त्येवर्णादेरेव ग्रहणात् 'कृतं सख्या' इति वाक्ये न दोषः सिद्धान्तिसम्मते तदन्तसञ्ज्ञापक्षे सखिभिन्नावित्यर्थः । पर्युदस्यमानसमर्प सखिशब्दे तदन्तग्रहणन्तु न, विशेष्यासन्निधानादिति भावः । एतत् हरदत्तानुरोधेन ।

"यस्येति च" (पा०सू० ६।४।१४८) इति सूत्रभाष्यात्तु 'सखि' शब्दस्य तदवयवे लक्षणया सख्यवयवभिन्नयोरिदुतोरित्यर्थः । यथा "अ सन्तस्य" (पा०सू० ६।४।१४) इति सूत्रेऽधातोरित्येतद्घटकधातुपद 'पिण्डग्रः' इत्यादिसिद्ध्यर्थं धात्ववयवे लक्षणाऽऽकरे दृश्यते । तदन्तसञ्ज्ञा पक्षेऽप्यसखीति य्वोरेव विशेषणं, ततस्तदन्तविधिः । "उतश्च प्रत्ययाद्" (पा०सू० ६।४।१०६) इतिवत् । ततश्च सख्यवयवभिन्नेवर्णाद्यन्तमित्यर्थः तदन्तविधिश्च शेषपदार्थविशेषणतया । एवञ्च प्रकृते नैव 'घिसञ्ज्ञा' इ लभ्यते । तत्र हि **भाष्ये** "इवर्णस्य ईति किमुदाहरणम् ? अतिस रागच्छति । यद्यत्र लोपो न स्यात्तदा कृतदीर्घस्य पूर्वान्तवद्भावेन सखि शब्दत्वाद् अतिदेशविषये प्रतिपदोक्तपरिभाषाया अप्रवृत्त्योपसर्जनह्रस्वे कृतेऽपि घिसञ्ज्ञा न स्यात् । लोपे तु लक्षणप्रतिपदोक्तपरिभाषया न दोषः इत्युक्तम् । भवद्रीत्या विशिष्टस्य सखिभिन्नत्वेन घिसञ्ज्ञा निर्बाधैवेति त सङ्गतिः स्पष्टैव । न च लोपेऽपि लिङ्गविशिष्टपरिभाषया दोषः । सखि ब्दस्य तदवयवपरत्वेन प्रातिपदिकग्रहणाभावात् । प्रातिपदिकत्ववदुप पकपदोपादानं हि प्रातिपदिकग्रहणम् । ख्यत्यात्सूत्रे 'किमर्थं विकृत देशो 'न सखिपतिभ्याम्' इत्येवोच्यते, अतिसखेरित्यत्र मा भूत्" इ **भाष्येऽपि** ङ्यन्तप्रकृतिक एवायम् । विहितविशेषणानाश्रयणेनेव प्रति पदोक्तपरिभाषानाश्रयणेनैवैतद् **भाष्यं** प्रवृत्तमिति न तद्विरोध (२)इत्यलम्

योर्घिसंज्ञा भवतीत्यर्थेनादोषात् । एतदेवाभिप्रेत्याह—(१)**अत्र पक्षे** इति ।

(२)**इत्यलमिति । परे** तु असखीत्यस्य सखिभिन्नप्रातिपदिकावयवावित नन्तु यत्र पर्युदस्यमानाऽवयवः पर्युदाससमर्पकं च समुदायबोधकं पदं, तत्र त तदवयवे लाक्षणिकमिति व्याप्तिः, अत एव "इदुदुपधस्य" (पा०सू० ८।३।४१)

पदान्तात्" (पा०सू० ८।४।४२) "नश्छव्यप्रशान्" (पा०सू० ८।३।७) "अत्वसन्तस्य" (पा०सू०६।४।१४) इत्यादौ सर्वत्र प्रत्ययपद–नाम्पद–प्रशान्पद–धातुपदानि तदवयवपराणीति 'अग्निः करोति' 'षण्णामयम्' 'परमप्रशान् करोति' 'पिण्डग्रः' इत्यादौ न षत्व–ष्टुत्वनिषेध–रुत्व–दीर्घाः। अन्यथा अग्निस् इत्यस्य प्रत्ययभिन्नत्वेन तत्र षत्वापत्तेर्दुर्वारत्वात्। एवमन्यत्राप्यूह्यम्। एवञ्च प्रकृते सखिपदं तदवयवे लाक्षणिकं भवतीति कथं सखिभिन्नप्रातिपदिकावयवावित्यर्थ इति चेत्? न, "ख्यत्यात्परस्य" (पा० सू० ६।१।११२) इति सूत्रस्थस्य "किमर्थं विकृतानिर्देशो, न सखिपतिभ्यामित्येवोच्येत अतिसखेरागच्छति" इति भाष्यस्य प्रामाण्येन प्रकृते तादृशार्थकरणात्। अन्यथा घिसंज्ञाया अभावेन गुणाप्राप्त्या तदसङ्गतिः स्पष्टैव। न च ङ्यन्तप्रकृतिक एवायमिति विहितविशेषणमनाश्रित्यैव इदं भाष्यं प्रवृत्तमिति नैतद्विरोध इति वाच्यम्, ङ्यन्तप्रकृतिकसखिशब्दस्य लाक्षणिकत्वेन "शेषो घ्यसखि" (पा०सू० १।४।७) इत्यत्र लक्षणप्रतिपदोक्तपरिभाषयैतत्सखिशब्दग्रहणस्य वक्तुमशक्यत्वात्, ख्यत्यादित्यपेक्षया 'सखिपतिभ्याम्' इतिन्यासस्य गुरुभूततया "सखिपतिभ्यामित्येवोच्येत" इति भाष्यसङ्गत्यर्थं तस्य खित्योरुपलक्षणपरत्वेनावश्यं व्याख्यातव्यत्वेन विहितविशेषणाश्रयणस्य वक्तुमशक्यत्वाच्च, "तस्माद्" (पा०सू० १।१।६७) इति परिभाषाया जागरूकत्वाच्च।

न चैवमपि "यस्येति च" (पा०सू०६।४।१४८) इतिसूत्रस्थभाष्यविरोधः, तत्रहि "इवर्णस्य इति किमुदाहरणम्? अतिसखेरागच्छति यद्यत्रलोपो न स्यात्तदा कृतदीर्घस्य पूर्वान्तवद्भावेन सखिशब्दत्वादतिदेशविषये लक्षणप्रतिपदोक्तपरिभाषाया अप्रवृत्त्या उपसर्जनह्रस्वत्वे कृतेऽपि तत्त्वसत्त्वाद् घिसंज्ञा न स्यात्, लोपे तु लक्षणप्रतिपदोक्तपरिभाषया न दोषः" इत्युक्तम्, भवद्रीत्या विशिष्टस्य सखिभिन्नत्वेन घिसंज्ञा निर्बाधैवेति तदसङ्गतिः स्पष्टैवेति वाच्यम्, लोपेऽपि लिङ्गविशिष्टपरिभाषया ङ्यन्तस्य सखिशब्दत्वेन स्थानिवद्भावेन कृतह्रस्वस्यापि तत्त्वेन असखीतिनिषेधप्रवृत्तेः सुलभत्वेन भाष्यासङ्गत्यापत्तेर्दुर्वारतया एतस्य भाष्यस्यैकदेश्युक्तित्वेनादोषात्। न चास्मिन्पक्षे असखीत्यत्र सखिपदं सख्यवयवे लाक्षणिकमिति तस्य प्रातिपदिकत्वतद्व्याप्यधर्मावच्छिन्नमुख्यविशेष्यताकोपस्थितिजनकत्वाभावान्न लिङ्गविशिष्टपरिभाषाप्रवृत्तिरिति न तदसङ्गतिः, भवन्मते त्वसङ्गतिर्दुर्वारैवेति वाच्यम्, विनापि प्रत्ययमित्यनेन अतिशब्दस्य लोपे ततो ङसि 'सखेः' इत्यत्र लोपाभावे घिसंज्ञाऽनापत्तिरूपदोषस्य जागरूकत्वेन, सखीशब्दे यस्येति लोपाभावे "अतिसखिः" इत्यादौ सखीशब्दे पूर्वान्तवद्भावेन सखिशब्दत्वे ह्रस्वान्ते एकदेशविकृतन्यायेन पुनस्तत्त्वे अतिदेशविषये लक्षणप्रतिपदोक्तपरिभाषाया अप्रवृत्त्याऽनङ्णिद्वद्भावयोरापत्तिरूपदोषान्तरसत्त्वेन च भाष्यस्योपलक्षणतया व्याख्यातुं शक्यत्वादित्याहुः।

**पतिः समा** (पा०सू० १।४।८)। एवकार इष्टतोऽवधारणा[र्थः।] स्मृतिपुराणेषु 'पतये' 'सखिन' इत्यादि व्याकरणानिष्पन्नत्वेनासा[धुत्वे] त्रिशङ्क्वाद्ययाज्ययाजनादाविव तपोमहात्म्येनासाधुप्रयोगेऽपि [ऋषी]णां दोषाभावात् यज्ञे कर्मण्येवासाधुप्रयोगे दोषाच्च। अस्माकमपि स्मृति[पुरा]णाध्ययनविधिबलात् तेषां तपोबलाच्च यज्ञमध्येऽपि तदन्तर्गततत्पाठे दो[षा]भावः। स्वातन्त्र्येणेदृशं प्रयुञ्जाना अस्मदादयः प्रत्यवयन्त्येव। अत [एव] नदीसञ्ज्ञासूत्रे **भाष्ये** 'छन्दोवत् कवयः कुर्वन्ति' इत्युक्त्वा 'न ह्येषे[ष्टि]रस्ति' इत्युक्तम्। "यू स्त्र्याख्यौ" (पा०सू० १।४।३) इति सूत्रे हर[द]त्तग्रन्थे स्पष्टतरञ्चैतत्। समास इत्युक्तेः बहुच्पूर्वे न घित्वम्। अत ["पतिर्वृत्तावेव"] इति (१)नासूत्रि। वर्णसञ्ज्ञापक्षे पत्यवयवेकार (२)इत्यर्थः तदन्तसञ्ज्ञापक्षे पत्यवयवेकारान्त इत्यर्थः। सूत्रे पतिशब्दश्च तदवयवे[इ]कारे लाक्षणिकः। एतेन "शेषो घ्यसखिपती" "पतिसखी समास एव" इ[ति] वा सूत्र्यतामित्यपास्तम्। "यस्येति च" (पा०सू० ६।४।१४८) इति[सूत्र]स्थ**भाष्य**रीत्या 'पतिना' 'सुसख्या' इत्यादीष्टासिद्ध्या तथा न्यास[स्य] (३)कर्त्तुमशक्यत्वादिति स्पष्टमेवेति दिक्।

**नित्यं बहुवचनान्त इति**। "किमः संख्यापरिमाणे" (पा०सू० ५।२।४१) इत्यनेन किंशब्दाद् बहुत्वसंख्यावच्छिन्नसंख्येयविषयप्रश्न [ए]डतिरिति **भाष्ये** स्पष्टत्वादिति भावः।

---

(१)**नासूत्रीति**। वस्तुतस्तु वृत्तिसंज्ञायाः शास्त्रकारैरनुक्त्याऽस्मदादिकृत[संज्ञाया] अव्यवस्थापकत्वेन च 'पतिर्वृत्तावेव' इति न्यास एव वक्तुं न शक्यत इति बोध्यम्। (२)**इत्यर्थ इति**। "पतिः समास एव" (पा०सू० १।४।८) इत्यस्य समासा[भावे] पत्यवयवेकारो घिसंज्ञको न भवतीति प्रकृते नियमस्य निषेधमुखेन प्रवृत्तिः। [विधि]मुखेन प्रवृत्तौ तु पतिभिन्नत्वेन "शेषो घ्यसखि" (पा०सू० १।४।७) इत्यत्र सामान्[यस्य] सङ्कोच इति बोध्यम्। (३)**कर्तुमशक्यत्वादिति**। नागेशमते 'शेषो घ्यसखि[पती'] इति न्यासे 'भूपतिना' इत्याद्यसिद्धिः, 'सखिपती समास एव' इति न्यासे तु 'सुसख्या' इत्यादौ घिसंज्ञापत्तिः। अस्मन्मते च पूर्वन्यासे बहुचि 'बहुपत्या' इत्यादौ घि[संज्ञा]पत्तिः, उत्तरन्यासे 'बहुसखिना' इत्यादौ घिसंज्ञानापत्तिः। एतेन 'पतिर्वृत्तावेव' इ[ति] न्यासोऽपि प्रत्युक्त इति दिक्।

**बहुगण** (पा०सू० १।२।३१)। संख्याप्रदेशेष्वेतत्सञ्ज्ञाकरणज्ञानरूपप्रकरणसत्त्वेऽपि तन्मूलकृत्रिमाकृत्रिमन्यायस्य न प्रवृत्तिः कर्त्तरि कर्मेत्यादाविव। अत एव "संख्याया अतिशदन्तायाः" (पा०सू० ५।१।२२) इति शदन्तपर्युदासः सङ्गच्छते। न हि शदन्ता कृत्रिमा संख्याऽस्ति। तस्मात्संज्ञाप्रदेशेषूभयगतिः। किञ्च लोकप्रसिद्धमहासंज्ञाकरणेन प्रदेशेषु लोकप्रसिद्धार्थस्याप्यवगतिरिति स्पष्टं **भाष्ये**। अत एव 'पञ्चकृत्वः' इत्यादिसिद्धिः। एतन्न्यापयोगस्त्वभ्यासाम्रेडितादिसञ्ज्ञाविषये द्रष्टव्यः। सूत्रे बहुगणग्रहणन्तु तयो(१)र्नियतविषयपरिच्छेदहेतुत्वाभावेनासंख्यात्वात्। बहुत्वादि हि (२)त्र्यादिसंख्याव्यापको (३)धर्मविशेषः। अत एव **भाष्ये** "एतत्सूत्रमतिदेशार्थं यदयमसंख्यां संख्येत्याह" इत्युक्तम्। **यत्तु भाष्ये** "एकादिकया चापि संख्यायते" इत्युक्तं, तस्यायमर्थः—बह्वादिकयाऽपि स्वव्याप्यत्रित्वादिसंख्यया संख्यायते। कतिशब्दोऽपि संख्यानकरणीभूतार्थविषयप्रश्नार्थकतया संख्यानकरणम्। एवं वत्वन्तेऽप्यूह्यम्। यद्वा, चापिशब्दौ वाक्यालङ्कारे। एकादिकया संख्यायते साऽपि प्रदेशेषु यथा गृह्येतेति लोकप्रसिद्धमहासञ्ज्ञाकरणमिति तदर्थः। एतेन 'अर्थान्तरवाचित्वे सति बहुत्ववाचितश्चेत्संख्याकार्यं तर्हि बहुगणयोरेव' इति नियमार्थं तत्। तेन भूर्यादीनां न तेषां वैपुल्याद्यर्थान्तरवाचित्वात्। वैपुल्यं विशालता। विशेष्यविशेषणदलाभ्यामबहुत्ववाचिन एकशब्दस्य बह्वर्थमात्रवाचिनां त्र्यादीनाञ्च न व्यावृत्तिः। यद्वा 'अनियतसंख्यावाचिनाञ्चेद् बहु-

---

बहुगण( पा०सू० १।२।३१ )। (१)नियतविषयपरिच्छेदहेतुत्वेति। यद्धर्मप्रकारकनिश्चयोत्तरं लोके गणनायां प्रसिद्धा ये स्वातिरिक्ता यावद्धर्मास्तद्धर्मप्रकारकसंशयसामान्यं नोदेति तद्धर्मावच्छिन्नवाचकत्वमिति भावः। (२)त्र्यादिसंख्याव्यापक इति। बहुत्वे त्रित्वादिसंख्यांव्यापकत्वस्य सत्त्वेऽपि निरुक्तसंख्यात्वव्याप्ययावद्धर्मप्रकारकसंशयसामान्यनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयताश्रयत्वं नास्तीति न बह्वादिपदं संख्यावाचकमिति भावः। यावत्पदनिवेशाच्च बहुत्वज्ञानस्य एकत्वद्वित्वप्रकारकसंशयप्रतिबन्धकत्वेऽपि न दोषः। (३)धर्मविशेष इति। तथाच त्रित्वाद्यतिरिक्तमेव बहुत्वम्। अत एव दूरस्थसमुदितजनेषु त्रित्वाद्यन्यतमसंख्याप्रतीत्यभावेऽपि बहुत्वभानम्।

गणयोरेव' इति नियमः । अनन्तशब्दवदनन्तवाचिशतशब्दस्य संख्याकार्याभाव इष्ट एवे(१)त्यपास्तम् । सङ्घवैपुल्यवाचकयोर्नेह ग्रहणं परस्परसाहचर्येण त्र्यादिसंख्याव्यापकधर्मवाचिनोरेव ग्रहणात् । 'वतु' इति सानुबन्धनिर्देशो 'ब्राह्मणवत्' इत्यादिव्यावृत्त्यर्थः । डतिस्तद्धित एव वतुसाहचर्यादित्यलम् ।

"ष्णान्ता" (पा०सू० १।१।२४) इत्यतः षडिति वर्तते, (२)संख्येति च प्रकृतं, तदाह—**डत्यन्तेति** । अत एव "षट्कति" (पा०सू० ५।२।५१) इति डडनुवादेन थुग्विहितः । अत एव सञ्ज्ञाविधावपि प्रत्ययग्रहणे तदन्तग्रहणम् । संख्येति किम् ? (३)पतयः ।

**प्रत्ययस्य** (पा०सू० १।१।६१) । अनेकसञ्ज्ञाकरणाद् आवृत्त्या विभक्तिविपरिणामेन च तद्भावितसञ्ज्ञाश्रयणम्, अतो न सङ्करः । तेन 'हन्ति' इत्यादौ "श्लौ" (पा०सू० ६।१।१०) इति द्वित्वं न, तदाह—**लुक्श्लुलुप्शब्दैरिति** । "अदर्शनं लोपः" (पा०सू० १।१।६०) इत्यतोऽदर्शनमित्यनुवर्त्तते । प्रदेशेषु भाविसञ्ज्ञाविज्ञानान्ना(४)न्योन्याश्रयः ।

---

(१)**इत्यपास्तमिति** । **परे** तु संख्यावाचकत्वं संख्यात्वव्याप्यधर्मावच्छिन्नवाचकत्वमेव । अत एव "एकादिकया चापि संख्यायते" इति **भाष्ये** चापिशब्दौ सङ्गच्छेते । अन्यथा बह्वादीनां निरुक्तसंख्यावाचकत्वस्याभावेन तदसङ्गतिः स्पष्टैव । न च "यदयमसंख्यां संख्येत्याह" इति **भाष्यविरोध** इति वाच्यम्, वत्वन्तस्य डतिप्रत्ययान्तस्य च संख्यात्वव्याप्यधर्मावच्छिन्नवाचकत्वरूपसंख्यावाचकत्वस्याभावेन तस्य भाष्यस्य तद्विषयकत्वेनादोषात् । भूर्यादीनान्तु "अनियतसंख्यावाचिनां चेद्बहुगणयोरेव" इत्यादिनियमेनैव वारणं बोध्यमित्याहुः ।

(२)**संख्येति च प्रकृतमिति** । तेन साक्षात्संज्ञानिष्ठविधेयतानिरूपिता या प्रत्ययमात्रवृत्त्युद्देश्यता तादृशोद्देश्यताप्रयोजकं तदादिविशेष्यकतदन्तविधिप्रयोजकमेत्यर्थिकायाः "संज्ञाविधौ" इतिपरिभाषाया अप्रवृत्तिरिति भावः । साक्षात्षट्संज्ञानिष्ठविधेयतानिरूपितोद्देश्यताप्रयोजकत्वस्य संख्यापदे एव सत्त्वेन डतिपदेऽभावात् ।

(३)**पतय इति** । पतिशब्दस्य "पातेर्डतिः" (उ०सू० ५०६) इत्यौणादिकडतिप्रत्ययान्तत्वादिति भावः । न च बहुगणवतुडति संख्या, कति च' इत्येव सूच्यतामिति वाच्यम् । छान्दसडत्यन्तपतिशब्दस्य संख्याषट्संज्ञयोरनापत्तेः ।

(४)**नान्योन्याश्रय इति** । 'अस्य सूत्रस्य शाटकं वय' इतिवाक्यश्रवणे वा-

एकसञ्ज्ञाप्रकरणादन्यदेशस्थत्वेन लोपसञ्ज्ञया आसां समावेशः। तेन प्रत्ययलक्षणसिद्धिः।

**षड्भ्यो** (पा०सू० ७।१।२२)। "जश्शसोः शिः" (पा०सू० ७।१।२०) इत्यतो जश्शसोरिति वर्त्तते। षड्भ्य इति (१)विहितविशेषणम्। तेन गौणे न। 'परमपञ्च' इत्यादौ तु विशिष्टस्यापि संख्याप्रकारकसंख्येयविशेष्यक(२)बोधजनकत्वेन संख्यावाचितया षट्त्वमस्त्येवेति न दोषः।

---

नक्रियायां प्रवृत्तिः 'अस्य सूत्रस्य' इति वाक्यार्थज्ञानात्, तज्ज्ञानं च वानक्रियोत्तरं, तदुत्तरमेव शाटकसिद्धेरित्यन्योन्याश्रयस्य—भाविसंज्ञाविज्ञानाद् 'अस्य सूत्रस्य शाटकं वय' इत्यस्य वानक्रियोत्तरभाविशाटकत्वप्रवृत्तिनिमित्तेन पूर्वं प्रयोग इति यस्य उतस्य सूत्रस्य 'शाटकम्' इति संज्ञा भविष्यति तादृक् वयेत्यर्थे तात्पर्यावधारणेन न प्रसक्तिः, तथैवात्रापि 'यस्य जातस्य लुगित्यादिसंज्ञा भविष्यन्ति तादृशादर्शनस्य लुगादिसंज्ञा' इति विवक्षणादिति भावः।

वस्तुतस्तु लुक्श्लुलुप्पदानां लुक्श्लुलुप्पदप्रयोज्यत्वे, विधेयतायाम्, अदर्शने च खण्डशः शक्तिः। यत्र लुगादिपदं विधेयसमर्पकं तत्रादर्शनरूपखण्डस्यैवोपस्थितिः न तु लुगादिप्रयोज्यत्वरूपखण्डस्य, विधेयतारूपखण्डस्य च, अनुपयोगात्। तन्नियामिका च समभिव्याहृता प्रथमेति। यत्र तु लुगादिपदमुद्देश्यसमर्पकं तत्र खण्डत्रयस्याप्युपस्थितिः। लुगादिपदप्रयोज्यविधेयताश्रयादर्शनरूपार्थलाभस्त्वाकाङ्क्षावैचित्र्यात्। तथा च न लुकि श्लुपदप्रयुक्तं कार्यं, नापि लुपि, न वा श्लौ लुगादिप्रयुक्तकार्यसङ्कर इति भाविसंज्ञाविज्ञानस्य नोपयोग इति। **गुरुचरणास्तु**—लुगादिपदशक्यतावच्छेदकमदर्शनत्वमेवान्यत्सर्वमुपलक्षणमिति वदन्तीति दिक्।

(१) **विहितविशेषणमिति**। "षड्भ्यो लुक्" (पा०सू०७।१।२२) इत्यस्य षट्संज्ञकविशिष्टयोर्जश्शसोर्लुगित्यर्थः। वैशिष्ट्यञ्च—स्वनिष्ठोद्देश्यतानिरूपितविधेयताश्रयत्वसम्बन्धेन। तेन 'पञ्च ब्राह्मणाः' 'षट्कल्पाः' इत्यादौ न दोषः। ब्राह्मणपदोत्तरजसि कल्पवन्तप्रकृतिकजसि च षट्संज्ञकनिष्ठोद्देश्यतानिरूपितविधेयताश्रयत्वस्याभावात्।

(२) **बोधजनकत्वेनेति**। यस्य संख्यावाचकत्वं वक्तव्यं तदन्तपर्याप्तप्रयोजकतानिरूपितप्रयोज्यतावती या विशेष्यता तादृशविशेष्यतानिरूपितप्रकारत्वासमानाधिकरणा या संख्यानिष्ठप्रकारतानिरूपितसंख्येयनिष्ठविशेष्यता तादृशविशेष्यताप्रयोजकतापर्याप्त्यधिकरणत्वरूपसंख्यावाचकत्वस्य परमपञ्चन्शब्दघटकपञ्चन्शब्दे सत्त्वेन "षड्भ्यो लुक्" (पा०सू०७।१।२२) इत्यादावुद्देश्यताया अपर्याप्ताया अपि विवक्षणात् 'परमपञ्च' इत्यादौ न दोष इति भावः। एतेन मूलोक्तादिशा 'त्रिदण्डिनः' इत्यादौ त्रिदण्डिन्नित्यस्य संख्यावाचकत्वं स्यात्, 'परमषट्' इत्याद्यर्थं षान्तग्रहणस्यावश्यकत्वेन तेन

स्पष्टञ्चेदं 'षट्प्रधान एष समासः' इत्यादिना सर्वादिसूत्रे **भाष्ये** । **कैयटस्य** तु प्रमाद इत्यन्यत्र निरूपितम् ।

**प्रत्ययलोपे** (पा०सू० १।१।६२) । (१)प्रत्ययस्येत्यनुवृत्त्या

---

ज्ञापकेनाशब्दसंज्ञेति प्रत्याख्यानपर "स्वं रूपम्" (पा०सू०१।१।६८) इतिसूत्रस्थभाष्यविरोधश्चेत्यपास्तम् । त्रिदण्डिनः' इत्यादौ संख्येयनिष्ठविशेष्यताप्रयोजकतापर्याप्तिः त्रित्वेतन्मात्रस्य न तु त्रिदण्डिन्नित्यस्येति, "षड्भ्यो लुक्" (पा०सू०७।१।२२) इत्यस्य षट्संज्ञकनिष्ठोद्देश्यतानिरूपितविधेयताश्रययोर्जश्शसोर्लुगित्यर्थेन तत्रोद्देश्यताया अपर्याप्ताया विवक्षणेन 'परमषट्' इत्यादौ षडित्यत्रापर्याप्तोद्देश्यतायाः सत्त्वेनोक्तभाष्यविरोधाभाव इति चादोषात् ।

'प्रियपञ्चानः' इत्यादौ बहुव्रीहिप्रयोज्यविशेष्यतानिरूपितप्रकारतासामानाधिकरण्यमेव संख्येयनिष्ठविशेष्यताया इति नातिव्याप्तिः । 'प्रियपञ्चाद्रौपदी' इत्यादौ "डाबुभाभ्याम्" (पा०सू०४।१।१३) इति सूत्रेऽनुवृत्तेन "न षट्" (पा०सू०४।२।१०) इत्यनेन डाब्निषेधस्तु पञ्चनित्यत्र बहुव्रीहिप्राक्कालिकस्य निरुक्तसंख्यावाचकत्वस्य सत्वात् सुलभ इति सर्वं विस्तरेण "नामि" (पा०सू०६।४।३) इति सूत्रटिप्पणे निरूपितमिति तत एवावगन्तव्यमिति दिक् ।

**प्रत्ययलोपे** (पा०सू० १।१।६२) । **(१)प्रत्ययस्येत्यनुवृत्त्येति** । अत्रेदं तत्त्वम्–"प्रत्ययस्य लुक्" (पा०सू० १।१।६१) इत्यतः प्रत्ययस्येत्यनुवृत्त्या "लोपे प्रत्ययलक्षणम्" इत्येव सिद्धे पुनः प्रत्ययग्रहणं षष्ठीप्रकृतिप्रयोज्यप्रत्ययत्वव्याप्यधर्मावच्छिन्नविषयता प्रत्ययावयवे स्वीक्रियत इति बोधनाय । तेन "इदुदुपधस्य" (पा०सू० ८।३।४१) इत्यत्र 'प्रत्ययभिन्नो यो विसर्गः'इति सामानाधिकरण्येनान्वयेऽपि 'कविभिः कृतम्' इत्यादौ न दोषः । न च प्रत्ययस्येत्यनुवृत्त्यैव सिद्धे आद्यप्रत्ययग्रहणमवयवलोपे मा भूत्, तेन 'आघ्नीय' इत्यादौ नानुनासिकलोप इति भाष्यविरोध इति वाच्यम्, तस्यापि भाष्यस्यास्मिन्नेवार्थे तात्पर्यमिति कल्पनेनादोषात् । अत एव "आदेशप्रत्यययोः"(पा०सू० ८।३।५९) इत्यत्रादेशः प्रत्ययश्च यः सकार इति सामानाधिकरण्येनान्वयेऽपि 'रामेषु' इत्यादौ षत्वं सिध्यति । अत्रैव "सात्पदाद्योः" (पा०सू० ८।३।१११) इतिसूत्रस्थं सातिग्रहणमपि ज्ञापकम् ।

"प्रत्ययलोपे" (पा०सू० १।१।६२) इति सूत्रे स्थानिवदित्यनुवृत्त्यैव सिद्धे प्रत्ययलक्षणग्रहणं प्रत्ययस्य यत्रासाधारणं रूपमाश्रीयते, अर्थात् प्रत्ययत्वव्याप्यधर्मावच्छिन्ननिमित्तताके कार्ये कर्तव्ये एव प्रत्ययलक्षणं यथा स्यादित्येतदर्थम् । तेन 'सुदृषत् प्रासादः' इत्यत्र प्रत्ययलक्षणेन 'अत्वसन्तस्य' इति दीर्घो न । अस्त्वे प्रत्ययत्वव्याप्यत्वाभावेन प्रत्ययलक्षणाभावात् ।

सिद्धे आद्यप्रत्ययग्रहणमवयवलोपे मा भूत्। तेन 'आघ्नीय' इत्यादौ नानुनासिकलोप इति स्पष्टं **भाष्ये**। इदमेव प्रत्ययग्रहणं ज्ञापकमवयवेऽपि प्रत्ययत्वव्यवहारस्य। एवञ्च "आदेशप्रत्यययोः" (पा०सू० ८।३।५१) "इदुदुपधस्य" (पा०सू० ८।३।४१) इत्यनयोर्लक्षणादि नाश्रयणीयं, "सात्पदाद्योः" (पा०सू० ८।३।१११) इति च चरितार्थम्।

(१)स्थानिवत्सूत्रेण सिद्धे इदं सूत्रं नियमार्थमिति **भाष्यम्**।

---

**(१)स्थानिवत्सूत्रेण सिद्धे इति।** स्थानिवत्सूत्रेणैव सिद्धे इदं सूत्रं नियमार्थम्। प्रत्ययलोपे प्रत्ययलक्षणमेव, न स्थानिवदिति। तथाच स्थानिवत्सूत्रे आदेशपादार्थे प्रत्ययलोपातिरिक्तत्वेन सङ्कोच इति 'सुदृषत् प्रासादः' इत्यादौ स्थानिवद्भावेनासन्तत्वमादायापि न "अत्वसन्तस्य" (पा०सू० ६।४।१४) इति दीर्घः। न चातुसाहचर्यात्सकारप्रश्लेषाद्वाऽसन्तमपि श्रूयमाणासन्तमेव गृह्यते इति, निर्दिश्यमानपरिभाषया वा 'सुदृषत् प्रासादः' इत्यादौ श्रूयमाणस्यासोऽभावेन, निर्दिश्यमानस्यासोऽभावाद्वा न दीर्घप्राप्तिरिति उक्तं निष्फलमिति वाच्यम्, यवमच्छब्दात् णिजन्तात् क्विपि णिलोपटिलोपयोः ततः सुविभक्तौ तत्र अतोरपि अश्रूयमाणस्य सम्भवेन श्रूयमाणत्वेनातुसाहचर्यस्य ग्रहीतुमशक्यत्वात् साहचर्यपरिभाषाया अनित्यत्वाच्च, सुदृषच्छब्दात्प्रत्ययलक्षणेन स्थानिवद्भावेन वाऽसन्तत्वमादाय "अस्मायामेधा" (पा०सू० ५।२।१२१) इति विनेरापत्तेर्दुर्वारत्वाच्च। किञ्च, शोभना दृषद् यस्यां सा सुदृषत् नगरी इत्यत्र सुलुकः स्थानिवद्भावेनोगित्वमाश्रित्य "उगितश्च" (पा०सू० ४।१।६) इतिङीबापत्तेः, अजायाः क्षीरमजक्षीरमित्यत्र असः स्थानिवत्त्वेन स्यादेशापत्तेश्च। नियमे तु प्रत्ययलोपसत्त्वेन स्थानिवत्त्वाप्रवृत्त्या प्रत्ययलक्षणस्य चाप्राप्त्या न दोषः। "अत्वसन्तस्य" (पा०सू०६।४।१४) इत्यत्रास्पदोत्तरं षष्ठ्या अभावेन निर्दिश्यमानपरिभाषाया अप्रवृत्तेश्च।

न चैवमपि "अर्थवद्ग्रहणे" (प०भा०) "लक्षणप्रतिदोक्त" (प०भा०) "प्रत्ययाप्रत्यय" (प०भा०) "निरनुबन्धक" (प०भा०) इति परिभाषाचतुष्टयस्यानिनसन्ग्रहणेष्वप्रवृत्तये "अनिनस्मन्" (प०भा०) इति परिभाषयाऽन्त्वादिषु वर्णत्वव्याप्त्वारोपस्यावश्यकत्वेनानल्विधावेतिनिषेधादेव न स्थानिवद्भावो, नापि प्रत्ययलक्षणमिति 'सुदृषत् प्रासादः' इत्यादौ नोक्तदोषावतार इति वाच्यम्, रमाशब्दाण्ण्यन्तात् क्त्वाप्रत्यये प्रादिना समासे "समासे नञ्" (पा०सू० ७।१।३७) इत्यनेन ल्यबादेशे 'प्ररम्य' इत्यत्र "प्रत्ययाप्रत्यययोः" (प०भा०) इति परिभाषया इदानीमापः प्रत्ययस्यैव ग्रहणापत्त्या तत्परिभाषानङ्गीकारेऽपि प्रत्ययस्याऽपि आपो ग्रहणापत्त्या प्रत्ययलक्षणेन स्थानिवद्भावेन वाऽऽप्त्वमादाय "विभाषाऽऽपः" (पा०सू० ६।४।५७) इत्यनेन णेरयादेशापत्तेः। नियमे तु प्रत्ययलोपसत्त्वेन स्थानिवद्भावाप्रवृत्त्या प्रत्यय-

प्रत्ययस्यासाधारणं रूपं यत्राश्रीयते तत्रैवेति । न चैवं "दाधर्ति" (पा० सू० ७।४।६५) इति सूत्रे "तेतिक्ते इति किं निपात्यते ? आत्मनेपदम्, नैतदस्ति "अनुदात्तङित" (पा० सू० १।३।१) इत्येवसिद्धम् ,नियमार्थं तर्हि भविष्यति अत्रैव यङ्लुगन्तस्य, नान्यत्र बेभिदीति" इत्युक्तम्; अस्य नियमत्वे तेनात्मनेपदं दुर्लभं ङित्त्वस्य प्रत्ययाप्रत्ययसाधारणत्वादिति वाच्यम् , आत्मनेपदमित्यस्यैव सिद्धान्त्युक्तित्वात् । ततो विध्यर्थमिदमिति वार्तिकानुसारिणा "अनुदात्तङित" (पा०सू० १।३।१) इत्येव सिद्धमिति शङ्किते तदनुसार्येकदेशिन एव तत्समाधानमित्यदोषादित्यन्यत्र विस्तरः ।

(१)प्रत्ययलोपे प्रत्ययवदिति सिद्धे लक्षणग्रहणं प्रत्ययनिमित्तकमेव,

---

स्यासाधारणं रूपं यत्राश्रीयते तत्रैव प्रत्ययलक्षणमिति आप्त्वस्याप्लृधातावपि सत्त्वेनाप्त्वं प्रत्ययाप्रत्ययसाधारणमिति प्रत्ययलक्षणस्याप्यप्रवृत्त्या आप्लृधातोरेव "विभाषाऽपः" (पा०सू० ६।४।५७) इति सूत्रे ग्रहणमिति न दोषः ।

न च 'मित्रशीः' 'अतृणेड्' इत्यादौ "शास इदङ्हलोः" (पा०सू० ६।४।३४) "तृणह इम्" (पा०सू० ७।३।९२) इत्यादि न स्यात्। प्रत्ययलोपसूत्रस्य स्थानिवत्सूत्रनियामकत्वसिद्ध्यर्थं नियम्यस्थानिवत्सूत्रमात्रविषयकत्वावश्यकतयाऽत्र सूत्रे 'अनल्विधौ' इत्यस्यानुवृत्तेः सत्त्वेन हलादित्वस्य अल्त्वव्याप्यधर्मघटितत्वात् । प्रत्ययलक्षणाप्रवृत्तेरिति वाच्यम् , "शास इदङ्हलोः" (पा०सू० ६।४।३४) इति सूत्रे हलिति न क्रियते "शास इत्" "अङि" इति च योगो विभज्यते, अजादौ चेदङ्येवेति नियमेन "तृणह इम्" (पा०सू० ७।३।९२) इत्यत्र हलीति पदमननुवर्त्य "नाभ्यस्तस्य" (पा०सू० ७।३।८७) इति सूत्रात् नेति अचीति चानुवर्त्य अजादौ न भवतीति निषेधेन च इदादेशेमागमयोर्नैमित्तिकतया तत्र प्रत्ययलक्षणानावश्यकत्वेन दोषाभावात् ।

(१)प्रत्ययलोपे प्रत्ययवदिति सिद्धे इति । प्रत्ययलोपे प्रत्ययवदित्येव सिद्धे लक्षणग्रहणं प्रत्ययत्वव्याप्यधर्मावच्छिन्ननिमित्तताके एव कार्ये कर्तव्ये प्रत्ययलक्षणं यथा स्यादित्येतदर्थम्। अत एव 'नखभिन्नः' इत्यादौ प्रत्ययलक्षणेन भिस ऐस् न । न च लुगुत्तरमपि प्रत्ययलक्षणेन ऐसः प्राप्त्या अन्तरङ्गनिमित्तविनाशकत्वस्य लुक्यभावाद् "अन्तरङ्गानपि" (प०भा०) इति परिभाषाया अप्रवृत्त्या लुकः पूर्वमेवैसि ततो लुकि लक्ष्ये लक्षणन्यायेन पुनरैसोऽप्रवृत्त्या दोषाभाव इति लक्षणग्रहणं व्यर्थमिति वाच्यम् , पञ्चभिः खट्वाभिः क्रीतं पञ्चखट्म् इत्यत्र क्रीतप्रत्ययलुकि टाब्लुकि च टाब्लुकः पूर्वमदन्तत्वाभावेनैसादेशाप्राप्त्या लक्ष्येलक्षणन्यायाविषयत्वेन भिसः प्रत्ययलक्षणेन ऐसादेशवारणाय, रमायाः पुत्रः रमापुत्र इत्यादौ निरुक्तदिशा पूर्वं याटि

निर्दिश्यमानपरिभाषया याड्राहितस्य लुकि याट्श्रवणाभावाय च प्रत्ययानिमित्तककार्ये एव प्रत्ययलक्षणं न तु प्रत्ययोद्देश्यककार्ये इत्यर्थस्यावश्यं वक्तव्यत्वात् ।

इदमत्रावधेयम् , यद्यपि सर्वत्र नियमस्थले नियामकशास्त्रीयोद्देश्यतावच्छेदकव्यापकं नियम्यशास्त्रीयोद्देश्यतावच्छेदकव्याप्यं च यद्रूपं तदवच्छिन्नातिरिक्तत्वेन सङ्कोचो नियम्यशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने भवति । यथा 'समासाश्च' इति शास्त्रीयोद्देश्यतावच्छेदकं समासत्वं, तद्व्यापकम्—'अर्थवत्' इति शास्त्रीयोद्देश्यतावच्छेदकमर्थवत्त्वं तद्व्याप्यं च यत् पदसंज्ञकपूर्वभागकप्रत्ययानुत्तरभागकसमुदायत्वं तदवच्छिन्नातिरिक्तत्वेन नियम्यशास्त्रीयोद्देश्यतावच्छेदकार्थवत्त्वावच्छिन्ने सङ्कोचः । तेन 'गामानय' इत्यत्र तथासमुदायसत्त्वेन पूर्वसूत्रेण न प्रातिपदिकसंज्ञा, तथाऽपि नियामकशास्त्रीयोद्देश्यतावच्छेदकरूपमात्रावच्छिन्नातिरिक्तत्वेन सङ्कोचे समासातिरिक्तस्य अर्थवत्समुदायस्य प्रातिपदिकसंज्ञेति नियम्यशास्त्रस्यार्थे जाते 'राजपुरुषः' इत्यादौ न पूर्वसूत्राप्रवृत्तिपूर्वकस्वप्रवृत्तिव्यतिरिक्तं फलमिति *स्नुषाश्वश्रून्यायप्रसङ्गो यत्र तत्र सर्वत्र नियामकशास्त्रीयोद्देश्यतावच्छेदकव्यापकरूपावच्छिन्नातिरिक्तत्वेन सङ्कोचः । यत्र तु स नास्ति तत्र व्यापकरूपेण सङ्कोचे प्रमाणाभावेन उपात्तरूपातिरिक्तत्वेनैव सङ्कोचः । तथाच प्रकृते स्थानिवत्सूत्रीयोद्देश्यतायां प्रत्ययलोपातिरिक्तत्वेन सङ्कोचेऽपि यशस्शब्दाण्णिजन्तात्क्विपि टिलोपणिलोपयोः असः प्रत्ययत्वाभावेन नियमाप्राप्त्या स्थानिवद्भावेनाऽसन्तत्वाद् "अस्मायामेधास्रजो विनिः" (पा०सू० ५।२।१२१) इति विनिप्रत्यये 'यश्वी" इति फलसत्त्वेन तन्न्यायाप्राप्त्या उपात्तरूपातिरिक्तत्वेनैव सङ्कोचः । प्रत्युत लोपातिरिक्तत्वेनैव सङ्कोचे 'यश्वी' इत्यस्यासिद्ध्यापत्तिः स्यात् । प्रत्ययलक्षणं तु न सम्भवति । प्रत्ययत्वव्याप्यधर्मावच्छिन्ननिमित्तताके एव तत्प्रवृत्तेर्निरुक्ततया असस्त्वस्य प्रत्ययत्वव्याप्यत्वाभावेन तदप्राप्तेः ।

ननु अत्र मते प्रत्ययलक्षणस्य नियमपरत्वेन व्याख्यानात् स्थानिवत्सूत्रमात्रविषयतया अत्रानल्विधावित्यनुवृत्तेः सत्त्वेन 'आघ्नीय' इत्यत्र झलादित्वनिमित्तकेऽनुनासिकलोपे कर्तव्येऽनल्विधाविति निषेधेनैव प्रत्ययलक्षणाप्रवृत्तेः सिद्धत्वात् प्रथमप्रत्ययग्रहणं व्यर्थम् । न च तस्य षष्ठीप्रकृतिप्रयोज्यप्रत्ययत्वव्याप्यधर्मावच्छिन्नविषयता प्रत्ययावयवेऽपि स्वीक्रियते इति ज्ञापनार्थतया साफल्यमिति वाच्यम् , ज्ञापनोत्तरमपि वैयर्थ्यस्य तदवस्थत्वाद् ; इति चेत् ? न, प्रथिमानमाचष्टे प्रथमयति ततः क्विपि णिलोपटिलोपयोः तस्य उपेत्यव्ययेनाव्ययीभावसमासे 'उपप्रथिमम्' इत्यत्र टिलोपस्य स्थानिवद्भावेन "अनश्च" (पा०सू० ५।४।१०८) इति टजर्थं, वाग्मिनमाचष्टे वाग्मयति ततः क्विपि बहवो वाग्मो यस्यां सा बहुवाग्म्का इत्यत्र स्थानिवद्भावेन इन्नन्तत्व-

---

*स च यथा—भिक्षामटते बटवे भिक्षां प्रत्याचक्षाणां स्वस्नुषां भर्त्सयित्वा श्वश्रूः पुनस्तमाहूय समागते तस्मिन्नास्ति भिक्षा, निर्गच्छेति तथैव प्रत्याचष्टे इति ।

न तु प्रत्ययस्थानिकमित्यर्थलाभार्थम् । तेन 'नखभिन्नः' इत्यादावैसादिकं

---

माश्रित्य "इनः स्त्रियाम्" (पा०सू० ५।४।१५२) इति कप्प्रत्ययार्थं, सर्वत आचष्टे सर्वतयति ततः क्विपि 'सर्वात्' इत्यत्र स्थानिवद्भावेनासन्तत्वमाश्रित्य "अत्वसन्तस्य"(पा० सू०६।४।१४) इति दीर्घार्थं, सर्वाद् विद्यते यस्य ययोर्वा 'सर्वत्वी 'सर्वत्विनौ'इत्यत्र स्थानिवद्भावेनाऽसन्तत्वमाश्रित्य "अस्मायामेधास्रजो विनिः" (पा०सू० ५।२।१२१) इति विनिप्रत्ययार्थं च स्थानिवत्सूत्रे प्रत्ययपर्याप्तस्थानिताकलोपातिरिक्तत्वेनैव सङ्कोचो यथा स्यात् न तु प्रत्ययावयवलोपातिरिक्तत्वेनापि इत्येतदर्थं तस्यावश्यकत्वात् । अन्यथा उक्तोदाहरणेषु प्रत्ययावयवलोपसत्त्वेन स्थानिवत्त्वाप्रवृत्तौ अन्त्वादीनां प्रत्ययत्वव्याप्यत्वाभावेन प्रत्ययलक्षणाप्रवृत्तेश्च तदसिद्ध्यापत्तिरिति दिक् । एतत्सर्वं **भाष्यकृन्मतानुरोधेन।**

वार्तिककारस्त्वल्विधावपि प्रत्ययलक्षणार्थमिदं सूत्रं स्वीकरोति । अत एव 'मित्रशीः' 'अतृणेड्' इत्यादौ न दोषः । अत्र मतेऽपि द्वितीयप्रत्ययग्रहणात् गवे हितं गोहितम् इत्यत्र चतुर्थ्येकवचनस्य "सुपो धातुप्रातिपदिकयोः" (पा०सू० २।४।७१) इत्यनेन लुकि "एचोऽयवायावः" (पा०सू० ६।१।७८) इत्येतच्छास्त्रनिमित्ततायां प्रत्ययत्वव्याप्यधर्मावच्छिन्नत्वाभावेन आवादेशे कर्तव्ये न प्रत्ययलक्षणम् । अन्यथा प्रत्ययपर्याप्तस्थानिताकलोपसत्त्वेन प्रत्ययलक्षणादवादेशापत्तेः । न च "न लुमता" (पा०सू० १।१।६३) इति निषेधेनावादेशो नेति वाच्यम्, तस्य लुप्तप्रत्ययनिमित्तकाङ्गसंज्ञावत्पर्याप्तोद्देश्यताके एव प्रवृत्त्या अवादेशस्यौकारमात्रोद्देश्यकत्वेन तस्य चाङ्गत्वाभावेन तदप्रवृत्तेः । निरूपयिष्यते चेदमनुपदे इति तत एवावगन्तव्यम् ।

नन्वेवमपि चित्रायां जाता चित्रा इत्यत्र अणो लुकि तस्मादण्णन्तत्वनिमित्तके "टिड्ढा" (पा०सू० ४।१।१५) इति सूत्रेण ङीपि कर्तव्ये प्रत्ययत्वव्याप्यधर्मावच्छिन्ननिमित्तकत्वेन प्रत्ययलक्षणापत्तिरिति चेत्? न, 'प्रत्ययलोपे तल्लक्षणम्' इतिन्यासे 'प्रत्यासत्त्या प्रत्ययत्वव्याप्येतिपूर्वोक्तार्थलाभसम्भवे प्रत्ययग्रहणं प्राधान्येन यत्र प्रत्ययस्य निमित्तत्वेनाश्रयणं तत्रैव प्रत्ययलक्षणमित्यर्थलाभार्थमिति स्वावयवनिष्ठविशेष्यतानिरूपितप्रकारत्वासमानाधिकरणा या प्रत्ययत्वव्याप्यधर्मावच्छिन्ना विषयता तादृशविषयताके कार्ये एव प्रत्ययलक्षणमित्यर्थस्य फलिततया प्रकृते अत इत्यनुवृत्ताकारे अण्पदस्य विशेषणतया प्रत्ययस्याप्राधान्येनाश्रयणात् तदप्रवृत्तेः । एतन्मूलकमेव "वर्णाश्रये नास्ति प्रत्ययलक्षणम्" (प०भा०)इति वर्णप्राधान्यविषयमेतत्' इति चोच्यते । अनेन तत्परिभाषायामेतदेव ज्ञापकमिति लभ्यते इत्यन्यत्र विस्तरः ।

'सुदृषत् प्रासादः' इत्यादौ दोषवारणं तु "अनिनस्मन्" (प०भा०) इति परिभाषया अन्त्वादौ वर्णत्वव्याप्यत्वस्यातिदेशेनैव बोध्यम् । युप्लुवोः साहचर्याद् "विभाषाऽऽपः" (पा०सू० ६।४ ५७) इत्यत्र आप्लृधातोरेव ग्रहणमिति पूर्वोक्तदोषवारणं बोध्यमिति दिक् ।

नेत्येके। अतिदेशेनाहार्यतद्बुद्धिसम्पादनेऽप्यु(१)च्चारणप्रसङ्गरूपषष्ठ्यर्थाभावान्नैसादीति तद्व्यर्थमित्यपरे।

**कार्यमिति**। प्राधान्यात् कार्यातिदेशोऽयमिति भावः। "इहापि परिवीरिति शास्त्रपरविप्रतिषेधेन परत्वाद्दीर्घत्वं भविष्यति" इति **भाष्येण** तृज्वत्सूत्रे शास्त्रकार्यातिदेशयोरैक्यकथनेन चातिदिश्यमानकार्याणामुत्पत्तिदेश एव देश इत्यङ्गीकारात् 'परिवीः' इत्यत्र तुग्दीर्घौ पर्यायेण न; किंतु दीर्घ एव परत्वात्। अन्यथाऽनेनैवोभयोर्विधानात्परत्वाभावेन पर्यायो दुर्वार इति बोद्धव्यम्। तदाह—**जसि चेति गुणे प्राप्ते इति** *।

**न लुमता** (पा०सू० १।१।६३)। लुशब्दयुक्ता लुमन्तस्तदाह—**लुगित्यादि। अङ्गकार्यमिति**। लुप्तप्रत्यये परतो यः पूर्वस्तत्प्रकृतिभूतो लब्धाङ्गसञ्ज्ञकस्तदुद्देश्यकं यत्कार्यमाङ्गमनाङ्गं वे(२)त्यर्थः। तेन 'पञ्च' इत्यादौ पदसञ्ज्ञा भवति। राजपुरुषादौ भसञ्ज्ञा च न। अङ्गसञ्ज्ञा

---

(१)**उच्चारणप्रसङ्गरूपषष्ठ्यर्थाभावादिति**। चिन्त्यमिदम्, वृत्तिविशेष्यतावच्छेदकतावच्छेदकताकेष्टसाधनत्वप्रकारकभ्रमविषयत्वप्रकारकज्ञानीयविशेष्यतावच्छेदकरूपावच्छिन्नविशेष्यताकेष्टसाधनत्वप्रकारकप्रमाविषयत्वप्रकारकज्ञानीयविशेष्यतावच्छेदकतावच्छेदकताया एव स्थानपदार्थत्वेन स्थानपदार्थस्योच्चारणघटितत्वस्याभावात्। स्थानपदार्थस्योच्चारणघटितत्वे 'दर्भाणां स्थाने शरैः प्रस्तरितव्यम्' इत्यादौ स्थानपदार्थानुपपत्तेः। "इको यणचि" (पा०सू० ६।१।७७) "दर्भाणां स्थाने शरैः प्रस्तरितव्यम्" इत्यादिशास्त्रैरिक्कर्मकमुच्चारणं दर्भकरणप्रस्तरणं चेष्टसाधनत्वप्रकारकभ्रमविषयः, यण्कर्मकमुच्चारणं शरकरणप्रस्तरणं च इष्टसाधनत्वप्रकारकप्रमाविषय इत्येव बोधनादिति "स्थानेऽन्तरतमः" (पा०सू० १।१।५०) इति सूत्रे विस्तर इति दिक्।

(२)**इत्यर्थ इति**। लुप्तप्रत्ययाव्यवहितपूर्वत्वेन साक्षादवच्छिन्ना लुप्तप्रत्ययनिमित्तकाङ्गसञ्ज्ञावत्पर्याप्तधर्मेण साक्षात्परम्परया वा अवच्छिन्ना च योद्देश्यता तादृशोद्देश्यताके कार्ये प्रत्यलक्षणं न भवतीति "न लुमताङ्गस्य" (पा०सू० १।१।६३) इति सूत्रार्थ इति भावः। तेन राजपुरुषादौ भसञ्ज्ञा 'परमत्रिपुत्रः' इत्यादौ त्रयादेशश्च न भवति। साक्षाल्लुप्तप्रत्ययाव्यवहितपूर्वत्वावच्छिन्नत्वानिवेशाद् 'उत्क्राम' इत्यादौ न दोषः। विस्तरस्तु "वर्णाश्रये" (प०भा०) इति परिभाषाव्याख्याने परिभाषेन्दुटिप्पणे द्रष्टव्य इति दिक्।

---

*'जसि चेति विहितेऽनेन गुणे प्राप्ते इत्यर्थः' इति मुद्रितपुस्तकेऽधिकः पाठः।

तु यथोद्देशत्वात् प्रत्ययसत्ताकाले जाता तिष्ठत्येव। तत्काले कार्याभावादप्रवृत्तावपि प्रत्ययलक्षणेन सा। तस्या लब्धाङ्गसञ्ज्ञककार्यत्वाभावेन निषेधाप्रवृत्तेः। स्पष्टञ्चेदं "युवोरनाकौ" (पा०सू०७।१।१) इत्यत्र **कैयटे**।

न लुमता" (पा०सू० १।१।६३) इ·यस्यानित्यत्वादङ्गसञ्ज्ञायामप्रवृत्तिरिति (१)कश्चित्। अत एव पञ्चभिः क्रोष्ट्रीभिः क्रीतं कुलमिति "तद्धितार्थ" (पा०सू० २।१।५१) इति समासे ठको "अध्यर्ध" (पा०सू० ५।१।२८) इति लुकि "लुक्तद्धित" (पा०सू० १।२।४९) इति स्त्रीप्रत्ययलुकि च 'पञ्चक्रोष्टृ' इत्यत्र (२)तृज्वत्त्वम्। तदुक्तं **भाष्ये** तृज्वदितिसूत्रे—"न चापरं निमित्तमाश्रीयते, किं तर्हि ? अङ्गस्य क्रोष्टुस्तृज्वदिति; अङ्गसञ्ज्ञा च भवति (३)प्रत्ययलक्षणेन" इति। न चोरदत्त्ववत् तृज्वत्त्वेऽपि परनिमित्ताश्रयणमिति 'पञ्चक्रोष्टृ' इत्यस्यासिद्धिरिति वाच्यम्, "उरत्" (पा०सू० ७।४।६६) इत्यत्र शब्दतः परस्य निमित्तत्वानाश्रयणेऽपि(४)अङ्गसञ्ज्ञाद्वारोरदत्त्वस्यापि परनिमित्तकत्वेन स्थानिवत्त्वप्रवृत्तिरित्येव "लिटयभ्यासस्य" (पा०सू० ६।१।१७) इति सूत्रस्थ**भाष्या**शयात्। नियमतः परबुद्धेः पूर्ववृत्तितया परनिमित्तत्वात्। अत एव 'चर्करीति' 'अजर्घाः' इत्यादावत्त्वप्रवृत्तिः। "अचिश्नु" (पा०सू० ६।४।७७) इत्यादावजादिप्रत्यय इत्यर्थस्तु अङ्गस्येतिषष्ठ्या 'निमित्ते' इत्यध्याहारेण तस्य विशे-

---

(१)**कश्चिदिति**। अत्रारुचिबीजन्तु अङ्गसञ्ज्ञाया उपजीव्यत्वेन तन्निषेधो "न लुमताऽङ्गस्य" (पा०सू० १।१।६३) इत्यनेन कर्तुमशक्य इति। (२)**तृज्वत्त्वमिति**। पूर्वं जातं तिष्ठत्येवेति शेषः। तथाहि, 'पञ्चक्रोष्टृ' इत्यत्र प्रत्ययलक्षणेनाङ्गसञ्ज्ञायां लुक्यपि तृज्वद्भावप्राप्त्या "लुक्तद्धिते" (पा०सू० १।२।४९) इति लुकः अन्तरङ्गस्त्रियांचेतिशास्त्रनिमित्तविनाशकत्वाभावेन "लुक्तद्धिते" (पा०सू० १।२।४९) इत्यतः पूर्वमेव तृज्वद्भावेऽपि पश्चाद् "अध्यर्ध"(पा०सू० ५।१।२८) इति लुकि "लुक्तद्धित" इति स्त्रीप्रत्ययलुकि च पञ्चक्रोष्टृ इति तृज्वद्भावघटितस्य निर्बाधत्वात्।

(३)**प्रत्ययलक्षणेनेतीति**। तथा च लुकोऽन्तरङ्गनिमित्तविनाशकत्वाभावेन "अन्तरङ्गान्" (प०भा०) इति परिभाषाया अप्राप्त्या लुकः प्रागेव "स्त्रियां च" (पा० सू० ७।१।९६) इति तृज्वद्भावो भवतीति भावः। (४)**अङ्गसञ्ज्ञाद्वारेति**। "अचः परस्मिन्" (पा०सू० १।१।५७) इत्यत्रान्यथासिद्धमपि परम्परया निमित्तं निमित्तपदेन

ष्यतया यथाकथञ्चिदुपपाद्यः, आकडाराधिकारस्थेषु (१)कार्यकालत्वस्याभावाच्च । एतेन कार्यकालपक्षेऽपि क्रोष्टुशब्दः प्रत्ययेऽङ्गसञ्ज्ञो भवति, अङ्गसञ्ज्ञकस्य च तस्य तृज्वत्त्वं स्त्रियामित्येवार्थः । "उरत्" (पा०सू० ७।४।६६) इत्यादौ तु आवृत्त्याऽत्त्वं प्रति निमित्तताऽपि 'वव्रश्च' इति लक्ष्यानुरोधात् । न तथा प्रकृते, लक्ष्यानुरोधादेवेति तदाशयः । पैदकवाक्यतयाऽन्वयस्तु सञ्ज्ञासूत्राणां दुर्लभ इत्यन्यत्र निरूपितम् । 'चर्करीति' 'अजर्घाः' इत्यादौ तु "न लुमता" (पा०सू० १।१।६३) इतिनिषेधानित्यत्वादत्त्वप्रवृत्तिः 'त्रपो' इत्यादौ गुणवत् । अङ्गाक्षिप्तप्रत्ययनिमित्तं लुकि भवत्येवेति तु भ्रुवे हितं भ्रूहितमित्यादावुवङापत्त्या चिन्त्यम्—इत्यपास्तम् ।

**त्रिषु सरूपा इति ।** "ङे प्रथमयोः" (पा०सू० ७।१।२८) इति सूत्रे 'युष्मान्' इत्यादौ "तस्माच्छसो नः" (पा०सू० ६।१।१०३) इत्युपन्यासपरेण **भाष्येण** "स्वमोर्नपुंसकात्" (पा०सू० ७।१।२३) इति सूत्रे शिशी नुमादिभिर्युष्मदाद्यादेशानां विप्रतिषेधपरेण वार्त्तिकेन, तद्भाष्येण च, "न षट्" (पा०सू० ४।१।१०) इति निषेधेन च लिङ्गसत्ताबोधनेऽपि लिङ्गबोधकप्रत्ययानुत्पत्त्या रूपे न विशेष इत्यर्थः । "साम आकम्" (पा० सू० ७।१।३३) इतिसूत्रस्थस्य "आलिङ्गे युष्मदस्मदी" इति **भाष्यस्य** पदान्तरसन्निधानं विना लिङ्गविशेषो युष्मदस्मच्छब्दमात्रात् न प्रतीयते इत्यर्थ इति दिक् ।

**त्रेस्त्रयः** (पा०सू०७।१।५३) । अयं न सान्तो "निजां त्रयाणाम्" (पा०सू०७।४।७५) इति निर्देशात् त्रेर(२)यङ् न कृतः "अयङ्यि" गृह्यते इति भावः ।

(१)**कार्यकालत्वस्याभावादिति ।** कार्यकालपक्षीयविधिदेशीयत्वरूपांशस्याभावादित्यर्थः । निरूपितं चैतद्विस्तरेण परिभाषेन्दुटिप्पणे यथोद्देशपरिभाषाव्याख्यावसरे इति तत एवावगन्तव्यम् ।

**त्रेस्त्रयः (पा०सू० ७।१।५३) (२)अयङ् न कृत इति ।** "ङिच्च" (पा० सू० १।१।५३) इतिशास्त्रस्य ङित्त्वसामर्थ्येन कल्पमानान्त्यादेशत्वानुवादकत्वेन प्रकृते ङित्करणसामर्थ्यादन्त्यादेश एव भविष्यतीति कल्पनीयमिति कल्पनागौरवम् । किञ्च त्रयाणामित्यस्य द्वित्वे स्थानिवद्भावेन सुबन्तत्वाद् इशब्देन समासे समासत्वेन प्रातिपदिकसंज्ञया तदवयवत्वादामुद्वयस्यापि लुकि विशिष्टादामि त्रित्री आमिति स्थितेऽयङ्-

(पा०सू०७।४।२१) इत्यादाविवोच्चारणार्थत्वशङ्कावारणाय। **क्वचिदिति**। "आमि सर्वनाम्नः" (पा०सू०७।१।५२) इति साहचर्यादिति भावः। **वस्तुतस्त्विति**। साहचर्यस्यासार्वत्रिकत्वात्सूत्रान्तरस्थतदाश्रयणे दृढतरप्रमाणाभावाच्चेति भावः। न च गौणमुख्यन्यायेनात्र नेति वाच्यम्, अप्रसिद्धत्वगौणलाक्षणिकत्वान्यतररूपगौणत्वाभावात्। अत एवोपसर्जनानां सर्वनामत्वनिषेध आरब्धो वार्त्तिककृता। इतरविशेषणतामात्रेण तत्त्वाभावात् (१)पदकार्य एव तत्प्रवृत्तेश्चेत्यन्यत्र विस्तरः।

**द्विशब्दो नित्यं द्विवचनान्त इति**। संख्यापरत्वेऽपीत्यर्थः। अत एव कस्य द्वित्वे इत्यर्थे "कस्य द्वयोः" इति **भाष्ये** "बहुषु" (पा० सू० १।४।२१) इति सूत्रे प्रयुक्तम्।

**त्यदादी** (पा०सू० ७।२।१०२)। "अष्टन" (पा०सू० ७।२।८४) इत्यतो विभक्तावित्यनुवर्त्तते, तत्फलं तत्कुलम्। सोर्लुक्यत्वं न। **इष्टिरिति**। **भाष्यकारस्येति** भावः। **द्विपर्यन्तानां किमिति**। युष्मदस्मदोरात्वयत्वलोपैर्बाधात् किमः कादेशविधानाच्च प्रश्नः। **भवान् भवन्ताविति**। (२)अभ्युच्चयाय।

**ङौ तु सवर्णदीर्घ इति**। इदं सम्भावनामात्रेण। एषां ङौ "ईदुतौ च सप्तम्यर्थे" (पा०सू० १।१।१९) इति सूत्रस्थ**भाष्य**प्रामा-

---

कल्पे त्रित्रयाणामिति स्यात्, यथाश्रुतकल्पे त्रयाणामिति फलभेद इति अयङ् कर्तुमशक्यः। मूलोक्तं तु न युक्तम्। त्रयाणामिति निर्देशेन सान्तवत्वारणवदुच्चारणार्थत्वस्यापि वारणसम्भवादिति बोध्यम्।

(१)**पदकार्ये एवेति**। तत्त्वं च स्त्रीत्वानिमित्तकत्वे सति विभक्त्यनिमित्तकत्वम्, स्त्रीत्वानिमित्तकत्वे सति प्रातिपदिकप्रकृतिकप्रत्ययानिमित्तकत्वं वा, पदात्परत्वव्याप्यविषयताप्रयोजकपदघटितशास्त्रविधेयताकत्वं वेत्यन्यत्र विस्तरः।

(२)**अभ्युच्चयायेति**। **अन्ये** तु ननु त्यच्छब्दात्प्रागेव भवच्छब्दः पठिष्यते। तथाच 'भवान्' इत्यादौ न दोष इत्यरुचेराह—**भवन्ताविति**। स च भवांश्च भवन्ताविति विग्रहः। अत्र "त्यदादीनां मिथः सहोक्तौ यत्परं तच्छिष्यते" (का०वा) इति तच्छब्दस्यैकशेषापत्तिः, इति लापनिकामाहुः। यथाश्रुतपाठं परित्यज्यान्यथापाठं कृत्वा भाष्यकारेष्टेः खण्डनस्यायुक्तत्वात्, एतादृशरीत्या दोषवारणेऽनवस्थापाताच्च एवं

व्येनानभिधानात् । **क्विबन्तत्वातेति** । "ईत्वमवकारादौ" इतिवार्त्तिकस्य, 'पावानः' इत्यादीनां वनिपा साधनरूपस्य तत्प्रत्याख्यान**भाष्यस्य** च फलैक्यायेदृशेभ्यः क्विपो (१)ऽनभिधानमावश्यकमिति । 'धीवरी' 'पीवरी' इत्यादि तु "ध्याप्योः सम्प्रसारणञ्च" क्विप् क्वनिप् च चेनेत्यर्थकात् "जनसनखनां सञ्झलोः" (पा०सू० ३।२।६७) "घुमास्थागापा" (पा०सू० ६।४।६६) इतिसूत्र**भाष्य**पर्यालोचनया सिद्धाद्वार्त्तिकात्सिद्धम् । धीर्ध्यायतेर्दधातेर्वेति "क्विब्वचि" (का०वा०) इतिवार्तिकस्थ**भाष्ये** दधातेर्वेत्युक्तिरे(२)कदेशिनः । 'शंस्थाः' इत्यत्र विजेवेति न दोषः । 'मीङ् माने' इतीकारान्तात् क्विबित्येके । वातप्रमीर्निःशृङ्गो मृगाकृतिर्जन्तुविशेषः । **बहुश्रेयसीति** । "ईयसो बहुव्रीहेर्न" (का०वा०) इति निषेधान्नोपसर्जनह्रस्वः ।

**यू स्त्र्या** (पा०सू० १।४।३) । दीर्घयोरेव ग्रहणं (३)व्याख्यानात्

---

ज्ञापनमनुचितमिति केचित् । (१)**अनभिधानमिति** । वस्तुतस्तु यथोत्तरमिति परिभाषया "ईत्वमवकारादौ" (का०वा०) इति वार्तिकं पावादीनां वनिपा सिद्धिमवुध्यैव प्रवृत्तमिति "धीर्ध्यायतेर्दधातेर्वा" इति **भाष्यानुग्रहात्** कल्प्यते । 'शंस्थाः' इत्यादावन्तरङ्गपरिभाषया ईत्वात्पूर्वमेव "वेरपृक्तस्य" (पा०सू ६।१।६७) इति लोपे हलादित्वाभावादेव नेत्वप्राप्तिः । 'धीः' 'वातप्रमीः' इत्यादौ अन्तरङ्गपरिभाषाया अनित्यत्वान्न दोषः ।

**परे तु** प्रकृतिविशेषोद्देश्यकक्विपि परत एव "ईत्वमवकारादौ" (का०वा०) इति वार्तिकं प्रवर्त्तते । 'शंस्थाः' इत्यादौ "स्थः क च" (पा०सू० ३।२।७७) इति चकारेण स्थाधातोः क्विपो विधानादीत्वं न जायते । 'धीः' 'वातप्रमीः' इत्यादौ "क्विप् च" (पा०सू० ३।२।७६) इत्यनेन क्विपो विधानात्तत्र प्रकृतिविशेषोपादानाभावात् "ईत्वमवकारादौ" इत्यस्य विषयो नास्तीति ईत्वमवकारादाविति वार्त्तिकमते, वनिपा तत्प्रत्याख्यानपरभाष्यमते च न फलभेद इत्याहुः । (२)**एकदेशिन इति** । नेयमेकदेश्युक्तिरित्यवोचाम ।

(३)**व्याख्यानादिति** । किं पुनरिदं दीर्घयोर्ग्रहणमाहोस्विद् ह्रस्वयोरिति विकल्प्य दीर्घग्रहणपक्षे यू इत्यत्र पूर्वसवर्णदीर्घस्य "ङिति ह्रस्वश्च" (पा०सू० १।४।६) इति सूत्रे सामानाधिकरण्यस्य चानुपपत्तिमुद्भाव्य ह्रस्वग्रहणे 'शकटिबन्धुः' इत्यत्र "नदीबन्धुनि" (पा०सू० ६।२।१०९) इति पूर्वपदान्तोदात्तस्य 'बहुशकटिः' इत्यत्र "नद्यृतश्च" (पा० सू० ५।४।१५३) इति कपः प्राप्तिञ्चोक्त्वा दीर्घयोर्ग्रहणमिति सिद्धान्तितम् । पूर्वसवर्णदीर्घस्तु "दीर्घाज्जसि च" (पा०सू० ६।१।१०५) इत्यत्र "वा

"वा छन्दसि" (पा०सू० ६।१।१०६) इति पूर्वसवर्णदीर्घः। यू किम्? मात्रे। "आण्नद्याः" (पा०सू० ७।३।११२) इति न। स्त्रियमाचक्षाते स्त्र्याख्यौ। मूलविभुजादित्वात् कः। स्त्र्याख्यावित्युपस्थितस्त्रीवाचकशब्दस्य विशेष्यत्वात्तदन्तविधिरित्याह—**ईदूदन्ताविति**। "आच्छीनद्योः"(पा०सू० ७।१।८०) इत्यादौ नदीशब्दस्य तदवयवे लक्षणा बोद्ध्या। आख्याग्रहणान्नित्यत्वलाभस्तदाह—**नित्यस्त्रीलिङ्गाविति**। तत्फलन्तु ग्रामण्यादेर्व्यावृत्तिः। (१)नित्यस्त्रीत्वञ्च प्रवृत्तिनिमित्तैक्ये

---

छन्दसि" (पा०सू० ६।१।१०६) इत्यनुवृत्त्या साधित इत्येवंरूपाद्व्याख्यानादित्यर्थः।

(१)**नित्यस्त्रीत्वं चेति**। प्रवृत्तिनिमित्तविशिष्टशक्तिविशिष्टत्वम्। प्रवृत्तिनिमित्तवैशिष्ट्यं च स्वावच्छिन्नमुख्यविशेष्यताप्रयोजकत्वं, स्वावच्छिन्नाविशेष्यतानिरूपितस्त्रीत्वनिष्ठप्रकारताप्रयोजकत्वं, स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वेतरलिङ्गनिष्ठप्रकारताऽप्रयोजकत्वमेतान्त्रितयसम्बन्धेन। शक्तिवैशिष्ट्यञ्च स्वपर्याप्त्यधिकरणत्वं, स्वज्ञानाधीनोपस्थितिप्रयोज्यबोधजनकत्वप्रकारकतात्पर्यविशेष्यताविशिष्टतात्पर्यविषयतापर्याप्त्यधिकरणत्वमेतदुभयसम्बन्धेन। तात्पर्यविशेष्यतावैशिष्ट्यं च स्वावच्छेदकतद्व्यक्तित्वव्यापकानुपूर्व्यव्याप्यधर्मावच्छिन्नत्व–स्वसामानाधिकरण्योभयसम्बन्धेन। प्रवृत्तिनिमित्तवैशिष्ट्यघटकप्रथमसम्बन्धोपादानेन सेनानीशब्दस्य न नित्यस्त्रीत्वम्। अन्यथा सेनात्वरूपप्रवृत्तिनिमित्तमादाय स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वनिष्ठप्रकारताप्रयोजकत्वस्य स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वेतरलिङ्गनिष्ठप्रकारताऽप्रयोजकत्वस्य च सेनाकर्मकनयनकर्तृत्वावच्छिन्ननिरूपितशक्तौ सत्त्वेन दोषो दुरुद्धरः स्यात्। प्रथमसम्बन्धोपादाने तु सेनात्वावच्छिन्नमुख्यविशेष्यताप्रयोजकत्वस्योक्तशक्तावभावान्न दोषः। द्वितीयसम्बन्धोपादानेन जिहेतीति 'ह्रीः' इत्यादौ धातुवाच्यतावच्छेदकसाध्यत्वरूपप्रवृत्तिनिमित्तमादाय न दोषः। अन्यथा साध्यत्वस्य कस्यापि लिङ्गस्यान्वयितानवच्छेदकतया स्वावच्छिन्नमुख्यविशेष्यताप्रयोजकत्वस्य स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वेतरलिङ्गनिष्ठप्रकारताऽप्रयोजकत्वस्य च साध्यत्वावच्छिन्ननिरूपितशक्तौ सत्त्वेन दोषो दुरुद्धरः स्यात्। तृतीयसम्बन्धोपादानेन स्त्रीलिङ्गविषयकबोधतात्पर्येणोच्चरितसेनानीशब्दे एव सेनाकर्मकनयनकर्तृत्वरूपप्रवृत्तिनिमित्तमादाय न दोषः। अन्यथा सेनाकर्मकनयनकर्तृत्वावच्छिन्नमुख्यविशेष्यताप्रयोजकत्वस्य स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वनिष्ठप्रकारताप्रयोजकत्वस्य च सेनाकर्मकनयनकर्तृत्वावच्छिन्ननिरूपितशक्तौ सत्त्वेन दोषो दुर्वारः स्यात्। तस्योपादाने तु सेनाकर्मकनयनकर्तृत्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वेतरपुंनपुंसकलिङ्गनिष्ठप्रकारताप्रयोजकत्वस्यैव निरुक्तशक्तौ सत्त्वेन न दोषः। शक्तिवैशिष्ट्यघटकप्रथमसम्बन्धानुपादाने सेनानीशब्दे एव सेनात्वं प्रवृत्तिनिमित्तमादाय स्वावच्छिन्नमुख्यविशेष्य-

(१)लिङ्गान्तरविशिष्टार्थानभिधायकत्वम् । ङ्यन्तकुमार्यादीनां क्यचि निर्वृत्तेन त्रिलिङ्गेन समानाकारतया नित्यस्त्रीत्वाभाववारणाय प्रवृत्तिनिमित्तैक्ये इति ।

नन्वेवं बहुश्रेयसीशब्दस्य नदीत्वं न स्यात्, अत आह–**प्रथमेति**। अर्थान्तरसङ्क्रमात्पूर्वं विद्यमानं नित्यस्त्रीत्वमादाय तस्यार्थान्तरसंक्रमेऽपि नदीत्वं वक्तव्यमित्यर्थः । यथोद्देशे पूर्वप्रवृत्तसंज्ञामादायैव कार्यम् । कार्यकालपक्षेऽपि 'कुमारी' इत्यादौ प्रकृतिभूतकुमारीशब्दस्य नित्यस्त्रीत्वेन वृत्तावपि विशेषणतया नित्यस्त्रीलिङ्गरूपार्थबोधकत्वेन नदीसञ्ज्ञा । समासे तु स्पष्टैव तदवयवस्य तत्प्राप्तिः । तन्मात्रबोधकत्वनिवेशे प्राधान्येन तद्बोधकत्वनिवेशे वा न मानम् । तदुक्तं **भाष्ये**—"अवयवस्त्रीविषयत्वात्सिद्धम्, अवयवोऽत्र (२)स्त्रीविषयस्तदाश्रया नदीसञ्ज्ञा भविष्यति" इति ।

---

ताप्रयोजकत्वस्य स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वनिष्ठप्रकारताप्रयोजकत्वस्य स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वेतरलिङ्गनिष्ठप्रकारताऽप्रयोजकत्वस्य च सेनात्वावच्छिन्ननिरूपितशक्तौ सत्त्वेन तज्ज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधजनकत्वप्रकारकतात्पर्यविशेष्यताविशिष्टतात्पर्यविषयतापर्याप्त्यधिकरणत्वस्य सेनानीशब्दे सत्त्वेन दोषो दुर्वारः स्यात् । शक्तिवैशिष्ट्ये द्वितीयसम्बन्धोपादानेन वात्स्या आयः वात्स्यायः तं नयतीति वात्स्यायनीरित्यादौ वात्सीसम्बन्ध्यायकर्मकनयनकर्तृत्वावच्छिन्नविषयकबोधतात्पर्येणोच्चरिते वत्ससम्बन्धिस्त्रीत्वविशिष्टापत्यत्वरूपप्रवृत्तिनिमित्तमादाय न दोषः । अन्यथा स्त्रीत्वविशिष्टवत्सापत्यत्वरूपप्रवृत्तिनिमित्तावच्छिन्नमुख्यविशेष्यताप्रयोजकत्वस्य स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वनिष्ठप्रकारताप्रयोजकत्वस्य स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वेतरलिङ्गनिष्ठप्रकारताप्रयोजकत्वाभावस्य च स्त्रीत्वविशिष्टतदपत्यत्वावच्छिन्ननिरूपितशक्तौ सत्त्वेनैतादृशशक्तिपर्याप्त्यधिकरणत्वस्य निरुक्तवात्स्यायनीशब्दे सत्त्वाद्दोषो दुरुद्धरः स्यात् । बोधजनकत्वप्रकारकतात्पर्यविशेष्यतावैशिष्ट्यस्य दानेन बोधविषयत्वादिप्रकारकतात्पर्येणोच्चरितस्थले न दोष इति "अर्थवत्" (पा०सू० १।२।४५) सूत्रे विस्तर इति दिक् ।

(१)**लिङ्गान्तरविशिष्टार्थानभिधायकत्वमिति** । यत्प्रवृत्तिनिमित्तं स्त्रीत्वस्यान्वयितावच्छेदकं स्त्रीत्वेतरलिङ्गस्यान्वयितावच्छेदकं च भवति तद्रूपविशिष्टार्थानभिधायकत्वमित्यर्थः । अर्थात् स्त्रीत्वान्वयितावच्छेदकं स्त्रीत्वेतरलिङ्गान्वयितानवच्छेदकं च यत्प्रवृत्तिनिमित्तं तादृशप्रवृत्तिनिमित्तविशिष्टार्थाभिधायकत्वमिति फलति । (२)**स्त्रीविषय इति** । स्त्रीविषयत्वं च पूर्वोक्तमेव बोध्यम् । यदुक्तं 'कार्यकालपक्षेऽपि' इत्यादि

(१)आकडारस्थसञ्ज्ञानां (२)कार्यकालत्वाभावात्। अन्यथा तत्तद्विध्येकवाक्यत्वापन्नयोः कथं बाध्यबाधकभावः स्यादिति बोध्यमित्यपि केचित्।

**ह्रे बहुश्रेयसीति**। ह्रस्वे कृते गुणस्तु न, प्रक्रियालाघवाय 'अम्बार्थानां ह्रस्वः' 'ह्रस्वनद्योर्गुणः' इत्येव वाच्ये ह्रस्वविधानसामर्थ्यात्। "जसि च" (पा०सू० ७।३।१०९) इत्यत्रैकदेशे स्वरितत्वप्रतिज्ञया ह्रस्वपदस्यैवानुवृत्तिरिति **भाष्ये** स्पष्टम्। अम्बार्थानामपि गुणस्तु वक्तुमशक्यः,

'अनः क्लीबं जले शोके मातृस्यन्दनयोरपि'।

इति**रभसा**द्युक्तानःशब्दस्याम्बार्थत्वेन गुणापत्तेः। ह्रस्वग्रहणे तु "अचः" इत्युपस्थित्याऽजन्ताम्बार्थग्रहणान्न दोषः। तस्य नपुंसकत्वेऽपि 'हे वारे' इतिवत् पक्षे गुणः स्यादेव। गुणश्रुत्येक्परिभाषोपस्थितौ तु 'अम्ब'इत्यादावप्यनापत्तिः। अयं ह्रस्वः—'अनन्तरस्य'इतिन्यायाद् "ह्रस्वस्य गुणः" (पा०सू० ७।३।१०८) इत्यस्यैव बाधकः। तेन 'मातः'इत्यत्र "ऋतो ङि" (पा०सू० ७।३।११०) इति गुणो भवत्येवेति दिक्।

**आटश्च** (पा०सू० ६।१।९०)। "न माङ्योगे" (पा०सू० ६।४।७४) इतिसूत्रस्थ**भाष्योक्त** 'अटश्च' इति न्यासे तु "वृद्धिरेचि" (पा०सू० ६।१।८८)इति बोद्धव्यम्। अत्र अट् तु वक्तुमशक्यः, 'अस्वपोऽहसन्' इत्यत्र वृद्धिवारणाय "आटश्च" (पा०सू० ६।१।९०) इत्यत्र धातावित्यपकर्षेण वृद्ध्यनापत्तेः। "वृद्धिरेचि" (पा०सू० ६।१।८८)इत्यस्य तु पररूपं बाधकमिति (३)बोद्धव्यम्। ङेरिति सप्तम्येकवचनं व्याख्यानात्।

**इह परत्वादिति**। (४)सकृद्गतिन्यायाश्रयणादिति भावः। स्पष्टञ्चेदं

---

तद् दूषयति–(१)**आकडारस्थसंज्ञानामिति**। (२)**कार्यकालत्वाभावादिति**। अयं हेतुः 'यथोद्देशे पूर्वप्रवृत्तसंज्ञामादायैव कार्यम्' इत्युत्तरं योज्यः।

(३)**बोध्यमिति**। न चाड्विधानसामर्थ्यादेव पररूपं न भवतीति आड्विधानं व्यर्थमिति वाच्यम्, 'बहुश्रेयस्याम्' इत्यादौ नुड्बाधेनाऽड्विधानस्य चारितार्थ्यात्। न चैवमपि 'अस्वपोऽहसन्' इत्यादौ बहिरङ्गत्वेनासिद्धत्वाद् 'अटश्च' इति न्यासेऽपि वृद्धिर्न प्राप्नोतीति तत्र धातावित्यस्यापकर्षो व्यर्थ इति वाच्यम्, "नाजानन्तर्ये" (प०भा०) इतिनिषेधादन्तरङ्गपरिभाषाया अप्रवृत्तेरिति दिक्।

(४)**सकृद्गतिन्यायाश्रयणादिति**। एतेन यत्र परशास्त्रप्रवृत्तौ पूर्वशास्त्रप्रवृ-

"ह्रस्वनद्यापः" (पा०सू० ७।४।५४) इत्यत्र **भाष्ये** । यद्यपीह आम् अपवादो नद्यां सर्वथाऽनवकाशत्वात् । 'अपवादो नुग्दीर्घत्वस्य' इति "दीर्घोऽकितः" (पा०सू० ७।४।८४) इतिसूत्र**भाष्ये** उक्तत्वेनाऽऽगमादेशयोरपि तत्त्वसत्त्वात्, तथापि अनवकाशत्वेन बाधेऽपवादप्रवृत्त्यनन्तरमु-(१)त्सर्गप्रवृत्तेर्न दोषः । अत एव "न गणेरीत्वमपवादत्वाद्धलादिःशेषं बाधते किं तर्ह्यनवकाशत्वात्" इति "गुणो यङ्लुकोः" (पा०सू० ७।४।८२) इतिसूत्रे (२)**भाष्ये** उक्तम् । "पादः पत्" (पा०सू० ६।४।१३०) इतिसूत्रस्थं "शब्दान्तरप्राप्त्याऽनित्ययोराडामोः परत्वादाम्" इति **भाष्यं** लेकदेश्युक्तिरिति बोद्धव्यम् ।

**अङ्यन्तत्वादिति** । "लक्षेर्मुट्च"(उ०सू० ४४८)इत्यौणादिक'ई' प्रत्ययान्तत्वादिति भावः । **कुमारीति** । ह्रस्वविधायके शास्त्रीयोपसर्जनग्रहणाद् "गोस्त्रियोः" (पा०सू० १।२।४८) इति ह्रस्वो न ।

**अचिश्नु** (पा०सू० ६।४।७७) । भ्रूशब्दोऽव्युत्पन्नं प्रातिपादिकं, भ्रमेर्डूप्रत्ययान्तो वा । इह 'य्वोः' इति धातोः समानाधिकरणं विशेषणं, तदाह-**इवर्णोवर्णान्तधातोरिति** । **इत्यस्येति** । इत्यन्तस्येत्यर्थः । तेन 'सुभ्रुवौ' इति सिद्धम् । **आन्तरेति** । स्थानत इति भावः । य्वोरिति किम् ? वव्रे । अचि किम् ? युयात् । **इतीयङीति** । सुधीशब्दे यण्निषेधारम्भादत्र प्रकरणे "धातोः स्वरूपग्रहणे" इति परिभाषाया (३)अप्रवृ-

---

त्तिप्रयोज्यं परशास्त्रप्रवृत्तिवैयर्थ्यं तत्र सकृद्गतिन्यायोऽन्यत्र पुनःप्रसङ्गन्याय इत्यपास्तम् । 'बहुश्रेयस्याम्' इत्यादौ परशास्त्र "आण्नद्याः" (पा०सू० ७।३।११२) इति प्रवृत्त्यनन्तरं नुट्प्रवृत्तावपि परशास्त्रप्रवृत्तिवैयर्थ्याभावेन सकृद्गतिन्यायाप्रवृत्तिप्रसङ्गात् ।

(१)**उत्सर्गप्रवृत्तेरिति** । तदप्राप्तियोग्येऽचारितार्थ्यविशिष्टे कृते चारितार्थ्याभावरूपं बाधबीजं यत्र, तत्र स्वप्रवृत्तियोग्यो यः स्वीयोद्देश्यतावच्छेदकावच्छिन्नस्तदतिरिक्तेनोत्सर्गशास्त्रे सङ्कोच इति नियमात् प्रकृते आमूप्रवृत्त्युत्तरं तत्प्रवृत्तियोग्यताया अभावेन उत्सर्गप्रवृत्तौ बाधकाभाव इति भावः । (२)**भाष्ये उक्तमिति** । तथाचापवादशब्दस्य कृतेचारितार्थ्यप्रयुक्तो बाधो यत्र तत्र रूढिरन्यत्र गौणत्वमिति भावः ।

(३)**अप्रवृत्तिरिति** । "न भूसुधियोः" (पा०सू० ६।४।८५) इतिज्ञापकेन धातुलेतरधातुत्वव्याप्यधर्मावच्छिन्नोद्देश्यताकं कार्यं धातुत्वव्याप्यधर्मावच्छिन्नोद्देश्य-

त्तिरिति भावः ।

**एरनेकाचो** (पा०सू० ६।४।८२) । **धात्ववयवसंयोगपूर्वो न भवतीति** । धात्ववयवसंयोगपूर्वभिन्न इत्यर्थः । तद्भिन्नश्च धात्ववयवपूर्व एवेति 'उद्यियौ' इत्यादौ न दोषः । असंयोगादित्येव धात्ववयवसंयोगभिन्नात्परस्येत्यर्थेन सिद्धे पूर्वग्रहणं (१)स्पष्टार्थम् । एः किम् ? असंयोगपूर्वग्रहणमिवर्णविशेषणं यथा स्याद्, अङ्गविशेषणं मा भूदिति । तेन 'यवक्रियौ' इत्यादौ नातिप्रसङ्गः । 'लुलुवतुः' इत्यादौ तु नातिप्रसङ्गः "ओः सुपि" (पा०सू० ६।४।८३) इति नियमात् । विपरीतनियमस्तु न, सुधीशब्दे अचि सुपि यण्निषेधारम्भात् ।

**कुमार्याविति** । अन्तर्वर्तिविभक्त्या पदत्वाच्छाकलं त्वत्र न; (२)"नः क्ये" (पा०सू० १।४।१५) इति निषेधात् । **प्रधीरिति** । 'प्रकृष्टं ध्यायति' इति विग्रहे नित्यस्त्रीत्वाभावान्न नदीत्वम् । 'प्रकृष्टा धीर्यस्य' इति विग्रहे तु नदीत्वम् । **ग्रामणीरिति** । अग्रग्रामाभ्यां नयतेरिति

---

तानिरूपितविधेयताश्रये प्रत्यये भवतीति "धातोः कार्यमुच्यमानम्" (प०भा०) इति परिभाषार्थकरणादिति भावः । नच "इको यणचि" (पा०सू० ६।१।७७) इति यण्निषेधेन "न भूसुधियोः" (पा०सू० ६।४।८५) इति चरितार्थमिति कथमत्र ज्ञापकमिति वाच्यम्, "इको यणचि" (पा०सू० ६।१।७७) इत्यनन्तरमेव निषेधे कर्तव्ये एतत्प्रकरणे निषेधकरणान्निरुक्तार्थज्ञापनसम्भवात् "न भूसुधियोः" (पा०सू० ६।४।८५) इति इयङ्घटितनिर्देशेन निरुक्तार्थज्ञापनसम्भवाच्च । अन्यथा "धातोः कार्यमुच्यमानम्" इति परिभाषया इयङोऽप्राप्त्या तन्निर्देशासङ्गतिः स्पष्टैवेति दिक् ।

**(१)स्पष्टार्थमिति** । चिन्त्यमिदम् । धात्ववयवसंयोगभिन्नात्परस्येत्यर्थे 'यवक्रियौ' 'कटप्रुवौ' इत्यादौ धात्ववयवसंयोगभिन्नं यवक्र कटप्र् इति ततः परत्वस्येकारे सत्त्वेन यणापत्तेः । न च धात्ववयवसंयोगभिन्नोऽपि पर्युदासन्यायेन धात्ववयवो गृह्यत इति नोक्तदोष इति वाच्यम्, एवं तर्हि धात्ववयवसंयोगभिन्नधात्ववयवरेफमादायोक्तदोषस्य दुर्वारत्वादिति दिक् । **(२)नः क्ये इति निषेधादिति** । न चैवमपि राजीयतेः क्विपि राज्यावित्यादौ "इकोऽसवर्णे" (पा०सू० ६।१।१२७) इति शाकलं स्यादिति वाच्यम्, 'अत्रयः' इत्यादाविव यद्वृत्तिनिमित्तसुब्निमित्तिका पदसंज्ञा चिकीर्षिता तद्घटकार्थवदव्यवहितपूर्वत्वाभाववत्त्व, स्वघटकत्वैतदुभयसम्बन्धेन वृत्तिविशिष्टत्वरूपोत्तरपदत्वस्य सत्त्वेन "उत्तरपदत्वे चापदादिविधौ" इति निषेधेनादोषात् ।

णत्वम् । 'गतिकारकपूर्वस्यैव' इति **भाष्ये** पठ्यते, स च नियमः । तेन गतिकारकपूर्वभिन्नस्य नेति फलति । तद्भिन्नश्च तत्सदृशं सपूर्वपदमेव । तेन 'निन्यतुः' इत्यादौ यण् । तदाह—**गतिकारकेतरेति** । यत्त्वत्र गतिसमासो नित्याधिकारस्थ एव प्रतिपदोक्तत्वाद् गृह्यत इति, तन्न, **भाष्ये** पूर्वपदग्रहणाभावेन समासोपस्थितेरभावेन विशिष्टरूपोपादानविषयप्रतिपदोक्तपरिभाषाया (१)अप्रवृत्तेः । अत एव नदीसञ्ज्ञासूत्रस्थः 'प्रकृष्टा धीर्यस्य' इतिविग्रहाभिप्रायेण प्रवृत्तः 'प्रध्यै ब्राह्मण्यै' इति **भाष्यप्रयोगः** सङ्गच्छते । **शुद्धधियाविति** । 'शुद्धा धीर्यस्य' इति विग्रहः । 'शुद्धं ध्यायति' इति विग्रहे यणेव । आद्ये सत्त्वभूतार्थकधीशब्दार्थविशेषणत्वात् शुद्धत्वस्य कथमपि न कारकत्वमिति भावः । **कथन्तर्हीति** । 'दुर्ध्यायन्ति' इति 'दुष्टा धीर्ध्यानं येषाम्' इति, 'वृश्चिकाद् भीः' इतिविग्रहाभिप्रायेण प्रश्नः । **दुःस्थितेति** । दुःशब्दोपात्तदुष्टत्वस्य स्थितिक्रियाविशेषणत्वमिति भावः । प्रकृष्टा धीरित्यादौ प्रकर्षः प्रशब्दार्थो धीशब्दोपात्तधात्वर्थे विशेषणमिति यण् भवत्येव । **यत्क्रियेति** । या चासौ क्रिये(२)त्यर्थः ।

---

(१)**अप्रवृत्तेरिति** । प्रतिपदोक्तत्वेनाभिमतशास्त्रीयविधेयतावच्छेदकं लाक्षणिकत्वेनाभिमतशास्त्रीयविधेयतावच्छेदकं च यद्रूपं तद्रूपावच्छिन्नोद्देश्यताकत्वरूपलक्षणप्रतिपदोक्तपरिभाषालिङ्गस्याभावात् यत्किञ्चिच्छास्त्रविशिष्टत्वरूपप्रतिदोक्तत्वस्याभावाच्च । वैशिष्ट्यं च स्वीयोद्देश्यतावच्छेदकरूपावच्छिन्नविधेयताकत्व, स्वीयोद्देश्यतावच्छेदकसमर्पकज्ञानविषयीभूतानुपूर्वीविशिष्टविधेयताकत्वैतदुभयसम्बन्धेन । आनुपूर्वीवैशिष्ट्यं च स्वावच्छिन्नत्वं, स्वावच्छिन्नप्रयोज्योद्देश्यतानिरूपितत्वमेतदन्यतरसम्बन्धेन । प्रकृते च "गतिकारकेतर" इतिशास्त्रीयोद्देश्यतावच्छेदकं समासत्वं नास्तीति यत्किञ्चिच्छास्त्रीयोद्देश्यतावच्छेदकरूपावच्छिन्नविधेयताकत्वं "कुगति" (पा० सू० २।२।१८) इत्यस्य नास्तीति भावः । द्वितीयसम्बन्धदानेन "विशेषणं विशेष्येण" (पा० सू० २।१।५७) इत्यादिलाक्षणिकेषु न तत्त्वम् । आनुपूर्वीवैशिष्ट्ये प्रथमसम्बन्धोपादानेन "पा पाने" (धा० सू०) इत्यादौ नाव्याप्तिः । द्वितीयसम्बन्धोपादानेन "तृतीया तत्कृतार्थेन" (पा० सू० २।१।३०) इत्यादौ न दोष इति परिभाषेन्दुटिप्पणे विस्तरेण निरूपितम् । (२)**इत्यर्थ इति** । जन्यबोधविषयीभूतक्रियाविशेषविषयकतात्पर्यग्राहकत्वे सति प्रायन्यतमत्वसुपसर्गत्वमितिपरिष्कारेण यज्जन्यबोधविषयीभूतक्रियाविशेषविषयकतात्पर्यग्राहकत्वं यस्य पदस्य तन्निरूपितोपसर्गत्वं तस्येति स्वीकारादिति भावः ।

**तं प्रति**—तद्वचकं प्रति । यद्वा यस्य धातोर्वाच्यया क्रियया युक्ता इत्यर्थः । **नेहेति ।** ततश्च सम्बन्धसामान्यषष्ठ्यैव समासः । "भीत्रार्थानाम्" (पा०सू० १।४।२४) इति तु हेतुत्वप्रकारकबोधे तृतीयाबाधनार्थम् । विभक्तिप्रकरणे तु न कृतं, कारकत्वप्रयुक्तकार्यानापत्तेरिति भावः । किञ्च हेतुत्वाविवक्षायां सम्बन्धत्वेन विवक्षया षष्ठीसूत्रारम्भेऽपीत्यपि बोद्धव्यम् । अभ्युच्चयेनाह—**वृश्चिकसम्बन्धिनीति ।** अत्र पूर्वपदान्तर्गतोत्तरपदलोपः शाकपार्थिवादित्वात् ।

**(१)न भू** (पा०सू० ६।४।८५) । 'अनन्तरस्य' इति न्यायेन "एरनेकाचः" (पा०सू० ६।४।८२) "ओः सुपि" (पा०सू० ६।४।८३) इत्यनयोरेव निषेधः । सुपीति चानुवर्त्तते तदाह—**सुपीति । लोपाविति ।** "अतो लोपः" (पा०सू० ६।४।४८) "लोपो व्योर्वलि" (पा०सू० ६।१।७६) इत्याभ्यामिति भावः । यलोपे निषेधादल्लोपो न स्थानिवत् । (२)वेरपृक्तलोपात्पूर्वं वलि लोप इष्यते । **स्थानिवत्त्वादिति ।** एवञ्च

---

**(१)न भूसुधियोः (पा०सू० ६।४।८५)** । ननु भूग्रहणमत्र व्यर्थम्, "सपूर्वस्य भूशब्दान्तस्य यण् भवति चेत् तर्हि वर्षापूर्वकस्यैव" इति "वर्षाभ्वश्च" (पा०सू० ६।४।८४) इति नियमेन 'परमभुवौ' इत्यादौ दोषवारणात् । वर्षापूर्वकस्य चेत् भूशब्दान्तस्यैवेति विपरीतनियमस्तु न, 'दृन्कर' (का०वा०) इतिवार्तिकारम्भसामर्थ्यात्; इति चेत्? न, वर्षाभूशब्दाद् गौरादित्वाद् ङीषि निष्पन्ने वर्षाभ्वीशब्दे कमठीपर्यायेषु "वर्षाभ्वी कमठी डुलिः" (अ०को०) इति कोशनिर्दिष्टे सुप्परकत्वाभावेन "ओः सुपि" (पा०सू० ६।४।८३) इत्यस्याप्राप्त्या यण्प्रवृत्त्यर्थं "वर्षाभ्वश्च" (पा०सू० ६।४।८४) इत्यस्यावश्यकतया नियामकत्वानुपपत्तेः । मूले "न भूसुधियोः" (पा०सू० ६।४।८५) इत्येतद्वृत्तौ "वर्षाभ्वश्च" (पा०सू० ६।४।८४) इत्येतद्वृत्तौ च सुपीत्यस्योल्लेखस्तु लेखकप्रमादात् । अत एव मनोरमायां 'सुद्ध्युपास्यः' इत्यत्र "न भूसुधियोः" (पा०सू० ६।४।८५) इतिनिषेधाशङ्का तत्समाधानान्तरं च सङ्गच्छते । सुपीत्येतत्सम्बन्धे तु तदसङ्गतिः स्पष्टैवेति दिक् ।

**(२)वेरपृक्तलोपात्पूर्वं वलि लोप इष्यते इति ।** वेरपृक्तलोपात् पूर्वं वलि लोपो यथा स्यात्, तथा कर्तव्यमित्यर्थः । एतेन वेरपृक्तलोपात्प्राग् वलि लोपेऽपि अतो लोपात्प्राक् "वेरपृक्तस्य" (पा०सू० ६।१।६७) इतिलोपाप्रवृत्तौ मानाभावादन्तरङ्गत्वात्प्राक् वेरपृक्तलोपे ततोऽल्लोपेऽपि "लोपो व्योर्वलि" (पा०सू० ६।१।७६) इत्यस्य प्राप्-

यणादेशे यलोपे 'सख्' इति स्यादिति भावः । अन्तर्वर्त्तिविभक्त्या पदत्वात् "न पदान्त" (पा०सू० १।१।५८) इति निषेधस्तु न स्थानिवत्त्वस्य, "नः क्ये" (पा०सू० १।४।१५) इतिसामान्यापेक्षनियमेनास्यापदत्त्वात् परपदस्थाजादेशस्यैव तेन स्थानिवत्त्वनिषेधाच्च । किञ्चापेक्षक्यच्सम्बन्धियलोपस्य यणि बहिरङ्गासिद्धत्वन्तु न अनित्यत्वात् । क्वौ लुप्तमिति । भावे क्तः । लोप इत्यर्थः । "गोमत्यतेरप्रत्यये गोमान्" इति भाष्ये क्तस्याप्यर्थस्य (१)क्वचिदङ्गीकारः । क्वौ विधिं प्रति नेत्येव तु सार्वत्रिकमित्यन्यत्र विस्तरः ।

अनङिति । "अभिव्यक्तपदार्था ये" इति न्यायस्तु गौणमुख्यन्याभावाल्लोपो न स्यादित्यपास्तम् । निरुक्तार्थकरणेनातो लोपस्य वलि लोपस्य च वेरपृक्तलोपात्पूर्वमेव प्रवृत्तेः ।

---

(१)क्वचिदङ्गीकार इति । ननु "क्वौ लुप्तं न स्थानिवत्" इत्यस्य—

"सख्युर्गोमान् पदस्त्वं च क्वौ लुप्तस्य निदर्शनम्" ।

इति फलचतुष्टयमुक्तमभियुक्तैः । तत्रैकमपि फलं न सम्भवति । तथा हि, सखीयतेः क्विपि 'सखीः' इत्यादौ यलोपस्य बहिरङ्गासिद्धत्वादेव न यणः प्राप्तिः । "नाजानन्तर्ये" (प०भा०) इति निषेधस्तु न प्रवर्तते तस्यासत्त्वात्, सत्त्वेऽनित्यत्वाद्वा । एवं 'गोमान्' इत्यपि फलं न सम्भवति, गोमत्यतेः क्विपि अतोलोपयलोपयोः कृतयोरतो लोपस्य स्थानिवद्भावान्नुमोऽप्राप्तावपि दीर्घे स्थानिवत्त्वनिषेधात्पूर्वम् "अत्वसन्तस्य" (पा०सू० ६।४।१४) इति दीर्घे तद्विशिष्टे स्थानिभूतादचः पूर्वत्वेन दृष्टत्वस्याभावात्स्थानिवत्त्वाप्राप्त्या ततो नुमि रूपसिद्धेः । एवं 'पदः' इत्यपि न फलम्, पादयतेः क्विपि शसि 'पदः' इत्यादौ यद्यतो लोपस्य स्थानिवद्भावात्पदादेशो न स्यात्तर्हि पादस्य पादित्येव सिद्धे सामान्यग्रहणार्थेन पादस्य लोपकरणेन प्रकृते स्थानिवद्भावो न भवतीति वक्तुं शक्यत्वात् । एवं 'त्वम्' इत्यपि न फलम् । युष्मयतेः क्विपि त्वमित्यादिरूपाणामनभिधानस्य "मपर्यन्तस्य" (पा०सू० ७।२।९१) इति सूत्रशेखरे वक्ष्यमाणत्वात्; इति चेत् । न, अक्यजन्तानां 'गोमान्' इत्यादिरूपाणामसिद्ध्यापत्तेः । तथा हि, सिद्धान्ते परं नित्यं च नुमं बाधित्वा आदौ दीर्घो भवति । त्वद्रीत्या तु क्यजन्तगोमानित्यादौ दीर्घस्य चारितार्थ्येन पूर्वोक्तवचनसामर्थ्यरूपबाधनिमित्ताभावात्पूर्वं नित्यत्वान्नुमि तद्विशिष्टे निर्दिश्यमानत्वाभावाद्दीर्घानापत्तिः । एवं 'त्वम्' इत्याद्यपि फलं भवितुमर्हति । एतेषामनभिधानं यथा न, तथा "मपर्यन्तस्य" (पा०सू० ७।२।९१) इत्यत्रैव वक्ष्यत इति दिक् ।

यवत् (१)पदकार्यविषय एवेति भावः। **दीर्घस्यापीति**। प्रयोगस्थय-कारान्तानुकरणं, सूत्रेऽकारश्चोच्चारणार्थ इति भावः। **लूनीरित्यादि**। "ल्वादिभ्यः" (पा०सू० ८।२।४४) "क्षायो मः" (पा०सू० ८।२।५३) "प्रस्त्योऽन्यतरस्याम्" (पा०सू० ८।२।५४) इति नत्वमत्वे। "शुषः कः" (पा०सू० ८।२।५१) "पचो वः" (पा०सू० ८।२।५२) इति कत्ववत्वे।

व्याख्यानात् प्राधान्याच्च रूपातिदेशोऽयमित्याह—**क्रोष्टुशब्द इति**। तच्चोदात्तऋकारविशिष्टमतिदिश्यते तृज्वदितिचकारोच्चारणात्। तेन 'क्रोष्ट्रा' इत्यादौ "उदात्तयणः" (पा०सू० ६।१।१७४) इति स्वरसिद्धिर्बोध्या। पक्त्रादेस्तु नातिदेशः, अर्थत आन्तर्याभावात्। इदं सूत्रं "स्त्रियाञ्च" (पा०सू० ७।१।९६) इति च प्रयोगनियमफलकमिति बोद्धयम्।

**अप्तृन्** (पा०सू० ६।४।११)। ननु व्युत्पत्तिपक्षे तृन्नन्तत्वात्तृजन्तत्वाद्वा दीर्घे सिद्धे नप्त्रादिग्रहणं व्यर्थम्, अत आह—**नियमार्थमिति**। (२)अन्येषामुणादिव्युत्पन्नानां सञ्ज्ञाशब्दानां नेति। नेष्ट्रादयोऽप्युणादय एवेति भावः, तेषां "तृन्" (पा०सू० ३।२।१३५) इतिसूत्रस्थवार्तिकेन व्युत्पादनात्। नप्त्रादीत्यादिग्रहणेन प्रशास्तृशब्दस्यैव ग्रहणमित्यन्ये। अव्युत्पत्तिपक्षे तु विध्यर्थमेवेति बोद्धयम्। **भाष्यप्रयोगादिति**। एवञ्चोणादिष्वस्य व्युत्पादनमप्रामाणिकमिति भावः। पङ्कजादिपदवद्योगरूढोऽयम्। ये त्वौणादिकत्वमेवास्य स्वीकृत्य **भाष्य**प्रयोगादेव दीर्घत्वमिच्छन्ति, ते मान्याः। **भाष्यकृता**ऽन्यप्रयोगस्योदाहरणत्वेन दानेऽप्यस्य भाष्यप्रयोगत्वाभावात्। "ण्वुल्तृचौ" (पा०सू० ३।१।१३३) इति **भाष्ये** तु "तृचश्चकारो व्यर्थः। न च "अप्तृन्तृच्" (पा०सू० ६।४।११) इत्यादौ विशेषणार्थः, तृ इत्येव सिद्धेः। न च तृ इत्युच्यमाने 'मातरौ' 'पितरौ' इत्यादौ प्राप्नोति। तत्र हि तृप्रत्ययो निरनुबन्धक

---

(१)**पदकार्यविषय एवेति**। पदकार्यत्वं च स्त्रीत्वानिमित्तकत्वे सति विभक्त्यनिमित्तकत्वमित्यादि पूर्वोक्तं न विस्मर्तव्यम्।

(२)**अन्येषामिति**। इदं फलितार्थकथनम्। नियमशरीरं तु 'उणादिव्युत्पन्नानां तृन्तृजन्तानां दीर्घो भवति चेन्नप्त्रादीनामेव' इत्येव।

इति वाच्यम् , नप्तृग्रहणस्य योनिसम्बन्धवाचिनाञ्चेदस्यैव नान्येषां योनिसम्बन्धवाचिनामिति नियमात्" इत्युक्तम् । नेष्टृत्वष्टृहोतृपोतृणां तृन्नन्तत्वस्य प्रशास्तुस्तृजन्तत्वस्य "तृन्" (पा०सू० ३।२।१३५) इतिसूत्रे **भाष्यवार्तिकयो**रुक्तत्वेन तेषाङ्ग्रहणं प्रपञ्चार्थमेव । एवञ्च यथान्यासे नियमफलं चिन्त्यम् ।

**क्रोष्टेति** । अनङि "सर्वनामस्थाने च" (पा०सू० ६।४।८) इति दीर्घः, प्रथमोपस्थितत्वात् । 'क्रोष्टारौ' इत्याद्यर्थन्तु तल्लेखः । यद्वा विशेषविहितत्वाच्छीघ्रोपस्थितिकत्वेन स एव न्याय्यः ।

**विभाषा तृ** (पा०सू० ७।१।९७) । (१)अयमपि नियम एव 'तृतीयादावच्येवोभयम्' इति । तेन भ्यामादौ, शसि, 'क्रोष्टुपुत्रः' इत्यादौ च न दोषः । सर्वत्र (२)विशिष्टाभावस्य सुलभत्वात् । "तृज्वत्क्रोष्टुः"

---

(१)**अयमपि नियम एवेति** । अपिरेवार्थे । लाघवादेकस्यैव सूत्रस्य नियामकत्वेन सिद्धे सूत्रत्रयस्य नियामकत्वेन गौरवात् । (२)**विशिष्टाभावस्य सुलभत्वा**दिति । न च 'क्रोष्टून्' इत्यादौ तुन्नन्ताभावप्रयुक्त एव विशिष्टाभावः कस्मान्न स्वीक्रियते । तथाच तुन्नन्तस्य प्रयोगो न स्यादिति वाच्यम् , "विभाषा तृतीयादिष्वचि" (पा०सू० ७।१।९७) इति नियमेन तुन्नन्तविशिष्टतृजन्ताभावस्यान्यत्र बोधने प्राधान्यादन्यत्र विशेष्याभावप्रयुक्तविशिष्टभावकल्पनेनैवोपपत्तौ गौरवादुभयाभावप्रयुक्तविशिष्टाभावकल्पनस्य, अप्राधान्याद्विशेषणाभावप्रयुक्तविशिष्टाभावकल्पनस्य चान्याय्यत्वात् सर्वनामस्थानं स्त्रीलिङ्गं तृतीयादिविभक्तिञ्च विहायान्यत्र सर्वत्र विशेष्यतृजन्ताभावप्रयुक्तस्यैव तुन्नन्तविशिष्टतृजन्ताभावस्य कल्पनेनादोषात् । "स्त्रियां च" (पा०सू० ७।१।९६) "तृज्वत् क्रोष्टुः" (पा०सू० ७।१।९५) इतिशास्त्रद्वयप्रामाण्यात्तद्विषये विशेषणतुन्नन्ताभावप्रयुक्त एव विशिष्टाभाव इति सर्वनामस्थाने स्त्रियां च तृजन्तमेव साधु, अन्यत्र तुन्नन्तमेव साध्विति विवेकः । एवं "पद्दन्" (पा०सू० ६।१।६३) इति सूत्रेऽपि बोध्यम् । तेनापि सूत्रेण पादशब्दादिसमानाधिकरणपच्छब्दाद्यभावस्य शसादिव्यतिरिक्ते बोधने प्राधान्यात् पच्छब्दाद्यभावप्रयुक्त एव विशिष्टाभावो बोध्यते । तेन स्वादौ न पदादयः प्रयुज्यन्ते किन्तु पादादय एवेति । एवं "विप्रतिषिद्धं चानधिकरणवाचि" (पा०सू० २।४।१३) इति सूत्रेणापि इतरेतरयोगद्वन्द्वविशिष्टः समाहारद्वन्द्वः विरुद्धार्थवाचिनां चेद् अद्रव्यवाचिनामेवेति नियमेन विरुद्धार्थवाचिनां द्रव्यवाचिनां विशेष्यभूतसमाहारद्वन्द्वाभावप्रयुक्त एव विशिष्टाभाव इति 'शीतोष्णे उदके स्तः' इत्यादौ इतरेतरयोगद्वन्द्वो भवत्येवेति दिक् ।

(पा०सू० ७।१।९५) "स्त्रियाञ्च" (पा०सू० ७।१।१६) इत्याभ्यां सर्वनामस्थाने स्त्रियाञ्च तृजन्तरूपविधानेन तयोः प्रयोगनियमार्थत्वं फलति। एतेन तृज्वत्सर्वनामस्थान एवेति नियमादिदं विद्ध्यर्थमिति परास्तम्। न चैवमपि क्रोष्टूनित्याद्यसङ्गतम्, अन्यत्र तृजन्तस्यैव प्रयोगेणाप्युक्तनियमस्य चारितार्थ्यादिति वाच्यम्, तृज्वत्क्रोष्टुरिति योगविभागस्यैवं सति वैयर्थ्यापत्तेः। न च "तद्धितेष्वचामादेः" (पा०सू० ७।२।११७) "इको गुणवृद्धी" (पा०सू० १।१।३) इति सूत्रयोः 'क्रौष्टः' 'क्रोष्ट्रीयाः' इति **भाष्य**प्रयोगासङ्गतिरिति वाच्यम्, ऋकारान्तस्यैव ऋत्विवाचकत्वेनादोषात्। इदं सूत्रत्रयं तु शृगालवाचिक्रोष्टुक्रोष्टृशब्दयोर्व्यवस्थार्थमित्यवधेयम्। तदुक्तं **भाष्ये**—"तृज्वद्भावविषये 'एतत् तृजन्तं मृगवाचि' इति, तृतीयाद्यजादिविभक्तिषु तृजन्तं तुन्नन्तञ्च मृगवाचि' इति च। अनेन हि अन्यत्र तुन्नन्तमेवेत्यपि सूचितमिति दिक्।

**ऋत** उत् (पा०सू० ६।१।१११)। तपरत्वं भाव्यमानस्यापि क्वचित्सवर्णग्राहकताज्ञापनद्वाराऽऽन्तर्यतो द्विमात्रनिवृत्त्यर्थम्। तेन 'अमू' (१) इत्यादिसिद्धिरिति "छ्वोः" (पा०सू० ३।४।१९) इति सूत्रे **कैयटः**। **यत्तु** तपरत्वं "ढ्रलोपे" (पा०सू० ६।३।१११) इति दीर्घबाधनार्थमिति; तन्न,

'सुपत्रपातिता बाणा ज्वलिता इव पन्नगाः।
नैर्ऋतोरस्यभासन्त सवितू रश्मयो यथा' ॥

इति रामायणप्रयोगविरोधात्, "उरण् रपरः" (पा०सू० १।१।५१) इति सूत्रेऽण्ग्रहणाभावे 'ऊ रपर' इति **भाष्य**प्रयोगविरोधाच्च।

**सस्यैवेति**। संयोगान्तलोपेन सिद्धे नियमार्थम्। तेन 'ऊर्क्' इत्यादौ नेति भावः। (२)विपरीतनियमस्तु न, "पुमान् स्त्रिया" (पा०सू० १।२।६७) इति(३)निर्देशात्।

---

(१)**इत्यादिसिद्धिरिति**। वस्तुतस्तु अन्तरङ्गपरिभाषया अनित्यत्वं स्वीकृत्य "अदसोऽसेः" (पा०सू० ८।२।८०) इत्यत्र समाहारद्वन्द्वनिर्देशेनैवोपपत्तौ इयं परिभाषा विफलेति परिभाषेन्दुशेखरे विस्तरः। (२)**विपरीतनियम इति**। सस्य संयोगान्तलोपश्चेद्रफात्परस्यैवेति विपरीतनियम इत्यर्थः। (३)**निर्देशादिति**। न च

"एरनेकाचः" पा०सू० ६।४।८२) इति सूत्रमेरितिपदरहितं सानुवृत्तावृत्तविशेषणं सवार्त्तिकञ्चानुवर्त्तत इत्याह—**धात्ववयवेत्यादि, गतीत्यादि च**। 'सकृल्ल्वौ' इत्यत्र क्रियाविशेषणत्वेन कर्मत्वाद्यण् ।

"न भूसुधियोः" (पा०सू० ६।४।८५) इति निषेधे प्राप्ते आह—**वर्षाभ्वश्चेति**। 'वर्षाभूर्दर्दुरे पुमान्' (अ०को०) । **स्वार्थिक इति**। स्वस्याः प्रकृतेरर्थः स्वार्थस्तत्र भव इत्यर्थेऽध्यात्मादित्वाट्ठञ् । द्वारादिषु स्वग्रामस्वाध्याययोः पाठेन स्वशब्दादेश्चेदेतयोरेवेतिनियमार्थकेनै(१)जागमो न। पुनर्भूशब्दस्य रूढस्य नित्यस्त्रीत्वादाह—**यौगिक इति**।

## इत्यूदन्ताः ।

वर्णैकदेशानां वर्णग्रहणेनाग्रहणे रेफाभावादाह—**ऋवर्णादिति**। **व्युत्पत्तिपक्षे इति**। अव्युत्पत्तिपक्षेऽबादिष्वपाठाद्दीर्घशङ्कैव नेति भावः। व्युत्पत्तिपक्षे निरनुबन्धकतृप्रत्ययान्ता एवेति "ण्वुल्तृचौ (पा०सू० ३।१।१३३) इति**भाष्यस्वरसः**।

## इत्यृदन्ताः।

**वैकल्पिकेति**। "यत्तदेतेभ्यः" (पा०सू० ५।२।३९) इत्यत्र त्यदाद्यत्वकरणादतिदेशस्य, "क्षियः" (पा०सू० ६।४।५९) इत्यादौ धात्वनुकरणे विभक्तिकरणेन वैकल्पिकत्वस्य च ज्ञापनादिति भावः। अनुकरणस्यानुकार्यशब्दस्वरूपमात्रमर्थ इति प्रातिपदिकत्वम् । अनुकार्यञ्चानुकरणाद्भिन्नमेवेति "मतौ छः" (पा०सू० ५।२।५९) इति सूत्रे **भाष्ये** स्पष्टम्।

---

"झरो झरि सवर्णे" (पा०सू० ८।२।३९) इति लोपेनेदं रूपं सिध्यतीति न निर्देशासङ्गतिरिति वाच्यम्, अस्यासिद्धत्वेन "नश्चापदान्तस्य" (पा०सू० ८।३।२४) इत्यनुस्वारापत्त्या निर्देशासिद्धेः। एतेन व्यञ्जनात्परस्यैकस्यानेकस्य वोच्चारणे वैलक्षण्याभावादिदमसङ्गतमित्यपास्तम् ।

(१)**ऐजागमो नेति**। न च "सौवर्यः सप्तम्यः" इतिनिर्देशासङ्गतिः, स्वशब्दादेश्चेत्स्वाध्यायस्वग्रामशब्दयोरेवेति नियमेनैचोऽप्राप्तेः, अत एव 'अप्राकृतस्तु यः स्वारः' इत्यादिनिर्देशाः सङ्गच्छन्ते इति वाच्यम्, स्वरशब्दश्च सुपूर्वकऋधातोराचि एकः, स्वशब्दपूर्वकराधातोः के एक द्विविधस्वरशब्दस्वीकारेणादोषात् । अत्र च "सौवर्यः सप्तम्यः" "अप्राकृतस्तु यः स्वारः" इत्यादिनिर्देशा एव प्रमाणमिति दिक् ।

ईषदानुपूर्व्यत्ययेऽपि वाचकसादृश्यादर्थोपस्थापकत्वमिति अत्र **कैयटे**, "प्राग्दीव्यतोऽण् (पा०सू० ४।१।८३) इत्यत्र **भाष्ये** च स्पष्टम्। अत एव 'किरः' इत्यादितः कॄधातुरिति बोधः। "भू सत्तायाम्" (धा०सू० १) इत्यादौ श्तिप एव निर्देशात्कदाचिदनुकरणाद्विभक्त्यभावोऽपि। स च सूत्रेष्वेवेति प्रामाणिकाः। गवित्ययमाहेति वान्तस्यैवानुकरणम्। अनुकार्यस्वरूपभङ्गभिया च (१)न वलोपः "झलां जश्" (पा०सू० ८।४।५३) इत्यादौ जश्त्वाभाववदित्याहुः।

**इत्वे इति**। "किरश्च पञ्चभ्यः" (पा०सू० ७।२।७५) इति निर्देशादधातुप्रत्ययेऽपि तत्प्रवृत्तिरिति भावः। **कीरिति**। कॄधातुरित्यर्थः। **गुणो नेति**। "ऋत उत्" (पा०सू० ६।१।१११) इत्युत्वमप्यत एव न। अत एव "ग्रो यङि" (पा०सू० ८।२।२०) इति सूत्रनिर्देशः सङ्गच्छते।

**इत्यॄदन्ताः।**

**अनाङिति**। ऋऌवर्णयोः सावर्ण्यादिति भावः। **गम्ॠनिति**। ऌवर्णस्य दीर्घाभावादृवर्ण एवेति भावः। ननु तुल्यास्यसूत्रे **भाष्यकृता** "ऋति ऋ वा" (का०वा०) इत्यादिविधेययो रेफद्वयगर्भऌद्वयगर्भयोरच्त्वदीर्घत्वाङ्गीकारेणात्र द्विऌकार ईषत्स्पृष्टो दुर्वारः, आमि च तथा 'धातॄणाम्' इत्यत्र रेफद्वयगर्भोऽपीति चेत्? न, "अकः सवर्णे" (पा०सू० ६।१।१०१) इतिसूत्रे (२)उक्तोत्तरत्वात्। **गम्लेति**। **यत्तु**—लण्सूत्रे "उरण् रपरः (पा०सू० १।१।५१) इत्यत्र अजिति वक्तव्येऽण्ग्रहणसामर्थ्येनाणपूर्वेणैव" इत्युक्तं **भाष्ये**, ऌकारस्य यणि हि तत्र लपरत्वार्थं परेणाण्ग्रहणं स्यादिति सामर्थ्योक्तिरसङ्गता। ऋकारस्य यणि तु "रो रि" (पा०सू० ८।३।१४) इति लोपेन न विशेष इति। तन्न, ऋकारांशे हलृ-

---

(१)**न वलोप इति**। गवित्यस्य सादृश्यज्ञानाधीनोपस्थित्याऽर्थबोधकत्वेऽपि शक्तिलक्षणान्यतरज्ञानाधीनोपस्थितिप्रयोज्यार्थविषयकबोधजनकत्वरूपार्थवत्सूत्रोक्तार्थवत्त्वस्याभावेन प्रातिपदिकत्वाभावादिति भावः।

(२)**उक्तोत्तरत्वादिति**। ह्रस्वऋकारद्वयस्थानिकस्यैवेषत्स्पृष्टऋकारस्य ह्रस्वऋकारह्रस्वऌकारैतदुभयस्थानिकस्यैवेषत्स्पृष्टऌकारस्य च साधुत्वस्योक्तत्वादिति भावः।

पाऽणि शेरीति प्रवृत्त्या फलाभावेनाप्रवृत्त्या तत्साहचर्याद् ऌकारांशेऽपि हल्रूपाऽण्यप्रवृत्तिरित्याशयात् । वस्तुत ईदृशानामभिधाने दृढं मानं चिन्त्यम् ।

**सेरिति** । इना सहेत्यर्थः । "वोपसर्जनस्य" (पा०सू० ६।३।८२) इति सत्वम् । एकादेशस्य पूर्वान्तवत्त्वेऽपि (१)लिङ्गाद्यन्वय्यर्थप्रतिपादकत्वात् अव्ययमिति महासञ्ज्ञयाऽस्यानव्ययत्वान्न विभक्तिलुक् । सादेशात्पूर्वमाद्गुणस्तु न, "नेन्द्रस्य" (पा०सू० ७।३।२२) इति ज्ञापकेन पूर्वोत्तरपदनिमित्तकार्यात्पूर्वमेकादेशाप्रवृत्तेः । न च "नान्तः पादम्" इतिसूत्रस्थेन "न चैङः पदान्तात्परो रुरस्ति" इति **भाष्येण** विरोधात्सावीदृशानां प्रयोगोऽनुचितः, सावपि पदत्वसत्त्वादिति वाच्यम्, योगविभागसिद्धस्य सौ पदत्वस्य क्वाचित्कत्वेनादोषात् । सावप्रयोग एवेत्यन्ये । **सय इति** । नचास्यान्तर्वर्त्तिविभक्त्या पदत्वाद् "एङः पदान्तात्" (पा०सू० ६।१।१०९) इत्यादि दुर्वारमिति वाच्यम्, **भाष्ये** 'स्वादिषु'इति योगं विभज्य स्वादिषु पूर्वं पदमित्यर्थः । ततः 'अ सर्वनामस्थाने यचि' । सुबन्तमिति अनुवर्त्तते । अ यचीति प्रसज्यप्रतिषेधः, तेन (२)यजादौ सर्वनामस्थाने

---

(१)**लिङ्गाद्यन्वय्यर्थप्रतिपादकत्वादिति** । न चैवमव्ययीभावस्य "अव्ययीभावश्च" (पा०सू० २।४।१८) इत्यनेन नपुंसकत्वादव्ययीभावे तत्प्रयुक्तकार्यानुपपत्तिरिति वाच्यम्, विनापि वतिमब्रह्मदत्तं ब्रह्मदत्त इत्याहेत्यादौ सादृश्यप्रतीतिदर्शनेन "अव्ययीभावश्च" (पा०सू० २।४।१८) इत्यनेनानपुंसकाव्ययीभावस्य नपुंसकत्वोक्त्या नपुंसकवदित्यतिदेशलाभेन तत्प्रयुक्तकार्यसिद्धेः ।

(२)**यजादौ सर्वनामस्थान इति** । न च शम्भुरिवाऽऽचरति शम्भवति, परमकविरिवाचरति परमकवयति, लेढीति लिट् परमश्चासौ लिट् च परमलिट् तस्मादाचारक्विबन्ताद्वनिपि परमलिह्वा, द्रोग्धीति ध्रक् परमश्चासौ ध्रुक् च परमध्रुक् तस्मादाचारक्विबन्ताद् वनिपि परमद्रुह्वेत्यादौ चारम्भपक्षे पूर्वरूपभत्वढत्वादिकं न भवति, प्रत्याख्यानपक्षे भवतीति फलभेद इति वाच्यम्, यजादौ सर्वनामस्थाने इत्यस्य सुभिन्नप्रत्ययमात्रस्योपलक्षणत्वात् । न चैवमपि 'परमवाग्भ्याम्' इत्यादावपि पदसंज्ञानिषेधः स्यादिति वाच्यम्, यजादौ सर्वनामस्थाने इत्यस्य हलादिस्वाद्यतिरिक्तप्रत्ययमात्रस्योपलक्षणत्वेनादोषात् । 'परमवाचाम्' इत्यादौ तु "भम्" इति विभक्तसूत्रेण

पूर्वं पदं न, मध्ये चेत्सुबन्तं तदपि पदं नेति व्याख्यानेनादोषात्। आतिदेशिकस्याप्ययं निषेध इति स्पष्टमेव। (१)"उत्तरपदत्वे चापदादिविधौ" इति प्रतिषेधाच्च। उत्तरपदस्य तद्घटितस्य वा पदत्वे कर्त्तव्येऽन्तर्वर्त्तिविभक्तेः प्रत्ययलक्षणं नेति तदर्थः। अतो न योगविभागमूलकप्रत्याख्यानेन फलभेद इति **केचित्**।

"इतोऽत्" (पा०सू० ७।१।८६) इत्यतोऽनुवृत्तं सर्वनामस्थाने इति (२)प्रथमया विपरिणम्यते णिदित्यनेन सामानाधिकरण्यादित्याह—**सर्वनामस्थानमिति**। तत्र णितः कार्यस्यासम्भवात् णिति यत्कार्यं तदतिदिश्यते। **शसेति**। अचीत्यधिकारात्तद्धितशसो न ग्रहणमिति भावः। **गामिति**। परत्वादत्र वृद्धिस्तु न, अनवकाशत्वेन आत्वस्यापवादत्वात्।

---

यजादौ सर्वनामस्थाने परे पूर्वं भसंज्ञं; मध्ये चेत्सुबन्तं तदपि भं भवतीति भसंज्ञया पदसंज्ञाया बाधाच्च न दोषः। न चारम्भपक्षे कार्यित्वनिवेशाद् "उत्तरपदत्वे" इति निषेधाप्रवृत्त्या अटतीत्यट् परमश्चासावट् च परमाट् तस्मादाचारक्विबन्तात् "क्तिच्क्तौ च संज्ञायाम्" (पा०सू० ३।३।१७४) इति क्तिचि प्रत्ययलक्षणेन पदत्वात् "न पदान्तात्" (पा०सू० ८।४।४२) इति ष्टुत्वनिषेधेन 'परमाट्तिः' इति रूपं भवति, प्रत्याख्यानपक्षे च पूर्वोक्तदिशा पदसंज्ञानिषेधात् ष्टुत्वेन 'परमाट्टिः' इति रूपमिति फलभेद इति वाच्यम्, प्रत्याख्यानपरभाष्यप्रामाण्येन तस्यानभिधानात्।

**परे तु** कार्यित्वनिवेशे न मानम् आरम्भप्रत्याख्यानयोः फलभेदेन पूर्वोक्तानां सर्वेषामेवानभिधानम्। यजादौ सर्वनामस्थान इत्यस्योपलक्षणतया व्याख्यानं त्वयुक्तमेव, 'परमवाचौ' इत्याद्यर्थं भमितियोगविभागेन मध्यस्य सुबन्तस्य च संज्ञाविधानस्यानर्थक्यापत्तेः। यजादौ सर्वनामस्थान इत्यस्य हलादिस्वाद्यतिरिक्तप्रत्ययमात्रस्य भवन्मते उपलक्षणत्वेन पदसंज्ञानिषेधेनैवोपपत्तेरित्याहुः।

**(१)उत्तरपदत्वे इति**। उत्तरपदत्वं च–यद्वृत्त्यारम्भकसुब्निमित्तिका पदसंज्ञा चिकीर्षिता तद्वृत्तिविशिष्टत्वम्। वैशिष्ट्यं च स्वघटकार्थवदव्यवहितपूर्वत्वाभाववत्त्वस्वघटकत्वैतदुभयसम्बन्धेन। तेन 'अत्रयः' 'भृगवः' 'बहुपटवः 'परमवाचा' 'परमलोम्निशयः' 'पूर्वदण्डिप्रियः' 'पञ्चगवधनः' इत्यादौ कुत्रापि न दोष इत्यन्यत्र विस्तरः।

**(२)प्रथमया विपरिणम्यत इति**। वस्तुतस्तु विभक्तेः विपरिणाममकृत्वा णिदित्यत्र कर्मधारयं स्वीकृत्य गोशब्दाज्ज्ञाव्यवहितोत्तरत्वविशिष्टसर्वनामस्थाने इत्संज्ञकणकारो भवतीत्यर्थेन सामञ्जस्यात् न विभक्तिविपरिणामः। न च गोतो वृद्धिरित्येव सिद्धे णित्वकरणं व्यर्थमिति वाच्यम्, "णलुत्तमो वा" (पा०सू० ७।१।९१) इत्यत्र "णलु-

तदाह—**ओतो णिदिति**। सूत्रे तपरकरणेन गस्याविवक्षितत्वमिति भावः। तेन 'चित्रगुः' इत्यादौ न दोषः। अन्यथाऽङ्गाधिकारे तदन्तविधेः सत्त्वेन स्थानिवत्त्वेन गोऽन्तत्त्वाद्दोषः स्यादेव। मम त्वोकारान्तत्वाभावादल्विधौ स्थानिवत्त्वाभावाच्च न दोषः।

**परे तु** "गोतो णित्" (पा०सू० ७।१।९०) इति सूत्रे **भाष्ये** तपरत्वं प्रत्याख्यातम्। 'चित्रगुः' इत्यादौ तु न दोषः, गोः पूर्वत्वणित्त्वात्वस्वरेषु स्थानिवत्त्वप्रतिषेधात्। 'हे चित्रगो' इत्यादौ तु लाक्षणिकत्वान्न दोष इति अत्रैव सूत्रे **भाष्ये** स्पष्टम्। "द्योः सर्वनामस्थाने णित्त्वं वक्तव्यम्" इति "औतोऽम्" (पा०सू० ६।१।९३) इत्यत्र **भाष्ये** उक्तमित्याहुः। **सुद्यौरिति**। केवलद्योशब्दस्य स्त्रीत्वाद् बहुव्रीहिरुदाहृतः।

**विहितमिति**। यदि तु वर्णग्रहणेऽपि प्रतिपदोक्तपरिभाषा प्रवर्तते तदा (१)व्यर्थोऽयं यत्नः।

**स्मृतौरिति**। स्मृत उर्येनेत्यर्थः। **यत्तु** एषामभिधाने 'अयवायावादिषु "एकादेश उदात्तेनोदात्तः" (पा०सू० ८।२।५) इत्यस्य सिद्धत्वं वक्तव्यं तत्स्थानिकायादीनामस्वरितत्वाय इतिवार्त्तिकव्याख्यावसरे "अवादेशे नास्त्युदाहरणम्" इति "स्वरितो वा" (पा०सू० ८।२।६) इतिसूत्रस्थभाष्यविरोधः। प्रकृते पूर्वपदप्रकृतिस्वरेण स्मृतस्यान्तोदात्तत्वे शेषनिघातेन उशब्दस्यानुदात्तत्वात्तदेकादेशस्य "एकादेश उदात्तेन" (पा०सू० ८।२।५) इत्युदात्तत्वे 'स्मृतवा' इत्यादौ तदुदाहरणसम्भवादिति। तन्न; तृतीयादिष्वनभिधानेऽपि अन्यत्र तत्सत्त्वे बाधकाभावात्। न च "गोतः" (पा०सू० ७।१।९०) इतिसूत्रे "द्योश्च वृद्धिर्वक्तव्या" इति वार्त्तिके द्योशब्दस्यैवोपादानादन्यौकारान्ताभाव इति वाच्यम्, उपलक्षणतया व्याख्यानेनादोषात्। **परे तु** ईदृशानामनभिधानेऽपि न क्षतिरित्याहुः।

---

तमे" इति वक्तव्यतया तत्रेक्परिभाषोपस्थित्या 'चखाद' इत्यादौ वृद्ध्यनापत्तेः, एवं गाङ्कुटादिसूत्रेण उत्तमणलो ङित्त्वाप्राप्त्या 'चुकुट' 'चुकोट' इतिरूपद्वयासिद्धेश्च।

(१)**व्यर्थोऽयं यत्न इति**। वस्तुतस्तु लक्षणप्रतिपदोक्तपरिभाषा वर्णग्रहणे न प्रवर्तते इति परिभाषेन्दुटिप्पणे विस्तरेणाभिहितामिति तत एवावधारणीयम्।

**रायो हलि** (पा०सू० ७।२।८५)। "अष्टन आ" (पा०सू० ७।२।८४) इत्यत आ विभक्तावित्यनुवर्त्तते।

**इत्य(१)जन्ताः पुँल्लिङ्गाः।**

---

**रमेति।** रमयतेः (२)पचाद्यच्, टाप्। एकादेशस्य (३)पूर्वान्तवत्त्वेन प्रातिपदिकत्वात्स्वादयः। (४)'वाचा' इत्यादौ तु लिङ्गविशिष्टपरिभाषया तत्त्वाप्ते।

आप इति पञ्चम्यन्तेन सामानाधिकरण्यादङ्गस्येति पञ्चम्या विपरिणम्यते, विशेषणेन तदन्तविधिरि(५)त्याह—**आबन्तादिति।** "जसः शी" (पा०सू० ७।१।७१) इत्यतः शीति वर्त्तते। **रमे इति।** "यस्य" (पा०सू० ६।४।१४८) इति लोपो न, अभत्वात्।

**सम्बुद्धौ च** (पा०सू० ७।३।१०६)। "बहुवचने झलि" (पा०सू०

---

**(१)अजन्ता इति।** अत्र कुत्वं न्याय्यम्। **अन्ये तु**—"अल्पाच्तरम्" (पा०सू० २।२।३४) इति निर्देशाद् "आदिरन्त्येन" (पा०सू० १।१।७१) इतिसूत्रबोधितसंज्ञासु हल्सन्धिकार्यं न प्रवर्तते इति प्रकृते कुत्वं नाशङ्कनीयमित्याद्यच्सन्धौ निरूपितम्।

**इत्यजन्ताः पुँल्लिङ्गाः।**

---

**(२)पचाद्यजिति।** न च "घञजपः पुंसि" (लिं०सू०) इति पुंस्त्वापत्तिरिति वाच्यम्, तत्र सूत्रे भावे इत्यनुवृत्त्या भावार्थकतदन्तानामेव पुंस्त्वविधानेन कर्त्रर्थकाऽजन्ते तदप्राप्तेः। अत एव 'सम्बन्धमनुवर्तिष्यते' 'शेषं पुंवत्' इत्यादौ पुंस्त्वक्लीवत्वोक्तिः सङ्गच्छते। **(३)पूर्वान्तवत्त्वेनेति।** लिङ्गविशिष्टपरिभाषाप्रवृत्तौ स्त्रीत्वावच्छिन्नबोधकप्रत्ययविशिष्टत्वज्ञानायान्तवत्सूत्रप्रवृत्तेरावश्यकतया तेनैव निर्वाहे तेनात्वमादाय तत्त्वाश्रयणे गौरवमिति भावः। **(४)वाचेत्यादाविति।** वस्तुतस्तु अस्य भागुरिमते सत्त्वेऽपि 'एकादेशानपहृतटापोऽसम्भवः' इति**भाष्य**प्रामाण्येन हलन्तेभ्यः टाबभावस्यैव लाभेन **भाष्य**मतेऽसत्त्वात् 'बहुदामा' 'अनडुही' इत्यादौ तत्परिभाषाया आवश्यकत्वमिति बोध्यम्।

**(५)इत्याहेति।** वस्तुतस्त्वङ्गसंज्ञानिमित्तस्याबन्ततदाद्यव्यवहितोत्तरत्वविशिष्टस्यौङः शी स्यादित्येवार्थः।

७।१।१०३) इत्यत एदिति, "आङि चापः" (पा०सू० ७।३।१०५) इत्यत आप इति चानुवर्त्तते । **एङ्ह्रस्वादिति** । सम्बुद्धौ (१)प्रतिपदोक्तत्वेन शीघ्रोपस्थितिकतया हल्ङ्यादिलोपात् प्रथमेत्वेऽनेन सम्बुद्धिलोप इति भावः । सन्निपातपरिभाषा त्वनित्यत्वान्नात्र प्रवर्त्तते ।

**आङि चा** (पा०सू० ७।३।१०५) । चेन प्रकृतम् 'ओसि' इति परामृश्यते । "घेर्ङिति" (पा०सू० ७।३।१११) इत्यतोऽनुवृत्तं ङितीति आप इति पञ्चम्या षष्ठ्या विपरिणम्यते इत्याशयेनाह—**ङिद्वचनस्येति** ।

**सर्वनाम्नः स्या** (पा०सू० ७।३।११४) । आबन्तात्परस्य (२)सर्वनाम्नो विहितस्येत्यर्थः । तेन 'मासपूर्वायै' इति सिद्धम् । अत्र ह्रस्वो न स्याटः, तस्य विधेयत्वेनोद्देश्यत्वासम्भवात् । नापि ङिद्वचनस्य, व्याख्यानात् । अत आपो ह्रस्व इत्याह—**आपश्चेति** । आबन्तस्य गणे पाठभावेन सर्वनामत्वाभावादाह—**एकादेशस्येति । ग्रहणादिति** । सर्वनामशब्देनेत्यर्थः । न चैवमप्याबन्तत्वाभावः एकादेशनिष्पन्नस्याप्त्वाभावात्, अत एव 'खट्वा' इत्यादौ परादिवद्भावेनाप्त्वमाश्रित्याबन्तादिति सोर्लोप उक्तः, परादिवद्भावेन तत्त्वं तु न लभ्यम्, उभयत आश्रयणेऽन्तादिवत्त्वाभावादिति वाच्यम्, उभयत आश्रयणे तदभावस्य **भाष्ये** एकदेश्युक्तत्वेऽपि सिद्धान्तिसम्मतत्वाभावात् । एतच्च तिङन्ते इण्धातौ वक्ष्यामः ।

**परे तु** लिङ्गविशिष्टपरिभाषयाऽऽबन्तस्य सर्वनामत्वम् । आबन्त-

---

(१)**प्रतिपदोक्तत्वेनेति** । तदप्राप्तियोग्येऽचारितार्थ्यरूपबाधबीजस्य "सम्बुद्धौ च" (पा०सू० ७।३।१०६) इत्यत्र सत्त्वादिति भावः । एतद्ग्रन्थलपनायैवैतद्बाधबीजकथनम् । वस्तुतस्त्वेतद्बाधबीजाकथनेऽपि "हल्ङ्याब्" (पा०सू० ६।१।६८) इति लोपे प्रत्ययलक्षणेनैतदप्रवृत्तौ बाधकाभावान्न दोष इति परिभाषेन्दुटिप्पणे विस्तरः ।

(२)**सर्वनाम्नो विहितस्येति** । वस्तुतस्तु आबन्ताङ्गाभिन्नं यत्सर्वनाम ततः परस्य ङितः स्याट् स्यादापश्च ह्रस्व इत्युच्यमानेऽपि 'मासपूर्वायै' इत्यादौ दोषभावाद्विहितविशेषणे गौरवात्, "तस्मात्" (पा०सू० १।१।६७) इति परिभाषायां जागरूकायां दिग्योगलक्षणपञ्चम्यन्तं विहायान्यथा कल्पनायां मानाभावाच्च चिन्त्यमिदम् ।

त्वन्तु परादिवद्भावेनेत्याहुः । **सर्वस्यामिति ।** इह परत्वात्स्याटि कृते (१)सकृद्गतिन्यायात्सुण्न ।

**प्रतिपदोक्तस्येति ।** दिक्शब्दमुच्चार्य विहितत्वादस्य तत्त्वम् । **योत्तरेति** "अनेकमन्यपदार्थे" (पा०सू० २।२।२४) इति बहुव्रीहिः । "सर्वनाम्नो वृत्तिमात्रे" इतिमात्रग्रहणात्सम्प्रत्यसर्वनामत्वेऽपि पुंवत्त्वम् । **योत्तरेति ।** यत्तच्छब्दाभ्यामुद्देश्यविधेयत्वप्रतीत्या योत्तरात्वप्रकारकज्ञानविशेष्या सा प्रसिद्धपूर्वा यस्या इत्यर्थेनोत्तरापदस्य गुणवाचकत्वात्पूर्वनिपात इत्य(२)न्यत्र विस्तरः । **स्पष्टार्थमिति ।** "दिङ्नामानि" (पा० सू० २।२।२६) इत्यस्य बहुव्रीह्यधिकारे सत्त्वादिति भावः । **अन्तरायै नगर्यै इति ।** अपुरीत्यस्य पूःशब्दार्थस्य (३)विशेष्यत्वे इत्यर्थ इति भावः । (४)अत्र मानमन्वेष्यम् ।

**हे अम्बेति ।** ह्रस्वे कृते "सम्बुद्धौ च" (पा०सू० ७।३।१०६) इत्येत्वं न, आ आबिति प्रश्लेषात् । द्व्यक्षरं यदीति पठित्वा द्व्यच्काम्बार्थकस्यैव ह्रस्व इति नियममाश्रित्य 'डलकवतां ह्रस्वो न' इत्यस्य **भाष्ये** प्रत्याख्यानात् (५)फलाभेदाय सामान्यतोऽपि वार्त्तिकमसंयुक्तविषयमित्याशयेनाह—**असंयुक्ता इति ।** द्व्यक्षरं यदीत्यस्याङ्गत्वाद् द्व्यक्षराम्बार्थकाङ्ग-

---

**(१)सकृद्गतिन्यायादिति ।** निरनुबन्धकपरिभाषया "आमि सर्वनाम्नः" (पा०सू० ७।१।५२) इत्यत्रत्याम्पदेन स्थानिवद्भावेन ङित्वात्तस्यामोऽग्रहणात्सुड् न भवतीत्यपि बोध्यम् । एवं 'रमायां' 'बहुश्रेयस्याम्' इत्यादावपि नुड् नेति बोध्यम् । एवं च 'नद्याम्' इत्यत्र "आण्नद्याः" (पा०सू० ७।३।११२) इत्यनेनाडभावेऽपि न दोषः । निरनुबन्धकपरिभाषयैवास्याप्यामः स्थानिवद्भावेन ङित्वात्तत्रत्याम्पदेनाग्रहणेन नुटोऽप्राप्त्या लक्ष्यसिद्धेः ।

**(२)अन्यत्र विस्तर इति ।** शब्दरत्न इत्यर्थः । **(३)विशेष्यत्व इत्यर्थ इति ।** पूःशब्दार्थनिष्ठविशेष्यताप्रयोजकत्व इत्यर्थः । **(४)अत्र मानमन्वेष्यमिति ।** केचित्तु—अपुरीत्यस्याद्याध्यायास्थान्तरम्बहिर्योगेति सूत्रे पाठे करणीये गणसूत्रपाठकरणमेव मानमित्याहुः । पुरीशब्दस्य विशेष्यताप्रयोजकत्वे सर्वनामसञ्ज्ञा न भवतीत्येवार्थो लाघवाद् इति 'अन्तरस्यां नगर्याम्' इत्यादौ स्याड् भवत्येवेति भावः ।

**(५)फलाभेदायेति ।** द्व्यक्षरं यदीतिप्रत्याख्यानपक्षे 'हे अक्क' इत्यादौ ह्रस्वः प्राप्नोति, 'डलकवतां ह्रस्वो न' इति वार्तिकमते ह्रस्वो न प्राप्नोतीति फलभेदवारणा-

स्य ह्रस्व इति नियमशरीरात् 'जगदम्ब' इत्यादौ (१)ह्रस्वो भवत्येव ।

**यद्यपि जरसादेशस्येति ।** एवञ्चैत्वशीनुड्याडामां नित्यत्वात्पूर्वमेषु क्वचिदजादित्वाभावात्क्वचित्सन्निपातपरिभाषया जरसोऽनापत्तिरि(२)ति भावः । यद्यपि याडामोर्जरसपेक्षया (३)परत्वात् तयोः कृतयोराद्येऽजादित्वविघातादन्त्ये सन्निपातपरिभाषया न जरसः प्राप्तिः, एवमेत्वेऽपि; तथापि तत्र प्रश्लेषफलं दर्शयितुमाह—**एवमिति ।** अत्र यद्वक्तव्यं त(४)न्निर्जरशब्दे उक्तम् ।

**स्वाश्रयमिति ।** स्वं श्रूयमाण आकारः । **स्थानिवद्भावेनाप्त्वमिति ।** न च ङ्याब्ग्रहणेऽदीर्घ आदेशो न स्थानिवदिति ह्रस्वे आप्त्वस्य विच्छेदात्कथं दीर्घे स्थानिवत्त्वेन तल्लाभः, ङ्याप्स्थानिको दीर्घभिन्न आदेशो न स्थानिवदिति तदर्थ इति वाच्यम्, "याडापः" (पा०सू० ७।३।११३) "औङ आपः" (पा०सू० ७।१।१८) "आङि चापः" (पा०सू० ७।३।१०५) "ङेराम्नद्याम्" (पा०सू० ७।३।११६) हल्ङ्याब्" (पा०सू० ६।१।६८) इत्येतेष्वाकारप्रश्लेषमाश्रित्य स्थानिव-

---

यासंयुक्ता इति वक्तव्यमिति भावः । **(१)ह्रस्वो भवत्येवेति ।** न चादन्तत्वाद्यप्यादेति वाच्यम्, ह्रस्वस्य बहिरङ्गासिद्धत्वेन टापोऽप्राप्तेः सन्निपातपरिभाषया टापः प्राप्त्यभावाच्च ।

**(२)इति भाव इति ।** वस्तुतस्तु क्वचित्परत्वात्क्वचित्पूर्वविप्रतिषेधेन पूर्वमेव जरसिति एत्वशीनुड्याडामां वारणाय "सम्बुद्धौ च" (पा०सू० ७।३।१०६) "औङ आपः" (पा०सू० ७।१।१८) "ह्रस्वनद्यापः" (पा०सू० ७।१।५४) "याडापः" (पा०सू० ७।३।११३) "ङेराम्" (पा०सू० ७।३।११६) इत्यादिषु सर्वत्राऽऽकारप्रश्लेष आवश्यकः । यथा च पूर्वं जरस् तथा निर्जरशब्दे एवावोचाम । **(३)परत्वात्तयोरिति ।** चिन्त्यमिदम्, पूर्वविप्रतिषेधेन जरसेव पूर्वं भवतीति "जरसोऽवकाशः जरसा जरसे" इति "जराया" (पा०सू० ७।२।१०१) इतिसूत्रभाष्यतो लाभात् । **(४)निर्जरशब्दे उक्तमिति ।** यदत्र वक्तव्यं तदस्माभिरपि तत्रैवोक्तमिति बोध्यम् । न च जरसि कृते स्थानिवद्भावेनाऽबन्तत्वेऽपि निर्दिश्यमानाऽऽपोऽभावादेत्वं नैव प्राप्नोतीति तत्राऽऽकारप्रश्लेषो व्यर्थ इति वाच्यम्, प्राचीनमते निर्दिश्यमानपरिभाषाया वर्णग्रहणेऽप्रवृत्तेरित्याशयात् । वस्तुतस्तु 'हे अतिखट्व' इत्यादावेत्ववारणाय तत्र प्रश्लेष आवश्यक एवेति बोध्यम् ।

त्त्वनिषेधप्रत्याख्यातृ**भाष्य**नये शङ्कासत्त्वेनादोषात्। अत्र यत्रोदाहरणे सूत्रभाष्यवार्त्तिकानां फलभेद आपतति तेषामनभिधानम्, यथा अतिखट्वस्य अः अतिखट्वा इत्यादेः; वक्ष्यमाणरीत्या दीर्घात्पूर्वं फलाभावेन स्थानिवत्त्वाऽप्रवृत्तौ (१)फलभेदस्यैवाभावाच्च।

यत्त्वाकारान्तरं प्रश्लिष्याकाररूप एव यो न कदाचिद्रूपान्तरं प्राप्त इत्यर्थ इति। तन्न; मानाभावात् **भाष्ये** तस्यानुक्तेश्च। (२)**आबन्तं यदङ्गमिति**। "प्रत्ययग्रहणे" (प०भा० २३) इति परिभाषयाऽतिखट्वस्य (३)नाबन्तत्वं, (४)यच्चाबन्तं खट्वेति, न तदङ्गमिति भावः। न चानयाऽऽबन्तग्रहणे तेनाङ्गविशेषणादाबन्तान्तं यदङ्गमित्यर्थाद् 'अतिखट्वाय' इत्यादौ दोषस्तदवस्थ इति वाच्यम्, अङ्गस्य विशेषणत्वात्। एतेन श्रुतमाकारमादाय स्मृतमनुबन्धमादाय आप्त्वानुसन्धानात्स्यादेव याडित्यपास्तम्। तस्य लाक्षणिकत्वाच्च।

ननु स्त्रीप्रत्यये वाचनिकस्तदादिविधिनिषेधो **भाष्ये** पठितस्तत्कथमस्य तत्र प्राप्तिरत आह–**उपसर्जनेति**। "स्त्रीप्रत्यये चानुपसर्जनेन" (प०भा० २६) इति वचनस्यैव **भाष्ये** पाठादिति भावः। अत्रोपसर्जनत्वं (५)लौकिकमेव स्त्रीप्रत्यये शास्त्रीयोपसर्जनत्वासम्भवात्। यद्यपि स्त्रीप्रत्ययान्ते शास्त्रीयोपसर्जनत्वमस्ति तथापि न तेन 'प्रत्ययग्रहणे' इति तदादिनियमप्रसक्तिः। एतत्सर्वं व्याख्यादर्शाद्यनुरोधेन।

**परे** त्वस्याकारस्य लाक्षणिकत्वान्नात्र याट् वर्णग्रहणेऽपि तत्प्रवृत्तेः "ओत्" (पा०सू० १।१।१५) इत्यादौ **भाष्ये** स्पष्टमुक्तत्वात्। न च

---

(१)**फलभेदस्यैवाभावाच्चेति**। वस्तुतस्तु "धात्वन्तयकोस्तु नित्यम्, सुनयिका, सुपाकिका" इत्यादौ प्रथमस्थानिवद्भावस्य फलाभावाद् अप्रवृत्तौ द्विवारं स्थानिवत्त्वमन्तरा धात्वन्तयकारासम्भवेन तदसङ्गत्यापत्त्या चिन्त्यमिदम्।

(२)**आबन्तं यदङ्गमितीति**। आबन्ततदाद्यभिन्नं यदङ्गमित्यर्थः। (३)**नाबन्तत्वमिति**। नाबन्ततदादित्वमित्यर्थः। (४)**यच्चाबन्तमिति**। यच्चाबन्ततदादीत्यर्थः।

(५)**लौकिकमेवेति**। शास्त्रीयोपसर्जनत्वसमानाधिकरणं लौकिकमेवोपसर्जनत्वमित्यर्थः। तेनैकदेशिसमासप्रकरणतत्प्रत्याख्यानयोर्न फलभेद इत्यन्यत्र विस्तरः।

'खट्वायै' इत्यत्र याडनापत्तिः, सूत्रन्तु (१)"निशायै" इत्यादौ चरितार्थमिति वाच्यम्, यस्य रूपस्य लक्षणप्रवृत्तिं विना न सम्भवस्तस्यैव लाक्षणिकस्य तत्परिभाषाविषयत्वात्। न चेह तथा। एकादेशतः प्रागपि तद्रूपसत्त्वात् पदाङ्गाधिकारे इति वार्त्तिकेनाङ्गस्य विशेष्यताया एवौचित्यबोधनाच्च। अत एवा(२)बन्तान्तं यदङ्गमित्यर्थाभिप्रायेण 'अतिखट्वाय' इत्येतत्सिद्धये अतिखट्व-ए इति स्थिते प्रवृत्तं "ङ्याब्ग्रहणेऽदीर्घः" इति वार्त्तिकं व्याख्याय श्रुताकारस्मृतानुबन्धाभ्यामाप्त्वेनाशङ्कां कृत्वा लाक्षणिकत्वेन समाधायाकारप्रश्लेषेण तत्प्रत्याख्याने एतत्परिहारायोपायान्तराकथनं **भाष्ये**।

किञ्च अङ्गस्य विशेषणत्वे वार्त्तिकस्य तत्प्रत्याख्यानायाऽऽकारप्रश्लेषस्य च वैयर्थ्यं स्पष्टमेव। किञ्च खट्वाया अर्द्धेऽर्द्धखट्वायामित्यादौ याडनापत्तिः। किञ्चाऽऽकारप्रश्लेषपक्षेऽपि दीर्घोत्तरं स्वाश्रयाकारत्वं स्थानिवद्भावेनाप्त्वमिति शङ्काऽयुक्तैव, दीर्घात्पूर्वं स्थानिवत्त्वस्य फलाभावादप्रवृत्तौ स्थानिन्याप्त्वबुद्धेरभावात्तदादेशे दीर्घे तदारोपस्य दुर्लभत्वात्, परम्परया कार्यमादाय स्थानिवत्त्वप्रवृत्तौ मानाभावात्। "याडापः" (पा०सू० ७।३।११३ इति सूत्रे **भाष्येऽ**पि "अतिखट्वायेत्यत्र स्थानिवत्त्वात् प्राप्तस्य याटः प्रतिषेधो वक्तव्यः, न वक्तव्यो ङ्याब्ग्रहणेऽदीर्घ इति स्थानिवत्त्वनिषेधात्। न च दीर्घत्वे आबसौ भूतपूर्व इति याट् प्राप्नोति, लाक्षणिकत्वात्। स्थानिवत्त्वे तु तत्सामर्थ्यान्नैतत्परिभाषाप्रवृत्तिः" इत्युक्तम्। यद्यपि स्थानिवत्सूत्रयाडापसूत्रस्थ**भाष्याभ्यां** हल्ङ्याप्सूत्रयाडापसूत्रयोरेव प्रश्लेषो लभ्यते, तथापि **भाष्यमु**पलक्षणमितरसूत्राविषयोदाहरणानभिधानं वेत्यनयोर्युक्तं सुधीभिर्विचार्यमि(३)त्याहुः।

---

(१)**निशायै इत्यादाविति**। इदमुपलक्षणं 'बहुदामायै' इत्यस्य निश्धातोरिगुपलक्षणे के टापि खद्वाशब्दतुल्ययोगक्षेमत्वात्। (२)**आबन्तान्तं यदङ्गमिति**। आबन्ततदावन्ताभिन्नं यदङ्गमित्यर्थः।

(३)**इत्याहुरिति। परे तु**—'हे अतिखद्व' 'अतिद्वेन' 'अतिखद्वाय' 'अतिखद्वयोः' 'अतिखद्वानाम्' इत्यादौ, विभक्तिनिमित्तककार्यात्पूर्वमेव जरस् भवतीति निर्जरशब्दे परोक्त्यादिना सिद्धान्तितत्वेन 'जरसा' 'जरसे' 'जरसः' 'जरसोः' 'जरसाम्' इत्यादौ च तत्तद्विधिवारणाय "सम्बुद्धौ च" (पा०सू० ७।३।१०६) "आङि चापः"

(पा०सू०७।३।१०५) "याडापः" (पा०सू० ७।३।११३) "ङेराम्" (पा०सू० ७।३।११६) इत्यत्राऽऽकारप्रश्लेष आवश्यकः। 'अतिखट्वाय' इत्यादावाकारप्रश्लेषेऽपि याड्वारणाय "स्त्रीप्रत्यये च" (प०भा० २६) इति परिभाषया उपसर्जनवाक्ये तदादिनियमसत्त्वेनाबन्ततदाद्यभिन्नं यदङ्गं ततः परस्य ङितो याडित्यवश्यं "याडापः" (पा० सू० ७।१।११३) इत्यस्यार्थो वक्तव्यः। न च 'अतिखट्वाय' इत्यादावाकारस्य लाक्षणिकत्वान्न याडिति वाच्यम्, वर्णग्रहणे फलाभावेनेयं परिभाषा न प्रवर्तते इति सिद्धान्तात्तत्परिभाषाया अप्रवृत्तेः। न च ओत्सूत्रे भाष्ये 'अदोऽभवत्' इत्यादौ प्रगृह्यसंज्ञामाशङ्क्य लक्षणप्रतिपदोक्तपरिभाषया वारणपरभाष्यविरोधो वर्णग्रहणे एतदप्रवृत्ताविति वाच्यम्, तस्य भाष्यस्यैकदेश्युक्तित्वेनादोषात्। अन्यथा 'गोऽभवत्' इत्यादौ दोषवारणायैतदग्रे एव गौणमुख्यन्यायस्य प्रवर्तितत्वात्तेनैवात्रापि दोषवारणे एतद्भाष्यासङ्गतिः स्यात्।

'खट्वायै' इत्यादौ याडुपपत्तये यस्य रूपस्य लक्षणप्रवृत्तिं विना न सम्भवस्तस्यैव लाक्षणिकस्यैतत्परिभाषाविषयत्वमिति वारणापेक्षया वर्णग्रहणे एतदप्रवृत्तेरेव युक्तत्वात्। न च 'पदाङ्गाधिकारे' (प०भा०) इतिपरिभाषया आबन्तं यत्तदादि तदन्तं यदङ्गं तस्मात्परस्य ङितो याडित्यर्थेन 'अतिखट्वाय' इत्यादौ पुनरपि दोषो दुरुद्धर एवेति वाच्यम्, यत्र धर्मी सिद्धस्तत्र प्रत्ययग्रहणपरिभाषया अदग्धदहनन्यायेन तदादित्वरूपधर्ममात्रोपस्थित्या आबन्तं यत्तदङ्गम् आप् यस्माद्विहितस्तदादित्वविशिष्टं तस्मात्परस्य ङितो याडित्यर्थेनादोषात्।

न च खट्वेव मनुष्यः खट्वा बहूनां खट्वा बहुखट्वा तस्यै बहुखट्वायै इत्यादावाबन्ततदादित्वाभावादुपसर्जनवाक्येन याड् न स्यात्, स्वान्तपर्याप्तशक्तिनिरूपकार्थनिष्ठविशेष्यतानिरूपितप्रकारतानिरूपितस्त्रीत्वनिष्ठावच्छेदकताप्रयोजकत्वरूपोपसर्जनत्वस्य प्रकृते सत्त्वादनुपसर्जनवाक्येनापि न स्यादिति वाच्यम्, स्वान्ततदाद्यवधिकपूर्वत्वव्यापदपर्याप्तप्रयोजकतानिरूपितप्रयोज्यतावद्विशेष्यतानिरूपितप्रकारतानिरूपितस्त्रीत्वनिष्ठावच्छेदकताप्रयोजकत्वमुपसर्जनत्वमितिकल्पे वाक्यभेदाभावेऽपि याट्सिद्धेः।

न च द्विवारं स्थानिवत्त्वप्रवृत्तौ प्रमाणाभावात्प्रकृते आप्त्वमेव नेति वाच्यम्, धात्वन्तयकोस्तु नित्यं सुनयिका सुपाकिकेत्यादौ द्विवारं स्थानिवत्त्वप्रवृत्तिमन्तरा यकारे धात्वन्तत्वासम्भवेन द्विवारं स्थानिवद्भावस्य दर्शनात्। न चाबन्तं यत्तदादि तदन्तं यदङ्गमित्यभिप्रायेणातिखट्वादौ दोषवारणाय प्रवृत्तं "ङ्याब्ग्रहणेऽदीर्घः" (का०वा०) इति वार्त्तिकं व्याख्याय श्रुताकारस्मृतानुबन्धाभ्यामाप्त्वेन शङ्कां कृत्वा लाक्षणिकत्वेन समाधायाकारप्रश्लेषेण तत्प्रत्याख्यानकल्पे एतत्परिहारायोपायान्तरं भाष्ये नोक्तमिति वर्णग्रहणे इयं परिभाषा प्रवर्तते इति कल्प्यत इति वाच्यम्, उपायान्तराकथनमात्रेणैतत्कल्पनायाः कर्तुमशक्यत्वात् "स्त्रीप्रत्यये चानुपसर्जनेन" (प०भा० २६) इतिपरिभाषया दोषवारणेन तत्कथने फलाभावाच्च।

व्रश्च (पा०सू० ८।२।३६) । अत्र राजिसाहचर्याद् भ्राजिः (१)फणादिरेव । तेनान्यस्य 'विभ्राक्' इत्येवाहुः । छशौ वर्णौ ताभ्यां

न च खट्वाया अर्धमर्धखट्वा तस्यामर्धखट्वायामित्यादौ याण्न स्यान्निरुक्तोपसर्जनत्वस्य सत्वेनाबन्ततदादित्वाभावादिति वाच्यम्, "स्त्रीप्रत्यये च"इतिपरिभाषायां शास्त्रीयोपसर्जनत्वसमानाधिकरणलौकिकोपसर्जनत्वं स्वीक्रियते इति "एकविभक्तावषष्ठ्यन्तवचनम्" इतिवचनेन शास्त्रीयोपसर्जनत्वाभावात्तदादिनियमाभावेनादोषात् । अत एवैकदेशिसमासतत्प्रत्याख्यानयोर्न फलभेदः । न च स्थानिवत्सूत्रस्थयाडापइतिसूत्रस्थभाष्याभ्यां हल्ङ्याप्सूत्रस्थयाडापइतिसूत्रस्थभाष्याभ्यां च तयोरेवाऽऽकारप्रश्लेषो लभ्यत इति कथं सर्वत्राऽऽकारप्रश्लेष इति वाच्यम् 'जरसा' 'जरसे' 'जरसोः' 'जरसाम्' इत्यादौ दोषवारणाय प्रश्लेषस्यावश्यकत्वेन प्रकृतभाष्ययोरुपलक्षणतया व्याख्येयत्वात् । केवलं "सम्बुद्धौ च" (पा०सू० ७।३।१०६) इत्यत्राकारप्रश्लेषस्य फलं चिन्त्यम्, 'हे अतिखट्व' इत्यादौ "स्त्रीप्रत्यये च" (प०भा० २६) इति परिभाषयाऽऽबन्ततदादित्वस्याभावान्निर्दिश्यमानपरिभाषया वा निर्दिश्यमानस्यापोऽभावेनैव तस्याप्रवृत्तेः । नच "गङ्गायमुने' इत्यादौ "औङ आपः" (पा०सू० ७।१।१८) इति न प्राप्नोतीति दोषः, प्रकृते नवीनमते समुदायविशेष्यकबोधेन स्त्रीप्रत्ययस्योपसर्जनत्वादाबन्ततदादित्वाभावादिति वाच्यम्, "गोस्त्रियोः" (पा०सू० १।२।४८) इतिसूत्रेऽत्र ह्रस्ववारणाय कृतस्य "द्वन्द्वे न" इति वार्तिकस्य स्त्रीप्रत्यये इत्यादिनिषेधेऽपि तात्पर्यमित्यदोषात् । विशेष्यान्तरसत्त्वेऽपि अनुत्तरपदस्येति ज्ञापकात् क्वचित्तदादीति धर्म्युपतिष्ठते इति कल्पनेन तदन्तविधिद्वयेनादोषाद्वेति सुधियो विभावयन्तु ।

(१)**फणादिरेवेति** । अर्थवद्ग्रहणपरिभाषया 'राजृ दीप्तौ' (धा०सू० ७१) इत्यस्यैव ग्रहणे तत्साहचर्याद्भ्राजिरपि फणादिरेव गृह्यत इति भावः । न च फणादिर्भ्राजधातुर्नैवास्ति । अन्यथा फणादेः 'भ्रेजतुः' अफणादेश्च 'बभ्राजतुः' इतिरूपद्वयसिद्धेरफणादेश्चाकारानुबन्धकरणेन 'अबिभ्रजत्' फणादेश्च ऋदित्त्वेन "नाग्लोपि" (पा०सू० ७।४।२) इति निषेधाद् 'अबभ्राजत्' इति रूपद्वयसिद्धेश्च "भ्राजभास" (पा०सू० ७।४।३) इति सूत्रे भ्राजिग्रहणमनर्थकं स्यादिति वाच्यम्, पेचुभ्रेजुर्यस्मिन्कर्मणि इति विग्रहे "आख्यातमाख्यातेन" (ग०सू० २।१।७२) इति समासे णिचि टिलोपे चङि च अपेचुभ्रेज् इ अत् इति स्थिते ह्रस्वविकल्पाय "भ्राजभास" (पा०सू ७।४।३) इतिसूत्रे भ्राजिग्रहणस्यावश्यकत्वात् । **यत्तु** फणादौ भ्राजृ इति, अन्यत्र भ्राजेतिपाठेन "व्रश्च" (पा०सू० ८।२।३६) इतिसूत्रे च राजृ इति पाठेन 'विभ्राट्' 'विभ्राक्' इति रूपद्वयसिद्धौ भ्राजेः पुनः पाठोऽर्थवद्ग्रहणपरिभाषाज्ञापक इति; तन्न, विभ्राज्शब्दात् ण्यन्तात् क्विपि टिलोपे विभ्र् इति स्थिते षत्वार्थं भ्राजिग्रहणस्य व्रश्चेतिसूत्रे आवश्यकत्वादिति दिक् ।

शब्दरूपं विशेष्यमादाय तदन्तग्रहणमित्याह—**छशान्तयोरिति**। छश-योरित्युक्तेऽपि न क्षतिरिति चिन्त्यम्। पदस्येति तु 'पृष्टम्' इत्यादिसिद्धये व्यधिकरणमेव। **अन्तादेश इति**। "अलोऽन्त्यस्य" (पा०सू० १।१।५२) इति वचनात्। अत्र "झलो झलि" (पा०सू० ८।२।२६) इत्यतो झलीति, पदस्येति, "स्कोः" (पा०सू० ८।२।२९) इत्यतोऽन्ते इति चानुवर्त्तते। "च्छ्वोः शूड्" (पा०सू० ६।४।१९) इत्यत्र क्ङितीत्यनुवृत्तेः 'प्रष्टा' इत्यादौ शादेशाभावाद् अशान्तत्वेन षत्वाप्राप्तौ छग्रहणम्। अत्रापि सतुङ्निर्देशो बोद्ध्यः। **तस्यासिद्धत्वादिति**। "चयो द्वितीयाः" (का०वा०) इत्यस्य "नादिन्या" (पा०सू० ८।४।४८) इति सूत्रे **भाष्ये** पाठादिति भावः। **टतयोरिति**। धुडभावे टस्य, धुटि तस्येत्यर्थः। **न भवतीति**। जश्त्वात्प्राक् षस्य नेत्यर्थः। जश्त्वे तु प्राप्तिरेव नेति बोद्ध्यम्।

**केचित्त्विति**। "एकाचः" (पा०सू० ८।२।३७) इत्युत्तरसूत्रेऽनुवृत्त्या मध्येऽपि सम्बन्ध एवोचित इति भावः। **जश्त्वेनेति**। यत्तु 'जश् झशि' इति निर्देशात् शस्य न जश्त्वमिति। तन्न; अविकृतस्वरूपप्रतिपादने तात्पर्यादयस्मयादित्वेन भत्वाच्च तत्र तदप्राप्तौ न्यायसिद्धायां ज्ञापकत्वायोगात् "उपदेशेऽज्" (पा०सू० १।३।२) इत्यादि(१)निर्देशैः कुत्वाद्यनापत्तेश्च। अत्र मते **भाष्यानुग्रहो** विचार्यः। "मांसपृतना" (का०वा) इत्यस्य "पद्दन्न" (पा०सू० ६।१।६३) इति सूत्रे उपसंख्यातत्वादाह—**शसादौ वेति**। **स्त्रीत्वादिति**। पुंस्त्वाभावादित्यर्थः। **नात्वं नेति**। स्त्रीत्वादित्यनुकृष्यते। अत एव पुंस्त्वाभावान्नत्वाभाव इति नोक्तम्। न हि पुंस्त्वाभावो नाभावे प्रतिबन्धको नपुंसकेऽपि तदङ्गीकारात्।

**ङिति ह्रस्वश्च** (पा०सू० १।४।६)। अत्र वाक्यद्वयम्। आद्ये यू इति, स्त्र्याख्याविति, अस्त्रीति, इयङुवङ्स्थानाविति, वेति चानुवर्त्तते। अन्त्ये यू

(१)निर्देशैरिति। "आदिरन्त्येन" (पा०सू० १।१।७१) इतिबोधितसञ्ज्ञासूत्रे

इति, वेति, स्त्रीवाचकावित्येतन्मात्रार्थकं स्त्र्याख्याविति च । तत्र ह्रस्वयोरप्राप्ते दीर्घयोस्तु "नेयङ्" (पा०सू० १।१।४) इति निषेधादप्राप्ते विभाषा । इण्नादिष्वप्राप्तिमाशङ्क्य "ङिति ह्रस्वश्च" (पा०सू० १।४।६) इत्यत्र नित्यस्त्रीलिङ्गावित्येवंविधो नियमो नाश्रीयत इति **कैयटस्तु** ह्रस्वांशमात्रविषय इत्याशयेनाह–**नित्यस्त्रीलिङ्गाविति** । अत एवास्य दीर्घांशे निषेधविकल्पत्वं **भाष्ये** उक्तं "यू स्त्र्याख्यौ" (पा०सू० १।४।३) इति सूत्रे । तत्फलं 'कटप्रुवे ब्राह्मण्यै" इति, (१)लिङ्गान्तरविशिष्टार्थाभिधायकत्वेन तत्त्वाभावात् ।

**परे** त्वत्र विकल्पो भवत्येव आख्याग्रहणरहितस्यैवात्र सम्बन्धात् । यद्वा, स्त्र्याख्यावित्येतदेव स्त्रीवाचकावित्येतन्मात्रार्थकमत्र, शब्दाधिकारात् । तच्च ङिदाक्षिप्ताङ्गस्य विशेषणम् । अत एव "प्रथमलिङ्गग्रहणं च" (का०वा०) इत्यस्यात्राप्रवृत्त्यन्वाख्यायके 'ह्रस्वौ चेयङुवङ्स्थानौ च प्रवृत्तौ स्त्रीवचनावेव नदीसञ्ज्ञौ भवतो न तु पुंवाचकाविति वक्तव्यम्' इति वार्तिके- "अतिशकट्यै ब्राह्मण्यै । क मा भूत् ? अतिशकटये ब्राह्मणाय । अतिश्रियै ब्राह्मण्यै, श्रियै ब्राह्मण्यै । क मा भूत् ? अतिश्रिये ब्राह्मणाय, श्रिये ब्राह्मणाय" इति "यूस्त्र्याख्यौ" (पा०सू० १।४।३) इतिसूत्रशेषे **भाष्ये** उक्तम् । एवञ्चास्य निषेधविकल्पत्वमसम्भवि समुदायस्य केनापि प्राप्त्यभावात् । अवयवस्य प्राप्तावपि तस्यानेन विकल्पाभावात्, ङिदाक्षिप्ताङ्गस्यैवानेन विकल्पात् । एतच्च 'प्रवृत्तौ स्त्रीवचनौ' इत्यनेन सूचितम् ।

अत एवात्र वाक्यद्वयेऽपि विधिविकल्प एव दर्शितः । एवञ्च 'अत्र नियमो नाश्रीयते' इति **कैयटो** वाक्यद्वयपर एवोचितः । उपक्रमे निषे-

---

हल्सन्ध्यप्रवृत्तिज्ञापनादिति भावः । (१)**लिङ्गान्तरविशिष्टार्थाभिधायकत्वेनेति** । स्वावच्छिन्नमुख्यविशेष्यताप्रयोजकत्वं, स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वनिष्ठप्रकारताप्रयोजकत्वं, स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वेतरलिङ्गनिष्ठप्रकारताऽप्रयोजकत्वमेतत्त्रितयसम्बन्धेन प्रवृत्तिनिमित्तविशिष्टा या शक्तिः ( स्वपर्याप्त्यधिकरणत्वं, स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधजनकत्वप्रकारकतात्पर्यविशेष्यतापर्याप्त्यधिकरणत्वमेतदुभयसम्बन्धेन ) तादृशशक्तिविशिष्टत्वरूपनित्यस्त्रीत्वस्य 'कटप्रुवे ब्राह्मण्यै' इत्यादावभा-

घपरतया व्याख्यानं तु स्त्र्याख्यावित्यस्य नित्यस्त्रीत्वार्थकत्वमजानत एकदेशिनो 'यू इति ह्रस्वयोर्ग्रहणम्' इतिपक्षोपपादने उक्तिभूतमिति तन्नादरणीयम् ।

**यत्तु**–"दीर्घवाक्ये स्त्र्याख्याविति ईदूतोस्तदन्तस्य वा विशेषणं, पुनरङ्गेन तदन्तविधिः, अङ्गस्य च केवलस्त्रीत्वं विशेषणम् । एवं ह्रस्वघटितवाक्येऽपि स्त्रियामित्येतन्मात्रमुभयोर्विशेषणम्" इति, तत्तु चिन्त्यं **भाष्या-त्तदलाभात्** । "नेयङुवङ्" (पा०सू० १।१।४) इत्यत्र तु नेयङाद्याक्षिप्ताङ्गविशेषणं स्त्रीत्वं तदाक्षिप्तस्येयङादिविशेषणताया एवौचित्यात् , "यस्याङ्गस्येयुवौ" इति **भाष्योक्तेः** स्त्र्याख्यावित्यस्य नित्यस्त्रीलिङ्गावित्यर्थकस्य यू इत्यनेनैव क्लृप्तसम्बन्धत्वाच्च । अत एव 'अतिश्रिये ब्राह्मणाय' इत्यत्रानेन निषेधादवयवनदीत्वप्रयुक्तमपि नदीकार्यं न ।

ननु यथा 'खरकुट्यै ब्राह्मणाय' इत्यादौ लुबन्तस्य त्रिलिङ्गत्वेऽपि प्रथमलिङ्गग्रहणान्नित्यनदीत्वं भवतीति **भाष्ये** उक्तम् 'चञ्चा ब्राह्मणान् पश्य' इत्यादौ युक्तवद्भावेन स्वलिङ्गप्रयुक्तकार्याभावस्याप्यतिदेशान्न नत्वम् । स्पष्टं चेदं "तस्माच्छसः" (पा०सू० ६।१।१०३) इति सूत्रे **भाष्य-कैयटयोः** । यद्वा, अतिदेशेन प्रकृतिलिङ्गप्रयुक्तेन कार्यातिदेशेन (१)तद्विरुद्धस्वाश्रयकार्याप्रवृत्तिः । स्पष्टञ्चेदं "स्त्रियाम्" (पा०सू० ४।१।३) इति सूत्रे **भाष्ये** । युक्तवद्भावादिप्रत्याख्यानेऽपि यथा दारादिशब्दैः पुंस्त्वेन स्त्रीरूपार्थस्य भानं, तथा प्रकृते स्त्रीत्वेन पुंसो भानमिति न नत्वम्, पुंस्त्वे वाच्ये नत्वमित्यर्थात् । न चैवं 'खरकुट्यै' इत्यत्रापि युक्तवद्भावेन नित्यस्त्रीत्वात्सूत्रेणैव सिद्धमिति वाच्यम् , स्त्र्याख्यावित्यस्य स्त्रीत्वविशिष्टमेव य आहेत्यर्थात् । न चायं तथा स्त्रीत्वेन रूपेण वस्तुतः पुंस्त्वविशिष्टस्याभिधानात् । यद्यपि पदार्थमात्रे शास्त्रीयलिङ्गत्रयमस्ति, तथापि व्यक्तिवस्तु-

---

वादिति भावः । (१)तद्विरुद्धस्वाश्रयकार्याप्रवृत्तिरिति । चिन्त्यमिदम्, 'अघुः' इत्यादौ अत्वोत्तरं "विभाषा घ्राधेट्" (पा०सू० २।४।७८) इति लुगर्थं धेट्त्वातिदेशस्यावश्यकतया तदभावव्याप्यवत्तानिश्चयमुद्रया स्थानिवद्भावेनातिदिश्यमानधेट्त्वविरुद्धस्वाश्रयाऽऽदन्तत्वप्रयुक्तस्य "आतः" (पा०सू० ३।४।११०) इति झेर्जुसोऽप्रवृत्त्यापत्तेः ।

पदार्थादिपदबोध्यत्वकाले तत्तल्लिङ्गोपजननेऽपि स्त्रीपदादिबोद्धयत्वदशायां तत्सत्त्वे मानाभावात् । प्रकृते तु 'ब्राह्मणाय' इत्यादिविशेष्यदर्शनेन तत्सत्त्वानुमानात् । स्पष्टं चेदं **भाष्यकैयटयोः** । एवं श्रीशब्दात्कनि लुपि 'श्रिये ब्राह्मणाय' इत्यादौ विकल्पापत्तिः । युक्तवद्भावेन स्त्रियामङ्गस्य वर्त्तनात्, अत्र सूत्रे नित्यस्त्रीत्वानिवेशाच्च; इति चेत्? न, सत्यभिधाने इष्टापत्तेः । **भाष्ये** दृश्यमानं 'श्रिये ब्राह्मणाय' इत्यादि तु क्यजन्तात्क्विपि बोद्धयम् । विपरीतं नित्यस्त्रीत्वनिवेशवादिनो लुबन्ते 'श्रियै ब्राह्मणाय' इत्यादौ तदनापत्तिर्दोष (१)इत्याहुः ।

---

**(१)इत्याहुरिति । अन्ये तु** सूत्रकृत्–प्रवृत्तिनिमित्तविशिष्टत्वं नित्यस्त्रीत्वम् । वैशिष्ट्यं च स्वविशिष्टशक्तिविशिष्टत्वं, स्वावच्छिन्नमुख्यविशेष्यतानिरूपितस्त्रीत्वावच्छिन्नाभेदसम्बन्धावच्छिन्नप्रकारताकबोधजनकत्वप्रकारकतात्पर्यविशेष्यतापर्याप्त्यधिकरणत्वमेतदुभयसम्बन्धेन । शक्तौ प्रवृत्तिनिमित्तवैशिष्ट्यं च स्वावच्छिन्नविशेष्यताप्रयोजकत्वं, स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वनिष्ठप्रकारताप्रयोजकत्वं स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वेतरलिङ्गनिष्ठप्रकारताऽप्रयोजकत्वमेतत्त्रितयसम्बन्धेन । शक्तिवैशिष्ट्यं च स्वपर्याप्त्यधिकरणत्वं, स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधजनकत्वप्रकारकतात्पर्यविशेष्यतापर्याप्त्यधिकरणत्वमेतदुभयसंम्बन्धेनेत्यभिप्रैति ।

एतल्लक्षणं "बहुश्रेयस्यै ब्राह्मणाय' 'कुमार्यै ब्राह्मणाय' इत्यादावव्याप्तमिति मत्वा "प्रथमलिङ्गग्रहणं कर्तव्यम्" इति वदन्वार्तिककारश्च प्रवृत्तिनिमित्तविशिष्टशक्तिविशिष्टत्वं नित्यस्त्रीत्वम् । वैशिष्ट्यं च स्वावच्छिन्नमुख्यविशेष्यताप्रयोजकत्वं, स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वनिष्ठप्रकारताप्रयोजकत्वं, स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वेतरलिङ्गनिष्ठप्रकारताऽप्रयोजकत्वमेतत्त्रितयसम्बन्धेन । शक्तिवैशिष्ट्यं च स्वपर्याप्त्यधिकरणान्तत्व, स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधजनकत्वप्रकारकतात्पर्यविशेष्यतापर्याप्त्यधिकरणत्वैतदुभयसम्बन्धेनेत्याभिप्रैति ।

"अवयवस्त्रीविषयत्वात्सिद्धम्" इत्युक्त्वा "प्रथमलिङ्गग्रहणं च" इति वार्तिकं प्रत्याचक्षाणो भाष्यकारश्च प्रवृत्तिनिमित्तविशिष्टशक्तिविशिष्टत्वं नित्यस्त्रीत्वम् । प्रवृत्तिनिमित्तवैशिष्ट्यं च शक्तौ स्वावच्छिन्नमुख्यविशेष्यताप्रयोजकत्व, स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वनिष्ठप्रकारताप्रयोजकत्व, स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वेतरलिङ्गनिष्ठप्रकारताऽप्रयोजकत्वैतत्त्रितयसम्बन्धेन । शक्तिवैशिष्ट्यं च स्वपर्याप्त्यधिकरणत्व स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधजनकत्वप्रकारकतात्पर्यविशेष्यतापर्याप्त्यधिकरणत्वैतदुभयसम्बन्धेनेत्याभिप्रैति ।

"ङिति ह्रस्वश्च" (पा०सू० १।४।६) इत्यत्र 'प्रथमलिङ्गग्रहणं च' इति यद्

चोदितं तदत्र द्वेष्यं विजानीयात् इतिभाष्यप्रामाण्येन सूत्रकृत्संमतं यन्नित्यस्त्रीत्वं तदेवात्र सम्मतामिति बोध्यम्। अत्रेतिपदस्वारस्यात् "वाऽऽमि" (पा०सू० १।४।५) इत्यत्र तु 'प्रथमलिङ्गग्रहणं च' इति 'अवयवस्त्रीविषयत्वात्सिद्धमिति चेत्' इत्याद्युक्त्या 'यूस्त्र्याख्यौ" (पा०सू० १।४।७) इति सूत्र इवात्रापि वर्तत इति लाभात् वार्तिककृत्सम्मतं भाष्यकृत्सम्मतं वा नित्यस्त्रीत्वं बोध्यम्। अत एव श्रीणां श्रियां ब्राह्मणानामित्यादौ "वामि" (पा०सू० १।४।५) इति विकल्पो भवत्येव। अत एवोपक्रमे 'वामि' इत्यस्य निषेधपरतया व्याख्यानं भाष्ये सङ्गच्छते। अत एव "ह्रस्वौ च इयङुवङ्स्थानौ च प्रवृत्तौ च प्राक् च प्रवृत्तेः स्त्रीवचनावेव नदीसंज्ञौ भवतो न तु पुंवाचकाविति वक्तव्यं शकट्यै अतिशकट्यै ब्राह्मण्यै। क्व माभूत्? शकटये अतिशकटये ब्राह्मणाय। धेन्वै अतिधेन्वै ब्राह्मण्यै। क्व माभूत्? धेनवेऽतिधेनवे ब्राह्मणाय। श्रियै अतिश्रियै ब्राह्मण्यै। क्व माभूत्? श्रियेऽतिश्रिये ब्राह्मणाय। भ्रुवै अतिभ्रुवै ब्राह्मण्यै। क्व माभूत्? भ्रुवेऽतिभ्रुवे ब्राह्मणाय" इति भाष्यं सङ्गच्छते। अत्र प्रवृत्तौ च प्राक् च प्रवृत्तेः स्त्रीवचनावेवेत्युक्त्या पूर्वोक्तं सूत्रकारसम्मतं नित्यस्त्रीत्वं "ङिति ह्रस्वश्च" (पा०सू० १।४।६) इत्यत्र ग्राह्यमिति बोध्यते। अत्र षष्ठीबहुवचनोदाहरणादानेन यूस्त्र्याख्यावित्यत्रेव वामीत्यत्रापि भाष्यकारादिसम्मतं नित्यस्त्रीत्वं ग्राह्यमिति बोध्यम्।

**यत्तु भाष्ये** दृश्यमानं 'श्रिये ब्राह्मणाय' इत्यादि क्यजन्तात् क्विपि बोध्यमिति; तन्न, 'शकटये ब्राह्मणाय' 'धेनवे ब्राह्मणाय' इत्यादौ क्यजन्तात्क्विपि तुगापत्तेः। यदपि–पदार्थमात्रे शास्त्रीयं लिङ्गत्रयमस्ति तथापि व्यक्तिवस्तुपदार्थादिपदबोध्यत्वकाले तल्लिङ्गोपजननेऽपि स्त्रीपदादिबोध्यत्वदशायां मानाभावादिति; तदपि न, कस्यचित्प्रियस्य पुष्टिकामनादशायां तस्य पुंस्त्वेन बहुवारं बोधे पुष्ट्यापत्तेः। एवं यस्य द्वेषादिना अपुष्ट्यादिकामना तस्य स्त्रीत्वेन बोधेऽपुष्टिप्रसङ्गात्, एवं यस्य साम्यकामना तस्य नपुंसकत्वेन बहुवारं बोधे साम्यप्रसङ्गाच्च। पुंस्त्वादिशास्त्रीयलिङ्गस्य सत्त्वाद्युपचयापचयादिरूपत्वादिति **केचित्**।

न च 'चञ्चा ब्राह्मणान्' इत्यादौ युक्तवद्भावेन स्त्रीलिङ्गत्वेऽपि स्वाश्रयपुंस्त्वप्रयुक्तनकारादेशापत्तिरिति वाच्यम्, युक्तवद्भावेन प्रकृतौ यल्लिङ्गयद्वचनप्रयुक्तं कार्यं भवति, यल्लिङ्गयद्वचनप्रयुक्तं च कार्यं न भवति, तदुभयोर्भावाभावयोः "अचः परस्मिन्" (पा०सू० १।१।५७) इत्यनेनैवातिदेशस्वीकारेणादोषात्। न च 'श्रिये ब्राह्मणाय' इत्यादौ युक्तवद्भावेन स्त्रियामङ्गस्य वर्तनाद्विकल्पापत्तिरिति वाच्यम्, स्त्रीत्वातिदेशेऽपि पूर्वोक्तसूत्रकृत्सम्मतनित्यस्त्रीत्वस्य व्यक्तिपदार्थत्वाभावेन युक्तवद्भावेन प्रकृते कन्लुब्वन्तेऽतिदेष्टुमशक्यत्वात्। एतेन तत्र विकल्पो भविष्यत्येवेत्यपास्तम्, पूर्वोक्तभाष्यविरोधात्। तथाच "ङिति ह्रस्वश्च" (पा०सू० १।४।६) इत्यत्र पूर्वोक्तं सूत्रकृत्संमतं नित्यस्त्रीत्वमेव ग्राह्यमिति सुधियो विभावयन्त्वित्याहुः।

यू किम् ? मात्रे । यद्यपि यू इति दीर्घपरं, तथापि विभक्तिविपरिणामेन य्वोर्ह्रस्वावित्यन्वयो बोद्धव्यः । एतत्सर्वं(१)"वामि" (पा०सू०१।४।५) इत्यत्रापि बोद्धव्यम् ।

'इदुद्भ्यामौदच्चघेः' इति सूत्रे योगविभागेन व्याचष्टे—**इदुद्भ्याम् (पा०सू० ७।३।११७)** । अनदीसंज्ञकेषु "अच्च घेः" (पा०सू० ७।३।११९) "औत्" (पा०सू० ७।३।११८) इत्याभ्यां बाधात्, "ङेराम्" (पा०सू० ७।३।११६) इति सूत्रान्नदीग्रहणानुवृत्तेश्चाह—**नदीसञ्ज्ञकाभ्यामिति । मत्यामिति ।** सन्निपातपरिभाषाया (२)अनित्यत्वाद्यण् ।

**त्रिचतुरोः** (पा०सू० ७।२।९९) । "अष्टन आ" (पा०सू० ७।२।८४) इत्यतो विभक्ताविति वर्त्तते तत्फलं त्रिभार्यः । तृतीयान्तेन समासः । भार्यो भरणीयः ।

**अचि र** (पा०सू० ७।२।१००) अलोऽन्त्यपरिभाषयैव सिद्धे ऋत इति अनुवर्त्तमानतिसृचतसृ इत्यस्य षष्ठ्यन्तत्वकल्पनाय । अन्यथा त्रिचतुरोरित्यस्यैवानुवृत्त्यापत्तौ रादेशेन तिसृचतस्रोर्बाधापत्तिरिति दिक् । **नुमचिरेति ।** अत्राचिरांशे "न तिसृ" (पा०सू० ६।४।४) इति निषेधो मूलम् । (३)एतेन स्त्रीत्वरूपार्थविशेषविभक्तिसञ्ज्ञानिमित्ततिस्राद्यपेक्षया

---

(१)**वामीत्यत्रापि बोध्यमिति ।** चिन्त्यमिदम्, "प्रथमालिङ्गग्रहणं चेति यच्चोदितं तदत्र द्वेष्यं विजानीयात्" इत्यत्र अत्रेतिपदस्वारस्यभङ्गापत्तेः, ह्रस्वौ च इयङुवङ्स्थानौ च प्रवृत्तौ च प्राक् च प्रवृत्तेः स्त्रीवचनावेव नदीसंज्ञौ भवतो न तु पुंवाचकाविति वार्तिकोदाहरणदानावसरे षष्ठीबहुवचनोदाहरणादानाच्च । एतेन "वाऽचि ह्रस्वश्च" इत्येव सिद्धे "वाऽऽमि" (पा०सू० १।४।५) "ङिति ह्रस्वश्च" (पा०सू० १।४।६) इति पृथग्योगकरणात्सन्निपातपरिभाषा ज्ञाप्यते इत्यपास्तम् । "ङिति ह्रस्वश्च"इत्यत्र 'प्रथमलिङ्गग्रहणं च' इति वार्तिकस्याभावेन "वामि" (पा०सू० १।४।८५) इत्यत्र च तद्वार्तिकस्य सत्त्वेन कथमप्येकयोगस्य कर्तुमशक्यत्वात् । अत एव च "आपि ह्रस्वश्च" इति न सूत्रितम् । आविति टा इत्यारभ्य सुपः पकारेण प्रत्याहार इति दिक् ।

(२)**अनित्यत्वादिति ।** "सोऽचि लोपे च" (पा०सू० ६।१।१३४) इत्यादिनिर्देशेन सन्धिकार्ये सन्निपातपरिभाषा न प्रवर्तत इति भावः । (३)**एतेनेति ।** अर्थ-

नुडन्तरङ्ग इत्यपास्तम् । अतो निषेधादेवार्थसञ्ज्ञाकृतबहिरङ्गत्वानाश्रयणम् । अन्यथा 'आम्'इतिप्रत्ययविशेषापेक्षत्वेऽपि सञ्ज्ञाऽर्थविशेषानपेक्षत्वेनान्तरङ्गत्वात्त्रयादेशे तदसङ्गतिः स्पष्टैव । वस्तुतः स्वरूपेणोपादाने न बहिरङ्गत्वं किन्तु केनचिद्विशेषधर्मेणोपादाने एवेति, विशेषापेक्षस्य बहिरङ्गत्वमेव न इति च रुदधातौ निरूपयिष्यामः । तृज्वत्सूत्रे **भाष्ये** तु "न तिसृचतसृ-प्रकाद् रादेशो नुड्विषये न । पूर्वविप्रतिषेधेन तु न सिद्ध्यति अपवादविषये विप्रतिषेधाप्रवृत्तेः । रादेशस्य सर्वापवादत्वात्" इत्युक्तम् ।

**त्रिचतुरोर्विशेषणादिति** । स्त्रीनिष्ठसंख्यायां वर्त्तमानयोरित्यर्थ इति भावः । **नेहेति** । त्रिशब्दस्य पुंनपुंसकवृत्तित्वेऽपि समुदायस्य स्त्रियां वृत्तेरङ्गविशेषणत्वे आदेशः स्यादिति भावः । **आमि त्विति** । तत्राऽऽम् षष्ठीबहुवचनमेवार्थाधिकारादतो न ङेरामि (१)त्रयादेश इति बोद्धयम् । **प्रियतिसेति** । अङ्गविशेषणत्वेऽत्राव्याप्तिः स्यादिति भावः । प्रिया जस् त्रि जसिति स्थिते 'अन्तरङ्गानपि' इतिन्यायेन विभक्तिलुकि पुनः सुपि तदन्तविधिना निर्दिश्यमानपरिभाषया त्रिशब्दस्यादेशः । ततो "नद्यृतश्च" (पा०सू० ५।४।१५३) इति कप्तु न, समासार्थालौकिकवाक्ये (२)ऋका-

---

कृतबहिरङ्गत्वस्य स्वीकारे 'तिसृणाम्' इत्यादौ स्त्रीत्वरूपार्थनिमित्तकत्वेन तिस्रादेशस्य बहिरङ्गत्वेनासिद्धत्वात्पूर्वं त्रयादेशे नुटि दीर्घे च "लक्ष्येलक्षणस्य" इति न्यायेन पुनर्दीर्घाप्रवृत्त्या "न तिसृचतसृ" (पा०सू० ६।४।४) इतिनिषेधवैयर्थ्येनेत्यर्थः ।

(१)**त्रयादेश इति** । इदमुपलक्षणं नुड्दीर्घयोरपि । (२)**ऋकारान्तोत्तरपदत्वाभावादिति** । "नद्यृतश्च" (पा०सू० ५।४।१५३) इत्यत्र नदीसाहचर्येणालौकिकप्रक्रियावाक्ये ऋदन्तोत्तरपदकसमास एव कप्प्रवृत्तेः, अन्तरङ्गपरिभाषयाऽन्तरङ्गे कपि कर्तव्ये विभक्तिनिमित्तकत्वेन बहिरङ्गत्वेन तिस्रादेशस्यासिद्धत्वाच्च । एतेन समासार्थालौकिकविग्रहवाक्ये समासत्वाभावारोपणे 'कुण्डोध्नी' इत्यत्र कबापादनपरभाष्यविरोधादिदं चिन्त्यमित्यपास्तम् । समासार्थालौकिकविग्रहवाक्ये एव च कप्प्रवर्तत इत्युक्त्या 'बहुकुमारिका' इत्यादौ "गोस्त्रियोः" (पा०सू० १।२।४८) इति ह्रस्वो न । न च बहु जस् कुमारी जस् इत्यस्यां दशायां परत्वात्कपि स्त्रीप्रत्ययान्तप्रातिपदिकत्वाभावाद् ह्रस्वो न भवत्येवेति वाच्यम्, समासान्ते जाते यदागमपरिभाषया कब्विशिष्टे स्त्रीप्रत्ययान्ततदादित्वस्य प्रातिपदिकत्वस्य च सत्त्वेन निर्दिश्यमानपरिभाषया ह्रस्वस्य प्रवृत्तेर्दुर्वारत्वात् ।

रान्तोत्तरपदत्वाभावात् । "ऋदुशन" (पा०सू० ७।१।९४) इत्यनङ् । **प्रियतिसृणी** इत्यादि । अत्र नुमः परत्वात्तिस्रादेशे पुनः प्रसङ्गविज्ञानेन नुम् । "न तिसृ" (पा०सू० ६।४।४) इति ज्ञापकेन सामान्यत आगमविषये रादेशो नेति ज्ञाप्यते । "प्रत्ययोत्तर" (पा०सू० ७।२।९७) इति सूत्रे चेमौ **भाष्ये** प्रयोगौ ।

**द्वेरत्वे इति ।** बहिरङ्गासिद्धत्वन्तु "न यासयोः" (पा०सू० ७।३।४५) इति निर्देशेनानित्यत्वान्न प्रवर्त्तते । **विभक्ताविति ।** "युवोरनाकौ" (पा०सू० ७।१।१) इत्यत्र **भाष्ये** पाठात्, ङ्याप्सूत्रे तत्परिभाषादोषेषु पाठाच्च । "सख्यशिश्वी" (का०वा०) इति ङीप् । "यस्येति च" (पा०सू० ६।४।१४८) इतीकारलोपः ।

**लक्ष्मीरिति ।** "कृदिकारात्" (ग०सू० ४।१।४५) इति ङीषि 'लक्ष्मी' इत्यपि । स्त्यायतोऽस्यां शुक्रशोणिते इति स्त्री । स्त्यायतेर्ड्रट्, टिलोपयलोपौ, टित्वात् ङीप् । **इयङीति ।** स्त्रीशब्दस्येकारान्तत्वादियङेवानुवर्तते इति भावः ।

**गुणेनेति ।** "जसि च" (पा०सू० ७।३।१०९) इति गुणः । "आङो ना" (पा०सू० ७।३।१२०) "अच्च घेः" (पा०सू० ७।३।११९) "ह्रस्वनद्यापः" (पा०सू० ७।१।५४) इत्येतैरित्यर्थः । **बाध्यते इति ।** स्त्रीशब्दस्येयङ् इत्यनेनान्वयः । **नुम्**—"इकोऽचि" (पा०सू० ७।१।७३) इति । पूर्वकारिकोक्तैर्बाधे सति यत्फलितं तदाह—**ओस्याविति ।** अजादौ य इयादेशो विहितः स उपसर्जने पुंसि विद्यमानस्य **स्त्रियाः** स्त्रीशब्दस्यौसादिषु चतुर्ष्वेव, न त्वन्यत्र, गुणादिभिर्बाधादिति भावः । **पुंवद्भावादिति ।** "तृतीयादिषु भाषितपुंस्कम्" (पा०सू० ७।१।७४) इत्यनेनेति भावः । ननु ह्रस्ववाक्येऽप्यस्त्रीत्यस्य सम्बन्धेन स्त्रीशब्दावयवभिन्नह्रस्वर्णान्तादित्यर्थेन कथमत्र प्राप्तिरत आह—**अस्त्रीति ।** तत्र बीजमाह—**तत्सम्बद्धस्यैवेति ।** प्रसज्यप्रतिषेधस्तु न, वाक्यभेदाद्यापत्तेः । नन्वियङुवङ्स्थानावित्यनेनापि स्वस्य निषेधः किं नेत्यत आह—**दीर्घस्यायमिति ।** तत्र ह्रस्वपदाभावादिति भावः । श्रयन्त्येतामिति श्रीः । "क्विब्वचि"-

(का०वा०)इत्यादिना 'वाग्'इत्यत्रेव कर्मणि क्विब्दीर्घौ। अङ्यन्तत्वान्न सुलोपः

**नेयङु** (पा०सू० १।४।४)। ङ्द्वयोच्चारणं स्पष्टार्थम्। स्थानशब्दो भावल्युडन्तः। इयङुवङोः स्थानं स्थितिर्ययोरिति बहुव्रीहिः। सा च बाधकाविषये एव। तेन प्रकृष्टा धीः 'प्रधीः' 'प्रध्यै' इत्यादौ न निषेधः। सा चोपलक्षणे व्याख्यानात्। तेन 'हे श्रीः' इत्यादौ निषेधासिद्धिः 'श्रियै' इत्यादौ तत्स्थितिसत्त्वात्। यत्र नदीकार्याश्रयेऽङ्गे बाधकाबाधिते यङादिस्थितिः क्वचित् दृष्टा तस्य तदवयवस्य च निषेध इति (१)फलितम्। अत एव प्रकृष्टा धीर्यस्याः; यस्य वा 'प्रधीः इत्यत्रावयवधीशब्दस्य नदीत्वं भवत्येव। तदुक्तं **भाष्ये** "अवयवस्त्रीविषयत्वात्सिद्धमितिचेदियङुवङ्स्थानप्रतिषेधे यणूस्थानयोरपि य्वोः प्रतिषेधः प्राप्नोति, अवयवस्येयङुवङ्स्थानत्वात्। आध्यै, प्रध्यै। सिद्धं त्वङ्गरूपग्रहणात्। यस्याङ्गस्येयुवौ भवतस्तस्येदं ग्रहणम्। न चैतस्याङ्गस्येयङुवङौ भवतः" इति। **श्रियै इति।** "ङिति ह्रस्वश्च" (पा०सू० १।४।६) इति विकल्पः।

**वामि** (पा०सू०१।४।५)।आमीतिच्छेदः। **प्रधीशब्दस्येति।** प्रकृष्टं ध्यायतीत्यर्थकस्येत्यर्थः। **वृत्तिकारादीनामिति।** अयं भावः- **भाष्ये** 'आध्यै' 'प्रध्यै' इत्यादावियङ्स्थानत्वान्निषेधमाशङ्क्य यत्र नदीकार्याश्रयेऽङ्गे इत्युक्तरीत्या समाहितम्। तत्र न बहुव्रीहिः, कबापत्तेः। किन्तु प्रकृष्टं ध्यायतीत्याद्यर्थकं तत्। तत्र (२)**कैयटोक्त**नित्यस्त्रीत्वाभावेन

---

(१)**फलितमिति।** न च 'प्रधीः' इत्यादौ धीरूपेऽङ्गे इयङ्सिद्धेः क्वचिद् दृष्टत्वेन पुनरपि दोषस्तदवस्थ एवेति वाच्यम्, अजादिविभक्तिपरत्वप्रकारकसम्भावनाप्रयोज्या यस्मिन्नङ्गे इयङुवङ्प्रवृत्तिसम्भावना तस्य तदवयवस्य च नदीसंज्ञा न भवतीत्यर्थेनादोषात्। यदङ्गावयवयोर्नदीसंज्ञानिषेधश्चिकीर्षितस्तदुत्तरमजादिप्रत्ययं सम्भाव्य यस्मिन्नङ्गे इयङुवङौ सम्भाव्येते तस्य तदवयवस्य च नदीसंज्ञा नेति फलितम्।
(२)**कैयटोक्तनित्यस्त्रीत्वेति।** स्वावच्छिन्नमुख्यविशेष्यताप्रयोजकत्व, स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वनिष्ठप्रकारताप्रयोजकत्व, स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वेतरलिङ्गनिष्ठप्रकारताऽप्रयोजकत्वैतत्त्रितयसम्बन्धेन प्रवृत्तिनिमित्तविशिष्टा या शक्तिः (स्वपर्याप्त्यधिकरणत्व, स्वज्ञानोपस्थितिप्रयोज्यशाब्दबोधजनकत्वप्रकारकतात्पर्यविशेष्यतापर्याप्त्यधिकरणत्वैतदुभयसम्बन्धेन) तादृशशक्तिविशिष्टत्वरूपनित्यस्त्रीत्वेत्यर्थः।

नदीत्वाप्राप्त्या **भाष्या**सङ्गतिः । अतः "स्त्रीविषयावेव यौ यू नित्यम्" इत्यत्र **भाष्ये** एवकारो भिन्नक्रमः । नित्यमेव यौ स्त्रीविषयावित्यर्थः । नित्यमेवेत्यस्य पदान्तरं विनापीत्यर्थः । खलपूकटप्रूग्रामणीइत्यादीनां क्रियाशब्दतया पुंसि मुख्या वृत्तिः । पुंसः खल्वयमुचितो धर्मः, शक्तत्वाद्भयरहितत्वाच्च । अतस्तेषां न पदान्तरं विना स्त्रीवृत्तित्वम् । ध्यानादि तु स्त्रीपुंससाधारणमिति । अत्रारुचिबीजन्तु सूत्र**भाष्या**द्यक्षरैरीदृशनित्यस्त्रीत्वालाभः । **भाष्यो**दाहरणे बहुव्रीहिरेव । कप्तु न, ऋकारसाहचर्येण यस्य वृत्तेः प्राग्नदीत्वं तदुत्तरपदके एव तत्प्रवृत्तेः । धीशब्दस्येयङ्स्थानत्वेन प्राङ्नदीत्वनिषेधात् । गतिपूर्वकत्वाद्यणपि सुलभः । "आद्ध्यै इति चिन्त्यमेतत्, क्रियाशब्दत्वेन (१)नित्यस्त्रीत्वाभावात्" इति **कैयटस्तु** चिन्त्य एवेति दिक् ।

**लक्ष्मीवदिति** । स्त्रियामिति शेषः । **पुंवद्रूपमिति** । उक्तविग्रहे नित्यस्त्रीत्वाभावात् पुंसीव स्त्रियामप्यनदीत्वादिति भावः । **प्रकृष्टा धीरिति विग्रहे इति** । ईदृशपदघटितविग्रहे इत्यर्थः । तेन कर्मधारये बहुव्रीहौ च सर्वलिङ्गेऽपि मतद्वयेऽपि लक्ष्मीवत् । "प्रथमलिङ्गग्रहणञ्च" (का०वा०) इत्यवयवधीशब्दस्य नदीत्वात् । "नेयङ्" (पा०सू० १।४।७) इति निषेधस्योक्तरीत्या प्राप्त्यभावादिति भावः । **विशेष इति** । लक्ष्मीशब्दापेक्षयेत्यर्थः । **श्रीवदिति** । स्त्रियामिति शेषः । विशिष्टस्यापीयङ्स्थानत्वेन ङिदामोर्विकल्पस्यान्यत्र निषेधस्य च प्राप्तेरिति भावः । पुंसि त्वीदृशबहुव्रीहावपि न नदीत्वं "नेयङ्" (पा०सू० १।४।७) इत्यवयवस्य निषेधात्, समुदायस्याप्राप्तेश्च । **पुंवदिति** । 'सुष्ठु ध्यायतीति विग्रहे' इति शेषः, तस्य नित्यस्त्रीत्वाभावेन पुंसीव स्त्रियामप्यनदीत्वादिति भावः । **इति विग्रहे त्विति** । ईदृशपदघटितविग्रहके स्त्रीलिङ्गबहुव्रीहौ कर्मधारये चेत्यर्थः । तत्र बहुव्रीहाववयवस्य "नेयङ्" (पा०सू० १।४।७) इति निषेधः, ङिति तु समुदायस्य विकल्प इति बोद्धव्यम् ।

---

(१)नित्यस्त्रीत्वाभावादिति । निरुक्तनित्यस्त्रीत्वाभावादित्यर्थः ।

**स्त्रियाश्च** (पा०सू० ७।१।९६)। अत्र 'असम्बुद्धौ सर्वनामस्थाने' इति न सम्बद्ध्यते आरम्भसामर्थ्यात्। **ऋन्नेभ्य इति**। तदन्तशब्दानां बहुत्वाद् बहुवचनम्। प्रातिपदिकविशेषणत्वात्तदन्तविधिः। स्त्रियामिति चाधिकारः। **क्वासि हे सुभ्रु इति**। रावणेन सीताऽपहारोत्तरं रामविलापोऽयम्। विधिना त्वया हापितस्त्याजितः सः 'हे सुभ्रु क्वासि' इत्येवं बहु विलालापेत्यर्थः। "नेयङ्" (पा०सू० १।४।७) इत्यनेनावयवस्य समुदायस्य च नदीत्वनिषेधात्प्रश्नः। **प्रमाद इति**। विरहपीडितत्वेनानवधानलक्षणोऽत्र प्रमादः। स च विरहपोषकत्वात्काव्ये गुणः।

**एकाजुत्तर** (पा०सू० ८।४।१२)। एकोऽच् यस्मिन्, तादृशमुत्तरपदं यस्येति सूत्रे बहुव्रीहिगर्भो बहुव्रीहिः। उत्तरपदे इत्यनेनास्य वाक्यस्य समासपदघटितवाक्यैकदेशत्वानुमानात्समासो विशेष्य इत्याह— **तस्मिन्समासे इति। आरम्भेति**। "प्रातिपदिकान्त" (पा०सू० ८।४।११) इत्यनेन विकल्पेन णत्वे सिद्धे इत्यर्थः। **पुनरिति**। णग्रहणेऽनुवर्त्तमाने इत्यर्थः। **यणामिति**। "द्वन्कर" (का०वा०) इति यणमित्यर्थः। **भेकजाताविति**।

शिली गण्डूपदी भेकी वर्षाभ्वी कमठी डुलिः। (अ०को०१।१०।२४)।

इत्यमरादस्य बाह्वादित्वेन वा ङीषिति भावः।

अन्ये त्वस्य गौरादिपाठान्नित्यमेव ङीष्। 'भेक्यां पुनर्नवायां स्त्री' इति यादवस्य—'सुतः पुत्रः स्त्रियान्त्वमी। आहुर्दुहितरम्' इतिवत् नित्यङ्यन्तत्वेऽप्युपपत्तेरित्याहुः। गौरादित्वादिकल्पने मानाभावात् अमरे 'वर्षाभूः कमठी डुलिः' इत्येव पाठ इति **सुबोधिनीकार** इति **माधवः**। तदनुसारेण मूलं बोद्धव्यम्।

**टाब्ङीपौ न स्त इति**। (१)'स्त्रियां यत्प्राप्नोति तन्न' इति व्या-

---

(१) **स्त्रियां यत्प्राप्नोतीति**। "न षट्स्वस्रादिभ्यः" (पा० सू० ४।१।१०) इत्यत्र "टाबृचि" (पा०सू० ४।१।९) इत्यतष्टापः, "ऋन्नेभ्यः" (पा०सू० ४।१।५) इत्यतो ङीपश्चानुवृत्त्योभयनिषेधेन "डाबुभाभ्याम्" (पा०सू० ४।१।१३) इत्यत्र "न षट्स्वस्रादिभ्यः" (पा०सू० ४।१।१०) इत्यनुवृत्त्या [illegible] निषेधात्चेति भावः।

स्थानादिति भावः । स्वस्रादिषु मातृशब्दस्य ननान्द्रादिसाहचर्यात् (१)प्रसिद्धत्वाच्च ससम्बन्धिकजननीवाचकस्यैव ग्रहणम् । सन्निपातपरिभाषयैव तिसृचतस्रोर्ङीबभावे सिद्धे तदनित्यत्वज्ञापनार्थं तयोर्ग्रहणमिति केचित् । स्वस्रादिषु तिसृचतस्रोः पाठोऽनार्ष इति ङ्णमेजन्तसूत्रस्थभाष्यस्वरसः ।

## इत्यजन्ताः स्त्रीलिङ्गाः ॥

---

**अतोऽम्** (पा०सू०७।१।२४)। अत इत्येतत् अधिकृतस्याङ्गस्य विशेषणम् । "स्वमोर्नपुंसकात्" (पा०सू० ७।१।२३) इति चानुवर्त्तते । अम् लुग्बाधको (२)'येन नाप्राप्त' (प०भा० ५८) इति न्यायात् । 'अम्' इतिच्छेदो (३)न तु 'म्' इति, 'ज्ञानम्' इत्यादौ "सुपि च" (पा०सू० ७।३।१०२) इति दीर्घापत्तेः । सन्निपातपरिभाषया दीर्घ(४)वारणे तु 'हे ज्ञान'

---

(१)प्रसिद्धत्वाच्चेति । अवयवशक्तिग्रहानधीनशक्तिग्रहाधीनोपस्थितिविषयार्थे एव लाघवात् तात्पर्यकल्पनं युक्तमित्येतन्मूलिकया "अवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसी" इति परिभाषयेत्यर्थः ॥

## इत्यजन्ताः स्त्रीलिङ्गाः ॥

---

(२)येन नाप्राप्त इति न्यायादिति । "स्वमोर्नपुंसकात्" (पा०सू० ७।१।२३) इत्येतदप्राप्तियोग्ये चारितार्थ्याभावविशिष्टा क्वते चारितार्थ्याभावविशिष्टा स्वमोर्नपुंसकादित्येतत्प्रवृत्तिसम्भावनाप्रयोज्या या "अतोऽम्" (पा०सू० ७।१।२४) इतिशास्त्रवैयर्थ्यसम्भावना तादृशसम्भावनारूपतृतीयबाधबीजस्य "अतोऽम्" (पा०सू० ७।१।२४) इत्यत्र सत्त्वादिति भावः । एतन्न्यायविषये च "अतोऽम्" इत्येतत्प्रवृत्तियोग्यातिरिक्तत्वेन "अतोऽम्" इति शास्त्रविधेयघटितातिरिक्तत्वेन च "स्वमोर्नपुंसकात्" (पा०सू० ७।१।२३) इत्यत्र सङ्कोचो भवतीत्यतोऽमित्येतत्प्रवृत्तेः प्राक् तत्प्रवृत्त्यनन्तरं च 'ज्ञानम्' इत्यादौ "स्वमोर्नपुंसकात्" इति लुग्न भवतीति बोध्यम् ।

(३)न तु मितीति । अत्रहितैकहलादेशस्यास्मिन्शास्त्रेऽदर्शनादित्यर्थः ।

(४)वारणे त्विति । वस्तुतस्तु 'सुलुनी' इत्यादौ नुम्प्रवृत्तये सन्निपातपरिभाषया अनित्यत्वेऽपि 'सुलु' इत्यादौ "ह्रस्वस्य" (पा०सू० ७।३।१०८) इति गुणापत्त्या ह्रस्वो नपुंसके" (पा०सू० १।२।४७) इत्यत्र सामान्यतः 'सन्निपातपरिभाषाप्रयोज्यः सङ्कोचो नास्ति' इति वक्तुमशक्यत्वेन यथा सङ्कुचितसङ्कोचस्यैवावश्यमङ्गीकर्तव्यत्वं तथा

इत्यादौ सम्बुद्धिलोपस्यनापत्तिः मनिमित्तस्य प्रकृतिप्रत्ययसन्निपातस्य प्रत्ययलोपेन विनाशात्। अत एव "एङ्ह्रस्वात्" (पा०सू० ६।१।६९) इति सूत्रे 'ज्ञान' इत्यादौ मलोपाय, 'कतरद्' इत्यादौ लोपाभावाय चाङ्गाक्षेपव्यधिकरणान्वयहल्पदानुवृत्तय आस्थिता **भाष्ये,** न तु 'म्' इतिच्छेद उक्त इत्यलं **भाष्य**विरुद्धकल्पनयेति दिक्।

"जसः शी" (पा०सू० ७।१।१७) "औङ आपः" (पा०सू० ७।१।१८) इत्याभ्यां शी औङ इति चानुवर्त्तते तदाह—**क्लीबादित्यादि।**

**यस्येति च** (पा०सू० ६।४।१४८)। इश्चाश्च यं तस्येत्यर्थो व्याख्यानात्। भस्येत्यधिकारः, चेन "नस्तद्धिते" (पा०सू० ६।४।१४४) इत्यतः 'तद्धिते' इत्यनुकृष्यते तदाह—**भस्येत्यादि।** भस्येति किम्? गर्गरूप्यम्। **औङः श्यामिति।** इत एव निर्देशादस्य नित्यस्त्रीत्वं

---

'गुणात् सम्बुद्धेः' इत्येव वक्तव्ये "एङ्ह्रस्वात्" (पा०सू० ६।१।६९) इतिकरणेन सन्निपातपरिभाषया अनित्यत्वस्यावश्यकत्वेऽपि "कष्टाय" (पा०सू० ३।१।१४) इति निर्देशेन "ङेर्यः" (पा०सू० ७।१।१३) इत्यत्र स्वप्रवृत्त्युत्तरकालिकप्रवृत्तिमत् 'सुपि च' (पा०सू० ७।३।१०२) शास्त्रातिरिक्तस्वोपजीव्यविघातकातिरिक्तेन शास्त्रेणेत्येवं सङ्कोचेऽपि च "अतोऽम्" (पा०सू० ७।१।२४) इत्यभ्यनुज्ञावाक्ये स्वप्रवृत्त्युत्तरकालिकप्रवृत्तिमदेङ्ह्रस्वादित्येतदतिरिक्तस्वोपजीव्यविघातकातिरिक्तेन शास्त्रेण यस्य साधुत्वं बोध्यते तदपि साध्वित्येवंसङ्कुचितसङ्कोचे 'म्' इति छेदे 'ज्ञानम्' इत्यादौ "सुपि च" (पा०सू० ७।३।१०२) इति दीर्घो वारयितुं शक्य इति सन्निपातपरिभाषया प्रकृते दीर्घवारणे 'हे ज्ञान' इत्यादौ दोषोद्भावनं न युक्तमिति बोध्यम्।

अन्ये तु—"सुपि च" (पा०सू० ७।३।१०२) इत्यत्र विघातकशास्त्रे कष्टायेतिनिर्देशेन "ङेर्यः" (पा०सू० ११।१३) इत्येतदतिरिक्तस्वोपजीव्यविघातकत्वाभाववान् दीर्घो भवतीति सङ्कोचे, गुणात्सम्बुद्धेरित्येव वक्तव्ये एङ्ह्रस्वग्रहणेन च "अतोऽम्" (पा०सू० ७।१।२४) इत्येतदतिरिक्तस्वोपजीव्यविघातकत्वाभाववान् लोपो भवतीति "एङ्ह्रस्वात्" (पा०सू० ६।१।६९) इत्यत्र च सङ्कोचे च "सुपि च" (पा०सू० ७।३।१०२) इत्यत्र 'अतोऽम्' इत्येतदतिरिक्तस्वोपजीव्यविघातकत्वाभाववान् दीर्घो भवतीत्येवंसङ्कोचाभावात् 'ज्ञानम्' इत्यादौ सन्निपातपरिभाषया न दीर्घः। नापि 'हे ज्ञान' इत्यादौ सन्निपातपरिभाषया सम्बुद्धिलोपानापत्तिः। तथा च 'म्' इतिच्छेदे न कोऽपि दोषो, न च "एङ्ह्रस्वात्" (पा०सू० ६।१।६९) इत्यत्राङ्गाक्षेपवैयधिकरण्यान्वयहल्पदानुवृत्तिक्लेशा इत्याहुः।

बोध्यम्। औङ इति स्वरूपकथनं 'सर्वे' इत्यस्य भाधिकारेण सिद्धेः।

**जश्शसोः** (पा०सू० ७।१।२०)। शस् अत्र सुबेव, (१)व्याख्यानात्।

**नपुंसकस्य** (पा०सू० ७।१।७२)। "इदितो नुम्" (पा०सू० ७।१।५८) इत्यतो नुम् इति सर्वनामस्थान इति चानुवर्त्तते। अङ्गस्येति च प्रकृतम्। तच्च झलज्भ्यां विशेष्यते। नपुंसकस्येति गृह्यमाणस्याभावादङ्गस्यैवं विशेषणम्। "अस्थिदधि" (पा०सू० ७।१।७५) इत्यादौ तु गृह्यमाणस्यैव प्रकरणात् श्रुते(२)र्बलवत्त्वात्। अत एव "त्रिचतुरोः" (पा०सू० ७।२।९९) इत्यत्र स्त्रियामिति तयोरेव विशेषणमित्याकरः। **उपधादीर्घ** इति। "सर्वनामस्थाने चासंबुद्धौ" (पा०सू० ६।४।८) इत्यनेनेति भावः। **शेषमिति**। कर्मणि घञ्। "घञबजपः पुंसि" (लिं०सू०) इति प्रायोवादः।

अदड्ड (पा०सू० ७।१।२५)। दड्डेति पाठः। दस्य ष्टुत्वं, डस्य संयोगान्तलोपश्चाऽऽदेशस्वरूपभङ्गभिया न कृत इति(३)**कैयटः**। पञ्चम्य इति अधिकव्यवच्छेदाय। अस्य सर्वाद्यन्तर्गणत्वात्।

**परे तु** डतरादिभ्य इति विरुद्धविभक्तिपञ्चम्यन्तत्वादङ्गस्येत्यनेनान्वयानर्हमिति (४)डतरादिभ्यो विहितयोः स्वमोरङ्गसंज्ञानिमित्तयोरित्यर्थ इति सर्वादिसूत्रे **भाष्ये** स्पष्टम्। एवञ्च (५)'परमकतरं कुलम्' इत्यादौ नादड्।

यत्तु **कैयटेना**र्थद्वारकं विधानमाश्रयितव्यम्। तेन 'परमकतरद्' इत्युक्तम्; तन्न, तस्य यदि डतराद्यर्थगतसंख्याभिधायिन इत्यर्थस्तदा पञ्चम्यन्तात्तादृशार्थप्रतीत्यसम्भवः। यदि षष्ठ्यर्थे पञ्चमी, तदा 'विरुद्धविभक्ति-

---

(१)**व्याख्यानादिति**। जस्साहचर्यादिति भावः। (२)**बलवत्त्वादिति**। "श्रुतानुमितयोः श्रुतसम्बन्धो बलीयान्" इति परिभाषयेति भावः। (३)**कैयट इति**। अत्रारुचिबीजन्तु हलनुबन्धात्प्रागचोऽजरूपस्यानुबन्धस्य वा सर्वत्र दर्शनेन प्रकृतेऽपि अकारानुबन्धसहितादडित्येव पाठः सम्यगिति। (४)**डतरादिभ्यो विहितयो-रिति**। डतरप्रत्ययान्ततदादि, डतमप्रत्ययान्ततदादि, अन्य, अन्यतर, इतर, इत्येतेभ्यो विहितयोः स्वमोरदड् इति, अङ्गाभिन्नेभ्यो डतरान्ततदादि, डतमान्ततदादि, अन्य, अन्यतर, इतर, इत्येतेभ्यः परयोः स्वमोरदड्डिति वाऽर्थ इति भावः। एतादृशार्थकरणस्य फलमाह—(५)**परमकतरं कुलमित्यादौ नादडिति**।

त्वात्' इति **भाष्य**सङ्गतिः, विधानस्य सर्वथाऽनाश्रयणेनार्थद्वारकं विधानमिति तद्ग्रन्थासङ्गतिश्च। न चैतदर्थे उपसर्जनप्रतिषेधारम्भो व्यर्थः स्यादिति वाच्यम्, तत्प्रत्याख्यानायैवैतद्**भाष्य**प्रवृत्तेः। परमकतरादिव्यावृत्तयेऽवश्याश्रयणीयविहितविशेषणेनैवातिकतरादिव्यावृत्तौ स व्यर्थ इति तदाशयः। "त्यदादीनामः" (पा०सू० ७।२।१०२) इत्यत्र षष्ठ्यन्तत्वात्त्यदादीनामित्यर्थद्वारकं विभक्तिविशेषणम्, "अस्थिदधि" (पा०सू०७।१।७५)इत्यादावङ्गं तथा तद्विशेषणं व्याख्यानादित्यपि तत्रैव **भाष्ये** स्पष्टमि(१)त्याहुः।

डित्त्वफलमाह—**टेः** (पा०सू० ६।४।१४३)। "ति विंशतेः" (पा०सू० ६।४।१४२) इत्यतो डितीति वर्त्तते, भस्येति चाधिकृतम्। **पञ्चम इति**। डतो मटि भत्वाभाव इति भावः। **अन्यतमस्येति**। डतरादिष्वपाठादिति भावः। **एकतरमिति**। "एकाच्च प्राचाम्"(पा०सू० ५।३।९४) इति डतरच्। एकतमस्य तु 'एकतमद्' इत्येव। **परत्वादिति**। नुमपेक्षयेति शेषः। शब्दान्तरप्राप्त्या झलन्ताजन्तलक्षणभेदाच्च नुमप्यनित्य इति भावः।

---

(१)**इत्याहुरिति। परे तु**-"संज्ञोपसर्जन" इतिप्रतिषेधवार्तिकसत्त्वे 'सर्वस्मै' 'परमसर्वस्मै' 'अतिसर्वाय' 'कतरत्' 'अतिकतरम्' इत्यादि रूपाणि भवन्ति। तत्प्रत्याख्यानेऽपि फलैक्याय तथैव रूपाणि यथा भवेयुस्तथा वक्तव्यम्। त्वद्रीत्याऽङ्गाधिकारे यदुच्यते इति प्रत्याख्यानकल्पे "सर्वादीनि" (पा०सू० १।१।२७) इत्यत्र यदि तदन्तविधिरस्ति तदा 'अतिसर्वाय' 'अतितत्' 'अतिकतरम्' इत्यादौ दोषो दुरुद्धरः स्यात्। यदि तदन्तविधिर्नास्ति तदा 'परमसर्वे' 'परमसर्वस्मै' 'परमसर्वस्मात्' परमसर्वेषां' 'परमसर्वस्मिन्' 'परमसर्वत्र' इत्यादिरूपाणि न सिध्यन्तीति "गृह्यमाणविभक्तेः" इत्यस्य गृह्यमाणार्थगतसंख्याभिधायिविभक्तौ परतः, गृह्यमाणार्थगतसंख्याभिधायिविभक्तेश्च तत्कार्याणि भवन्तीत्युपलक्षणतया निरुक्तभाष्यस्यावश्यं व्याख्येयत्वेन "परमकतरम्' इत्येव भवति न तु "परमकतरत्" इति तदुक्तिः साहसमात्रमेव। "अद्ड्डतरादिभ्यः" (पा०सू० ७।१।२५) इत्यस्य डतरान्ततदादि, डतमान्ततदादि, अन्य, अन्यतर, इतर, इत्येतदर्थगतसंख्याभिधायिनौ तदव्यवहितोत्तरौ च यौ स्वमौ तयोरद्ड् इत्यर्थः। एवं "सप्तम्यास्त्रल्" (पा०सू० ५।३।१०) इत्यादेः सर्वनामार्थगतसंख्याभिधायिना या सप्तमी सर्वनामोत्तरा च तदन्ततदादेस्त्रलादिर्भवतीति 'अतिसर्वाय' 'अतिकतरम्' इत्यादौ क्वापि प्रत्याख्यानकल्पे न दोष इति प्राहुः।

**केचित्तु** शिभावात्परत्वाज्जरसि ततः शौ झलन्तत्वान्नुमित्यर्थमाहुः। अत्र यद्वक्तव्यं तद्(१)निर्जरशब्दे उक्तम्।

**सान्तमहतः** (पा०सू० ६।४।१०)। सान्तेति लुप्तषष्ठीकं पृथक् पदं संयोगस्येत्यनेन समानाधिकरणम्। "नोपधायाः" (पा०सू० ६।४।७) "सर्वनामस्थाने चासम्बुद्धौ" (पा०सू० ६।४।८) इत्यनुवर्त्तते, तदाह— **सान्तसंयोगस्येत्यादि**। उपधाग्रहणञ्च पूर्वत्वमात्रोपलक्षणं पारिभाषिकार्थस्येहासम्भवात्। सर्वनामस्थान इति सान्तसंयोगस्य विशेषणम्। अत एव 'हंसशिरांसि' इत्यादौ न दोषः। यद्वा "अनन्त्यविकारेऽन्त्यसदेशस्य" (का०वा०) इति न दोषः।

**मांस्पचन्या इति**। मांसस्य पचनीत्यर्थः। "मांसस्य पचियुड्घञोः" इत्यप्येतत्सिद्धार्थानुवाद एव। शब्दत्वेन च सादृश्यं, "न लुमता" (पा०सू० १।१।६३) इत्यस्य च नित्यत्वमित्यभिमानः। **वृत्ताविति**। भाष्यस्वरसस्त्वननुवृत्ताविति भावः। **मासश्छन्दसीति**। मासस्तकारः स्याद्भादौ प्रत्यये छन्दसीत्यर्थः। 'माद्भिः शराद्भिर्दुरोदरं तव'इत्युदाहरणम्।

**ह्रस्वो नपुंसके** (पा०सू० १।२।४७)। क्लीबवदर्थे वर्त्तमानस्याजन्तस्येत्येव सामर्थ्यात्प्रातिपदिकलाभे प्रातिपदिकस्येत्येतत् (२)सत्त्वप्रधान-

---

(१)**निर्जरशब्दे उक्तमिति**। अत्र यद्वक्तव्यं तदस्माभिस्तत्रैवोक्तमिति बोध्यम्।

(२) **सत्त्वप्रधानस्येत्यर्थकमिति**। ननु 'वारिणी'इत्यादौ ह्रस्ववारणाय प्रातिपदिकग्रहणं सूत्रे चरितार्थम्। नच तत्र श्यादेशे ईकारोच्चारणसामर्थ्यादेव ह्रस्वो न भविष्यतीति वाच्यम्, तथापि 'वारिणे' 'वारिणा'इत्यादौ ह्रस्ववारणाय प्रातिपदिकग्रहणस्य चरितार्थत्वात् इति चेत्। न, अर्थवत्सूत्रात्प्रातिपदिकग्रहणमनुवर्त्य षष्ठ्या विपरिणामेनोक्तदोषवारणेन प्रातिपदिकग्रहणवैयर्थ्यस्य तदवस्थत्वात्। ह्रस्वो नपुंसके" (पा० सू० १।२।४७) इत्यस्य नपुंसकत्वशक्तिपर्याप्त्यधिकरणस्याजन्तस्य ह्रस्वो भवतीत्यर्थेन निरुक्तदोषवारणेन प्रातिपदिकग्रहणस्य वैयर्थ्योपपादनं तु न युक्तम्, वैयाकरणमते सुबन्तपदे शक्तिपर्याप्त्यधिकरणत्वस्य सत्त्वेनोक्तदोषवारणस्य कर्तुमशक्यत्वात्। न च प्रातिपदिकग्रहणेऽनुवर्तमाने पुनः प्रातिपदिकग्रहणादनतिदिष्टप्रातिपदिकस्यैव ग्रहणमिति कैयटरीत्या, 'सप्तम्यधिकरणे चेति निर्देशाद् विभक्त्येकादेशो नान्तवत्' इति दीक्षितरीत्या च 'काण्डे' इत्यादौ दोषाभावात् 'सत्त्वप्रधानस्यैव ह्रस्वो भवति' इति निष्फलमिति वाच्यम्, 'दोषाभूतमहः' इत्यादौ च्विप्रत्ययान्तदोषाशब्दस्य विकारवाचकाहः-

शब्दसामानाधिकरण्येन नपुंसकवृत्तित्वस्य सत्त्वेन कैयटदीक्षितयोर्मते ह्रस्वस्य दुर्वारतया तत्र दोषवारणाय सत्त्वप्रधानस्यैव ह्रस्वो भवतीत्यवश्यंवक्तव्यत्वात्। सत्त्वप्रधानस्येत्यत्र सत्त्वपदेन लिङ्गान्वयितावच्छेदकं यद्रूपं तद्रूपपुरस्कारेण बुध्यमानं विवक्षितम्। प्रधानत्वं च संसर्गविशेष्योभयवृत्तिः निरवच्छिन्नविशेषणताश्रयावृत्तिर्विशेष्यतासंसर्गताव्यापकीभूतः प्रकारतानिरूपितत्वाख्यः स्वरूपसम्बन्धविशेषः। तथाच सत्त्वप्रधानत्वं यत्किञ्चित्प्रधानतानिरूपिताप्रधानत्वासमानाधिकरणलिङ्गान्वयितावच्छेदकरूपावच्छिन्नप्रधानताप्रयोजकत्वम्। 'काण्डे' इत्यादौ सप्तम्यर्थसंसर्गनिष्ठप्रधानतानिरूपिताप्रधानत्वसामानाधिकरण्यमेव लिङ्गान्वयितावच्छेदककाण्डत्वरूपावच्छिन्नप्रधानतायामिति नोक्तं सत्त्वप्रधानत्वम्।

नन्वेवं 'श्रीपपुत्रः' इत्यादौ ह्रस्वो न स्यात्। लिङ्गान्वयितावच्छेदकश्रीकर्मकपालनकर्तृत्वावच्छिन्नप्रधानतायां जन्यजनकभावसंसर्गनिष्ठप्रधानतानिरूपिताप्रधानतासामानाधिकरण्यस्य सत्त्वात्। एवं 'श्रीपं कुलं' 'सुलु पश्य' इत्यादावपि ह्रस्वो न स्यात्; कर्मत्वादिसंसर्गनिष्ठप्रधानतानिरूपिताप्रधानतासामानाधिकरण्यस्यैव तत्तदवच्छिन्नप्रधानतायां सत्त्वात् इति चेत्? मैवम्, यस्य ह्रस्वश्चिकीर्षितस्तत्पर्याप्तप्रयोजकतानिरूपितप्रयोज्यतावती या प्रधानता तादृशप्रधानतानिरूपिताप्रधानताऽसमानाधिकरणा या लिङ्गान्वयितावच्छेदकरूपावच्छिन्नप्रधानता, तादृशप्रधानताप्रयोजकतापर्याप्त्यधिकरणत्वं सत्त्वप्रधानत्वमिति परिष्कारेणादोषात्। 'श्रीपपुत्रः' 'श्रीपं कुलं' 'सुलु पश्य' इत्यादौ संसर्गनिष्ठप्रधानताप्रयोजकतापर्याप्त्यधिकरणत्वस्य विनिगमनाविरहेणोपस्थापकशक्तेरानुभाविकशक्तेश्च समासे वाक्ये च कल्पनेन तत्रैव सत्त्वात् यस्य ह्रस्वश्चिकीर्षितस्तत्र संसर्गनिष्ठप्रधानताप्रयोजकत्वस्याभावेन तत्प्रयोज्यप्रधानतानिरूपिताप्रधानताऽसामानाधिकरण्यस्य लिङ्गान्वयितावच्छेदकरूपावच्छिन्नप्रधानतायां सत्त्वेन प्रकृते सत्त्वप्रधानत्वस्याव्याहतत्वात्।

न च 'श्रीपपुत्रः' इत्यादौ समासात् प्रागेवान्तरङ्गत्वाद्ध्रस्वः स्यादिति अयं प्रयासो विफलः, पदावधिकान्वाख्याने 'श्रीपं कुलम्' इत्यादौ दोषाभावाच्चेति वाच्यम्, 'श्रीपपुत्रः' इत्यादौ समासे लुकि च निरुक्तसत्त्वप्रधानत्वाभावेन लुक्यन्तरङ्गनिमित्तविनाशकत्वस्य सत्त्वात् "अन्तरङ्गानपि" (प०भा०५२) इति परिभाषया पूर्वं ह्रस्वप्रवृत्तौ समासोत्तरञ्च पूर्वोक्तरीत्या सत्त्वप्रधानत्वस्याभावेन ह्रस्वाप्राप्त्यैतादृशपरिष्कारस्यावश्यकत्वात्। न च 'यः शिष्यते स लुप्यमानार्थाभिधायी' इति न्यायेन 'सुलु कुलम्' इत्यादौ संसर्गनिष्ठप्रधानताप्रयोजकतापर्याप्तेः 'सुलु' इत्यत्र सत्त्वात्पुनरप्युक्तसत्त्वप्रधानत्वस्याभावात्तद्दोषतादवस्थ्यमिति वाच्यम्, यस्य ह्रस्वश्चिकीर्षितस्तत्पर्याप्तप्रयोजकतानिरूपितप्रयोज्यतावदुपस्थितीयप्रधानतानिरूपिताप्रधानत्वासमानाधिकरणा या लिङ्गान्वयितावच्छेदकरूपावच्छिन्नोपस्थितीयप्रधानतातादृशप्रधानताप्रयोजकत्वं सत्त्वप्रधानत्वमिति परिष्कारेणादोषात्।

नन्वेवं 'काण्डे' इत्यादौ काण्डवृत्तिनिरुक्तसत्त्वप्रधानत्वस्य पूर्वान्तवद्भावेनैकादेशविशिष्टेऽतिदेशाद्ध्रस्वो दुर्वार इति वाच्यम्, अर्थघटिताशास्त्रीयत्वेन प्रातिपदिकग्रहणसामर्थ्येन च सत्त्वप्रधानत्वस्य पूर्वान्तवद्भावेनातिदेशो न भवतीति कल्पनेनादोषात्। अत एव 'प्रद्युना' इत्यादौ "तृतीयादिषु" (पा०सू० ७।१।७४) इति पुंवद्भावः, भाषितपुंस्कत्वस्यार्थघटिताशास्त्रीयत्वात्। अत एव "सप्तम्यधिकरणे" (पा०सू० २।३।३६) इति निर्देशः सङ्गच्छते। एतेन एकत्वस्योक्तिः 'एकत्वोक्तिः' इत्यादौ ह्रस्वो दुर्वार इत्यपास्तम्, अपरनिमित्तके ह्रस्वे कर्तव्ये बहिरङ्गत्वेन एकादेशस्यासिद्धत्वाच्च।

अन्ये तु स्वावच्छिन्नप्रकारतानिरूपितविशेष्यताकशाब्दबोधजनकत्वप्रकारकतात्पर्यविशेष्यतापर्याप्त्यधिकरणत्वं, निरुक्तपर्याप्त्यधिकरणेतरत् यत् स्वावच्छिन्ननिरूपितसंसर्गताकशाब्दबोधजनकत्वप्रकारकतात्पर्यविशेष्यतापर्याप्त्यधिकरणं, तद्घटितत्वसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्त्वम्, एतदुभयसम्बन्धेन लिङ्गान्वयितावच्छेदकरूपविशिष्टत्वमेव सत्त्वप्रधानत्वम्। 'काण्डे' इत्यादौ प्रथमसम्बन्धसत्त्वेऽपि स्वविशिष्टनिरूपिताधिकरणतासंसर्गताकशाब्दबोधजनकत्वप्रकारकतात्पर्यविशेष्यताधिकरण-निरुक्तविशेष्यतापर्याप्त्यधिकरणेतरसप्तमीविभक्ति–घटितत्वस्य सत्त्वेन दलद्वयघटितसम्बन्धावच्छिन्न प्रतियोगिताकस्वाभाववत्त्वरूपो द्वितीयसम्बन्धो नास्तीति न तत्र दोषः। तत्र प्रथमसम्बन्धानुपादाने दोषाभूतमहः' इत्यादौ ह्रस्वापत्तिः। तदुपादाने तु न दोषः। अहःशब्दसामानाधिकरण्येन दोषापदस्य लिङ्गविशिष्टार्थबोधकत्वेऽपि तद्वाच्यतावच्छेदकरूपस्य लिङ्गान्वयिताऽनवच्छेदकत्वात्। द्वितीयसम्बन्धघटकविशेष्यानुपादाने 'श्रीपं कुलं' 'श्रीपपुत्रः' इत्यादौ ह्रस्वानापत्तिः, निरुक्तविशेष्यतापर्याप्त्यधिकरणेतरलुप्तविभक्तिघटितत्वात्। तदुपादाने तु संसर्गविषयताप्रयोजकत्वस्य श्रूयमाणपदे एव स्वीकारेण तत्राभावात् 'काण्डे' इत्यादौ सप्तम्यादिविभक्तेरेव तत्सत्त्वात्तद्घटितत्वसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्त्वस्य सुलभत्वान्न दोषः। तदीयविशेषणदलानुपादाने 'सुश्रुपस्य' 'श्रीपपुत्रः' इत्यादौ ह्रस्वानापत्तिः, संसर्गताप्रयोजकत्वस्य श्रूयमाणे एवाङ्गीकारेण तद्घटितत्वस्यैव प्रातिपदिके सत्त्वेन तदघटितत्वाभावात्। तदुक्तौ तु निरुक्तविशेष्यतापर्याप्त्यधिकरणे तदितरत्वस्याभावेन तदितरसंसर्गताप्रयोजकघटितत्वाभावाद् ह्रस्वः सुलभ इत्याहुः।

परे तु नपुंसकत्वावच्छिन्ननिरूपितशक्तिविशिष्टत्वं क्लीबत्ववदर्थे वर्तमानत्वम्। वैशिष्ट्यं च स्वपर्याप्त्यधिकरणत्व, स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधजनकत्वप्रकारकतात्पर्यविशेष्यतापर्याप्त्यधिकरणत्वैतदुभयसम्बन्धेन। 'काण्डे' इत्यादौ च निरुक्तोभयसम्बन्धेन शक्तिवैशिष्ट्याभावान्न दोषः। 'दोषाभूतमहः' इत्यादावपि तादृशशक्तेरनङ्गीकारान्न दोषः। अब्भक्षन्यायेन नपुंसकत्वावच्छिन्नमात्रनिरूपितोद्भूतशक्तिमत्त्व विवक्षितम्। तेन पदे न दोषः। अत एवात्रत्यं प्रातिपदिकग्रहणं प्रत्याख्यातमित्याहुः।

स्येत्यर्थकम्। तेन 'काण्डे' इत्यादौ अन्तवद्भावेन प्रातिपदिकत्वेऽपि न ह्रस्वः। विभक्त्यर्थस्य संसर्गत्वेऽपि प्रकृत्यर्थापेक्षया प्राधान्यमस्त्येव। प्रथमाया अपि अन्याभिहितशक्तिरर्थ इति तत्रापि तत्संसर्गको बोध इति तस्याः प्राधान्यम्। 'काण्डे तिष्ठतः' इत्यादावाख्यातार्थकर्त्तुः कर्तृक्रियाभावेन क्रियायामन्वये तदभिन्नप्रथमार्थस्यापि तेन सम्बन्धेनान्वयात्तस्य प्राधान्यम्। स्पष्टञ्चेदं **भाष्ये। ज्ञानवदिति।** दीर्घान्तत्वप्रयुक्तो न कश्चिद्विशेष इति भावः। 'श्रीपाणि' इत्यादौ "एकाजुत्तरपदे" (पा०सू० ८।४।१२) इति णत्वं भवत्येवेति बोध्यम्।

**इकोऽचि** (पा०सू० ७।१।७३)। सुपीति वक्तव्ये विभक्ताविति (१)चिन्त्यप्रयोजनम्। विभक्तौ किम्? मधुन इदं माधवम्। **हे वारे हे वारीति।** अत एव "इकोऽचि" (पा०सू० ७।१।७३) इति सूत्रस्थम् "इह किञ्चित्त्रपो' इति, "एङ्ह्रस्वात्" (पा०सू० ६।१।६९) इतिसूत्रस्थं 'हे त्रपु' इति च **भाष्यं** सङ्गच्छते। **वृद्ध्यौत्वेति।** वृद्ध्यादीनां क्रमेण 'गावौ' 'हरौ' 'क्रोष्टा' 'हरये' इत्यवकाशः, नुमो 'वारिणी' इति।

(२)**तृतीयादिषु** (पा०सू० ७।१।७४)। भाषितः पुमान् येन

---

(१)**चिन्त्यप्रयोजनमिति**। वारिशब्दादाचारक्विबन्तात् यङ्लुकि तस्मात् तृजादौ नुमभावार्थं विभक्तावित्यावश्यकमिति **केचित्**। वारिशब्दादाचारक्विबन्तादाशीर्लिङि 'वारि–इषीष्ट' इति स्थिते नुमर्थं सुपीति विहाय विभक्तावित्युक्तमिति **परे**।

(२)तृतीयादिषु (पा०सू० ७।१।७४)। यत्प्रवृत्तिनिमित्तं पुंस्त्वस्यान्वयितावच्छेदकं तदेव यत्र नपुंसकत्वस्यान्वयितावच्छेदकं भवति तद्भाषितपुंस्कमित्यर्थः। पीलुशब्दे च वृक्षत्वव्याप्यजातिरूपं पुंस्त्वस्यान्वयितावच्छेदकं, फलत्वव्याप्यजातिरूपं च नपुंसकत्वस्यान्वयितावच्छेदकमिति न तस्य भाषितपुंस्कत्वमितिभावः।

**परे** तु भाषितः पुमान् यया शक्त्या सा भाषितपुंस्का, सा विद्यते यस्मिंस्तद्भाषितपुंस्कम्। अर्शआद्यजिति भावः। तत्त्वं च प्रवृत्तिनिमित्तविशिष्टशक्तिविशिष्टत्वम्। शक्तौ प्रवृत्तिनिमित्तवैशिष्ट्यं च स्वावच्छिन्नविशेष्यतानिरूपितपुंस्त्वनिष्ठप्रकारताप्रयोजकत्वं स्वावच्छिन्नविशेष्यतानिरूपितनपुंसकत्वनिष्ठप्रकारताप्रयोजकत्वमेतदुभयसम्बन्धेन। शक्तिवैशिष्ट्यं च स्वपर्याप्त्यधिकरणत्व, स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधजनकत्वप्रकारकतात्पर्यविशेष्यतापर्याप्त्यधिकरणत्वैतदुभयसम्बन्धेन। पीलुशब्दे च यदि वृक्षत्वव्याप्यजातिरूपं प्रवृत्तिनिमित्तं ध्रियते तर्हि स्वावच्छिन्नविशेष्यतानिरूपितपुंस्त्वनिष्ठप्र-

शब्देनेत्यर्थे पीलुशब्देऽतिप्रसङ्गस्तस्माद्भाषितः पुमान् यस्मिन् प्रवृत्तिनिमित्तरूपेऽर्थे इति बहुव्रीहिः। भाषणक्रियया स्वकरणतयाऽऽक्षिप्तशब्दश्च क्लीवेन समानानुपूर्विकः समानार्थश्च गृह्यते प्रत्यासत्तेः। ततोऽर्शआद्यच्। तत्फलितमाह—**प्रवृत्तिनिमित्तैक्ये इति।** इकोऽचीति, नपुंसकस्येति चानुवर्त्तते। ते च तत्र षष्ठ्यन्ते, अत्रार्थात्प्रथमान्ते। इक इति किम्? श्रीपेण। टादौ किम्? अनादिनी। अयञ्च ह्रस्वनुमोरभावातिदेशः क्लीबत्वविशिष्टार्थवाचकस्य पुंस्त्वविशिष्टार्थवाचकरूपातिदेशे क्लीबत्वरूपार्थनिवृत्तेस्तत्प्रयुक्तसर्वकार्याप्रवृत्तेरित्यन्यत्र विस्तरः।

**अस्थिदधि** (पा०सू० ७।१।७५)। नकारादकार उच्चारणार्थः। अनङ उदात्तस्योच्चारणेन सिद्धावुदात्तग्रहणम् 'असति यत्ने उदात्तादिशब्दैरनुपात्तो गुणोऽविवाक्षितः' इति(१)ज्ञापनार्थम्। "त्रिचतुरोः" (पा०सू० ७।२।९९) इति सूत्रे 'तिसृचतसृ' इत्यत्र द्वन्द्वप्रयुक्तेऽन्तोदात्ते कर्त्तव्ये आद्युदात्तनिपातनं (२)विवक्षार्थम्। निपातनं नामान्यादृशे प्रयोगे प्राप्तेऽन्यादृशप्रयोगकरणम्। वधादेशेऽपि हन्त्यनुरूपेऽन्तोदात्तेऽनुदात्ते वोच्चार-

---

कारताप्रयोजकत्वस्य तदवच्छिन्ननिरूपितशक्तौ सत्त्वेऽपि स्वावच्छिन्नविशेष्यतानिरूपितनपुंसकत्वनिष्ठप्रकारताप्रयोजकत्वस्याभावात्, यदि फलत्वव्याप्यजातिरूपं प्रवृत्तिनिमित्तं ध्रियते तर्हि तदवच्छिन्ननिरूपितशक्तौ स्वावच्छिन्नविशेष्यतानिरूपितनपुंसकत्वनिष्ठप्रकारताप्रयोजकत्वस्य सत्त्वेऽपि स्वावच्छिन्नविशेष्यतानिरूपितपुंस्त्वनिष्ठप्रकारताप्रयोजकत्वस्याभावान्न दोष इत्याहुः।

(१)**ज्ञापनार्थमिति।** "स्वं रूपम्" (पा०सू० १।१।६८) इत्यत्र रूपपदेनोदात्तत्वानुदात्तत्वस्वरितत्वानुनासिकत्वनिरनुनासिकत्वातिरिक्तश्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्नस्य ग्रहणमिति ज्ञापनार्थमिति भावः।

(२)**विवक्षार्थमिति।** न च हन्धातोरेकाच्कत्वेन वधादेश आद्युदात्तोऽन्तोदात्तो वा भवतीति 'स्थान्यनुरूपगुणकस्वरे उच्चारणीये' इत्यसङ्गतमिति वाच्यम्, "हनो वध" (पा०सू० २।४।४२) इत्यत्र "फिषः" (शा०सू० १-१) इतिशास्त्रानुगुणेऽन्तोदात्ते वधादेशे उच्चारणीये आद्युदात्तोच्चारणस्य विवक्षितत्वात्, स्थानिनो हन आद्युदात्तत्वेऽपि "धातोः" (शा०सू०) इत्यनेनान्तोदात्तत्वरूपेण साधुत्वबोधनात् तेनैव रूपेणान्तोदात्ते पठनीये आद्युदात्तोच्चारणस्य विवक्षितत्वाद्वा, हनधातोरनुदात्तोपदेशत्वेन सर्वानुदात्ते वधादेशे पठनीये आद्युदात्तोच्चारणस्य विवक्षितत्वादेति दिक्।

णीये आद्युदात्तोच्चारणं विवक्षार्थम् । तदुक्तमसति यत्न इति । परमास्थि-शब्दादावन्तोदात्ते उदात्तगुणस्यापि स्थानित्वेनात्र तद्विवक्षायां न मानमिति **भाष्ये** स्पष्टम् । उदात्तत्वफलं 'दध्ना' इत्यादावल्लोपे उदात्तनिवृत्तिस्वरेण विभक्त्युदात्तत्वं, 'दधनि' इत्यादौ श्रवणञ्च । ज्ञापनफलन्तु तृन्तृजन्तानां भिन्नस्वरकान्तानाम् "ऋदुशन" (पा०सू० ७।१।९४) इत्यनेन तत्स्वरका-नङ्सिद्धिरिति दिक् ।

**तदन्तेति** । आङ्गत्वादिति भावः । अत्रापि नपुंसकस्येति सम्ब-ध्यते । तेन धाञः "आदृगमहन" (पा०सू० ३।२।१७१) इति किप्रत्यये 'दधिना' इत्यादौ न । एतच्च (१)गृह्यमाणस्यैव विशेषणम् । तेन 'अतिदध्ना ब्राह्मणेन' इत्यादि सिद्धम् । **सुधियेति** । शोभनज्ञानवत्त्वरूपै(२)कप्रवृ-त्तिनिमित्तत्वात् पुंवत् । प्रधीशब्दे प्रकृष्टज्ञानवत्त्वमेकं तत् । **मध्विति** । मकरन्द–मद्य–माक्षिकवाचिनः पुंनपुंसकयोः सत्त्वात्पुंवत्त्वम् । मृद्वीकावि-कारवाचिनो नित्यनपुंसकस्य तु न । स च "मार्द्वीकं मधु न द्वयोः"(अ०को० २।१०।४१) इत्यमरेणोक्तः । **भाष्ये** मधोस्तृप्ता इत्यस्य लिङ्गव्यत्य-योदाहरणत्वन्तु "माध्वीर्गावो भवन्तु नः" इतिलिङ्गसिद्धक्षीरवाचिनपुंसक-मधुशब्दाभिप्रायेणेति (३)दिक् ।

**स्नुर्वेति** । "मांस्पृत्स्नूनां पदादिषूपसंख्यानम्" इतिवार्तिकेनेति भावः । **पूर्वविप्रतिषेधेनेति** । न च नित्यत्वादेव नुम्सिद्धः, किं पूर्व-विप्रतिषेधेनेति वाच्यम्, तदन्ते नुमि कृतेऽपि अङ्गाधिकारे तदन्तविधेः सत्त्वेन "यदागमाः" (प०भा० ११) इति न्यायेन नुम्विशिष्टस्य तद्ग्रहणेन ग्रहणात् सूत्रे षष्ठीनिर्देशाभावान्निर्दिश्यमानस्य नुमा व्यवधानमि(४)त्यस्या-

---

(१)**गृह्यमाणस्यैव विशेषणमिति** । श्रुतानुमितपरिभाषयेति भावः ।
(२)**एकप्रवृत्तिनिमित्तत्वादिति** । पुंस्त्वनपुंसकत्वयोः शोभनज्ञानवत्त्वस्यैवान्-यितावच्छेदकत्वादिति भावः । (३)**दिगिति** । दिगर्थस्तु "माध्वीर्गावो भवन्तु नः" इतिमन्त्रे मधुशब्दस्य माधुर्यमेवार्थ इति तत्रत्यमधुशब्दस्य क्षीरवाचित्वे न मान-मिति दिक् ।

(४)**इत्यस्याभावेनेति** । न च "तृज्वत्क्रोष्टुः" (पा०सू० ७।१।९५) इत्यादौ

भावेन तृज्वत्त्वप्राप्तेः। सकृद्गतिन्यायान्न पुनस्तृज्वत्त्वम्। नन्वयं 'क्रुशक्रोष्टुने' इत्यस्यैव **भाष्ये** उदाहरणात्तृतीयादिष्वचीत्येतद्विषयक एव। अन्यथा प्रथमोपस्थितसर्वनामस्थानोदाहरणत्यागे बीजानापत्तिरिति चेत्? न, उदाहरणस्य सङ्कोचकत्वे मानाभावात्। तदुक्तं 'न चोदाहरणमादरणीयम्' इति। उदाहृतातिरिक्तोदाहरणाभाव इत्येवंपरतया नादरणीयमिति तदर्थ इत्याहुः।

**सुल्वेति**। अत्र शोभनलवनकर्तृत्वं प्रवृत्तिनिमित्तम्। पुंवत्त्वे ह्रस्वाभावेनाघित्वान्नाभावो न। नुमभावाच्च यण्। **धातृ इति**। अनङ् न "न लुमता" (पा०सू० १।१।६३) इति निषेधात्। धारणादिकर्तृत्वं चास्यैकं प्रवृत्तिनिमित्तम्। **हे धातरिति**। "ह्रस्वस्य गुणः" (पा०सू० ७।३। १०८) इति गुणः।

**(१)एच इक्** (पा०सू० १।१।४८)। आदेश इति कर्मणि घञ्। ह्रस्वपदेन कर्मधारयः। (२)निर्द्धारणे सप्तमी, सौत्रमेकवचनं, तदाह—

---

निर्दिश्यमानपरिभाषाया अप्रवृत्तौ 'परमक्रोष्टा' इत्यादौ परमक्रोष्टुशब्दस्य स्थाने तृजन्ततदादिरूपादेशापत्तिरिति वाच्यम्, अनुत्तरपदस्थस्येतिज्ञापकेन क्वचित्तदादिविधेरप्रवृत्त्या परमक्रोष्टु इत्यस्य स्थाने "स्थानेऽन्तरतमः" (पा०सू० १।१।५०) इति परिभाषया परमक्रोष्टृ इतितृजन्तादेशो भवतीत्यदोषात्।

**यद्वा** क्रोष्टुरिति षष्ठ्यन्तमेव, तृज्वदिति च मतुबन्तम्। तथाच क्रोष्टुशब्दस्य स्थाने तृज्वानादेशो भवतीत्यर्थ इति षष्ठ्याः सत्त्वेन निर्दिश्यमानपरिभाषयैव दोषवारणात्। न च तुन्नन्तक्रोष्टुशब्दस्य कथं क्रोष्टुरिति षष्ठ्यन्तं रूपं स्यादिति वाच्यम् "प्रकृतिवदनुकरणम्" (प०भा० ३६) इति परिभाषया अनेनैव तृज्वद्भावेन "घेर्ङिति" (पा०सू० ७।३।१११) इति गुणेन वा तद्रूपसिद्धेरिति दिक्।

**(१)एच इक्** (पा०सू० १।१।४८)। **(२)निर्धारणे सप्तमीति**। 'नृणां द्विजः श्रेष्ठः' इत्यादौ यथा नागेशमते नृशब्दार्थस्य स्वघटकत्वं, स्वघटकद्विजेतरयावद्वृत्तिश्रैष्ठ्यवत्त्वमेतदुभयसम्बन्धेन, यथा वाऽस्मन्मते नृपदार्थस्य स्वघटकवृत्तित्वं, स्वघटकद्विजेतरयावद्वृत्तित्वमेतदुभयसम्बन्धेन श्रैष्ठ्ये अन्वयस्तथा प्रकृतेऽपि **नागेश**मते स्वघटकत्वं, स्वघटकेतरावृत्त्येच्स्थानिकत्वमेतदुभयसम्बन्धेन ह्रस्वादेशपदार्थस्येक्पदार्थेऽन्वयः, अस्मन्मते च स्वघटकवृत्तित्वं, स्वघटकेतरावृत्तित्वमेतदुभयसम्बन्धेनादेशपदार्थस्यैच्स्थानिकत्वेऽन्वय इति भावः।

**आदिश्येत्यादि** । मध्ये इत्यपपाठः, तद्योगे षष्ठ्या एवौचित्यात् । एचां पूर्वभागोऽवर्णसदृशः, उत्तरस्तु इवर्णोवर्णसदृशः । तत्रोभयान्तरतमह्रस्वाभावात्पर्यायेणावर्णादेः प्राप्तावर्वणाभावायेदं, तदाह—**इगेवेति** । यथाप्राप्तमेव नियम्यत इति न यथासंख्यम् । ह्रस्व एच्तु नास्त्येव "एओङ्" (मा०सू०३) इत्यादौ दीर्घनिर्देशादिति स्पष्टं **भाष्ये** । न चार्द्धमात्राऽवर्णस्याद्ध्यर्द्धमात्रेवर्णोवर्णयोरिति उत्तरभूयस्त्वात्तत्सदृश इगेव भविष्यतीति नार्थः सूत्रेणेति वाच्यम्, अध्यर्द्धमात्राऽवर्णस्यार्द्धमात्रेवर्णोवर्णयोरित्यस्यापि पक्षस्य "प्लुतावैच" (पा०सू० ८।२।१०६) इति सूत्रे विनिगमनाविरहेण **भाष्ये** उक्ततया समप्रविभागपक्षस्यैव **भाष्यकृत्सम्मतत्वादित्याहुः** ।

**प्रीणामिति** । न च "रायो हलि" (पा०सू० ७।२।८५) इति विषयसप्तमी, इति प्रागेवाऽऽत्वम्, निर्दिष्टपरिभाषाबाधे मानाभावात्, आत्वे कृते नुडनापत्त्या हलादिविषयाभावेन पूर्वमात्वाप्रवृत्तेश्च । **केचित्तु** नुटो निमित्तस्य सन्निपातस्य दीर्घेण विनाशावश्यकत्वेन तद्विषये सन्निपातपरिभाषाया विषय एव न । "नामि" (पा०सू० ६।४।३) इति दीर्घस्तु "सुपि च" (पा०सू० ७।३।१०२) इति दीर्घं नित्यत्वाद् बाधते इति **माधवा**शय(१)माहुः । 'ग्रामणि कुलम्' इत्यादौ नपुंसकह्रस्वत्वे "ह्रस्वस्य पिति" (पा०सू० ६।१।७१) इति तुग्न समुदितप्रातिपदिकापेक्षह्रस्वस्य बहिरङ्गत्वेन वर्णमात्राश्रयेऽन्तरङ्गे तुकि असिद्धत्वात् । ये तु "षत्वतुकोरसिद्धः" इति वचनात्, "न लोप" (पा०सू० ८।२।२) इति सूत्रे कृतितुग्ग्रहणाच्च "ह्रस्वस्य पिति" (पा०सू० ६।१।७१) इति सूत्रेऽन्तरङ्गपरिभाषाया अप्रवृत्तिं वदन्ति, तेषामुपजीव्यविरोधान्न तुक् अजन्तत्वमुपजीव्य ह्रस्वप्रवृत्तेः । न चैवं सन्निपातपरिभाषा व्यर्था तस्या अप्युपजीव्यविरोधमूलकत्वात् । किञ्च तस्या अपि स एवार्थः । अत एव सन्निपातपरिभाषादोषनिरूपणावसरे

---

(१)**आहुरिति** । अभ्यनुज्ञावाक्ये विघातकशास्त्रे वा सङ्कुचितसङ्कोचमकृत्वा सामान्यतः सन्निपातपरिभाषाया अनित्यत्वविषये सङ्कोचाभावे 'मिकुलम्' इत्यादौ तुगापत्तिः । 'सुलुनी' इत्यादौ नुमर्थं सन्निपातपरिभाषाऽनित्यत्वस्यावश्यकत्वेन "ह्रस्वो नपुंसके" (पा०सू० १।२।४७) इत्यत्राभ्यनुज्ञावाक्ये सन्निपातपरिभाषाप्रयोज्यसङ्कोचा-

'वर्णाश्रयः प्रत्ययो वर्णविचालस्यानिमित्तं स्यात्' इत्युक्तम् । न च 'न प्रत्ययः सन्निपातलक्षणः, अङ्गसञ्ज्ञा तद्यनिमित्तं स्यात्' इत्याग्रिमभाष्यविरोध इति वाच्यम्, तस्यैकदेश्युक्तित्वात् । अन्यथा 'शैवः' इत्यादावपि सा लोपनिमित्तं न स्यादित्यन्यत्र निरूपितम् । 'ग्रामणिपुत्रः' 'ग्रामणि कुलम्' इत्यादौ पूर्वोत्तरपदनिमित्ते ह्रस्वे बहिरङ्गपरिभाषयापि (तुग्वारणं) सिद्ध्यतीत्याशयेन "कृन्मेजन्तः" (पा०सू० १।१।३९) इति सूत्रे "ह्रस्वस्य पिति" (पा०सू० ६।१।७१) इत्यादौ तदुपन्यास एकदेशिन इति न तद्विरोध इत्यलम् ।

## इत्यजन्ता नपुंसकलिङ्गाः ॥

---

**हो ढः** (पा०सू० ८।२।३१) । "झलो झलि" (पा०सू० ८।२।२६) इत्यतो झलीति, "पदस्य" (पा०सू० ८।२।१६) इति, "स्कोः" (पा०सू० ८।२।२९) इत्यतोऽन्त इत्यनुवर्त्तते । झलि परे पूर्वस्य (१)पदान्ते विद्यमानस्य हस्येत्यर्थः । डस्तु न विहितः । (झषन्तत्वाभावेन भष्भावाप्राप्त्या) धुडित्याद्यसिद्धेः ।

**दादेर्धा** (पा०सू० ८।२।३२) । दादिग्रहणमौपदेशिकदादित्ववल्ल-

---

भावे नुम इव तुकोऽप्यभ्यनुज्ञादाने प्रतिबन्धकाभावात् इति अत्रारुचिर्बोध्या । सङ्कुचितसङ्कोचे तु सकलेष्टसिद्धिः ।

*** इत्यजन्ता नपुंसकलिङ्गाः ***

---

(१)**पदान्ते विद्यमानस्येति** । हस्य पदविशेषणत्वं स्वीकृत्य हान्तं यत्पदं तदवयवस्य निर्दिश्यमानस्येति वक्तुं युक्तम् । यद्वा, धर्मिपारतन्त्र्येण हत्वसमानाधिकरणपदान्तत्वाश्रये विद्यमानस्य हस्येत्युचितम् । यद्वा, अन्ते इत्यस्य षष्ठ्यन्तत्वं प्रकल्प्य पदान्तस्य हस्येतिव्याख्यानमुचितम् । यथाश्रुतं तु न सम्यक् 'लिहौ' इत्यादौ हाविति समुदायस्य पदान्तत्वेन तत्र विद्यमानस्य हस्य ढत्वापत्तेरिति केचित् । वस्तुतस्तु पदस्य वैयधिकरण्यान्वयात्, धर्मिपारतन्त्र्येणान्वयस्यापि अत्राप्रामाणिकत्वात्, अन्ते इत्यस्य षष्ठ्यर्थकत्वकल्पनायां गौरवात् अन्तशब्दस्य प्रकृतेऽवसानार्थकत्वं स्वीकृत्य "वाऽवसाने" (पा०सू० ८।४।५६) इत्यादाविव पदावसाने विद्यमानस्य हस्येत्यर्थकरणेन 'लिहौ' इत्यादौ ढत्वादिवारणं बोध्यमिति दिक् ।

क्षकं व्याख्यानादित्यभिप्रेत्य फलितार्थमाह—**उपदेशे इति**। एतच्च प्रकृतसूत्रे **भाष्ये** ध्वनितम्। तत्र हि घत्वस्यासिद्धत्वाड्ढत्वं प्राप्नोतीत्याशङ्क्यापवादत्वेन समाधाय "अथवा एवं वक्ष्यामि—होढोऽदादेरिति। ततो धातोरिति। दादेरिति वर्तते, नेति निवृत्तम्" इत्युक्तम्। द्रुहेस्तु "वा द्रुह" (पा०सू० ८।२।३३) इत्यनेन ढत्वस्यापि विधानात्तत्र न दोष इति तदाशयः। तत्र धातोरिति—सूत्रे **भाष्य**कृत्कृतदादेरित्यनुवृत्तेः। (१)फलान्तराभावेन तद् उपदेशवद्दादिलक्षकं सामर्थ्यात्। अर्थाधिकारानुरोधाच्च पूर्वत्र निषेधसमर्पकेऽप्येवम्। अत एव नामधातुविषये 'दामलिड्' इत्यादौ ढत्वघत्वाभावौ सिद्धौ। एवञ्च तदेकवाक्यतयाऽपवादत्वपक्षेऽपि दादिपदस्योपदेशकालिकदादित्ववल्लक्षकतोचिता। तदनन्तरं दादेरिति वर्त्तते इति **भाष्य**स्योक्ताशयमजानतो घो दादेरित्युच्यते कथमधोगिति शङ्कायाम् "एकाचः" (पा०सू० ८।२।३७) इतिसूत्रार्थमपि प्रसङ्गान्निर्णेतुं धातोरवयवो यो दादिरित्यर्थमुक्त्वा गर्दभयतेरप्रत्यये गर्द्धबित्यादौ भष्भावायोत्तरसूत्रे आवश्यकं वैयधिकरण्यमुक्त्वा 'दोग्धा' इति तु व्यपदेशिवद्भावात्सिद्धमिति **भाष्ये** उक्तम्। तत्रोत्तरार्थं वैयधिकरण्यमावश्यकमिति वदता तस्येहानावश्यकत्वं सूचितम्। तेन च दादेरित्यस्योक्तार्थकत्वं सूचितमित्यन्यत्र विस्तरः।

---

(१)**फलान्तराभावेनेति**। दादिभिन्ने धातौ घत्वस्यासिद्धत्वाड्ढत्वेन न तत्र घत्ववारणाय सेति भावः। ननु दाद्यवयवभिन्नहस्य ढत्वविधानेन लेढीति लिट् दामनः लिट् 'दाम्रलिड्' इत्यत्र हस्य दाद्यवयवत्वेन ढत्वानापत्तिरिति चेत्? न, अर्थाधिकारानुरोधेनौपदेशिकदादिधात्ववयवभिन्नस्येत्यर्थेनादोषात्।

**परे तु** दादेरित्यस्यानुवृत्तेरत्रार्थाधिकारानुरोधाद्दादिधात्ववयवभिन्नस्येत्यर्थसम्पादनेन चारितार्थ्यात्तादृशार्थकल्पने प्रमाणाभावः। न चैवं क्यजन्तनिष्पन्नदामलिट्शब्दे ढत्वानापत्तिरिति वाच्यम्; इष्टापत्तेः। अत एव भाष्ये "घोऽदादेरित्युच्यते कथमधोगिति" इति शङ्कायां धातोरवयवो यो दादिरिति वैयधिकरण्येनैव समाधानमुक्तम्। दामलिट्शब्दे घत्ववारणाय तदर्थमवश्यं लक्षणाश्रयणे तेनैव 'अधोग्' इत्यत्र निर्वाहे "घोऽदादेरित्युच्यते" इति शङ्काया वैयधिकरण्येन समाधानस्य चासङ्गतिः स्पष्टैव। तस्मात्तादृशार्थे लक्षणाऽप्रामाणिकी। अत एव सूत्रे धातोरिति चरितार्थम्। अन्यथौपदेशिकदादित्ववतो धातुभिन्नस्याप्रसिद्ध्या तद्वैयर्थ्यं स्पष्टमेवेत्याहुः।

'धुग्' इत्यादिसिद्धये (१)गो नोक्तः । "औपदेशिकप्रायोगिकयोरौपदेशिकस्य ग्रहणम्" इति परिभाषा तु तत्र तत्रोपदेशग्रहणं कुर्वत्सूत्रविरोधेन "तरप्तमपौ घः" (पा०सू० १।१।२२) "अत्वसन्तस्य" (पा०सू० ६।४।१४) इत्यादिसूत्रस्थ**भाष्य**विरोधेन चाप्रामाणिकी । तत्र हि **भाष्ये** इदमुक्तम् "इह हि व्याकरणे सर्वेष्वेव सानुबन्धकग्रहणेषु रूपमाश्रीयते यत्रास्यैतद्रूपमिति, रूपनिर्ग्रहश्च शब्दस्य नान्तरेण लौकिकं प्रयोगं, तस्मिंश्च लौकिके प्रयोगे सानुबन्धकानां प्रयोगो नास्तीति कृत्वा द्वितीयः प्रयोग उपास्यते । कोऽसौ ? उपदेशो नामेति" । अनुबन्धप्रस्तावात्सानुबन्धकेष्वित्युक्तं न्यायस्यान्यत्रापि तुल्यत्वादिति बोद्धयम् ।

**एकाचो** (पा०सू० ८।२।३७) । 'झष् झषन्तस्य' इति (२)वक्तुं युक्तं भष्पदाशक्तिकल्पनेन लाघवात् । **निवृत्तमिति** । 'धुग्भ्याम्' इत्यादौ पदान्तत्वादेव सिद्धिरिति भावः । **सामर्थ्यादिति** । स्ध्वोर्ग्रहणस्येतरव्यावृत्त्यर्थत्वे तु तदनुवृत्तौ फलाभाव इति भावः । धातोः किम् ? (३)तद्बाडित्या(४)दि । ननु दुहेर्घत्वे धात्ववयवमेकाज्रूपं दु इति, उघिति च, तत्राद्यो न झषन्तः, अन्त्ये न बश्, दुघिति तु नावयव इति कथं भष्भावः ? अत आह—(५)**व्यपदेशिवदिति** । विशिष्टोऽपदेशो मुख्य-

---

(१)**गो नोक्त इति** । गत्वे झषन्तत्वाभावाद्भष्भावानापत्तिरिति भावः ।

(२)**वक्तुं युक्तमिति** । ननु 'सर्वे सर्वार्थवाचकाः' इति सिद्धान्ताद्भषो भकारादिषान्तसमुदाये शक्तिः सिद्धैवेति चेत् ? न, तदर्थे वक्तुस्तात्पर्यकल्पने गौरवात् । लाघवाद्भषो भष् इति वक्तुं न युक्तम्; "झषस्तथोः" (पा०सू० ८।२।४०) इत्यत्र तस्यावश्यकत्वात् । अत एवोज्झधातोः क्विपि 'उग्धिः' इति सिद्धम् । (३)**तद्बाडिति** । ननु भष्भावेऽपि पुनः जश्त्वेन न दोष इत्यत आह—(४)**आदीति** । आदिना 'गद्धाड्' इत्यस्य सङ्ग्रहः । गदु अद्धोतीति विग्रहः ।

(५)**व्यपदेशिवद्भावेनेति** । सूत्रकारः स्वघटकावधिकपरत्वं, स्वघटकावधिकपूर्वत्वाभाववत्त्वमेतदुभयसम्बन्धेन स्वविशिष्टत्वरूपान्तत्वं, स्वघटकावधिकपूर्वत्वं, स्वघटकावधिकपरत्वाभाववत्त्वमेतदुभयसम्बन्धेन स्वविशिष्टत्वरूपादित्वं स्वीकृत्य 'आभ्याम्' इत्यादौ अकारादौ स्वघटकावधिकपरत्वाभावेन अकारान्तात्वाभावेन दीर्घादीनामप्राप्त्या दीर्घादिसिद्ध्यर्थम् "आद्यन्त" (पा०सू० १।१।२१) इतिसूत्रं प्रणीत-

व्यवहारः सोऽस्यास्तीति व्यपदेशी (१)तेन तुल्यमित्यर्थः । इदमाद्यन्तवत्सूत्रे **भाष्ये** स्पष्टम् । एकाचः किम् ? दामलिट् । बशः किम् ? क्रोत्स्यति । झषन्तस्य किम् ? दास्यति । **धुगिति** । "अत्वसन्तस्य" (पा०सू० ६।४।१४) इतिसूत्रेऽधातोरिति निषेधेन (२)कारकं प्रत्ययप्रधानभूतक्रियावाचकस्यापि धातुत्वादिति भावः । (३)न च "धातोरुच्यमानङ्कार्यं तत्प्रत्यये भवति" इति परिभाषया कथमत्र घत्वादि ? तत्प्रत्ययो धातुसंशब्देन विहितः प्रत्ययः, इति वाच्यम्, अस्य पदान्तनिमित्तत्वेन प्रत्ययनिमित्तत्वाभावात् । अत एव 'अप्रशान्' इति चरितार्थम् । अन्यथा "मो नो धातोः" (पा०सू० ८।२।६४) इत्यत्रापि तत्प्रवृत्तौ नत्वानापत्त्या तद्सङ्गतिः स्पष्टैव ।

---

वान् । तत्र वार्तिककारः अन्तादिलक्षणयोः स्वघटकावधिकपूर्वत्व–स्वघटकावधिकपरत्वरूपसम्बन्धयोः प्रयोजनाभावेन तयोस्तत्रानुपादानेन 'आभ्याम्' इत्यत्राकारान्तत्वस्य सुवचत्वेन सूत्रं निष्फलमित्याह । **भाष्यकारास्तु** विषयितासम्बन्धेन स्वाधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकत्वं, विषयितासम्बन्धेन स्वाभाववद्वृत्तितावच्छेदकत्वमेतदुभयसम्बन्धेन समुदायविशिष्टधर्मवत्त्वं घटकत्वं, विषयितासम्बन्धेन स्वाभाववद्वृत्तितानवच्छेदकत्वं, विषयितासम्बन्धेन स्वाधिकरणवृत्त्यभावप्रतियोगितावच्छेदकत्वमेतदुभयसम्बन्धेन स्वविशिष्टधर्मवत्त्वं घटितत्वं च स्वीकृत्य तयोश्चाद्यन्तलक्षणयोर्निवेशं केवले अकारे मुख्यस्याकारादित्वस्य व्यवहारो मा भूदित्येतदर्थं स्वीकृत्य 'आभ्याम्' इत्यत्राकारेऽङ्गे अकाराधिकरणवृत्त्यभावप्रतियोगितावच्छेदकधर्मवत्त्वाभावेन घटितत्वाभावाद् दीर्घार्थं "व्यपदेशिवदेकस्मिन्" इति प्रणीतवान् । तथाचैकस्मिन्नेकसम्बन्धविशिष्टे व्यपदेशिवत् सम्बन्धद्वयाविशिष्टवत्कार्यं कर्तव्यामिति फलितोऽर्थः । एतन्मूलकमेवानया घटितत्वघटकत्वे एवातिदिश्येते इति साम्प्रदायिकानां वाद इत्यन्यत्र विस्तरः।

(१)**तेन तुल्यमिति** । उपमानोपमेययोः समानविभक्तिकत्वनियमात्सप्तम्यन्ताद्वतिरुचितः । तथाच यथा व्यपदेशिनि सम्बन्धद्वयविशिष्टे कार्यं भवति तथैकसम्बन्धविशिष्टेऽपि कर्त्तव्यमित्यर्थ इत्युपपादितमेव पूर्वमिति दिक् । (२)**कारकं** प्रतीति। इतरपदार्थनिष्ठविशेष्यतानिरूपितप्रकारतानाश्रयरूपमुख्यपदार्थघटकेतरपदार्थे प्रत्ययेतरत्वेन सङ्कोचादिति भावः । (३)**न चेति** । क्विपः प्रत्ययलक्षणेन धातुशब्दोच्चारणेन विहितप्रत्ययाव्यवहितपूर्वत्वविशिष्टहस्य पदान्ते विद्यमानत्वेन तत्प्रवृत्तेः सुवचत्वाच्छङ्कासमाधाने अत्र निर्दले । ज्ञापकसाजात्याद्धातुत्वेतरधातुत्वव्याप्यधर्मावच्छिन्नोद्देश्यताककार्ये तस्याः प्रवृत्तिस्वीकारेण तस्या अत्राप्रवृत्तेश्चेति दिक् ।

**वा द्रुह** (पा०सू० ८।२।३३) । द्रुहेः प्राप्तेरन्येषामप्राप्तेरुभयत्र विभाषेयम् ।

**इग्यणः** (पा०सू० १।१।४५) । **यणः स्थाने इति** । नन्वेवम् 'अदुहिताम्' इत्यादौ लस्योत्तमैकवचने इटि तस्य सम्प्रसारणत्वाद् "हलः" (पा०सू० ६।४।२) इति दीर्घापत्तिः, न च यथा संख्यसम्बन्धाददोषः ऋलक्सूत्रे 'लकारोपदेशः किमर्थः' इत्यादि**भाष्य**विरोधात् ; इति चेत् ? न, विधिप्रदेशेषु 'यण इक्' इत्येव सिद्धे सञ्ज्ञाविधानसामर्थ्येन (१)तद्भावितपक्षाश्रयणान्न दोषः । 'वाक्यस्य सञ्ज्ञा' इति पक्षे **भाष्ये** "सम्प्रसारणस्य" (पा०सू० ६।३।१३९) इत्यादौ सम्प्रसारणजातस्य सम्प्रसारणग्रहणेन ग्रहणम्" इत्युक्ततया तदेकवाक्यतयाऽत्र पक्षे तद्भावितस्य संज्ञेति भाष्ये सूचितम् । (२)तेन 'द्युभ्याम्' इत्यादावपि न दीर्घप्राप्तिः । (३)अत एव अक्षद्यूश्चासावरुणश्च 'अक्षद्यरुणः' इत्या(४)दौ पूर्वरूपं न । समाना-

---

(१)**तद्भावितपक्षाश्रयणादिति** । तेन भावितस्तद्भावितः, प्रयोज्यत्वं तृतीयार्थः । न च यदा तेन संज्ञा तदा तद्भावितत्वं, यदा च तद्भावितत्वं तदा तेन संज्ञेत्यन्योन्याश्रय इति वाच्यम्, सम्प्रसारणपदप्रयोज्यत्वस्योपलक्षणत्वेनादोषात्, खण्डशः शक्तिस्वीकारेण विधेयस्थले सम्प्रसारणपदप्रयोज्यत्वस्य मोषेणादोषाच्चेत्युपपादितं "प्रत्ययस्य लुक्" (पा०सू० १।१।६१) इत्यत्रैवेति तत एवावधारणीयम् । (२)**तेन द्युभ्यामिति** । नन्वतद्भावितसंज्ञापक्षेऽपि 'निरुतं' 'दुरुतम्' इत्याद्यर्थं "हलः" (पा०सू० ६।४।२) इत्यस्य सम्प्रसारणप्रयोजकप्रत्ययनिमित्तकाङ्गसंज्ञावदवयवहलः परस्येत्यर्थाश्रयणेन 'अदुहिताम्' इत्यादौ न दोष इति चेत् ? न, निरुतमितिभाष्यप्रामाण्येन सम्प्रसारणघटिताङ्गघटकहलः परस्येत्यर्थस्वीकारेण तत्र दोषाभावेऽप्यत्र दोषस्य तादवस्थ्यात् । न च तपरकरणसामर्थ्यान्न दीर्घ इति वाच्यम्, दिव्शब्दप्रकृतिकक्यजन्तात् क्विपा निष्पन्ने द्यूशब्दे चारितार्थ्यात्, इति "भाव्यमानोऽप्युकारः" इत्यत्र परिभाषेन्दुटिप्पण्यां विस्तरेणोपपादितम् । ननु निरुतमित्यादिभाष्यप्रामाण्यात् पूर्वोक्त एवार्थ इति 'अदुहिताम्' इत्यत्र न दोष इति चेत् ? तत्राह—(३)**अत एवेति** । ननु 'समानाङ्गग्रहणं कर्तव्यम्' इत्यस्य प्रत्याख्यानं तु तद्भावितपक्षाभिप्रायेणैव, अतद्भावितपक्षे तु न तस्य प्रत्याख्यानमित्यत आह—(४)**आदाविति** । आदिना 'द्युपुत्रः' इत्यस्य सङ्ग्रहः । तत्र हि "सम्प्रसारणस्य" (पा०सू० ६।३।१३९) इति दीर्घापत्तिर्बोध्या । अज्विशिष्टस्य 'यणः सम्प्रसारणसंज्ञां विधाय "सम्प्रसारणाच्च" (पा०सू०

ङ्ग्रहणं तु **भाष्ये** प्रत्याख्यातम् । तथा च **भाष्यं**—"शकह्वर्थमित्यादौ पूर्वरूपाभावाय समानाङ्गग्रहणं कार्यम् । न कार्यम्; असम्प्रसारणत्वात् । अन्योऽयं सम्प्रसारणासम्प्रसारणयोः स्थाने एक आदिश्यते । यदि नेदं सम्प्रसारणम् । "हलः" (पा०सू० ६।४।२) इति दीर्घत्वं न प्राप्नोति । वचनप्रामाण्याद्भविष्यति" इति । "न सम्प्रसारणे" (पा०सू० ६।१।३७) इति निषेधोऽपि वचनप्रामाण्यात्पूर्वरूपोत्तरम् । न च यु उ अन् अस् इति स्थितेऽन्तरङ्गत्वाद्दीर्घे पूर्वरूपं न स्यादिति वाच्यम्, अन्तरङ्गपरिभाषाया अनित्यत्वेनेहाप्रवृत्तेः । न चैवं तत्र सवर्णदीर्घोत्तरं "न सम्प्रसारणे" (पा०सू० ६।१।३७) इति निषेधो न स्यादिति वाच्यम्, "अचः परस्मिन्" (पा०सू० १।१।५७) इति स्थानिवत्त्वादिति दिक् ।

**वाह ऊठ्** (पा०सू० ६।४।१३२) । "भस्य" (पा०सू० ६।४।१२९) इत्यधिकारः । "वसोः सम्प्रसारणम्" (पा०सू० ६।४।१३१) इत्यतः सम्प्रसारणमित्यनुवर्त्तते, तच्चोठो विशेषणम् । तेन "अलोऽन्त्यस्य" (पा०सू० १।१।५२) इति न । तदाह—**भस्येत्यादि** । ह्रस्व उठ् न

---

६।१।१०८) इति सूत्रं त्यक्तुं शक्यमिति चेत् ? न, विद्वांसमाचष्टे "विदावयति" इत्यत्र नित्यत्वात् टिलोपे अचोऽभावेन सम्प्रसारणानापत्तेः । इदानीं सम्प्रसारणे नित्यत्वस्य वक्तुमशक्यतया पूर्वं सम्प्रसारणे टिलोपे च 'विदयति' इत्येव रूपमित्यस्य वक्तुमशक्यत्वात् । 'विद्वयति' इति तु अङ्गवृत्तपरिभाषायाः सिद्धान्तसम्मतत्वाभावेनायुक्तमेव, 'विश्वौहः' इत्यादौ विनिगमनाविरहात् पूर्वाऽज्विशिष्टस्यापि सम्प्रसारणेऽनिष्टापत्तेश्चेति दिक् ।

परे त्वतद्भावितपक्षस्याश्रयणेऽपि न कश्चिद्दोषः । अथ 'द्युपुत्रः' इत्यत्र "सम्प्रसारणस्य" (पा०सू० ६।३।१३९) इति दीर्घापत्तिः, न च 'उत्' इतितपरकरणसामर्थ्येन न दीर्घ इति वाच्यम्, दिव्शब्दात्क्यचि ततः क्विपि सम्प्रसारणे "हलः" (पा०सू० ६।४।२) इति दीर्घे भ्यामि 'द्यू भ्याम्' इति स्थिते ह्रस्वार्थं तस्यावश्यकत्वात् इति चेत् ? न, उत्तरपदार्थस्य सम्प्रसारणपदार्थे विशेषणत्वेनोत्तरपदनिमित्तकसम्प्रसारणस्यैव तेन दीर्घविधानात् । अतद्भावितपक्षे 'समानाङ्गग्रहणं कर्तव्यम्' इति वार्तिकस्य सत्त्वान्न "श्वः" इत्यादौ पूर्वरूपमित्याहुः ।

नन्वेवं ह्रस्वे उठि न कश्चिद्दोष इति चेत् ? अनेकत्र क्लिष्टकल्पनायां लाघवाभाव एवेति गृहाणेति दिक् ।

कुतः वृद्ध्यनापत्तेः । वृद्धिविधावपि ह्रस्वग्रहणे 'जनौः' इत्याद्यसिद्धिः । "च्छ्वोः शूड्" (पा०सू० ६।४।१९) इत्यत्रापि ह्रस्वकरणे 'अक्षद्यूः' इत्याद्यसिद्धिः, अतद्भावितत्वेन तस्यासम्प्रसारणत्वाद् "हलः" (पा०सू० ६। ४।२) इति दीर्घाप्राप्तेः ।

**सम्प्रसा** (पा०सू० ६।१।१०८) । "अमि पूर्वः" (पा०सू० ६। १।१०७) इत्यतः पूर्व इति, "इको यण्" (पा०सू० ६।१।७७) इत्यतः अचीति, "एकः पूर्वपरयोः" (पा०सू० ६।१।८४) इति चानुवर्तते । तदाह— **सम्प्रसारणादचीत्यादि** । ऊठष्ठित्त्वम् 'एत्येधति' इत्यत्र विशेषणार्थम् ।

**छन्दस्येवेति** । छन्दसीत्यनुवर्त्तमाने "वहश्च" (पा०सू० ३।२। ६४) इत्यनेनेति भावः । **णिजन्ताद्विजिति** । अनेन लोके विश्ववा-ट्शब्दस्य साधुत्वमात्रमुच्यते, न त्वस्योठ् ; (१)णिलोपस्य स्थानिवत्त्वात् , (२)अङ्गभसंज्ञाक्षिप्तप्रत्ययेन वाहो विशेषणात् । विज्ग्रहणं क्विपोऽप्युपलक्ष-णम् । 'वच्यादिभ्यो विहिते किति' इति व्याख्यानस्य "अचः परस्मिन्" (पा०सू० १।१।५७) इत्यत्र काम्यच्सूत्रे च **भाष्ये** उक्तत्वेन ण्यन्तात्क्वौ सम्प्रसारणाप्राप्तेः, प्रतिपदोक्ततया क्विशब्दमुच्चार्य विहितविधेरेव "क्वौ विधिं प्रति न स्थानिवत्" इत्यत्र ग्रहणेन णिलोपस्य स्थानिवत्त्वाच्च । तेन काम्य-च्सूत्रोक्तविहितविशेषणपक्षतादितरपक्षयोर्न फलभेदः । वस्तुतो "विभाषा पूर्वाह्णापराह्णाभ्याम्" (पा०सू० ४।३।२४) इति "प्रष्ठौह आगतं प्रष्ठवा-हरूप्यम्" इति **भाष्ये** लौकिकविग्रहवाक्ये 'प्रष्ठौहः' इति प्रयोगाद-न्यत्रापि ण्विः । तदुक्तम्—**इति पक्षे इति** ।

**चतुरनडु** (पा०सू० ७।१।९८) । "इतोऽत्सर्वनामस्थाने" (पा०सू० ७।१।८६) इत्यतः सर्वनामस्थाने इति वर्त्तते ।

---

(१)**णिलोपस्य स्थानिवत्त्वादिति** । नन्वेवं 'वहेर्वाहेर्वा ण्विविचावनभिधा-नात्त एव' इतिपरिभाषेन्दुशेखरस्थग्रन्थविरोध इति चेत् ? न, तत्र वाहधातुप्रकृति-कयोस्तयोरनभिधानबोधनेनादोषात् । (२)**अङ्गभसंज्ञाक्षिप्तेति** । ननु "न लुमताऽ-ङ्गस्य" (पा०सू० १।१।६३) इत्यत्रत्योक्तादिशा प्रत्ययाक्षेपो न स्यादितीदमयुक्तमिति चेत् ? न, प्राचीनमतमवलम्ब्यैतद्ग्रन्थस्य सत्त्वात् भसंज्ञायां कर्तव्यायां स्थानिवत्त्वस्य जागरूकत्वेन ऊठोऽप्राप्त्या तदप्रवृत्तावेव तात्पर्याच्च ।

(१)**सावन** (पा०सू० ७।१।८२)। "आच्छीनद्योः" (पा०सू० ७।१।८०) इत्यतो नुमनुवर्त्तते, आदिति च। तदाह—**आदित्यधीति**। **विशेषविहितेनेति**। यासुटा सीयुडिवेत्यर्थः। **न बाद्ध्यते इति**। उपजीव्यत्वादिति भावः। **अमा चेति**। "अम्सबुद्धौ" (पा०सू०७।१।९९) इति विशेषविहितेनामेत्यर्थः, नुम उपजीवकत्वेन विरोधाभावात्, ततः प्राक् तस्याप्राप्तेश्चेति भावः। क्वचित्तु 'आमा च नुम्न बाध्यते' इति पाठः। तत्राय-मर्थः। 'बह्वनड्वांहि' इत्यादौ "नपुंसकस्य" (पा०सू० ७।१।७२) इति नुम् परत्वादामा बाद्ध्येत, पुनःप्रसङ्गविज्ञानात्तु न बाद्ध्यत इति। **दत्वं नेति**। 'अनड्वांस्तत्र इत्यत्र रुत्वं भवत्येव, तत्रोपदेशवैयर्थ्याभावात्। **संयोगा-न्तलोपस्येति**। हस्थानिकस्येत्यर्थः। एवञ्च नस्य प्रातिपदिकान्तत्वा-भाव इति भावः। **अनड्वानिति**। अनः शकटं वहतीत्यर्थे वहेः क्विन-नसि, अनसो डश्च, यजादित्वात्सम्प्रसारणम्।

ननु 'हे अनड्वन्' इत्यत्र सम्बुद्धिलोपेऽवश्यं प्राप्ते अम आरम्भाद-मोऽपवादत्वेन तद्विषये सम्बुद्धिलोपानापत्तिः। विषयभेदेऽप्यचिरादेशस्य नुडपवादत्वमाशङ्कितं सप्तमे भाष्ये; इति चेत्? न। प्रत्ययलोपाविधायकैः प्रत्ययानुत्पत्तेरेवान्वाख्यानेनापवादत्वस्यैवासम्भवात्। ध्वनितञ्चेदं प्रत्ययलक्ष-णसूत्रे **भाष्यकैयटयोः**। एवमेव 'अतृणेट्' 'अनड्वान्' इत्यादेस्तत्सू-त्रोदाहरणत्वमु(२)पपद्यते इति दिक्।

---

(१)**सावनडुहः (पा०सू० ७।१।९८)**। अथ "वसुस्रंसुध्वंस्वनडुहां दः" इति न्यासं कृत्वा उगित्त्वसामर्थ्यात् असिद्धत्वं बाधित्वा "उगिदचाम्" (पा०सू० ७।१।७०) इति नुमा सिद्धेः इदं सूत्रं न कार्यम्। नच 'अनडुदीतरा' इत्यत्र "उगि-तश्च" (पा०सू० ६।३।४५) इति समासाश्रयह्रस्वविकल्पापत्तिरिति वाच्यम्, तत्र 'ऐषुमतितरा' इत्यत्र ह्रस्वविकल्पवारणाय विहितविशेषणाश्रयणेन दोषाभावात्, इति चेत्? न, 'स्वनड्वान् स्त्री' इत्यत्र "उगितश्च" (पा०सू० ४।१।६) इति ङीवापत्तेः। न च पदत्वमुपजीव्य प्रवृत्तं दत्वं पदत्वविघातकङीपो निमित्तं न स्यादिति वाच्यम्, ङीपः साक्षात्पदत्वविघातकत्वाभावात्। परम्परया विघातकस्य विघातकशास्त्रीयोद्देश्य-तावच्छेदकसंज्ञाऽतिरिक्तशास्त्रस्य तु नानया व्यावृत्तिः। अत एव 'ऊखतुः' इत्यादौ अभ्याससंज्ञासवर्णदीर्घादीनां प्रवृत्तिर्भवत्येवेति दिक्। आन् इत्यसिद्ध्यापत्तेश्चेति कश्चित्।

(२)**उपपद्यते इति दिगिति**। दिगर्थस्तु इदमयुक्तम्। तथा सति 'सः' इत्य-

**सहेः सा** (पा०सू० ८।३।५६)। "अपदान्तस्य मूर्द्धन्यः" (पा० सू० ८।३।५५) इत्यधिक्रियते । **लोके त्विति** । एतेन "तुराषाण्मेघवाहनः" (अ०को० १।१।४७) इति व्याख्यातम् । "नहिवृति" (पा०सू० ६।३।११६) इत्यनेन क्विवन्तसहावेव दीर्घविधानादाह—**अन्येषामपीति** ।

**दिव औत्** (पा०सू० ७।१।८४)। ननु विधेयविषये उच्चारणार्थानामपीत्संज्ञोचिता; अन्यथा तान्तस्य विधानमित्यस्याप्यापत्तेः । ध्वनितञ्चेदमदृड्सूत्रे **भाष्ये** । तत्र हि डित्त्वाभावेऽदादेशे पूर्वसवर्णदीर्घमाशङ्क्यानुनासिकोपधत्वादिति समाहितं, (१)न तूच्चारणार्थत्वादिति । किञ्च द्वितीयव-

---

त्रापि प्रथमतो हल्ङ्याादिलोपे प्रत्ययलक्षणेन त्यदाद्यत्वेऽपि विसर्गश्रवणं न स्यात् । किञ्च प्रत्ययस्थानिककार्ये कर्तव्ये प्रत्ययलक्षणाभावेन 'भवतात्' इत्यत्र "अतो हेः" (पा०सू० ६।४।१०५) इत्यनेन लुकि 'भव' इत्येकस्यैव रूपस्यापत्तेः । तस्मात् स्वविषये नाप्राप्तप्रत्ययानुत्पत्तिरपि बाध्यते । ततश्च प्रकृतदोषस्तदवस्थ एव । तस्माद् हल्ङ्यादिलोपविषये तक्रन्यायस्यानित्यत्वमेवाश्रयणीयम् । तदनित्यत्वे प्रमाणं तु "इदमो मः" (पा०सू० ७।२।१०८) इति सूत्रमेवेत्यन्यत्र विस्तरः । यद्वा, सावपि पदं भवति इति सिद्धान्तादत्र 'भवेत्' इत्यत्रेव तल्लक्ष्यत्वाभावेन पुनः संयोगान्तलोपेनेष्टसिद्धिरिति विचारणीयं सुधीभिः ।

(१)न **तूच्चारणार्थत्वादिति** । ननु सम्बुद्धिलोपविषये सन्निपातपरिभाषाया अनित्यत्वादनुनासिकाकारपक्षे सम्बुद्धिलोपप्राप्त्या तस्यैकदेशयुक्तित्वमावश्यकम् । अत एव तत्पक्षे 'साधीयोऽत्र सम्बुद्धिलोपः प्राप्नोति' इति **भाष्ये** उक्तमिति चेत् ? न । 'ग्रामणि कुलम्' इत्याद्यर्थं सङ्कुचितसङ्कोचस्यावश्यकत्वेन "ह्रस्वस्य गुणः" (पा०सू० ७।३।१०८) "अम्बार्थनद्योर्ह्रस्वः" (पा०सू० ७।३।१०७) इत्येतद्वाक्यार्थे "एङ्ह्रस्वात्" (पा०सू० ६।१।६९) इत्येतदतिरिक्तत्वेन सङ्कोचेऽपि अत्र तदतिरिक्तत्वेन सङ्कोचे प्रमाणाभावात् । साधीये इति भाष्यमेकदेशिन इति उपपादितमजन्तनपुंसकान्ते इति तत एवावधार्यम् ।

परे तूच्चारणार्थानां विनैवेत्संज्ञां निवृत्तिस्वीकारे न बाधकम् । उच्चारणार्थमित्यस्योच्चारणमेवार्थः प्रयोजनं यस्येत्यर्थस्य स्वयमेवोक्तत्वेनात्राकारस्योच्चारणे पूर्वसवर्णदीर्घसम्पादनेन चारितार्थ्यादत्रोच्चारणार्थत्वासम्भवेन विना इत्संज्ञां तस्य निवृत्तेरसम्भवेनानुनासिकोपधः स स्वीकृत इति कोऽदृड्सूत्रस्थभाष्येण विरोधः ? "दिव औत्" (पा०सू० ७।१।८४) इत्यत्र तकारस्यापि सर्वादेशत्वसम्पादनेन चारितार्थ्यादुच्चारणार्थत्वासम्भवात् "नानुबन्ध" (प०भा० ६) इतिपरिभाषया फलाभावोपपादकं तद्भाष्य-

र्णोच्चारणे सहायसम्पादनेन चरितार्थेषु तत्र तत्र विशेषणार्थेष्विव हलन्त्यसूत्राप्रवृत्तौ मानाभावः। अत एव "तस्य लोपः" (पा०सू० १।३।९) इति सूत्रेऽनुबन्धानामेकान्तत्वपक्षे "दिव औत्" (पा०सू० ७।१।८४) इत्यादीनां सर्वादेशत्वापादनं **भाष्ये** कृतम्। "तित्स्वरितम्" (पा०सू० ६।१।१९५) इति सूत्रे च **भाष्ये**। 'तिति प्रत्ययग्रहणं कर्त्तव्यम्' इति वार्तिकस्य 'द्युभ्याम्' इत्यादौ तदभावः फलमित्युक्तम्। दित्त्वमाश्रित्य च प्रत्याख्यातं तदित्यन्यत्। किञ्चाऽऽदेशेषु सर्वत्र तकाराणामुच्चारणार्थत्वेनेत्संज्ञकत्वाभावात्तिति प्रत्ययग्रहणं व्यर्थमेव स्यात्। तथा विधेयविषय उच्चारणार्थानामप्यनुनासिकत्वेनेत्सञ्ज्ञा। अत एव "वेरपृक्तस्य" (पा०सू० ६।१।६७) इत्यत्राप्रृक्तग्रहणाभावे 'दर्विः' इत्यत्र लोपमाशङ्क्यानुनासिकपरस्य वेर्ग्रहणमिति **भाष्ये** उक्तम्। अत एव "इदितो नुम्" (पा०सू० ७।१।५८) इति सूत्रे **भाष्ये** धातोरित्यस्याभावे सिच इदित्त्वाद् 'अभं-

---

मिति कस्तेनापि सह विरोधः। एवं "तिति प्रत्ययग्रहणं कर्तव्यम्" इतिवार्तिकाभावे तकारस्य तित्त्वसम्पादनेन चारितार्थ्यादुच्चारणार्थत्वासम्भवाद्विनैवेत्संज्ञां निवृत्त्यभावे तित्त्वमुक्तमिति कस्तेनापि सह विरोधः? तकारस्योच्चारणार्थत्वसम्पादनेन वार्तिकस्य साफल्यान्न वार्तिकवैयर्थ्यमपि। 'दर्विः' इत्यत्र लोपवारणायानुनासिकत्वं स्वीकृत्यानुनासिकान्त्यस्येति व्याख्यानमिति न तेनापि सह विरोधः। सिच इदित्त्वस्य 'अभंस्त' इत्यत्र 'अनिदिताम्' इत्यस्य न विद्यते इद्यस्मिंस्तेषामित्यर्थेन नलोपाभावार्थमावश्यकत्वेनेदित्त्वान्नुमः शङ्कापि युक्तैव। "हनः सिच्" (पा०सू० १।२।१४) इत्येतज्ज्ञापकादनिदितां धातूनामेव ग्रहणेनामंस्त इत्यस्य सिद्धिं मनसि निधाय सजादेशकरणेन समाहितम्। न च तज्ज्ञापकेन तत्र लोपाभावे फलाभावेन तस्योच्चारणार्थत्वात् पुनः सिजेव कुतो नोक्त इति वाच्यम्, 'अभैत्सीत्' इत्यत्र नुमभावसम्पादनेन तस्य चारितार्थ्यात् तस्योच्चारणार्थत्वासम्भवात्; इति न तेनापि सह विरोधः।

यदपि 'अनुवादविषये' इत्यादि; तदपि न, सनः सशब्दे लक्षणा, उत शक्तिः? आद्ये तत्रापि न, विधौ परशब्दार्थत्वस्य बाधात्। अन्त्ये प्राचीनानामपि लक्षणां विनैव निर्वाहात्। यदपि "गमेरिट्" (पा०सू० ७।२।५८) इति दृष्टान्तेनोपधालोपवारणम्, तदपि रभसादेव दृष्टान्ते प्राचीनानामुच्चारणार्थेकारसत्त्वेन तन्मते तदप्रा- दोषाभावात्। नुम् तु नाशङ्कनीयः गम् इति पृथक्करणेन तस्य धात्ववयवत्वाभावे नुमप्राप्तेः। सुबुत्पत्तिस्तु क्षिय इत्यत्रेव प्रकृतिवदनुकरणं न भवतीत्यनेन सिद्धा। "अस्तेर्भूः" (पा०सू० २।४।५२) इत्यत्र निर्विसर्गपाठ इति प्रमाद एवेत्याहुः।

स्तीत्' इत्यादौ नुममाशङ्क्य सजादेशकरणेन समाहितं, न तु सिच इकारस्योच्चारणार्थत्वादित्त्वाभावेन। ल्युडादावुकारस्यानाकाभ्यामेव निवृत्तिरिति न तस्येत्संज्ञा, अनुनासिकत्वाभावात्। अत एव नन्द्यादिभ्यो ल्युप्रत्यये 'नन्दना' इति टाबन्तप्रयोगो "गाङ् लिटि" (पा०सू० २।४।४९) इति सूत्रे **भाष्ये**। 'ल्युः कर्त्तरि पुंसि' इति त्वमरस्य प्रमादः।

अनुवादविषये तु हलन्त्यसूत्र**भाष्यो**क्तरीत्या तेषां व्यवसितान्त्यत्वाभावेन फलाभावेन चेत्संज्ञाशास्त्राप्रवृत्तेरुच्चारणार्थवर्णसहितसमुदायस्य तद्रहिते लक्षणा। विधौ तु नोचिता सा, 'न विधौ परः शब्दार्थः' इति न्यायात्। "णौ गमिः" (पा०सू० २।४।४६) इत्यादीनां नुम् तु न, स्थानिवद्भावेन भाव्यातिदेशिकधातुत्वं गृहीत्वेकः सत्त्वात्। "गमेरिड्" (पा०सू० ७।२।५८) इतिवच्च नोपधालोपः। अत एव सुबुत्पत्तिः। अन्यथा "हनो वध लिङि" (पा०सू० २।४।४२) इतिवत् सा न स्यात्। "अस्तेर्भूः" (पा०सू० २।४।५२) इत्यत्रापि निर्विसर्ग एव पाठ इति **केचित्**। एवञ्चात्र "तित् स्वरितम्" (पा०सू० ६।१।१९५) इति स्वरितापत्तिरिति चेत्? न, दिव इकारस्योदात्तत्वेन स्रंसनधर्मिणो हलः स्थाने जायमानौकारस्यानुदात्तत्वेनेकारस्य यणि "उदात्तस्वरितयोर्यणः" (पा०सू० ८।२।४) इतिस्वरितासिद्ध्या फलाभावात् तिति प्रत्ययग्रहणं कर्त्तव्यमिति वार्तिकेन तदप्राप्तेश्च। अन्तोदात्तं द्यौरिति तु द्योशब्दस्य बोद्धव्यम्।

**अल्विधित्वेनेति**। 'अनल्विधौ इत्यत्र पञ्चमीसमासस्याप्याश्रयणादिति भावः। **पदान्त इति**। "एङः पदान्ताद्" (पा०सू० ६।१।१०९) इत्यनुवृत्तस्य विभक्तिविपरिणाम इति भावः। अयमुकारोऽन्तोदात्तो निपात्यते। तेन 'द्युभिरक्तुभिः' इत्यादौ पठ्यमानमन्तोदात्तत्वं सिद्धम्। अत्र यथा "हलः" (पा०सू० ६।४।२) इति दीर्घो न, (१)तथा उक्तम्। उतस्तपरत्वन्तु "भाव्यमानोऽप्युकारः सवर्णग्राहकः" (प०भा० २०) इत्यर्थ(२)ज्ञापनार्थमिति "तित्स्वरितम्" (पा०सू० ६।१।१९५) इति सूत्रे

---

(१)**तथा उक्तमिति**। तद्भावितपक्षाश्रयणादिति भावः। अतद्भावितपक्षेऽपि यथा न दोषस्तथोपपादितम्। (२)**ज्ञापनार्थमिति**। स्वांशे चरितार्थ्यञ्च दिवशब्दात्

**भाष्ये** उक्तम्। 'द्युभ्याम्' इत्यत्र ऊठ् न, क्ङितीत्य(१)नुवृत्तेः। **यत्तु** अस्मात्तपरत्वात् 'कुरुतः' इत्यादावुदिति तपरत्वाद् गुणाभावो यथा स्थानिवत्सूत्रे **भाष्ये** उक्तः, तथा प्रकृते दीर्घाभाव इति **कैयटः**, तद् एतेन (२)परास्तम्, दीर्घस्य वहिरङ्गतया तेन व्यावृत्तेरशक्यत्वाच्च। अत एव "ऋत इत्" (पा०सू० ७।१।१००) इति तपरत्वेन 'चिकीर्षति' इत्यादौ "हलि च" (पा०सू० ८।२।७७) इति दीर्घस्य न व्यावृत्तिः। अत एव 'द्यूचः' इत्यादौ "चौ" (६।३।१३८) इति दीर्घसिद्धिः।

**षट्चतु** (पा० सू० ७।१।५५)। रेफान्तस्य षट्संज्ञैव तु न कृता, 'चत्वारः' इत्यत्र लुगापत्तेः। तत्र 'रो न' इत्युक्तौ तु (३)पदलाघवाभावः। **केचित्तु** षडित्यादि षडाद्यर्थपरम्, अर्थात्परत्वञ्चामः शब्दद्वारकम्, स चार्थः प्रधान एवेति न गौणेऽतिप्रसङ्ग इति; तन्न, शब्दद्वारकमित्यस्य शब्दनिष्ठपरत्वाद्यवधित्वस्य परत्वस्य वा अर्थे आरोप इत्यर्थः। एवञ्च गौणत्वात्तत्र सम्बन्धे तन्निरूपितसम्बन्धे च न विभक्तिः। परम्परासम्बन्धेनान्वय इत्यपि न, प्रकृतिप्रत्ययार्थयोः साक्षात्सम्बन्धेन क्लृप्तस्यान्वयस्य भङ्गापत्तेः। अत एव 'गङ्गायां घोषः' इत्यादौ गौणाधारादावधिकरणत्वादिनिमित्ता विभक्तिः स्वरितत्वप्रतिज्ञादिना **भाष्ये** साधिता। अत एवेदृशस्थले षष्ठ्यपि न। अत एव "स्त्रियाः पुंवत्" (पा०सू० ६।३।३४) इति सूत्रे स्त्रिया इत्यर्थग्रहणमिति पक्षे **भाष्यकृतोक्तं** "भाषितपुंस्कानुपपत्तिश्च, न ह्यर्थेन पौर्वापर्यमस्ति" इति। दिक्शब्दयोगे इत्यस्य दिक्शब्दार्थान्वयभूतेऽवधित्वादौ सम्बन्धे पञ्चमीत्यर्थः। स च सम्बन्धो मुख्य एव साक्षात्सम्बन्ध एव च ग्रहीतुमुचित इति दिक्।

**णत्वं द्वित्वमिति।** ननु-"पूर्वत्रासिद्धीयमद्वित्वे" इति णत्वा-

---

क्यचि ततः क्विपि ऊठि बोध्यम्। (१)**अनुवृत्तेरिति**। अननुवृत्तौ तु क्विसाहचर्याद्धातुविहितप्रत्ययग्रहणेनादोषो बोध्यः। (२)**परास्तमिति**। उक्तोदाहरणे तस्य चारितार्थ्याद्वैयर्थ्याभावेन ज्ञापनासम्भवादिति भावः।

(३)**पदलाघवाभाव इति**। विहितविशेषणाभावेन 'अतिचतुर्णाम्' इत्यत्रामः षट्संज्ञकात्परत्वेन नुट्सिद्धिरिति भावः।

त्पूर्वमेव द्वित्वं युक्तम्, 'वाक् वाक्क्' इतिभाष्योदाहरणसिद्धये वर्णद्वित्वेऽपि तत्प्रवृत्तेरावश्यकत्वात् । अन्यथा चर्त्वस्यासिद्धत्वात् (१)गस्यैव द्वित्वेऽन्त्यस्य चर्त्वे पूर्वत्र गश्रवणापत्तिः । अवसाने चर्त्वस्यासिद्धत्वात् खर्परत्वाभावेन तस्य चर्त्वसम्भावनाऽपि न । (२)न च कस्य द्वित्वेऽपि अवसाने चर्त्वस्यासिद्धत्वाद्ककारे झशि परे पूर्वस्य जश्त्वे उक्तरीत्यैव चर्त्वाभावे गश्रवणं दुर्वारमिति वाच्यम्, "न मु ने" (पा०सू० ८।२।३)इतिवत् "पूर्वत्रासिद्धीयम्" इत्यस्य द्वित्वे कृतेऽपि प्रत्यासत्त्या द्वित्वाश्रयस्य कार्ये कर्त-

---

(१)**गस्यैव द्वित्वे इति** । ननु आवसानिकचर्त्वस्य पदान्तजश्त्वापवादत्वात्कस्य द्वित्वे इति वक्तुं युक्तमिति चेत्? न, माठरपरिवेषणन्यायेन झल्पदार्थे चरतिरिक्तत्वेन सङ्कोचाज्जश्त्वात्पूर्वं तदप्राप्तेः । उपपादितं चेदं "बाधित्वेति शेषः" इत्यत्र टिप्पण्याम् । (२)**न च कस्य द्वित्वेऽपीति** । न च "पूर्वत्रासिद्धीयमद्वित्वे" इत्यनेन चस्य द्वित्वे इति वक्तुं युक्तमिति वाच्यम्, तेन हि असिद्धत्वाभावे बोधितेऽन्तरङ्गपरिभाषाप्रवृत्तौ बाधकाभावेनान्तरङ्गत्वाद् द्वित्वात्पूर्वं कुत्वे कस्येत्येवमेव वक्तुं युक्तत्वात् । अथ वर्णग्रहणेऽपि तत्प्रवृत्तौ 'स्रग्' इति भाष्यप्रयोगे द्वित्वानापत्तिः । द्वित्वदृष्ट्या "अ अ" (पा०सू० ८।४।६८) इत्यस्य सिद्धत्वेन संवृतस्य प्रयत्नभेदेन सावर्ण्याभावादच्त्वाभावेनाचः परत्वाभावात् । एवं 'मध्वरिः' इत्यत्र ।

किञ्च द्वित्वाश्रयस्य नासिद्धत्वमित्यर्थस्वीकारे 'वाक्क्' इत्यत्र "स्कोः संयोगाद्योः" (पा०सू० ८।२।२९) इत्येतद्दृष्ट्या कुत्वस्य सिद्धत्वेन संयोगादिलोपापत्तिः । मम तु वागितिभाष्यप्रयोगादवसाने चर्त्वस्य "खरि च" (पा०सू० ८।४।५५) इत्येतद्दृष्ट्याऽसिद्धत्वाभावबोधनेन 'द्वित्वाश्रयस्य कार्ये कर्तव्ये' इत्यादिः प्रत्यासत्त्या अर्थो न कल्पनीय इति न कश्चिद्विरोधो, नापि दोष इति चेत्? न । "पूर्वत्रासिद्धीयमद्वित्वे" इत्यनेन द्वित्वदृष्ट्याऽसिद्धत्वाभावबोधनेऽपि "आदिरन्त्येन" (पा०सू० १।१।७१) इत्येतद्दृष्ट्या तस्यासिद्धत्वेन संवृतस्यापि विवृतत्वबुद्ध्या तेनाच्त्वबोधनेन 'स्रग्' इत्यादिभाष्यविरोधाभावात्, 'वाक्क्' इत्यत्र संयोगसंज्ञादृष्ट्या द्वित्वस्यासिद्धत्वेन संयोगसंज्ञाया अभावेन लोपाप्राप्तेश्च ।

किञ्च वर्णग्रहणेऽप्रवृत्तिं वदता भवताऽपि द्वित्वाश्रयस्येत्यवश्यमुररीकर्तव्यम् । अन्यथोढिमाख्यदौडिढदित्यत्र ढत्वादीनामसिद्धत्वात् "कुहोश्चुः" (पा०सू० ७।४।६२) इत्यनेन चुत्वापत्तेः । वर्णग्रहणेऽप्रवृत्तिं स्वीकुर्वता भवतापि "खरि च" (पा०सू० ८।४।५५) इत्येतद्दृष्ट्याऽवसाने चर्त्वस्य नासिद्धत्वमिति न वक्तुं शक्यते' अद्धातोः क्विपि पश्चाद् दाशब्देन समासे ततो णिचि टिलोपे ततः क्विपि चर्त्वे 'अद्त्' इत्यत्र "खरि च" (पा०सू० ८।४।५५) इति चर्त्वस्यासिद्धत्वमित्यलं पल्लवितेनेति दिक् ।

व्येऽसिद्धत्वं नेत्यर्थ इति न दोषः। एतेन 'द्वित्वे परसवर्णत्वं सिद्धं वक्तव्यं संय्यन्तेत्यत्र त्रियकारकत्वार्थम्' इतिवचनसामर्थ्येन वर्णद्वित्वे तदप्रवृत्तिरित्यपास्तम्। एतदवयुत्यानुवादरूपत्वात्;—इति चेत्? न, पूर्वत्रासिद्धीयमित्यस्य द्वित्वे कर्त्तव्येऽन्यदसिद्धं नेत्येवार्थो न तु द्वित्वस्याप्यसिद्धत्वं नेति तदर्थ इति णत्वोत्तरमेव द्वित्वमिति भावः।

(१)**रोः सुपि** (पा०सू० ८।३।१६)। अत्र खरीत्यनुवर्त्तते। तेन सप्तमीबहुवचनमेवात्र सुप्। एवञ्च "खरवसानयोः" (पा०सू० ८।३।१५) इति सिद्धे इतरनिवृत्तिफलक एवैष विधिरित्याह—**रोरेवेति**। विपरीतानियमस्तु न, "हलोऽनन्तराः संयोगः" (पा०सू० १।१।७) इति निर्देशात्। **द्वित्वे इति**। "अचो रहाभ्याम्" (पा०सू० ८।४।४६) इत्यनेन।

"अचो रहा" (पा०सू० ८।४।४६) इत्यतो द्वे इति, "नादिनी" (पा०सू० ८।४।४८) इत्यतो नेति च वर्त्तते। तदाह—**न द्वे स्त इति**। "झरो झरि" (पा०सू० ८।४।६५) इति लोपस्तु वैकल्पिकः।

**प्रियचत्वार इति**। आङ्गत्वात्तदन्तस्यापि "चतुरनडुहोः" (पा०सू० ७।१।९८) इति आम्। **गौणत्वे त्विति**। (२)अत्र यद्वक्तव्यं तत् "नामि" (पा०सू० ६।४।१) इत्यत्रोक्तम्। **यत्तु**—"ष्णान्ता" (पा०सू० १।१।२४) इत्यत्र संख्यापदानुवृत्तेः, तस्य च संख्याबोधकशब्दपरत्वात्प्रधानन्यायेन संख्यारूपार्थस्यानुपसर्जनस्यैव ग्रहणेनोपसर्जने षट्त्वमेव न। संख्यापदेन च संख्येयमुच्यते। अतः संख्येयपरपञ्चादौ तस्य प्राधान्यात् संज्ञा सिद्धा। यद्वा, षडित्यन्वर्था संज्ञेति न गौणे सा,—इति; तन्न, 'प्रियपञ्चा द्रौपदी' इत्यत्र "न षड्" (पा०सू० ४।१।१०) इति (३)डाब्निषेधानापत्तेः, आकडारसूत्रे **भाष्ये**ऽस्या ड्डुसञ्ज्ञया व्यवहाराच्च,

---

(१)**रोः सुपि (पा०सू० ८।३।१६)**। 'रोः सौ' इति वक्तुं युक्तम्। निरनुनासिकोकारान्तत्वेन न प्रथमैकवचनस्य, प्रत्ययाप्रत्ययग्रहणपरिभाषया च न सुशब्दस्य ग्रहणमिति विभावनीयम्।

(२)**अत्र यद्वक्तव्यमिति**। अस्माभिरपि तत्रैवोपपादितम्। (३)**डाब्निषेधानापत्तेरिति**। स्त्रियां यत्प्राप्नोति तन्नेतिव्याख्यानसामर्थ्येन डाब्निषेधे सिद्धे चिन्त्यमेतत्। वस्तुतः षडिव ब्राह्मणः षट् इत्यत्र षष उपसर्जनत्वेन षड्वेत्यन्वर्थ-

सर्वनामसञ्ज्ञावदत्रोपसर्जनप्रतिषेधानारम्भाच्च' सर्वनामसञ्ज्ञासूत्रस्थेन "षड्भ्यः" (पा०सू० ७।१।२२) इति सूत्रविषये **भाष्येण** विरोधापत्तेश्चेत्यलम्।

**कमलिति ।** 'तदाचष्टे' इति णिचीष्टवद्भावाट्टिलोपे कर्तरि क्विपि "णेरनिटि" (पा०सू० ६।४।५१) इति णिलोपः। वस्तुतो लण्सूत्रे "न हि पदान्ताः परेऽणः सन्ति । ननु चायमस्ति कर्तृ हर्तृ" इति **भाष्यात्** "भोभगो" (पा०सू० ८।३।१७) इति सूत्रे 'वृक्षव् करोति' इति **"भाष्यस्यैकदेश्युक्तित्वात्** कमल् वृक्षव् इत्यादेर(१)नभिधानमेवोचितम्। यान्तास्तु नैव सन्ति, क्विपि "लोपो व्योः" (पा०सू० ६।१।७६) इति यलोपात्। णिलोपस्य स्थानिवत्त्वं तु न, यलोपे तन्निषेधात्।

**प्रशानिति ।** शाम्यतेः क्विप्। "अनुनासिकस्य" (पा०सू० ६।४।१५) इति दीर्घः। अयं शान्तिसाम्यान्यतरवद्वाचकः सत्त्ववाचीति स्वरादिपाठेऽप्यस्य नाव्ययत्वम्। साम्यवाचिन्यसत्त्वार्थके तु स पाठः सार्थक इति दिक्।

**विभक्ताविति ।** "अष्टन आ" (पा०सू० ७।२।८४) इत्यतोऽनुवृत्तेरिति भावः। **अकच्सहितस्यापीति ।** तन्मध्यपतितन्यायेन तस्यापि किंशब्दत्वात्। अङ्गानपेक्षत्वेनान्तरङ्गत्वादादेशात्पूर्वमकच्। (२)यद्यपि निर्दिश्यमानपरिभाषया न प्राप्नोति । अत एव "भिन्धकि इत्यत्रा-

---

संज्ञयाऽपि गौणे तत्प्रवृत्तेर्दुर्निवारणत्वादिति वक्तुं युक्तम्। (१)**अनभिधानमेवेति ।** वस्तुतोऽनभिधाने दृढतरप्रमाणाभावेनास्याभिधानमेवोचितमित्युपपादितमन्यत्र।

(२)**यद्यपि निर्दिश्यमानपरिभाषयेति ।** ननु ककिंशब्देऽकचः किंशब्दनिष्ठोद्देश्यतानिरूपितविधेयताश्रयत्वेन तन्मध्यपतितन्यायेन निर्दिश्यमानत्वादादेशः प्राप्नोत्येव। 'भिन्धकि' इत्यत्र तु अकचः तिङन्तनिष्ठोद्देश्यतानिरूपितविधेयताश्रयत्वेन तिङन्तवृत्तिह्यन्तत्वादेरारोपेऽपि हित्वस्यारोपे प्रमाणाभावेन हेरभावेन 'अकचि कृते धित्वं न प्राप्नोति' इति भाष्योक्तमपि सङ्गच्छते। निर्दिश्यमानपरिभाषयेति तु **भाष्ये** नोक्तम्, इति चेत्? परमकिंशब्दात्कुत्साविवक्षायामकचि परमककिंशब्दे निरुक्तदिशा किंशब्दान्तत्वेऽपि निर्दिश्यमानकिंशब्दस्याभावेनादेशानापत्तिरित्याशयेनैतद्ग्रन्थस्य सत्त्वात्। निर्दिश्यमानपरिभाषयाऽऽदेशो न प्राप्नोतीत्यस्य तादृशपरमककिंशब्दे आदेशो न प्राप्नोतीत्यर्थ इति दिक्।

कचि धित्वं न प्राप्नोति" इति **भाष्ये** पूर्वपक्षं कृत्वा "अन्तरङ्गत्वाद्धिले-
कच्' इत्यादुयुक्तम् , तथापि आवृत्त्याश्रयणेन साकच्कस्यादेश इति **कैयटः**।

**इदमो मः** (पा०सू० ७।२।१०८)। "तदोः सः सौ" (पा०सू०
७।२।१०६) इत्यतोऽनुवृत्तेराह—**साविति**।

**इदोऽय्** (पा०सू० ७।२।१११)। "यः सौ" (पा०सू० ७।२।
११०) इत्यतः साविति वर्त्तते।

**दश्च** (पा०सू० ७।२।१०९)। इह "अष्टन" (पा०सू० ७।२।८४)
इत्यतो विभक्ताविल्यनुवर्त्तते, साविदमो दस्यासम्भवात् ; तदाह—**विभ-
क्ताविति**।

**हलादाविति**। आपीति वर्त्तते। 'हल्यश्' इति वक्तुं युक्तम्।
(१)अक इति पर्युदासादिदं गौणे न प्रवर्त्तते इत्याहुः। नन्विदोऽन्त्यस्य
लोपः स्यादत आह—**नानर्थके इति**। इयमुपधासंज्ञासूत्रे **भाष्ये**
स्पष्टा, फलानामन्यथोपपादनेन **भाष्ये** प्रत्याख्याता च। प्रत्याख्याने
"अनापि" (पा०सू० ७।२।११२) इत्यतोऽन् इत्यनुवर्त्त्य हलीति सप्तम्या
षष्ठीं प्रकल्प्यान एव "अलोऽन्त्यस्य" (पा०सू० १।१।५२) इति लोपे
पररूपे चेष्टसिद्धिर्बोद्ध्या।

---

**(१)अक इति पर्युदासादिति**। न च 'अक' इति बहुव्रीहिर्न तत्पुरुषः।
तथाच पर्युदासादित्यसङ्गतमिति चेदत्र कश्चित्—पर्युदासादित्यस्य निषेधकत्वात् 'संसर्ग-
वद्विप्रयोगस्य' इति न्यायेन 'अवत्सा इतिवत्तस्यैव ग्रहणमित्याशयात्।

**परे** तु अर्शआद्यजन्तकशब्देन नञ्तत्पुरुषे पर्युदासादित्यपि सुसङ्गतमित्याहुः।
अक इति पर्युदासादित्यादि तु सिद्धान्तेऽपि, न त्वश्करणे एव। एतेनाश्लोपयोः कः
फलभेदो, येनाक इत्याद्युक्तमित्यपास्तम्। अथाश्करणे उदात्तानुदात्तयोः स्थाने जाय-
मानोऽश् स्वरित एव स्यादिति फलभेद इति चेत्? अत्र **कश्चित्**—स्थान्यतुल्ये
स्वरिते एवोच्चारणीये उदात्तोच्चारणं विवक्षार्थम्, तेन न स इत्याह। तन्न, इदंश-
ब्देन नञ्तत्पुरुषे तस्माद् भ्यामि 'अनाभ्याम्' इत्यत्र स्वरितश्रवणापत्तेः। सिद्धान्ते
तु "तत्पुरुषे" (पा०सू० ६।२।२) इत्यनेन पूर्वपदप्रकृतिस्वरत्वाच्छिष्यमाणाकारस्या-
नुदात्तत्वमिति।

**परे** त्विद इत्यनुवर्त्य तत्स्थानेऽश्विधानेन न दोष इत्याहुः। न च "हलि लोपः"
(पा०सू० ७।२।११३) इत्यत्र 'झलि लोपः' इत्येव सूत्रं कर्त्तव्यमिति वाच्यम्, वेदे
आपः स्थाने यादेशे तत्र लोपानापत्तेरित्यलम्।

ननु दीर्घापेक्षया लोपस्य नित्यत्वात्पूर्वं लोपे अ भ्यामिति स्थितेऽङ्गस्याऽकाररूपत्वेनादन्तत्वाभावाद्दीर्घो न स्यादित्यत आह--**आद्यन्तवदिति**। "आदिरन्त्येन" (पा०सू० १।१।७१) इतिसूत्रोक्तरीत्याऽऽद्यन्तशब्दयोर्विशिष्टशक्ततया तत्प्रयुक्तकार्याण्यसहाये न स्युरित्ययमारम्भः। **एकस्मिन्निति**। (१)असहाये इत्यर्थः। तदादितदन्तयोः क्रियमाणं कार्यं तदादौ तदन्त इवासहायेऽपि स्यादित्यन्वयः। उपमेये सप्तमीदर्शनात्सप्तम्यन्तादिवार्थे वतिस्तदाह—**आदाविवेति**। एकस्मिन्नित्युक्तेर्दरिद्रातेरिवर्णान्तलक्षणोऽज्न। आदिवत्त्वफलमौपगवेऽण आद्युदात्तत्वम्। कार्यस्य प्राधान्यादयमपि कार्यातिदेश एव। तदाह—**कार्यमिति**।

ननु इद ए इति स्थिते स्मैभावात्परत्वादनादेशे 'सकृद्गतौ' इति न्यायेन स्मै न स्यादत आह—(२)**नित्यत्वादिति**। स्मै आदेशे तु न अनादेशो हलिलोपेन बाधात्, लक्ष्यानुरोधेन बाधकाबाधितकृताकृतप्रसङ्गस्यैवात्र ग्रहणात्।

अकोऽकोरित्यनयोः फलमाह—**ककारयोगे त्विति**। "अव्ययसर्वनाम्नाम्" (पा०सू० ५।३।७१) इत्यकचीति भावः। अस्यानवयवत्वेऽपि तन्मध्यपतितन्यायात्तद्विशिष्टे प्राप्तिरिति बोद्धव्यम्।

**इदमोऽन्वा** (पा०सू० २।४।३२)। अनुदात्तत्वम् 'आभ्याम्' इत्यादौ "ऊडिदम्" (पा०सू० ६।१।१७१) इति "सावेकाचः" (पा० सू० ६।१।१६८) इति वा विभक्त्युदात्तत्वाभावाय, उभयत्राप्यनुवृत्त्यपकर्षाभ्यामन्तोदात्तादित्यस्य सम्बन्धात्। एवञ्च 'आभ्याम्' इत्यादि सर्वानुदात्तम् "ऐभिरग्ने प्रेणा तदेषाम्" इत्यादौ तथा श्रवणात्। नन्वेवमप्यत्वे हलिलोपेनाऽऽभ्यामित्यादेः सिद्धावनुदात्तत्वेनैव सिद्धावश्विधानं व्यर्थमत आह—**साकच्कार्थमिति**। शित्त्वात्सर्वादेश इति भावः।

---

(१)**असहाये इति**। असहायत्वपरिष्कारस्तु मनोरमाटिप्पण्यां द्रष्टव्यः। (२)**नित्यत्वादितीति**। **परे** तु—उपसञ्जनिष्यमाणन्यायेनात्रानादेशस्य प्राप्तिरेव नेति नित्यलक्षणे बाधकाबाधितत्वनिवेशो मन्दप्रयोजन इत्याहुः।

नतु संज्ञोपसर्जनयोस्त्यदाद्यत्वाप्राप्त्या तत्र विधानार्थमश्विधानं चरितार्थमित्यत

(१)संज्ञोपसर्जनयोस्तु नेदम्, "एतदस्त्रतसोः" (पा०सू०२।४।२३) इत्युत्तरसूत्र(२)साहचर्यात्। न च त्यदाद्यत्वेन सिद्धेऽकारविधानमेव साकारे सर्वादेशार्थं भविष्यति, किं शित्त्वेनेति वाच्यम्, (३)अन्यार्थतापत्तेः।

**द्वितीयाटौ** (पा०सू० २।४।३४)। पूर्वसूत्रादिदम् इति, "एतदस्त्रतसोः" (पा०सू० २।४।२३) इत्यत एतद् इति चानुवर्त्तते, अनुदात्त इति च। **विधातुमिति**। विधानमत्राज्ञातज्ञापनमेव, न तु प्रवर्त्तनाविषयत्वम्। तच्चेदमेवेति नाग्रहः। स्पष्टञ्चेदं (४)**भाष्ये**।

**सुगण्ट्स्विति**। "ङ्णोः" (पा०सू० ८।३।२८) इति ट्रुक्। तस्यासिद्धत्वान्न जश्त्वम्। **नलोप इति**। नकारलोप इत्यर्थः। न चात्र प्रत्ययान्तत्वाद् 'अप्रत्यय' इति निषेधेन प्रातिपदिकत्वाभावात्कथं नलोप इति वाच्यम्, पर्युदासे यथोद्देशेन सिद्धेः। न च कार्यकालपक्षे दोषः, व्यवस्थितपक्षद्वयमध्ये एकतरपक्षेण लक्ष्यासिद्ध्या पक्षान्तरेण दोषदानस्य क्वाप्यदृष्टत्वात्। ध्वनितञ्चेदं प्रगृह्यसंज्ञाप्रकरणे **भाष्ये**। न च–प्रसज्यप्रतिषेधे दोषः, तत्पक्षे लोपेनेव जातनिवृत्तेरपि तेन वक्तुं शक्यत्वाद्; इति वाच्यम्, "न ङिसम्बुद्ध्योः" (पा०सू० ८।२।८) इति निषेधेन प्रत्ययलक्षणेन प्रत्ययान्तत्वमादाय निषेधाप्रवृत्त्या दोषाभावात्। स्पष्टञ्चेदमर्थवत्सूत्रे **भाष्ये**।

**न ङि** (पा०सू० ८।२।८)। **ङौ तु छन्दसीति**। 'राजनि'

---

आह–(१)**संज्ञोपसर्जनयोरिति**। (२)**साहचर्यादिति**। ननूत्तरसूत्रसाहचर्यस्याप्रयोजकत्वं स्वयमेव शब्दरत्ने उक्तमिति अत्र कथं तेन निर्वाह इति चेत्? न, साहचर्यादित्यस्यार्थाधिकारानुरोधादित्यर्थस्वीकारेणादोषात्।

(३)**अन्यार्थतापत्तेरिति**। तद्विधानसामर्थ्याद् "अतो गुणे" (पा०सू० ६।१।९७) इत्यस्यैव "सुपि च" (पा०सू० ७।३।१०२) इति दीर्घस्यैव वा बाधापत्तेः। न च साक्षाद्विधिबाधकल्पनापेक्षया लाघवादलोऽन्त्यपरिभाषाबाध एवोचित इति वाच्यम्, विनिगमनाविरहात्कदाचित् "तस्मिन्" (पा०सू० १।१।६६) इत्यस्या परिभाषाया अपि बाधापत्तेः।

(४)**भाष्ये इति**। "अन्वादेशश्च कथितानुकथनमात्रं, न तु इदमा कथितमिदमवै यद्यनुकथ्यते" इति ग्रन्थेन।

इत्यादौ मत्वान्नलोपाप्राप्तेः । राजनीवाचरतीत्यर्थे "अधिकरणाच्च" इति क्यच् तु लोके नास्त्येव, अनभिधानात् । अत एव 'परमे व्योमन्' इत्यादावयस्मयादित्वाद्भत्वेन सूत्रस्थङिग्रहणप्रत्याख्यानं **भाष्योक्तं** सङ्गच्छते इति भावः । **सामर्थ्यादिति ।** "न लुमता" (पा०सू० १।१।६३) इतिनिषेधानित्यत्वप्रतिपादनद्वारेत्यर्थः । एतदानित्यत्वबललब्धमेव 'वा नपुंसकानाम्' इति बोद्धव्यम् । न च 'परमेव्योमन्' इत्यत्र घोषत्वाल्पप्राणत्वादिसादृश्येन पूर्वसवर्णे दकारे "स्वादिषु" (पा०सू० १।४।१७) इति पूर्वस्य पदत्वात्प्राप्तनलोपनिषेधेनेदं चरितार्थमिति वाच्यम्, 'अन्तरङ्गानपि' इति न्यायेन संयोगान्तलोपस्यासिद्धत्वेन च पूर्वसवर्णेऽपि लुक एव प्राप्त्या प्रक्रियालाघवाय लुक एवौचित्यमित्याशयात् । स्पष्टञ्चेदं **भाष्ये । ङ्युत्तरपदे इति ।** एतद्बललब्धमेव "ङौ तु छन्दस्युदाहरणम्" इत्युक्तम् ।

**न चेति ।** पञ्चमीसमासेन प्राप्तिः । **षाष्ठीमिति ।** "वाह ऊठ्" (पा०सू० ६।४।१३२) इत्यत्र ज्ञापितत्वेन तद्देशस्थत्वादिति भावः । कार्यकालपक्षेऽपि त्रिपाद्यां तदप्रवृत्तिः प्रागुक्ता । **जञोर्ज्ञ इति ।** जञयोगे लोकवेदसिद्धतादृशध्वनेर्लिपिविशेषस्य चानुवादकमभियुक्तवचनं, (१) न त्विदं वर्णान्तरम् । शिक्षादावपरिगणितत्वेन तत्सत्त्वे मानाभावात् । अत एव 'तज्ज्ञानम्' इत्यादौ श्चुत्वसिद्धिः ।

**सुब्विधाविति ।** सर्वविभक्त्यन्तावयवकः समास इति **भाष्ये** स्पष्टम् । विधिशब्दो भावसाधनः, कर्मसाधनश्च । तत्र स्वरादिविषये भावसाधनः । सुब्विषये कर्मसाधनः । कृतीत्येतत्सामर्थ्यात्तुक एव विशेषणमित्याह–**कृति तुगिति ।** "पूर्वत्रासिद्धम्" इत्येव सिद्धेऽन्यत्र निवृत्तिफ-

---

(१) **न त्विदं वर्णान्तरमिति ।** अत एव 'जिज्ञासा' इत्यादौ अभ्यासे जश्रवणं सिध्यति । 'ज्ञ' इत्येवमुच्चारणे बीजं तु यमानामादेशत्वपक्षे तेषां कुँखुँगुँघुँ इत्येवंरूपत्वकथनम् । जकारस्य स्थाने गुँरूपयमादेशे हि गकारश्रवणं तदुच्चारणं च सिध्यति । एतद्विधानं हि उच्चारणार्थमेव न तु कार्यार्थमिति 'जिज्ञासा' इत्यादिप्रयोगाणां च सिद्धिः । यमानामनभिव्यक्तरूपत्वपक्षमवलम्ब्य तु महाराष्ट्राणां विलक्षणोच्चारणं तत्रेति दिक् ।

लकोऽयम् । तदाह—**नान्यत्रेति** । अन्यनिवृत्तिफलकासिद्धविषयकाविधित्व-मेव नियमत्वम् । अत एव पस्पशायां **भाष्ये** 'पञ्च पञ्च नखा भक्ष्याः' इत्यत्र "भक्ष्यनियमेऽ(१)भक्ष्यप्रतिषेधो गम्यते" इत्युक्तम् । तदाह—इत्य-

---

**(१)अभक्ष्यप्रतिषेधो गम्यते इति ।** गमेर्ज्ञानसामान्यार्थकस्योपादानेन प्रति-षेधस्यार्थिकत्वं लभ्यते । अन्यथा अभक्ष्यप्रतिषेध उच्यते इति वक्तव्यं स्यात् इति भावः । "इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते" इत्यत्र लिङ्गस्य विलम्बि-तप्रवृत्तिकत्वात् प्रथमप्रवृत्तश्रुत्या अश्वरशनाऽऽदानेऽप्राप्तमन्त्रविनियोगे बोधिते विनि-योगाकाङ्क्षाया अभावेन लिङ्गस्याप्रवृत्तेर्गर्दभरशनाऽऽदाने मन्त्रविनियोगो नैव प्राप्नो-तीति अन्यनिवृत्तिरार्थिक्येव । एवं 'पञ्च पञ्च नखा भक्ष्याः' इत्यत्र शशकशल्लकगोधा-खड्गिकूर्मरूपपञ्चनखभक्षणस्य तदितरवानरादिपञ्चनखभक्षणस्य च रागतो नित्यप्र-प्तत्वेन अपूर्वविधिद्वारकान्यनिवृत्तिफलकस्य परिसंख्याविधेः 'इमामगृभ्णन्' इत्यत्रा-श्रितस्यासम्भवेऽपि सामर्थ्यात् अन्यनिवृत्तिफलको नियमद्वारकः परिसङ्ख्याविधिः पञ्चपदस्य अवधारणविषयबुद्धिस्थशशकादिवृत्तिपञ्चत्वसङ्ख्याविशिष्टे लक्षणयाऽऽश्रय-णीयः । अवधारणविषयबुद्धिस्थशशकादिवृत्तिपञ्चत्वसङ्ख्यावन्तः प्रेरणाविषयभूतभक्ष-णविषया इति बोधः। अवधारणं च स्वविषयसङ्ख्याऽतिरिक्तसङ्ख्याऽधिकरणसम्बन्धि-समभिव्याहृतपदार्थप्रकारकज्ञानरूपम् । ततश्च बुद्धिस्थशशकादिवृत्तिपञ्चत्वसङ्ख्यातिरि-क्तसङ्ख्याऽधिकरणवानराद्यवृत्तिभक्ष्यत्वरूपसमभिव्याहृतपदार्थप्रकारकं 'वानराद्यवृत्ति-भक्ष्यत्ववन्तः' इति ज्ञानम्, तद्विषयसङ्ख्याविशिष्टाः शशकादयः भक्ष्या इति बोधस्य वानरादावभक्ष्यत्वं विनाऽनुपपत्त्या रागतः सामान्यतः प्राप्तस्य भक्षणस्य शशकाद्य-तिरिक्तवानरादिपञ्चनखविषयत्वनिवृत्तिः कल्प्यते । न चैतावता शब्दत्वं शङ्क्यम्। वस्तुतो वानराद्यसंसृष्टस्य समभिव्याहृतपदार्थस्य मानसज्ञानविशेषणतया भानेऽपि शब्देन वानरादौ भक्ष्यत्वाभावस्याप्रतिपादनात् । न च विधिना शब्देन शशकादौ भक्ष्यत्वप्रतिपादने तस्यावश्यानुष्ठेयत्वापत्तिः, अश्वरशनाऽऽदाने मन्त्रोच्चारणस्ये-वेति वाच्यम्, नियमद्वारकपरिसङ्ख्यायां तथाऽनङ्गीकारात् । यद्वा, प्रापकप्रमाणस्य यत्र नियतत्वं तत्रावश्यानुष्ठेयत्वं, यत्र तु तस्यानियतत्वं तत्र नावश्यकत्वम् । अव-घाते प्रापकं प्रमाणं पुरोडाशादिविधिरूपं, मन्त्रविनियोगे लिङ्गरूपं श्रुतिरूपं वा निय-तमेवेति तदनुष्ठानमावश्यकम् । शशकादिभक्षणप्रापकं रागरूपं तु अनियतं, दोषदर्श-नादिना रागस्य निवृत्तेः । 'पञ्च पञ्च नखा भक्ष्याः' इति शास्त्रं तु रागस्य नियमेन प्रवृत्तिप्रयोजकत्वात् शीघ्रप्रवृत्तिकत्वाच्च पूर्वमेव नियमेन भक्षणप्राप्तौ प्रापकं न भव-तीति अन्यनिवृत्तिफलकम् अभ्यनुज्ञामात्रं करोतीति न प्रापकमिति तद्विषयस्य भक्ष-णस्य नावश्यकत्वम् । अभ्यनुज्ञाविधिविषयस्य च सर्वथानिवृत्तिप्रयोजकबलवदनिष्ट-

सिद्धत्वादितीत्यन्यत्र विस्तरः । (१)सुब्विधिशब्देन सुप्त्वतद्व्याप्यधर्मावच्छिन्नोद्देश्यकविधेर्ग्रहणम् । एतेन 'दण्डिषु' इत्यादौ षत्वरूपसुब्विधौ

---

धनत्वाभावमात्रप्रतीतेः इष्टसाधनत्वस्य विधिनाऽप्रतीतेः रागत एव तत्र प्रवृत्तिरिति न तस्य धर्मत्वमिति विरागिणां तत्राप्रवृत्तावपि न तदननुष्ठानमूलकं पापं तेषामुद्भवति । अत एव विवाहाद्यननुष्ठानेऽपि न तेषां प्रत्यवायः । रागनिवृत्त्या तत्राधिकारस्य तेषां निवृत्तत्वात् । 'अग्नीषोमीयवपायां हुतायां दीक्षितान्नमश्नीयात्' इतिविहिताशनस्यापि अभ्यनुज्ञाविषयत्वमेवेति न तस्य धर्मत्वं, नापि तस्य अधर्मत्वम् । वेदबोधितानिष्टसाधनताकत्वाभावात् । व्याकरणशास्त्रेऽपि नियमद्वारिका परिसङ्ख्या निवृत्तिफलिकाऽश्रीयते, न शाब्दी निवृत्तिः दोषत्रयापत्तेः । अत एव सर्वत्र एवगर्भ एव वाक्यार्थः प्रदर्श्यते कर्मण्येव षष्ठी स्यादित्यादि । प्रापकप्रमाणस्य सामान्यशास्त्रस्य नियतत्वाच्च तत्तद्विधेयस्यावश्यकत्वमेवेति न पाक्षिकत्वापत्तिरपि । तस्मात् विधिमुखेन प्रवृत्तौ दोषाभावात् दोषत्रयविशिष्टा निषेधमुखेन प्रवृत्तिर्नाङ्गीकार्येति मञ्जूषायां विस्तरः ।

एतेन "सर्वविधमांसभक्षणस्य रागतः प्राप्तत्वादिच्छायाश्च सङ्कोचासम्भवात् क्वचिन्निषेधमुखेनापि प्रवृत्तिरङ्गीकार्या । गमेर्ज्ञानार्थकत्वेन शाब्दबोधविषय इत्यर्थेनाविरोधात् । किञ्च "पञ्च पञ्चनखा भक्ष्याः" इत्यस्य विधित्वं 'अहरहः सन्ध्यामुपासीत' इत्यनेन । सन्ध्याकरणाभावस्यानिष्टजनकत्वबोधनवदभक्षणस्याप्यनिष्टजनकत्वबोधापत्तिः,

प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफला ॥

इत्येतद्विरोधापत्तिश्च । किञ्च विधिमुखेन प्रवृत्तिस्वीकारे "तपस्तपः कर्मकस्यैव" (पा०सू० ३।१।८८) इत्यत्र तप इति योगं विभज्य 'सकर्मकाणां चेत्तप एवं' इति नियमेन "सकर्मकाणां प्रतिषेधो वक्तव्यः" इति वार्त्तिकं प्रत्याचक्षाणेन भगवतोक्ते योगविभागेऽन्यतरयोगस्य वैयर्थ्यापत्तिः इत्यपास्तम्, सर्वदोषाणां परिहृतत्वात्, तपस्तपः कर्मकस्यैवेत्यत्र तप इति योगस्य तपधात्वतिरिक्ते सकर्मकमात्रे कर्मवद्भावनिवृत्तिफलकत्वेन तपःकर्मकस्यैवेत्यस्य च सुवर्णादिकर्मकतपधातौ कर्मवद्भावनिवृत्तिफलकत्वेन वैयर्थ्याभावाच्चेति दिक् ।

(१)सुब्विधिशब्देनेति । वस्तुतस्तु "पूर्वत्रासिद्धम्" (पा०सू० ८।२।१) इत्यतः पूर्वत्रेत्यनुवर्त्य पूर्वसुप्स्वरसंज्ञातुग्विधिषु कर्तव्येषु नलोपोऽसिद्ध इत्यर्थकरणात् षत्वस्य पूर्वत्वाभावादस्याप्राप्त्या एतादृशार्थे प्रमाणाभावः । किञ्च त्वन्नये "इकोऽचि" (पा०सू० ७।१।७३) इत्यस्य सुब्विधित्वाभावेन अज्ग्रहणाभावपक्षे नपुंसकदण्डिन्शब्दाद् भ्यासि नलोपे नुमि लक्ष्येलक्षणन्यायेन पुनर्नलोपाप्राप्त्या नकारश्रवणेन, अज्ग्रहणे नुमोऽप्राप्त्या तदश्रवणेन फलभेदात् 'इह किञ्चित्रपो' इतिभाष्यविरोधापत्तिः । यद्यपि सुप्त्वव्याप्यविषयताके इत्याद्यर्थस्वीकारेण न भाष्यविरोधस्तथापि 'अशुद्धं कृत्वा कुचोद्यम्' इति न्यायेनात्र न तादृशार्थ उचित इति दिक् ।

अप्राप्तासिद्धत्वविधानार्थमिदमि(१)त्यपास्तम्, वैरूप्यापत्तेश्च। सञ्ज्ञाविधौ 'दण्डिदत्तौ' 'दत्तदण्डिनौ'। अत्र नलोपे दण्डिशब्दस्य घित्वे पूर्वनिपातापत्तिः। इष्यते त्वनियमः। असिद्धत्वे तु घित्वाभावात्सिद्ध्यति। न च पूर्वनिपाते नलोपो, नलोपे च घित्वे पूर्वनिपात इत्ययुक्तम्। (२)यस्य पूर्वपदत्वे घित्वं भवति तत्पूर्वमेव प्रयोक्तव्यमिति सूत्रार्थान्न दोषः। न च घित्वे बहिरङ्गतया नलोपोऽसिद्ध इति वाच्यम्, सञ्ज्ञाकृतबहिरङ्गत्वस्यानाश्रयणात्। कृति तुग्विधौ–वृत्रहभिः। कृतीति किम्? (३)वृत्रहच्छत्रम्। अस्मादेव सञ्ज्ञाकृतं बहिर्भूतनिमित्तकसञ्ज्ञाकृतञ्च बहिरङ्गत्वं परिभाषायां नाश्रीयते। अन्यथा 'वृत्रहभिः' इत्यादौ बहिर्भूतभिस्निमित्तकपदत्वनिमित्तो नलोपोऽसिद्धः स्यादिति तद्वैयर्थ्यं स्यात्। **भाष्ये** तु सन्निपातपरिभाषया 'वृत्रहभिः' इत्यादौ तुकं व्यावर्त्येदं प्रत्याख्यातम्, पदत्वद्वारा लोपस्य भिस्सन्निपातनिमित्तकत्वात्। सन्निपातानिमित्तकनलोपविषयाणां 'वृत्रहधनम्'

---

**(१)इत्यपास्तमिति।** सपादसप्ताध्याय्यां "नलोपः प्रातिपदिकान्तस्य" (पा०सू० ८।२।७) इति सूत्रयित्वा "नलोपः सुप्स्वर" (पा०सू० ८।२।२) इत्यस्य लाघवादसिद्धत्वविधायकत्वमाश्रयणीयमिति तु नाशङ्कनीयम्, विनिगमनाविरहात् "अनुदात्तोपदेश" (पा०सू०६।४।३७) इतिविहितनलोपस्याप्यसिद्धत्वापत्तौ "आगत्य" इत्यादौ तुगनापत्तेरिति दिक्।

**(२)यस्य पूर्वपदत्वे घित्वं भवतीति।** अत एव 'द्युकौ इत्यत्र द्युशब्दस्य पूर्वनिपातः सिद्धः। ननु सूत्रे संज्ञाग्रहणं न कर्तव्यम्। "द्वन्द्वे घि" (पा०सू० २।२।३२) इत्यस्य द्वन्द्वसंज्ञाकालिकघित्ववत एव पूर्वप्रयोग इत्यर्थादनियमो "दत्तदण्डिनौ' इत्यादौ सिद्ध एवेति चेत्? मैवम्, 'ग्रामणिवृषभौ' इत्यादौ ग्रामणीशब्दस्य पूर्वनिपातानापत्तेः। तत्र समासे पूर्वपदत्वे "इको ह्रस्वः (पा०सू० ६।३।६१) इति ह्रस्वत्वे पूर्वनिपातचिकीर्षायां घित्वेऽपि द्वन्द्वसंज्ञाकालिकघित्ववत्त्वाभावात्। अतो यस्य पूर्वपदत्व इत्याद्यर्थस्यावश्यकता संज्ञाग्रहणस्यावश्यकत्वमिति। 'द्युकौ' इत्येतत्सिद्धिरपि "द्वन्द्वे घि"(पा०सू० २।२।३२) इत्येतस्य तादृशार्थकरणे फलम्। अत एव "द्युद्रुभ्यां मः (पा०सू० ५।२।१०८) इत्यादिनिर्देशाः सङ्गच्छन्ते इति दिक्।

**(३)वृत्रहच्छत्रमिति।** तुग्ग्रहणं तु 'राजन्' शब्दात् क्यङन्तात्क्विपि विशिष्टाद् राजाशब्दादाचारक्विबन्ताद् ण्वुलि 'राजायकः' इत्यत्र "आतो युक्" (पा०सू० ७।३।३३) इति युग्यथा स्यादिति।

इत्यादीनामनभिधानमिति तदाशयः । तदभावे कृतीत्यपि व्यर्थमेव । न च सन्निपातपरिभाषया तुम्मात्रव्यावृत्तौ प्राप्तायां नियमार्थं कृतीति, 'कृति तुगेव न, अन्यस्तु भवत्येवेति' इति वाच्यम्, 'वृत्रहच्छत्रम्' इत्यत्र नलोपस्य सन्निपातलक्षणत्वाभावादिति दिक् ।

**राजनीति** । "विभाषा ङिश्योः" (पा०सू० ६।४।१३६) इत्यल्लोपविकल्पः । **प्रातिदिवेति** । कनिनन्तम् ।

**हलि च** (पा०सू० ८।२।७७) । "र्वोरुपधायाः" (पा०सू० ८।२।७६) इति सूत्रं, "सिपि धातोः" (पा०सू० ८।२।७४) इत्यतो धातोरिति चानुवर्त्तते । र्वोरिति च धातोर्विशेषणम् । पदस्येति सम्बद्ध्यमानमपि इक एव व्यधिकरणं विशेषणम् । तद् ध्वनयन्नाह—**प्रतिदीव्न इति** । अत्र वान्तस्य भत्वाभावात्, "न भकुर्छुराम्" (पा०सू० ८।२।७९) इति निषेधो न । धातोः किम् ? अग्निः करोति ।

**न संयोगा** (पा०सू० ६।४।१३७) । अन्तग्रहणं (१)स्पष्टार्थम्, संयोगस्य वमाभ्यां विशेषणेन तदन्तलाभात् ।

"सर्वनामस्थाने चासम्बुद्धौ" (पा०सू० ६।४।८) इत्येव सिद्धे नियमोऽयमित्याह—**शावेवेति । उपधाया इति** । तेन "अनुनासिकस्य" (पा०सू० ६।४।१५) इत्यस्यापि नियम इति भावः । अत्र सर्वनामस्थानग्रहणं न सम्बद्ध्यते । (२)तेन 'वृत्रहणी' 'वृत्रघ्नः' 'वृत्रघ्नी' इत्यादौ न

---

(१)**स्पष्टार्थमिति** । ननु "न हलो वमाभ्याम्" इत्येव लाघवात्सूत्रमस्तु । हलः परौ यौ वकारमकारौ ताभ्यां परस्यानोऽकारस्य लोपो नेत्यर्थेन 'यज्वनः' 'ब्रह्मणः' इत्यादीनां सिद्धेरिति चेत् ? न, राजन्शब्दे उपपदे मन्धातोर्विचि निष्पन्नाद् राजमन्शब्दात् शसि 'राजमनः' इत्यत्र मकारस्य हलः परत्वाभावेन निषेधानापत्तेः । सिद्धान्ते तु संयोगसंज्ञायां नलोपस्यासिद्धत्वेन मकारान्तसंयोगात्परत्वमनः स्पष्टमेव । किञ्च पट्टशब्दादाचक्षाणण्यन्तान्मानिनि ततः शसि 'पण्मनः' इत्यत्र णिलोपस्य टिलोपस्य वा स्थानिवत्त्वेन मकारस्य हलः परत्वाभावेन निषेधाप्राप्त्या लोपापत्तेः । यथाश्रुतन्यासे तु संयोगसंज्ञाया उभयसम्बन्धित्वेन पूर्वमात्रसम्बन्धित्वाभावात् स्थानिवत्त्वाप्रवृत्त्या निषेधप्रवृत्तिः स्पष्टैवेति बोध्यम् ।

(२)**तेन वृत्रहणी इति** । सर्वनामस्थानपदासम्बन्धेनेत्यर्थः । यद्यत्र सर्वनाम-

"अनुनासिकस्य" (पा०सू० ७।४।१५) इति दीर्घः। **इति निषेधे इति**। एतत्फलभूते निषेधे इत्यर्थः। शिस्वोरिति वक्तव्ये "सौ च" (पा०सू० ६।४।१३) इति योगविभाग (१)उत्तरार्थः।

**हो हन्तेः** (पा०सू० ७।३।५४)। ञ्णिन्नकारा (२)हस्यैव विशेषणम्। तत्र ञ्णिद्विषये येन नाव्यवधानन्यायेन द्वाभ्यां व्यवाये 'घातकः' इत्यादावेव, न तु हननीयतेर्ण्वुल्यनेकव्यवधाने। (३)इदं "धातोः कार्यमुच्यमानम्" (प०भा० ८८) इति परिभाषया धातुसंशब्दनेन विहितप्रत्यय एव। तेन वृत्रहणमाचष्टे 'वृत्रहयति' इत्यादौ न। ने तु परे 'वृत्रघ्नः' इत्यादावेव, स्थानिवत्त्वकृतव्यवधानेऽपि (४)श्रौताव्यवधानसत्त्वात्, न तु 'हननम्' इत्यादौ श्रौतव्यवधाने इति स्पष्टं भाष्ये।

'वृत्रघ्नः' इत्यादौ णत्ववारणाय "हन्तेरत्पूर्वस्य" इति विभज्य व्याचष्टे- **हन्तेरिति**। "उपसर्गादसमासेऽपि" (पा०सू० ८।४।१४) इत्यत उपसर्गादिति वर्त्तते, रषाभ्यामिति च। तात्स्थ्यात्ताच्छब्द्यमित्याह-**उपसर्गस्थादिति**। प्रकृतोपयुक्तमाह-**अत्पूर्वस्येति**। अत इति सिद्धे पूर्वग्रहणं स्पष्टार्थम्। (५)अत्र उपसर्गात् इत्यस्य निवृत्त्या णत्वमात्रस्यायं नियम

---

स्थानपदसम्बन्धः स्यात्तदा सर्वनामस्थाने यदि दीर्घस्तदा शावेवेति नियमसम्भवात् 'वृत्रहणी' इत्यादौ नपुंसके "अनुनासिकस्य" (पा०सू० ६।४।१५) इति दीर्घः स्यादेवेति भावः।

(१)**उत्तरार्थ इति**। "अत्वसन्तस्य" (पा०सू० ६।४।१४) इत्येतदर्थ इत्यर्थः।

(२)**हस्यैवेति**। अङ्गस्य तु न, नकारपरकाङ्गासम्भवात्। ननु ञ्णितोरङ्ग एवान्वयोऽस्तु, किमव्यवहितपदार्थे सङ्कोचेनेति चेत्? न, तथा सत्येकधर्मावच्छिन्नेऽनन्वयाद् द्वन्द्वानापत्तेः। (३)**इदमिति**। न च ञ्णित्वस्य धातावपि सत्वेनास्य प्रत्ययनिमित्तकत्वाभावेन नात्र प्राप्तिरिति वाच्यम्, अङ्गाधिकारीयत्वेनाङ्गस्य च प्रत्ययोत्थिताकाङ्क्षतया प्रत्ययनिमित्तकत्वात्। (४)**श्रौताव्यवधानसत्त्वादिति**। नकारे परे कुत्वविधिसामर्थ्याच्छ्रौताव्यवधानस्य निमित्तत्वमाश्रीयते इति भावः। श्रौतव्यवधाने तदप्रवृत्तिस्वीकारादेव सूत्रे ञ्णिदित्यस्य चारितार्थ्यम्। अन्यथा तत्राप्यवधेः सिद्धौ तद्वैयर्थ्यं स्पष्टमेव।

(५)**अत्रोपसर्गादित्यस्य निवृत्त्येति**। ननूपसर्गादित्यस्य निवृत्तौ अनुप-

इत्याह—**एकाजुत्तरेति । णत्वमपीति** । अपिना "प्रातिपदिकान्त" (पा०सू० ८।४।११) इत्यस्य, "कुमति च" (पा०सू० ८।४।१३) इत्यस्य च सङ्ग्रहः । बाढ्यसामान्यचिन्ताश्रयणात्सर्वबाधः । इदमत्पूर्वग्रहणं हस्थानिककवर्गाभाववद्धन्तेरुपलक्षणम् । अतो 'बहुवृत्रहाणि' इत्यत्र, 'प्राघानि' 'प्रघनाघनः' इत्यत्र च न दोष इत्यन्यत्र विस्तरः । यत्तु कार्यकालपक्षे बहिरङ्गदीर्घासिद्धत्वाद् 'बहुवृत्रहाणि' इत्यादौ न दोषः । 'प्राघानि' इत्यादौ यथोद्देश एव लक्ष्यानुरोधादिति , तन्न, तत्पक्षेऽपि त्रिपाद्यां तत्परिभाषाया अप्रवृत्तेरुक्तत्वात् 'प्रघनाघनः' इत्यत्र दोषाच्च । **माधवेनोक्तमिति ।** 'वृत्रघ्नः' 'वृत्रघ्णः' इति रूपद्वयं तेनोक्तम् । **तद्भाष्येति ।** "कुव्यवाये हादेशेषु प्रतिषेधो वक्तव्यः । वृत्रघ्नः' स्रुघ्नः, प्राघानि । हन्तेरत्पूर्वस्येत्यत्पूर्वग्रहणं न कर्त्तव्यं भवति" इति **भाष्ये**त्यर्थः । अत्पूर्वग्रहणस्य तादृशोपलक्षितार्थत्वे मानाभाव इति तदाशयः ।

**अनिनिति** । एतच्च "येन विधिः" (पा०सू० १।१।७२) इति सूत्रे **भाष्ये** स्पष्टम् । अन्यत्र तु "अलैवानर्थकेन तदन्तविधिर्न तत्समुदायेन" इति हन्ग्रहणे प्लीहन्ग्रहणं न ।

**मघवा ब** (पा०सू० ६।४।१२८)। षष्ठ्यर्थे प्रथमा, तृ इति च वर्त्तते । **ऋ इदिति ।** तेनानेकाल्त्वाभावान्न सर्वादेशः ।

**उगिदचाम्** (पा०सू० ७।१।७०)। अचामित्यञ्चुधातोर्ग्रहणं (१)व्याख्यानात् । **नलोपिन इति ।** अकारलोपाकरणपूर्वकं नलोपक-

---

र्गात्परस्य णत्वविधानेन चारितार्थ्यम् । न चास्य परिभाषात्वस्वीकारेण हनवयवनकारस्थानिकमूर्द्धन्यविधायकशास्त्रेऽत्पूर्वस्येत्युपतिष्ठते इत्यर्थान्न दोष इति वाच्यम्, "कुमति च" (पा०सू० ८।४।१३) इत्यादावपि कदाचित्तदुपस्थित्या 'हरिकामिणौ' इत्यादौ णत्वानापत्तेः इति चेत् ? न, हनवयवनकारस्य णत्वं भवति चेत् अत्पूर्वस्यैवेति नियमः, न तु उपसर्गात् परस्य हनोऽवयवस्य नस्य चेत् अत्पूर्वस्यैवेति नियमवाक्ये उपसर्गादित्यस्य निवृत्त्येत्यर्थविवक्षणेनादोषात् ।

(१)**व्याख्यानादिति ।** "प्रत्ययः" (पा०सू० ३।१।१) इत्यादिनिर्देशरूपादित्यर्थः । प्रत्याहारग्रहणे प्रत्ययग्रहणे वा तत्र नुमि निर्देशासङ्गतेः स्पष्टैवेतिभावः ।

रणस्य विवक्षार्थत्वादिति भावः। अत्रोगित् (१)झलन्त एव व्याख्यानात्। तेन 'शमी' 'शमिनौ' इत्यादौ नातिप्रसङ्ग इति "युवोरनाकौ" (पा०सू० ७।१।१) इत्यत्र (२)**भाष्ये स्पष्टम्**। **उपधादीर्घ इति**। "सर्वनामस्थाने च" (पा०सू० ६।४।४) इत्यनेन। असिद्धत्वाभावकल्पने मानमाह—**तथा चेति**। **निपातनादिति**। "वनो र च" (पा०सू० ४।१।७) इति सूत्रे **भाष्ये** तु 'मघवन्शब्दोऽव्युत्पन्नं प्रातिपदिकम्' इत्युक्तम्।

**मघशब्दादिति**। धनार्थादित्यर्थः। **भाषायामपीति**। अपिना छन्दसि। 'मघवानमीमहे' इति मध्योदात्तं वनिपि बोद्धव्यम्। **आकरे इति**। "केशाद्वः" (पा०सू० ५।२।१०९) इति सूत्रे कैयटे इत्यर्थः। एवञ्च मतुपि "अत्वसन्तस्य" (पा०सू० ६।४।१४) इति दीर्घसत्त्वेन, त्रादेशे तदभावे, फलभेदे प्रत्याख्यानासम्भव इति भावः। नन्वेवमप्यन्तोदात्तस्य त्रादेशे वकाराकारस्योदात्तत्वं, मतुपि तु "ह्रस्वनुड्भ्याम्" (पा०सू० ६।१।७६) इति प्राप्तस्य मतुबुदात्तत्वस्य "न गोश्वन्" (पा०सू० ६।१।१८२) इति प्रतिषेधेन पित्त्वादनुदात्तत्वे घकाराकारस्योदात्तत्वमिति फलभेदोऽस्त्येवेति चेत्? न, त्रादेशपक्षे दीर्घवत् बहुलग्रहणेन घकाराकारोदात्तत्वस्याप्यङ्गीकारात्। तत्रैव मानान्तरमाह—**हविरिति**। 'मघवाद्जीषी' इत्यस्याप्युपलक्षणमिदम्।

"अर्वणस्तृ मघोनश्च न शिष्यं छान्दसं हि तत्।
मतुब्वन्योर्विधानाच्च छन्दस्युभयदर्शनात्"॥

---

(१)**झलन्त एवेति**। "नपुंसकस्य झलचः" (पा०सू० ७।१।७२) इति सूत्राद् झल्पदापकर्षणादञ्चुसाहचर्याद्वेति भावः। (२)**भाष्ये स्पष्टमिति**। तत्र हि "युवोरनाकाविति चेद्धातुप्रतिषेधः, युत्वा, युतवान्" इतिशङ्कायामनुनासिकपरयोर्युवोर्ग्रहणमिति समाहितम्। अनुनासिकैः परोऽवयवो ययोरित्यर्थः। ततो यद्यनुनासिकपरयोर्ग्रहणं तदा इत्सञ्ज्ञा प्राप्नोतीत्याशङ्क्य तत्र को दोषः? नुमागमप्रसङ्गः। तत्प्रतिषेधो वक्तव्यः। अन्यथा 'नन्दनः' 'कारकः' इत्यत्र नुम् प्राप्नोति इति शङ्कायां "नुम्विधौ झल्ग्रहणम्। झलन्तस्योगित इष्यते" इत्युक्तम्।

इत्यत्रत्यवार्तिकरीत्या मघवन्शब्दस्य लोकेऽसाधुत्वं लभ्यते । तथाच तृज्वत्सूत्रे **भाष्यम्**—"अविशेषविहिता अपि शब्दा नियतविषया दृश्यन्ते इति" इत्यन्यत्र विस्तरः ।

**छन्दस्येवेति** । न च-वनिबन्तस्य सम्प्रसारणे यस्येतिलोपे 'मघोनः' इत्यसिद्धिः । व्याश्रयत्वान्नाभीयासिद्धत्वं लोपे सम्प्रसारणस्य । नापि बहिरङ्गासिद्धत्वम्, तस्या वाहऊठ्सूत्रस्थतयाऽऽभीयत्वेनाभीयान्तरङ्गस्य तद्दृष्ट्याऽसिद्धत्वेनात्र तस्या अप्रवृत्तेः । अन्तरङ्गशास्त्राश्रय एव तदाश्रय इति समानाश्रयत्वमव्याहतम् ;—इति वाच्यम्, निपातितान्तोदात्तमघवन्शब्दमादाय सिद्धेः । "एकादेश उदात्तेनोदात्तः" (पा०सू० ८।२।५) इत्यस्य प्रवृत्त्या तत्र स्वरे विशेषाभावात् । छन्दस्यापाद्यरूपाभावान्नानिष्टापादनम् । **अन्तोदात्तं त्विति** । कन्यन्तत्वादव्युत्पन्नत्वाद्वा तत्त्वम् ।

**अन्नन्तानामिति** । "अल्लोपोऽनः" (पा०सू० ६।४।१३४) इत्यपकृष्यते । तत्र नकारं प्रश्लिष्य नान्तानामित्यर्थः । तेन 'मघवतः' इत्यादौ नाल्लोपसम्प्रसारणे, 'धीवरी' इत्यादौ च नाल्लोपः । स्पष्टञ्चेदम् ऋलृक्सूत्रे **भाष्ये** । **परे तु**—नकारप्रश्लेषाभावेऽपि न दोषः, "अलोऽन्त्यस्य" (पा०सू० १।१।५२) इत्यस्य सत्त्वेनानः स्थानित्वाभावेन स्थानिवत्सूत्रेणान्नन्तत्वलभात् । 'सर्वे सर्वपदादेशाः' इत्यनेनापि मघवन्शब्दस्यैव स्थानित्वं, नानः । अर्द्धविकारे प्रत्यभिज्ञाऽभावान्नैकदेशविकृतन्यायावसरः । ध्वनितञ्चेदं "श्वयुव" (पा०सू० ६।६।१३३) इत्यत्र **भाष्ये** इत्याहुः । **मघवतीति** । पुंयोगेन स्त्रियां वृत्तौ "उगितश्च" (पा०सू० ४।१।६) इति ङीप् । विभक्तौ लिङ्गविशिष्टाग्रहणान्नुम्न ।

**शुन इति** । ननु सम्प्रसारणे वार्णादाङ्गस्य बलीयस्त्वेन पूर्वत्वं बाधित्वा "अल्लोपोऽनः" (पा०सू० ६।४।१३४) इति लोपे 'शुनः' इति सर्वानुदात्तं स्यात्, उदात्तनिवृत्तिस्वरेणान्तोदात्तं वा स्यात्, पूर्वरूपेणाद्युदात्तमिष्यते, तत्र हि वकारस्थानिकोकारस्य स्रंसनधर्महल्स्थानिकत्वेनानुदात्ततया श्वन्शब्दस्यान्तोदात्ततयाऽकारस्योदात्तत्वेन तयोः स्थाने जातस्यै-

कादेशस्योदात्तत्वात् । किञ्च लोपे स्थानिवत्त्वेन यण्प्रसङ्गः । "अतेः शुनः" (पा०सू० ५।४।९६) इत्यादिनिर्देशैस्तद्वारणे तु 'बहुश्वा' 'बहुमघवा' 'बहुयुवा' इत्यत्र "अन उधालेपिनः" (पा०सू० ४।१।२८) इति ङीब्विकल्पापत्तिः 'मघोनः' इत्यादावन्तोदात्तप्रकृतिके उदात्तनिवृत्तिस्वरापत्तिश्च, इति चेत् ? न, वार्णपरिभाषाया अनित्यत्वेन क्वचिदप्रवृत्त्याऽदोषात्, श्वन्शब्दे आभीयतया सम्प्रसारणासिद्धत्वेन "न संयोगाद्" (पा०सू० ६।४।१३७) इति निषेधाच्च ।

(१)**न सम्प्रसारणे** (पा०सू० ६।१।३७) । अनुवृत्त्यैव निषेध्यसमर्पके लब्धे पुनः सम्प्रसारणग्रहणसामर्थ्यात्तन्मात्रनिषेध इति दूरस्थस्यास्य, "व्यथो लिटि" (पा०सू० ७।४।६८) इत्यस्य च निषेधः । न च व्याधिव्यद्ध्यादावस्य चारितार्थ्येन 'यूनः' इत्यादौ पूर्वं सवर्णदीर्घरूपैकादेशे तस्य "अचः परस्मिन्" (पा०सू० १।१।५७) इति स्थानिवत्त्वेन सम्प्रसारणत्वेऽपि तेनैव स्थानिवत्त्वेनोकारव्यवधानात्कथं निषेध इति वाच्यम्, "व्यथः" (पा०सू० ७।४।६८) इति सूत्रे यग्रहणेनैव सिद्ध्या सम्प्रसारणग्रहणस्यैतन्निषेधकतयैव चारितार्थ्यस्य वक्तव्यत्वेन व्यवहितेऽपि प्रवृत्तेः, "यूनस्तिः" (पा०सू० ४।१।७७) इति निर्देशाच्च; इत्याशयेनाह—इति **यकारस्येति** । न च कार्यकालपक्षे "इग्यणः" (पा०सू० १।१।४५)

---

(१)न सम्प्रसारणे इति । अत्र **केचित्**, इदं सूत्रं माऽस्तु । "सम्प्रसारणाच्च" (पा०सू० ६।१।१०८) इत्यत्र 'सम्प्रसारणादसम्प्रसारणे', इति लाघवात्कर्तव्यम् । तेन 'यूनः' इत्यत्र वकारस्य सम्प्रसारणे पश्चाद् यकारस्य सम्प्रसारणेऽपि सम्प्रसारणपरतया पूर्वरूपाभावाद् यणेष्टासिद्धिरिति; तन्न, प्रथमोपस्थितत्वेन कदाचित् पूर्वं यकारस्य सम्प्रसारणे तदानीं सम्प्रसारणपरकत्वाभावात्पूर्वरूपप्रवृत्त्या 'यूनः' इत्यस्यासिद्ध्यापत्तेः । न च असम्प्रसारणग्रहणसामर्थ्यात् सम्प्रसारणयोग्यभिन्नेऽचीत्यर्थस्य विवक्षणेन–वकारस्य सम्प्रसारणे पूर्वरूपोत्तरं सवर्णदीर्घे परादिवद्भावेन यकारोत्तरोकारे सम्प्रसारणत्वसम्भावनया तन्निमित्तकपूर्वरूपाप्रवृत्त्या न दोषः, उभयोः सम्प्रसारणस्य सकृत्प्रवृत्तेश्च; इति वाच्यम्, वाक्यसंस्कारपक्षे 'एष यूनः पश्यति' इत्यत्र यकारस्याऽच्स्थानिकत्वेन स्थानिवद्भावेनाच्त्वारोपे "एतत्तदोः" (पा०सू० ६।१।१३२) इति सुलोपानापत्तेरिति दिक् ।

इत्युपस्थितस्य पदैकवाक्यतयाऽन्वये निमित्तस्य यणाऽन्वयेन येन नाव्यवधान न्यायेन पूर्वस्य सम्प्रसारणाप्राप्तेरिदं सूत्रं व्यर्थमिति वाच्यम्, तत्पक्षेऽपि सञ्ज्ञासूत्राणां वाक्यभेदेनैव सम्बन्धस्योक्ततया विधायकेषु यण इत्यस्याभावात्। अत्र चेदमपि ज्ञापकं बोद्धव्यम्।

ननु सकृत्प्रवृत्त्यैवोभयोः सम्प्रसारणे जाते निषेधो व्यर्थो निमित्तत्वानुपपत्तिश्चेत्यत आह—**अत एव ज्ञापकादिति**। तदुक्तं **भाष्ये** "इहेङ्गितेन चेष्टितेन निमिषितेन महता वा सूत्रप्रबन्धेनाऽऽचार्याणामभिप्रायो गम्यते, एतदेव ज्ञापयति परस्य पूर्वं भविष्यति" इति। "लक्ष्ये लक्षणस्य" इति न्यायस्य तु नायं विषयः, कार्याश्रयवर्णभेदेन (१)लक्ष्यभेदात्।

**अर्वणस्तृ** (पा०सू० ६।४।१२७)। **न तु साविति**। पर्युदास एव सूचितः, प्रत्ययत्वेन च सादृश्यत्। अनञ इति बहुव्रीहिः, 'वाजमर्वत्सु' इति प्रयोगात्, तत्पुरुषे ह्यनञः परस्यार्वण इत्यर्थेऽत्र न स्यात्। सुरत्र प्रथमैकवचनम्। **अनञः किमिति**। अनञ इत्यस्य कः शब्दो व्यावर्त्य इति प्रश्नः। उत्तरम्—**अनर्वेति**। यज्वन्शब्दसदृशोऽनर्वन्शब्दो व्यावर्त्य इत्यर्थः।

नन्विह निरनुनासिकोच्चारणेऽपि तपरसूत्रस्यानणीव विधीयमानेऽपि विध्यर्थत्वान्नस्यान्तरतम्यादनुनासिकः स्यात्, तपरसूत्रेऽप्रत्ययग्रहणानुवृत्तावण्ग्रहणानुवृत्तौ च मानाभावादत आह—**आआदिति**। विशेष्यविशेषणभावेनान्वयान्न सर्वादेश इति भावः। **भाष्ये** त्वनुनासिकविधाने प्रतिपत्तिलाघवाय तस्यैवोच्चारणे कार्ये तदनुच्चारणात् शुद्धस्यैव विधानमित्युक्तम्।

**केचित्तु** इदं सर्वं 'गुणा भेदकाः' इति पक्षे। वृद्धिरादैच्सूत्र**भाष्य**सम्मते सिद्धान्तभूते 'गुणा अभेदकाः' इति पक्षे जातिपक्षे च तत्प्रास-

---

(१)**लक्ष्यभेदादिति**। वस्तुतस्तु एवं लक्ष्यभेदाश्रयणे 'पथः' इत्यत्र पुनः "भस्य टेर्लोपः" (पा०सू० ७।१।८८) इति टिलोपापत्तिः। तस्मात् प्रथमप्राप्तिसमानकालिकप्राप्तिविषयघटिते लक्ष्ये पुनः शास्त्रप्रवृत्तेः एतज्ज्ञापकादेवाश्रयणेन 'भवेताम्' 'भूयात्' इत्यादौ सलोपादिसिद्धिरित्यन्यत्र विस्तरः।

स्यापि सवर्णग्रहणस्याप्रत्ययग्रहणेन निषेधेनादोषात्। अत एव भाष्ये "तपरस्तत्कालस्येति प्राप्नोति" इत्युक्तम्। अप्रत्यय इति च वाक्यभेदेन सर्वप्रतिषेधकम्, अण्ग्रहणस्य च तत्रासम्बन्ध इति तदाशयः। अत एव भाष्ये "भाव्यमानेन सवर्णानां ग्रहणं न" इत्येव पठितं, न त्वणेति। एतदेवाभिप्रेत्याणुदित्सूत्रेऽनया परिभाषयाऽप्रत्ययग्रहणवैयर्थ्यमाशङ्क्याप्रत्ययग्रहणस्य तत्परिभाषाज्ञापकत्वमुक्तम्। तेन च तस्याव्यापकत्वं सूचितम्, अप्रत्ययग्रहणस्य मदुक्तरीत्या व्याख्यानञ्च सूचितम्। तेन जातिग्रहणप्राप्तस्य गुणाभेदकत्वपक्षप्राप्तस्य चानयाऽणनण्साधारण्येन निषेध इति सूचितम्।

वस्तुतोऽणुदित्सूत्रस्थाप्रत्ययग्रहणज्ञापकत्वपर **भाष्यस्य** एकदेशानुमतिद्वारा परिभाषा बोध्यते इत्यर्थः। प्रतीयते इत्यस्य विधीयत इत्यर्थप्रसिद्ध्या **कैयटा**क्तव्याख्या चिन्त्या। परिभाषायां सवर्णपदेन समानजातीयो भिन्नधर्मा उच्यते। तेन जशादिविधौ जत्वादिजात्याश्रयसर्वजकारादिग्रहणसिद्धिरित्याहुः।

एतेन पथीयतेः क्विपि पन्था इत्यादीत्यपास्तम्। अत्र शुद्धार्थं तदनुच्चारणस्यावश्यकत्वेन **भाष्या**सङ्गतेः। तस्मात्तदनभिधानमेवोचितम्। न च अदित्येवास्तु, नकारेकारयोरत्वे सवर्णदीर्घेण रूपसिद्धेः, पररूपं तु न। "पथिमथ्यृभुक्षां लोपः, भस्य टेः, इतोऽत्सर्वनामस्थाने" इति न्यासेन नकाराश्रवणसिद्धावकारविधानसामर्थ्याद्; इति वाच्यम्, ज्ञानगौरवपरिहारेण स्पष्टार्थमाकारोच्चारणात्।

**इतोऽत्** (पा०सू० ७।१।८६)। आदित्यनुवृत्त्यैव सिद्धेऽद्वचनम् 'ऋभुक्षणम्' इत्यादौ "वा षपूर्वस्य" (पा०सू०६।४।९) इति दीर्घविकल्पे पक्षे ह्रस्वश्रवणार्थम्। इत इति अदिति च तपरत्वे मुखसुखार्थम् 'एत' इत्युक्तौ ततो लाघवाभावात्। अन्यथा विधेयेऽपि तपरकरणात् 'कुरु' इत्यादौ गुणाभाववत् 'पन्थानौ' इत्यादौ दीर्घाभावापत्तिरित्यन्यत्र विस्तरः।

**थो न्थः** (पा०सू० ७।१।८७)। थो नुडिति नोक्तम्। इत्संज्ञायां "आद्यन्तौ" (पा०सू० १।१।४६) इत्यस्य चानुसन्धाने प्रक्रियागौरवात्।

(१)**भस्य टेः** (पा०सू० ७।१।८८)। भस्य किम्? पथिभ्याम्। **सम्बुद्धौ नपुंसकानामिति**। इदं "न लुमता" (पा०सू०१।१।६३) इतिनिषेधानित्यत्वमूलकमित्युक्तम्। यद्यपि **भाष्ये** "वा नपुंसकानाम्" इत्येव पठितं, तथापि सूत्रे ङिग्रहणस्य प्रत्याख्यातत्वेन, 'हे चर्मन्' 'हे चर्म' इति सम्बुद्धावेवोदाहृतत्वेन च तावन्मात्रविषयताऽस्येति भावः।

**ष्णान्ता** (पा०सू० १।१।२४)। विशेष्यसाकाङ्क्षात् स्त्रीलिङ्गनिर्देशात् प्रकृतं सङ्ख्येत्याकृष्यते संख्याशब्देन च सङ्ख्याप्रकारकबोधजनकाः पञ्चादयो गृह्यन्ते, सङ्ख्येतिशब्दे बहुगणडतिषु च तदन्तत्वासम्भवात्। तदाह–**सङ्ख्येति। सन्निपातेति।** बहिरङ्गासिद्धत्वं न, संज्ञायाःकार्यकालपक्षत्वेन समत्वात्। स्पष्टञ्चेदं **भाष्ये**।

**नोपधा** (पा०सू० ६।४।७)। नलोपस्यासिद्धत्वात् "नामि" (पा० सू० ६।४।३) इतिदीर्घाप्राप्तेरयमारम्भः। नामीत्यस्याङ्गविशेषणतैव न्याय्या, नामः प्रत्ययत्वात्। एवञ्च 'पञ्चानाम्' इत्यादौ पकाराकारस्य दीर्घवारणायोपधाग्रहणम्। नेति किम्? चतुर्णाम्। नामि किम्? चर्मणाम्। **नलोप इति।** "ध्रुवः पञ्चानाम्" (पा०सू० ३।४।८४) इति लिङ्गान्न सन्निपातपरिभाषाविरोधः।

**अष्टन आ** (पा०सू० ७।२।८४)। अनण्त्वान्नानुनासिक इति **भाष्ये** स्पष्टम्। जातिग्रहणेन गुणाभेदकत्वेन तु न सः, भाव्यमानत्वात्।

---

(१)**भस्य टेरिति**। अत्र "भाङ्डित्" इति सूत्रयित्वा प्रत्ययस्य डिद्वद्भावं कृत्वा टिलोपेन सर्वेष्टसिद्धिस्तु न कर्तुं शक्यते; सुपथिन्शब्दादिदमर्थेऽणि टिलोपे आभीयासिद्धत्वेन पुनष्टिलोपानापत्तेः। सिद्धान्ते तु "भस्य टेर्लोपः"(पा०सू० ७।१।८८) इत्यस्याभीयत्वाभावेन तेन पुनष्टिलोपः सिध्यति। न च सिद्धान्तेऽपि नित्यत्वात् परत्वाच्च पूर्वं "भस्य टेर्लोपः" इति लोपे नान्तत्वाभावेन "नस्तद्धिते" (पा०सू० ६।४।१४४) इति टिलोपो नैव भवतीति 'सौपथम्' इत्येव रूपं नतु 'सौपम्' इति, अत एव "पाथेयम्" इत्यादिप्रयोगाः सङ्गच्छन्ते इति वाच्यम्, एवमपि सुपथिन्शब्दात् णिचि इष्ठनि च "भस्य टेर्लोपः" इति लोपे "इष्ठेमेयःसु टेर्लोपः" इत्यर्थकेन "टेः" (पा०सू० ६।४।१४३) इत्यनेन पुनष्टिलोपे इष्टानां सुपयति सुपिष्ठ इत्यादीनामसिद्धिप्रसङ्गात्, डिद्वद्भावेन टिलोपेऽपि आभीयासिद्धेन पुनष्टिलोपानापत्तेरिति दिक्।

शुद्धोच्चारणादिति तु नात्र वक्तुं शक्यम्, "रायो हलि" (पा०सू० ७।२।८५) इत्युत्तरार्थन्तस्य चारितार्थ्यात्। प्रश्लेषेणापि न निर्वाहः, वाच्यवृत्त्याऽनुनासिकव्यावृत्तेस्तेनालाभात्। प्रत्युत तत्रापि गुणाभेदकत्वादेर्द्वैरत्वेनाऽऽन्तरतम्यादनुनासिकस्यैव प्राप्तेः। प्रश्लेषस्य पर्यायेण सकलाकारविधानार्थत्वं स्यात्। एवमन्यत्रापि बोद्ध्यम्। "रायो हलि" (पा०सू० ७।२।८५) इत्यतो हलीत्यपकृष्यते।

**अष्टाभ्य औश्** (पा०सू० ७।१।२१)। उङिति तु नोक्तम्, सकारस्योकारे 'अष्टा अ उ' इति स्थिते इङ्शीनामाद्गुणः सवर्णदीर्घत्वात्" इति न्यायेनान्तरङ्गत्वात्सवर्णदीर्घे तत आद्गुणे 'अष्टौ' इत्यस्य (१)सिद्ध्यापत्तेः। हलीत्यपकर्षे कृताकारादित्यनुपपन्नमत आह-**कृतात्वेति**। कृतात्वानुकरणमित्यर्थः। लक्षणवशसंपन्नत्वे हि तस्य वैकल्पिकतया लाघवादष्टभ्य इत्येव वदेदिति भावः। **ज्ञापयतीति**। (२)अयं भावः—हलीत्यपकृष्यमाणं वाक्यभेदेन पुनर्विधानार्थम्। तेन 'अष्टनः' (पा०सू० ६।३।१२५) इत्यस्य क्वचिदक्ष्वपि प्रवृत्तिरिति। **आत्वमिति**। आत्वमात्रमित्यर्थः।

**सूत्रे इति**। दीर्घान्तादष्टनः पराऽसर्वनामस्थानविभक्तिरुदात्तेति तदर्थः। **ज्ञापकादिति**। तद्धि 'अष्टभिः' इति ह्रस्वेऽन्तोदात्तव्यावृत्त्यर्थम्। एवञ्च ह्रस्वव्यावृत्त्यर्थं क्रियमाणं दीर्घग्रहणमात्ववैकल्पिकत्वे ज्ञापकम्। न च—'अष्टाभिः' इत्यत्र सावकाशस्य "अष्टन" इति सूत्रस्य 'अष्टभिः' इत्यत्र परत्वाद् "झल्युपोत्तमम् (पा०सू० ६।१।१८०) इत्यनेन

---

(१)असिद्ध्यापत्तेरिति। यद्यपि उङ्विधानेऽपि जश्शसोरकारस्य सकारस्थानिकोकारस्य च स्थाने जायमानस्य गुणस्य प्रत्ययावयवमात्रस्थानिकत्वेन प्रकृतिप्रत्ययोभयावयवाकारस्थाने जायमानात्सवर्णदीर्घादन्तरङ्गत्वेन पूर्वं गुणे ततो वृद्धौ नायं दोषस्तथापि शसि गुणे कृते अष्टा ओ इति स्थिते भसंज्ञायां "आतो धातोरित्यत्र धातुग्रहणमाव्निवृत्त्यर्थमेव" इति शेखरकारसिद्धान्ते तेन अष्टा इत्याकारलोपे अष्टौ इत्यसिद्ध्यापत्तिरूपो दोषो दुरुद्धर एव। एतेन "अष्टाभ्य ओश्" न्यासोऽपि परास्त इति बोध्यम्।

(२)अयं भाव इति। एतेन हलादिविभक्तौ कृतात्वानुकरणेन हलादावेव क्विदपूर्वकल्पना स्यान्न त्वजादावित्युक्तमित्यपास्तम्।

बाधे सकृद्गतिन्यायेन पुनरप्रवृत्तौ व्यर्थमेव तत्, न हि 'अष्टाभिः' इत्यत्र "झल्युपोत्तमम्" इति प्राप्नोति, कार्यकालपक्षेऽनान्तत्वेन षट्त्वाभावात्, अल्विधित्वेन स्थानिवत्त्वाभावाच्च; इति वाच्यम्, पुनःप्रसङ्गविज्ञानबोधनद्वारा एतद्विषये यथोद्देशपक्षस्यैवाश्रयणबोधनद्वारा वा तद्विकल्पे ज्ञापकमित्याशयादित्य(१)न्यत्र **विस्तरः** ।

**अष्टानामिति** । हलीत्युक्तेरादौ नुट्, तत आत्वम् । **यत्तु**–'स-

(१)**अन्यत्र विस्तर इति** । यथोद्देशपक्षे 'भविष्यति किञ्चिदनेन प्रयोजनम्' इत्यभिसन्धिमात्रेण सुबुत्पत्तिदशायामेव षट्संज्ञायां तत आत्वेऽपि नान्तसङ्ख्यावाचकत्वसमानाधिकरणधर्मविशेषस्य षट्त्वस्याल्धर्मत्वाभावेन स्थानिवत्त्वेनैकदेशविकृतन्यायेन वा सुलभत्वात् 'अष्टाभिः' इत्यत्रापि "झल्युपोत्तमम्" (पा०सू० ६।१।१८०) इत्यस्य प्राप्त्याऽष्टन्स्वरस्य निरवकाशतया तदपवादत्वात् । नच "अष्टानाम्" इत्यत्र तस्य चारितार्थ्यमिति वाच्यम् । "झल्युपोत्तमम्" (पा०सू० ६।१।१८०) इत्यस्याप्राप्तावपि "षट्त्रिचतुर्भ्यो हलादिः" (पा०सू० ६।१।१७९) इत्यस्य प्रवृत्त्या निरवकाशत्वस्य तदवस्थत्वात् । न चाऽऽकारान्ते उक्तरीत्या षट्त्वे 'अष्टौ' इत्यत्र जश्शसोर्लुगापत्तिरिति वाच्यम्, औश्विधिसामर्थ्यात्तदप्रवृत्तेः । नन्वेवं तत्राष्टन्स्वरस्य चारितार्थ्यमिति चेत्? न, अष्टन्शब्दस्य घृतादिपाठेनान्तोदात्ततया "एकादेश उदात्तेनोदात्तः" (पा०सू० ८।२।५) इत्येव तत्रान्तोदात्तत्वसिद्धेस्तदर्थमस्यानुपयोगात् ।

ननु 'प्रियाष्टाभिः' इत्यादौ तस्य चारितार्थ्यम् । "चतुरः शसि" (पा०सू० ६।१।१६७) इतिसूत्रस्थभाष्यप्रामाण्येन षट्स्वरविधायके विहितविशेषणाश्रयणेन तस्य गौणेऽप्रवृत्तेः स्वीकारात् । तत्र हि "स्त्रियां प्रतिषेधो वाच्यः" इति वार्तिकं चतसर्य्युदात्तनिपातनेन प्रत्याख्याय 'चतसृणाम्' इत्यत्र विभक्तिस्वरबाधमाशङ्क्य "षट्त्रिचतुर्भ्यो हलादिः" (पा०सू० ६।१।१७९) इति सूत्रस्थहलादिग्रहणस्य षट्सञ्ज्ञानां बहुवचनविषयत्वाद् बहुवचनेषु चाजादिविभक्त्योर्जश्शसोर्लुप्ततया, त्रिचतुर्शब्दयोरपि बहुवचनविषयत्वादसर्वनामस्थानपदानुवृत्तेर्जस्यप्राप्तौ, शसि च त्रिशब्दे "एकादेश उदात्तेनोदात्तः" (पा०सू० ८।२।५) इत्येव सिद्धेश्चतुर्शब्दे "चतुरः शसि" (पा०सू०६।१।१६७) इति स्वरेण बाधात् फलाभावेन निपातनस्वरस्य विभक्तिस्वराबाधकत्वे ज्ञापकत्वमुक्तम् । षट्स्वरस्य गौणेऽपि प्रवृत्तौ 'प्रियाष्टानः' इतिव्यावृत्तिफलसत्त्वेन हलादिग्रहणस्य ज्ञापकत्वपरभाष्यासङ्गतिः स्पष्टैव । न च 'कदष्टौ' इत्यत्राऽव्ययपूर्वपदप्रकृतिस्वरसत्त्वेन 'अष्टौ' 'परमाष्टौ' इतिवदेकादेशस्वरेणासिद्धेस्तद्व्यावृत्त्यर्थं हलादिग्रहणमावश्यकमिति वाच्यम्, एतद्भाष्यप्रामाण्येनैतदनभिधानात्; इति चेत्? न, दीर्घग्रहणज्ञापकपरभाष्यप्रामाण्येनाष्टन्स्वरस्यापि गौणेऽप्रवृत्तेः स्वीकारादिति दिक् ।

न्निपातपरिभाषयाऽत्र नात्वं, किन्तु "नोपधायाः" (पा०सू० ६।४।७) इति दीर्घे नलोपः। अन्तोदात्तत्वन्तु "षट्त्रि" (पा०सू० ६।१।१७९) इत्येव सिद्धम्। नलोपे तु न सन्निपातपरिभाषा, नलोपस्यासिद्धत्वात्' इति; तन्न, पूर्वत्र कर्त्तव्ये नलोपासिद्धत्वेऽपि तत्र कृतेऽसिद्धत्वे मानाभावात्, सन्निपातस्याशास्त्रीयत्वेन तस्य नलोपासिद्धत्वेनालाभाच्च, आरोपितासिद्धत्वेऽपि वस्तुतो नलोपे तद्विघातस्य जायमानत्वेन नलोपेऽपि तस्या दुर्वारत्वाच्च। अत एव 'गव्यिता' 'नाव्यिता' इत्यादौ सान्निपातपरिभाषया यलोपो न। अन्यथा "यस्य हलः" (पा०सू० ६।४।४९) इति यलोपस्य बहिर्भूततृज्निमित्तकत्वेन बहिरङ्गतयाऽन्तरङ्गावादेशं प्रत्यसिद्धतया निमित्तविघाताभावः स्पष्ट एव। तस्मान्नलोपस्यापि परिभाषाऽनित्यत्वेनैव साध्यतया तस्यासिद्धत्वादात्वमेव युक्तं तदनित्यत्वेन। किञ्च षट्सञ्ज्ञासन्निपातेन जातस्य नुट आत्वे नलोपे वा न तद्विघातकत्वं, स्थानिवद्भावेन कृतात्वेऽपि षट्त्वसत्त्वात्। कार्यकालपक्षे तत्तद्विद्ध्येकवाक्यतापन्नषट्त्वस्य बहिरङ्गतयाऽऽत्वे कृतेऽनान्तत्वेन षट्त्वाभावान्नुट् न स्यादिति हलीत्यपकर्षः। दीर्घग्रहणाज्ज्ञापकादाकारान्तस्य षट्सञ्ज्ञाश्रयणे, अत्र यथोद्देशस्यैवाश्रयणेनान्तरङ्गत्वात् पूर्वं षट्त्वे नान्तसङ्ख्यावाचकत्वसमानाधिकरणधर्मविशेषरूपस्य षट्त्वस्य स्थान्यल्धर्मत्वाभावेन स्थानिवद्भावादाकारान्ते आश्रयणे वा प्रतिपत्तिगौरवमिति बोद्धव्यम्।

वृत्त्याद्यनुसारेणाह-**गौणत्वे त्वित्यादि। स्थानिवद्भावादिति।** 'पूर्वत्रासिद्धे' इति तु 'तस्य दोषः' इत्यनेन निषिद्धमिति भावः। **कार्यकालपक्षे।** इत्यादि तु प्राचामनुरोधेनेत्युक्तम्। **प्राधान्य एवेति।** बहुवचननिर्देशात्। एवञ्च गौणे आदेशाप्रवृत्तौ तज्ज्ञाप्याऽऽत्वमपि नेति भावः।

**परे तु**-"ष्णान्ता" (पा०सू० १।१।२४) इति सूत्रे **भाष्ये** 'अष्टनाम्' इत्येतत्सिद्धये हलीत्यपकर्षमुक्त्वा तत्र पक्षे "प्रियाष्टौ, प्रियाष्टा इति न सिद्ध्यति, 'प्रियाष्टानौ, प्रियाष्टानः' इति प्राप्नोति" इति शङ्किते "अष्ट-

लक्षणमप्रयुक्ते" इति समाहितम् । तत्र यथालक्षणमिति प्रतीकमुपादाय "यस्य विशिष्टः प्रयोगो न स्मर्यते, नापि प्रयोगनिषेधस्मृतिः, तद् यथालक्षणमनुगन्तव्यं तदत्र मा भूदात्वमित्यर्थः" इत्येकमर्थमुक्त्वा "नैव वा लक्षणमप्रयुक्ते प्रवर्त्तते, प्रयुक्तानामेव लक्षणेनान्वाख्यानात्" इति व्याख्यानान्तरमुक्तम् । तत्रान्त्यव्याख्यानमेव ज्यायः, अप्रयुक्ते लक्षणाभावस्यैव योग्यता, न तु लक्षणप्रवृत्तेरित्यर्थसङ्गतेः आद्यव्याख्यायामप्रयुक्ते इति वाक्यशेषासङ्गतिः, प्रयुक्तेऽपि लक्षणानतिक्रमात् , प्रयुक्तानामिदमन्वाख्यानमित्यन्यत्र भाष्योक्तेश्च । किञ्च **भाष्यकारस्य** लक्ष्यैकचक्षुष्कतया इयमेव व्याख्योचिता, एकस्यैव प्रयोगस्य भाष्यफक्किकाव्याख्यानभेदेन साधुत्वासाधुत्वयोरनौचित्याच्च, "न वा" (पा०सू० १।१।४४) इति सूत्रे **भाष्ये** पक्षभेदेनैकस्यैव साधुत्वासाधुत्वयोस्तिरस्काराच्च । अत एव हल्ङ्यादिसूत्रादावस्याप्रयुक्ते लक्षणाभाव इत्येव व्याख्याऽऽहता **कैयटेन** । "नाम्रेडितस्य" (पा०सू० ६।१।९९) इति सूत्रेऽपि **कैयटः**—'प्रयोगमूलत्वादस्य शास्त्रस्य प्रयोगाभावे न प्रवृत्तिः' इति । एवञ्चैषामनभिधानमेवोचितम् । अत एव "अष्टाभ्य औश्" (पा०सू० ७।१।२१) इति सूत्रे **भाष्ये** "विभाषा आत्वं, यदयमात्वभूतस्य ग्रहणङ्करोति अष्टाभ्य इति । अन्यथा अष्टन इत्येव ब्रूयात्" इत्युक्तम् । **कैयट**रीत्या गौणे प्रवृत्त्यभावाय बहुवचननिर्देशस्यावश्यकतया तदसङ्गतिः स्पष्टैव । एवञ्च तत्प्रयोगविचारः सर्वोऽपि निष्फल एवेत्या(१)हुः ।

**निरुपपदादिति** । नुमोऽसमास एव विधानेन, सोपपदे "चोः कुः" (पा०सू० ८।२।३०) इति कुत्वेनैव सिद्धत्वेन क्विनि क्विपि च विशेषाभावादिति भावः । **कनाविति** । इदमुपलक्षणमुच्चारणार्थेकारस्यापि । ककारो गुणप्रतिषेधाद्यर्थः । नकारः "क्विन्प्रत्ययस्य" (पा०सू० ८।२।६२) इत्यत्र विशेषणार्थ इति **भाष्ये** स्पष्टम् ।

---

(१)आहुरिति । वस्तुतस्तु अलक्षणपदस्थलक्षणशब्दस्य लक्षणप्रवृत्तिपर्यन्तं लक्षणायां मानाभावेनाऽऽद्यव्याख्याया एव समीचीनतया तत्प्रयोगविचार आवश्यक एवेति दिक् ।

**सन्निहिते इति ।** तत्फलन्तु णिजादीनां (१)सञ्ज्ञाऽभावः । अतिङ् किम् ? (२)'रुरुदिव' इत्यादौ "नेड् वशि कृति" (पा०सू० ७।२।८) इति निषेधो मा भूदिति । (३)ज्ञापकेन निर्वाहस्तु व्याख्यानाद्दूरं करणमिति न्यायानुगृहीत इति सूत्राशयः ।

**युजेर** (पा० सू०७।१।७१) । "उगिदचाम्" (पा०सू० ७।१।७०) इत्यतः सर्वनामस्थाने इति, "इदितो नुम्" (पा०सू० ७।१।५८) इत्यतो नुमिति चानुवर्त्तते ।

**क्विन्प्रत्यय** (पा०सू० ८।२।६२) । प्रत्ययग्रहणसामर्थ्यादतद्गुणसंविज्ञानो बहुव्रीहिः । न च तदभावे वस्य कुत्वापत्तिः, तथा सति 'क्विनो घः' इत्येव वदेत् , "नशेर्वा" (पा०सू० ८।२।६३) इत्यत्र घानुवृत्त्यावप्यदोषादिति बोद्धयम् ।

**चोः कुः** (पा०सू० ८।२।३०) । "स्कोः" (पा०सू० ८।२।२९)

---

(१)**संज्ञाभाव इति ।** तेन 'स्तूयते' इत्यादौ अकृदिति पर्युदासो नेति दिक् ।

(२)**रुरुदिवेति ।** न चात्र "नेड्वशि कृति" (पा०सू० ७।२।८) इतिप्राप्तस्यात्रे निषेधस्य क्रादिनियमेन बाधाद् रूपसिद्धिर्निर्बाधैवेति वाच्यम् , मध्येऽपवादन्यायेन क्रादिनियमस्य "एकाच" (पा०सू० ६।१।१) इति "श्र्युक" (पा०सू० ७।२।११) इतिसूत्राभ्यां प्राप्तस्यैवेण्निषेधस्य नियामकत्वेन परस्य "नेड्वशि" (पा०सू० ७।२।८) इत्यस्य तेन बाधायोगात् । वस्तुतस्तु 'बभूविव' इति रूपस्य पुरःस्फूर्त्तिकत्वेन तत्रापि वजिाभावाद् , बाध्यसामान्यचिन्तयोक्तप्रकारेण प्रकृते दोषाभावाच्च 'अरुदिव' इति पाठः साधुः । तत्र हि "रुदादिभ्यः सार्वधातुके" (पा०सू० ७।२।७६) इति प्राप्तस्येटो निषेधाभावाय सूत्रेऽतिङ्ग्रहणस्यावश्यकत्वादिति बोध्यम् । (३)**ज्ञापकेनेति ।** "अकृत्सार्वधातुकयोर्दीर्घः" (पा०सू०७।४।२५) इतिसूत्रस्थसार्वधातुकग्रहणेन "तिङश्च" (पा०सू० ५।३।५६) इति सूत्रेण चेत्यर्थः । तथा हि "अकृत्सार्व" (पा०सू० ७।४।२५) इति सूत्रे सार्वधातुकग्रहणं 'चिनुयात्' इत्यत्र दीर्घाभावाय । यदि तिङः कृत्संज्ञा स्यात्तदा कृत्पर्युदासेनैव दीर्घाभावसिद्धेस्तद्वैयर्थ्यं स्पष्टमेव । एवं 'पचतितमाम्' इत्यादौ तिङन्तस्य कृदन्तत्वेन प्रातिपदिकतया "आतिशायने" (पा०सू० ५।३।५५) इत्यनेनैव तमबादिसिद्धे "तिङश्च" इत्यस्य वैयर्थ्यं स्पष्टमेव; इति सार्वधातुकग्रहणतिङश्चेतिसूत्रयोरुक्तार्थे ज्ञापकत्वं बोध्यम् । तिङः कृत्संज्ञाव्यावृत्तेः फलान्तरं तु 'पचति' 'चिकीर्षति' इत्यादौ तुग्व्यावृत्तिरिति ।

इत्यतोऽन्ते इति, "झलो झलि" (पा०सू० ८।२।२६) इत्यतो झलीति चानुवर्त्तते, "पदस्य" (पा०सू० ८।१।१६) इति चाधिकारः। **कुत्वस्यासिद्धत्वादिति।** अतद्गुणबहुव्रीह्याश्रयणात्प्राप्तिः। **सुयुगिति।** "सत्सूद्विष" (पा०सू० ३।२।६१) इति क्विप्। **धातुपाठेति।** (१)व्याख्यानादिति भावः। **युगिति।** "क्विप् च" (पा०सू० ३।२।७६) इति क्विप्। **इहेति।** "सृजिदृशोः" (पा०सू० ६।१।५८) इति सूत्रे 'रज्जुसृड्भ्याम्' इति **भाष्य**प्रयोगात्काम्यच्सूत्रे **भाष्ये** 'उपयट्काम्यति' इति प्रयोगात् "क्विन् प्रत्ययस्य" (पा०सू० ८।२।६२) इति कुत्वं नेत्यर्थः। **परिमृडिति।** "धातोरुच्यमानं कार्यं तत्प्रत्यये" (प० भा० ८८) इति परिभाषयाऽत्र सुब्निमित्तिका मृजेर्वृद्धिर्न। क्विब्निमित्तिका तु "क्ङिति च" (पा०सू० १।१।५) इति निषेधान्न। **परौ व्रजेः।** "क्विब्वचि" इत्युणादिपठितमि(२)ति मते ततः क्विब्दीर्घावनुवर्तेते, (३)व्याख्यानाच्च ताभ्यां पदान्त इत्यस्यासम्बन्धः, किन्तु षेणैवेत्याह—**क्विबित्यादि।**

**विश्वस्य** (पा०सू० ६।३।१२८)। "ढ्रलोपे" (पा०सू० ६।३।१११) इत्यतो दीर्घ इत्यनुवर्त्तते। ननु षत्वादीनामसिद्धत्वेन राट्शब्दपरत्वाभावः, अत आह—**पदान्तेति।** तेन 'विश्वराजौ' इत्यादौ न, 'विश्वाराड्भ्याम्' इत्यत्र च भवति। "आदित्यविश्ववसवः" (अ०को० १।१।१०) इत्यत्र तु न दीर्घः, "नरे सञ्ज्ञायाम्" (पा०सू० ६।३।१२९) इत्यतः (४)सञ्ज्ञापदापकर्षणात्।

---

(१)**व्याख्यानादितीति।** योगार्थस्य प्राचुर्येण प्रसिद्धेः 'अभिव्यक्तपदार्थाः' इतिन्यायमूलकाद्व्याख्यानादित्यर्थः। अत एव प्रतिपदोक्तस्यापि "कुर शब्दे" (धा०सू० ५०) इत्यस्य "न भकुर्छुराम्" (पा०सू० ८।२।७९) इत्यत्र न ग्रहणमित्याहुः।

(२)**इति मते इति।** यदा त्वन्येभ्योऽपि दृश्यते इति दृशिग्रहणात् क्विब्वचीति सिद्धमिति, तदाऽनेन षत्वमात्रं विधीयते इति बोध्यम्।

(३)**व्याख्यानाच्चेति।** 'परिव्राजौ' इति लक्ष्यदर्शनमूलकादित्यर्थः।

(४)**संज्ञापदापकर्षणादिति।** एवञ्च यत्र पूर्वोत्तरपदघटिता संज्ञा तत्रैव दीर्घः। कोशघटकपदानि तु प्रत्येकं संज्ञास्वरूपबोधकानि, न तूभयपदघटिता संज्ञा तत्रोपात्तेति भावः।

**स्कोः सं** (पा०सू० ८।२।२९)। 'झलो लोपः' संयोगान्तलोपः' इति **भाष्योक्तेरत्र** झल इत्यस्यासम्बन्धः। तेन झलः परयोः स्कोर्लोप इति नार्थ इत्यन्यत्र प्रपञ्चितम्। झलीत्यनुवर्त्तमानं झलादिप्रत्ययपरम् "झलो झलि" (पा०सू० ८।२।२६) इत्यत्र "उदःस्था" (पा०सू० ८।४।६१) इत्यारम्भेण तदर्थकतयाऽर्थाधिकारात्। तेन 'पृथक्स्थाता' 'पयःस्थितिः' इत्यादौ न दोषः, (१)सङीति वार्तिकाच्च। सनस्सकारमारभ्याऽऽमहिङो ङकारात्सङिति प्रत्याहारः। 'भूयास्ताम्' इत्यादौ 'व्यञ्जनपरस्य' इति न्यायेन लोपाभावेऽपि न क्षतिः।

के चित्त्वप्रत्यये संयोगादिलोपप्राप्तियोग्योदाहरणानामनभिधानमेवोचितम्। 'सङीति वक्तव्यं काष्ठशक्स्थाता' इति वार्त्तिकस्य प्रत्याख्यानपरेण "काष्ठशगेव नास्ति, कुतः काष्ठशक्स्थाता" इति **भाष्येण** तथैव बोधनादित्याहुः।

प्रत्याख्यानमे(२)कदेश्युक्तिः। सङीति वक्तव्यमेवेति **परे**।

"चोः कुः" (पा०सू० ८।२।३०) इत्येतत् षत्वेनापवादत्वाद् बाध्यते, क्विन्प्रत्ययस्य" (पा०सू० ८।२।६२) इत्यस्य तु क्विन्विधानसामर्थ्यादेव न बाध इत्याह—**क्विन्नन्तत्वादिति**। ऋत्विक्शब्दो यज्ञसम्बन्धिपुरुषविशेषे रूढः।

त्यदादीनामित्यनुवृत्तेराह—**त्यदादीनामिति**। तेन 'आतपः' इत्यादौ न। तदोः किम्? यः। तोरिति तु नोक्तम् 'अनेषा' इत्यादौ नस्याप्यापत्तेः न च नुटो बहिरङ्गत्वेनासिद्धत्वं। बहिर्भूतसुनिमित्तकत्वेनास्यैव बहिरङ्गत्वात्। इदञ्च "तस्मान्नुडचि" (पा०सू० ६।३।७४) इति सूत्रे **भाष्ये** (३)ध्वनितम्। सौ किम्? तौ। **अत्वसत्वे नेति**। गणकार्यत्वादिति भावः।

---

(१)**सङीति वार्त्तिकाच्चेति**। "परेश्च घाङ्कयोः" (पा०सू० ८।२।२२) इति सूत्रस्थ 'सङि लत्वसलोपसंयोगादिलोपकुत्वदीर्घत्वादीनि वक्तव्यानि' इति वार्तिकैकदेशभूतादित्यर्थः। (२)**एकदेश्युक्तिरिति**। 'पृथक्स्थाता' 'पयःस्थितिः' इत्यादीनां लोकसिद्धतया तदनभिधाने मानाभाव इति तदाशयः।

(३)**ध्वनितमिति**। तत्र हि तस्मादित्यस्याभावे नञ एव नुटः प्राप्तिमाशङ्क्य

**ङे प्रथ** (पा०सू० ७।१।२८)। "युष्मदस्मद्भ्यां ङसोऽश्" (पा०सू० ७।१।२७) इत्यतो युष्मदस्मद्भ्यामिति वर्त्तते। ङे इति पृथक्पदम्। अत एव "प्रथमयोरित्युच्यते। कयोः प्रथमयोः? विभक्त्योः। वचनयोस्तु न ग्रहणं "शसो न" (पा०सू० ७।१।२९) इति लिङ्गात्" इति **भाष्यं** सङ्गच्छते।

**त्वाहौ** (पा०सू० ७।२।९४)। यद्यपि युष्मदस्त्वादेशः "त्वमावेकवचने" (पा०सू० ७।२।९७) इति सिद्धः, तथापि युष्मानतिक्रान्तोऽतित्वमित्यर्थमत्र विधानम्। न चैवं तत्रास्य चारितार्थ्यात्केवले परत्वात्त्वमाभ्यां भाव्यमिति वाच्यम्,

'त्वमावपि प्रबाधन्ते पूर्वविप्रतिषेधतः।'

इत्यस्य वक्ष्यमाणत्वात्। "युष्मदस्मदोरनादेशे" (पा०सू० ७।२।८६) इत्यतो युष्मदस्मदोरिति वर्त्तते।

**शेषे** (पा०सू० ४।२।९२)। आत्वयत्वयोः प्रागुक्तत्वेन तद्विषयातिरिक्तविभक्तिरिह शेषशब्दार्थस्तदाह—**आत्वयत्वेत्यादि।**

स्पष्टञ्चेदं "युष्मदस्मद्भ्यां ङसः" (पा०सू० ७।१।२७) इत्यत्र,

---

"एवं तर्हि पूर्वान्तः करिष्यते। तत्रायमप्यर्थस्तदोः सः सावनन्त्ययोरितीति तदोर्ग्रहणं न कर्तव्यं भवति। तत्र हि तवर्गानिर्देशे एतत्प्रयोजनम् अनेषः करोतीति"। नचात्र परादित्वेऽपि निर्दिश्यमानपरिभाषया नुटो न भविष्यतीति तवर्गनिर्देशे न दोष इति वाच्यम्, निर्दिश्यमानत्वस्य विभक्त्यव्यवहितपूर्वत्वस्य च नुड्रहिते सत्त्वेन तदवयवत्वस्य च आद्यन्तपरिभाषया नुटि सत्त्वेन तवर्गनिर्देशे दोषस्य तदवस्थत्वमित्याशयात्। अत एव "श्नसोरल्लोपः" (पा०सू० ६।४।१११) इतिसूत्रस्थं तपरकरणं चरितार्थम्। तद्धि 'आयन्' 'आसन्' इत्यादौ आटो लोपाभावाय। अत एव 'चलीक्लृप्यते' इत्यादौ रीगादेर्लत्वम्। यावता पूर्वान्तः। एष दोषो न भवति। ततः पूर्वान्तत्वे अनुष्ण इत्यत्र नलोपमाशङ्क्य नुग्विधिसामर्थ्येन तं वारयित्वा ङमुटः प्राप्तिमुद्भाव्य परादित्वपक्षस्थापनेनेत्यर्थः। नचाजादिपदसन्निपातेन जातस्य नुकोऽजादित्वविघातकङमुटं प्रत्यनिमित्तत्वेन ङमुडप्राप्तौ तदसङ्गतिरिति वाच्यम्, नञोऽकचि चित्त्वादन्तोदात्तत्वे च कृते अर्मशब्देन नकशब्दस्य समासे 'अकनर्मम्' इत्यत्र "अर्मे चावर्णं द्व्यच् त्र्यच्" (पा०सू० ६।२।९०) इति पूर्वपदस्यानवर्णान्तत्वेनाद्युदात्तत्वाभावापत्तेरिति भाष्याशयात्।

प्रकृतसूत्रे च **भाष्ये** । अत एव "साम आकम्" (पा०सू० ७।१।३३) इति ससुट्कनिर्देशः सङ्गच्छते। एवञ्च शेषग्रहणं स्पष्टार्थं, विशेषविहिताभ्यां मात्वयत्वाभ्यां स्वविषये बाधसम्भवात् । **अन्त्यस्येति** । अलोऽन्त्यपरिभाषयेति भावः । त्वाहादयोऽकारान्ता इतिवृत्त्याद्यनुसारेणाह–**अतो गुण इति** । "त्यदादीनामः" (पा०सू० ७।२।१०२) इतिसूत्रभाष्यकैयटाभ्यां (१)हलन्ता एवादेशा इति लभ्यते, तदा पररूपस्य प्राप्तिरेव न । यद्यप्युच्चारणार्थानामपीत्संज्ञालोपाभ्यां निवृत्तिः कार्या, तथापि "अतो गुणे" (पा०सू० ६।१।९७) इत्यस्याप्रवर्त्तनेन प्रक्रियालाघवमत्र पक्षे । इत्संज्ञालोपयोस्तु सूत्र एव प्रवृत्तिरिति न प्रयोगसाधुत्वज्ञाने गौरवम्। "त्वाहौ सौ" (पा०सू० ७।२।९४) इति गुरुनिर्देशस्तु 'श्वेतवहोक्थशस्' इतिवन्नार्थसाधकः । (२)णिजन्तात्क्विपि युष्म् अस्म् इति प्रातिपदिकयोरादेशा एव नेति तदाशयः । 'मपर्यन्तस्य' इति**भाष्य**सम्मतश्चायमर्थ इत्यनुपदं स्फुटीभविष्यति । **अन्तरङ्गत्वादिति** । परनिमित्तानपेक्षत्वेन तत्त्वमिति भावः ।

**अलिङ्गे इति** । एवञ्च स्त्रियामनयोरवृत्तेर्न टाबिति भावः । इदं "साम आकम्" (पा०सू० ७।१।३३) इत्यत्र **भाष्ये** स्पष्टम् । **यद्वेति**। इदं "त्यदादीनामः" (पा०सू० ७।२।१०२) इति सूत्रे **भाष्ये** स्पष्टम्, "साम आकम्" (पा०सू० ७।१।३३) इत्यत्र च । **मपर्यन्ताच्छेषस्येति** । इदमुपलक्षणम् । तेन 'त्वम्' इत्यादौ लोपप्रवृत्तिवेलायां मपर्यन्ताच्छेषत्वाभावेऽपि न क्षतिः । ननु अदन्तत्वे आदेशानां "वाणादाङ्गम्"

---

(१)**हलन्ता इति** । तत्र हि "शेषे लोपः" (पा०सू० ७।२।९०) इत्यस्य आ-कत्वमुक्त्वा द्विपर्यन्तानां ग्रहणं प्रत्याख्याय 'टिलोपष्टावभावार्थः' इत्यादिना शेषग्रहणस्य टिलोपार्थकत्वमुक्त्वा तत् खण्डितम् । एवमपि त्वाद्यादेशानामदन्तत्वे वार्णादाङ्गस्य बलीयस्त्वात् पररूपं बाधित्वा शेषे लोपे टापः प्रसङ्गस्तादवस्थ्यं मनसिकृत्य 'त्व मम चादेशेष्वकार उच्चारणार्थौ, हलन्ता एव त्वादेशाः' इति न क्वचिट्टाप्प्रसङ्ग इत्युक्तम्।

ननु हलन्ता आदेशा इति पक्षे णिजन्तात्क्विपि मान्तयोर्हलन्तेषु त्वाहाद्यादेशेषु कृतेषु शेषेलोपे वकारहकारयोर्निवृत्त्यापत्तिरित्याशङ्क्याह–(२)**णिजन्तादिति** ।

(प०भा० ५५) इति परिभाषया पररूपात्पूर्वमेव टिलोपे टाबभाव उपपादयितुमशक्यः। अकारस्य कार्यद्वयेऽपि स्थानित्वेन समानस्थानिकत्वमस्तीति चेत्? न, हलन्ता एवादेशा इति **कैयटे**नात्रैवोक्तत्वेनादोषात्। शेष इत्यस्य सामर्थ्यात्तन्न्यायाप्रवृत्तिरत्रेत्यन्ये। तन्न, 'युष्मभ्यम्' 'युष्मत्' 'युष्माकम्' इत्यादौ टाब्निवृत्त्या चारितार्थ्यात्। तस्मादानन्त्यत्वात्तदप्रवृत्तिरित्येके। तदाह—**अतो गुणे कृते इति।**

अत्र वदन्ति—तत्तद्भाष्यप्रामाण्याच्छेषग्रहणससुट्कनिर्देशाभ्याञ्चास्य सूत्रस्याऽऽवृत्त्याऽर्थद्वये तात्पर्यम्। तच्च लक्ष्यानुरोधाद् व्यवस्थितम्। तेन भ्यमि टिलोपे युष्म्भ्यमिति न। अत एव "भ्यसो भ्यम्"(पा०सू० ७।१।३०) इति सूत्रे "यदि भ्यमादेशः, शेषेलोपोन्त्यलोप इति एत्वं प्राप्नोति। अथाभ्यमादेशः, शेषेलोपष्टिलोप इत्यन्तस्योदात्तनिवृत्तिस्वरः प्राप्नोतीति, यथेच्छसि तथाऽऽस्तु" इत्येवोक्तं, न तु भ्यमादेशे टिलोपमादाय फलभेद उक्तः।

वस्तुतस्तु टिलोपो व्यर्थः। अत एव "लिङ्गाभावाट्टिलोपवचनानर्थक्यम्' इति "साम आकम्" (पा०सू० ७।१।३३) इत्यत्र **भाष्ये** उक्तम्। अत्र लिङ्गाभावादित्युपलक्षणम्। 'शिशीलुङ्नुम्विधिभ्यो युष्मदस्मदोर्विभक्त्यादेशा विप्रतिषेधेन' इति "नेतराच्छन्दसि" (पा०सू० ७।१।२६) इतिसूत्रस्थ**भाष्य**वार्त्तिकबलेन लिङ्गवत्त्वेऽपि सन्निपातपरिभाषया टाबभावस्योपपादयितुं शक्यत्वम्। अत एव सन्निपातपरिभाषया 'बुद्धौ' इत्यत्र टाबभावः क्रन्मेजन्तसूत्रे **भाष्ये** उक्तः। शेषग्रहणं तु **भाष्ये** प्रत्याख्यातमेव। "त्यदादीनामः" (पा०सू० ७।२।१०२) इति सूत्रस्थं "टिलोपष्टाबभावार्थः" इति तु वार्त्तिकैकदेशिवचनमिति न दोषः। एतच्च **भाष्यप्रदीपोद्द्योते** निरूपितम्। अभ्यम् सूत्रे "यथेच्छसि, तथाऽस्तु" इति प्रौढोक्त्या भ्यमितिच्छेदस्य प्रौढवादत्वं भगवतैव सूचितं 'त्वं यथेच्छसि, तथाऽस्तु, तत्र दोषोद्धारो मया सुकरः' इति तत्तात्पर्यात्। अभ्यमित्येव तु च्छेदो न्याय्यः। अत एव "युष्मदस्मदोरनादेशे" (पा०सू० ७।२।८६) इति सूत्रे "न चाऽऽदेशो हलादिरस्ति" इति **भाष्योक्तिः** सङ्गच्छते

इति । **परमत्वमिति** । आङ्गत्वात्तदन्तविधिरिति भावः । गौणेऽप्रवृत्ते बीजाभावादाह—**अतित्वमिति** ।

**युवावौ** (पा०सू० ७।२।९२) । द्विवचनशब्दोऽत्र यौगिको (१)व्याख्यानात् । द्वयोर्वचनं बोधनं, तत्र समर्थयोर्युष्मदस्मदोरित्यर्थो भाष्य-प्रामाण्याच्च तद् गृह्यमाणयुष्मदस्मदोरेव विशेषणं, न तदन्तस्य । अङ्गा-धिकाराद्धि तदन्तग्रहणम् ; इत्याशयेनाह—**द्वयोरुक्ताविति** । एतत्सर्वं गौणोदाहरणेषु मूल एव स्फुटम् ।

**मपर्यन्तस्य किमिति** । (२)अधिकारसूत्रं किमर्थमित्यर्थः ।

ननु समुदायाऽऽदेशत्वेऽपि "ओकारसकारभकारादौ सुपि सर्वनाम्नः प्रागकच् , अन्यत्र तु सुबन्तस्य टेः प्राक्" इति व्यवस्थाया युष्मदस्मद्वि-षये 'त्वयका' इत्यादिसिद्धये वक्ष्यमाणत्वादन्तरङ्गत्वाद् 'युवाम्' इत्येतत्सि-द्ध्युत्तरमकजिति 'युवकाम्' इत्यत्र न दोषः, अत आह—त्वयेति । नन्वत्रापि 'अच्ये' इति न्यासेनैकारादेशेऽयादेशे च सिद्धेराह—**युवकाभ्या-मिति** । हलन्ता आदेशा इति पक्षे तु 'त्वया' इत्यादेरसिद्धिरेव; (३)मा-देशस्य सर्वादेशत्वञ्च न स्यादिति बोद्धयम् ।

नन्वेवमपि मान्तस्येत्येवोच्यतां, किं परिग्रहणेनेति चेत्? न, युष्म-यत्यादेः क्विपि सुप्यादेशाभावार्थं तत्सत्त्वात् । पर्यन्तशब्देन मान्तापेक्षवि-शेषस्य लाभात् । 'कटिपर्यन्तं वासः' इत्युक्ते 'अग्रे किञ्चिदस्ति' इति नियमेन प्रतीतेः । एवञ्च मान्ताद्यत्राग्रे किञ्चिदवशिष्टं तत्रैव युष्मदस्मदो-रादेशाः । अत एव **भाष्ये** "अवधिद्योतनार्थं परिग्रहणं कर्त्तव्यम् । मान्तस्येत्युच्यमाने यत्रैव मान्ते युष्मदस्मदी तत्रैवादेशाः स्युः । क्व च

---

(१)**व्याख्यानादिति** । त्रिचतुर्युष्मदस्मद्ग्रहणेष्वर्थग्रहणं शब्दविशेषणमित्यत्र "प्रत्ययोत्तरपदयोश्च" (पा०सू० ७।२।९८) इतिसूत्रस्थभाष्योक्तादिति भावः । कि-तद्यर्थमेवेत्याह—(२)**अधिकारसूत्रमिति** ।

(३)**मादेशस्येति** । त्वाद्यादेशानामनेकाल्त्वेन तत्सिद्धावपि मादेशस्य तत्स-ऽलोऽन्त्यपरिभाषयाऽन्त्यादेशत्वापत्तिः । अधिकारसूत्रसंत्त्वे तु मपर्यन्तस्य विधाने मकारादेशस्तस्यैव भवतीति भावः ।

मान्ते ? युष्मयतेरस्मयतेश्चाप्रत्यये" इत्युक्तम् । अवधिद्योतनार्थमित्यस्यान्तशब्दस्यावधिवाचकताद्योतनार्थमित्यर्थः, पर्यन्तशब्दस्य लोके तथैव प्रयोगात्, अग्रे किञ्चित्सत्त्वे देशकालयोरवधित्वव्यवहारस्य लोके दर्शनाच्च । तत्रैवेत्यस्य—'अनिष्ट एव' इत्यर्थः । परिग्रहणाभावे तु "यतः पूर्वोऽस्ति, परश्च नास्ति सोऽन्त्यः" इति **भाष्यो**क्तेर्मान्तपदस्य मुख्यार्थत्वलाभायात्रैव स्यात् । क्वौ लुप्तमित्यस्य प्रवृत्तिश्च स्यात् । "अभिव्यक्तपदार्थाः" इति न्यायश्च पदकार्यविषय इति तदाशयः । अत एव **भाष्ये** प्रयोगदर्शनं न कृतम् ।

**यत्तु**—परिग्रहणाभावे मान्ते यत्र ते तत्रैव स्यात् सामानाधिकरण्येनान्वयस्यौचित्यात् । सति तु तस्मिन् सामर्थ्याद्युष्मदस्मदोर्यौ मपर्यन्ताविति व्याख्यानाद् दान्ते, व्यपदेशिवद्भावेन युष्मयत्यादेः क्विपि च सिद्ध्यति । "व्यपदेशिवद्भावोऽप्रातिपदिकेन" (प०भा० ३२) इति तु प्रत्ययविधिविषयमिति; तन्न, परिग्रहणस्य वैयधिकरण्येनान्वये मणिमन्त्रादिन्यायेन नियामकत्वकल्पनापेक्षयोक्तस्यैव न्याय्यत्वात् । तत्र हि सामानाधिकरण्यासम्भवाद्वैयधिकरण्यान्वय इत्यन्यत् । किञ्चात्र व्याख्याने 'अवधिद्योतनार्थम्' इति **भाष्या**(१)क्षरास्वारस्यम् । "मपर्यन्तस्य" (पा०सू० ७।२।९१) इति च तद्गुणसंविज्ञानो बहुव्रीहिरिति दिक् ।

---

(१)**अक्षरास्वारस्यमिति** । वस्तुतस्तु पर्यन्तपदस्य यतोऽग्रे किञ्चिदवशिष्यते तत्र शक्तिरिति केनाप्यबोधनात् तवापि परिपदस्य तादृशार्थे मणिमन्त्रादिन्यायेनान्तपदशक्तेर्नियामकत्वमावश्यकम् । किञ्च तादृशार्थे नियामकत्वेऽपि वैयधिकरण्येनान्वयस्यावश्यकत्वमिति लाघवात्तत्सामर्थ्येन मदुक्तार्थ एव कल्पनीयः । ननु ममावधिद्योतनार्थमित्यक्षरास्वारस्यमिति चेत् ? सत्यम्, परं तु तवापि तत्रैवेत्यक्षरास्वारस्यम् । तत्रैवेत्यस्यानिष्ट एवेत्यर्थवन्मयाऽपि अवधिद्योतनार्थमित्यस्य वैयधिकरण्यान्वयद्योतनार्थमित्यर्थस्य कर्तुं शक्यत्वात् । अत एव कैयटे "क्वौ लुप्तम्" इत्यस्य प्रवृत्तिफलेन युष्मयतेः क्विपि निष्पन्नस्य युष्मच्छब्दस्य 'त्वम्' इत्यादीनि रूपाण्युक्तानि । तस्मादनभिधाने न दृढं मानम् । न च तथा ऽपि परिग्रहणं न कार्यम् । मान्तस्येत्येवोच्यताम्, अन्तग्रहणसामर्थ्याद्वैयधिकरण्येनान्वयो भविष्यतीति वाच्यम् । अन्तग्रहणाभावे मकारस्यैव निर्दिश्यमानत्वेन मकारस्यैव त्वाद्यादेशापत्तेरित्यलं क्षोदक्षेमेणेति दिक् ।

**अङ्गकार्ये इति** । अङ्गाधिकारस्थे इत्यर्थः । **मकारान्तरमिति**। "शसो न" (पा०सू० ७।१।२९) इत्यनेन संहितया पाठे इति शेषः। **परे तु** शेषविभक्तिभूताऽमादि–युष्मदादिसन्निपातेन जातस्य लोपस्य तद्विघातकश्यादिनिमित्तत्वं नेति सान्निपातपरिभाषयैव श्याद्यभावः । सुटस्तत्कमवयवत्वान्न तेन सान्निपातविघात इति सकारनिर्देशः "साम आकम्" (पा०सू० ७।१।३३) इत्यत्र । अत एव ङमोह्रस्वादचीत्यत्र "ह्रस्वत्वं तुग्निर्ग्रामणि कुलम्" इतिसन्निपातपरिभाषाप्रयोजनव्याख्यावसरे "यदा ह्रस्वमात्रस्य तुगागमो, न तदन्तस्य (१)तदेदं प्रयोजनम्" इति व्याख्यातं **कैयटेन** । मूलोक्तं तु न युक्तं, भाष्यानुक्तेः । अत एव "नेतराच्छन्दसि" (पा०सू० ७।१।२६) इति सूत्रे "नपुंसकादेशेभ्यो युष्मदस्मदोर्विभक्त्यादेशा विप्रतिषेधेन" इति वार्त्तिकं व्याख्याय "तेषु कृतेषु पुनः प्रसङ्गात् शिशीलुग्विधयः कस्मान्न भवन्ति ? सकृद्गतिन्यायात्" इत्युक्तम् । त्वद्रीत्या पुनः प्रसङ्गस्यैवाभावेन तदसङ्गतिः स्पष्टैव । अत एव च तत्र युष्मदादेर्विभक्त्यादेशस्य 'यूयं ब्राह्मणाः' इत्याद्यवकाशप्रदर्शनं कृतम् । अन्यथा तत्रापि जसःशीप्राप्त्या तदसङ्गतिः । 'यूयम्' इत्यादिप्रयोगकरणेन तत्र श्यादिशङ्कासमाधानाकरणेन च **भाष्यकृताऽत्र** सन्निपातपरिभाषाविषयत्वं सूचितम् । अङ्गवृत्तपरिभाषया वारणमपि चिन्त्यं तस्या अङ्गसम्बन्धि(२)कार्यविषयत्वात् । सूत्र**भाष्य**स्वरसोऽप्येवमेव । वस्तुतो नैषा लक्ष्यसंस्कारिका, "द्व्योः" इत्यादिनिर्देशासङ्गतेः । अत एव **भाष्ये** 'किमेतस्या ज्ञापने प्रयोजनम्' इति प्रश्ने 'पिबेर्गुणप्रतिषेधो न वक्तव्यः' इत्येव प्रयोजनमुक्तं, न तु प्रयोगासिद्धिः प्रयोजनमुक्तमित्या(३)हुः ।

---

(१)**तदेदं प्रयोजनमिति** । अवयवावयवन्यायेन तत्त्वेऽपि अवयवावयवन्यायप्रवृत्तिप्राक्क्षणे तद्विघातस्य सत्त्वात्तत्प्रवृत्तिः स्पष्टैव । "आद्यन्तौ" (पा०सू० १।१।४६) इतिसूत्रसहकारेणावयवत्वविशिष्टतत्तत्कार्यस्य विधानेन कस्मिंश्चिदपि क्षणे न सन्निपातविघात इति भावः । (२)**कार्यविषयत्वादिति** । जसः शीत्यादीनां न प्रत्ययसम्बन्धिकार्यतया तस्या अत्र प्रवृत्तेरयोगादिति भावः ।

(३)**आहुरिति** । **परे तु** प्राचीनमतमेव ज्यायः । यत्तु "नेतराच्छन्दसि"

**त्वमाविति ।** अत्रापि विभक्ताविति सम्बद्ध्यते । अन्यथा "प्रत्ययोत्तरपदयोश्च" इति व्यर्थं स्यात् । तत्फलन्तु त्वं सुन्दरः पुत्रो यस्य युष्मत्सुन्दरपुत्र इति त्रिपदबहुव्रीहौ नादेश इति । अत्रैकवचनशब्दो यौगिको व्याख्यानात् । तदाह—**एकस्येति ।**

**अविभक्तिकामिति ।** (१)व्याख्यानात् ।

**योऽचि** (पा०सू० ७।२।८९) । अनादेश इति किम् ? (२)त्वद्, मद् । "पञ्चम्या अत्" (पा०सू० ७।१।३१) इत्यदादेशः । आत्वविधायके च भ्यम् व्यावर्त्यः । वस्तुत उत्तरार्थमेव तत् । 'अभ्यम्' इत्येव च्छेदादिति **भाष्ये स्पष्टम् ।**

---

(पा०सू० ७।१।२६) इति सूत्रे "नपुंसकादेशेभ्यो युष्मदस्मदोर्विभक्त्यादेशा विप्रतिषेधेन" इति वार्त्तिकं व्याख्याय "तेषु कृतेषु पुनःप्रसङ्गाच्छिशीलुग्विधयः कस्मान्न भवन्ति, सकृद्गतिन्यायात्" इत्युक्तम्, तत्तु मकारप्रश्लेषमबुद्ध्वाऽङ्गवृत्तपरिभाषायाः प्रत्याख्यानाच्च सकृद्गतिन्यायेन समाहितमिति नास्माकं प्रतिकूलम् । तत्रापि सन्निपातपरिभाषामबुध्वेदं भाष्यं प्रवृत्तमित्यवश्यं वक्तव्यम् । अन्यथा सन्निपातपरिभाषयैव निर्वाहे सकृद्गत्याश्रयणमसङ्गतमेव स्यात् । न च लोकप्रसिद्धपरिभाषयैव निर्वाहे मकारप्रश्लेषे गौरवमिति वाच्यम् । "ते प्राग्धातोः" (पा०सू० १।४।८) इत्यादिनिर्देशैः "जसः शी" (पा०सू० ७।१।१७) इतिसूत्रविधेये सन्निपातपरिभाषाप्रयुक्तसङ्कोच एव नेति ज्ञापनेन तस्या अत्राप्राप्तेः । न च न मया विधेये सङ्कोचः स्वीक्रियते, अपि तु अनुज्ञावाक्ये एव । तथा च ते इतिनिर्देशेन "त्यदादीनामः" (पा०सू० ७।२।१०२) इत्यस्यानुज्ञावाक्ये "जसःशी" (पा०सू० ७।१।१७) इत्येतदतिरिक्तत्वेन सङ्कोचेऽपि अत्र सङ्कोचे मानाभाव इति वाच्यम्, "उपजीव्यविरोधो न न्याय्यः" इत्यक्षरस्वारस्यभङ्गापत्तेः । न हि तेन न्यायेनोपजीव्यविरोधकर्तुरनुज्ञादानं पापजनकमिति बोध्यते, अपि तूपजीव्यविरोधस्य पापजनकत्वमुच्यते । अत एव लोकेऽपि उपजीव्यविरोधकर्तैव निन्दितो भवति, न तु तन्मन्त्रयिता । प्रत्युत तन्मन्त्रयितुः प्रतिष्ठा जायते इत्यलं प्रसक्तानुप्रसक्तकल्पनयेत्याहुः ।

(१)**व्याख्यानादिति ।** "ङे प्रथमयोः" (पा०सू० ७।१।२८) इत्यत्र भाष्ये प्रथमयोर्विभक्त्योर्ग्रहणमित्यत्र "शसो न" (पा०सू० ७।१।२९) इत्यस्य "यदयं शसोनेति प्रतिषेधं शास्ति" इति ज्ञापकत्वमुपन्यस्य स्त्रियां नपुंसके च युष्मानित्यादिसिद्ध्यर्थं नत्वमनेन विधीयते इति भाष्योक्तादित्यर्थः ।

(२)**त्वद् मदिति ।** त्वमित्यपि बोध्यम् ।

**हलादाविति**। (१)परिशेषलब्धम्। हलीत्यनुवृत्तौ तु "योऽचि" (पा०सू० ७।२।८९) इत्यज्ग्रहणं माऽस्तु।

**भ्यसोभ्य** (पा०सू० ७।१।३०)। अत्र यद्वक्तव्यं तदुक्तम्। **पक्षद्वयेऽपीति**। तत्रान्त्यलोपे द्वयोरकारयोः पररूपे "एकादेश उदात्तेन" (पा०सू० ८।२।५) इत्यभ्यम आद्याकार उदात्तः। टिलोपेऽपि यत्रानुदात्ते वर्णे परे उदात्तो लुप्यते स वर्ण उदात्त इत्यर्थकेन "अनुदात्तस्य च यत्र" (पा०सू० ६।२।१६१) इत्यनेन स उदात्त एवेति न विशेष इति भावः।

(२)नन्वाकमः पूर्वं लोपाभावेनादन्तत्वाभावात्सुडागमाप्रसक्तेः ससुट्कनिर्देशो व्यर्थः, सूत्रासङ्गतिश्चेत्यत आह–**भाविन इति**। आकमि शेषे लोपे कृते प्राप्तस्येत्यर्थः। **अयं भावः**–सामः प्रसङ्गे आकमित्यनेन सुडामोरत्र विषयेऽत्यन्तमप्रयोगो बोद्ध्यते। स्थान्यादेशभावनिर्देशे सर्वत्रैवमेव। यथाऽऽर्द्धधातुकविषयेऽस्तेरप्रयोगो, भूप्रयोगश्च "अस्तेर्भूः" (पा०सू० २।४।५२) इत्यनेन प्रतिपाद्यते, न तु सतो निवृत्तिः शब्दानित्यत्वप्रसङ्गात्। किन्तु प्रसक्तबुद्धेरेव निवृत्तिः। सकारबुद्धिप्रसक्तेश्च प्रक्रि- साम्प्रतिक्या असम्भवाद्भाविन्या ग्रहणं, सकारोच्चारणसामर्थ्यादिति प्रथमप्र- वृत्त्यैव सुटो निवृत्तिर्न तु प्रवृत्त्यन्तरकल्पनयेति **भाष्ये** स्पष्टम्। तदिदं

---

(१)**परिशेषलब्धमिति**। नन्वनादेशग्रहणस्यात्र फलाभाव इत्यनुपदमेवो- त्वेन 'त्वम्'इत्यत्र यत्वाप्राप्त्या हलीत्यननुवृत्तौ तत्राप्यात्वं प्रसज्येत इति चेत्? न, तथा सति 'द्वितीयायां च" (पा०सू० ३।४।५३) इत्यस्य वैयर्थ्येन अनादेशे भव- चेद् द्वितीयायामेवेतिनियमात्तत्र तदप्राप्त्याऽनादेशाजादौ यत्वेन बाधात् परिशेष- लब्धमित्यस्य सुवचत्वात्।

(२)**नन्वाकम इति**। ननूपसंजनिष्यमाणन्यायेनाकृतव्यूहपरिभाषया वा यत्वाप्रवृत्त्याऽऽकमः पूर्वमन्त्यलोपेऽदन्तत्वात्सुटि तद्विशिष्टस्याऽऽकम्विधानार्थं ससु- ट्कनिर्देश आवश्यकः सूत्रसङ्गतिश्चेति चेत्? न, अनादेशे इति निषेधसम्भावना- यत्वप्रवृत्त्यभावसम्भावनाद्वारा अन्त्यलोपसुट्प्रवृत्तिप्रयोजिकायाः आकमादेशप्रवृत्तिस- म्भावनाप्रयोज्यत्वेन, आकमादेशप्रवृत्तिसम्भावनायाश्च अन्त्यलोपसुट्प्रवृत्तिप्रयोजक- या यत्वप्रवृत्त्यभावसम्भावना तत्प्रयोजकानादेशेतिनिषेधसम्भावनाप्रयोज्यत्वेन अन्यो- न्याश्रयग्रस्ततयाऽन्त्यलोपस्यापि पूर्वमप्रवृत्त्या ससुट्कनिर्देशासङ्गतेस्तदवस्थत्वात्।

त्विश्चाऽऽमोऽभावात् । अत्र सामः स्थानित्वोक्त्या स्थानिवत्त्वेन साम्त्वमेव, (१)न त्वाम्त्वम् । उक्तरीत्या च न स्थानिवद्भावप्रसक्तिः सैवाप्रसक्तिः ससुट्कनिर्देशेन बोद्ध्यते इति बोद्धव्यम् । अत एव 'अतित्वाकम्' इत्यादौ "प्रत्ययोत्तरपदयोः" (पा०सू० ७।२।९८) इति भाष्योदाहृते आकम्नुडभावौ सिद्धौ । आम्येव साम्त्वस्याहार्यारोपेणाऽऽदेशः । आदेशस्याम्त्वाभावाच्चात्र न नुट् । (२)न च यत्र साम् भावी तत्रैवायम्, (३)सामो

---

(१)नत्वाम्त्वमिति । ननु आमि साम्त्वस्यारोपेऽपि स्वतः सिद्धाम्त्वानातिदेशो दुर्वच इति चेत् ? न, ससुट्कनिर्देशसामर्थ्यादाम्त्वेतरधर्मस्यैवातिदेशबोधनात् । "भ्रस्जो रोप" (पा०सू० ६।४।४७) इत्यत्रेवात्रोभयपर्याप्तस्थानितानिरूपितादेशताऽऽकमि । तथाचाम्त्वस्य स्थान्येकदेशवृत्तित्वेन न तस्यातिदेशः । पदत्वादिकं तु आनुमानिकस्थान्यादेशभावेन सिद्धम् । आकमि सुट्त्वातिदेशस्य तु नोपयोग इति । आम्त्वावच्छेदेन साम्त्वारोपे आम्त्वस्यावृतत्वान्नातिदेशेनाकमि तद्बुद्धिः । स्थानिवृत्तित्वेनावभासमानधर्माणामेवादेशेऽतिदेशादिति तु तत्त्वम् ।

परे तु साश्च म् च साम् । आक् च अम् चेत्याकम् । सौत्रत्वान्न जश्त्वम् । यथासंख्येन साशब्दस्य स्थाने आक् आदेशो, मकारस्य च स्थाने अमादेशः । तथाचाम्त्वस्य स्थान्यवृत्तित्वेन न तस्यातिदेशः । अत्रैव तात्पर्यग्राहकः ससुट्कनिर्देश इत्याहुः ।

ससुट्कनिर्देशादाकामि ङित्त्वमारोप्य टिलोपे तेन सुटो नुटश्चाप्राप्तिरित्यन्ये ।

केचित्तु ससुट्कनिर्देशात् युष्मदस्मदोरन्त्यस्य सकारं विधाय युष्मदस्मच्छब्दात्तान्नाद्विहितविभक्त्यन्ततदादेरवयवस्य सामः स्थाने आकम्-विधानेनाम्त्वस्य स्थान्येकदेशवृत्तित्वेन न तस्यातिदेश इत्याहुः ।

कश्चित्तु "साम आकम्" (पा०सू० ७।१।३३) इत्यत्र नलोपेन सकारात्पूर्वं नकारं प्रश्लिष्य आकारात्पूर्वं सवर्णदीर्घेण निषेधार्थकाकारं च प्रश्लिष्य सुड्नुटौ न भवतः, आमः स्थाने आकम् च भवतीत्यर्थकल्पने न कश्चिद्दोष इत्याहेत्यलं विस्तरेणेति दिक् ।

गौणमुख्यसाधारण्येन आकमादेशप्रवृत्तिप्रयोजकं भाष्यसम्मतं साम्त्वस्याहार्यारोपमनङ्गीकृत्य 'यत्र सुड् भावी तत्रैवाकम् न गौणे' इति वादिनो मतं निरासितुमुपन्यस्यति-(२)नच यत्र साम् भावीति । खण्डयति—(३)सामो भावित्वस्य सर्वथा दुरुपपादत्वादिति । आकमादेशात् पूर्वं बाधकयत्वप्रवृत्तिसम्भावनया अन्त्यलोपाप्रवृत्त्या सुटोऽप्रसङ्गेन सामूरूपासम्भवात् । आकम्प्रवृत्तिसम्भावनया अन्त्यलोपे सुटि च सत्यपि साकम् इत्येव रूपं स्यान्नतु सामिति सर्वथा तद् दुरुपपादमिति भावः । ननु आकमादेशे आम्त्वारोपे सुटि च सकारोत्तरत्वविशिष्टाम्त्वे साम्त्वं सुलभमिति चेत् ? एवमपि तत्सम्भावनया पूर्वमामः स्थाने आकमि अन्त्यलोपे सुडापत्तिर्दुर्वारा । सकार-

भावित्वस्य सर्वथा दुरुपपादत्वात्, साम्त्वस्या(१)शास्त्रीयत्वेनातिदेशालभ्यत्वादिति (२)**भाष्यविरुद्धकल्पना** व्यर्थेति दिक्। ह्रस्वादिर(३)कम् तु न कृतः, अन्त्यलोपेऽप्यकारस्यैत्वनिवृत्त्या चारितार्थ्येन पररूपापत्तौ युष्माकमित्यसिद्ध्यापत्तेः।

द्विवचनैकवचनशब्दयोरर्थपरतया व्याख्याने फलं दर्शयति—**द्व्येकत्वेति**। द्वित्वैकत्व(४)विशिष्टावाचिनी इत्यर्थः। **समासार्थो**-मुख्यविशेष्यम्। **अन्यसङ्ख्यः**—युष्मदाद्यर्थगतसङ्ख्येतरसङ्ख्या(५)युक्तश्चेदित्यर्थः। **स्त इति**। अर्थपरत्वाश्रयणादिति भावः। **एते इति** कर्तृपदम्, **युवावाविति** कर्मपदम्, एवं त्वमावित्यपि। **पूर्वविप्रतिषेधत इति**। विप्रतिषेधे पूर्व इति, सुप्सुपेति समासः। अत एव "प्रत्ययोत्तरपदयोश्च" (पा०सू० ७।२।९८) इतिसूत्र**भाष्ये**"त्वमौ"(पा०सू० ७।२।९७) इतिसूत्रे 'शेषे' इत्यनुवर्त्य सुजस्ङेङस्व्यतिरिक्तविभक्तावेताविति व्याख्यातम्।

---

निर्देशसामर्थ्यान्न सुडिति चेत् ? न, गौणेऽप्रवृत्त्यर्थं तन्निर्देशस्य सार्थकत्वात्। स्थिआकमादेशे आम्त्वारोपे अतिदिष्टानतिदिष्ट धर्मसमुदायरूपस्य सकारान्तरत्वविशिष्टस्य अशास्त्रीयत्वेनातिदेशालभ्यत्वान्नातिदेशेन आमि तल्लाभसम्भव इत्याह-(१)अशास्त्रीयत्वेनेति। "ननु सामः "स्वं रूपम्" (पा०सू० १।१।६८) इतिशास्त्रग्राहितसङ्केतकत्वेन शास्त्रीयत्वादशास्त्रीयत्वं दुर्वचमिति चेत् ? न, शास्त्रग्राहितसङ्केतकत्वे सतिशास्त्रग्राहितसाधुत्वकवृत्तिविषयताप्रयोजकशास्त्रघटकपदप्रतिपाद्यत्वरूपशास्त्रीयत्वग्रहणेनात्र सामः शास्त्रग्राहितसङ्केतकत्व—शास्त्रघटकपदप्रतिपाद्यत्वयोः सत्त्वेऽपि शास्त्रग्राहितसाधुत्वकवृत्तिविषयताप्रयोजकपदप्रतिपाद्यत्वाभावेनाशास्त्रीयत्वस्य सुवचत्वात्। शास्त्रीयत्वमभ्युपेत्याप्याह-(२)**भाष्यविरुद्धेति**। "साम्त्वातिदेशेऽपि भाष्योदाहृते 'आवित्वाकम्' इत्यत्र सुडप्राप्त्या तत्राकमनापत्तिः, नुडापत्तिश्चेति भावः' इत्येवमपि कश्चिद्व्याचष्टे

(३)**अकम् तु न कृत इति**। **परे तु**-युष्मयतेरस्मयते क्विपोऽनभिधाने प्रवणाभावस्य पूर्वमुक्तत्वेन तत्र दीर्घोच्चारणस्य चारितार्थ्यमित्याहुः। एतेन "युष्मदस्मदोर्हलीति वर्तते ततो "योऽच्यनादेशे" इति पाठे नात्वेन सिद्धावाकम्याकारोच्चारणं कर्तव्यम्" इत्यपि अपास्तम्।

(४)**विशिष्टेति**। समासे युष्मदस्मदर्थगतसंङ्ख्याया अभानादिति भावः। (५)**युक्तश्चेदिति**। युक्तश्चेदपीत्यर्थः। तेन द्वित्वैकत्ववाचिन्यन्यपदार्थेऽपि त्वकौ युवावौ च भवन्त्येवेति दिक्।

**त्वमौ न चेति**। अर्थपरत्वाश्रयणादेवेति भावः। **इति विग्रहे इति**। एवं विग्रहे यादृग्रूपाणि तानि वक्ष्यन्ते इति शेषः। **अतित्वाकमिति**। अत्र यथाऽऽकम्नुडभावौ, तथा उक्तम् ।

**पदस्य** (पा०सू० ८।१।१६)। "अपदान्तस्य मूर्द्धन्यः" (पा०सू० ८।३।५५) इत्यतः प्रागयमधिकारः। तत्फलन्तु 'राजानौ' इत्यादौ नलोपाभावः। इयं क्वचित्स्थानषष्ठी, क्वचिदवयवषष्ठी। "हो ढः" (पा०सू० ८।२।३१) इत्यादावाद्या, "मादुपधायाः" (पा०सू० ८।२।९) इत्यादावन्त्या। तेन 'वृक्षवन्तौ' इत्यादौ वत्वसिद्धिः। अन्यथा मत्वन्तपदाभावान्न स्यात्। अत एव "नलोपः" (पा०सू० ८।२।७) इति सूत्रेऽन्तग्रहणं चरितार्थमिति स्पष्टं **भाष्ये**। "त्रः सङ्ख्यायाः"इत्यत्र नलोपाभावस्तु"झलाञ्जश् झशि" (पा०सू० ८।४।५३) इत्यत्र जश्त्वाभाववद् बोद्धयः।

**पदात्** (पा०सू० ८।१।१७)। "कुत्सने च सुपि" (पा०सू० ८।१।६९) इत्यतः प्रागयमधिकारः। "अनुदात्तं सर्वम्" (पा०सू० ८।१।१८) इत्यादिपदत्रयमापादसमाप्तेः। सर्वग्रहणन्तु "तिङ्ङतिङः" (पा०सू० ८।१।२८) इत्यादौ सर्वानुदात्तत्वस्य विनिगमनाविरहाल्लाभेऽपि स्पष्टतया तल्लाभार्थमित्याकरे स्पष्टम्। "आदेः परस्य" (पा०सू० १।१।५४) "अलोऽन्त्यस्य" (पा०सू० १।१।५२) इत्यनयोस्तु न प्राप्तिः, पदस्येत्यस्य 'अनुदात्त' 'तिङ्' इत्यादिश्रुतप्रथमान्तानुरोधेन प्रथमया विपरिणामेन स्थानषष्ठ्यभावात्। तत्र पादशब्देन ऋक्पादः, श्लोकपादश्चाविशेषाद् गृह्यते। अपादादिशब्देन पादान्तपादमध्यस्थवद् छन्दोहीनवाक्यस्थस्यापि ग्रहणं, 'ग्रामे कम्बलो मे स्वम्' इति **भाष्यात्**।

**षष्ठ्यादीति**। सर्वस्य पदस्येत्युभयाधिकारसामर्थ्यादिदं लभ्यते इत्यन्यत्र विस्तरः। **तौ चानुदात्ताविति**। अनुदात्तत्वगुणविशिष्टयोर्विधानादिति भावः।

**उक्तविधयोरिति**। पदात्परयोरपादादौ स्थितयोरित्यर्थः। द्वितीयायां त्वामयोरपवादत्वादाह—**षष्ठीचतुर्थ्येंकेति**।

विभक्तिक्रमलब्धद्वितीयादिक्रमेणोदाहरति—**श्रीश इति**। दत्वादि-त्यनेन चतुर्थ्यन्तत्वं स्फुटीकृतम्। **संवेद्योऽस्मानिति**। नन्वत्र सन्ध्यभाव नवाक्षरत्वेनानुष्टुप्पादत्वानापत्तिः। सन्धौ तु उभयत आश्रयणेऽन्तादिवत्त्वाभावेन कथमादेशप्राप्तिरिति चेत्? न, संवेद्यो इत्येकादेशविशिष्टस्य पूर्वान्तवत्त्वेन पदत्वात्, स्मानित्यस्य चैकदेशविकृतन्यायेन द्वितीयान्ता-(१)स्मच्छब्दत्वेन तत्प्राप्तिरित्याशयात्। सन्धिश्चान्तरङ्गत्वादादेशात्पूर्वमेव। (२)आदेशे सति 'नः कृष्णः सर्वदाऽवतु' इति पादादित्वापत्त्यो(३)पजीव्याविरोधान्नाऽऽदेश इत्यन्ये। उभयत आश्रयणेऽपि तस्य स्वीकार इति इण्धातौ निरूपयिष्याम इति (४)परे।

ननूक्तरीत्या षष्ठ्याद्यन्तानामेवाऽऽदेशा भविष्यन्ति, किं स्थग्रहणेन? अत आह—**स्थेति**। अङ्गानौ स्थशब्द इति भावः। **युष्मत्पुत्र इति**। युवयोर्युष्माकं वा पुत्र इत्यर्थः। यद्यपि वृत्तौ सङ्ख्याविशेषानवगम इति

---

(१)**अस्मच्छब्दत्वेनेति**। नन्वस्मच्छब्दत्वस्य परिच्छिन्नधर्मसमनियतधर्मत्वेनोक्तपरिमाणत्वात्कथं तत्प्रवृत्तिः। न चैवम् "उदके केवले" (पा०सू० ६।२।९६) इतिसूत्रस्थभाष्यविरोधः, तत्र दकशब्दे उदकशब्दत्वस्यैकदेशविकृतन्यायेनोक्तत्वादिति वाच्यम्, उदकशब्दान्तसमासघटकोत्तरपदाव्यवहितपूर्वपदस्यान्त उदात्तो भवतीत्यर्थेन ओदकशब्दे परादिवद्भावेन उदकशब्दत्वात्तदन्तसमासघटकोत्तरपदमेकदेशविकृतन्यायेन दकेति तदव्यवहितपूर्वपदत्वस्य पूर्वान्तवद्भावेन गुडोशब्दे सत्त्वाद् तदव्यवहितं पूर्वपदं गुडो इति, तस्यान्तोदात्तत्वस्य अन्यथैव सिद्धत्वात्, तस्यैकदेशयुक्तत्वाच्चेत्यरुचेराह-(२)**आदेशे सतीत्यादि**।

(३)**उपजीव्यविरोधादिति**। तया विधेये स्वप्रवृत्तिनिमित्तविघातकातिरिक्तत्वेन सङ्कोचादिति भावः। विधेये एवानया सङ्कोचो, न तु पूर्वसूत्रानुज्ञावाक्ये इति पूर्वमुपपादितमेव। अत एव 'न चाऽऽदिरेव नकार उदात्तगुणविशिष्टान्तरतमाज्रूपोऽस्त्विति वाच्यम्, तथा सति निमित्तभूनद्यचकत्वस्य विनाशादुपजीव्यविरोधेनाऽऽद्युदात्ताप्राप्तेः' इत्यादिपरिभाषेन्दुशेखराऽऽत्रत्यं भाष्यं च सङ्गच्छते। अन्यथा "वान्तो यि प्रत्यये" (पा०सू० ६।१।७९) इत्यस्योदात्तस्य निमित्तविघातकत्वाभावे तेनानुज्ञादाने बाधकाभावेनैतदसङ्गतमेव स्यादिति विभावनीयम्। (४)**परे इति**। अव्यवहितपूर्वत्वाव्यवहितपरत्वयोर्व्यपवर्गधर्मत्वेन वस्यातिदेशस्तेन दुर्लभ इतीदं चिन्त्यमित्याहुः।

भाष्ये स्पष्टं, तथापि सम्बोद्ध्यत्वेनैवानेकव्यक्त्यवगतिर्न तु द्वित्वादेर्भानं, नाप्येकत्वस्येति त्वमौ न कृतौ । विग्रहे तु संङ्ख्याविशेषभानात् द्विवचनादि भवत्येव । तस्य लुक्यपि प्रत्ययलक्षणेन द्विवचनाद्यन्तत्वम् । अत एव 'वध्वोरगारं वध्वगारम्' इति प्रगृह्यसञ्ज्ञासूत्रे **भाष्ये** प्रयुक्तम् । वचनद्वयविषयसूत्रप्रत्युदाहरणलाभाय 'इति त्वत्पुत्रः' इति न प्रत्युदाहृतम् ।

**समानवाक्ये इति** । निमित्तनिमित्तिनोरेकवाक्यस्थत्वे इत्यर्थकं 'समानवाक्ये' इति प्रकृत्य विधेया इत्यर्थः । निघातो नामानुदात्तः । **एकातिङ्ङिति** बहुव्रीहिः, एकतिङन्तघटितमित्यर्थः । तेन 'पचति' इत्ये(१)तन्मात्रस्य न वाक्यत्वम् । इदं स्वशास्त्रकार्योपयोगि एकवाक्यत्व-

---

(१)**एतन्मात्रस्येति** । मात्रशब्दोऽत्रावधारणे । 'पचति' इत्यस्यैव न वाक्यत्वमपि तु व्यपदेशवद्भावेन तस्य, तद्घटितसमुदायस्य च । 'पचति' इत्येतन्मात्रस्य तत्त्वफलं तु "अनन्त्यस्यापि प्रश्नाख्यानयोः" (पा०सू० ८।२।१०५) इति प्लुतसिद्धिः ।

नन्वेकतिङन्तघटितत्वरूपैकवाक्यत्वस्वीकारे 'त्वया शयितव्यम्' इत्यस्यैकवाक्यत्वानापत्तिः, त्वया शयितव्यमिति रामो वदति' इत्यत्रैकवाक्यत्वापत्तिश्च, इति चेत् ? न, मुख्यविशेष्यतायोग्यक्रियाप्रतिपादकत्वप्रकारकतात्पर्यविषय-पदाघटक-पदद्वयाघटितत्वरूपतत्त्वस्वीकारेण 'त्वया शयितव्यम्' इत्यादौ मुख्यविशेष्यतायोग्या या शयनक्रिया तादृशशयनक्रियाप्रतिपादकत्वेन तात्पर्यविषयभूतं शयितव्यमित्येकमेव पदं, न तु पदद्वयमिति; तादृशपदद्वयाघटितत्वं 'त्वया शयितव्यम्' इति वाक्यस्येति लक्षणसमन्वयः । 'त्वया शयितव्यमिति रामो वदति' इत्यत्र तु मुख्यविशेष्यत्वयोग्यक्रिया वदनक्रिया शयनक्रिया च, शयनक्रियायाः कर्मत्वसम्बन्धेन वदनक्रियायामन्वयेन मुख्यविशेष्यत्वाभावेऽपि तदसमभिव्याहारे विशेष्यत्वसत्त्वेन तद्योग्यत्वस्य सुस्थत्वात्, तत्प्रतिपादकत्वप्रकारकतात्पर्यविषयभूतं पदद्वयं वदति शयितव्यमिति च, तद्घटितत्वमेव 'त्वया शयितव्यमिति रामो वदति' इति वाक्यस्येति नातिव्याप्तिः । ब्रूहि ब्रूहि राम' इत्यत्राव्याप्तिवारणार्थं पदाघटकेति निवेशः । न चैवमपि 'ग्रामं गच्छ, तव' इत्यस्य निरुक्तदिशा तत्त्वापत्तिरिति वाच्यम् , परस्परनिरूप्यनिरूपकभावानापन्नविषयताप्रयोजकपदाघटितत्वमिति विशेषणदानेनादोषात् । यद्वा, स्ववृत्त्यानुपूर्वीमत्त्वं, स्वप्रयोज्यविषयताप्रयोजकत्वमेतदुभयसम्बन्धेन मुख्यविशेष्यतायोग्यक्रियाप्रतिपादकत्वप्रकारकतात्पर्यविशेष्यपदविशिष्टतरद् यत् मुख्यविशेष्यतायोग्यक्रियाप्रतिपादकत्वप्रकारकतात्पर्यविशेष्यं पदं तादृशपदद्वयाघटितत्वे सति परस्परनिरूप्यनिरूपकभावानापन्नविषयताप्रयोजकपदाघटितत्वं तत्त्वमिति । लक्षणसमन्वयस्तु स्वयमूह्य इत्यलं विस्तरेण ।

लक्षणम् । तेन 'पश्य मृगो धावति' इत्यादौ लौकिकैकवाक्यत्ववत्त्वा नाव्याप्तिः । समर्थसूत्रे **भाष्ये** स्पष्टमेतत् । अत एव "तिङ्ङतिङः" (पा०सू० ८।१।२८) इत्यत्रैतदाश्रित्य अतिङ' इति प्रत्याख्यातं **भाष्ये**। लौकिकवाक्यत्वञ्च—

सुप्तिङन्तचयो वाक्यं क्रिया वा कारकान्विता (अ०को० १।६।२)

इत्य**मरेणोक्त**म् । वाशब्दश्चेदर्थे । कारकान्विताक्रिया चेद्, बोद्ध्येति शेषः । तेन निरर्थकशब्दसमुदायव्यावृत्तिः । सुप् च तिङन्तञ्च सुप्तिङन्ते, सुब्विशिष्टं तिङन्तं, तेषामेकशेषः । तेन कारकान्वितक्रियाबोधकसुबन्तचय–तिङन्तचय–सुप्तिङन्तचयानां त्रयाणामपि वाक्यत्वलाभः। तत्र सुबन्तचयो—देवदत्तेन शयितव्यम् । द्वितीयं—पचति भवतीत्यादि। तृतीयं—चैत्रः पचतीत्यादि ।

* (एतत्समानार्थकमेव "तिङ्ङतिङः" (पा०सू० ८।१।२८) इति सूत्रे 'अतिङ' इति वदत्सूत्रकाराभिप्रेतं वाक्यलक्षणम्'आख्यातं सविशेषणं वाक्यम्' इति समर्थसूत्र**भाष्ये** उक्तम्। तत्राऽऽख्यातपदेन क्रियाप्रधानं लक्ष्यते । तेन 'त्वया शयितव्यम्' इत्यादेः सङ्ग्रहः । सविशेषणमित्यस्य साक्षात् परम्परया वा यद्विशेषणं, तत्सहितेत्यर्थः।तेन 'नद्यास्तिष्ठति कूले' इत्यादौ नद्याः समानवाक्यस्थत्वसिद्धिः । सविशेषणत्वेन विभागे साकाङ्क्षत्वं ल०ध्यम्। एतदेवैकोद्देश्यकैकविधेयकत्वरूपैकार्थत्वगर्भमेकवाक्यत्वलक्षणं बोध्यम् । "अर्थैक्यादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात्" (जै०सू०) इति जैमिन्युक्तेः । अनेन च 'ब्रूहि ब्रूहि' इत्यस्यासङ्ग्रहो, विशेषणानुपादानेन सविशेषणत्वाभावात् । वाक्यत्वफलं त्वत्र प्रश्नोत्तरे "अनन्त्यस्यापि प्रश्नाख्यानयोः" (पा०सू० ८।२।१०५) इत्यनेन वाक्यस्य टेः प्लुतसिद्धिः । अतः स्वशास्त्रपरिभाषितं लक्षणम् 'एकतिङ् वाक्यम्' इत्युक्तम् । अत एव एतदुदाहणं 'ब्रूहि ब्रूहि' इत्येव **भाष्ये** दत्तम् । **यत्तु**—अत्रोदाहरणं देवदत्तेति विशेषणं पूरणीयमिति; तन्न, पूर्वलक्षणेनैव सिद्धेः, द्विः प्रयोगस्य

* एतत्समानार्थकमेवेत्यादिः इत्यलमित्यन्तो ग्रन्थः क्वचित्पुस्तके ।

भाष्ये व्यर्थत्वापत्तेश्च । यद्यपि पदद्वित्वेऽवान्तरपदत्वमप्यस्ति, तथापि 'एकतिङ्' इत्यस्य एकानुपूर्वीकैकतिङन्तवदित्यर्थ इति न प्रकृते दोष इत्यलम्।

**ओदनं पचेत्यादि ।** (१)समर्थपरिभाषा त्वत्र न प्रवर्त्तते, एकार्थीभावविषये एव (२)तत्प्रवृत्तेरिति भावः । **एते वांनावादय इति ।** इदञ्च "सपूर्वायाः" (पा०सू० ८।१।२६) इत्यत्र **भाष्ये** स्पष्टम् ।

**न च वा** (पा०सू० ८।१।२४) चादयः समुच्चयविकल्पादूभुतखेदावधारणार्थाः तेषामन्यतमेन योगे इत्यर्थः । ननु तृतीयानिर्देशेनैव सिद्धे युक्तग्रहणं व्यर्थमत आह—**युक्तग्रहणादिति । साक्षादिति ।** युष्मदस्मदर्थगतसमुच्चयादिद्योतकत्वे इत्यर्थः । **परम्परेति ।** स्वार्थाश्रयान्वय्यन्वयित्वादिरूपेत्यर्थः ।

**चेतसेति ।** 'अनालोचनार्थैः' इत्येव पर्युदासेन सिद्धे 'पश्यार्थैः' इत्येतद् (३)इन्द्रियजन्यसकलज्ञानसङ्ग्रहार्थमिति भावः । **परम्परेति ।** स्वान्वितान्वयित्वादिरूपेत्यर्थः । तदुक्तं **भाष्ये** "पश्यार्थैश्च प्रतिषेधः 'समानवाक्ये' इति प्रकृत्य वक्तव्यः । इतरथा हि यत्रैव पश्यार्थानां युष्मदस्मदी साधनं, तत्र प्रतिषेधः स्यात् , ग्रामस्त्वां सम्प्रेक्ष्य गत इति । इह न स्यात्—ग्रामस्तव स्वं सम्प्रेक्ष्य गतः" इति । समानवाक्ये इति करणेन समानवाक्ये पश्यार्थैर्युक्ते युक्तयुक्ते च युष्मदाद्यर्थे आदेशप्रतिषेध इति **कैयटः ।** एवञ्च "न चवा" (पा०सू० ८।१।२४) इति सूत्रे युक्तग्रहणं स्पष्टार्थमेव । तदभावेऽपि प्रकृतसूत्रस्येव तस्यापि साक्षात्सम्बन्धे एव प्रवृत्तिः स्यात् । समा-

---

(१)**समर्थपरिभाषा त्वत्रेति ।** वार्त्तिकारम्भसामर्थ्यादिति भावः । ननु समर्थपरिभाषाया अत्र प्रवृत्तिरेवास्तु, वार्त्तिकं च माऽस्त्वित्याशङ्क्याह—(२)**तत्प्रवृत्तेरिति ।** युष्मदस्मदादेशानां प्रवृत्त्यापत्तेरित्यर्थः । यद्वा यतो हि तत्प्रवृत्तेरेकार्थीभाव एव विषयो विषयम् अतोऽत्र न प्रवर्त्तते, लक्ष्यानुरोधादिति भावः ।

(३)**इन्द्रियजन्यसकलेति ।** ननु ज्ञानमात्रे आत्ममनःसंयोगस्य कारणत्वेन सर्वमपि ज्ञानमिन्द्रियजन्यमेवेति पुनरपि तद्वैयर्थ्यमिति चेत् ? न, इन्द्रियजन्यमित्यस्य इन्द्रियत्वावच्छिन्नजनकतानिरूपितजन्यतावदित्यर्थस्य विवक्षणेन सर्वज्ञानस्येन्द्रियजन्यत्वेऽपि तत्तदिन्द्रियत्वावच्छिन्नजनकतानिरूपितजन्यतावत्त्वस्याभावेनादोषात् ।

नवाक्ये इत्येतत्सम्बन्धात्तु अस्य युक्तयुक्तेऽपि प्रवृत्तिरित्यन्यत्। अत ए 'देवदत्तस्य पुत्राद् यज्ञदत्तः पृथक्' इत्यादौ देवदत्तशब्दान्न पञ्चमीत्याहः **भक्तस्तवेति** । 'इह तव' इत्यस्य रूपेण सम्बन्धो, न तु साक्षाद्व्या तिनेति भावः ।

**सपूर्वा** (पा०सू० ८।१।२६)। सहशब्दो विद्यमानवाची । अने रपि सम्बन्धित्वेन विवक्षायां (१)षष्ठ्यर्थेऽन्यपदार्थे "अनेकम्" (पा०सू० २।२।२४) इति समासो, "वोपसर्जनस्य" (पा०सू० ६।३।८२) इति स तदाह-**विद्यमानपूर्वादिति** । प्रत्ययग्रहणे तदन्तग्रहणमित्याह-**प्रथमान्तादिति** । ननु "एते वांनावादयः" (का०वा०) इत्यनेनैव विकल्प सिद्धेः किमेतेनेत्यत आह-**अन्वादेशेऽपीति** । अत्र नेति निवृत्त तदाह-**आदेशा वेति । तेनेति** । भक्तत्वेनेत्यर्थः । प्रक्रान्तार्थत्वा यच्छब्दोपादानापेक्षेति भावः । स्पष्टञ्चेदं सप्तमोल्लासे **काव्यप्रकाशादौ** । अत्र 'हरिस्त्वाम्' इत्येकमुदाहरणम् । 'स माम्' इत्यपरम् त्रायते इत्यस्य च मध्यमाणिन्यायेन तन्त्रेणोभयत्रान्वयः । तेन स इत्यस्या समानवाक्यस्थत्वेन विद्यमानपूर्वत्वं बोद्धव्यम् ।

**साऽऽमन्त्रितम्** (पा०सू० २।३।४८) । "सम्बोधने च" (पा०सू० ३।२।१२५) इत्यतः सम्बोधने इति वर्त्तते । 'सा' इत्यनेन प्रथमा परामृश्यते । आमन्त्रणमामन्त्रितमिति महासञ्ज्ञा(२)बलात्तदन्तविधिरित्याह-**तदन्तमिति** । अत एव है हे भो इत्यादीनामपि संज्ञासिद्धिः । अन्यथा "अन्तरङ्गानपि" (प०भा० ५२) इति न्यायेन पूर्वं विभक्तिलुकि प्रथमाया अभावेन 'नखनिर्भिन्नः' इत्यत्रैसभाववदत्र संज्ञा न स्यात् । यद्यप्येषां सम्बो-

---

(१)षष्ठ्यर्थे इति । "मत्वर्थे बहुव्रीहिः कर्मकर्तृवचनेनाप्रथमायाः" इति वार्त्तिकेन षष्ठीसप्तमीविभक्त्यन्तातिरिक्तार्थे कर्मकर्तृवचनसुबन्तातिरिक्तानाम् "अनेकम्" (पा०सू० २।२।१४) इति समासाभावस्य बोधनादिति भावः ।

(२)बलात्तदन्तविधिरिति । 'संज्ञाविधौ" (प०भा० २७) इति परिभाषा नास्त्येवेति पक्षे तु न सामर्थ्यवर्णनमित्यवोचाम ।

धने शक्तेः प्रातिपदिकार्थसूत्रेणैव प्रथमा, तथापि सम्बोधनविषयप्रथमासत्त्वान्न दोषः। एतदर्थमेव 'प्रथमा' इत्यनुवर्तमाने सेति पदम्।

अन्ये तु "सम्बोधने च" (पा०सू० ३।२।१२५) इत्यस्य तत्र वर्तमानादित्यर्थे अन्यत्रेवात्रापि "सम्बोधने च" इत्येव प्रथमा प्रातिपदिकोक्तत्वस्याव्यावर्त्तकत्वेन विभक्त्यप्रतिबन्धकत्वात्, "तिङ्कृत्तद्धितसमासैः" इति परिगणनाच्च। सेति तु विधेयसमर्पिकाया अनुवाद्यत्वाय स्पष्टार्थमित्याहुः।

**अविद्यमानवदिति**। "गोतो णित्" (पा०सू० ७।१।९०) इतिव(१)त्सिद्धे वत्करणमतिदिश्यमानविरुद्धस्वाश्रयस्यापि लाभार्थम्। तेन 'आमभो देवदत्त' इत्यादौ "आम एकान्तरमामन्त्रितमनन्तिके" (पा०सू० ८।१।५५) इति एकान्तरत्वप्रयुक्तामन्त्रितनिघातनिषेधसिद्धिरिति स्पष्टं भाष्ये। न चात्र "नामन्त्रिते समानाधिकरणे" (पा०सू० ८।१।७३) इत्यनेन निषेधादविद्यमानवत्त्वमेव नेति वाच्यम्, अस्य सम्बोधनमात्रद्योतकत्वेन विशेष्यवचनत्वाभावात्, देवदत्तस्यैव विशेष्यत्वाच्च।

**इहेति**। 'अग्ने तव' 'देवास्मान्' इत्यत्रादेशाः, 'अग्ने नय' इत्यत्र "तिङ्ङतिङः" (पा०सू० ८।१।२८) इति निघातः, 'अग्ने इन्द्र' इत्यत्र "आमन्त्रितस्य च" (पा०सू० ६।१।१९८) इति निघात इति विवेकः। अत्र पूर्वमित्यनेन परस्याऽऽक्षेपात् पूर्वं परस्य कार्येऽविद्यमानवदित्यर्थः। तेन 'देवास्मान्' इत्यत्र देवेत्यस्याऽऽमन्त्रिताद्युदात्तत्वं भवत्येव। पूर्वं किम्? पाहि देव। अत्राऽऽमन्त्रितनिघातो भवत्येव।

**प्राचीनामिति**। एवमेव 'लक्ष्मीपते तेऽङ्घ्रियुगं स्मरामि' इत्यादिसिद्धिः। (२)नृसिंहाश्रम ते ख्यातिः इत्यादौ 'गेये केन विनीतौ वाम्'

---

(१)सिद्धे इति। ननु तदभावे अस्य त्रिपाद्यां प्रवृत्तिर्न स्यात्। राद्धान्तेऽस्य वतिघटितत्वेन वतिघटितशास्त्राणां त्रिपाद्यां प्रवृत्तेः पूर्वमुपपादितत्वादिति चेत्? न, वत्यर्थघटितानामपि त्रिपाद्यां प्रवृत्तिबोधनात्। अत एव प्रत्ययलक्षणसूत्रस्य त्रिपाद्यां प्रवृत्तिरित्यन्यत्र विस्तरः।

(२)नृसिंहाश्रम इति। न च 'नृसिंहाश्रम' इत्यस्याविद्यमानवद्भावेऽपि नृ

इत्यादाविव विभक्त्यन्तप्रतिरूपकानिपाताङ्गीकारेणादोषः । अयं समाधिः प्रकृतेऽपि, 'नः' इत्यस्य विभक्तिप्रतिरूपकत्वात् । अन्यार्थन्तु मूलोक्तकरणानावश्यकत्वम्, तदाह—**एवमिति । सर्वेषां निघात इति** । प्राप्त इति शेषः । तत्र यमुने सरस्वतीत्यनयोर्बाधकाभावाद्भवति । शुतुद्री-त्यस्य तु न, पादादिस्थत्वात् ।

एतेन 'आदिभ्यः' 'सर्वेषाम्' इति बहुवचनमसङ्गतमित्यपास्तम् ।

**अग्ने तेजस्विन्निति** । अनुदात्त सर्वमित्यनयोः सम्बन्धानर्हत्वेन निवृत्त्या तत्साहचर्येणापादादावित्यस्याप्यविद्यमानवत्सूत्रे निवृत्तिरिति भावः । आमन्त्रिते किम् ? (१)देव करोषि । सामान्यवचनं किम् ? 'अघ्न्ये देवि

---

इत्यस्य विद्यमानत्वेन ततः परस्य युष्मच्छब्दस्य ते इत्यादेशः स्यादेवेति निपा श्रयणं विफलमिति वाच्यम्, अवयवे अविद्यमानत्वानारोपे समुदायाविद्यमानत्वस्य ऽतिदेशसहस्रेणाप्यतिदेष्टुमशक्यत्वात् । अत एव 'इमं मे गङ्गे' इत्यत्र गङ्गे इत्यादेः निघातसिद्धिः । अन्यथा गङ्गे इत्यस्याविद्यमानवद्भावेऽपि गकारस्य विद्यमानत्वेन व्यवधानात् पदात्परामन्त्रिताभावेन निघाताप्राप्त्यापत्तेरित्यलं क्षुद्रोपद्रवाणां विद्रावणेन। एतेन 'परमहरे तिष्ठ, इत्यत्र परमहरे इत्यस्य अविद्यमानवद्भावेऽपि हरे इत्यस्य पद-त्वमाश्रित्य तिष्ठेत्यस्य निघातः स्यात् । अतः "उत्तरत्वे च" इति वार्तिके कार्यित्वे-वेशनं कार्यम् इत्यपास्तम् ॥

(१)**देव करोषीति** । ननु सम्बोधनविभक्त्यन्तदेवपदस्य सिवर्थाश्रयान्वितस-म्बोध्यार्थकत्वपदसामानाधिकरण्येऽपि तस्य कृधात्वर्थनिष्ठाविशेष्यतानिरूपितसम्बोध-नविषयत्वसम्बन्धावच्छिन्नप्रकारताप्रयोजकत्वेन, नवीनमतेऽध्याहृताविधेयक्रियानिष्ठवि-शेष्यतानिरूपितस्वोद्देश्यकप्रवर्तनाविषयत्वसम्बन्धावच्छिन्नप्रकारताप्रयोजकत्वेन वा वि-शेष्यताप्रयोजकत्वरूपसामान्यवचनत्वाभावान्न निषेधप्राप्तिरिति चेत् ? न, प्रातीतिक-विशेष्यविशेषणभावस्य "तस्मिन्" (पा०सू० १।१।६६) इतिसूत्रस्थभाष्योक्तदि-द्रव्यक्रियादिषु प्रतीतिभेदेन विपरिवर्तमानत्वेऽपि प्रतीतिं विनाऽपि वस्तुनिष्ठस्य सामा-न्यविशेषभावस्य "वर्णो वर्णेन" (पा०सू० २।१।६९) इतिसूत्रस्थभाष्यसम्मततया कर्म-धारयसमासप्रकरणे शेखरे वक्ष्यमाणया रीत्या वस्तुनियतत्वेन द्रव्यस्य सामान्यत्वात् क्रियायाश्च विशेषरूपत्वेन एतादृशस्यैव विशेषणविशेष्यभावस्योक्तसूत्रस्थभाष्यप्रा-प्येन "विशेषणं विशेष्येण बहुलम्" (पा०सू० २।१।५७) इत्यादिसूत्रेषु आश्रितत्वात् अत्रापि तदाश्रयणात् द्रव्यवचनस्य देवपदस्य सामान्यवाचकत्वस्य सूपपादत्वात् ।

"स्वोत्तरत्वसमानाधिकरणपदप्रयोज्यविषयतानिरूपितविषयताप्रयोजकत्वे

सरस्वति इडे काव्ये' इत्यादौ पर्यायेषु परेषु निषेधो मा भूत् । सामानाधिकरण्यञ्चैकार्थविशेष्यकबोधजनकत्वमेव, न तु प्रवृत्तिनिमित्तभेदगर्भमिति दिक् ।

**सुपादिति ।** शोभनौ पादावस्येति बहुव्रीहिः । "संङ्ख्यासुपूर्वस्य" (पा०सू० ५।४।१४०) इत्यकारलोपः समासान्तः ।

**अञ्चेः सुपीति ।** निपातनैः साहचर्यादिति भावः ।

**अनिदिताम् ।** (पा०सू० ६।४।२४) (१)इत्संज्ञेकार(२)वद्भिन्नानामित्यर्थः । अङ्गस्येत्यधिकारः ।

**अञ्चतेर्भस्येति ।** "अल्लोपोऽनः" (पा०सू० ६।४।१३४) इतिवद् अस्यापि प्रत्यञ्चमञ्चति तेन (३)'प्रत्यक्चा' इत्यादौ पूर्वाकारे न प्रवृत्तिः ।

---

नामपदप्रयोज्यविषयतानिरूपिताभेदसंसर्गावच्छिन्नविषयताप्रयोजकत्वाभाववत्त्वमेव सामान्यवचनत्वम् । तथा च 'हरे दयालो नः पाहि' इत्यत्र हरिपदोत्तरसमानाधिकरणदयालुपदप्रयोज्यविषयतानिरूपिता या हरित्वावच्छिन्नविषयता तत्प्रयोजकत्वं हरे इत्यस्य, नामपदप्रयोज्यविषयतानिरूपिताभेदसंसर्गावच्छिन्नविषयताप्रयोजकत्वाभाववत्त्वमपि तस्मिन्निति लक्षणसमन्वयः । 'देव करोषि' इत्यत्र च देवपदस्य त्वंपदसामानाधिकरण्येन कथंचिदभेदसंसर्गावच्छिन्नविषयताप्रयोजकत्वेऽपि तद्विषयताया नामपदप्रयोज्यविषयतानिरूपितत्वाभावेन सामान्यवचनत्वं सुवचम्" इत्यपि कश्चित् ।

अत्र भैरवव्याख्यायामन्यथा समाहितं, तत्तत एवावधार्यम् ।

(१)**इत्संज्ञेकारवदिति ।** बहुव्रीहिरिति भावः । (२)**वद्भिन्नानामिति ।** वद्घटितभिन्नानामित्यर्थः । तेन 'अमंस्त' इत्यत्र न दोषः । इदं च "इर इत्संज्ञा वाच्या" (का०वा०) इतिवार्तिकारम्भपक्षे । तत्प्रत्याख्यानपक्षे तु उबुन्दिर् इत्यादिधातुभ्यो लुङि "इरितो वा" (पा०सू० ३।१।५७) इत्यङि 'अबुदत्' इत्यादौ आरम्भपक्ष इव इष्टस्य नलोपस्य सिद्ध्यर्थं कर्मधारयाश्रयणेन इत्संज्ञकेकारान्तभिन्नानामित्यर्थ आवश्यकः। अत एव उबुन्दिर् धातौ शेखरे तत्पक्षे अस्य सूत्रस्य इत्थमेवार्थो वर्णितः । तदा 'अमंस्त' इत्यादौ नलोपवारणं सजादेशपक्षे इव "हनःसिच्" (पा०सू० १।२।१४) इतिज्ञापकाद्वकरणाघटितस्यैवाङ्गस्य ग्रहणाद्बोध्यम् । अन्यथा उपधालोपेन सिद्धौ "अनुदात्तोपदेश" (पा०सू० ६।४।३७) इति लोपार्थं कित्त्वविधेर्वैयर्थ्यं स्पष्टमेवेति दिक् ।

(३)**प्रत्यक्चेत्यादाविति ।** [illegible] तदुदकाकारलोपेऽवशिष्टेन च-

अच इत्यञ्चतेर्लुप्तनस्य ग्रहणम् (१)व्याख्यानात् । भस्य किम् ? प्रत्यञ्चौ । लुप्तनस्येति किम् ? पूजायां प्रत्यञ्चा ।

**चौ** (पा०सू० ६।३।१३८) । नेदं वर्गग्रहणं व्याख्यानात्, तदाह- **लुप्तेत्यादि । अण इति ।** 'कर्त्तृचः' इत्यादीनामनभिधानमिति भावः । एवञ्चाण्ग्रहणमुत्तरत्र "सम्प्रसारणस्य" (पा०सू० ६।३।१३९) इत्यत्र 'तृतीयः' इत्येतद्व्यावृत्त्यर्थमावश्यकमिहापि सम्बद्ध्यते, न त्वत्रास्य व्यावर्त्यमस्ति इत्याकरे स्पष्टम् ।

**अकृतेति ।** तत्परिभाषाऽभावे तु "चौ (२)प्रत्यङ्गस्य प्रतिषेधो वक्तव्यः" इति वचनमेव **भाष्योक्तं** शरणम् ।

**विष्वग्दे** (पा०सू० ६।३।९२)। चात् "आ सर्वनाम्नः" (पा०सू० ६।३।९१) इत्यतः सर्वनाम्न इत्याकृष्यते । (३)सामर्थ्यादुपसर्जने प्रवृत्तिः। अप्रत्यये इति पाठेऽविद्यमानः प्रत्ययः, क्विबादिरित्यर्थः । वप्रत्यये इति पाठेऽप्यकारस्याविवक्षितत्वात् (४)स एवार्थः । आद्र्यादेशसध्र्यादेशावन्तोदात्तौ निपातनादिति स्पष्टं **भाष्ये ।**

**अदसो** (पा०सू० १।१।१२) । 'असेः' इतीकार उच्चारणार्थः। अदस इत्यवयवषष्ठी । सग्रहणं तत्स्थानिकौकाररेफयोरप्युपलक्षणम् । तेन 'अदस्यति' 'अदोऽत्र' 'अदः' इत्यादौ न दोषः । दादिति किम् ? अमुयोरित्यत्रान्त्यस्य मा भूदिति । **समाहारद्वन्द्व इति ।** इदमर्वाचामनुरोधेन । (५)वस्तुतोऽयुक्तमेतत् । उ स् ऊ स् इति द्वन्द्वे सुलोपे ध्यन्तत्वा-

---

कारेण वा व्यवधानादिति भावः । **(१)व्याख्यानादिति ।** अकारलोपाकरणपूर्वकलोपकरणेन नलोपस्य विवक्षितत्वादिति भावः ।

**(२)प्रत्यङ्गस्येति ।** अन्तरङ्गस्येत्यर्थः ।

**(३)सामर्थ्यादिति ।** पदान्तरप्रयोज्यविशेष्यतानिरूपितप्रकारताप्रयोजकत्वरूपोपसर्जनत्वस्य सर्वत्रैव सत्त्वादिति भावः । **परे तु** स्वान्तपर्याप्तशक्तिनिरूपकार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकत्वाभावात्तस्योपसर्जनत्वाभावेन सामर्थ्यवर्णनमसङ्गतम् । अत एव 'अतिसर्वद्रग्' इत्यत्राऽऽत्वं नेत्याहुः । **(४)स एवार्थ इति ।** क्विबादिरित्यर्थः ।

**(५)वस्तुत इति ।** परे त्वत्र प्राचीनमतमेव ज्यायः । परनिमित्तापेक्षस्य वार्णि-

दूभ्रस्वस्य पूर्वनिपाते नपुंसकह्रस्वसवर्णदीर्घयोः प्राप्तयोर्दीर्घस्य शब्दान्तरप्राप्त्याऽनित्यत्वेन नित्यत्वाद् , अपरनिमित्तकत्वेनान्तरङ्गत्वाच्च ह्रस्वत्वे ततः सवर्णदीर्घे उ इतिरूपासिद्धेः । अत एव "ऊकालः" (पा०सू० १।२।२७) इत्यत्र उकाल इति न कृतम् । तस्माद् "दिव उत्" (पा०सू० ६।१।१३१) "ऋत उत्" (पा०सू० ६।१।१११) इति च तपरत्वेन भाव्यमानोकारस्य सवर्णग्राहकत्वात्सिद्धमिति बोद्धव्यम् ।

"ष्यङः सम्प्रसारणम्" (पा०सू० ६।१।१३) इति सूत्रे **भाष्ये** "अनन्त्यविकारेऽन्त्यसदेशस्य" (प.भा.९५) इति परिभाषा पठिता । अन्त्यसदेशा(१)नन्त्यसदेशयोरेकप्रयोगे युगपत् प्राप्ताव(२)न्त्यसदेशस्यैवेति तदर्थः । अनन्त्यविकार(३)इति च लिङ्गम् । तामर्थतः पठति–**अन्त्यबाधे इति ।**

---

रङ्गत्वाश्रयणे प्रमाणाभावः, फलाभावश्च । "ऊकालः" (पा०सू० १।२।२७) इति निर्देशस्तु इतरेतरद्वन्द्वेनाप्युपपादयितुं शक्यः । "अतोऽम्" (पा०सू० ७।१।२४) इत्यत्र तपरकरणं तु मुखसुखार्थम् । अश्वाऽऽश्वानयोः समाहारे आमत्येव रूपम् । अत एव "अदसोऽसेर्दादु" (पा०सू० ८।२।८०) इति निर्देशः सङ्गच्छते । अन्यथा तत्रापि पूर्वं ह्रस्वे ततो दीर्घे दीर्घश्रवणापत्तिः । "भाव्यमानोऽप्युकारः" (प०भा० २०) इति परिभाषा तु नास्त्येव, फलाभावात् । अत एव "नामि" (पा०सू० ६।४।३) इति सूत्रस्थं भाष्यं सङ्गच्छते इत्युपपादितमन्तरङ्गपरिभाषाटिप्पण्याम् । अत एव "अचस्तास्वत्" (पा०सू० ७।२।६१) इति सूत्रस्थं **भाष्यं** सङ्गच्छत इति स्पष्टं विषम्याम् । नच परिभाषेन्दुटिप्पणोक्तदिशा पूर्वनिमित्तकत्वरूपबहिरङ्गत्वस्वीकारेणोभयोः समत्वान्न दूषणत्रयमपि सम्यगिति वाच्यम्, फलाभावात् । अत एव च "दोषो णौ" (पा०सू० ६।४।९०) इत्यादौ दीर्घविधानं सङ्गच्छते । अन्यथाऽऽन्तरतम्याद्दीर्घस्यैव विधानं भविष्यतीति तद्वैयर्थ्यं स्पष्टमेव । अत एव च उ ऊ इति प्रश्लेषेण 'गोह' इति दीर्घनिर्देशः प्रत्याख्यातः । अत एव 'दूयूषति' 'सुस्वूर्षति' इत्यादीनि सिद्ध्यन्ति । अन्यूनानतिरिक्तसमुदायस्य ययोर्निमित्तत्वं तत्रैवापरनिमित्तकशास्त्रस्यान्तरङ्गत्वामत्याद्यनेकाक्लिष्टकल्पनाश्रयणाद्वरं प्राचीनमतानुसरणमिति विचारयन्तु धीरा इत्याहुः ।

(१)**अनन्त्यसदेशयोरिति ।** क्वचिदिति शेषः । तेन 'अमू' इत्यत्रोभयोः प्राप्त्यभावेऽपि न क्षतिः । (२)**अन्त्यसदेशस्यैवेति ।** उपतिष्ठते इति शेषः । (३)**इति च लिङ्गमिति ।** येनावयवत्वावच्छिन्नोद्देश्यताकशास्त्रत्वस्य सङ्गः । अन्त्याविकाराभाव इत्यस्य यत्समुदायनिरूपितावयवत्वावच्छिन्नोद्देश्यता तत्समुदायघटकान्त्यस्य

अन्त्यस्य बाधे कार्याप्राप्तौ, अर्थादनेकानन्त्यस्य प्राप्तावित्यर्थः। अन्यथा "णो नः" (पा०सू० ६।१।६५) इत्यादि 'नेता' इत्यादावेव स्यात्, न तु 'नमति' इत्यादाविति **भाष्ये** स्पष्टम्। "अल्लोपोऽनः" (पा०सू० ६।४।१३४) "अचः" (पा०सू० ६।४।१३८) "सान्त" (पा०सू० ६।४।१०) इत्यादावनेकक्लिष्टकल्पनापेक्षयेयं न्याय्या।

किञ्च भसंज्ञायां कार्यकालपक्षाश्रयणमशक्यं परत्वेन पदसंज्ञाबाधकत्वा(१)नुपपत्तेः। 'राज्ञः' इत्यादौ नलोपस्यासिद्धत्वात्पूर्वम् "अल्लोपोऽनः" (पा०सू० ६।४।१३४) इति लोपे पश्चात्प्राप्तनलोपैकवाक्यतापन्नपदत्वस्य-तदेकवाक्यतापन्नभत्वेन बाधायोगान्न(२)लोपापत्तेश्च। तस्मादाकडारस्थसञ्ज्ञासु यथोद्देशाश्रयणमेवावश्यकमिति 'यजादिस्वादिपरो योऽन्'इत्यर्थस्य न तत्र लाभः। "ष्यङः सम्प्रसारणम्" (पा०सू० ६।१।१३) इति सूत्रस्थ-"कार्यकालं सञ्ज्ञापरिभाषं, भस्येत्युपस्थितमिदं भवति यचि भमिति। तत्र यजादिपरतयाऽन्कारं विशेषयिष्यामः। अनाऽकारम्" इति **भाष्यन्त्वे**-(३)कदेश्युक्तिः, यजादिप्रत्ययस्या(४)ङ्गांशे उत्थिताकाङ्क्षतया तेनानो

---

विकाराभाव इत्यर्थः। अन्यथा 'राज्ञः' इत्यत्र राजेतिसमुदायघटकान्त्यस्यैव लोपस्य कर्तव्यत्वेन तत्राप्यस्याप्रवृत्त्यापत्तेः। वस्तुत "अल्लोपोऽनः" (पा०सू० ६।४।१३४) इत्यत्र नास्याः प्रवृत्तिरिति पूर्वमेवावोचाम। **(१)अनुपपत्तेरिति**। यदा तु संज्ञाशास्त्राणामप्यष्टाध्यायीपाठकृतपरत्वस्याश्रयणे न दोषः। "अयादिभ्य परैव प्रगृह्यसंज्ञा" इति **भाष्यं** तु 'परैव उत्कृष्टैव' इत्यर्थकरणेन न विरुणद्धीत्युच्यते, तदाऽयं दोषः प्राचामकिञ्चित्करः। **(२)नलोपापत्तेश्चेति**। यदा त्वेवंरीत्या सर्वत्र लोपप्राप्त्याऽल्लोपस्यापवादत्वात्तदेकवाक्यतापन्नभसंज्ञाया अप्यपवादत्वमुच्यते, तदाऽयं ग्रन्थश्चिन्त्यः। तत्सामर्थ्यादाकडारीयसंज्ञासु यथोद्देशपक्षस्यैव ज्ञापनमुचितमित्याशयाद्वा योजनीयः। **(३)एकदेश्युक्तिरिति**। संज्ञाशास्त्राणां पदैकवाक्यतायाः कथमप्युपपादयितुमशक्यत्वादिति भावः।

**(४)अङ्गांशे उत्थिताकाङ्क्षतयेति**। अव्यवहितपूर्वत्वाऽव्यवहितपरत्वैतदन्यतरावच्छिन्नविधेयताश्रयत्वे सति स्व-स्वप्रकृत्यन्यतरार्थप्रत्यायकत्वरूपप्रत्ययत्वस्वीकारात्प्रत्ययत्वस्याऽङ्गांशे उत्थिताकाङ्क्षत्वादिति भावः।

**परे** त्वेतादृशप्रत्ययत्वस्वीकारे मानाभावः। तादृशतत्त्वस्वीकारेऽपि पुत्रत्वस्य जन्यत्वघटितस्योत्थिताकाङ्क्षत्वाज्जिज्ञास्यमानेदेवदत्तपदार्थस्याजिज्ञासितार्थपुत्रत्वेऽन्व-

विशेषणायोगाच्च । अत एव सर्वफलानामन्यथासिद्धिं प्रदर्श्यापि "तस्माद् यान्येतस्याः परिभाषायाः प्रयोजनानि तदर्थमेषा कर्त्तव्या" इति उपसंहृतं भाष्ये इति भावः ।

**अन्त्यसदेशस्येति** । अन्त्येन समानो देशो यस्येत्यर्थः । तत्त्वञ्चान्त्यवर्णतद्वर्णयोरि(१)तराव्यवधाने भवति । 'चलीक्लृप्यते' इत्यादौ ऋकारान्तर्गतरेफस्योत्तराज्भागेन व्यवधानान्नान्त्यसदेशत्वसम्भव इति न तत्रैतत्परिभाषाप्रवृत्तिः । अत एव "न सम्प्रसारणे" (पा०सू० ६।१।३७) इत्युदाहरणीभूतस्य 'विद्धः' इत्यादेर्नानया सिद्धिः । अत एव "न सम्प्रसारणे" (पा०सू० ६।१।३७) इति सूत्रं सार्थकम् । "नैतस्याः परिभाषायाः प्रयोजनानि" इति तत्सूत्रस्थ**भाष्यस्य** त्वयमर्थः—एतत्सूत्रसाध्यानि 'विद्धः' इत्यादीन्युदाहरणानि नैतस्याः परिभाषाया भवन्तीति । अन्त्यसदेशत्वाभावादिति च तद्भावः ।

**परस्यैवेति** । द्रशब्दस्यैवेत्यर्थः । **अः सेरिति** । अत्र अकारेण आकारस्यापि ग्रहणं, तेन 'अमूदृक्' इत्यादिसिद्धिः । तत्र हि "आ सर्वनाम्नः" (पा०सू० ६।३।९१) इति पूर्वपदान्तस्यात्वम् । **त्यदाद्यत्वेति** । त्यदादीनामत्वविषय इत्यर्थः । **पक्षे इति** । अत्र तन्त्रेणार्थद्वयेऽपि सूत्रतात्पर्यम् । तत्र लक्ष्यानुरोधाद्व्यवस्था । अत्र प्रमाणमुपन्यस्यति—**उक्तञ्चेति** । **लत्ववदिति** । 'चलीक्लृप्यते' इत्यत्र यथा लत्वं रीगृकारयोर्भवति तथेत्यर्थः । अत्र 'अदमुयङ् इति रूपवादिमतं (२)न्याययुतं, लत्वे

---

यवदत्राऽपि अङ्गस्य प्रत्ययेऽन्वयेऽपि प्रत्ययस्याङ्गांशे विशेषणत्वे प्रमाणाभावः । तस्मादेतत् सर्वमविचारमूलमित्याहुः । **अन्ये तु**—निरुक्तप्रत्ययत्वस्य महासंज्ञासिद्धत्वात् अङ्गत्वस्यापि प्रत्ययांशे साकाङ्क्षत्वात् साकाङ्क्षयोरेव विशेष्यविशेषणभावस्य न्याय्यत्वाद् 'अनो विशेषणत्वे मानाभावः' इति नागेशोक्तिर्युक्तैवेत्याहुः ।

(१)**इतराव्यवधाने इति** । अत्रत्यं तत्त्वं पूर्वमुपपादितं विस्तरेण तत एवावधार्यमिति दिक् ।

(२)**न्याययुतमिति** । **परे तु** सहेतुकवाक्यस्यैव प्रामाणिकत्वेन 'नेत्येके' इत्यस्य सहेतुकत्वाद् 'अदद्र्यङ्' इत्येव रूपं **भाष्यकृदभिप्रेतम्** । अत एव सर्वत्र कोविदि-

उक्तरीत्यैतन्न्यायाप्रवृत्तावपि अत्रैतदप्रवृत्तौ मानाभावात् । अत एव भाष्ये "अदसोऽनोस्रेः" इतिवार्त्तिकप्रत्याख्यानाय 'अथवा अः सेः' इति पक्षमुक्त्वा "यद्येवम् 'अमुमुयङ्' इति न सिद्ध्यति, 'अदद्र्यङ्' इति प्राप्नोति, 'अदमु-यङ्' इति भवितव्यम् अनन्त्यविकारे इति" इत्युक्तम् । अत्र 'इति प्राप्नोति' इत्युक्त्या तत्रासम्मतिरुक्ता । 'इति भवितव्यम्' इत्यनेन पृथक् मुत्वमि... पक्षे सम्मत्यभावो दर्शितः । 'इति भवितव्यम्' इत्युक्त्या च तत्र शब्दे... ऽप्रयुक्तत्वं सूचितमित्याहुः ।

**विष्वग्देवयोः किमिति ।** चस्याप्युपलक्षणमिदम्। ननूत्तरपदा-धिकारादञ्चुरूपे उत्तरपदे इत्यर्थाद् 'विष्वगञ्चनम्' इत्यादेर्व्यावृत्तौ व्यर्थ-मप्रत्ययग्रहणमत आह—**अप्रत्ययेति । तेनेति ।** अन्यथा "अतः कृ" (पा०सू० ८।३।४६) इत्यत्र "नित्यं समासे" (पा०सू० ८।३।४५) इत्यतोऽनुवृत्तसमासग्रहणेनोत्तरपदाक्षेपेऽपि कृधातुरूपे उत्तरपदे इत्यर्थात् 'अयस्कृद्' इत्यादावेव स्यादिति भावः ।

**उद ईत्** (पा०सू०६।४।१३९) । अत्र "अचः" (पा०सू० ६।४।१३८) इत्यनुवर्त्तते ।

**समः स** (पा०सू०६।३।९३) । 'समो मिङ्' इति 'सम इ...' इति वा न कृतं, परिभाषाज्ञानकृत(१)गौरवापत्तेः ।

---

त्युक्ताऽत्र एके इत्युक्तम् । 'अमुमुयङिति न सिद्ध्यति' इत्यादि भाष्यं तु अस्मिन्... ऽमुमुयङिति न सिद्ध्यति, अदद्र्यङिति प्राप्नोति, अनन्त्यविकारपरिभाषयाऽदमुयङ्... भवितव्यमितिवस्तुस्थितिप्रतिपादकमिति न तेन सह विरोध इत्याहुः ।

(१)**गौरवापत्तेरिति ।** ननु समोऽव्ययत्वादकचि सकम् । तदञ्चतीति 'समीचः' इत्यत्र ङित्त्वादन्त्यादेशे फलभेदसत्त्वेन गौरवपर्यन्तमनुधावनं विफलमिति चेद्... साकच्कापहारकादेशविषये तन्मध्यपतितन्यायाप्रवृत्तेः परिभाषेन्दुशेखरटिप्पण्यादौ... त्वेनात्र तदप्राप्त्या निर्दिश्यमानाभावेन सिद्धान्ते एतस्याप्रवृत्तेः । न च राद्धान्ते तस्य... प्रवृत्तावपीदानीं तस्य साकच्कानपहारकत्वेन तत्प्रवृत्त्या निर्दिश्यमानत्वेनादेशः स्या-दिति फलभेदो दुर्वार एवेति वाच्यम्, 'अकचि कृते धित्वं न प्राप्नोति' इति भाष्ये... "अनेकाल्" (पा०सू० १।१।५५) इतिसूत्रे सर्वपदेनाकजघटितस्यैव ग्रहणेन 'उत्सर्ग-समानदेशा अपवादाः' इति न्यायेन "ङिच्च" (पा०सू० १।१।५३) इत्यत्राप्यकच्...

(१)**तिरसस्ति** (पा०सू ६।३।९४)। 'अलोपे' इत्यत्र शकन्ध्वादित्वात्पररूपेणाकारः प्रश्लिष्यते। अस्य अलोपो लोपाभावो यस्मिन्नञ्चतावित्यर्थस्तदाह—**अलुप्ताकारेति। तिरश्चेति।** श्चुत्वेऽल्लोपस्य स्थानिवत्त्वं तु न, पूर्वत्रासिद्धीये तन्निषेधात्।

**पूजार्थस्येति।** पूजारूपार्थस्य गम्यत्वे इत्यर्थः। अत एवाव्याकुलं गच्छतीत्यर्थके 'अञ्चितं गच्छति' इत्यादौ नलोपो न। अव्याकुलगमनेन न पूजा गम्यते, न त्वञ्चतेरेव सोऽर्थ इति स्पष्टम् "अञ्चोऽनपादाने" (पा०सू० ८।२।४८) इति सूत्रे **भाष्यकैयटयोः।** 'प्राचः' इत्यादि चिरन्तनादिरूढस्येति बोध्यम्। एतेन 'अञ्चतेर्गतौ' इति नियमेनैव सिद्धौ "नाञ्चेः पूजायाम्" (पा०सू० ६।४।३०) इति व्यर्थमित्यपास्तम्।

**नलोपाभाव इति।** (२)झोपधत्वबोधनद्वारेत्यर्थः। स्पष्टञ्चेदं "परेश्च घ" (पा०सू० ८।२।२२) इति सूत्रे **भाष्ये।** अपिना चसमवधाने "चोः कुः" (पा०सू० ८।२।३०) इति कुत्वाभावो, निरुपपदात् क्विन्

---

टितांनिर्दिश्यमानान्त्यस्य ग्रहणेनादोषात्। "इच एकाच" (पा०सू० ६।३।६८) इत्यतो मण्डूकप्लुत्या एकाच्पदानुवृत्त्याऽदोषाच्चेत्यलम्।

(१)**तिरस इति।** अकारादावञ्चतौ परे इत्यर्थकं "तिरसस्तिर्ये" इति न सूत्रितम्, ओशब्दे उपपदे अञ्चतेः क्विनि तिरस्शब्देन समासे 'तिर्योङ्' इत्यत्र आकारादित्वाभावात् तिर्यादेशानापत्तेः। नन्वेवमपि अचीत्येवास्तु। अकारादित्वाभावेऽपि अजादित्वस्य विद्यमानत्वात् उक्तरूपं सुसाधमिति अलोपे इति व्यर्थमेवेति चेत्? न, अञ्चतेः क्विपि निष्पन्नस्य अक् इत्यस्य पदद्वित्वे तिरस्शब्देन समासे शासि उत्तरखण्डे अकारलोपेऽपि अकारादित्वस्य अजादित्वस्य च सत्त्वेन तिर्यादेशे 'तिर्यक्चः' इत्यापत्तेः। सिद्धान्ते तु विशिष्टस्य लुप्ताकारत्वात् पूर्वखण्डमात्रस्योत्तरपदत्वाभावाच्च तदप्रवृत्तौ 'तिरोऽक्चः' इति सिध्यतीत्यलम्। **यत्तु** एवं न्यासे 'तिराययति' इत्यत्र तिर्यादेशानापत्तिः। राद्धान्ते त्वत्र टिलोपस्याकारपर्याप्तस्थानिताकत्वाभावेनालोप इति पर्युदासस्याप्राप्त्या स सिद्ध्यतीति; तन्न, "अञ्चेष्टिलोपेनापहारेऽपि बहिरङ्गत्वेनासिद्धत्वात्तिरसस्तिरिः" इति कौंसुद्यामेव समाहितत्वात्।

(२)**झोपधत्वेति।** नन्वस्य झोपधत्वे अस्मिन् सूत्रे पाठो व्यर्थः। न च नोपधत्वेऽपि कुत्वशङ्कापरभाष्यविरोध इति वाच्यम्, तादृशभाष्येणानुस्वारपरसवर्णयोः कुत्वदृष्ट्या सिद्धत्वबोधनेनादोषात्; इति चेत्? न। तवाप्यनुस्वारस्यासिद्धत्वाभावेन "चोः कुः" (पा०सू० ८।२।३०) इत्यनेनैव कुत्वे सिद्धे अत्र एतत्पाठवैयर्थ्यस्य तादवस्थ्यात्।

इति च निपात्यते इति बोद्धव्यम्। "सङि" इति वचनाद्वा कुत्वाभावः। **षत्वं, स्कोरितीति**। सलोपे षत्वस्यासिद्धत्वात्सलोपे कृते पत्वम्। व्रश्चेः क्विपि "ग्रहिज्या" (पा०सू० ६।१।१६) इति सम्प्रसारणे पूर्वं श्चुत्वस्यासिद्धत्वात्सलोपः। **सुवृट्त्स्विति**। चर्त्वस्यासिद्धत्वाद् "सि" (पा०सू० ८।३।२९) इति वा धुट्। **निपात्यन्ते इति**। अ... प्रत्ययान्ता इति शेषः। तत्र पृषद्बृहतोर्गुणाभावश्च, गमेर्जगादेशश्च, म... कर्मणि प्रत्ययश्च, निपातनात्। **शतृवदिति**। प्रत्ययग्रहणपरिभाषया शतृप्रत्ययान्तवदित्यर्थः। "शतुरनुमः" (पा०सू० ६।१।१७३) इति सूत्रे 'बृहन्महतोरुपसंख्यानम्' इति तु पृषदादिव्यावृत्तये नियमार्थमिति बोद्धव्यम्।

**अत्वसन्त** (पा०सू० ६।४।१४)। चस्त्वर्थे। अतु इति लुप्तषष्ठीकं पृथक् पदम्। अधातोरिति असन्तस्यैव विशेषणं (१)तुशब्दात्। तदाह- **धातुभिन्नेति**। अत एव "उगिदचाम्" (पा०सू० ७।१।७०) इति सूत्रे गोमत्यतेरप्रत्यये गोमानिति प्रयोगो **भाष्ये** सङ्गच्छते। अङ्गविशेषणतयाऽर्थसिद्धतदन्तविधेरेवानुवादकमन्तग्रहणम्। **परमिति**। वचनसामर्थ्यादुपधापदासम्बन्धेन चारितार्थ्यादित्यभिमानः। अयमभ्युच्चय इत्याह- **नित्यमिति**। कृताकृतप्रसङ्गित्वमात्रेणेत्यर्थः। **सामर्थ्यादिति**। वाक्यार्थबोधकाले विरोधाभावेनोपधासम्बन्धे कृते सामर्थ्यात्पूर्वं दीर्घप्रवृत्तिरेव कल्प्यते इति भावः। **धीमानिति**। न चै(२)कानुबन्धकपरिभाषया मतुपोऽत्राग्रहणम्, सूत्रं तु सर्वादिपठितेऽनुनासिकोकारविशिष्टे भवतुशब्दे चरितार्थमिति वाच्यं पकारादेः समुदायानुबन्धत्वेऽप्यतोऽननुबन्धकत्वाभावात्। अवयवानां नान्तरीयकतया समुदायोपदेशे एव ऋषितात्पर्यमित्यर्थस्य "आदेच उपदेशे" (पा०सू० ६।१।४५) इतिसूत्रस्थभाष्यसम्मतत्वेन यदुपदेशप्रयुक्ता यस्येत्संज्ञा तस्य तदनुबन्धताया एव स्वीकारात्। न चो- कारलोपेऽत्वन्तत्वस्याप्यभावः, उकारस्याश्रयणेन तदंशे भूतपूर्वगतिस्वीकारात्। एतेन तदाश्रयणे अतुबन्तमेतत् नात्वन्तमित्यपास्तम्, तदाश्रयणा...

(१)तुशब्दादिति। त्वर्थक-चशब्दादित्यर्थः। (२)एकानुबन्धकपरिभाषयेति। तदनुबन्धकपरिभाषयेत्यर्थः।

वात् तस्मादनुनासिकोकारविशिष्टो य उपदेशेऽत् तदन्तस्य प्रयोगस्थस्य दीर्घ इति सूत्रार्थ इति न दोषः ।

**नियमार्थमिति** । धातोश्चेदुगित्कार्यं तर्हि नलोपिनोऽञ्चतेरेवेति नियम इति भावः । तेन 'उखास्रत् ब्राह्मणी' इत्यादौ नुम्ङीपौ न । न्यायप्राप्तालोपाकरणपूर्वकं नलोपकरणस्य विवक्षार्थत्वमित्याशयः । यद्यपि अञ्चतेश्चेन्नलोपिन एवेति नियमेऽप्यञ्चतिग्रहणं चरितार्थं, तथापि **भाष्य**-प्रामाण्येन सामान्यापेक्ष उक्तनियमो युक्त इति बोद्धव्यम् ।

नन्वत्र धातुत्वात्कथं नुम् , अत आह—**अधातोरिति** । न चौपदेशिकधातुविषयक एव नियमोऽस्तु, किमनेनेति वाच्यम्, औपदेशिकत्वानन्तर्भावेण सामान्यापेक्षानियमज्ञापनार्थत्वात् । तत्फलं 'पर्णध्वद्' इत्यादाविव 'गोमान्' इत्यादिनामधातौ "उगितश्च" (पा०सू० ४।१।६) इतिङीबभाव इति दिक् । क्यच्पक्षेऽल्लोपो न स्थानिवत् , क्वौ लुप्तत्वात् । अत्राऽऽचारक्विन् अर्वाचीनमतेन । वस्तुतो (१)हलन्तेभ्यस्तदभाव इति "ह्रस्वनद्यापः" (पा०सू० ७।१।५४) इत्यत्र **भाष्ये** स्पष्टम् ।

**उभे अभ्य** (पा०सू० ६।१।५) । लक्ष्यानुसारेण (२)गर्गदण्डनन्यायादत्र समुदाये वाक्यसमाप्तिरित्याह-**उभे समुदिते इति** । द्वे इत्यनुवृत्त्यैव सिद्धे उभेग्रहणं स्पष्टार्थम् । **यत्तु** उभेग्रहणसामर्थ्यात्सहभावोपसर्जनद्वित्वविशिष्टार्थकं, तेन समुदिते इत्यर्थलाभ इति; तन्न, अशब्दार्थत्वात् शब्दाधिक्यादर्थाधिक्यस्य बहुशो **भाष्यकृता**पहसितत्वाच्च । ध्वनितञ्चेदं "तदसति प्रयोजने उभेग्रहणं सहार्थं विज्ञास्यते" इति ग्रन्थेन **भाष्ये** । अत एव सूत्रशेषे **भाष्ये** गर्गदण्डनन्यायेनैतदर्थसिद्धिमाश्रित्य

---

(१)**हलन्तेभ्यस्तदभाव इति** । तत्र हि "मिदमिदोर्न विशेषः" इत्युक्तम् । अन्यथा मित्त्वादन्त्यादचः परत्वेन हलन्तेषु विशेषसत्त्वान्मिदमिदोर्न विशेष इत्यस्यासङ्गत्यापत्तेः । विस्तरस्त्वन्यत्र द्रष्टव्यः ।

(२)**गर्गदण्डनन्यायादिति** । उद्देश्यतापर्याप्त्यनुयोगितावच्छेदकधर्म एव यत्र विधेयतापर्याप्त्यनुयोगितावच्छेदकस्तत्रास्य प्रवृत्तिः, अन्यत्र ब्राह्मणभोजनन्यायस्य प्रवृत्तिरिति विवेकः । प्रकृते तु—उद्देश्यतापर्याप्त्यनुयोगितावच्छेदको धर्मो द्वित्वं स एव

'सहग्रहणं कर्त्तव्यम्' इति वार्त्तिकं प्रत्याख्यातम् । तुल्यन्यायात्तदर्थकल्पे पराभिमतमुभेग्रहणञ्च प्रत्याख्यातमेवेति सुधियो विभावयन्तु । तत्र ह्यादि-शब्दाना(१)मेकापायेऽप्रवृत्तेः 'ऐत्सर्न्' इत्यादावभ्यासलोपे कार्यकालपक्षे न सञ्ज्ञेति न जुस् । एकादेशात्पूर्वमायन्नादिषूपदेशिवद्वचनेनान्तरङ्गत्वादन्त-देशेऽपि 'सर्वे सर्वपदादेशाः' इति न्यायेन स्थानिवद्भावात् झित्वेन जुसाप-त्तिः । किञ्चैकादेशे जुसोऽपवादाविषयस्य जायमानत्वेन 'प्रकल्प्य चापवादवि-षयम्' इति न्यायेन पूर्वमन्तिभावाप्रवृत्तौ एकादेशे जुसापत्तिः । यथोद्देशं पूर्वं समुदाये प्रवृत्तसञ्ज्ञायाः स्थानिवद्भावेनाभ्यासलोपे सत्त्वेऽपि पञ्चमी-समासेनैकादेशस्य स्थानिवत्त्वान्न तत्प्रवृत्तिः । अत एव 'प्रत्यैषिषन्' इत्यादौ न दोष इत्यलम् ।

**नाभ्यस्ता** (पा०सू० ७।१।७८) । बहुयोगव्यवच्छिन्नोऽपि नुम् इहानुवर्त्तते सामर्थ्यात् । तदाह—**नुम्नेति** । दाञः शतरि शपः श्लौ "श्लौ" (पा०सू० ६।१।१०) इति द्वित्वेऽभ्यासह्रस्वत्वे "श्नाभ्यस्तयोः" (पा०सू० ६।४।११२) इत्यालोपे 'ददत्' इति ।

**त्यदादिषु** (पा०सू० ३।२।६०) । आलोचनमिह ज्ञानमात्रम् ।

**आस** (पा०सू० ६।३।९१) । "दृग्दृश्वतुषु" (पा०सू० ६।३।८९) इति सूत्रमनुवर्त्तते । **षत्वापवादत्वादिति** । "कुः क्विन्यः" इति न्यासेन दृष्ट इत्यद्ध्याहारेण च बहुव्रीहिफले सिद्धे प्रत्ययग्रहणेनान्य-पदार्थांशे वीप्सागर्भबहुव्रीहिणा लब्धं तादृशादिक्विन्नन्तविषये लक्षणम-रितार्थमिति भावः । **खकार इति** । अघोषमहाप्राणशकारतुल्यत्वादिति भावः । **कैयटेति** । "क्विन्प्रत्ययस्य" (पा०सू० ८।२।६२) इति सूत्र-स्थेत्यादिः । **असिद्धत्वादिति** । यद्यपि जश्त्वापवादोऽपि कुत्वं, तथापि शस्थानिकजश्त्वस्यैव, (२)न तु स्वस्थानिकस्यापीति भावः । वस्तुत इदं

---

विधेयतापर्याप्त्यनुयोगितावच्छेदक इति अस्यात्र प्रवृत्तिरिति भावः । (१)एकापाये इति । तद्व्यक्तित्वस्य द्वित्वपर्याप्त्यनुयोगितावच्छेदकत्वाभावादिति भावः ।

कुत्वस्यासिद्धत्वे शवुद्ध्यैव जश्त्वप्रवृत्तिर्दुर्वारेति शङ्कां निवारयति—(२)न तु स्वस्थानिकेति । ननु यं प्रतीत्यनेन कुत्वैकवाक्यतापन्नपूर्वत्रासिद्धमित्यत्र पूर्वत्र

चिन्त्यम्, प्रत्ययग्रहणस्य बहुव्रीहिमात्रफलकताया एव **भाष्यकृतोक्तेः** । तस्माद्दधृक्—अञ्चु—युजिक्रुञ्चषु अस्य चारितार्थ्येन जश्त्वषत्वापवादता न युक्तेति । तदेतद् 'मते' इति वदता सूचितमिति दिक् ।

**नगिति** । षडगकाः प्राग्वत् । **नड्भ्यामिति** । "मस्जिनशोः" (पा०सू० ७।१।६०) इति नुम् तु न, धातुप्रत्यये तद्विधानात् ।

**स्पृशोऽनु** (पा०सू० ३।२।५८) । अनुदके किम् ? (१)उदकस्पर्शः । **अन्तोदात्तत्वमिति** । नित्त्वादाद्युदात्तत्वं प्राप्तम् । कुत्वस्य जश्त्वं प्रत्यासिद्धत्वादाह—**कुत्वात्पूर्वमिति** ।

**र्वोरु** (पा०सू० ८।२।७६) । "सिपि धातोः" (पा०सू० ८।२।७४) इत्यतो धातोरिति वर्त्तते, तच्च र्वाभ्यां (२)विशेष्यते । पिपठिषतेः क्विपि अतो लोपे प्रातिपदिकत्वात्सौ हल्ङ्यादिलोपे प्रत्ययलक्षणेन पदान्तत्वाद्रुः । रुत्वेऽल्लोपो न स्थानिवत् । पूर्वत्रासिद्धे (३)तन्निषेधात् ।

**नुम्वि** (पा०सू० ८।३।५८) । "इण्कोः" (पा०सू० ३।८।५७) इति वर्त्तते । व्यवधानेऽप्राप्तेरिदम् । अयमप्यधिकारः । अत एव 'निंस्स्व' इत्यत्र धातोः सस्य नानेन षत्वम् । व्यवायशब्दस्य प्रत्येकं सम्बन्धो व्याख्यानात् । तदाह—**प्रत्येकमिति** । अपिनाऽव्यवधानेऽपि । **नुम्स्थानिकेति** । प्रकृतसूत्रस्थं हयवरट्सूत्रस्थञ्च **भाष्य**मत्र मानम् । **व्रश्चेति ष इति** । सपादसप्ताध्यायीस्थकार्यप्रवृत्तियोग्यतायां त्रिपादीस्थस्याप्रवृत्तेर्हल्ङ्यादिलोपोत्तरं विविश्स् इत्यवस्थायां षत्वस्यासिद्धत्वात्संयोगान्तलोपे

---

जश्त्वातिरिक्तत्वेन सङ्काचात्कथं जश्त्वदृष्ट्याऽसिद्धत्वमिति चेत् ? न, अपवादसूत्रारम्भसामर्थ्येनापवादप्रवृत्तिप्राक्क्षणेऽपवादशास्त्रस्यासिद्धत्वाभावबोधनेन तस्य चारितार्थ्यात् सर्वथाऽसिद्धत्वबाधे मानाभावेनात्र कुत्वप्रवृत्तिप्राक्काले तस्यासिद्धत्वाभावेऽपि तत्प्रवृत्त्युत्तरं कुत्वस्यासिद्धत्वेन तद्दृष्ट्या तस्य तत्रापि प्रवृत्तिसत्त्वेन तदप्रवृत्तेरित्याशयात् ।

(१)**उदकस्पर्श इति** । ननु तदसत्त्वेऽपि वाऽसरूपन्यायेनाणि अस्य सिद्धत्वादिदं प्रत्युदाहरणं चिन्त्यमिति चेत् ? न, 'उदकस्पृड्' इत्यस्योपलक्षणत्वेनादोषात् ।

(२)**विशेष्यते इति** । तेन 'प्रियग्रामणिः' इत्यादौ न दीर्घ इति भावः ।

(३)**तन्निषेधादिति** । अत्रत्यं तत्वं नपदान्तसूत्रे निरूपितम् ।

ष इत्यर्थः । **कलोप इति ।** पदान्तसंयोगादिलोपस्य संयोगान्तलोपाभावादत्वादिति भावः ।

**ताडिति ।** तक्ष्णोतेः क्विप् । **ण्यन्ताभ्यामिति ।** णिलोपस्य स्थानिवत्त्वात् 'तक्स्थाता' इत्यादौ संयोगादिलोपाप्राप्तेः "काष्ठशगेव नास्ति, कुतः काष्ठशक्स्थाता" इति "परेश्च घाङ्कयोः" (पा०सू० ८।२।२२) इतिसूत्रस्थ**भाष्येण** न विरोधः । तत्र झल्परसंयोगादिलोपमाशङ्क्य तथोक्तम् । **तस्य दोष इति ।** "क्वौ लुप्तम्" इति तु न सार्वत्रिकमिति भावं इत्यन्यत्र विस्तरः ।

**कुत्वस्यासिद्धत्वादिति ।** पिपच् स् इत्यवस्थायाङ्कुत्वस्यासिद्धत्वात् तदभावे "स्कोः" (पा०सू० ८।२।२९) इत्यस्याप्राप्तेः संयोगान्तलोपे इति भावः । **दिधगिति ।** "दादेः" (पा०सू० ८।२।३२) इति घः । "एकाचः" (पा०सू० ६।१।१) इति भष्भावः ।

**विद्वानिति ।** विदेः शतुर्वसावदादित्वाच्छपो लुकि शतुर्ङित्वाद् गुणाभावे उगित्त्वान्नुमि "सान्त" (पा०सू० ६।४।१०) इति दीर्घे संयोगान्तलोपे तस्यासिद्धत्वान्नलोपो न ।

**वसोः** (पा०सू० ६।४।१३१) । प्रत्ययग्रहणे तदन्तग्रहणं, "भस्य" (पा०सू० ६।४।१२९) इत्यधिकारः, तदाह—**वस्वन्तस्येत्यादि ।** न च विदेः शतुर्वसोरेकानुबन्धकत्वात्तस्यैव ग्रहणं स्यात् न लिडादेशक्वसोरिति वाच्यम्, वसुसादेशेन तस्यापि द्व्यनुबन्धकत्वादिति **भाष्ये** स्पष्टम् । **विदुष इति ।** साम्प्रसारणपूर्वत्वस्य "षत्वतुकोः" (पा०सू० ६।१।८६) इत्यसिद्धत्वे तु न, पदान्तपदाद्योरेकादेशस्यैव (१)तेनासिद्धत्वात् ।

**सेदिवानिति ।** षद्लृधातोः "भाषायां सद" (पा०सू० ३।२।१०८) इति लिटः क्वसौ द्वित्वे "अत एक" (पा०सू० ६।४।१२०) इत्येत्वाभ्यासलोपयोः "वस्वेकाजाद्" (पा०सू० ७।२।६७) इतीट् । अकृ

---

(१)**तेनासिद्धत्वादिति ।** अत एव 'वृक्षेच्छत्रम्' इत्यादौ ह्रस्वत्वप्रयुक्तः "छे च" (पा०सू० ६।१।७३) इति नित्यस्तुम्, किन्तु दीर्घत्वप्रयुक्तो "दीर्घात्" "पदान्ताद्वा" (पा०सू० ६।१।७५, ७६) इति वैकल्पिक एवेति दिक् ।

तेति । **परे** तु—पदावधिकेऽन्वाख्याने सेद् वस् अस् इति स्थिते इट्सम्प्रसारणयोः प्राप्तौ प्रतिपदविधित्वेन शीघ्रोपस्थितिकत्वात् पूर्वं सम्प्रसारणे वलादित्वाभावादिटः प्राप्तिरेव नेति 'सेदुषः' इत्यादिसिद्धिरित्यकृतव्यूहपरिभाषा निष्फला । लक्ष्यानुरोधादत्र पदावधिकमेवान्वाख्यानमित्याहुः ।

**साहचर्यादिति** । न च महत्यतेः क्विपि महतोऽपि धातुत्वसम्भव इति वाच्यम्, औपदेशिकधातुत्वासम्भवेन तत्साहचर्येणौपदेशिकधातुभिन्नसान्तसंयोगस्य ग्रहणमित्याशयात् । **सुहिनिति** । नान्तलक्षणदीर्घस्तु संयोगान्तलोपस्यासिद्धत्वान्न हिसीत्यस्येदित्त्वात् "अनिदिताम्" (पा०सू० ६।४।२४) इति नलोपो न । **ध्वदिति** । ध्वंसु अवस्रंसने, क्विप् । अनिदित्त्वान्नलोपः । "वसु" (पा०सू० ८।२।७२) इति दत्वम् ।

**विवक्षिते इति । भाष्ये**—"असुङ्ङ्युपदेशिवद्वचनं स्वरसिद्ध्यर्थं बहिरङ्गलक्षणत्वात्" इत्युक्तेरिति भावः । वस्तुतो वचनमेव ज्यायः । विवक्षितसप्तम्यामपि विभक्तिबुद्धिनिमित्तकत्वेन बहिरङ्गत्वात्ततः पूर्वं 'परमपुमान्' इत्यादौ स्वरप्रवृत्तौ दोषात् । **बहुपुंसीति** । विभक्तौ लिङ्गविशिष्टाग्रहणान्नासुङ् । विभक्तिविवक्षाया लिङ्गकार्योत्तरमेव सत्त्वेन न ङीपः प्रागसुङिति भावः । **पूञ इति** । पातेरिति पाठान्तरम् । "स्त्रियाम्" (पा०सू० ४।१।३) इति सूत्रे **भाष्ये** तु "सूतेः सस्य पः, ह्रस्वः म्सुन्प्रत्ययः" इत्युक्तम् । वस्तुत उच्चारणार्थानामपीत्सञ्ज्ञावश्यकत्वादियमुक्तिर्निष्फला । **पुमानिति** । "सान्त" (पा०सू० ६।४।१०) इति दीर्घः ।

**उशनेति** । वशेः कनसिः, "ग्रहिज्या" (पा०सू० ६।१।१६) इति सम्प्रसारणम् । **अस्य सम्बुद्धाविति** । एतच्च वृत्तौ वाचनिकं पठितम् । वशधातौ **माधवस्तु**—

"सम्बोधने तूशनसस्त्रिरूपं सान्तं तथा नान्तमथाप्यदन्तम्" ।

इति श्लोकवार्त्तिकमित्याह । **भाष्यानुक्तत्वादिदमप्रमाणमेवेति** प्रामाणिकाः । उशना शुक्रः । अनेहा कालः । "नञि हन एह च" (उ०सू० ६७३) इत्यसुन्, हन एहादेशश्च । **सुव इति** । आधातोरित्यस्य धात्व-

वयवभिन्नासन्तस्येत्यर्थ इति भावः । अन्यथा समुदायस्य धातुभिन्नत्वाद्दीर्घः स्यादेवेति बोध्यम् ।

**अदस औ** (पा०सू० ७।२।१०७) । अदस इति षष्ठी । "तदोः सः" (पा०सू० ७।२।१०६) इत्यतः साविति वर्त्तते । औत्वं त्यदाद्यत्वापवादः । ननु "सोर्डौ" इत्येवास्तु इति चेत् ? न, असावित्यत्र टिलोपे कृते नित्यत्वात्सत्वं बाधित्वा त्यदाद्यत्वे 'असौ' (१)इत्यासिद्धेः । **असुक इति**। 'अमुकः' इत्यादौ त्वव्युत्पन्नोऽदःशब्दपर्यायोऽमुकशब्द इत्याहुः ।

**एत ईत्** (पा०सू० ८।२।८१) । बहुवचनशब्दो यौगिक इत्याह-**बह्वर्थेति** । तेन 'अमी' इति (२)सिद्धम् । **पश्चादुत्वेति** । उत्वेत्युपलक्षणमीत्वस्यापि ।

ननु मुत्वस्यासिद्धत्वात्कथं नाभाव इत्यत आह—(३)**न मु ने इति**।

---

**(१)इत्यासिद्धेरिति** । शब्दान्तरप्राप्त्याऽनित्यत्वमाश्रित्य परत्वात्, 'सत्यपि सम्भवे बाधनं भवति' इत्याश्रित्यापवादत्वाद्वा अनन्त्ययोरित्येतत्प्रत्याख्याने टिलोपे "तदोः" (पा०सू० ७।२।१०६) इति सत्वेन 'असौ' इत्यस्य सिद्धावपि 'असकौ' इत्यत्र टिलोपे दकारस्य सत्वे च ककारस्य त्यदाद्यत्वेन ककारश्रवणानापत्तिः । सत्वात्वयोः समावेशस्तु 'सः' इत्यादौ भवत्येवेति भावः । ननु अदस इत्यस्य पञ्चम्यन्तत्वमाश्रित्य सोरौकाराविधानमेवास्तु किं मुलोपविधानेनेति चेत् ? न, तथा सति 'असकौ स्त्री' इत्यत्र त्यदाद्यत्वे टापि प्रत्ययस्थादितीत्वप्रसङ्गात् । नच आपीत्यत्राकारप्रश्लेषः आकाररूपे आपि इत्यर्थात् नित्यत्वादेकादेशे आकाररूपापोऽभावान्नेत्वापत्तिरिति वाच्यम्, एवमपि विभक्त्यनिमित्तत्वेनान्तरङ्गत्वादेकादेशं बाधित्वा इत्वस्य दुर्वारतयाऽऽपस्तदवस्थत्वात् । अन्यथा द्विवचने 'कारिके' इत्यादौ इत्वं दुरुपपादमिति दिक् ।

**(२)सिद्धमिति** । परिभाषितस्य बहुवचनस्य ग्रहणे तु 'अमीभिः' इत्यादावेव स्यात्; तत्परकत्वात्, न तु 'अमी' इत्यत्र, एकादेशे व्यपवर्गाभावादिति भावः ।

**(३)नमुने इति** । अत्र 'मु' इत्यस्याभावे मनस इः मनइः तेन 'मनइना' इत्यत्र नाभावे कर्तव्ये कृते च कस्याप्यसिद्धत्वं नेत्यर्थे "लोपः शाकल्यस्य" (पा०सू० ८।३।१९) इति लोपस्याप्यसिद्धत्वाभावे आङ्गुणे उक्तरूपासिद्धिः । एवं किमूशब्दस्य उशब्देऽनुकरणेन उशब्देन समासे ततस्तृतीयाविभक्तौ "प्रकृतिवदनुकरणम्" (प०भा० ३६) इत्युक्तातिदेशे "मय उञो वो वा" (पा०सू० ८।३।३३) इत्यस्याप्यसिद्धत्वाभावे वत्वापत्तौ किम्वा इत्यापद्येत, इष्यते च किमुनेति । एवं 'पयोरुणा' इत्यत्र "रो रि"

**कर्तव्ये कृते चेति** । एवञ्च ने इति विषयसप्तमीति भावः । **भाष्ये** तु ने यत्कार्यं तत्रासिद्धत्वं नेत्यर्थेनैव नाभावोऽप्याक्षिप्त इति व्याख्यातम् । मु इति समाहारद्वन्द्वः । कृते चेत्युक्तेर्मुत्वे "सुपि च" (पा०सू० ७।३।१०२) इति (१)दीर्घो न । **अमीभिरिति** । "नेदमदसोः" (पा०सू० ७।१।११) इत्यैस् न ।

## इति हलन्ताः पुँल्लिङ्गाः ॥

---

**नहो धः** (पा०सू० ८।२।३४)। "झलो झलि" (पा०सू० ८।२।२६) इत्यतो झलीति, पदस्येति, "स्कोः" (पा०सू० ८।२।२९) इत्यतोऽन्त इति चानुवर्त्तते । झलि परे (२)पदान्ते विद्यमानस्येत्यर्थः। "अलोऽन्त्यस्य" (पा०सू० १।१।५२) इत्येतल्लब्धं **हस्येति** । उपपूर्वात् णह बन्धने इत्यतः क्विप् । "नहिवृति" (पा०सू० ६।३।१०६) इति पूर्वपदस्य दीर्घः । सोर्हल्ङ्यादिलोपे धत्वजश्त्वचर्त्वादि ।

(३)**दलोपषत्वे इति** । पूर्वपदान्तस्य लोपो, धातोः सस्य षत्वम् । "आदेशप्रत्यययोः" (पा०सू० ८।३।५९) इति तु न षत्वं, पदाद् आदि-

---

(पा०सू० ८।३।१४) इत्यस्याप्यसिद्धत्वाभावे परत्वात् "हशि च" (पा०सू० ६।१।११४) इत्युत्वं बाधित्वा "रोरि" इति लोपे च पयारुरुणेत्यापद्येत । नाभावे उत्वमसिद्धं नेत्यर्थके नो न इति न्यासे तु "एचोऽप्रगृह्यस्य" (पा०सू० ८।२।१०७) इति सिद्धस्य सम्बोधनविभक्त्यन्तस्य छान्दसस्य 'पटा३उ' इत्यस्यानुकरणे तृतीयाविभक्तौ उत्वस्यासिद्धत्वाभावे घित्वान्नाभावे 'पटा३ना' इत्यापद्येतेति दिक् ।

(१)**दीर्घो नेति** । सन्निपातपरिभाषया तु न दीर्घव्यावृत्तिः "सुपि च" (पा०सू० ७।३।१०२) इति दीर्घे कर्तव्ये सन्निपातपरिभाषया अप्रवृत्तेः "अतोऽम्" (पा०सू० ७।१।२४) इति सूत्रे उपपादितत्वादिति भावः ।

॥ इति हलन्ताः पुँल्लिङ्गाः ॥

---

(२) **पदान्ते विद्यमानस्येति**। विद्यमानस्य चेत्यर्थः। (३)**दलोपषत्वे इतीति** । तलोपषत्वे इति मूले टीकायां च क्वचित् पुस्तके पाठो लेखकप्रमादाद्बोध्यः। "उदः स्था" (पा०सू० ८।४।६१) "उद ईत्" (पा०सू० ६।४।१३९) "उदोऽनूर्ध्वक-

रिति पक्षे "सात्पदाद्योः" (पा०सू० ८।३।१११) इति निषेधात्। ह्रस्व **घ इति। कैयटा**दिमते षत्वस्येव ढत्वस्यापि कुत्वेन बाधादिति भावः। 'उष्णिगञ्चु' इति निर्देशात्कुत्वस्य जश्त्वेनासिद्धत्वम्। स्वरीत्या तु ढङगञ्च इति बोद्ध्यम्।

**द्यौरिति।** "दिव औत्" (पा०सू० ७।१।८४) इत्यौत्वं, यण्। **चतस्र इति।** परत्वादामं बाधित्वा चतस्रादेशे सकृद्गतिन्यायात्पुनराम् नेति स्थानिवत्सूत्रे **भाष्ये। चतसृणामिति।** "न तिसृ" (पा०सू० ६।४।४) इति दीर्घनिषेधः। **स्सर्वावदिति।** सर्वाशब्दवदित्यर्थः। अत एव 'सर्वनाम्नो वृत्तिमात्रे' इति न पुंवत्त्वं, शब्दपरस्य कदाऽपि सर्वनामत्वा- भावादिति भावः।

**यः सौ** (पा०सू० ७।२।११०)। पुंस्यया बाधात्, क्लीबे सोर्लुका लोपात्, स्त्रियामिदम्। **वागिति।** वचः 'क्विब् वचि' इत्यादिना क्विप्, दीर्घोऽसम्प्रसारणञ्च।

**अपो भि** (पा०सू० ७।४।४८)। "अच उपसर्गात्तः" (पा०सू० ७।४।४७) इत्यतस्त इत्यनुवर्त्तते। अबिति न प्रत्ययो व्याख्यानात्। **दिगिति।** दिश अतिसर्जने, क्विप्। षडगकाः प्राग्वत्। त्विष गतौ, अस्मात् क्विप्, जश्त्वचर्त्वे। जुषी प्रीतीत्यतः क्विप्। सहस्य सभावे सजूः। **अमूभिरिति।** अदन्तत्वाभावादेत्वाभावेन "एत ईद्" (पा०सू०८।२।८१) इत्यस्याभावे मूत्वमेव॥

**इति हलन्ताः स्त्रीलिङ्गाः॥**

---

**दत्वमिति।** "वसुस्रंसु" (पा०सू० ८।२।७२) इत्यस्य पदाधि- कारस्थत्वात्तदन्तेऽपि दत्वम्। एवमाङ्गत्वादामपि। **पूर्वपदस्येवेति।**

---

कर्मणि" (पा०सू० १।३।२४) इत्यादौ सर्वत्र दान्तपाठेन उदो दान्तत्वस्यैव लाभात्।

**॥ इति हलन्ताः स्त्रीलिङ्गाः ॥**

प्रत्ययलक्षणेनेति भावः । अत एव राजपुरुषादौ नलोपादिसिद्धिः । **उत्तरपदत्वे चेति** । उत्तरशब्देनोत्तरपदं लक्ष्यते । उत्तरपदशब्दश्च समासचरमावयवे रूढः । तेन तस्य पदत्वे तत्प्रयुक्तकार्ये कर्त्तव्ये लुमता लुप्ते प्रत्ययलक्षणं न । पदादिविधौ त्वयं निषेधो नेत्यर्थः । तेन 'परमवाचा' इत्यादौ न कुत्वं, 'दधिसेचौ' इत्यादौ "सात्पदाद्योः" (पा०सू० ८।३।१११) इति षत्वनिषेधश्च । निरुपपदादेव विचि षष्ठीसमासोऽत्र । सोपपदाद्विचोऽनभिधानमिति **कैयटः** । सेचयतेः क्विबित्यन्ये । पदादिविधिश्च प्रतिपदोक्तत्वात् "सात्पदाद्योः" (पा०सू० ८।३।१११) इत्येव । तेन "परमबुधौ' इत्यादौ भष्भावो न । "उत्तरपदादिः, कर्णो वर्णलक्षणात्" इत्यादौ तूत्तरपदशब्दस्य समासचरमावयमात्रे रूढेर्न दोषः । अयञ्च निषेध उत्तरपदस्य कार्यित्व एवेति ङमुट्सूत्रे उक्तम् । बहुच्पूर्वके 'बहुवाचौ' 'बहुसेचौ' इत्यादावपि न दोषः, "बहुच्पूर्वस्य च पदादिविधावेव प्रत्ययलक्षणम्" इति वचनान्तरात् । पूर्ववार्त्तिकमपि 'उत्तरपदत्वे च पदादिविधौ' इत्येवमेव पठितम् । एतत्प्रत्याख्यानप्रकारस्तु गुरुतर इति न युक्त इति **भाष्ये** ध्वनितं प्रत्याख्यानोत्तरं पुनर्नञघटितैतद्वचनपाठेनेति न स लिखितः । उत्तरपदशब्देन मध्यमपदत्वानाक्रान्तोत्तरपदस्य ग्रहणं व्याख्यानात् । तेन 'पूर्वदण्डिप्रियः' इत्यादाववान्तरतत्पुरुषोत्तरपदेऽपि नलोपादिसिद्धिः । **कादेशो नेति** । इदंशब्दे "यः सौ" (पा०सू० ७।२।११०) इति च नेत्यपि बोद्धयम् ।

**वक्तव्य इति** । 'द्वितीयाटौस्सु' इति अत्र सम्बद्ध्यते । अयञ्च सामर्थ्याल्लुका लुप्तेऽपि भवति । एनादेशोऽपि 'एनम्' इत्यादिसिद्ध्यर्थं वक्तव्यः । येननाप्राप्तिन्यायेनैनतस्त्यदाद्यत्वापवादत्वेन तत्र कृते (१)त्यदाद्यत्वाप्राप्तेः । अत एव **भाष्ये** "नपुंसकैकवचने एनद्वक्तव्यः, कुण्ड-

(१)**त्यदाद्यत्वाप्राप्तेरिति** । वस्तुतस्तु त्यदाद्यत्वविषये तक्रन्यायस्याप्रवृत्त्या, विषयसप्तम्याश्रयणाद्वा एनदादेशेऽपि त्यदाद्यत्वेन सिद्धेः एनादेशो न वक्तव्यः । अत एव 'स्तः' इत्यादौ सत्वे त्यदाद्यत्वसिद्धिः । यदिगर्भवाक्ये पूर्वपक्ष्युक्तित्वमेवोचितामिति तु कल्पनामात्रं तन्नोत्तरपदादेन भाष्यन्तरविरोधेन च सिद्धान्त्युक्तित्वस्यैव न्याय्यत्वात् ।

मानय प्रक्षालयैनत्" इत्युक्तम् । अत्र नपुंसकैकवचने इत्युक्त्याऽन्यत्रैनो वक्तव्य इति स्पष्टमेवोक्तं वार्त्तिककृता सिद्धान्तिना । अपवादत्वमजानत एकदेशिनो यद्येनदित्यादिरुक्तिः, यदिगर्भवाक्ये पूर्वपक्ष्युक्तित्वस्यैवौचित्यात्। **भाष्यकृता** तु फल्गुत्वान्नात्रोत्तरमुक्तम् ।

सिद्धान्ती तु 'किमुच्यते नपुंसकैकवचने इति, सर्वत्र एनदेव वक्तव्यः' इत्येवंशब्दैः प्रत्याख्यानं कुर्यात् । (१)अनयोरप्यादेशयोः "एतदस्त्रतसोः" (पा०सू० २।४।३३) इत्येतत्साहचर्येणोपसर्जने न प्रवृत्तिः त्यदाद्यत्वेन सिद्धमिति **भाष्यासङ्गतेश्च** । एनतमादायैनादेशप्रत्याख्यानपरं "यद्येनत्क्रियते" इत्यादि **भाष्यं** त्वेकदेश्युक्तिरिति **भाष्यप्रदीपोद्द्योते** निरूपितम् । अन्वादेशविषये इदमेतदोः (२)समासस्यानभिधानमेव, "यद्येनत्क्रियते, एनो न वक्तव्यः । कथमेनमित्यादि ? त्यदाद्यत्वेन सिद्धम् । यद्येवमेतच्छ्रितको न सिद्ध्यति, एनच्छ्रितक प्राप्नोति; यथालक्षणमप्रयुक्ते" इति **भाष्यात्** ।

**ब्रह्मणी इति** । "न संयोगात्" (पा०सू ६।४।१३७) इति निषेधादल्लोपो न । **रोऽसुपि अहर्भातीति** । "अहन्" (पा०सू० ८।२।२८) इति रुत्वे 'अहो भाति' इति स्यादिति भावः । **नलोपे प्राप्ते इति** । न च नलोपेऽकारस्य रौ रे वा विशेषाभावेनान्यतरेणैवोपपत्तावुभयविधानसामर्थ्यादेव लोपो नेति वाच्यम्, सम्बुद्धौ नलोपनिषेधेन, 'अहर्गच्छ' इत्यादावुत्वाभावेन, 'दीर्घाहो निदाघ' इत्यादावुत्वसम्पादनेन च चारितार्थ्यात् । न च नकारोच्चारणसामर्थ्यलब्धेन नकारान्तानुकरणेन नान्त-

---

नतु उपसर्जने एनादादेशस्य चारितार्थ्यात् कथं त्यदाद्यत्वापवादत्वमत आह— (१)**अनयोरप्यादेशयोरिति** ।

(२)**समासस्यानभिधानमेवेति** । वस्तुतस्तु अनभिधाने न मानम् । यथालक्षणमप्रयुक्ते इत्यस्य अप्रयुक्ते लक्षणानुसारेण साधुत्वं प्रत्येतव्यम् इत्यर्थस्य 'प्रियाद्य' शब्दे व्यवस्थापितत्वात् तकारोच्चारणसामर्थ्येन अन्तरङ्गनपुंसकलुकि प्रवृत्तावपि बहिरङ्गसामासिकलुकि प्रवृत्तौ मानाभावेन 'एतच्छ्रितकः' इत्यस्यैव न्याय्यत्वात्तदेव साध्वित्यन्यत्र विस्तरः ।

स्याहन्शब्दस्येति व्याख्यानान्नलोपो नेति वाच्यम्, 'दीर्घाहो निदाघ' इत्यादौ सम्बुद्धौ प्रवृत्त्या भ्यामादौ व्यावृत्त्या च नकारस्य चारितार्थ्याच्चेन नलोपबाधे मानाभावादिति भावः ।

**आवर्तेति ।** आवृत्तौ मानं च "रूपरात्रि" (का०वा०) इति वार्तिकमेव । अन्यथा नलोपेऽकारस्य रेफादेशेनैव सिद्धे तद्वैयर्थ्यं स्पष्टमेव । (१)**भाष्य**प्रामाण्याच्च तस्य सम्बुद्धावप्रवृत्तिः । तज्ज्ञापकासिद्धवचनकल्पनापेक्षया आवृत्तिर्लघीयसीति भावः । आवृत्तस्य पदान्ते अहन् इति निपात्यते इत्यर्थः । इदमसम्भव एवापवादत्वमिति वार्त्तिकमते "अहन्" (पा०सू० ८।२।२८) इत्यस्य नलोपोत्तरञ्चारितार्थ्याभिमानेन । वस्तुतः सत्यपि सम्भवे बाधनं भवतीति **भाष्य**सिद्धान्ताद् रुत्वरत्वे नलोपापवादभूते एव, निषेधविषयेऽपि प्राप्तिमात्रेण येननाप्राप्तिन्यायविषयसत्त्वात् । निषेधेनापि तस्य बाध इत्यन्यत् । एतेन सम्बुद्धौ चारितार्थ्यमित्यपास्तम् । ध्वनितश्चेदम् 'अपवादो रुर्नलोपं बाधिष्यते' इत्यर्थक**भाष्येण** । एतदग्रे नलोपे कृतेऽकारे सावकाशत्वशङ्कातत्समाधानादिवार्त्तिकानुसारिणोरित्यलम् ।

**तदन्तस्यापीति ।** पदाधिकारस्थत्वात् । "ग्रहणवता" (प०भा० ३१) इति निषेधस्तु प्रत्ययविधिविषय इति "असमासे निष्कादिभ्यः" (पा०सू० ५।१।२०) इति सूत्रे **भाष्यकैयटयोः** स्पष्टमिति भावः ।

**तस्यासिद्धत्वादिति ।** अकृतव्यूहपरिभाषया दीर्घाप्रवृत्तिः स्यादित्यभिमानेनेदम् । दीर्घस्तु परत्वाद्धल्ङ्याब्दिलोपात्पूर्वमेव बोद्धव्यः । **सम्बुद्धौ त्विति ।** सुपोऽत्र हल्ङ्यादिलोपात् 'असम्बुद्धौ' इत्युक्तेर्दीर्घाभावे रुत्वे

---

(१)**भाष्याप्रामाण्यादिति ।** "नलोपः प्रातिपदिकान्तस्य" (पा०सू० ८।२।७) इति सूत्रे "अह्नो नलोपप्रतिषेधो वक्तव्यः अहोभ्यामिति । न वक्तव्यः, रुरत्र बाधको भविष्यति । सावकाशो रुः, कोऽवकाशः, अनन्त्यः अकारः । नान्तनिर्देशसामर्थ्यात् न नलोप इत्यपि न । सम्बुद्ध्यर्थं हि वचनम्, हे दीर्घाहो निदाघेति । यत्तर्हि रूपरात्रिरथन्तरेषूपसङ्ख्यानं, तज्ज्ञापकं नानन्त्यस्य रुर्भवतीति । नह्यस्ति विशेषो रूपरात्रिरथन्तरेषु रौ रे वा" इति वार्तिकं ज्ञापकमुपन्यस्तम् । एतज्ज्ञापकपरभाष्यप्रामाण्यात् सम्बुद्धौ नैतद्वार्तिकप्रवृत्तिः । अन्यथा सम्बुद्धौ नान्ते वार्तिकस्य सार्थक्यात् ज्ञापकोपन्यासोऽसङ्गतः स्यादिति बोध्यम् ।

"ह्रशि च" (पा०सू० ६।१।११४) इत्युत्वे आद्गुणः। **स्रग्वीणीति**। इन्ग्रहणेऽनर्थकस्यापि ग्रहणाद्दीर्घ इति भावः। **बहुवृत्रहाणीति**। अत्र यद्वक्तव्यं तदुक्तम्।

**पदान्ते कुत्वमिति**। "क्विन्प्रत्ययस्य" (पा०सू० ८।२।६२) इत्यस्यासिद्धत्वाद् "व्रश्च" (पा०सू० ८।२।३६) इति षत्वे कुत्वमित्यर्थः। षत्वन्तु 'स्रष्टम्' इत्यादौ सावकाशमिति भावः। **भाष्यप्रयोगादिति**। अनेन **भाष्य**प्रयोगेणानव्ययपूर्वपदे कुत्वाभावो बोध्यते। तेन 'असृग्' इत्यत्र न दोषः। **कुत्वापवाद इति**। सृजियज्योः पूर्वोत्तरसाहचर्येण पदान्तेऽपि विशिष्य षत्वबोधनेन तत्सामर्थ्यात्कुत्वबाध इति भावः। अत एव 'उपयट्काम्यति' इति काम्यच्सूत्रस्थो **भाष्य**प्रयोगः सङ्गच्छते। **निपातनादेवेति**। निपातनेन ह्यनयोरपवादाप्रवृत्तिमात्रबोधनं, कुत्वन्तु स्वशास्त्रेणैव। एतेन निपातनादपदान्तेऽपि कुत्वापत्तिरिति निरस्तम्।

**असृक्शब्दस्त्विति**। इदमेव न्याय्यम्। **ऊर्गिति**। अयं पुंल्लिङ्गोऽपि "नपुंसकस्य" (पा०सू० ७।१।७२) इति सूत्रे 'बहव ऊर्ज्जः' इति **कैयटात्**। **नरजानामिति**। "बहूर्जि नुम्प्रतिषेधः" (का०वा०) इति वार्त्तिकरीत्येदम्। अचः परो यो झल् तदन्तस्य नुमिति तत्प्रत्याख्यातृ-**भाष्य**मते तु नुमोऽत्र प्राप्तिरेव नेति बोद्धव्यम्। न चैवं 'कुण्डानि' इत्य-सिद्धिः। "इकोऽचि" (पा०सू० ७।१।७३) इति सूत्रेऽचः सर्वनामस्थाने इत्यनुवर्त्त्य अनुवृत्तिसामर्थ्यादिक इत्येतत्साहचर्याच्च सर्वनामस्थाने इति सप्तम्या षष्ठीं प्रकल्प्य वाक्यभेदेनाजन्तस्य क्लीबस्य तत्र नुम्विधानाददोष इति **भाष्ये** स्पष्टम्। 'काष्ठतङ्क्षि' इत्यादौ "दिव औत्" (पा०सू० ७।१।८४) इति सूत्रभाष्योदाहृतेऽचः परझल्त्वजातेराश्रयणान्न दोषः। **अन्त्यादिति**। इदं वाचनिकमेव बहूर्ज्शब्दमात्रविषयकम्। **बहूर्ञ्जीति**। श्चुत्वस्यासिद्धत्वादनुस्वारे परसवर्णो बोद्ध्यः। **स्थानिवत्त्वादिति**। 'क्लौ लुप्तं न' इति त्वसार्वत्रिकमिति भावः। स्पष्टञ्चेदं "दीधीवेवीटाम्" (पा०सू० १।१।६) इति सूत्रे **कैयटे**।

जायन्ते नव सौ तथाऽमि च नव भ्याम्भिस्भ्यसां सङ्गमे
षट्संख्यानि नवैव सुप्यथ जसि त्रीण्येव तद्वच्छसि ।
चत्वार्यन्यवचः सु कस्य विबुधाः शब्दस्य रूपाणि तद्
जानन्तु प्रतिभाऽस्ति चेन्निगदितुं षाण्मासिकोऽत्रावधिः ॥

इति प्राचीनस्य शुष्कप्रक्रियातार्किकस्य प्रश्ने तदनुसारेणैव श्लोकद्वये-नोत्तरमाह—**गवाक्शब्दस्येति** । शब्दपरत्वेनापूजार्थकत्वान्नस्य लोपः । **भेदत इति** । आद्यादित्वात्तसिः । भेदेनेत्यर्थः । **नवेति** । द्वन्द्वान्ते श्रूयमाणत्वात्प्रत्येकं नवेत्यर्थः । अग्रेऽपि प्रत्येकमेव सङ्ख्याऽन्वयः । **गवागिति** । सोर्लुका लुप्तत्वान्नुम् न । **षण्णामिति** । कुक्पक्षे त्रयाणां, गतौ त्रयाणामित्यर्थः । **चत्वर्यस्येति** । तेन गतौ त्रयाणामाधिक्यं नेत्यर्थः । **कुक्पक्षे इति** । पूजायामित्यर्थः । **अश्वाक्षीति** । सप्तविंशत्यधिका पञ्चशतीत्यर्थः ।

**यः शतेति** । शतृप्रत्यय इत्यर्थः ।

**आच्छीन** (पा०सू० ७।१।८०) । वेति वर्त्तते, उत्तरसूत्रे नित्यग्रहणात् । "नाभ्यस्तात्" (पा०सू० ७।१।७८) इत्यतो नेति तु नानुवर्त्तते निषेधस्य प्राप्तिपूर्वकत्वात् । अत्र च प्राप्त्यभावात् । नुम्ग्रहणन्तु स्पष्टार्थम् । **शतुरवयव इति** । परो यः शतेति तु नोक्तम् 'तुदन्ति' इत्यादावेकादेशे उभयत आश्रयणेऽन्तादिवद्भावाभावेन व्यपवर्गालाभेन च नुमभावापत्तेः । अवर्णश्च (१)शतृभिन्नावयव एव गृह्यते शत्रकारेणाव्यभिचारात् ।

**शप्श्यनोः** (पा०सू० ७।१।८१) । आदिति 'भाति' इत्यादौ नित्यनुमभावाय । अन्यथा प्रत्ययलक्षणेन स्यात् । आदित्युक्तौ तु वर्णप्राधान्यान्न प्रत्ययलक्षणम् । "न लुमता" (पा०सू० १।१।६३) इति निषेधस्तु प्रत्यासत्त्या लुप्तप्रत्ययनिमित्ताङ्गस्य कार्ये एवेति भावः । 'पचन्ति' इत्यादिबहुवचने "नपुंसकस्य झलचः" (पा०सू० ७।१।७२) इति नुम् । **निरवकाशत्वमिति** । इदं "छदिरुपधिबलेर्ढञ्" (पा०सू० ५।१।१३)

(१)शतृभिन्नावयव इति । तेन 'कुर्वती' इत्यादौ न नुमिति भावः ।

(१)इति सूत्रे (२)"शेषाद्विभाषा" (पा०सू० ५।४।१५४) इति सूत्रे च भाष्ये स्पष्टम्। परे तु निरवकाशत्वरूपप्रतिपदोक्तत्वस्य बाधकताप्रयोजकत्वम्। प्रकृते तदभावेनाबाधकत्वेऽपि प्रतिपदविधित्वेन शीघ्रोपस्थितिकतया पूर्वं प्रवृत्तौ नियामकत्वे बाधकाभावेन पूर्वं दीर्घे ततो नुमि (३)'स्वाम्पि' इत्येवेत्याहुः।

**धनुरिति।** "र्वोः" (पा०सू० ८।२।७६) इति दीर्घस्तु न; रेफान्तस्याधातुत्वात्। 'श्रेयांसि' इत्यादौ युगपद् द्वयोरन्त्यादचः परत्वायोगाद्विरोधेन परत्वाज्झलन्तलक्षणे नुमि कृते उगिल्लक्षणो न, सकृद्गतिन्यायात्। किञ्च अन्त्यादचः परो मित्प्रयोक्तव्य इति "मिदचः" (पा०सू० १।१।४७) इत्यस्यार्थेन द्वयोर्मितोरन्त्यादचः परप्रयोगासम्भवेन नात्र नुमद्वयप्रसक्तिः पुनःप्रसङ्गविज्ञानेऽपि। किञ्च सत्यपि नुम्द्वये परस्यानुस्वारे तस्य झल्ग्रहणे

---

(१)इति सूत्रे इति। छदिरुपधीतिसूत्रविषये "उगवादिभ्यो यत्" (पा०सू० ५।१।२) इति सूत्रे छदिषे हितं चर्मेत्यर्थे छदिरुपधीति ढञः "चर्मणोऽञ्" (पा०सू० ५।१।१५) इत्यञश्च प्राप्तौ "छदिरुपधिवलेर्ढञ्" इत्यस्य पूर्वविप्रतिषेधेन बाधकत्वमुक्तम्। सावकाशस्यापि प्रतिपदविधेर्बाधकत्वे तु "छादिषेयं तृणम्' इत्यादौ सावकाशेन छदिरुपधीति ढञा प्रतिपदविधित्वादेव चर्मणोऽञ् इत्यञो बाधे सिद्धे पूर्वविप्रतिषेधाश्रयणं व्यर्थं स्यात्। तस्मात् प्रतिपदविधेर्निरवकाशत्वे सत्येव बाधकत्वं लभ्यते इति भावः।

(२)शेषाद्विभाषेति सूत्रे चेति। अत्रापि "शेषग्रहणं किमर्थं, ये प्रतिपदं विधीयन्ते ते बाधका भविष्यन्ति, अनवकाशा हि विधयो बाधका भवन्ति, सावकाशाश्च कवभावे सावकाशाः" इति स्पष्टमभिधानात् निरवकाशत्वे सत्येव प्रतिपदविधेर्बाधकत्वं लभ्यते इति भावः।

(३)स्वाम्पीत्येवेत्याहुरिति। प्रतिपदविधेरनित्यस्य पूर्वं प्रवृत्तिस्तु क्वाचित्की, नित्यस्य तु 'सेदुषः' इत्यादौ सर्वत्रैव। तेन 'इयाय' इत्यादौ "अचो ञ्णिति" (पा०सू० ७।२।११५) इति वृद्धौ कृतायाम् "एरनेकाचः" (पा०सू० ६।४।८२) इत्यत एरित्यपकर्षविशिष्टस्य "इणो यण्" (पा०सू० ६।१।७७) इत्यस्याप्राप्त्याऽनित्यत्वाच्च न प्रवृत्तिः। तत्र एरित्यपकर्षस्तु 'आयन्' इत्यादौ लावस्थायामाडिति सिद्धान्तपक्षे अन्तरङ्गत्वाद् अटश्चेति वृद्धौ कृतायां प्राप्तस्य यणो व्यावृत्तये असिद्धवत्सूत्रे भाष्ये उक्तः। एवं 'जुहवानि' इत्यादौ गुणे कृतेऽप्राप्तस्य "ओः सुपि" (पा०सू० ६।४।८३) इत्यत ओरित्यनुवृत्तिविशिष्टस्य "हुश्नुवोः" (पा०सू० ६।४।८७) इति यणः, 'अविभः' इत्यादौ "घेर्ङिति" (पा०सू० ७।३।१११) इति गुणे कृतेऽप्राप्तस्य "अचि श्नु

ग्रहणात् पूर्वस्यानुस्वारे द्वयोरनुस्वारयोः श्रुतौ न विशेष इति "नपुंसकस्य" (पा०सू० ७।१।७२) इति सूत्रे **भाष्ये** स्पष्टम् ।

## इति हलन्ता नपुंसकलिङ्गाः ।

---

**स्वरादि** (पा०सू० १।१।३७) । स्वरादीनामपि निपातसंज्ञैव तु न कृता, स्वरादौ "निपाता आद्युदात्ताः" (सू० ४।८०) इत्यापत्तेः । एतेन चादीनामप्यव्ययसञ्ज्ञैव कार्येत्यपास्तमित्यन्यत्र विस्तरः । **स्वरित्यादि** । अनुकरणान्येतानि । तत्रेत एव निर्देशान्न स्वाद्युत्पत्तिः, तेन विसर्गादिकं न । स्वरादीनामनेकशक्तिप्रधानता स्वरागतः, स्वः स्थितः, स्वः पश्येत्यादिदर्शनात् । गणे च तन्त्रेण सर्वेषामुच्चारणम् । 'उच्चैः' इत्यादीन्यधिकरणशक्तिप्रधानानि शब्दशक्तिस्वभावात् । हिरुगादीनि क्रियाप्रधानानि । क्रियाप्राधान्यञ्चैषां क्रियायामेव विशेषणत्वेन । स्पष्टञ्चेदं "तद्धितश्च" (पा०सू० १।१।३८) इति सूत्रे **कैयटे** । सायं, चिरं मान्ते अव्यये । "सायञ्चिरम्" (पा०सू० ४।३।२३) इति सूत्रस्थ(१)**भाष्य**प्रामाण्याच्चिरमित्यव्ययमप्रामाणिकमिति **परे** ।

**वदिति** । "तेन तुल्यम्" (पा०सू० ५।१।११५) "तत्र तस्येव"

---

(पा०सू० ६।४।७७) इत्यतो य्वोरित्यनुवृत्तिविशिष्टस्य "स्त्रियाः" (पा०सू० ६।४।७९) इति इयङश्च न पूर्वं प्रवृत्तिः । न चैवं प्रतिपदविधित्वस्य पूर्वप्रवृत्तिप्रयोजकत्वकथनं व्यर्थं, नित्यत्वादेव सिद्धेरिति वाच्यम्, 'सेदुषः' इत्यादौ अन्तरङ्गादपि इटः प्राक् सम्प्रसारणप्रवृत्त्यर्थं तस्य तत्त्वस्वीकारात् 'स्वाम्पि' इत्यादौ क्वचित् अनित्यस्यापि दीर्घस नुमः प्राक् प्रवृत्त्यर्थं तत्स्वीकाराच्चेति दिक् ।

## इति हलन्ता नपुंसकलिङ्गाः ।

---

(१)**भाष्यप्रामाण्यादिति** । तत्र हि सूत्रे सायचिरयोर्मान्तत्वं प्रत्ययसन्नियोगेन निपात्यते इत्युक्त्वा नैतदस्ति, मान्तः 'सायम्' शब्दोऽव्ययं, तथा चाव्ययत्वादेव सिद्धे 'सायम्' शब्दग्रहणं न कार्यमिति प्रत्याख्यानं सायंशब्दविषयकमेव कृतं, न तु चिरंशब्दविषयम्; इति तद्ग्रहणं तत्र मान्तत्वं च कर्तव्यमेवेति सिद्धम् । तथाचैतस्यानव्ययत्वं स्पष्टमेव सूचितम् ।

(पा०सू० ५।१।११६) "तदर्हम्" (पा०सू० ५।१।११७) इति विहितः। "उपसर्गाच्छन्दसि" (पा०सू० ५।१।११८) इति विहितस्य च्छान्दसत्वादेव (१)न सञ्ज्ञा। वस्तुतः "तद्धितश्च" (पा०सू० १।१।३८) इत्येव सिद्धेर्वद्ग्रहणं व्यर्थम्। **अन्तराऽन्तरेणेति**। "अन्तरान्तरेण युक्ते" (पा०सू० २।३।४) इति सूत्रे **भाष्ये**ऽनयोर्निपातत्वोक्तेः स्वरादिष्वनयोः पाठः प्रक्षिप्तः।

**अस्तीति**। धनवानित्यर्थके 'अस्तिमान्' इत्यादौ धनवाचिनः सत्त्ववचनस्य विभक्तिप्रतिरूपकत्वेन न सिद्धिरित्यस्य पाठः विनिगमनाविरहे विभक्तिप्रतिरूपकस्य शब्दतोऽर्थतश्च ग्रहणात्। तेनैवसिद्धिरिति तु मतुप्रकरणे **भाष्यकैयटयोः**। सत्ताकर्तृत्वेनैव धनबोधादस्ति कथञ्चिदर्थतः साम्यमिति तद्भावः। एवञ्चास्तीत्यस्याप्रामाणिकः पाठ इति तत्त्वम्। **नमसिति**। 'महसां नमसाम्' इति प्रयोगस्तु सत्त्ववाचकत्वे बोध्यः। **प्रताम् प्रशामिति**। प्रतानिति नान्ताव्ययस्य पृथक् पाठसामर्थ्यात्पदान्तत्वाच्चास्य नत्वाभावः। प्रशानिति नान्तपाठोऽसाम्प्रदायिकः। मान्तानुकरणे नत्वाप्राप्तेः, स्वरादेरुत्वादिवत्। (२)कृन्मेजन्तसूत्रस्थ**भाष्य**स्वरसोऽप्येवमेव। नञः स्वरादिष्वप्रामाणिकः पाठः। "अव्यये नञ्कुनिपातानाम्" इत्यत्र पृथक् नञ्ग्रहणं तु 'अकरणिः' इत्यादौ परस्यापि कृत्स्वरस्य बाधनार्थमित्याकरः। एवं माङोऽपि स्वरादौ प्रक्षिप्तः पाठः। यावत्तावच्छब्दावव्युत्पन्नौ।

**उपसर्गविभक्ति** (ग०सू०)। अत्र प्रतिरूपकत्वं विनिगमनाविरहादर्थतः शब्दतश्च गृह्यते। 'गेये केन विनीतौ वाम्' इत्यत्रापि वामित्यस्य युष्मत्प्रकृतिकविभक्त्यन्तसमानार्थत्वमस्त्येव। स्वरांशे तु नाऽर्थतोऽसम्भवात्। एतेन युगं पततीत्यादिव्युत्पत्त्याश्रयणेन 'युगपत्' इत्यादीनां

---

(१)**न संज्ञेति**। अत एव 'यदुद्रतो निवतः' इत्यादौ विभक्तिश्रवणमिति भावः।

(२)**कृन्मेजन्तसूत्रस्थेति**। तत्र हि कृदन्तं यन्मान्तमिति पक्षे, 'प्रतान्' इत्यादौ अव्ययत्वापत्तिमाशङ्क्य स्वरादिषु 'प्रशाम्'—शब्दपाठसामर्थ्यात् प्रत्ययलक्षणेन कृदन्तस्याव्ययसंज्ञा नेति ज्ञाप्यते इति समाहितम्। तेन च मान्तपाठ इति स्वमेव लभ्यत इति भावः।

विभक्तिप्रतिरूपकत्वादेव सिद्धे तेषां गणे पाठो व्यर्थ इत्यपास्तम् । एवं तदित्यपि लुप्तषष्ठीकं विभक्तिप्रतिरूपकमव्ययम् । अत एव 'अविद्या तच्चितोर्योग.' 'तत्तदर्थविभागः' इत्यादौ "त्यदादीनि" (पा०सू० १।२।७२) इति (१)नैकशेषः । **अवदत्तमिति** । अत्र क्रियायोगेऽपि—

अवदत्तं विदत्तञ्च प्रदत्तञ्चादिकर्मणि ।
सुदत्तमनुदत्तञ्च निदत्तमिति चेष्यते ॥

इति **भाष्य**वचनेनोपसर्गत्वाभावबोधनद्वारा तादेशाभावो बोद्ध्यत इत्याशयः ।

**आकृतीति** । 'अहः' इत्यहनीत्यर्थे । ओमिति च स्वरादिषु । तच्च अश्च उश्च म् चेति व्युत्पत्त्या शिवादिवाचकम्, 'अवतेष्टिलोपश्च' इति सिद्धं ब्रह्मण्यङ्गीकारे च । उभयोरपि स्वरादित्वं व्याख्यानात् । अन्त्ये "कृन्मेजन्तः" (पा०सू० १।१।३९) इति तु न सिद्ध्यति "च्विरव्ययम्" (उ०सू०२३३) इत्युणादिपठितेन नियमादप्राप्तेः । उणादिव्युत्पन्नानाञ्चेचादिस्वराद्यपठितानां भवति, तर्हि च्व्यन्तानामेवेति तदर्थः । अन्यथा च्व्यन्तानां नि(*)पातत्वादेवासिद्धे तद्वैयर्थ्यं स्पष्टमेव । "स्वरादिनिपातम्" (पा०सू० १।१।३७) इत्यत्र निपातपदे गौणमुख्यन्यायाप्रवृत्तिः, अनित्यत्वात् । अन्यथा "ओत्" (पा०सू १।१।१५) इति प्रगृह्यत्वमिवेदमपि न स्यात् । एवमतिशयेन साधुरित्यर्थे (२)साधीय इत्यपि ।

सर्वशब्दोऽत्र 'सर्वः पटो दग्धः' इतिवद् (३)अवयवकार्त्स्न्ये इत्याश-

---

(१)**नैकशेष इति** । त्यदादिषु साहचर्येणानव्ययस्यैव ग्रहणादिति भावः ।

(२)**साधीय इति** । अत एव तत्र तत्र 'कश्च साधीयः' इति भाष्यप्रयोगः सङ्गच्छते । ईयसुन्नन्तत्वे हि 'कश्च साधीयान्' इति स्यादिति भावः ।

(३)**अवयवकार्त्स्न्ये इति** । सर्वप्रकारान्नभोजीयार्थके 'सर्वान्नीनो भिक्षुः' इत्यादाविव प्रकारकार्त्स्न्यवाचिनः सर्वशब्दस्य ग्रहणे हि "अव्ययेभ्यः सर्वासां विभक्तीनामेकवचनानि उत्पद्यन्ते" इति पक्षे सूत्रस्यासम्भवदुक्तिकत्वं स्यात्, तेभ्यः सर्वप्रकारविभक्त्युत्पादात् । 'सर्वे घटा रूपवन्तः' इत्यादाविव व्यक्तिकार्त्स्न्ये वर्तमानस्य ग्रहणे

* अस्य "ऊर्यादिच्विडाचश्च" (पा०सू० १।४।६१) इत्यनेन इत्यादिः ।

येनाह—**यस्मात्सर्वेति** । वचनत्रयात्मिकेत्यर्थः । **नेति** । किन्त्वेकवच-
नमेवेत्यर्थः । ननु—सङ्ख्याकारकबोधकैरेकवाक्यतया सुपां विधानम्" इति
पक्षेऽव्ययार्थे सङ्ख्याकारकयोरभावात्कथं विभक्तिः ? "अव्ययादाप्सुपः"
(पा०सू० ८।४।८२) इति ज्ञापकाश्रयणे च सर्वाऽपि ।

किञ्च विहितानां नियमपक्षेऽपि नास्योपपत्तिः, तत्पक्षे सर्वेष्वर्थेषु विधे-
यतया प्रधानप्रत्ययानुरोधेन गुणभूतप्रकृतिभेदकल्पनेन सर्वविभक्त्युत्पत्तौ लोके-
नेव जातस्य निवृत्तिः । तन्निवृत्तौ च कल्पितगुणस्वरूपं स्वत एव निवर्त्तते।
नियमश्च द्विविधः—अर्थनियमः, प्रत्ययनियमो वा । अन्त्योऽपि द्विविधः-
प्रकृतार्थापेक्षः, सामान्यापेक्षो वा । तत्र कर्माद्यर्थयोग्यप्रातिपदिकाच्चेत्कर्मादि
विभक्तिस्तदा द्वितीयैव । कर्मादिरहिते तद्योग्यप्रातिपदिकार्थे प्रातिपदिका-
त्प्रथमैवेत्यादिर(१)र्थनियमः । अत्र पक्षे (२)सर्वाः सप्तापि विभक्तयोऽव्य-
येभ्यो, विभक्तीनामनियतत्वात् ।

कर्माद्यर्थयोग्यप्रातिपदिकाच्चेद् द्वितीया तदा कर्मण्येव, न करणादौ;
कर्मादियोग्ये तद्रहितप्रातिपदिकार्थे एव प्रथमा, न कर्मादौ; सङ्ख्यावदर्थे-
ऽव्ययप्रातिपदिकादेकत्वादावेवैकवचनादि, न द्वितीयादावित्यादिः प्रकृतार्थापेक्ष-
प्रत्ययनियमः । (३)अत्रापि पक्षे सर्वाः सप्तापि विभक्तयोऽव्ययेभ्यो लभ्यन्ते

---

तु तिङामपि विभक्तित्वात्तासां च घटादिप्रातिपदिकेभ्योऽप्यनुत्पादात् तेषामप्यव्यय-
त्वापत्तिः । सप्त विभक्तयः इति प्राचां व्यवहारात् सुब्विभक्तीनामेव ग्रहणे तु "मासं
सर्वदिनेषु अधीते' इत्यादाविव एकवचनरूपैकदेशोत्पादेऽपि अवयवद्वारा सर्ववि-
भक्तिसम्बन्धात् दोषस्तदवस्थ एवेति अवयवकात्स्न्र्ये वर्तमानस्यैव सर्वशब्दस्य ग्रह-
णमिति भावः ।

(१)**अर्थनियम इति** । कर्मणि द्वितीयैव, प्रातिपदिकार्थे प्रथमैव इति विभक्तेः
हि 'अर्थे नियम' इति व्युत्पत्त्या अर्थनियम इत्युच्यते, कर्माद्यर्थे द्वितियादिविभक्तेः
नियमनात् । अत एव 'यत एवकारस्ततोऽन्यत्र नियमः' इति प्रवाद इति भावः ।
एवं प्रत्ययनियम इत्यत्रापि वोध्यम् ।

(२) **सर्वा इति** । वचनत्रयात्मिका इत्यर्थः ।

(३)**अत्रापीति** । कर्माद्यर्थयोग्यत्वस्य व्यावर्त्यतावच्छेदकत्वेन तस्य चाव्यये
स्वभावेन सामान्यशास्त्रेण सर्वविभक्तीनामस्मिन्नपि पक्षे प्राप्तिरिति भावः ।

अथ प्रातिपदिकाच्चेद् द्वितीया तदा कर्मण्येव, नान्यत्र; प्रातिपदिकाच्चेत्प्रथमा तदा मात्रग्रहणात्पर्युदासन्यायेन कर्मादियोग्यतद्रहितप्रातिपदिकार्थे एवेत्यादिः सामान्यापेक्षः प्रत्ययनियमः। तदाऽव्ययेभ्यो विभक्तिप्राप्तिरेव नेति पूर्वोक्तज्ञापकादेव सा, इति सर्वोऽपि। यद्यपि सुपां तिङां सङ्ख्याकर्माभयार्थकत्वेन कर्मण्येव नान्यत्रेति वक्तुमशक्यं, तथापि 'कर्मण्येव, न तु तदभावे' इत्याकारो वक्तुं शक्यः। स्पष्टञ्चेदं सर्वं "बहुषु" (पा०सू० १।४।२१) इत्यादिसूत्रेषु **भाष्ये**। तत्र हि अर्थनियमे प्रकृतार्थापेक्षप्रत्ययनियमे च सप्तापि विभक्तयः सम्पूर्णा उक्ताः। सामान्यापेक्षप्रत्ययनियमे च सुपोऽप्राप्तिरेवोक्ता। "अव्ययादाप्सुपः" (पा०सू० ८।४।८२) इति सूत्रे भाष्येऽपि स्फुटमिदम्,—इति चेत् ?

अत्र "तद्धितश्च" (पा०सू० १।१।३८) इति सूत्रे **भाष्यकृतः**—"एकवचनम्" इत्येव सूत्रं कार्यम्। एकग्रहणञ्च न कार्यम्। विभक्तिविधावुद्देश्यतावच्छेदकावच्छिन्नादेकवचनमित्युत्सर्गः। तस्य द्वित्वबहुत्वयोरितरे (१)बाधके भविष्यतः। एवञ्चैकत्ववत्यपि भविष्यति, (२)अलिङ्गासङ्ख्येभ्योऽव्ययेभ्यश्चैकवचनम्। द्विवचनादिविधायकयोर्द्विबहुग्रहणसामर्थ्यान्महासंज्ञात्वोद्वैकत्वाभावेऽपि तत्प्रवृत्तेः। द्वित्वबहुत्वयोर्द्विवचनबहुवचनोक्तावर्थात् (३)एकव-

---

(१)बाधके इति। एवं रीत्या "शेषे प्रथमः" (पा०सू० १।४।१०८) इति सूत्रे शेषग्रहणमपि सुत्यजम्, युष्मद्योगे 'युष्मद्येव मध्यमः' इति नियमशास्त्रेण, अस्मद्योगे 'अस्मद्येव उत्तमः' इति नियमशास्त्रेण च प्रथमस्य बाधसिद्धेः। युष्मदस्मद्भ्यामन्यत्रोपपदे तस्य चारितार्थ्यात्। **यत्तु** युष्मदि मध्यम एवेत्याद्युपपदनियमपक्षे अहं च देवदत्तश्चेति द्वाभ्यां द्वयोः प्राप्तौ शेष प्रथम एवेति परत्वादुत्तमबाधनार्थं, त्वं च देवदत्तश्चेत्यत्र मध्यमबाधनार्थं च शेषग्रहणम्। तथाच त्वं च देवदत्तश्च पचतः, अहं च देवदत्तश्च पचत इति प्रयोगसिद्धिरिति; तन्न, शेषग्रहणे कृतेऽपि पूर्वविप्रतिषेधेन तत्र मध्यमोत्तमयोरेवेष्टत्वात्। अत एव कौमुद्याम् "मध्यमोत्तमयोरविषये प्रथमः स्यात्" इति "शेषे प्रथमः" (पा०सू० १।४।१०८) इति सूत्रं व्याख्यातम्। शेषग्रहणं तु भाष्ये प्रत्याख्यातमेवेति दिक्।

आपिससुच्चेयमेवाह-(२)अलिङ्गेति। तेभ्यः एकत्वाभावेऽपि भवतीत्यर्थः।

(३)एकवचनस्येति। अस्य सिद्धत्वेनेत्यत्रान्वयः। सिद्धिश्च "स्वौजस" (पा०सू० ४।१।२) इति सामान्यसूत्रेणेत्यर्थः।

चनस्य 'एकवचनम्' इत्येतद्वचनं विनाऽपि द्वित्वाद्यभावे कर्मादौ सिद्धत्वेन सामर्थ्याद्प्राप्तप्रापणार्थमेतादिति कर्माद्यभावेऽप्येतत्प्रवर्त्तते इति विनिगमनाविरहात्सर्वविभक्त्येकवचनमनेन । अत एव "अव्ययादाप्सुपः" (पा०सू० ८।४।८२) इति प्रत्याहारग्रहणं चरितार्थं, "तृतीयासप्तम्योः" (पा०सू० २।४।८४) इति च । प्रथमाऽपि मात्रग्रहणाद् यत्प्रातिपदिकार्थस्य कर्मत्वाद्याधिक्यसम्भावना तत्रैवेति तस्या अप्यप्राप्तिरव्ययेभ्यः ।

'पचतिकल्पम्' इत्यादौ तु नानेन सर्वैकवचनं सर्वथाऽप्राप्तावेव तस्य विध्यर्थत्वात् । अत्र च न तथा, कर्तृत्वकर्मत्वसत्त्वेन क्रियायां स्वत एकत्वसत्त्वेन सर्वथा तदप्राप्त्यभावादिति बोद्धयम् ।

यत्तु—**कैयटेन** प्रथमातिक्रमे कारणाभावादनेकनियमबाधे गौरवाच्च प्रथमैकवचनस्यैवानेनोत्सर्गत्वं बोद्ध्यते इति "तद्धितश्च" (पा०सू० १।१।३८) इति सूत्रे रूपप्सूत्रे चोक्तम्; तन्न, स्वादिसूत्रे प्रथमायाः प्राथम्येऽपि नियमशास्त्रपर्यालोचनया द्वितीयाया अपि तत्त्वेन तस्याविनिगमकत्वात्, 'निजां त्रयाणाम्' इत्यत्र त्रयाणाङ्ग्रहणेन "आद्युदात्तश्च" (पा०सू० ३।१।३) इति सूत्रे आदिग्रहणेन च **पाणिनिना** स्वशास्त्रे एतन्न्यायानाश्रयणज्ञापनाच्च ।

अत्र प्रथमा सम्पूर्णाऽव्ययेभ्यः, प्रथमाया एवैकवचनम् इत्यादिपक्षान्तराणि अर्वाचीनग्रन्थे दृश्यन्ते, तान्यसङ्गतानि उक्तरीत्या तेषामुक्तिसम्भवाभावात् । घट इत्युक्ते एकत्वनिश्चयस्तु द्विवचनाद्यभावेन द्वित्वाद्यप्रतीतौ सङ्ख्यावदर्थत्वेन सत्त्वभूतत्वात्, प्रकरणाच्च । "बहुषु" (पा०सू० १।४।२१) इत्यादिसूत्रभाष्योक्तपक्षास्त्वेकदेशिनो, न सिद्धान्तिन इति तत्त्वम् ।

असर्वविभक्तिरितिबहुव्रीहिलभ्यो विशेष्य इत्याह—**तद्धितान्त इति** । केवलस्य तद्धितस्य प्रयोगाभावेन फलाभावात्सञ्ज्ञाविधावपि तदन्तविधिरिति भावः ।

नन्वेवमपि 'पचतिकल्पम्' इत्यादावतिव्याप्तिः, उक्तरीत्या तेषामसर्वविभक्तित्वात्, उभयशब्दे चातिव्याप्तिः, ततो द्विवचनानुत्पादाद्; अत आह—**परिगणनमिति** । एवञ्च सूत्रं न कार्यमिति भावः ।

**तसिलादय इति ।** "पञ्चम्यास्तसिल्" (पा०सू० ५।३।७) इत्यारभ्य "द्वित्र्योश्च धमुञ्" (पा०सू० ५।३।४५) इत्यन्ता इत्यर्थः । **शस्प्रभृतय इति ।** "बह्वल्पार्थाच्छस्" (पा०सू० ५।४।४२) इत्यारभ्य "अव्यक्तानुकरणाद्" (पा०सू० ५।४।५७) इतिडाजन्ताः । यस्तु—"इवे प्रतिकृतौ" (पा०सू० ५।३।९६) इत्यधिकारे "प्रत्नपूर्वविश्वेमात्थाल्छन्दसि" (पा०सू० ५।३।१११) इति थाल्, तस्य स्वरादौ 'आस्थालो' इति पाठेनाव्ययत्वम् । तत्र "इण आसिः" (उ०सू० ६७) इत्युणादिसूत्रविहित आसिः । 'अयाः' इत्युदाहरणम् । आसिविधायके छन्दसीति नानुवर्त्तते । एवञ्च लोके विभक्तिरहितप्रयोगायाव्ययत्वमावश्यकम् । अत्र च स्वरादावासिपाठ एव लिङ्गम् । 'अयासावयसा' इति तु च्छान्दसम् ।

**अम् आमिति ।** "अमु च च्छन्दसि" (पा०सू० ५।४।१२) "किमेत्तिङ्" (पा०सू० ५।४।११) इति विहितौ । **कृत्वोर्था इति ।** कृत्वसुच्सुज्धाः । **तसिवती इति ।** "तेनैकादिक्" (पा०सू० ४।३। ११२) "तासिश्च" (पा०सू० ४।३।११३) "तेन तुल्यम्" (पा०सू० ५। १।११५) इत्यादिविहितौ । एवञ्च स्वरादिषु वदिति पाठे फलं चिन्त्यम् । **नानाञाविति ।** "विनञ्भ्यां नानाञौ न सह" (पा०सू० ५।२।२७) इति विहितौ ।

**कृन्मेजन्तः** (पा०सू० १।१।३९) । **कृद्यो मान्त इति ।** 'कारयाम्' इत्यामन्ते "आमः" (पा०सू० २।४।८१) इति लुकेष्टसिद्धिरिति भाव इत्याकरे विस्तरः । कृदन्तस्य तु नैतद् विशेषणं गणे प्रशाम्शब्दपाठात् । अन्यथा श्रुत्या मान्तत्वेन प्रत्ययलक्षणात्कृदन्तत्वे चानेनैव सिद्धे तत्पाठवैयर्थ्यं स्पष्टमेव । तेन प्रतामौ, लत्रमाचक्षाणो 'लोः' इत्यादौ नातिप्रसङ्गः । न च—'आधये' 'हे आधे' 'कुम्भकारेभ्यः' इत्यादौ गुणे एत्वे च कृते एजन्तत्वेन सञ्ज्ञापत्तिः । न च बहिरङ्गत्वं गुणादेः, सञ्ज्ञायाः कार्यार्थत्वात्सञ्ज्ञाकार्यस्य तत्त्वेन सञ्ज्ञाया अपि तत्त्वात् ; लिङ्गसंख्याद्यन्वयित्वेऽप्यव्ययीभावादाविवात्राप्यापत्तेः—इति वाच्यम्, सन्निपातपरिभाषया बाधात् । न च तथा सन्निपातविघातकत्वको बाधेऽपि सञ्ज्ञाबाधे मानाभाव इति

वाच्यम्, एज्विषयसन्निपातनिमित्तकाऽऽत्वीयसन्निपातविघातकस्य "क्ङिति च" (पा०सू० १।१।५) इति निषेधस्य तया निवृत्तावपि 'उपादास्त' इत्यत्र कित्त्वापत्तेः। कित्त्वफलन्तु तत्सन्नियोगशिष्टत्वासिद्धिः। एवञ्च 'उपादिस्त' इति स्यात्। तत्र हि किदिति व्यपदेशातिदेश एव, इत्वप्रवृत्तिकाले कित्कार्यस्यातिदेश्यस्याभावात्। तस्मादनया सन्निपातविघातकशास्त्रस्यैव तच्छास्त्रप्रवृत्तिनिमित्तातिदेशसञ्ज्ञानामपि निवृत्तिरवश्यं वाच्या। साक्षात्परम्परया वा स्वसन्निपातविघातकस्य स्वयमनिमित्तमिति परिभाषाऽर्थः। एतेनात्राकजादिः स्यादित्यपास्तम्, अकजाद्येकवाक्यतापन्नाव्ययसञ्ज्ञायां गुणादेरसिद्धत्वाच्च। लुगेकवाक्यतापन्ना तु न गुणादितोऽन्तरङ्गा, उभयोरपि शब्दतः सुबाश्रयत्वात्।

**अव्ययादा** (पा०सू० २।४।८२)। "ण्यक्षत्रिय" (पा०सू० २।४।५८) इत्यतो लुगनुवर्त्तते। **विहितेति**। अङ्गसञ्ज्ञायां विहितत्वांशप्रवेशेन विहितप्रत्ययनिरूपिताङ्गविशेषणादित्यर्थः। आप्सुब्भ्यामाक्षिप्ताङ्गस्याव्ययरूपस्यैव प्रत्यासत्त्या ग्रहणमिति भावः। तेन 'कुम्भकारेभ्यः' इत्यादौ सन्निपातपरिभाषयाऽव्ययसञ्ज्ञानिवृत्तिद्वारा लुङ्निवृत्तिपरभाष्येण न विरोधः।

**अत्युच्चैसाविति**। अत्राधिकरणशक्तिप्रधानस्यापि उच्चैस्शब्दस्य वृत्तिविषये शक्तिमत्प्रधानत्वाद् द्वितीयान्ततया "अत्यादयः क्रान्ताद्यर्थे" (का०वा०) इति समासे अवयवभूतोच्चैःशब्दादव्ययात्परत्वेन लुक् स्यात्। समुदायस्य तु नाव्ययत्वं लिङ्गाद्यन्वयित्वादित्यभिमानः। समुदायस्यापि तत्त्वमाशङ्क्य समाधत्ते—**यद्यपीति। तदन्तेति**। शब्दस्य विशेष्यत्वात्। "प्रयोजनं सर्वनामाव्ययसञ्ज्ञायाम्" इति वाचनिकस्तदन्तविधिरिति भावः।

**न गौणे इति**। अयं भावः—सामानाधिकरण्यसम्बन्धेन लिङ्गाद्यनन्वय्यर्थबोधकत्वाविशिष्टाव्ययपदवत्त्वेन हि अव्ययपदं बोधकमिति तादृशमहासञ्ज्ञाकरणात्तादृशार्थानां गणेऽनुकरणावश्यकत्वे इतरेषामनुकरणे मानाभावेन समुदायस्य नाव्ययत्वमिति। वस्तुतोऽत्रार्थस्य प्रधानाप्रधानन्यायेन सर्वनामसञ्ज्ञासाहचर्येण च प्रसिद्धान्तरङ्गपदान्तरानपेक्षानुपसर्जनीभूतस्यै

लिङ्गाद्यनन्वयिनौ ग्रहणेन—न समुदायस्य, (१)नाप्यवयवस्य सञ्ज्ञा । अत एव **भाष्ये** सर्वनामसञ्ज्ञासूत्रस्थोपसर्जनप्रतिषेधानुवृत्त्या 'अत्युच्चैसो' इत्यादावव्ययत्वाभावमुक्त्वा तत्प्रत्याख्यानरीत्यैवात्राप्येतत्प्रत्याख्यानमुक्तम् । एवञ्च विहितविशेषणमङ्गाक्षेपो वा व्यर्थ एव अव्ययात्परत्वस्याप्यभावात् । 'उच्चैरौ' 'उच्चैराभ्याम्' इत्यादेरभिधाने तु न मानम् । अत एव **भाष्ये** एतन्नोक्तम् ।

**अलिङ्गत्वादिति** । नन्विदं "सदृशं त्रिषु" इति विरुद्धगत आह—**लिङ्गेत्यादि** । अयं भावः—यथोपक्रमोपसंहाराभ्यां ब्रह्मपराया अप्यस्याः श्रुते**र्भाष्य**प्रामाण्यादत्रोपसंहारः, तथा तत्प्रामाण्यादेव लिङ्गाद्यभावपरताऽपीति । विभक्तिवचनशब्दौ कारकसङ्ख्यापरौ, प्रत्ययपरत्वेऽन्यतरवैयर्थ्यापत्तेः । लिङ्गेषु इत्यादि विषयसप्तमी । तत्तद्विषयं सादृश्यञ्च लिङ्गाद्यभावाश्रयत्वेन । लिङ्गाभावेन सादृश्यमव्ययीभावातिरिक्तविषये तस्य लिङ्गयोगसत्त्वात् । सङ्ख्याऽभावस्तु सर्वसाधारणः । तदभावादिसादृश्यादेव, यद् विविधं रूपं तन्न प्राप्नोतीत्यर्थः ।

प्रसङ्गादाह—**वष्टीति** । वशेश्छान्दसत्वेनेह प्रयोगश्चिन्त्यः । **भागुरिः**-आचार्यः । अपिसाहचर्यादवेऽप्योदरकारस्यैव लोपः । इदं **भाष्ये** न दृश्यते । निशादिशोरिगुपधलक्षणं केऽदन्तत्वादेव टाप् । क्विनि 'दिक्' इत्यपि । अत एव "ङ्याप्प्रातिपदिकात्" (पा०सू० ४।१।१) इति सूत्रे

---

(१)**नाप्यवयवस्येति** । नन्वेवं सर्वनामसञ्ज्ञाया अपि अवयवेऽनापत्तौ 'अतिभवकान्' 'त्वकत्पितृकः' 'मकत्पितृकः' इत्यादौ अकजनापत्तिरिति चेत् ? न, तत्र वृत्तेः प्राक् अनुपसर्जनसर्वार्थवाचकत्वेन सर्वनामत्वेऽकचि च कृते वृत्तौ कृतायाम् अनुपसर्जनार्थबोधकत्वाभावेन सर्वनामत्वाभावेऽपि पूर्वजातस्याकचोऽनिवृत्तेः । अकृतव्यूहपरिभाषा तु नास्त्येवेति भावः । अत्र तु लुक्प्रवृत्तिकाले अनुपसर्जनार्थबोधकत्वाभावेनाव्ययत्वाभावाल्लुग्न प्रवर्तते । यथोद्देशपक्षस्तु लक्ष्यानुरोधान्नात्राश्रीयते । 'अत्युच्चकैसौ' इत्यादौ अकच् तु 'अतिभवकान्' इत्यादाविव इष्यते एवेति विहितविशेषणं व्यर्थम् । 'मासपूर्वाय' इत्यादावनुपसर्जने स्मायादिवारणार्थं "सर्वनाम्नः स्मै" (पा०सू० ७।१।१४) इत्यादौ विहितविशेषणमिति दिक् ।

ननु देवविशमिति हलन्तत्वेऽप्युपपद्यते, द्वितीयैकवचने हलन्तादन्तयो रूपे विशेषाभावात्; तत् कथं तस्य प्रयोगस्य अदन्तदेवविशशब्दसाधुत्वनिर्णायकत्वम्, अत

"आब्ग्रहणं न कार्यम्, अकारान्ताट्टाप् तत्रान्तवद्भावात्प्रातिपदिकत्वेन सिद्धम्। यस्तर्ह्यनकारान्तात् 'क्रुञ्चा' उष्णिहा' 'देवविशा' इति। अत्राप्य-कारान्तादेव; क्रुञ्चानालभेत, उष्णिहक्कुभौ, देवविशमिति। (१)अन्त्ये "कप्रत्यय एवंविषयः" इत्युक्त्वा 'बहुराजेति डाबन्तार्थमाब्ग्रहणम्' इति भाष्ये उक्तं सङ्गच्छते। तस्माद् 'वाचा' इत्यसाध्वेवेति शिवम्।

## ॥ इति अव्ययानि ॥

---

**स्त्रियाम्** (पा०सू० ४।१।३)। अचेतनखट्वावृक्षादिसाधारणं लिङ्गन्तु (२)सत्त्वादीनां गुणानामुपचयापचयस्थितिरूपं क्रमेण पुंस्त्रीनपुं-

---

आह-(१) **अन्त्ये इति**। अन्त्ये देवविशमित्यत्र रूपे विशेषाभावेऽपि स्वरे विशेषः। अदन्तत्वे हि देवविशशब्दस्य कप्रत्ययान्तत्वात् थाथादिस्वरेणान्तोदात्तत्वे विभक्तेरनुदात्तत्वेऽपि "एकादेश उदात्तेनोदात्तः" (पा०सू० ८।२।५) इत्ये-नैकादेशस्योदात्तत्वात् 'देवविशम्' इत्यन्तोदात्तं श्रूयते। हलन्तत्वे तु क्विबन्त-त्वात् "गतिकारकोपपदात् कृत्" (पा०सू० ६।२।१३९) इति कृदुत्तरपदप्रकृतिस्व-रेणान्तोदात्तत्वे विभक्तेरनुदात्तत्वे "उदात्तादनुदात्तस्य स्वरितः" (पा०सू० ८।४।६६) इति स्वरितत्वे च देवविशमिति स्वरितान्तं प्रसज्येत इत्येवं विशेषसुव-"तस्मात् क एष एवंविषयः" इत्युपसंहृतं **भाष्ये**। "तस्मात् स्वरविशेषश्रवणात् एवंविषयः स्वरविशेषविषयः, एषः देवविशमित्यत्र श्रूयमाणोऽकारः, कः कप्रत्ययः" इति भाष्यफक्किकार्थः। तस्मात् देवविशशब्दस्यादन्तत्वलाभात् अदन्तादेव 'देव-विशा' इत्यत्र टाप्। ततश्च आब्ग्रहणं व्यर्थमिति शङ्कायां 'बहुराजा' इति डाबन्तार्थं तदिति समाहितम्। 'निशा' इत्यादौ हलन्तेभ्यष्टाप्स्वीकारे तु तदर्थमेवाब्ग्रहणस्याव-श्यकत्वात् डाप्पर्यन्तानुधावनं व्यर्थं स्यादिति भावः।

॥ इत्यव्ययानि ॥

---

नतु स्तनकेशवती स्त्री इत्यत्र केशशब्दस्य भगवाचकत्वाद्भगवत्वं स्त्रीत्वं, लोमवान् पुरुषः इत्यत्र लोमन् शब्दस्य शिश्नवाचित्वाच्छिश्नवत्वं पुंस्त्वं, तत्तदाकारमात्रशून्य-त्वं नपुंसकत्वम्, इति परिभाषितानि स्त्रीत्वादीनि अप्राणिषु खट्वादिषु नोपलभ्यन्ते इति कथं तद्वाचकशब्देभ्यष्टावादिकार्यम्? अत आह-(२)**सत्त्वादीनामिति**। सत्त्वरजस्तमसामुपचयः पुंस्त्वम्, तेषामपचयः स्त्रीत्वम्, तेषां स्थितिः नपुंसकत्वमि-त्यर्थः। उपचयापचयावेव भाष्यकारेण प्रसवसंस्त्यानशब्दाभ्यामुक्तौ। प्रसवः—

काख्यम् 'एकार्थे शब्दान्यत्वाद् दृष्टं लिङ्गान्यत्वम्' इति **भाष्योक्तेरर्थ**-निष्ठं केवलान्वयि, इयं व्यक्तिः, इदं वस्तु, अयं पदार्थः, इति त्रिविधव्यवहारस्य पदार्थमात्रे सत्त्वात् । केनचिच्छब्देन किञ्चिद्वस्तु एकैकविशिष्टमेव, केनचित्पर्यायेण लिङ्गद्वयविशिष्टं, केनचिल्लिङ्गत्रयविशिष्टमिति लिङ्गानुशासनादितो निर्णेयम् । तत्र

'स्तनकेशवती स्त्री स्याल्लोमशः पुरुषः स्मृतः'

इत्यादिलौकिकलिङ्गासम्भवे शास्त्रीयं कार्यं शास्त्रीये उक्ते एव । तत्सम्भवे तु शास्त्रीयविशिष्टे लौकिके । शास्त्रीयमपि शब्दतो बुद्ध्यते, तथाऽनुमशात् । उपचयापचययोः स्थितेरपि सत्त्वेन तन्मात्रविवक्षायां 'सामान्ये नपुंसकम्' इति प्रवाद इत्यन्यत्र विस्तरः । **अत इति** । वर्णग्रहणात्तदन्तविधिस्तदाह—**अकारान्तस्य चेति** । **वाच्यं यत् स्त्रीत्वमिति** । (१)तद्वाच्यार्थगतं यत्तद्वाच्यं स्त्रीत्वमित्यर्थः । एवं व्याख्याने फलमग्रे स्फुटम् ।

---

र्भावः, संस्त्यानं तिरोभाव इति च कैयटेन व्याख्यातम्, उपचयापचययोरपि अन्ततः साङ्ख्यादिमते तद्रूपत्वात् । चितिशक्तिं विना सर्वेषां पदार्थानां परिणामित्वादाविर्भावतिरोभावधर्मकत्वं, मध्ये स्थितेरप्यवश्यम्भावात् स्थितिधर्मकत्वं चेति उपचयापचयस्थितयः पदार्थमात्रधर्मा इति अप्राणिखट्वाघटादिसाधारणं गुणोपचयादिरूपं लिङ्गम् । यद्यप्यवस्थात्रयं प्राकृतपदार्थमात्रवृत्ति तथापि कस्यचिच्छब्दस्य उपचयावस्थावैशिष्ट्येन बोधकत्वं, कस्य चिच्चापचयावस्थावैशिष्ट्येन, कस्यचित्स्थित्यवस्थावैशिष्ट्येन, कस्यचिदवस्थाद्वयवैशिष्ट्येन, कस्यचित् अवस्थात्रयवैशिष्ट्येनेति लिङ्गानुशासनतो वृद्धव्यवहारतश्च निर्णीयते । दृश्यते च घटादिशब्देभ्यो गुणोपचयवैशिष्ट्येन प्रतीतिः, घट्यादिशब्देभ्यश्च तदपचयवैशिष्ट्येन । एतेन अचेतनखट्वादौ स्त्रीत्वादिरूपलिङ्गाभावात् खट्वादिशब्दानां स्त्रीलिङ्गादिसंज्ञा एवेति केषाञ्चिदुक्तिः परास्ता । ननु गुणोपचयादिरूपाणां पुंस्त्वादीनां निरवस्थे पुरुषेऽभावात् पुरुषः, चितिः, चैतन्यम् इति प्रतीत्यनुपपत्तिरिति चेत् ? न, तस्य निर्धर्मकत्वेन पदवाच्यत्वासम्भवेन शाब्दप्रतीतिविषयत्वस्याप्यनङ्गीकारात् । अत एव किञ्चिद्धर्मिनिष्ठात्यन्ताभावाप्रतियोगित्वरूपकेवलान्वयित्वोक्तिः स्त्रीत्वादीनां सङ्गच्छते । किञ्चिद्धर्मारोपेण वाच्यत्वमुपपाद्य शाब्दप्रतीतिविषयत्वोपपादने तु पुंस्त्वादेरप्यारोपेण पुरुष इत्यादिप्रतीतिरुपपद्यते इति दिक् ।

(१)**तद्वाच्यार्थगतमिति** । अजाद्यत इत्यस्य पञ्चम्यन्तत्वे अमहत्पूर्वग्रहणेन स्त्रीप्रत्यये तदन्तविधिज्ञापनात् "वनो र च" (पा०सू० ४।१।७) इत्यादाविवात्रापि तदन्तविधौ स्त्रियां वर्तमानात् अजन्तशब्दान्तात् प्रातिपदिकात् इत्यर्थे 'पञ्चाजी' इत्य-

**तत्र द्योत्ये इति ।** प्रत्ययार्थत्वे हि तस्य (१)विशेष्यता- पत्तिः । द्योत्यस्य तु (२)विशेषणत्वमेवेति स्पष्टमाकरे । (३)वागादि-

---

त्रापि टाप्प्रसज्येत । अतः अजादीति लुप्तषष्ठीकं पृथक्पदमाश्रित्य अजादेः स्त्री- इत्येवं योजनेन अजादिपदस्यार्थप्रधानार्थकत्वेन अजादिपदार्थगतस्त्रीत्वे वर्तमान- (अर्थात् स्त्रीत्ववाचकात्) प्रातिपदिकात् टाबित्यर्थ आश्रितः । अजादीनां वाच्यं स्त्री- त्वमिति तु फलितार्थकथनम् । तथाच 'पञ्चाजी' इत्यत्र समुदायवाच्यस्त्रीत्वस्य अज- शब्दवाच्यार्थगतत्वाभावान्न टाप् । ननु तदन्तविधिनिरासाय षष्ठ्यन्तत्वमाश्रीयताम्, अर्थप्रधानार्थकत्वं किमिति अजादीतिपदस्याश्रीयते । तावताऽपि तस्य स्त्रीलेऽन्य- पर्याप्तेरौत्सर्गिकत्वात् अजादिमात्रवाच्यस्त्रीत्वइत्यर्थलाभात् 'पञ्चाजी' इत्यत्र स्त्रीत्वस्य अ- जपदमात्रवाच्यत्वाभावेन टाब्वारणसम्भवात् इति चेत् ? न, तथा सति अजः इ- यस्याः सा इत्यर्थे निष्पन्नादजाशब्दाट्टापि स्वाद्युत्पत्तौ हल्ङ्यादिलोपाद्यापत्तेः । पूर्व- न्तवद्भावेन एकादेशविशिष्टे अजशब्दत्वस्यारोपेण तन्मात्रवाच्यत्वस्य स्त्रीत्वे सत्त्वात्। अर्थप्रधानार्थकत्वे तु उपस्थिताजत्वादिविशिष्टार्थगतस्त्रीत्वे इत्यर्थलाभात्, प्रकृते अजत्वविशिष्टार्थगतस्त्रीत्वाभावान्न दोषः । तदर्थगतस्त्रीत्वे इत्यर्थेऽपि वाच्यत्वानि- स्त्रीत्वोपलक्षितार्थवाचकात् धनादिशब्दादपि अजैव धनमित्यादौ टाबापत्तिः, अतः स्त्री- त्ववाचकात् इति वक्तव्यम् । स्त्रीत्वे तद्वाच्यत्वविशेषणं तु फलितमेवेति पूर्वमुक्त- अर्थप्रधाननिर्देशे साक्षात्तद्वाच्यत्वान्वयस्य तत्रालाभात् । एवञ्च अजादिपदावच्छिन्न- त्वाद्यवच्छिन्नधर्मितानिरूपितस्त्रीत्वनिष्ठप्रकारताकबोधतात्पर्येणोच्चरितात् प्रातिपदि- टाबित्यर्थः पर्यवस्यति । अजादिपदावच्छिन्नेति विशेषणेन बर्करादिशब्देभ्यो न टा- अजाद्यर्थगतस्त्रीत्वे इतियथाश्रुतार्थे तु ततष्टाब् दुर्वारः । अत एव अजसदृशस्त्र- त्यर्थे 'अजा' इति टाप् सिध्यति । यथाश्रुतार्थे तु अजत्वविशिष्टार्थगतस्त्रीत्वाभाव- स्यात् । अत एव च स्त्रीत्वाविवक्षया स्त्रीप्रत्ययाभावमुपपाद्य "कुञ्कुञ्च्यादीनामण्डादि- इति वार्तिकं प्रत्याख्यातं **भाष्ये** । अजत्वाद्यवच्छिन्नत्वं च धर्मितायां साक्षा- ग्राह्यम् । तेन 'पञ्चाजी' इत्यत्र समाहारनिष्ठधर्मितायाः अजत्वावच्छिन्नत्वेऽपि न टा- एवमेव "शूद्रा चामहत्पूर्वा जातिः" इत्यादावपि अनुसन्धेयमित्यलम् ।

**(१)विशेष्यतापत्तिरिति** । "प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयोः प्रत्यय- प्रधानम्" इति व्युत्पत्तेरित्यर्थः । तथाच 'औपगवः' इत्यत्रापत्यरूपोऽर्थो विशेष्- **(२)विशेषणत्वमिति** । तथाच 'रामः' इत्यादावेकत्वविशिष्टो राम इति बोध- क्वचित् (आख्याते) प्रत्ययार्थस्य प्रकृत्यर्थेऽन्वयदर्शनादाह—**(३)वागादिष्विति** अयं भावः-स्त्रीत्वस्य प्रकृतेः प्रत्ययस्य चोभयस्य वाच्यत्वे बोधाद्यावृत्तिप्रसङ्गः, विशिष्ट- च्यत्वे शक्ततावच्छेदकगौरवम्, तस्मात्प्रत्ययप्रकृत्यन्यतरवाच्यत्वं वक्तव्यम् । तत्र प्रकृतिवाच्यत्वस्यान्यत्र क्लृप्ततयाऽत्रापि प्रकृतिवाच्यत्वमेवेति स्त्रीत्वस्य प्रत्ययो-

(१)विनाऽपि टाबादिकं तस्य बोधाच्च । अत एव 'व्यावक्रोशी' इत्यादौ "कर्मव्यतिहारे णच् स्त्रियाम्" (पा०सू० ३।३।४) इति णचि "णचः स्त्रियाम्" (पा०सू०५।४।१४) इत्यञि च (२)ङीप्सिद्धिः, 'व्यतिलुनीते' इत्यादौ 'द्विर्बद्धं सुबद्धं भवति' इति न्यायेन (३)समुच्चयस्य दृष्टत्वात् । **टाप्स्यादिति** । स चाधिकारात्प्रातिपदिकादेव, तच्च सन्निधानादजादिरूपमेव ।

नन्व(४)जादिष्वकारान्तपाठो व्यर्थोऽत इत्येव सिद्धेरत आह—**अजाद्युक्तिरिति** । (५)येननाप्राप्तिन्यायादिति भावः । एतेन ङीपि कृतेऽपि

---

मानमाह–(१)**विनापीति** । (२)**ङीप्सिद्धिरिति** । अन्यथा 'उक्तार्थानामप्रयोगः' इत्यनेन ङीपोऽनापत्तिः स्यात् । ननु द्योत्यत्वेऽपि सैवापत्तिरत आह–(३)**समुच्चयस्येति** । द्योतकसमुच्चयस्येत्यर्थः । एतेन द्योतकविषये नायं न्याय इति ध्वनितम् ।

अजाद्युक्तिरिति कर्मणि क्तिन् । तेन कर्मण उक्तत्वात् षष्ठ्यप्राप्तौ सप्तमीतत्पुरुषः । तदाह–(४)**अजादिष्विति** । अजादिष्वकारान्तानां पाठो व्यर्थ इत्याशयः । अत्र केचित् अजादिषु हलन्तानां पाठस्य ङ्याप्सूत्रस्थभाष्यप्रामाण्येन अव्ययप्रकरणे शेखरे खण्डितत्वादजादिपाठस्यैव वैयर्थ्यात् सप्तमीतत्पुरुषं कल्पयित्वा व्याख्यानं प्राचामनुरोधेन । नच टायामादेशः क्त्वायामिट् इति प्रयोगदर्शनात् अनदन्तानां टादिशब्दानां पाठ आवश्यक इतिवाच्यम् तत्र टाप्द्वारोपेणैव याडादिकार्याणामुपपादनीयत्वात् । अन्यथा ङ्याप्सूत्रस्थभाष्यविरोधात् । तत्र हि आब्ग्रहणस्य टाब्विषयेऽन्तादिवद्भावेनान्यथासिद्धिं प्रदर्श्य डावर्थत्वमुक्तम् । टाशब्दादिभ्यष्टापि तु तत्र परतः 'आतोऽनापः' इत्यनेनैकवाक्यतया धातुग्रहणस्य आब्मात्रनिवृत्त्यर्थतया "आतो धातोः" (पा०सू० ६।४।१४०) इत्यनेन लोपे पूर्वान्तवद्भावाप्रवृत्तौ तत्र आब्ग्रहणस्य चारितार्थ्यात् तदंशे अन्यथासिद्धिकथनमसङ्गतं स्यात् इत्याहुः ।

परे तु "आतो धातोः" (पा०सू० ६।४।१४०) इति सूत्रे आब्ग्रहणस्य स्त्रीत्वबोधकघटकभिन्नाकारार्थकत्वस्य "न मु ने" (पा०सू० ८।२।३) इतिसौत्रनिर्देशसिद्ध्यर्थम् "आतो धातो"रिति सूत्रे व्यवस्थापितत्वात् टाप्प्रकृतिभूतटाशब्दस्य स्त्रीत्वबोधकत्वात् तद्घाचकाकारे लोपाप्रवृत्त्या अन्तादिवद्भावस्य सूपपादत्वेन अन्यथासिद्धिकथनं भाष्यकृतो नासङ्गतम् इति हलन्तानां पाठाभावेऽपि आकारान्तपाठोऽस्त्येवेति न सर्वथा अजाद्युक्तिवैयर्थ्यशङ्का, किन्तु अदन्तपाठवैयर्थ्यशङ्केवेति सप्तमीसमासेन व्याख्यानं स्वमतेनैव । अत एव उत्तरत्र शेखरे "अजादिराकृतिगणः, तेन "न मुने" इति सूत्रे टायामादेश इति भाष्यप्रयोगः सिद्धः" इति स्पष्टमेवोक्तमित्याहुः ।

एतेन अदन्तव्यातिरिक्तेषु अप्राप्तटाब्विधानार्थत्वेनाजादिपाठस्यावश्यकतयेदं चिन्त्यमित्यपास्तम् । (५)**येन नेति** । तक्रन्यायस्य तु नात्र प्राप्तिः अपवादोत्तरमुत्सर्ग-

लिङ्गविशिष्टपरिभाषया टाप् चरितार्थ इत्यपास्तम् । ननु प्रत्ययविधौ पञ्चम्या युक्तत्वेनाजादिभ्यष्टाप् स्त्रीत्वे द्योत्ये इत्यर्थ एव युक्तः, स्त्रीत्वञ्च प्रत्यासत्त्या प्रकृत्यर्थनिष्ठमेवेत्यत आह—**अजादिभिरिति** । (१)व्याख्यानादेतत् षष्ठ्यन्तमिति भावः । अन्यत्र तु स्त्रियामिति (२)तदन्तस्यापि विशेषणं (३)व्याख्यानादेव । एवञ्च पञ्च सुत्वानो यस्यां सा (४)पञ्चसुत्वरीत्येव ।

**पञ्चाजीति** । पञ्चानामजानां समाहार इति द्विगौ "अकारान्तोत्तरपद" इति स्त्रीत्वे "द्विगोः" (पा०सू० ४।१।२१) इति ङीप् । अजादिभ्य इति व्याख्यानेऽमहत्पूर्वग्रहणेनानुपसर्जनाधिकारेण च "वनो र च" (पा०सू० ४।१।७) इत्यत्रेवात्रापि तदन्तविधिसम्भव इति भावः । न च तदन्तविधावपि श्रुतत्वात्स्त्रियामित्यजादीनामेव विशेषणमिति वाच्यम्, अनुपसर्जनाधिकारेण तदन्तग्रहणस्येव स्त्रियामित्यस्य तदन्तविशेषणत्वमित्यर्थस्यापि बोधनात् । **अत्र हीति** । समासेऽजशब्दसत्त्वेऽपि समाहारनिष्ठं स्त्रीत्वं समुदायवाच्यं नाजशब्दमात्रवाच्यम् सामर्थ्येनाजादिमात्रवाच्यस्त्रीत्वस्यैव ग्रहणादिति भावः । **चटकेति** । क्षिपकादित्वादित्वं न । **ह्रस्व इति** । अस्य ज्ञापकत्वात्तु भस्त्राफलेत्येव । "सम्भस्त्रा" (का०वा०) इति, "सदच्" (का०वा०) इति, "मूलान्नञः" (का०वा०) इति च "पाककर्ण" (पा०सू० ४।१।६४) इति प्राप्तस्य ङीषो बाधनार्थम् । एवञ्च 'श्वेतफला' 'त्रिफला' इत्यप्यत्र बोध्यम् ।

**शूद्रा चेति** । जातिलक्षणङीषोऽपवादः । जातिश्चेद्वाच्येत्यर्थः । 'पञ्चशूद्री' इति समाहारे जातिवाचकत्वाभावात् शूद्रशब्दार्थगतस्त्रीत्वाभावाच्च न दोषः । जातिश्चेदित्यस्य कृत्यमाह—**पुंयोगे त्विति** । न चात्र

---

प्राप्तावेव तत्प्रवृत्त्याऽत्र टाबुत्तरं ङीषो ङीपो वाऽदन्तत्वाभावादप्राप्तेः । (१)व्याख्यानादिति । "अजादिभिः स्त्रियं विशेषयिष्यामः, अजादीनां या स्त्री" इतिभाष्योक्तेरित्यर्थः । (२)तदन्तस्यापीति । तदन्तस्यैवेत्यर्थः । (३)व्याख्यानादेवेति । अनुपसर्जनाधिकारसामर्थ्यादित्यर्थः । अन्यथा तेन तदन्तविधिज्ञापनेऽपि तद्वैयर्थ्यं तादवस्थ्यात् । स्फुटीभविष्यति चेदमनुपदमेव । (४)पञ्चसुत्वरीति । चिन्त्यमेतत्, "अनो बहुव्रीहेः" (पा०सू० ४।१।१२) इति निषेधात् ङीपोऽप्राप्तेः । 'अतिसुत्वरी' 'अतिधीवरी' इति तु युक्तम् ।

गौणत्वं (१)सदृशलाक्षणिकस्यैव गौणत्वात्, गौणमुख्यन्यायस्य (२)पदकार्यविषयत्वाच्चेति भावः । अमहत्पूर्वेत्यत्रापि जातिश्चेदिति सम्बध्यते । महत्पूर्वो न टापं लभते जातिश्चेद्वाच्येति तदर्थः । तत्फलन्तु जात्यन्तरनिवृत्तिपरत्वे पूर्वञ्जातिमात्रविवक्षया महच्छब्दस्य शूद्रशब्देन (३)मृगक्षीरकु-

---

(१)सदृशलाक्षणिकस्यैवेति । यथा पुरुषकृतधर्माधर्माभ्यां पुण्यपापयोः स्त्रीषु संक्रम, एवं तद्वृत्तिधर्मान्तरस्यापीत्यग्रे वक्ष्यते । एवञ्च पत्नीत्वेनारोपो न सदृशत्वेनेति बोध्यम् । (२)पदकार्यविषयत्वादिति । स्त्रीत्वानिमित्तकत्वे सति विभक्त्यनिमित्तकत्वं तत्त्वम् ।

तत्र स्त्रीत्वानिमित्तकत्वे सतीत्यस्य अजसदृशस्य स्त्रीत्यर्थे अजेति सिद्धिः फलमिति बोध्यम् । यत्तु इदमेव जातिग्रहणं गौणमुख्यन्यायस्य पदकार्यविषयत्वे ज्ञापकमिति, तन्न, अप्रसिद्धसदृशलाक्षणिकानामेव गौणमुख्यन्याये गौणपदेन ग्रहणात् पुंयोगलक्षणगौणे टावभावाय तस्य सार्थक्यात् ।

(३)मृगक्षीरकुक्कुटाण्डवदिति । तत्र भाष्ये "कुक्कुट्यादीनाम्" इतिवार्तिकप्रत्याख्यानाय पूर्वं स्त्रीत्वाविवक्षया सिद्धानां कुक्कुटस्येत्यादीनाम् अण्डादिशब्दैः समासे समीहितरूपसिद्धिरित्युक्तं, तथा प्रकृतेऽपीति भावः । नचैवमनुपसर्जनाधिकारस्य तदन्तविधिज्ञापकत्वं न सङ्गच्छते, पूर्वं स्त्रीत्वाविवक्षायां बहुशब्दस्य कुरुचरशब्देन समासे पश्चात्तद्विवक्षायां प्राप्तङीब्वारणार्थं तस्य चारितार्थ्यसम्भवादिति वाच्यम्, कुरुचरशब्दस्य बहुशब्देन समासे कुरुचरपदार्थमात्रे "वृत्तस्य विशेषणयोगो न" इत्यनेन स्त्रीत्वान्वयासम्भवेन कुरुचरमात्रान्ङीपोऽप्राप्त्या चारितार्थ्यानवकाशात् । अत्र तु महच्छब्देन समासे विशिष्टे स्त्रीत्वान्वयेऽपि तदन्तविधेः सत्त्वेन जातिवाचकशूद्रशब्दान्तात्प्रातिपदिकाट्टावेत्यर्थात् टाप् सिध्यति । अमहत्पूर्वेत्यत्र जातिरित्यस्याभावे तेन निषेधाट्टाप् न स्यात् । अतस्तत्र जातिरित्यस्य सम्बन्ध आवश्यकः । केचित्तु प्रत्याख्यानपरभाष्यप्रामाण्येन मृगक्षीरादौ तथा कल्पनेऽपि सर्वत्र तथाकल्पने मानाभावः । अत एव च 'कृतपूर्वी कटम्' इत्यत्र 'एवं रीत्या साधुत्वेऽत्रत्यं भाष्यमेव मानम्' इति स्वोक्तिः सङ्गच्छते । अमहत्पूर्वेत्यत्र जातिरित्यस्य सम्बन्धफलं तु महाशूद्रेत्यत्र महच्छब्दस्य शूद्रशब्देन समासात् प्रागेव शूद्रा चेतिप्राप्तटापः 'यद्यत्र टान्न स्यात् तर्हि महच्छब्देन समासेऽमहत्पूर्वेति निषेधः स्यात्' इति सम्भावनायाः सत्त्वादुपसञ्जनिष्यमाणन्यायेन अमहत्पूर्वेतिनिषेधाभाव एव । तदसम्बन्धेन तु तेन न्यायेन तत्र निषेधप्रवृत्तिर्दुर्वारैवेत्याहुः । अन्येतु उपसञ्जनिष्यमाणन्यायेन भविष्यदपवादविषयातिरिक्तत्वेन सङ्कोचेऽपि तद्घटकातिरिक्तत्वेन सङ्कोचे मानाभावेन तत्र अमहत्पूर्वेतिनिषेधप्रवृत्तौ मानाभावेन टापः सिद्ध्या न तत्र जातिरित्यस्य सम्बन्धस्य फलं निषेधा-

क्कुटाण्डवत्समासे ततः (१)स्त्रीत्वविवक्षायां महती शूद्रेत्यर्थे महा-शूद्रेति टाबेव। अमहत्पूर्वेत्यत्र जातिरित्यस्यासम्बन्धेऽनुपसर्जनाधिकारे प्रधानेन तदन्तविधिसत्त्वात् "जातेः" (पा०सू० ४।१।६३) इति ङीष् स्यात्। शूद्रशब्दे जातिवाचकत्वस्य, स्त्रीत्वे (२)शूद्रशब्दार्थसमवेतत्व-स्यापि सत्त्वेनात्र टाप् निर्बाध इति **भाष्यप्रदीपोद्द्योते** निरूपितम्। **महाशूद्रीति**। "आभीरी तु महाशूद्री" (अ०को० २।६।१३) इत्य-मरः। ब्राह्मणादुग्रकन्यायामाभीरः। नृपाच्छूद्रायामुत्पन्नोग्रजातिकन्या। अत्रानुलोमसङ्कराणां (३)मातृजातिवृत्तित्वात्तत्र तां जातिमारोप्य शूद्रशब्द-

---

भावः, किन्तु पूर्वोक्तकुक्कुटाण्डवत् समासे निषेधाभाव एव। अत्रापि अमहत्पूर्वेत्यत्र जातिरित्येतस्य सम्बन्धप्रतिपादकभाष्यस्यैव पूर्वं स्त्रीत्वाविवक्षया समाससाधुत्वे प्रमाणत्वात्। अत एव "गतिकारकोपपदानाम्" इत्यस्य 'व्याघ्री 'अश्वक्रीती' इति प्रयोगमुक्तं भाष्ये। अत एव च 'अयजे इन्द्रम्' इत्यादौ गुणसिद्धिः; इति प्राहुः।

(१)**स्त्रीत्वविवक्षायामिति**। ननु शूद्रशब्दे लिङ्गाविवक्षायां नपुंसकत्वेन "परवल्लिङ्गम्" (पा०सू० २।४।२६) इति नपुंसकत्वापत्तिरिति चेत्? न, अवयवात्समुदायाच्च स्त्रीत्वविक्षायामवयवस्य स्त्रीलिङ्गत्वेन तस्यैवातिदेशात्। न च महत्पूर्वकशूद्रशब्दान्तप्रातिपदिकात् टाब् नेत्यर्थे महाशूद्रशब्दस्य महत्पूर्वत्वेऽपि शूद्रशब्दस्य तत्त्वाभावात् टाप् सुस्थ इति वाच्यम्, तथा सत्यमहत्पूर्वग्रहणवैयर्थ्येन महच्छब्दपूर्वकशूद्रशब्दान्तप्रातिपदिकावयवाट्टाब् नेत्यर्थस्वीकारेणादोषात्, स्त्रीत्वबोधकप्रत्ययस्यावयवात् समुदायाच्च प्राप्तौ वृक्षप्रचलन्यायेन समुदायादेव प्राप्तेः सत्त्वाच्च। ननु विशिष्टाद्विवक्षायां नपुंसकत्वापत्तिः, विशिष्टात् लिङ्गसामान्याविवक्षायामस्य लिङ्गत्रयभाक्त्वस्य भङ्गापत्त्या विशिष्टात्तद्विवक्षैवेति स्वीकारात्। अन्यथाऽस्य लिङ्गत्रयमुक्तकार्यभाक्त्वेन नियतलिङ्गकत्वभङ्गापत्तिः।

(२)**शूद्रशब्दार्थेति**। स्त्रीत्वे शूद्रत्वावच्छिन्नधर्मितानिरूपितप्रकारत्वस्य सत्त्वेत्यर्थः, तन्मात्रावच्छिन्नत्वनिवेशे मानाभावादिति भावः।

(३)**मातृजातिवृत्तित्वादिति**। स्मृतिषु मातृजातिकर्मोपजीवित्वस्योक्तेः आभीरेषु शूद्रत्वजातिमारोप्य शूद्रशब्दप्रयोगेण शूद्रत्वावच्छिन्नधर्मितानिरूपितनिष्ठप्रकारताप्रयोजकतापर्याप्त्यधिकरणत्वं जातिवाचकशूद्रशब्दान्तत्वं च महाशूद्रशब्देऽस्तीति टाप् स्यात्, तन्मा भूदिति अमहत्पूर्वग्रहणम्। तदन्तविध्यसत्त्वे महा-विशिष्टशूद्रत्वावच्छिन्ने एव स्त्रीत्वान्वयात् शूद्रत्वावच्छिन्नधर्मितानिरूपितस्त्रीत्वप्रकारताप्रयोजकत्वपर्याप्तिर्महाशूद्रशब्दे एव न शूद्रशब्दे इति न तत्र्यप्रसक्तिः

प्रयोग इत्ययं शूद्रशब्दोऽर्थवानेवेति शूद्रशब्दार्थसमवेतस्त्रीत्वमप्यत्रास्ति । तदर्थसमवेतस्त्रीत्वेऽपि शूद्रशब्दादेव टाप् स्यान्न तदन्तात्, "ग्रहणवता" (प०भा० ३१) इति निषेधादिति तदन्तविधिज्ञापकता नासङ्गता । अत एव शङ्खस्मृतौ "ब्राह्मणक्षत्रियवैश्यैः क्षत्रियावैश्याशूद्रासूत्पन्नाः क्षत्रियवैश्यशूद्रा एव भवन्ति" इत्युक्तमिति भावः ।

**यत्तु** शूद्राभीरमित्यादौ (१)सामान्यविशेषवाचित्वाद् द्वन्द्वाभावमाशङ्क्य 'आभीरा जात्यन्तराणि' इति "त्यदादीनि" (पा०सू० १।१।७४) इति सूत्रे **भाष्ये** उक्तं, तत्तु अनारोपाभिप्रायेणेति न तद्विरोधः । अजादिराकृतिगणः । तेन "न मु ने" (पा०सू० ८।२।३) इति सूत्रे 'टायामादेशः' इति **भाष्य**प्रयोगः सिद्धः । प्रथमाध्यायचतुर्थपादे "चमसवदविशेषात्" (ब्र०सू० १।४।८) इति सूत्रे शाङ्करभाष्यवाचस्पत्ययोरजायां 'छागा' इति टाबन्तप्रयोगो दृश्यतेऽतश्छागशब्दोऽप्यजादिष्विति (२)केचित् ।

**उगितश्च** (पा०सू० ४।१।६) । उगिच्छब्देन प्रातिपदिकस्य विशेषणात्तदन्तविधिः । प्रत्ययविधाविति निषेधस्तु न "उगिद्वर्णग्रहणवर्जम्" (३)इत्युक्तेः तदाह—**उगिदन्तादिति । भवतीति ।** "व्यपदेशिवद्भावोऽप्रातिपदिकेन" (प०भा० ३२) इति निषेधस्तु (४)सूत्रोपात्तान्ता-

---

अमहत्पूर्वग्रहणस्य तदन्तविधिज्ञापकत्वं सङ्गच्छते । सति तु तदन्तविधौ उक्तरीत्या टापः प्राप्तौ अमहत्पूर्वेति निषेधश्चरितार्थ इति प्रघट्टकार्थः ॥

(१)**सामान्यविशेषवाचित्वाद् द्वन्द्वाभावमिति ।** साहित्याभावादित्यर्थः । (२)**केचिदिति ।** भाष्यतत्त्वविदः । यत्तु केचिदिति प्रतीकमुपादाय अत्रारुचिबीजं तु बहुशः 'छागी' इति प्रयोगदर्शनात् तत्पाठस्य भाष्यानुक्तत्वाच्च सोऽसाधुरिति वदन्ति, तत्तु नागेशाशयमबुध्वा भ्रान्तानामनादरणीयमेव । तदाशयस्तूभयप्रयोगदर्शनाद्गवादिगणे अन्यगणसूत्रवत् 'छागाद्वा' इति पठनीयमिति । छागा इति प्रयोगं वदन् बौधायनसूत्रकारोऽप्यत्रैवानुकूलः ।

(३)**इत्युक्तेरिति ।** अनुपसर्जनाधिकारेणामहत्पूर्वग्रहणेन च स्त्रीप्रत्यये तदन्तविधिज्ञापितत्वाच्चेत्यपि बोध्यम् । (४)**सूत्रोपात्तान्तादिशब्दविषय एवेति ।** एवञ्च 'रोणः' इति सिद्धौ स्वस्येत्यनुवृत्त्यर्थं चकारो न कार्य इति भावः । वस्तुतस्तु एतत्सर्वं कैयटमतेन । नागेशमते तु नायं नियमः । अत एव तत्परिभाषाऽवतरणे "एकगो-

दिशब्दविषय एवेति भावः। भवतु इति उगितः प्रातिपदिकस्यापि सत्त्वात् प्रत्ययमात्रग्रहणाभावेन "प्रत्ययग्रहणे" (प०भा० २३) इति परिभाषाया अप्रवृत्त्या (१)निर्यवमती' इत्यादौ न दोषः। **अञ्चतेस्त्विति।** (२)नलोपिनोऽञ्चतेरित्यर्थः। नियमोऽपि नलोप्यञ्चतिविषय एवेति निरूपितम्।

व्यपदेशिवद्भावलब्धमर्थं स्पष्टप्रतिपत्तये आह–**वन्नन्तादिति।** नन्वेवं प्रत्ययग्रहणपरिभाषया 'बहुधीवरी' न सिद्ध्येदत आह–**तदन्ता-च्चेति।** तत्परिभाषालब्धवन्नन्तेन (३)प्रातिपदिकस्य विशेषणादिति भावः। **सामान्येति।** सूत्रेऽनुबन्धानुच्चारणात्तदनुबन्धकपरिभाषा-विषयो नेति भावः। इदं "मतुवसोः" (पा०सू० ८।३।१) "जाग्रो वि" (पा०सू० ७।३।८५) इतिसूत्रेषु **भाष्यकैयटयोः** स्पष्टम्। इदं सूत्रं न ङीब्विधायकं, किन्तु "ऋन्नेभ्यः" (पा०सू० ४।१।५) इति प्राप्तङीब-नुवादेन तत्सन्नियोगशिष्टरभावमात्रविधायकम्, उभयविधौ गौरवात्। **शर्व-रीति।** शृधातोः "अन्येभ्योऽपि दृश्यते" (पा०सू० ३।२।१७८) इति वनिप्। एतत्सिद्ध्यर्थमाह–(४)**हशन्ताद्विहित इति।** अर्थवतो ग्रह-णान्नेह 'मघोनी'। कनिप्रत्ययान्तनिपातितस्येदम्।

**बहुव्रीहौ वा** (का०वा०)। "अनो बहुव्रीहेः" (पा०सू० ४।१।१२) इति प्रतिषेधे प्राप्ते इदम्। एतच्च वार्त्तिकम् "अन उपधा" (पा०सू० ४।१।२८) इतिसिद्धङीबनुवादेन रादेशविधायकम्। अत एवेदमनुपधा-

---

पूर्वात्" (पा०सू० ५।२।११८) इत्यस्योपादानं सङ्गच्छते। तन्मते समाधिस्तु प्राति-पदिकग्रहणे एव तत्परिभाषाप्रवृत्तिस्वीकार इति। तत्त्व च उगिद्ग्रहणभिन्नत्वे सति ... ग्रहणभिन्नत्वे सति प्रत्ययग्रहणभिन्नत्वम्। एतत्सर्वम् "इयं प्रातिपदिकग्रहणे एव" इति व्याख्याने तत्रैव परिभाषेन्दुशेखरटिप्पण्यां स्पष्टम्। (१)**निर्यवमतीति।** यवा-निष्क्रान्ता इति विग्रहः। एतेन वृत्तेः पूर्वं ङीबित्यपास्तम्। (२)**नलोपिनोऽञ्चते-रिति।** अत एव पूजायां 'प्राञ्ची' इत्यसाध्वेवेति भावः।

(३)**प्रातिपदिकस्य विशेषणादिति।** विशेष्यान्तरसत्त्वेऽप्यत्र तदन्तविधे-रुत्तरपदस्थग्रहणादिति भावः।

(४)**हशन्तादिति।** 'शर्वरी' इतिसिद्ध्यर्थमेव विहितविशेषणं 'हशः' इति भाष्योक्तेः।

पिनि 'सुपर्वा' इत्यादौ नेति विकल्पोऽर्थसिद्धः । "वनो र च" (पा०सू० ४।१।७) इत्येतत्तु "ऋन्नेभ्यः" (पा०सू० ४।१।५) इत्येतन्ङीब्विषयमेवेत्युक्तम् । **पक्षे डाबिति** । तेन द्विवचने रूपत्रयम् ।

**कृतसमासान्त इति** । उत्तरसूत्रे ऋच्यभिधेयायां तस्यैव सम्भवेनार्थाधिकारानुरोधादिति भावः । तेन पादयतेः क्विबन्तस्य ग्रहणं न । **द्विपदीति** । द्वौ पादावस्या इति बहुव्रीहौ "संख्यासुपूर्वस्य" (पा०सू० ५।४।१४०) इति पादशब्दान्तलोपस्ततो ङीपि पादः पत् ।

**टाबृचि** (पा०सू० ४।१।९) । पूर्वसूत्रप्राप्तङीपोऽपवाद इति प्राञ्चः, तच्चिन्त्यम् । "शेषाद्विभाषा" (पा०सू० ५।४।१५४) इतिसूत्रस्थ**भाष्य**विरोधात् । तत्र हि प्रतिपदाविहितसमासान्तानां कपो वैकल्पिकत्वेन कबभावे सावकाशत्वमुक्तं, तद्रीत्याऽस्यापि पूर्वसूत्रस्य वैकल्पिकत्वेन तदभावे सावकाशत्वात् । "बहुव्रीहेरूधसः" (पा०सू० ४।१।२५) इत्यत्रापि **भाष्ये** स्पष्टमेतत् । (१)अत एव "ङ्याप्प्रातिपदिकात्" (पा०सू० ४।१।१) इति सूत्रे पादशब्दसमानार्थमकारान्तं पदशब्दमङ्गीकृत्यैतत्प्रत्याख्यातम् , "श्रूयते च छन्दसि तस्याः सप्ताक्षरमेकं पदम् , एकः पाद इत्यर्थः" इति च **भाष्योक्तं** सङ्गच्छते । (२)तदा हि ऋच्यपि 'एकपदी' एकपात्' इतीष्यत एव । एवञ्च 'एकपाद् ऋक्' इत्यस्य सूत्रमते सिद्धये "टाबृचि" (पा०सू० ४।१।९) इत्यत्राप्यन्यतरस्याङ्ग्रहणमनुवर्त्यम् । (३)पादन्तस्य ऋच्यनभिधानमिति तु न **भाष्या**शयः । (४)ङीबन्तप्रयोगस्य सूत्ररीत्ये-

---

(१)**अत एव ङ्याप्प्रातिपदिकादितीति । भाष्यकृता** पाच्छब्दसमानार्थकपदशब्दान्ताद् द्विपदेति संसाध्य सूत्रं प्रत्याख्यातम् तदा पाच्छब्दान्तात् ङीपि 'द्विपदी' इति इष्यते एव । अपवादत्ववादिनां नये तु 'द्विपदी' इत्यस्याभावात्प्रत्याख्यानमसङ्गतमेव स्यात् ।

ननु प्रत्याख्यानपक्षे ङीपो वैकल्पिकत्वात् ऋचि वाच्यायामेकपदा एकपदी एकपादिति रूपत्रयम् । आरम्भपक्षे तु एकपदी एकपदा इति रूपद्वयमिति तत्रापि फलभेदोऽस्त्येवेत्यत आह–(२)**तदा हीति** । उभयविकल्पे रूपत्रयं फलितमिति भावः । न च त्वयापि अपवादत्वमस्वीकृत्यैका कल्पना करणीया, मयाप्यारम्भप्रत्याख्यानयोः फलैक्याय ऋचि वाच्यायां पादन्तस्यानभिधानमिति कल्प्यते, ततश्च न भाष्यविरोधोऽत आह–(३)**पादन्तस्येति । (४)ङीबन्तप्रयोगस्य सूत्ररीत्येष्टस्येति** । ननु

ष्टस्यासिद्धयापत्तेरिति बोद्धयम् । केवलपाच्छब्दस्य स्त्रियाम् ऋचि वा ... म्भवेनात्र तदन्तविधिः ।

**असिद्धत्वादिति** । (१)आपः परिगणितेष्वभावान्न तत्र न... पासिद्धत्वम् । इदञ्च (२)कार्यकालपक्षे । अयं निषेधः 'प्रियपञ्चा द्रौपदी' इत्यादौ (३)तदन्तेऽपि । 'स्त्रियां यत्प्राप्नोति तन्न' इत्यर्थात् "अन उपधा...

---

ऋचि वाच्यायां पादन्तस्यानभिधाने 'एकपदा' इति टावन्तप्रयोगस्यैवेष्टत्वात् ङी... न्तप्रयोगस्येष्टत्वकथनमसङ्गतम् । न च प्रत्याख्यानपरभाष्यमते पाच्छब्दान्तस्य ... भिधानमिति एकपदेत्येव, सूत्रकारमते "टावृचि" (पा०सू० ४।१।९) इतिसूत्र... रणादेव नानभिधानमिति अपवादत्वाभावपक्षे 'एकपदी' एकपदा इति रूपद्वय... फलभेदः स्पष्ट एवेति अनभिधानं न कल्पनीयं, किन्तु तत्पक्षे रूपत्रयस्येष्टत्वादाम... पक्षेऽपि अन्तरस्याङ्ग्रहणानुवृत्त्या रूपत्रयस्येष्टत्वमिति ङीबन्तप्रयोगस्येष्टत्वकथनं ... ङ्गतमिति वाच्यम् सूत्रकारमतेऽपि टाबुद्देश्यत्वेनापरिकल्पितऋग्वाचकपाच्छब्दान्तस्या... नभिधानकल्पने अपवादत्वाभाववादिनामपि फलभेदाभावेन एतादृशकपोलकल्पना... अनुचितत्वात् । ततश्च ङीबन्तप्रयोगस्येष्टत्वकथनमयुक्तमेवेति चेत् ।

**अत्र केचित्**—"शेषाद्विभाषा" (पा०सू० ५।४।१५४) इति सूत्रस्थभाष्यवि... धायापवादत्वाभावस्य पूर्वमेव सुसाधितत्वेनेष्टप्रयोगासिद्धिरिति वदन्ति, ते तु ... वेत्यादितोऽपवादत्वाभावज्ञापनाय प्रवृत्तग्रन्थात्पूर्वमेवापवादत्वाभावसिद्धयभिधाने... समुपेक्ष्या एव । "न षट्स्वस्रादिभ्यः" (पा०सू० ४।१।१०) इत्यनेन टाब्ङीपोरुभ... निषेधार्थम् "ऋन्नेभ्यः" (पा०सू० ४।१।५) इत्यतो ङीबनुवृत्तिरावश्यकी । ट... मण्डूकप्लुतौ मानाभावेन "टावृचि" (पा०सू० ४।१।९) इत्यत्रापि तदनुवृत्तिर्वि... धैव । एवञ्च सूत्ररीत्येष्टस्येत्यादिग्रन्थः सुललित इति **परे** । **अन्ये** तु-ङीप्पदे ... कानुवृत्तिप्रयोजकस्वरितत्वस्यैव कल्पनेन "टावृचि" (पा०सू० ४।१।९) इत्यत्र ङी... नुवृत्त्यभावेन सूत्रमते 'एकपदी' इत्यस्यानिष्टत्वेन अनभिधानेऽपि न फलभेद इत्या...

**(१)आपः परिगणितेष्वभावादिति** । "नलोपः सुप्" (पा०सू० ८।...) इति सूत्रे इत्यर्थः । सुबिति आपः पकारेण प्रत्याहाराश्रयणेन आब्विधावपि असि... तु न शङ्क्यम् 'बहुचर्मिका' इत्यादौ आब्निमित्तकेत्वविधावपि नलोपस्यासिद्धत्वा... नापत्तिरिति स्पष्टं भाष्ये । (२)**कार्यकालेति** । यथोद्देशे तु स्थानिवत्वेनैव ... सुलभं तस्य सङ्केतसम्बन्धेन षट्पद्वत्स्वरूपत्वेन अल्धर्मत्वाभावादिति भावः ।

(३)**तदन्तेऽपीति** । स्त्रीप्रत्यये तदन्तविधिसत्त्वात् अर्थप्राधान्याश्रयणे ... भावाच्चेति भावः ।

(पा०सू० ४।१।२८) इति ङीबपि नेति बोद्धव्यम् । (१)ध्वनितञ्चेदं भाष्ये। (२)परे त्वत्र बहिरङ्गासिद्धत्वाप्राप्तिः नलोपस्य तत्त्वाभावात्। सञ्ज्ञाकृतबहिरङ्गत्वानाश्रयणात् । 'पञ्च' इत्यत्र तु स्त्रियां यत्प्राप्नोति तन्ने-त्यर्था(३)श्रयणबलाद् भूतपूर्वषट्त्वाश्रयो निषेधः । अत एव षट्सञ्ज्ञायां नलोपासिद्धत्वस्य न फलमिति "नलोपः सुप्" (पा०सू० ८।२।२) इत्यत्र भाष्ये उक्तमित्याहुः ।

**मनः** (पा०सू० ४।१।११) । **न ङीबिति** । अयम्, "अन" (पा०सू० ४।१।१२) इति च उक्तरीत्या टाबङीपोरुभयोरपि निषेधः ।

---

(१) **ध्वनितमिति** । तत्र हि अनन्तरस्य ङीपो निषेधे 'पञ्च' इत्यत्र टापो निषेधो न स्यादित्याशङ्क्य 'उभौ न भवतः' इति व्याख्याय "अथवा उभाविति न वक्तव्यम्, स्त्रियां यत्प्राप्नोति तस्य प्रतिषेधः" इत्युक्तम् । तेन 'अनन्तरस्य' इत्यादिन्यायानाश्रयणात् ङीप इव विप्रकृष्टटापः, उत्तरस्य ङीपो, डापश्च निषेध इति ध्वन्यते इति भावः ।

"नलोपः सुप्" इति सूत्रे भाष्ये संज्ञाविधौ नलोपासिद्धत्वस्य न फलम् षट्संज्ञां विना विभक्तिलुकोऽभावेन नलोपाप्राप्त्या कृतायां षट्संज्ञायां लुकि नलोपे च प्राप्तस्य टापः जातषट्त्वाश्रयणेनैव निषेधसिद्धेरित्युक्त्वा 'दाण्डिदत्तौ' 'दत्तदण्डिनौ' इति घिसंज्ञायां प्रयोजनमुक्तम् । तत्र षट्त्वस्य अल्धर्मत्वान्निषेधानुपपत्तिमाशङ्क्य बहिरङ्गपरिभाषया नलोपासिद्धत्वं कैयटेनोक्तम्, तत्खण्डयति—(२)**परे त्विति** । अत्रायं ग्रन्थः प्रक्षिप्तः मूलसन्दर्भविरोधादिति वदन्ति ।

(३)**आश्रयणेति** । अनुपदोक्ते 'प्रियपञ्चा द्रौपदी' इत्यत्र डाबभावार्थं व्याख्यानस्य चारितार्थ्यादेतच्चिन्त्यमिति **केचित्** । **अन्ये तु** पूर्वोक्तलक्ष्यासिद्ध्यर्थमुक्तार्थकरणे यवनुवृत्तेर्व्यर्थत्वाद् अर्थाश्रयणबलादित्यस्य अर्थाश्रयणप्रयोजकीभूतटाबनुवृत्तिसामर्थ्यादिति कथञ्चिद्योज्यमित्याहुः । वस्तुतस्तु षान्तनान्तसङ्ख्यावाचकत्वसमानाधिकरणत्वोपलक्षितस्य सङ्केतसम्बन्धेन षट्पदवत्त्वरूपषट्त्वस्य अल्धर्मत्वाभावेन स्थानिवद्भावेनैवारोपान्नासिद्धत्वोपयोगः । एवञ्च अर्थाश्रयणबलादित्यस्य अर्थस्वभावेनेत्यर्थः । भूतपूर्वेत्यादेश्च पूर्वं भूतं स्थानिनि स्थितं षट्त्वमादायेत्यर्थः । स्थानिवत्त्वेनेति शेषः । यद्वा, कार्यकालपक्षे यदा कार्यं तदा संज्ञाया आवश्यकत्वात् तस्याश्च नलोपोत्तरं नान्तत्वाभावेनाप्राप्त्या भूतपूर्वगत्याश्रयणम् । अत एव च अर्थाश्रयणबलादिति हेतूपन्यासः । एवञ्च न कश्चिद्विरोध इत्यलम् ।

ननु नियमशास्त्राणां लाघवाद्विधिमुखेनैव प्रवृत्त्या वन्नन्तबहुव्रीहौ "अनउपधा"

एतेन 'सीमभ्यां' 'बहुयज्वभ्यां' 'बहुधीवभ्याम्' इत्यत्र डाब्ङीपोरभावे नलोपे टाब् दुर्वार इत्यपास्तम् ।

**डाबुभा** (पा०सू० ४।१।१३)। उभाभ्यांग्रहणाभावे सन्निहितस्यान एवानुवृत्तिः सम्भाव्येत । वचनसामर्थ्याद् डाब्निषेधयोः पर्याये सिद्धेऽन्यतरस्यामिति स्पष्टार्थम् । **भाष्ये** त्वन्यतरस्याङ्ग्रहणं वाक्यभेदेन "अनो बहुव्रीहेः" (पा०सू० ४।१।१२) इत्यनुवर्त्त्य ततः पक्षे "ऋन्नेभ्यः" (पा०सू० ४।१।५) इति ङीब्र्थर्थम् । एवञ्च "अन उपधा' (पा०सू० ४। १।२८) इति सूत्रं नियमार्थमिति 'बहुधीवरी' इत्यत्र 'ऋन्नेभ्यः" (पा०सू० ४।१।५) इति ङीबिति तत्सान्नियोगेन रेफादेशः सिद्ध्यतीति बहुव्रीहौ वेति वचनं प्रत्याख्यातम् । (१)"अन उपधा" (पा०सू० ४।१।२८) इति "ऋन्नेभ्यः" (पा०सू० ४।१।५) इत्यस्यैवानुवाद इति नियमस्य विधिमुखेन प्रवृत्तावपि न दोषः ।

**अन उ** (पा०सू० ४।१।२८)। "बहुव्रीहेरूधसः" (पा०सू० ४।१। २५) इत्यतो बहुव्रीहेरिति "सङ्ख्याऽव्ययादेः" (पा०सू० ४।१।२६) इत्यतो ङीबिति चानुवर्त्तते । अनुपसर्जनादित्यनुवृत्तमप्यत्र न सम्बध्यते तस्य गृह्यमाणविशेषणतया गृह्यमाणस्य चान्नन्तबहुव्रीहाव(२)नुपसर्जनस्या सम्भवात् ।(३)ध्वनितञ्चेदं "वनो र च" (पा०सू० ४।१।७) इति सूत्रे **भाष्ये** । (४)तत्र हि "अनो बहुव्रीहेः" (पा०सू० ४।१।१२) इत्यन-

---

(पा०सू० ४।१।२८) इति ङीपि "ऋन्नेभ्यः" (पा०सू० ४।१।५) इति ङीबनुवादे विधीयमानो रादेशो न स्यादत आह—(१)**अन उपधेतीति** ।

(२)**अनुपसर्जनस्यासम्भवादिति** । नन्वनो गृह्यमाणस्य बहुव्रीहावनुपसर्जनत्वाभावेऽपि अतिबहुदामा अतिबहुराजा ब्राह्मणीत्यादौ बहुव्रीहेरुपसर्जनत्वेन तन्निवारणाय बहुव्रीहिविशेषणस्य "अनुपसर्जनात्" इत्यस्यावश्यकत्वमित्याशङ्कां निराकुर्वन्नाह- (३)**ध्वनितमिति** । तदेवाह-(४)**तत्र हीति** । "अनो बहुव्रीहेः" (पा०सू० ४।१। १२) "डाबुभाभ्यामन्यतरस्याम्" (पा०सू० ४।१।१३) "अनुपसर्जनात्" (पा०सू० ४।१।१४) इति सूत्रपाठे भाष्यकृता अनो बहुव्रीहेरित्यनन्तरम् "उपधालोपिनो वा" इति न्यासप्रदर्शनेन तत्रासम्बन्धो ध्वनितः । अन्यथा सिद्धान्ते तत्सम्बन्ध इदानीं न्यत्यास आपद्येतेति भावः । वस्तुतस्तु इत्यस्यानन्तरामिति प्रतीकमुपादाय शब्द-

न्तरम् "उपधालोपिनो वा" इति न्यासो दर्शितः । विद्धयर्थमिदम् । अन्यतरस्याङ्ग्रहणं तु अनुपधालोपिसुपर्वेत्यादौ सावकाशयोर्डाप्प्रतिषेधयोरुपधालोपिन्यनवकाशेन ङीपा बाधो मा भूदिति । अन्यथा विधानसामर्थ्येन त्रयाणां पर्यायसिद्धौ तद्वैयर्थ्यं स्पष्टमेव ।

**ककारादिति** । (१)अनेन वर्णमात्रं विवक्षितम्, अकार उच्चारणार्थ इति सूचयति । न च 'कारिका' इत्यत्राकारेण व्यवधानादाप्परककाराभावेनेत्वानापत्तिः, एकादेशेऽपि "अचः परस्मिन्" (पा०सू० १।१।५७) इति स्थानिवत्त्वाद् व्यवधानमेव । आपि परतोऽकारस्य कात्पूर्वस्येत्यर्थेऽपि निर्दिष्टपरिभाषोपस्थितेर्व्यवहिते (२)न प्राप्नोतीति वाच्यम्, आनन्तर्यांशोपस्थितावपि 'येन नाव्यवधानम्' इति न्यायेनाकारव्यवधानेऽपि प्रवृत्तेः । रथकट्यादौ च नातिप्रसङ्गः । क इति सङ्घातग्रहणे तु 'एतिका' इत्याद्यसिद्धिः अकच्यकारस्योच्चारणार्थतया कशब्दाभावात् "न यासयोः" (पा०सू०७।४।४५) इति ज्ञापकेन वर्णग्रहणमित्येव ज्ञाप्यते । अकज्विधायकस्थमकारवैशिष्ट्यमादायेत्वप्रवृत्तिज्ञापकत्वाश्रयणे तु गौरवम्, तावताऽपि प्रत्ययस्थत्वांशा(३)नुपपत्तेश्च ।

न च वर्णग्रहणपक्षे एतिका इत्यादावकारद्वयव्यवधानादित्वाप्राप्तिः द्वयोरकारयोरेकादेशे टापा सहैकादेशस्य स्थानिवद्भावादेकेनैवाकारेण व्यवधानात् । पुनः स्थानिवत्त्वन्तु न; (४)लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तेः । टापा

---

क्ता 'अनो बहुव्रीहेः, डाबुभाभ्याम्, अनुपसर्जनात्, उपधालोपिनो वा इति पाठ्यमिति भावः । यथाश्रुते अनुपसर्जनात् इत्यस्य सम्बन्धो दुर्घटः । अत एव बहुदामानि पुराण्यतिक्रान्ता नगरीत्यत्र ङीब् न" इति भाष्यतात्पर्यस्य, तत्सम्बन्धे फलस्य च प्रदर्शनेन तद्विरोधाभावात्, "विभाषा सपूर्वस्य"(पा०सू० ४।१।३४) इत्यत्र गृह्यमाणान्ते गृह्यमाणे सपूर्वपदार्थे अनुपसर्जनादिति सम्बन्धस्य तत्फलस्य च अग्रे शेखरकारेणाप्युक्तत्वाच्च बहुव्रीहिविशेषणार्थम् अनुपसर्जनादित्यस्य सम्बन्ध एवोचित इति दिक् ।

**प्रत्ययस्थात् (पा०सू० ७।३।४४)** । (१)अनेनेति । कारप्रत्ययान्तनिर्देशरूपव्याख्यानेनेत्यर्थः । अन्यथा वर्णबोधकत्वाभावेन तदसङ्गतिः स्पष्टैव । (२)न प्राप्नोतीति । "तस्मिन्निति" परिभाषाबाधकल्पने तु रथकट्यादावतिप्रसङ्गः स्यात् । (३)अनुपपत्तेश्चेति । सौत्रस्य प्रत्ययघटकत्वाभावादिति भावः । (४)लक्ष्ये

सहैकादेशस्य स्थानिवत्त्वं विना पूर्वैकादेशस्य स्थानिवत्त्वन्तु वक्तुमशक्यं, तस्य टाबेकादेशेनापहारेणादर्शनात् । अत एव "न यासयोः" (पा०सू० ७।३।४५) इतिनिषेधसार्थक्यम् ।

स्थग्रहणन्तु स्पष्टार्थं, केवलककारस्य प्रत्ययस्याभावात् । असुप इति बहुव्रीहिणा नाङ्गविशेषणम् 'बहुचर्मिका' इत्यादावित्वानापत्तेः, प्रत्ययलक्षणेनाङ्गस्य सुब्वत्त्वात् । "न लुमता" (पा०सू० १।१।६३) इति तु नात्र लुमता लुप्ते प्रत्यये यदङ्गं तस्य कार्ये तन्निषेधप्रवृत्तेः । इदन्तु टाप्यङ्ग-मिति दिक् ।

**सर्विकेति** । "अव्ययसर्वनाम्नाम्" इत्यकच् । **कारिकेति** । करोतेर्ण्वुल् । नौशब्दात्स्वार्थे कः । सुपः परो नेति प्रसज्यप्रतिषेधेन व्या-ख्याने फलमाह—**बहुपरिव्राजकेति** । पर्युदासे हि समुदायस्य सुब्भि-न्नत्वेन सुबन्तभिन्नत्वेन च ततः परत्वादित्वं दुर्वारमिति भावः । परिपूर्वाद् व्रजेर्ण्वुलि बहुव्रीहौ सुपो लुक्यपि प्रत्ययलक्षणेनापः सुबन्तात्परत्वं बोद्धव्यम् । **कटुकेति** । आपा सह सवर्णदीर्घात्पूर्वं वार्णादाङ्गस्य बलीयस्त्वादपवाद-

---

**लक्षणस्येति** । नन्वस्य संस्कारकविधिष्वेव प्रवृत्तेः "एकः पूर्वपरयोः" (पा०सू० ६। १।८४) इति भाष्ये स्पष्टत्वादिदमयुक्तमिति चेत् ? न, कार्यातिदेशस्य मुख्यत्वे अस्यापि संस्कारकविधित्वमित्यभिमानात् । वस्तुतस्तु इदं सर्वमयुक्तम् स्थानिवत्त्वस्या-तिदेशत्वेन लक्ष्येलक्षणन्यायाप्रवृत्तेः । पुनः पुनः स्थानिवत्त्वन्तु भवत्येव । अत एव 'सुनयिका' 'सुपाकिका' इत्यादौ "धात्वन्तयकोः" इतीत्वं सिध्यति । अन्यथा ने इत्य-स्मिन् फलाभावेन धातुत्वानातिदेशेऽयादेशोत्तरं नय् इत्यस्मिन् तदसिध्या इत्वानापत्तिः स्यात् । एवं 'सुपाकिका' इत्यत्रापि पच्वृत्तिधातुत्वस्य पाच् इत्यत्रारोपे कुत्वोत्तरं पाक् इत्यवस्थायां तदलाभे इत्वानापत्तिर्बोध्या । तद्वार्तिकं तु अयधातोः 'अयिका' इत्यत्र चरितार्थम् । अत एव तण्डुलानित्यत्र प्रत्ययान्तत्वम् । अत एव च 'इन्द्र' इत्यत्र वृद्धेरायादेशोत्तरमपि स्थानिवत्त्वेन सवर्णाच्त्वबुद्ध्या असवर्णे इति निषेधे "अभ्या-सस्यासवर्णे" (पा०सू० ६।४।७८) इति सूत्रं व्यर्थं सत् "अभ्यासकार्ये तदुत्तरखण्डा-जादेशस्य तत्कार्यप्रतिबन्धकीभूतं स्थानिवत्त्वं न" इति निषेधे ज्ञापकमिति प्रन्थः सङ्गच्छते । वस्तुतस्त्वत्र "न यासयोः" (पा०सू० ७।३।४५) इति ज्ञापकेन ताद्रूप्येण व्यवधानं सह्यत इति, स्थानिवत्त्वं न भवतीति, श्रौतवर्णकर्तृकव्यवधानाभावोऽव्यवधा-देन गृह्यते इति वा कल्पनं युक्ततरमिति ।

त्वाच्चान्त्यककारादुत्तरस्याकारस्येत्वं स्या(१)दिति भावः । **मामकेति ।**

---

(१)इति भाव इति।"प्रत्ययस्थात्"(पा०सू० ७।३।४४) इति सूत्रे पूर्वस्य ग्रहणाभावे कादिति दिग्योगलक्षणपञ्चमीश्रुत्या "तस्मादित्युत्तरस्य" (पा०सू० १।१।६७) इति परिभाषाया अव्यवहितत्वोत्तरत्वविधेयान्वयिषष्ठ्यर्थस्यंशत्रयाणामुपस्थितौ प्रत्ययस्थात् ककाराद्व्यवहितोत्तरस्य ह्रस्वाकारस्येत्वं भवत्यापि परे इत्यर्थेन कटुकशब्दाट्टापि कृते कटुक आ इति स्थिते सवर्णदीर्घमाङ्गत्वेनापवादत्वाच्च प्रबाध्य इत्वं स्यात्। न चैवं 'सर्विका' इत्यत्रैव सर्वक आ इति दशायामुक्तप्रकारेणेत्वापत्तिसत्त्वेन कटुकापर्यन्तमनुधावनस्य वैयर्थ्यमिति वाच्यम् , सूतकापुत्रिकेति वार्तिके प्रश्लेषेणाकारविधानसामर्थ्येन "प्रत्ययस्थात्" (पा०सू० ७।३।४४) इति सूत्रे "तस्माद्" (पा०सू० १।१।६७) इति परिभाषाया अप्रवृत्तिज्ञापनाद् दिग्योगलक्षणपञ्चम्याऽऽकाङ्क्षितदिग्वाचकपदाध्याहारे प्रसक्ते परस्येत्यस्यैव स इतिनियमाभावेन परस्येति पदस्याध्याहारे सवर्णदीर्घबाधकल्पनं पूर्वस्येतिपदाध्याहारे तु नेति सूत्रबाधपरिहारलाघवेन सर्विकेत्यादिलक्ष्यसंस्काराय पूर्वस्येत्यस्यैवाध्याहारेण तत्र दोषाभावात्। यत्रोदाहरणे पूर्वोऽकारो न सम्भवति तत्रागत्या परस्येत्यस्याध्याहारे इति 'कटुका' इत्यत्र पूर्वाकारासम्भवात्तत्रेत्वप्रवृत्त्यर्थं परस्येत्यध्याहारे दोषः स्पष्ट एवेति तत्पर्यन्तानुधावनस्य सार्थक्यात्।

"प्रत्ययस्थात्" (पा०सू० ७।३।४४) इति सूत्रे "तस्मात्" (पा०सू० १।१।६७) इतिपरिभाषाप्रवृत्तौ तु 'सूतका' 'पुत्रिका' 'वृन्दारका' इत्यत्र ककारात्परस्याकारस्यैव सत्त्वेन तस्य विकल्पेन इत्वविधानेऽपि रूपद्वयसिद्धौ प्रश्लेषेणाकारविधानस्य वैयर्थ्यं स्पष्टमेव इदानीं तु 'सूतका' 'वृन्दारका' इत्यत्र ककारात्पूर्वस्याकारस्य सत्त्वेऽपि 'पुत्रिका' इत्यत्र ककारात्पूर्वस्येकारस्याकारविधाने 'पुत्रका' तदभावपक्षे 'पुत्रिका' इति रूपद्वयसिद्धिरिति तत्सार्थक्यम्।

यत्तु—अकारान्तादेव टाब्विधानेन ककारोत्तरस्य आप्परकस्याकारस्यैव सम्भवेन "प्रत्ययस्थात्" (पा०सू० ७।३।४४) इतिसूत्रे अद्ग्रहणस्य तपरकरणस्य वा वैयर्थ्येन तत्सामर्थ्यादत्र "तस्मात्" (पा०सू० १।१।६७) इतिपरिभाषाया अप्रवृत्तिज्ञापनेन सर्विकेत्यत्रोक्तरीत्या दोषाभावेन कटुकेति प्रत्युदाहरणमिति; तन्न, भवतु इति तिङन्तात् "तिङश्च" (पा०सू० ५।३।५६) इत्यकचि अशब्दादाचारक्विबन्तात् लोटि सिपि हौ हेर्लुकि द्वयोः ( भवतकु अ इति यस्यां क्रियायामिति ) समासे ततष्टापि भवतका इत्यादावुकारस्येत्वापत्तेः। भविता इत्यस्मादकाचि टाबन्तेनाशब्देन समासे 'भवितका' इत्याकारस्य अशब्दाज्जातेन टापा जातस्य सवर्णदीर्घस्य परादिवद्भावेनाद्वादित्वापत्तेश्चोभयोश्चारितार्थ्यात्। सवर्णदीर्घस्य स्थानिवत्त्वं तु न आकारस्य पदान्तत्वेन "न पदान्त" (पा०सू० १।१।५८) इति तन्निषेधात्। न च भवतकु अ आ इति स्थिते सवर्णदीर्घात्पूर्वं प्रत्ययस्थादित्यस्याकारेण व्यवधानादप्राप्त्या सवर्णदीर्घात्पूर्वमन्तरङ्गत्वा-

कस्य प्रत्ययस्थत्वाभावादप्राप्ते वचनम् । ममेयमिति विग्रहे "युष्मदस्मदोरन्यतरस्याम्" (पा०सू० ४।३।१) इत्यणि "तवकममकावेकवचने" (पा०सू० ४।३।३) इति ममकादेशे आदिवृद्धिः । **नरानिति** । कै शब्दे इत्यस्य "आदेच उपदेशे" (पा०सू० ६।१।४५) इत्यात्वे "आतोऽनुपसर्गे" (पा० सू० ३।२।३) इति के "आतो लोप इटि च" (पा०सू० ६।४।६८) इत्यालोपः।

**न यासयोः** (पा०सू० ७।३।४५) । प्रत्ययस्थादिति प्राप्ते निषेधोऽयम् । **यकेति** । यत्तदोरकच् , त्यदाद्यत्वे टाप् । सन्निपातपरिभाषाऽस्मादेव निषेधान्निर्देशाच्चानित्येति तद्विरोधात्कथं टाबिति न शङ्क्यम्। **त्यकनश्चेति** । "मृदस्तिकन्" इति इत्वभूतनिर्देशेन ज्ञापकेनास्येत्वं वारयितुं शक्यमिति **भाष्यकृतः** । पञ्चभिर्मृत्तिकाभिः क्रीत इत्यर्थे 'पञ्चमृत्तिकः' इत्यस्यानभिधानमिति तदाशयः । अत्र त्यिकनि कर्त्तव्येऽकारोच्चारणादित्वं नेति न वक्तुं शक्यं 'पञ्चोपत्यको ग्रामः' इत्यादावकारश्रवणानापत्तेः । टापो लुकि प्रत्ययलक्षणं स्थानिवत्त्वञ्च न उभयोरपि "न लुमता" (पा०सू० १।१।६३) इत्यनेन निषेधात् । अत एव 'कति' इत्यादौ वार्त्तिकमतेऽपि न गुण इत्यन्यत्र विस्तरः ।

**आशिषि वु** (का०वा०) । आशिषि विहितस्य वुनोऽस्येत्वं नेत्यर्थः। जीवतादित्यर्थे "आशिषि च" (पा०सू० ३।१।१५०) इति वुन् । देवदत्तशब्दादनुकम्पायां कनि "अनजादौ च विभाषा लोपो वक्तव्यः" (का०वा०) इति दत्तशब्दस्य लोपः । 'देवदात्तिका' इत्युपन्यासस्तु दत्तलोपमभिलक्ष्य ज्ञ्क्तुम् । **ध्रुवकेति** । "ध्रु स्थैर्ये" (धा०सू०) पचाद्यचि कुटादित्वाद् गुणाभावे उवङ् , ततष्टाप्यज्ञातार्थे कः, "केऽणः" (पा०सू० ७।४।१३) इति ह्रस्वः, पुनष्टाप् । चटे संज्ञायां क्वुन् । वार्त्तिकोक्ता गणा आकृतिगणाः। तेन कन्यकाध्रुवकाऽलकेष्टकादयः साधवः । **उदीचान्त्विति** । अत्रापि शकुनाविति सम्बद्ध्यते । तेनान्यत्र नित्यमेवेत्वम् ।

---

दुकारस्य यणि ततष्टापा सवर्णदीर्घोत्तरमुकाराभावेन नोक्तापत्तिरिति वाच्यम्, वकारस्यैवेत्वापत्तेः, 'भवितका' इत्यत्रेत्ववारणाय तपरकरणस्यावश्यकतया तदर्थमपि तपरकरणस्यावश्यकत्वाच्चेति दिक् ।

**सूतका पुत्रि** (का०वा०) । पुत्रकेत्यकारसहितः पाठोऽपपाठः, कैयटाद्यसम्मतेः । सूतशब्दात् स्वार्थे कन् । वृन्दशब्दात् "शृङ्गवृन्दाभ्यामारकन्" इति मत्वर्थीय आरकन् । वृन्दारकशब्दो मुख्यवाची त्रिलिङ्ग इति भावः । **ङीन इति** । शार्ङ्गरवादित्वाज्जातस्येति भावः । **अन्यत्र**— सूतकादौ ।

**उदीचाम्** (पा०सू० ७।३।४६) । यकपूर्वत्वञ्चाव्यवहितमेव । एवं "प्रत्ययस्थात्" (पा०सू० ७।३।४४) इति सूत्रे कात्पूर्वत्वमपि "उदात्तस्वरितयोः" (पा०सू० ८।२।४) । इत्यादाविवानुवादेऽपि निर्दिष्टपरिभाषाप्रवृत्तेः । तेन कृशराशब्दात्के ह्रस्वे इत्वविकल्पो न । नेत्यनुवृत्तावपि निषेधविकल्पे विधिविकल्पस्य फलितत्वादाह-**इद्वेति । आतः किमिति ।** 'उदीचां यकपूर्वायाः' इत्येवास्तु । य—क—पूर्वस्त्रीबोधकाकारस्येत्यर्थः । साङ्काश्यके च नातिप्रसङ्गः । प्रत्ययावयवत्वेनाकारस्य स्त्रीबोधकत्वाभावात्' इति प्रश्नः । 'बहुलक्ष्यसंस्कारानुरोधादवयवषष्ठ्येव स्यात् । न च प्रतिपदोक्तस्त्रीप्रत्ययस्यैवात्र ग्रहणं विशिष्य तदनुपादानात्' इत्युत्तरम् । **स्त्रीप्रत्ययस्य किमिति ।** यकपूर्वाया इति स्त्रीलिङ्गनिर्देशः किमर्थ इति प्रश्नः । **धात्वन्तेति** । धात्वन्तयकारककारपूर्वयोरकारयोरित्यर्थः । इत्वमिति शेषः ।

**भस्त्रैषा** (पा०सू० ७।३।४७) । अयमपि निषेधविकल्प इत्याह— **अत इति** । अत्राप्यातः स्थान इत्यनुवर्त्तते । **तदन्तेति** । "येन विधिः" (पा०सू० १।१।७२) इति सूत्रे "त्यदादिविधिभस्त्रादिग्रहणञ्च प्रयोजनम्" इति **भाष्यात्** । अपिना नञ्भिन्नपूर्वाणामपूर्वाणाञ्च सङ्ग्रहः । अत्र नञ्पूर्वाणामपीति स्पष्टार्थम् "पदाङ्गाधिकारे तस्य च" इति सिद्धेः । **उपसर्जनार्थमिति** । एवञ्चानुपसर्जने "आदाचार्याणाम्" (पा०सू० ७।३।४९) इत्यात्वं भवत्येव, उपसर्जनेऽस्य चारितार्थ्येन बाधे मानाभावात् । **अन्यस्य**—अनुपसर्जनस्य । **उत्तरसूत्रम्**—"अभाषितपुंस्काच्च" (पा०सू० ७।३।४८) इति ।

**अन्तर्वर्त्तिनीमिति** । न एतद् सु इति स्थिते अकचि कृते

अकृते वा नञा तत्पुरुषे 'अन्तरङ्गानपि' इति न्यायेन त्यदाद्यत्वात्प्राक् सुपो लुकि ततोऽकचि वा पुनर्विशिष्टात्सुपि त्यदाद्यत्वे टापि समासात्पूर्वोत्तर-सुपः पर एव टाबिति भावः। बहुव्रीहौ तु 'प्रियैतत्का' 'प्रियैतकत्का' वा, कबभावे 'प्रियैतकत्' इत्येव। सर्वथा नेत्वप्राप्तिः। **अनेषकेति**। अज्ञाता एषा एषका, न एषकेति विग्रहः। पूर्वं नञ्समासे अज्ञाता अनेषा इति। **असम्भवादिति**। 'एषाद्वा' इति निर्देशात् (१)सञ्ज्ञोपसर्जनयोरप्राप्तेरिति भावः। **अकजर्हं इति**। एवञ्च तदकारस्याऽऽतःस्थानिकत्वाभाव इति भावः। **अर्थान्तरे त्विति**। आत्मज्ञातिधनेष्वित्यर्थः।

स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने। (अ०को० ३।३।२१०) इति कोशादिति भावः। **कप्रत्ययान्तत्वादिति**। कस्य च नान्तर्वर्त्तिविभक्त्या सुपः परत्वं, केन व्यवधानादिति भावः। "संज्ञापूरण्योश्च" (पा०सू० ६।३।३८) इति निषेधेन सञ्ज्ञाया अपि भाषितपुंस्कत्वबोधनेन सञ्ज्ञाभूते न "अभाषितपुंस्काच्च" (पा०सू० ७।३।४८) इत्यनेन सिद्धिः। आत्मीयत्वपुरस्कारेणैव सञ्ज्ञाकरणादिति बोद्धयम्। **नित्यमेवेति**। तत्र ह्यकचि कृते आतःस्थानिकत्वाभाव इति भावः। एवमत्यन्तस्वार्थिककान्तेऽपि नित्यमेवेत्वम्। अकचोऽत्यन्तस्वार्थिकापवादत्वाभावात्। **निःस्वकेति**। स्वस्या निष्क्रान्तेति विग्रहः। उपसर्जनह्रस्वे टाप्, अज्ञातादौ कः।

**अभाषित** (पा०सू० ७।३।४८)। 'स्त्रीविषयाच्च' इति नोक्तम्, स्त्रीनपुंसकदामशब्दाड् डापि अज्ञाता दामा 'दामिका' 'दामाका' 'दामका' इत्यसिद्ध्यापत्तेः। विहितस्येति व्याख्याने फलमाह—**बहुव्रीहेरिति**। अविद्यमाना खट्वा यस्या इति विग्रहे पाक्षिककबभावे "गोस्त्रियोः" (पा०सू० १।२।४८) इत्युपसर्जनह्रस्वेऽखट्वशब्दादापि सुप्यज्ञातादौ के सुब्लुकि "केऽणः" (पा०सू० ७।४।१३) इति ह्रस्वे पुनष्टाप्यभाषितपुं-

---

(१)**संज्ञोपसर्जनयोरप्राप्तेरिति**। अनुपसर्जनयोस्तु सर्वनामत्वेनाकच्-प्रविशिष्टतया तदवयवाकारस्य कात्पूर्वस्य आतःस्थानिकत्वासम्भव इति भावः।

स्काद्विहिताकारस्थानिकाकाराभावेनैताद्विकल्पाप्राप्तावुत्सर्गेण नित्यमेवेत्वं, पर-विशेषणत्वे तु तादृशखट्वशब्दात्परत्वेन दोषः स्यादेवेति भावः ।

**शैषिके कपीति ।** न खट्वा सु इत्यवस्थायां कपि सुब्लुकि प्रत्ययलक्षणेन भागद्वयस्य सुबन्तत्वात्समाससंज्ञायां "समासान्ताः" (पा०सू० ५।४।६८) इतिशास्त्रबलात्कबन्तस्यैव समासत्वेनोपसर्जनस्त्रीप्रत्ययान्तान्तसमासरूपप्रातिपदिकाभावाद् "गोस्त्रियोः" (पा०सू० १।२।४८) इति ह्रस्वाभावे "केऽणः" (पा०सू० ७।४।१३) इति ह्रस्वे "न कपि" (पा०सू० ७।४।१४) इति निषिद्धे "आपोऽन्यतरस्याम्" (पा०सू० ७।४।१५) इति ह्रस्वे कपः प्राग्वर्त्तिनः खट्वशब्दात्परस्यापोऽभाषितपुंस्काद्विहितत्वेन तत्स्थानिकाकारस्यायं विकल्पः, ह्रस्वाभावे तु 'अखट्वाका' इति, इति भावः ।

**अयमेवेति ।** (१)आचारक्विबन्तप्रकृतिककर्तृक्विबन्तानामनभिधान-

**अनुपसर्जनात्** (पा०सू० ४।१।१४)। (१)आचारक्विबन्तप्रकृतिकेति । अनुपसर्जनाधिकाराभावे गौर इवाचरति गौरायते, गौरायते इति 'गौरा' इत्यत्र "षिद्गौर" (पा०सू० ४।१।४१) इति ङीष् स्यात्; तद्व्यावृत्त्यर्थमनभिधानाश्रयणम् । न च तत्र सूत्रेऽत इत्यनुवर्त्य अदन्तेभ्यो गौरादिभ्यो ङीषित्यर्थेन प्रकृतेऽदन्तत्वाभावादेवाप्राप्तिरिति वाच्यम्, बहुशब्दादाचारक्विबन्तात् कर्तरि क्विपि "बह्वादिभ्यश्च" (पा०सू० ४।१।४५) इत्यस्याप्रवृत्त्यर्थम् अनभिधानस्यावश्यकत्वात् । एवमनडुह्शब्दस्य अशब्देन समासे तस्मादाचारक्विबन्तात्कर्तरि क्विपि अतो लोपेऽनडुह् इत्यस्मादपि ङीषभावोऽनभिधानफलं बोध्यम् । न चानडुह्शब्दादाचारक्विबन्तात् कर्तरि क्विप्येव दोषसत्त्वेन अशब्देन समासपर्यन्तमनुधावनं विफलमिति वाच्यम् "ह्रस्वनद्यापो नुट्" (पा०सू० ७।१।५४) इति सूत्रे "प्रत्ययान्तादयं विधीयते तत्र नास्ति विशेषः "मिदचोऽन्त्यात् परः" (पा०सू० १।१।४७) इति वा परत्वे, "प्रत्ययः" (पा०सू० ३।१।१) "परश्च" (पा०सू० ३।१।२) इति वा परत्वे" इत्यादिभाष्याद्धलन्तेभ्य आचारक्विपोऽनभिधानस्य क्लृप्तत्वेन तत्प्रकृतिककर्तृक्विपो दुर्लभत्वेन समासपर्यन्तानुधावनादृते गत्यन्तराभावात् । तुल्यन्यायात् "प्रातिपदिकात्" (चु०ग०सू०) इतिविहितणिजन्तप्रकृतिकक्विबन्तानामप्यनभिधानं स्त्रियां बोध्यम् । एतेन तत्र चारितार्थ्ये सम्भवति ज्ञापकत्वोपवर्णनमसम्भवद्युक्तिकमिति वदन्तः परास्ताः ।

अथ सर्वादिसूत्रे "संज्ञोपसर्जनप्रतिषेधो वक्तव्यः" इति वार्तिकस्वीकारेऽपि "त्यदादीनामः" (पा०सू० ७।२।१०२) "अद्ड् डतरादिभ्यः पञ्चभ्यः" (पा०सू० ७।१।२५) इत्यनयोरुपसर्जने प्रवृत्तिः कस्मान्नेत्याशङ्क्य "अनुपसर्जनात्" (पा०सू० ४।

१।१४) इत्यधिकारसूत्रे अनुपसर्जन अ अत् इति प्रश्लिष्य "अकारान्तकारौ विध्यमाणावनुपसर्जनस्य द्रष्टव्यौ" इति भाष्ये उक्तम्। तेन चानुपसर्जनत्वं तत्रत्यमनन्तं चैकमेवेति व्यज्यते। 'किञ्च तद्' इति जिज्ञासायाम् उपसर्जनभिन्नत्वं तत्त्वम्। उपसर्जनत्वं च यदि स्वान्तपर्याप्तशक्तिनिरूपकार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकत्वम्, 'अतिसर्वा' इत्यत्र च स्वं सर्वशब्दः तदन्तमतिसर्व इति, तत्पर्याप्ता शक्तिः सर्वकर्मकातिक्रमणकर्तृत्वावच्छिन्ननिरूपिता, तन्निरूपकोऽर्थोऽतिक्रमणकर्तृत्वावच्छिन्नस्तदर्थनिष्ठविशेष्यतानिरूपितानेकारब्धसमुदायत्वावच्छिन्नप्रकारताप्रयोजकत्वं सर्वशब्दे इति, एवं बहुकुरुचरेत्यत्र स्वं टच् तदन्तं बहुकुरुचरेति, तत्पर्याप्ता शक्तिर्बहुविधकुरुचराधिकरणत्वावच्छिन्ननिरूपिता तन्निरूपकोऽर्थोऽन्यपदार्थः तन्निष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकष्टच् इति लक्षणसमन्वय इत्युच्यते, तर्हि सर्वशब्देऽपि सर्वनिष्ठविशेष्यतानिरूपितसर्वत्वनिष्ठप्रकारताप्रयोजकत्वमस्त्येवेत्युपसर्जनत्वं स्यात्। यदि च स्वस्योपसर्जनत्वं वक्तव्यं तदितरपदार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकत्वरूपं तद्। तथा च सर्वशब्दे इतरपदार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकत्वाभावेन न दोष इत्युच्यते, तदा आचारक्विबन्तस्थले इतरपदार्थनिष्ठविशेष्यताया अभावादनुपसर्जनाधिकारसत्त्वेऽपि ङीपो दुर्वारत्वेन फलभेदाभावात् अनभिधानाश्रयणमयुक्तम्। न चाचारक्विप्स्थले इतरपदं क्विप् तत्प्रयोज्यविशेष्यतानिरूपितप्रकारताप्रयोजकत्वसत्त्वेनोपसर्जनतया सिद्धान्ते ङीपोऽप्राप्त्या इदानीमपि तदभावार्थमनभिधानमावश्यकमिति वाच्यम् क्विपमादायोपसर्जनत्वे "ह्रीयतेरप्रत्यये ह्र इति प्राप्नोति स्व इति चेष्यते" इति भाष्ये सत्वाप्राप्त्या 'स्व इति चेष्यते' इत्यनेन विरोधापत्त्या तदेकवाक्यतया इतरपदस्य श्रूयमाणस्यैव ग्रहणेन प्रकृते क्विपोऽश्रूयमाणत्वेनैवेष्टसिद्ध्या सामञ्जस्येऽनभिधाने दृढप्रमाणाभावात्।

नन्वेवमपि परमसर्वघटकसर्वशब्दे उपसर्जनत्वं दुर्वारम्। स्वं सर्वे इति तद्विलच्छ्रूयमाणं पदं परमेति तदर्थनिष्ठविशेष्यतानिरूपिता प्रकारता सर्वत्वनिष्ठा तत्प्रयोजकत्वं सर्वशब्दे इति। एवमापिशलिना प्रोक्तमधीते या स्त्रीत्यत्राणोऽश्रूयमाणत्वेनोपसर्जनत्वाभावात् अनुपसर्जनाधिकारफलप्रतिपादनपरभाष्यविरोधश्चेति चेत्? न, स्वविशिष्टप्रकारताप्रयोजकत्वमुपसर्जनत्वम् इति स्वीकारेणादोषात्। वैशिष्ट्यं च स्वान्तपर्याप्तशक्तिनिरूपकार्थनिष्ठविशेष्यतानिरूपितत्व, स्वपर्याप्तशक्तिज्ञानाधीनोपस्थितीयविशेष्यतासामानाधिकरण्यैतदुभयसम्बन्धेन। स्वान्तत्वं च व्यपदेशिवद्भावानाविशिष्टग्राह्यम्। एवं च 'आपिशला' इत्यत्र स्वं प्रोक्तार्थे जायमानोऽण् तदन्तमापिशल इति तत्पर्याप्ता शक्तिरापिशलिप्रोक्तग्रन्थकर्मकाध्ययनकर्तृत्वावच्छिन्ननिरूपिता तन्निरूपकोऽर्थो निरुक्तस्तन्निष्ठविशेष्यतानिरूपितत्वमण्प्रत्ययवाच्यप्रोक्तरूपार्थनिष्ठप्रकारतायाम्, स्वं प्रोक्तार्थेऽण् तत्पर्याप्ता शक्तिः प्रोक्तत्वावच्छिन्ननिरूपिता तज्ज्ञानजन्या योपस्थितिस्तन्निष्ठविशेष्यता प्रोक्तत्वावच्छिन्ननिष्ठा तत्सामानाधिकरण्यमपीति सम्पन्नमुपसर्जनत्वं

मेव स्त्रियाम्, एतद्भाष्यप्रामाण्यात् । पञ्च स्त्रीगोव्यक्तयो धनं यस्य स 'पञ्चगवधनः' इत्यत्रार्थवत्सूत्रोक्तार्थवत्त्वाभावाट्टजन्तस्य प्रातिपदिकत्वाभावेन न ङीप् । आपिशलिना प्रोक्तमधीते आपिशला ब्राह्मणी इत्यत्र तु न ङीप् प्रोक्ताणः स्त्रियामवर्त्तनात् । अध्येत्रण्तु लुप्तः, अण् योऽकार इति व्याख्यानेन वर्णाश्रये प्रत्ययलक्षणाभावात् । अद्ध्येत्रर्थगतस्त्रीत्वमादाय (१)तदण्निमित्तकस्य न प्राप्तिः । स्त्रियामित्यस्य गृह्यमाणविशेषणत्वात्तदण एतत्स्त्रीत्वेऽवर्त्तनात् । (२)अत एव काशकृत्स्निना प्रोक्तां मीमांसामधीते काशकृत्स्ना ब्राह्मणी इत्यत्रापि न ङीप् । प्रोक्तार्थगतस्त्रीत्वमादाय तु पुनर्न ङीप्, लक्ष्येलक्षणस्येति न्यायात् । तस्माद् 'बहुकुरुचरा' इत्येव तद्व्यावर्त्त्यम् । तत्र च तदन्तविधिं विना प्राप्तिरेव न । ज्ञापिते तु तदन्तविधौ (३)प्राधान्यादे-(४)तदारम्भाच्च स्त्रियामिति ङीप्प्रकृतिविशेषणमेव । (५)अत एव धीवान-

---

परमसर्वघटकसर्वशब्दे सर्वत्वनिष्ठप्रकारतायां पूर्वसम्बन्धसत्त्वेऽपि निरुक्तोपस्थितीयविशेष्यतासामानाधिकरण्याभावान्न दोषः । द्वीयतेरप्रत्ययेऽप्यनतिदिष्टस्वान्तत्वाभावानभिधानं कल्प्यम् । एवञ्चानडुहशब्देऽपि स्वान्तत्वाभावादुपसर्जनत्वाभावेनानभिधानाश्रयणमयुक्तमेवेति विचारणीयं सूरिभिः ।

नन्वेवं स्वीकृते अर्थवत्सूत्रे शेखरकृता 'पञ्चनावेत्यस्यानेन न प्रातिपदिकत्वं, नाप्युत्तरसूत्रेण । प्रातिपदिकत्वे तु टावापत्तिः' इत्युक्तं कथं सङ्गच्छेत ? पञ्चनावेत्यस्य निरुक्तोपसर्जनत्वाभावेन ङीपा टापो बाधादिति चेत् ? न, तत्र "ङीबापत्तिः' इत्यस्यैव पाठस्य युक्तत्वात् । यद्वा, एतादृशोपसर्जनत्वस्य नागेशासम्मतत्वेन तथोक्तिः । अत एव तेन द्वीयतेरप्रत्यये इत्यादिभाष्यस्यैकदेशयुक्तित्वम् आचारक्विवन्तप्रकृतिकक्वन्तानां स्त्रियामनभिधानं चोक्तमिति न निरुक्तोपसर्जनत्वे तद्विरोध उद्भावनीयः । अनेकभाष्यसम्मतत्वादिति दिक् । (१)**तदण्निमित्तकस्य**—प्रोक्तार्थकाण्निमित्तकस्य । (२)**अत एवेति** । प्रोक्ताणोऽध्येत्रर्थगतस्त्रीत्वेऽवर्तनादेवेत्यर्थः । (३)**प्राधान्यादिति** । "प्रधानाप्रधानयोः प्रधाने कार्यसम्प्रत्ययः" इति न्यायेन प्रातिपदिकविशेषणत्वस्यैव न्याय्यत्वादिति भावः । ननु ज्ञापितेऽपि तदन्तविधौ श्रुतानुमितपरिभाषया स्त्रियामित्यस्य टिदादीनां विशेषणत्वे 'बहुकुरुचरा' इत्यत्र टितः विद्यमानत्वाभावादेव ङीपोऽप्राप्तौ पुनरपि अनुपसर्जनाधिकारवैयर्थ्यमित्यत आह—(४)**एतदारम्भाच्चेति** । अनुपसर्जनाधिकारेण तदन्तविधौ ज्ञापितेऽपि स्वांशे चारितार्थ्याभावेन प्रातिपदिकविशेषणत्वमेव स्त्रियामित्यस्योचितमिति भावः । (५)**अत एवेति** । गृह्यमाणप्रातिपदिकेनापि

मतिक्रान्ता 'अतिधीवरी' इति सिद्धम् । एवञ्च 'आपिशला'इत्याद्यप्यनेन व्यावर्त्यम् । अनुपसर्जनादिति च (१)सामर्थ्याद् गृह्यमाणविशेषणमेवेति भावः।

**तदन्तविधिमिति ।** अण्णन्तादेः प्रातिपदिकविशेषणत्वेनाण्णन्तान्तमित्येवंरूपमित्यर्थः । अन्यथा प्रत्ययविधौ प्रतिषेधात्स दुर्लभः स्यात् । प्रत्ययग्रहणपरिभाषालभ्यस्य तु नायं निषेधः (२)प्रातिपदिकादित्यनेन सहान्वयापत्तेः । (३)तत्फलं कौम्भकारेयसिद्धिः । अन्यथा कुम्भकारेय इत्याद्येत । कुम्भेन समासे ङीपि कुम्भविशिष्टस्यापत्येन योगे कार्यर्थे तदयोगस्य वक्तुमशक्यत्वात् कदाचित्ततोऽपि ढकि कुम्भशब्दोकारे वृद्ध्यभावस्यापत्तेः । निष्कृष्यैकार्थीभाव एव वृत्तिनिमित्तमिति तु वक्तुमशक्यम् । "तद्धितार्थ" (पा०सू० २।१।५१) इत्युत्तरपदे समासविधानात्समुदायेनैकार्थीभावेऽवयवेनापि तस्यैव सत्त्वात् । कृद्ग्रहणपरिभाषायाः (४)कृन्मात्रग्रहणे

तदन्तविधिस्वीकारादेवेत्यर्थः । अन्यथा 'ग्रहणवता' इत्यनेन द्वितीयतदन्तविधिनिषेधे "वनो र च" (पा०सू० ४।१।७) इत्यस्य वन्नन्ततदादित्वविशिष्टप्रातिपदिकादित्यर्थे तिधीवन्नित्यस्य वन्नन्ततदादित्वाभावात्तद्रूपासङ्गतिः स्पष्टैव । (१)सामर्थ्याद् गृह्यमाणविशेषणमेवेति । तदन्तप्रातिपदिकस्य सर्वत्रानुपसर्जनस्यैव सत्त्वेन तद्विशेषणत्वे तद् व्यर्थं स्यादिति भावः । (२)प्रातिपदिकादित्यनेनेति । यद्यप्यणन्तप्रातिपदिकस्य अशब्दात् तस्येदमित्यर्थे शैषिकेऽण्यकारलोपे कृतेऽस्ति सम्भवः, तथापि ढादीनां तादृशानामसम्भवो दुर्वार एव । (३)तत्फलमिति । अनुपसर्जनादिति ज्ञापितद्वितीयतदन्तविधिफलमित्यर्थः ।

(४)कृन्मात्रग्रहणे इति । कृत्त्वव्याप्यधर्मपुरस्कारेणोपादाने एवेत्यर्थः । "टिड्ढाणञ्" (पा०सू० ४।१।१५) इत्यत्राण्त्वस्य कृदकृत्साधारणत्वेन कृत्त्वव्याप्यत्वाभावान्न प्रवृत्तिः । "अत्र प्रमाणं समासग्रहणस्य नियमार्थत्वपरं भाष्यम् । कृदकृत्साधारण्ये तस्याः प्रवृत्तौ हि अर्थवत्सूत्रेऽपि तत्प्रवृत्त्या कुम्भकारेत्यस्य प्रत्ययान्ततदादित्वेन तद्भिन्नत्वाभावादप्राप्त्या समासग्रहणस्य विध्यर्थत्वं दुर्वारं स्यात् । सिद्धान्ते तु प्रत्ययत्वस्य कृदकृत्साधारणत्वेनास्या अप्रवृत्तौ पूर्वसूत्रेण सिद्धे समासग्रहणं नियमार्थमित्युपपद्यते" इति केचित् । वस्तुतस्तु अनया परिभाषया सङ्घातादुत्पत्तिर्भविष्यतीत्याशङ्क्य "कृद्ग्रहणे इत्युच्यते, न चैतत्कृद्ग्रहणम् , कृदकृद्ग्रहणमेतत्, कृदप्ययमण् तद्धितोऽपि" इति प्रकृतसूत्रस्थं भाष्यमेवात्र मानम् । समासग्रहणस्य नियमार्थत्वपरं भाष्यं तु कुम्भकारेत्यादेः पूर्वसूत्रेणाप्राप्तावपि उत्तरसूत्रेण कृदन्तत्वात्प्राप्त्याऽपि योजयितुं शक्यते इत्याहुः ।

अत एव 'पुष्पसुहारिणी' इत्यादौ "इनः स्त्रियाम्" (पा०सू० ५।४।१५२) इति कप् न। अन्यथा विशिष्टे तदादित्वारोपात्तदापत्तिर्दुर्वारा। एवं 'दृतिहरिः' इत्यत्र नित्स्वरो न नित्त्वस्य ठनादितद्धितसाधारणत्वेन कृत्त्वव्याप्यत्वाभावात्।

नन्वस्तु कारशब्दादेव ङीप्, ढक् तु कुम्भकारीत्यस्मादेव स्यात्। "स्त्रीभ्यो ढक्" (पा०सू० ४।१।१२०) इत्यत्र स्त्रीवाचकाड् ढगित्यर्थस्य 'पैतृष्वसेयः' इत्याद्यर्थमावश्यकत्वात्। अन्यथा तत्र स्त्रीप्रत्ययान्ततदादित्वाभावाड् ढग् न स्यात्। अत एव "ढकि लोप" (पा०सू० ४।१।१३३) इति सूत्रं चरितार्थम्, तस्मिन्नर्थे सति कुम्भकारीति प्रातिपदिकस्य कुम्भकर्मककृतिकर्तृत्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वनिष्ठप्रकारताप्रयोजकत्वात्। न च कृतिकर्तृत्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वनिष्ठप्रकारताप्रयोजकत्वं तु कारीत्यत्रापि वर्तते इति तस्मादपि कदाचिड् ढक् स्यादिति वाच्यम्, वृक्षप्रचलनन्यायेन समुदायादेव प्रवृत्तेरिति चेत्? न, स्त्रीवाचकाड् ढगित्यर्थे दरच्छब्दाद् "द्व्यञ्-मगध" (पा०सू० ४।१।१७०) इत्यणि तस्य स्त्रीत्वे वाच्ये "अतश्च" (पा०सू० ४।१।१७७) इति लुकि निष्पन्नाद्दरच्छब्दादपत्यार्थे ढकि 'दारदः' इत्यस्यासिद्धेः। न च तस्य शिवादिगुणे पाठकरणेनेष्टसिद्धिरिति वाच्यम्, तादृशानाम् 'इडविड्' 'उशिज्' 'पृथ्' इत्येषां पाठकल्पने गौरवात्। 'पैतृष्वसेयः' इत्यत्र तु "ढकि लोपः" (पा०सू० ४।१।१३३) इति ज्ञापकादेव ढक्। 'वैमात्रेयः' इत्यत्र विमातृशब्दस्य शुभ्रादिगणे पाठादेव ढक्। अत एव "स्त्रीभ्यो ढक्" (पा०सू० ४।१।१२०) इति सूत्रे भाष्ये स्त्रीप्रत्ययान्ताड् ढगित्येवार्थः सिद्धान्तत्वेनोक्तः। "ऋष्यन्धक" (पा०सू० ४।१।११४) इतिसूत्रे जम्बूशब्दाड् ढगापादनं तु एकदेशिमताभिप्रायेणेति न तद्विरोधः।

न च कुम्भकारीशब्दाड् ढक् दुर्लभः। तस्य शिल्पिवाचकत्वेन "सेनान्तलक्षणकारिभ्यश्च" (पा०सू० ४।१।१५२) इति ण्यप्रत्ययेन बाधादिति वाच्यम्, हिंसार्थकात्कृधातोरणि घटस्फोटवाचकस्य यौगिकस्यान्यार्थकस्यापि कुम्भकारशब्दस्य सत्त्वात्।

ननु प्रत्ययार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकतापर्याप्त्यधिकरणीभूतप्रातिपदिकात् प्रत्ययो भवति। अत एव राजपुरुषस्यापत्यमित्यर्थे राजपौरुषिरित्यनिष्टरूपापत्तिर्न। अत एव च सूत्रनडस्यापत्यमित्यर्थे सौत्रनाडिरित्येव। तथेहापि अपत्यार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकतापर्याप्त्यधिकरणभूतप्रातिपदिकं कुम्भकारीति न तु कारीति, तत्कथं तस्माद् ढगापादनं भाष्यादाविति चेत्? मैवम्, तस्य नियमस्य प्रत्ययनिष्ठोद्देश्यतावच्छेदकताकप्रत्ययनिष्ठविधेयताककार्यातिरिक्ते एव प्रवृत्तेः। "स्त्रीभ्यो ढक्" (पा०सू० ४।१।१२०) इत्यत्र स्त्रीप्रत्ययनिष्ठोद्देश्यतावच्छेदकता ढक्प्रत्ययनिष्ठा विधेयता च वर्तते इति तन्निरूपककार्यत्वस्यैव सत्त्वान्न तन्नियमप्रवृत्तिः। अत एव परमगार्ग्यस्यापत्यमिति विग्रहे 'परमगार्ग्यायणः' इत्यस्य सिद्धिः। अन्यथा गार्ग्येतियन्ततदादेः तादृशप्रकारताप्रयोजकतापर्याप्त्यभावेन स न स्यादित्यर्थः। अत एव च 'शिवभागवतः' इत्यस्य "अयःशूल" (पा०सू०५।२।७६) इतिसूत्रभाष्ये प्रत्युक्तस्य

प्रवृत्त्या न तया विशिष्टादेव ङीबुत्पत्तिं प्रत्याशा ।

न च तदन्तग्रहणेऽपि कारशब्दस्य व्यपदेशिवद्भावेनाण्णन्तान्तत्वात्ततोऽपि कदाचिन्ङीपि कुम्भकारेयो दुर्वारः । किञ्च समुदायान्ङीप्यपि ङीप्प्रत्यये तदादिनियमाभावेन केवलादपि कदाचिड् ढकि स दुर्वार इति वाच्यम्, एतदधिकारादेव ज्ञापकादसहाय एव व्यपदेशिवद्भावप्रवृत्तेः, अर्थवत्सूत्रे-

---

सिद्धिः । तदर्थं "भक्तिः" (पा०सू० ४।६।९५) इति सूत्रे मत्वन्तभगवत इत्यस्य पाठकल्पनात् ।

लिङ्गविशिष्टपरिभाषया च 'देवीभागवत' इत्यस्य सिद्धिः । ग्रन्थेऽपि प्रतिपाद्यत्वेन सेवकत्वोपचारात् तत्प्रयोगः साधुः । एतेन ग्रन्थे "देवीभागवत" इति प्रयोगमशुद्धं वदन्तः परास्ताः ।

ननु कारीतिङीपोऽनुपसर्जनस्त्रीप्रत्ययत्वात् "स्त्रीप्रत्यये चानुपसर्जनेन" (प०भा०) इति परिभाषया तदादिनियमनिषेधाद् वृक्षप्रचलनन्यायेन कुम्भकारीत्यस्मादेव ढकि कौम्भकारेयसिद्ध्या द्वितीयतदन्तविधिस्वीकरणं व्यर्थम् । नच विशिष्टे तदादित्वारोपेऽपि ङीपः विशिष्टप्रकृतिकत्वाभावेन विशिष्टवृत्तिप्रातिपदिकत्वादेः तदन्तेऽनारोपात् कथं ढकः सिद्धिरिति वाच्यम्, 'परमगार्ग्यायणः' इत्यादाविवार्थवत्सूत्रेण प्रातिपदिकत्वे तत्सिद्धेः, इति चेत् ।

न, कुम्भकारीव मनुष्यः कुम्भकारीत्यत्र इवार्थे कनि तस्य "लुम्मनुष्ये" (पा०सू० ५।३।९८) इति लुपि स्त्रीप्रत्ययस्यान्यपदार्थनिष्ठविशेष्यतानिरूपितप्रकारतानिष्ठस्त्रीत्वनिष्ठावच्छेदकताप्रयोजकत्वरूपोपसर्जनत्वस्य सत्त्वेनोपसर्जनस्त्रीप्रत्यये तदादिनियमनिषेधाभावेन कारीत्यस्माड् ढकि 'कुम्भकारेयः' इति स्यात् तद्व्यावृत्त्यर्थं द्वितीयतदन्तविधेरावश्यकत्वात् । न च द्वितीयतदन्तविधिलाभे कुम्भकारेत्यस्मान्ङीप्यपि "स्त्रीप्रत्यये चानुपसर्जनेन" (प०भा०) इति परिभाषया अतदादावपि कारीत्यत्र तदादित्वस्यारोपात्कुम्भकारेय इति स्यादेवेति वाच्यम्, अनुपसर्जनाधिकारसामर्थ्यात्तदादिघटक एव तदादित्वस्यारोपो न तु तद्घटके इति कल्पनेन वृक्षप्रचलनन्यायेन वा विशिष्टादेवोत्पत्तेः । केचित्तु वृक्षप्रचलनन्यायस्य प्रकृते न विषयः समुदायस्य कार्यसम्बन्धे यत्रावयवस्य कार्यसम्बन्धो नान्तरीयको भवति, अवयवस्य कार्यसम्बन्धे च समुदायस्य कार्यसम्बन्धो नान्तरीयको न भवति तत्रैव तन्न्यायविषयत्वात् । प्रकृते च ढक्कार्यस्य अवयवेन कारीशब्देन अव्यवहितोत्तरत्वसम्बन्धे समुदायेन कुम्भकारीशब्देन तत्सम्बन्धस्य जायमानत्वात्, ढक्प्रयोज्यादिवृद्ध्यादिरूपकार्यस्य च समुदायेन कुम्भकारीशब्देन सम्बन्धे अवयवेन कारीशब्देन सम्बन्धस्याजायमानत्वात् इत्याहुः, इति प्रघट्टकार्थः ।

कार्यवत्त्वाभावेनाणन्तस्याप्रातिपदिकत्वाच्च, तदादिनियमाभावेनाधिकस्य कार्यं बोद्ध्यते, न तु न्यूनस्येत्यदोषाच्च । अन्यथा तदन्तग्रहणे फलाभावेन तद्वैयर्थ्यं स्पष्टमेव । एतदेवाभिप्रेत्यात्र **भाष्ये** उक्तं "समासे च कृतेऽवयवादुत्पत्ताववयवस्य वृद्धिः स्यात्" इति । "येन विधिः" (पा०सू० १।१।७२) इति सूत्रे च प्रत्ययग्रहणे तदादितदन्तविधेः प्रयोजनं 'गार्ग्यायणः' 'परमगार्ग्यायणः' इति उक्तं **भाष्ये** । तत्रैकदेशात्प्रत्ययाभावे परमश्चासौ गार्ग्यायण इति तदर्थो वाच्यः । तथा सति नैव परमगार्ग्यात्प्रसक्तिरिति तत्प्रयोजनत्वोक्तिरसङ्गता स्यात् । मम तु परमगार्ग्यस्यापत्यमित्यर्थेऽप्युक्तन्यायाद् गार्ग्यशब्दादेव प्रत्ययो न तु परमगार्ग्यात्, तथा सति 'पारमगार्ग्यायण इति स्यात्' इति तत्प्रयोजनत्वोक्तिसङ्गतिः । **कैयटो**ऽपि 'तदादिनियमावश्यकत्वप्रदर्शनाय परमगार्ग्यायण इत्युपन्यासः' इत्युक्तवान् । यत्तु सर्वादिसूत्रे **भाष्ये** "अनुपसर्जनादित्येष योगः प्रत्याख्यायते" इत्युक्तं, तत्तन्त्र वार्तिककृता तस्य प्रत्याख्यानात्तदभिप्रायकमिति **भाष्यप्रदीपोद्द्योते** विस्तरः ।

**टिड्ढा** (पा०सू० ४।१।१५) । ठेत्येव सिद्धे ठक्ठञोरुपादानं ठन्ठियोर्व्यावृत्त्यर्थम् । **अदन्तमिति** । प्रत्यासत्त्या टिदाद्यवयवाकारान्तमित्यर्थः । तेन 'पञ्चाश्वा' इत्यादौ ठञिमित्तोऽपि न ङीप् । **कुरुचरीति** । कुरुषु चरतीत्याधिकरणे उपपदे चरेष्टः । टितोऽप्रत्ययस्यापि सत्त्वात्प्रत्ययग्रहणपरिभाषाया अप्रवृत्त्याऽत्र टिदन्तत्वं कुरुचरशब्दस्येति बोद्ध्यम् ।

**वक्ष्यमाणेति** । वचेर्लटः शानच् । **टित्वादिति** । स्थानिवत्त्वेनेत्यादिः । "न ल्यपि" (पा०सू० ६।४।६९) इति लिङ्गाट्टित्वादेरशास्त्रीयस्याप्यतिदेशः, अनुबन्धकार्ये "अनल्विधौ" इतिनिषेधाप्रवृत्तिश्चेति भावः । **ङित्त्वेनेति** । लिङ्गदेशानां स्थानिवत्त्वेनैव सिद्धे तद्वैयर्थ्यं स्पष्टमेव । तद्धि अवयवेऽचरितार्थतया समुदायोपकारकम् । न चेदं ङित्त्वं 'स्तुयात्' इत्यादावनिग्लक्षणवृद्धिनिषेधार्थमिति वाच्यं विनिगमनाविरहात् उत औदिति वक्तव्ये वृद्धिग्रहणेन स्थानिनिर्देशेऽपीक्परिभाषोपस्थित्या तस्या अपि इग्लक्षणत्वाच्च ।

नन्वेवं 'ब्रूयात्' इत्यत्र ब्रुव ईट् प्राप्नोति लाश्रयानुबन्धकार्यस्य तद-
देशेष्वभावेऽपि तिपः पित्त्वस्य तदादेशे तातङ्यभावकल्पने मानाभावाद
आह-**इन इति । क्वचिदिति ।** लक्ष्यानुरोधेन च व्यवस्था ।

परे तु यासुटो ङित्त्वं न ज्ञापकं "पिदर्थं ङित्त्वम्" इति **भाष्यात्**
"सार्वधातुकम्" (पा०सू० १।२।४) इति सूत्रेऽपिदित्यावर्त्य प्रसज्यप्रति-
षेधसिद्धेन "ङिच्च पिन्न, पिच्च ङिन्न" इत्यनेन "हलः श्नः" (पा०सू०
३।१।८३) इतिसूत्र**भाष्योक्ते**न पित्सु ङित्त्वाप्रसक्तेः । शानचः शित्त्व-
मपि तत्सूत्रे एव **भाष्ये** प्रत्याख्यातम् । हेरपित्त्वस्य तातङो ङित्त्वस्य
वैयर्थ्यापत्तिश्च ज्ञापकत्वे दूषणमप्युक्तं **भाष्ये** । तस्माद् 'वक्ष्यमाणं'
इत्यादौ सत्यभिधानेऽजादिपाठाट्टाप् ।

**यत्तु** "क्ङिति च" (पा०सू० १।१।५) इतिसूत्र**भाष्ये** यासुटो
ङिद्वचनस्य न ङिदादेशानां ङित्त्वमित्यर्थे ज्ञापकतोक्ता, तत्तु वार्त्तिकमतम्,
ङिच्च पिन्नेत्यादेस्तेनानुक्तेः । यदपि "गाङ् लिटि" (पा०सू० २।४।४९)
इति सूत्रे गाङो ङित्त्वं सानुबन्धकादेशेऽनुबन्धास्थानिवत्त्वस्य ज्ञापकमु-
वार्त्तिककृता, तदपि 'प्रयोजनाभावात्' इत्यादिना **भाष्ये** दूषितमित्याहुः

निरनुबन्धकस्य स्त्रियां वृत्तेरसम्भवात्सानुबन्धकस्य ढको ग्रहणमि-
त्याह-**सौपर्णेयीति ।** सुपर्णीशब्दादपत्ये "स्त्रीभ्यो ढक्" (पा०सू०
४।१।१२०) इति ढक् । स्पष्टञ्चेदम् (१)**भाष्ये । ऐन्द्रीति ।** "सा

---

(१) **भाष्ये इति ।** तत्र हि "ढग्रहणे सानुबन्धकस्योपसङ्ख्यानं कर्तव्यम्, अन-
नुबन्धकग्रहणे हि न सानुबन्धकस्य ग्रहणम्" इत्याशङ्क्य "न कर्तव्यम्-अननुबन्धकस्य
हि ढः स्त्रियां नास्तीति कृत्वा सानुबन्धकस्य ग्रहणं विज्ञास्यते' इति समाधाय
चायमस्ति "शिलाया ढः"(पा०सू० ५।३।१०२) इति । नैष स्त्रियां वर्तते । अयं
सभाया यः ढश्छन्दसीति । एषोऽपि न स्त्रियां वर्तते । तत्र साधुरिति वर्तते ।
स्त्री नाम सभायां साध्वी स्यात्" इत्युक्तम् । अत्र **कैयटः**--शिलेव शिलेयम्
नपुंसकलिङ्ग एव शिलेयशब्दः स्वभावात्, यज्ञसभायां विदुषामेव पुरुषाणां
धिकारात् । ननु सभायां साधुरियं ब्राह्मणपङ्क्तिः परिषद्वेति सम्भवति स्त्रियाः
साधुत्वम् । एवं तर्हि छन्दसि सभेयशब्दस्यैवं विधायां स्त्रियां प्रयोगाभाव
एतेन सभेयशब्दस्य स्वभावतः पुंस्त्वं प्रदर्शितमिति ।

देवता" (पा०सू० ४।२।२४) इत्यण् । (१)ऊरुदघ्नीत्यादि । प्रमाणे द्वयसज्दघ्नञ्मात्रचः । सङ्ख्याया अवयवे तयप् । मात्रजिति मात्रशब्दादारभ्यायचश्चकारेण (२)प्रत्याहार इति 'उभयी' इति सिद्धिः । (३)तत्र ह्ययच् प्रत्ययान्तरम् । अत एवोभयशब्दस्य जसि सर्वनामत्वविकल्पो नेति "नवेति" पा०सू० १।१।४४) इत्यत्र **भाष्ये स्पष्टम्** । **आक्षिकीति** । "तेन दीव्यति" (पा०सू० ४।४।२) इति ठक् । "तदस्य पण्यम्" (पा०सू० ४।४।५१) इत्यधिकारे (४)लवणाट्ठञ् । यादृश्यां "त्यदादिषु दृशः" (पा०सू० ३।२।६०) इति कञ् । **इत्वरीति** । "इण्नशजि" (पा०सू० ३।२।१६३) इति क्वरप् । अनुबन्धद्वयोपादानं स्पष्टार्थं वरज्व्यावृत्तेरन्यतरेणापि सिद्धेः । (५)**चौरीति** । चुरा शीलमस्या इत्यर्थः ।

---

(१) **ऊरुदघ्नीत्यादीति** । 'ऊरुद्वयसी' इत्यादीति पाठः साधुः ।

(२) **प्रत्याहार इतीति** । नन्वेवं डतिप्रत्ययस्यापि प्रत्याहारे ग्रहणेन 'कति' इत्यत्र ङीबापत्तिरिति चेत् ? न, अत इत्यनुवृत्तेः सत्त्वेन डत्यन्तस्यानदन्ततया तदप्राप्तेरदोषात् । नचैवं चकारेण मात्रशब्दस्याविशेषिततवाद् "हुयामाश्रुभसिभ्यस्त्रन्" (उ०सू० ६१७) इतित्रन्नन्तमात्रशब्दादपि तदापत्तिरिति वाच्यम्; प्रमाणे वर्तमानाद्विहितस्य प्रमेयार्थकस्यैव मात्रशब्दस्य प्रत्याहारघटकत्वेन समानानुपूर्वीकत्वमात्रेणार्थान्तरवाचकस्य ग्रहणे मानाभावेनादोषात् ।

ननु 'उभयी' इत्यत्र स्थानिवत्त्वेन तयबन्ततया तयब्ग्रहणेनैव सिद्धेः प्रत्याहाराश्रयणं विफलमित्यत आह—(३)**तत्र ह्ययजिति** ।

(४)**लवणाट्ठञिति** । ठक्ठञोर्भेदेनोपादानं ठन्निवृत्त्यर्थम् । तेनेह न—दण्डोऽस्त्यस्या इति दाण्डका । "अत इनिठनौ" (पा०सू० ५।२।११५) इति ठन् । अत एव लिठन्तेऽपि न । काशिषु भवा काशिका । "काश्यादिभ्यष्ठञ्ञिठौ" (पा०सू० ४।२।११६) । (५)**चौरीतीति** । "शीलं छत्रादिभ्यो णः" (पा०सू० ४।४।६२) इति विहितो यो णस्तस्मिन् अण्कार्यं भवति इत्येतदर्थक–'ताच्छीलिके णेऽपि' इति परिभाषया अण्णन्तत्वारोपे ङीबिति बोध्यम् । अत्र च "कार्मस्ताच्छील्ये" (पा०सू० ६।४।१७२) इति ज्ञापकम् । तत्र हि "अन्" (पा०सू० ६।४।१६७) इति सूत्रेणाणि परे विहितं प्रकृतिभावं बाधितुं टिलोपो निपात्यते । यदि तु णप्रत्यये अण्कार्यं न स्यात्तर्हि किं तेन । ताच्छीलिकस्यैव णप्रत्ययस्याण्कार्यज्ञापनात् "तदस्यां प्रहरणमिति क्रीडायां णः" (पा०सू० ४।२।५७) इति विहितस्य णस्य नाण्कार्यं, दाण्डेति । न चैवं

**नञ्स्नञ्** (का०वा०)। तरुणतलुनयोः "वयस्यचरमे" (का०वा०) इति ङीपि सिद्धेऽपि गौरादिपाठात्परत्वात्प्राप्तेन ङीषा बाधाभावाय (१)पुनरत्र ग्रहणम्। तयोश्च स्वरे विशेषः। एतौ हि "त्रो रश्चलो वा" (उ०सू० ३४१) इत्युनन्तत्वादाद्युदात्तौ। स्त्रीपुंसाभ्यां नञ्स्नञौ। "प्रहरणम्" (पा०सू० ४।४।५७) इत्यधिकारे शक्तियष्ट्योरीकक्। "आढ्यसुभग" (पा०सू० ३।२।५६) इति ख्युन्।

**यञश्च**। (पा०सू० ४।१।१६)। "प्राचां ष्फ". (पा०सू० ४।१। १७) इत्यत्र यञ एवानुवृत्तये योगविभागः।

**हलस्त** (पा०सू० ६।४।१५०)। हल इति पञ्चमी, यस्येति सूत्राद् 'ईति' इत्यनुवर्त्तते, "सूर्यतिष्य" (पा०सू० ६।४।१४९) इत्यतो 'य उपधाया' इति च। यलोपेऽल्लोपस्याभयिासिद्धत्वाद्यस्य ईकारपरत्वाभावाद्धलसार्थक्यायोपधाग्रहणानुवृत्तिः। **अनपत्याधिकारस्थादिति**। अपत्याधिकारस्थभिन्नादित्यर्थः। यञ्शब्देन (२)व्याख्यानादपत्याधिकारस्थस्यैव ग्रहणमिति भावः।

(३)**प्राचां ष्फ** (पा०सू० ४।१।१७)। यञ इति वर्त्तते, अत इ...

---

लाघवात् छत्रादिभ्योऽणेव विधीयतां किं णप्रत्ययविधानेन, तस्याण्कार्यज्ञापनेन नैः वाच्यम्, ज्ञापकसिद्धस्यासार्वत्रिकतया 'छात्राः' इत्येतत्सिद्ध्यर्थत्वात्।

(१)**पुनरत्र ग्रहणमिति**। उभयत्र पाठसामर्थ्यादुभयसिद्धिरिति भावः। च बह्वादिगणमात्रे तस्य पाठेन "बह्वादिभ्यश्च" (पा०सू० ४।१।४५) इति ङीषो वैकल्पिकतया पक्षे "वयस्यचरमे" (का०वा०) इति ङीपा तत्सिद्धिरिति वाच्यम्, तस्य स्त्री तरुणी इत्यत्र, तरुणी सुरा इत्यत्र च वयोवाचकत्वाभावेन ङीबप्राप्तेरिति दिक्।

(२)**व्याख्यानादिति**। "आपत्यग्रहणं द्वीपाद्यञः प्रतिषेधार्थम्" इतिवार्तिकमूलादित्यर्थः। वार्तिके च आपत्यपदमपत्याधिकारस्थपरम्। कम्बुकरपः अथवा प्रश्लेषेण तस्य प्रत्याख्याने "देवायजञौ" (का०वा०) इति प्राग्दीव्यतीयस्यापि ग्रहणात्। तदेकवाक्यतयाऽत्र पक्षेऽपि तथैवौचित्यात्।

(३)**प्राचां ष्फ तद्धितः** (पा०सू० ४।१।१७)। अत्र तद्धितग्रहणं विफलं सामर्थ्यादेवात्र ईकारो भविष्यतीत्याश्रित्य **भाष्ये** प्रत्याख्यातम्। "कौरव्यमाण्डूकाभ्यां च" (पा०सू० ४।१।१९) इति सूत्रे "आसुरेरुपसङ्ख्यानम् आसुरायणी" इत्युक्तेन च तद्धितग्रहणस्य "यस्य" (पा०सू० ६।४।१४८) इतिलोपसिद्धिः प्रयोजनं

च । यञो योऽकार इति चार्थः । तेन 'वतण्डी' इत्यत्रोदीचां मते सावकाशं शार्ङ्गरवादिङीनं बाधित्वा 'आवट्यायनी' इत्यादाविव सर्वत्रग्रहणात्प्राचां मते प्राप्तोऽपि ष्फो न । अत्र हि "वतण्डाच्च" (पा०सू० ४।१।१०८) इति यञो "लुक् स्त्रियाम्" (पा०सू० ४।१।१०९) इति लुक्, वर्णाश्रयत्वाच्च न प्रत्ययलक्षणम् ।

**षः प्र** (पा०सू० १।३।६) । "आदिर्ञिटुडवः" (पा०सू० १।३।५) इति सूत्राद् आदिरित्यनुवर्त्तते । प्रत्ययस्येति किम्? षोडश । "षष उत्वम्" (का०वा०) इत्यत्र षष्शब्दस्य निपातनादुपदेशस्थोऽयं षकारः । वस्तुत उपदेशे इत्यस्य स्वरितत्वमेव नेति पूर्वं निरूपितम् । आदिरिति तूत्तरत्राव-श्यकमुपरञ्जकतयाऽत्रापि सम्बान्धितम् ।

**आयने** (पा०सू० ७।१।२) । आयनो नस्य नेत्त्वम्, फिनो नित्क-रणात् । तत्साहचर्यादीनोऽपि नस्य नेत्त्वम् । आदिग्रहणं किम् ? ऊरुद-घ्नम् । प्रत्ययेति किम् ? फक्कति, खनति । खच्घञादौ 'घिण्ण्यतोः' "खित्य-नव्ययस्य" (पा०सू० ६।३।६६) इत्यादिलिङ्गादित्सञ्ज्ञैव नादेशाः । उणा-दीनां बहुलवचनान्नादेशाः । (१)घचश्चित्त्वसामर्थ्यादेते प्रत्ययसम्बन्ध्या-देशा उपदेशसन्नियोगशिष्टकार्यादपि पूर्वमेव । तेनान्तोदात्तत्वाय चित्त्वं

---

लभ्यते । तावन्मात्रप्रयोजनत्वे प्राचां ष्फङ् इति ङिदेव कार्य इति प्रत्याख्यानभाष्या-शयः । वस्तुतस्तु षित्करणसामर्थ्यात् ङीषः प्रातिपदिकप्रकृतिकत्वाभावेन लिङ्गविशि-ष्टपरिभाषया प्रातिपदिकत्वानारोपात्ततः सुबाद्यसिद्धिः । स्वाप्रकृतिकलिङ्गबोधकप्रत्यया-न्ते स्ववृत्तिधर्मारोपे तु परमकुम्भी–कुम्भपुत्राशब्दादावपि परतः सत्वापत्तिः । षित्क-रणसामर्थ्यादेवात्र इकारो भविष्यतीतिभाष्योक्त्या च स्त्रीप्रत्यये कर्तव्ये लिङ्गविशिष्टप-रिभाषायाः प्रवृत्त्यभावो व्यज्यते । तेन भवतीमतिक्रान्ता 'अतिभवतिः' इत्यत्र "उगि-तश्च" (पा०सू० ४।१।६) इति ङीप्, धीवरमतिक्रान्ता 'अतिधीवरिः' इत्यत्र "वनोर च" (पा०सू० ४।१।७) इति रादेशसन्नियोगशिष्टो ङीप् च नेति । एतेन लिङ्गविशिष्टपरिभाषया ष्फान्तस्य प्रातिपदिकत्वात् तत्प्रकृतिकङीषन्तेऽपि प्राति-पदिकत्वारोपात् सुबादिसिद्धिरित्यपास्तम् । अत एव भाष्ये तद्धितग्रहणं न कर्तव्य-मिति नोपसंहृतम् इत्याहुः ।

(१)घच इति । "क्षेत्रियच् परक्षेत्रे चिकित्स्यः" (पा०सू० ५।२।९२) इति

सफलम् । अन्यथाऽऽद्युदात्तत्वेनैव सिद्धौ तद्वैयर्थ्यं स्पष्टमेव । ननु ष्विद-मेव ष्फविधानाद् 'उक्तार्थानामप्रयोगः' इति ङीष् न स्यादत आह-**षित्त्वसामर्थ्यादिति** ।

**ष्फेणोक्तेऽपीति** । द्योतितेऽपीत्यर्थः । 'द्विर्बद्धं सुबद्धं भवति' इति न्यायेन क्वचित्समुच्चयस्य दृष्टत्वात् । षित्त्वमपि तदाश्रयणे ज्ञापकम् ।

**सर्वत्र** (पा०सू० ४।१।१८) । सर्वेषां मते इत्यर्थस्तदाह-**नित्य-मिति** । प्राचामित्यस्य निवृत्त्या नित्यत्वे सिद्धेऽपि "प्राचां ष्फ" (पा०सू० ४।१।१७) इत्यस्य सर्वत्रग्रहणापकर्षेण बाधकविषयेऽपि प्रवृत्त्यर्थं (१)तत् । तेन 'आवट्यायनी' इत्यत्र "आवट्याच्च" (पा०सू० ४।१।७५) इति चापं बाधित्वा प्राचां मते ष्फ एव । अवटो गर्गादिः । चाप्तु उदीचां मते प्राप्त-ङीब्बाधनेन चरितार्थः । सर्वत्रग्रहणात्तद्बाधकत्वमेव चापो न तु अनन्तर-ष्फबाधकत्वम् । चापि कृते तु न ष्फप्राप्तिरत इत्यधिकारात् । लोहितादि-र्गर्गाद्यन्तर्गणः । यद्यपि तत्र कतशकलकण्वेति पाठात् शकलस्य लोहिता-दिकण्वादिबहिर्भूतत्वात् ष्फाणौ न ततः प्राप्नुतस्तथापि कतन्तेभ्यः कण्वा-दिभ्य इत्युभयत्रापि षष्ठीतत्पुरुषबहुव्रीह्योरेकशेषेण न दोषः । कतन्तशब्दे शकन्ध्वादित्वात्पररूपम् । तेन 'शाकल्यायनी' शाकल्यस्य छात्राः 'शाकलाः' इति च सिद्धम् । **टापङीषोरिति** । कौरव्यशब्दे योपधप्रतिषेधाङ्-माण्डूकशब्दे जातित्वान् ङीषिति भावः । टाबूङीपोरपवाद इति पाठः प्रामादिकः ।

**वयसि** (पा०सू० ४।१।२०) । प्राणिनां कालकृतावस्थाविशेषो वयः । वयसीत्यस्य वयोरूपे प्रवृत्तिनिमित्त इत्यर्थस्तदाह—**प्रथमवयो-वाचिन इति** । तेन 'उत्तानशया' इत्यादौ न । प्रकरणादिना वयःप्रती-तावपि नायं तद्वाचकः याऽपि व्याध्यादिवशादुत्ताना शेते तस्या अपि प्रतीतेः । 'द्विवर्षा' इत्यादिरपि न वयोवाची शालादावपि प्रयोगात् । कौमा-रयौवनवृद्धत्वभेदात् त्रीणि वयांसि, आयुषश्चतुर्भिर्भागैश्चत्वारि वा । अ-

निपातनाज्ज्ञुमितघच इत्यर्थः । (१)तत—सर्वत्रग्रहणम् ।

नीका। समाहारे "तद्धितार्थे" (पा०सू० २।१।५१) इति द्विगुः। अकारान्तोत्तरपदत्वात् स्त्रीत्वम्।

(१)अपरिमाण (पा०सू० ४।१।२२)। अत्र परिमाणशब्देन

(१) अपरिमाण (पा०सू० ४।१।२२)। अत्र परिमाणशब्देनाऽऽरोहतः परिणाहतश्च येन काष्ठादिनिर्मितेन मीयते तत् प्रस्थादि गृह्यते। "परिमाणन्तु सर्वतः" इति "आर्हाद्" (पा०सू० ६।१।१९) इतिसूत्रभाष्ये परिभाषणात्। न चैवमुन्माने 'द्विनिष्की' इति न सिद्ध्योदति वाच्यम् 'सुवर्णविस्तौ हेम्नोऽक्षे, कम्बल्यमूर्णापलशतम्' इतिकोशवलेनोन्मानभूताबिस्तकम्बल्यग्रहणस्य उन्मानस्य चेन्निषेधो विस्तकम्बल्ययोरेवेतिनियमार्थत्वात्। अत एव "वयसि प्रथमे" (पा०सू० ४।१।२०) इतिसूत्रभाष्ये प्रयुक्ते द्वे वर्षे भूता द्विवर्षा इत्यादौ, द्वाभ्यां शताभ्यां क्रीतेत्यर्थे "आर्हाद्" (पा०सू० ६।१।१९) इतिसूत्रभाष्ये प्रयुक्ते 'द्विशता' इत्यादौ, तिर्यङ्माने 'द्विहस्ता भित्तिः' इत्यादौ च निषेधः सिद्धः। 'द्विकाण्डी रज्जुः इत्यत्र तु "काण्डान्तात्क्षेत्रे" (पा०सू० ४।१।२३) इत्यस्य क्षेत्रे एवेति नियमार्थत्वान्न निषेध इति नागेशभट्टैरुक्तम्। तत्र भाष्यविरोधत्रिकमापाद्यते। एकः प्रकृतसूत्रस्थः। द्वितीयः "कम्बलाच्च सञ्ज्ञायाम्" (पा०सू० ५।१।३) इतिसूत्रस्थः। तृतीयः "सङ्ख्यायाः संवत्सरसङ्ख्यस्य च" (पा०सू० ७।३।१५) इतिसूत्रस्थः। तत्राद्ये "इमौ द्वौ प्रतिषेधावुच्येते। तत्रैकः शक्योऽवक्तुम्। कथम्? एवं वक्ष्यामि परिमाणान्तात्तद्धितलुकि ङीब् भवतीति। "द्विगोः" (पा०सू० ४।१।२१) इत्येव सिद्ध तन्नियमार्थं भविष्यति। परिमाणान्तादेव तद्धितलुकि नान्यत इति। विपरीतनियमस्तु न, लक्ष्यानुसारित्वाच्छास्त्रस्य। ततो बिस्ताचितकम्बल्येभ्यो न। तद्धितलुकीत्येव" इत्युक्तम्। यद्यत्र परिमाणपदेन 'परिमाणन्तु सर्वतः' इति पारिभाषिकस्य ग्रहणं स्यात् तदा बिस्तादीनां परिमाणत्वाभावेन परिमाणान्तादेवेति नियमादेव ङीपो व्यावृत्तेः सिद्धा बिस्ताचितेति द्वितीयो योगो विफल एव स्यात्।

द्वितीये "अयं योगःशक्योऽवक्तुम्। कथं कम्बल्यमिति? निपातनादेतत्सिद्धम्। किं निपातनम्? अपरिमाणविस्ताचितकम्बल्येभ्यो न तद्धितलुकि इति। इदन्तर्हि प्रयोजनम्, सञ्ज्ञायामिति वक्ष्यामि, इह माभूत् कम्बलीया ऊर्णा' इति। एतदपि नास्ति प्रयोजनं, परिमाणपर्युदासेन पर्युदासे प्राप्ते कम्बल्यग्रहणं तत्र क्रियते परिमाणार्थं, परिमाणञ्च सञ्ज्ञैव' इत्युक्तम्। यदि चात्र परिमाणपदेन पारिभाषिकस्यैव ग्रहणम्, तदा कम्बल्ये परिमाणत्वाभावेन परिमाणपर्युदासस्य प्राप्त्यभावात्परिमाणपर्युदासेन पर्युदासे प्राप्ते इत्युक्तिरसङ्गतैव स्यात्।

तृतीये "परिमाणान्तस्यासञ्ज्ञाशाणयोरिति सिद्धे संवत्सरग्रहणमनर्थकम्। एवन्तर्हि ज्ञापयत्याचार्योऽन्यत्र कालपरिमाणानां परिमाणग्रहणेन ग्रहणं नेति। किं प्रयोजनम्? अपरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धितलुकि। द्विवर्षा, त्रिवर्षा। परिमाण-

पर्युदासेन पर्युदासो न भवति" इत्युक्तम्। पारिभाषिकपरिमाणस्यैव परिमाणपदे ग्रहणे तु उक्तोदाहरणे प्राप्त्यभावात्संवत्सरग्रहणानर्थक्यशङ्कायाः, कालपरिमाणानां परिमाणग्रहणेन ग्रहणं नेति ज्ञापनफलस्य चासङ्गतिः स्पष्टैवेति।

अत्र केचित्, अत्र सूत्रकृद्भाष्यकृतोर्मतभेदः। सूत्रकृता पारिभाषिकपरिमाणे त्युपगम्यैको योगः, नञ्द्वयं, कम्बलाच्चेति सूत्राणि प्रणीतानि। तदेव नागेशभट्टैः सूत्र न्मतं प्रतिपादितम्। भाष्यकृता च परिमाणमात्रग्रहणं स्वीकृत्य नञ्द्वयखण्डनं, योग विभागः, कम्बलाच्चेत्यस्य प्रत्याख्यानं च कृतम् "सङ्ख्याया" (पा०सू० ७।३।१ इतिसूत्रस्थं भाष्यञ्च भाष्यकृता स्वमतेनोक्तमिति न भाष्यविरोधत्रिकम् इत्याहुः।

परन्त्वेवं स्वीकारे 'द्विहस्ता भित्तिः' इत्यत्र सूत्रकारभाष्यकृतोः फलभेद आपद्येत। तथा हि, सूत्रकारमते उक्तरीत्या 'द्विहस्ता भित्तिः' इति भाष्यकृन्मते तु ङीप् स्यात्, तस्मान्नायं पक्षो युक्तः। यद्यप्यत्र भाष्यप्रामाण्यादनभिधानं वक्तुं शक्यं, तथापि स न्यस्मिन्नुपाये तदाश्रयणमयुक्तमित्यन्यो विरोधपरिहारोपायोऽत्र प्रदर्श्यते।

प्रकृतसूत्रे भाष्येकृन्मतेऽपि पारिभाषिकपरिमाणस्यैव ग्रहणं, ततश्च द्वितीयो योगो व्यर्थः सन् 'उन्मानातिरिक्तान्ताच्चेत् परिमाणान्तादेव' इति पूर्वयोगस्य नियमा कल्पयति। ततश्च विस्ताद्यन्ते उन्मानातिरिक्तान्तत्वाभावान्नियमेन व्यावृत्तेरसिद्धौ ङीप् रणार्थौ द्वितीयो योगः। विशेषनियमाकारकल्पनफलं तु 'द्विनिष्की' इत्यादौ ङीपोऽ वृत्तिः। एवञ्च न प्रकृतसूत्रस्थभाष्यविरोधः।

द्वितीये परिमाणपर्युदासेन पर्युदासे प्राप्ते इत्यस्य 'तेन पर्युदासेन द्विनिष्कीत्या वपि निषेधरूपे विधेयङीब्रूपकार्यस्य पर्युदासे प्राप्ते 'उन्मानस्य चेद् बिस्तकम्बल्ययोरे इति परिमाणविशेषे नियमाय बिस्तकम्बल्यग्रहणम्। कम्बल्यपदस्य कम्बलहितोप सामान्यार्थकत्वे तु अपरिमाणान्तत्वादेव निषेधसिद्धेः उक्तनियमस्य चासम्भवात्कम्बल ग्रहणमनर्थकं स्यात्' इत्यर्थे इति न तद्भाष्यविरोधः।

तृतीयभाष्यविरोधपरिहारश्चैवम्, तत्र तावत् "परिमाणान्तस्यासञ्ज्ञाशाणयोः (पा०सू० ७।३।१७) इति सूत्रे 'माषैश्चतुर्भिः शाणः स्यात्' इतिपरिभाषितोन्मा भूतशाणपर्युदासात् न सर्वतोमानरूपार्थस्य ग्रहणं, किन्तु परिच्छेदकमात्रस्येति संवत्स रस्यापि परिच्छेदकत्वात् परिमाणग्रहणेन ग्रहणं स्यादिति तदानर्थक्यशङ्कोपपत्ते संख्यायाश्च "आर्हाद्" (पा०सू० ६।१।१९) इति सूत्रे संख्याग्रहणात् परिमा ग्रहणेन अग्रहणबोधनात् न संख्याग्रहणानर्थक्यशङ्केति न न्यूनत्वं शङ्कनीयम्। च तेन कालपरिमाणानां वृद्धिर्नेति ज्ञापयित्वा 'द्वैसमिकः' 'त्रैसमिकः' इति माभिहितम्। शाणपर्युदासात् परिमाणग्रहणेन उन्मान-प्रमाण-परिमाणानां ग्रहणे संख्याया इव कालपरिमाणस्यापि ग्रहणं न भवतीति तद्भावः। अपर आहेत्यादि च न केवलं परिमाणान्तस्येति वृद्धिविधायके एव कालपरिमाणस्य परिमाणश ग्रहणं न भवति, किन्तु सर्वत्रैवास्मिन् शास्त्रे कालपरिमाणस्य परिमाणग्रहणेन ग्र

"परिमाणन्तु सर्वतः" इति पारिभाषिकमेव गृह्यते । "सुवर्णबिस्तौ हेम्नो-

---

न भवतीति । तेन 'द्विवर्षा' 'त्रिवर्षा' इत्यादौ अपरिमाणेति परिमाणपर्युदासो न भवति इत्युक्तम् । तस्य च परिच्छेदकविशेषग्रहणज्ञापनद्वारेत्यर्थः । तेन च "आर्हाद्" (पा०सू० ६।१।१९) इतिसूत्रस्थेन सर्वतोमानार्थग्रहणप्रतिपादकभाष्येण न विरोधः । "परिमाणान्तस्य" (पा०सू० ७।३।१७) इति सूत्रे तु परिच्छेदकविशेषग्रहणज्ञापनेन कालपरिमाणाग्रहणेऽपि परिमाणप्रमाणोन्मानानां त्रयाणामपि ग्रहणम्, ज्ञाणपर्युदासात् । एवं च न कश्चिद्विरोध इति । "तदस्य परिमाणम्" (पा०सू० ५।१।५७) इत्यधिकारे "सङ्ख्यायाः सञ्ज्ञा" (पा०सू० ५।१।५८) इति सूत्रे तु सङ्ख्या सामानाधिकरण्यानुपपत्त्या परिच्छेदकमात्रग्रहणम्, "क्रीतवत्परिमाणात्" (पा०सू० ४।३।१५६) इत्यत्र च सङ्ख्याया अपि ग्रहणं कर्तव्यं शतस्य विकार इत्याद्यर्थे 'शत्यः' इत्यादीनां सिद्ध्यर्थमिति "आर्हाद्"(पा०सू० ६।१।१९) इति सूत्रे भाष्ये एव स्पष्टम् ।

परेतु "आर्हाद्" (पा०सू० ६।१।१९) इतिसूत्रभाष्ये सङ्ख्यायाः परिमाणबहिर्भावकथनात् न सङ्ख्यायाः परिमाणग्रहणेन ग्रहणम् । तेन 'द्विशता' इत्यादौ अपरिमाणान्तत्वान्निषेधासिद्धिरिति तत्रैव भाष्ये स्पष्टम् । कालपरिमाणस्य च परिमाणग्रहणेन ग्रहणं न, तेन द्विवर्षा त्रिवर्षेत्यादौ अपरिमाणान्तत्वान्निषेधासिद्धिरिति "सङ्ख्यायाः संवत्सर" (पा०सू० ७।३।१५) इतिसूत्रभाष्ये स्पष्टम् । "आर्हाद्" इतिसूत्रभाष्ये प्रसङ्गात् उन्मानादीनां त्रयाणां वैलक्षण्योपपादनेऽपि परिमाणग्रहणेन प्रमाणोन्मानयोरग्रहणमित्यनुक्तेः, सङ्ख्यायास्तद्ग्रहणेनाग्रहणमुक्त्वा तस्यैव 'द्विशता' इत्यादौ अपरिमाणेतिनिषेधप्रवृत्तिरूपफलोक्तेश्च परिमाणपदेन उन्मान—प्रमाण—परिमाणानां त्रयाणामपि ग्रहणम् । अत एव "असमासे निष्कादिभ्यः" (पा०सू० ५।१।२०) इति सूत्रस्थम् असमासग्रहणस्य तदन्तविधिज्ञापकतापरं भाष्यं सङ्गच्छते । सर्वतोमानमात्रस्य आर्हादिति सूत्रे परिमाणपदेन ग्रहणे तु उन्मानभूतनिष्कस्य अपरिमाणात् 'नैष्किकम्' 'परमनैष्किकम्' इत्युभयत्रापि "आर्हादगोपुच्छसङ्ख्यापरिमाणाट्ठक्" (पा०सू० ६।१।१९) इत्यनेन ठकः प्राप्तौ निष्काच्चेत् असमासे एवेतिनियमार्थतया असमासग्रहणस्य चारितार्थ्ये तदन्तविधिज्ञापकत्वासङ्गतिः । कैयटोऽपि तत्र "निष्कशब्दस्य परिमाणवाचित्वात् पूर्वेणाप्राप्तोऽनेन ठग्विधीयते" इत्याह । तत्र परिमाणोन्मानयोरेव ग्रहणमिति तु न युक्तम्, विनिगमनाविरहात् । अत एव च बिस्तकम्बल्यग्रहणं चरितार्थम् । तस्य, काण्डान्तात्क्षेत्रे इत्यस्य च नियामकत्वकल्पनं तु "विधिनियमसम्भवे विधिरेव ज्यायान्" इतिपरिभाषाऽननुगृहीतं गौरवग्रस्तं च । तस्मात् तिर्यङ्माने 'द्विहस्ती भित्तिः' इत्येव । द्विहस्तेति तु उत्तरपदलोपिसमासे अर्शआद्यचा कथञ्चित्साधनीयम् इत्याहुः ।

ऽक्षे कम्बल्यमूर्णापलशतम्" इति कोशबलेनोन्मानभूतबिस्तकम्बल्यग्रहणन्तु उन्मानस्य चेद्बिस्तकम्बल्ययोरेवेति नियमार्थम्। तेन द्विनिष्की सिद्धा। द्वे गव्ये भूता, द्वाभ्यां शताभ्यां क्रीतेत्यर्थे द्विवर्षा, द्विशता, तिर्यङ्माने द्विहस्ता भित्तिरित्यादौ च निषेधः सिद्धः। "काण्डान्तात्" (पा०सू० ४।१।२३) इति तु क्षेत्रे एवेति नियमार्थम्। तेन द्विकाण्डी रज्जुरित्यत्र। द्वौ बिस्तौ **पचतीति**। पचेर्द्रवीभावानुकूलो व्यापारोऽप्यर्थः। अत्रोन्मानत्वाट्ठञो लुक्। "आचितः शाकटो भारः" इत्युक्तेराचितः परिमाणमित्येके। "आचितो दश भाराः स्युः" इत्युक्तेरुन्मानमेतदिति एतदपि नियमार्थमित्यन्ये।

**प्रमाणे इति**। षोडशहस्तप्रमाणदण्डवाचककाण्डशब्दस्याऽऽयाममात्रपरिच्छेदकत्वेन प्रमाणत्वमिति भावः।

**पुरुषात्प्रमाणे** (पा०सू० ४।१।२४)। पुरुषस्योर्ध्वाधरदिगवस्थितवस्तुमात्रपरिच्छेदकत्वेनोन्मानत्वाद् उन्मानस्य चेद् बिस्तादेरेवेति नियमान्निषेधाप्राप्त्या नित्यं ङीपि प्राप्ते विकल्पार्थमिदम्। अत्र प्रमाणशब्दः परिच्छेदकमात्रपरो न त्वायामपरिच्छेदकवाची। अत एव तस्य पुरुषविशेषणता नासङ्गता। जातिवचनस्यापि पुरुषशब्दस्य "पञ्चारत्निः पुरुषः" इति शुल्बसूत्रादत्र प्रमाणे इति विशेषणाल्लोकव्यवहाराच्च परिच्छेदकवाचित्वमपि। **द्विपुरुषीति**। द्वौ पुरुषौ प्रमाणमस्या इत्यर्थे "तदस्य परिमाणम्" (पा०सू० ५।१।५७) इति प्रत्ययस्य "अद्ध्यर्द्ध" (पा०सू० ५।१।२८) इति लुकि उदाहरणम्। तत्र हि परिमाणशब्देन (१)उत्तरसूत्रानुरोधात्परिच्छेदकमात्रस्य ग्रहणमिति सिद्धान्तः।

**ऊधसो** (पा०सू० ५।४।१३१)। समासान्तोऽयम्। तत्र स्त्रियामित्युपसङ्ख्यानादाह—**स्त्रियामिति**। "बहुव्रीहौ सक्थ्यक्ष्णोः" (पा०सू० ५।४।११३) इत्यतो बहुव्रीहावित्यनुवर्त्तते। ङित्त्वाच्चास्याऽऽदेशत्वम्। **डाब्ङीब्निषेधेष्विति**। समासान्तानामलौकिके वाक्ये एव प्रवृत्त्या

---

(१)उत्तरसूत्रेति। "संख्यायाः संज्ञा" (पा०सू० ५।१।५८) इतिसूत्रस्थसङ्ख्यासामानाधिकरण्यानुरोधादित्यर्थः॥

पूर्वमनङ्व्येषां प्राप्तिः । "अन उपधालोपिनः" (पा०सू० ४।१।२८) इत्यत्रास्यानुवृत्त्या ङीपोऽपि बाधः । एतेन मद्ध्येऽपवादन्यायाड्डान्निषेधयोरिदं बाधकमित्यपास्तमिति भावः । **ङीषिति ।** ङीपि तु कुण्डोधन्शब्दे पूर्वपदप्रकृतिस्वरेण धकाराकारस्यानुदात्तत्वादुदात्तनिवृत्तिस्वराप्राप्त्याऽन्तोदात्तत्वान्न सिद्ध्येत् । कुण्डमिवोधो यस्या इति विग्रहः । बहुव्रीहेः किम् ? ऊधः प्राप्ता प्राप्तोधाः "प्राप्तापन्ने च" (पा०सू० २।२।४) इति समासः । **अव्ययग्रहणानुवृत्तेरिति ।** "अस्वरितत्वादिति भावः । **निषेधावपीति ।** अपिना "अन उपधा" (पा०सू० ४।१।२८) इति ङीप् । अन्ग्रहणेऽनर्थकस्यापि ग्रहणात् । **द्विहायनी बालेति ।** "द्विहायनी द्विवर्षा गौः" (अ०को०) इति प्रायोवाद इत्येके ।

'बाला' इत्यस्य गौरित्यर्थ इत्यन्ये ।

**नित्यं सञ्ज्ञा** (पा०सू० ४।१।२९) । ननु सञ्ज्ञाशब्दा नियतानुपूर्वीका अनादयः, छन्दसि च दृष्टस्यैव विधानमिति ङीबभावविशिष्टस्य तत्र प्रयोगासम्भवाद् "अन उपधा" (पा०सू० ४।१।२८) इत्येव सिद्धे इदं व्यर्थमिति चेदुत्तरार्थत्वात् । योगविभागस्तु व्यर्थ एव । तद् ध्वनयन् लक्षणान्तरासिद्धमुदाहरति—**वेदे पञ्चदाम्नीति ।** **केचित्तु** 'शतमूर्ध्नी' इति पाठः ।

**केवलमामक** (पा०सू० ४।१।३०) । अस्मच्छब्दादणि "तवकममकावेकवचने" (पा०सू० ४।३।३) इति ममकादेशः । भागशब्दात्पुँल्लिङ्गात्स्वार्थेऽभिधेये स्वार्थिकेषु लिङ्गातिवृत्तेरपि सत्त्वात्स्त्रीत्वम् । पापशब्दोऽशंआद्यचा तद्वति वर्त्तमानः स्त्रियाम् । अपरः पवर्गमध्यो घृतादित्वादन्तोदात्तः । 'उतापरं यक्षिदेवान्' इत्यादौ 'उतापरीभ्यो मघवा' इत्यादौ चान्तोदात्तपाठात् । 'पूर्वमनयन्नापरम्' इत्यादौ पठ्यमानमाद्युदात्तत्वमपि वृषादित्वात् । 'अपराः पूर्वामभ्येति' इत्यादावजादिपाठाट्टावपि । आर्येण कृतेति प्राक् सुबुत्पत्तेः समासेऽदन्तत्वम् । भेषजशब्दोऽव्युत्पन्न औषधे रूढः । भिषज इदमित्याणि भैषजशब्दोऽपि तत्र । सुमङ्गलीरियं वधूरिति तु मत्वर्थीय ईमत्यये बोद्धव्यम् ।

**प्रकृतिभागाविति।** (१)नुक्सन्नियोगेनेति भावः। मतु-बिति। वत्वन्तु "मादुपधाया" (पा०सू० ८।२।९) इति सिद्धम्।

**यज्ञेन सम्बन्ध इति।** स्त्रिया इत्यर्थः। संयोगपदं सम्बन्धोपल-क्षणम्। सम्बन्धश्च यज्ञफलप्रतियोगिकैश्वर्यवत्त्वं तदाह—**तत्कर्तृकेति।**

**विभाषा** (पा०सू० ४।१।३४) सहशब्दो विद्यमानवाची, पूर्वश-ब्दोऽवयववाची, व्याख्यानात्। तत्र केवलपतिशब्दस्य विद्यमानपूर्वावयव-त्वासम्भवादव्यभिचाराच्च पतिशब्देन तदन्तं गृह्यते इत्याह—**पतिशब्दा-न्तस्येत्यादि। न पत्युरिति।** सपूर्वस्येत्यनेन पत्यन्तस्य गृह्यमा-णत्वादिति भावः। बहवो वृषलपतयो यस्या इति कर्मधारयोत्तरपदबहुव्रीहि-वारणायेहार्थोऽप्यनुपसर्जनपदसम्बन्ध (२)**इत्यन्ये।** बहुव्रीहावित्युपसर्ज-नोपलक्षणम्। तेन पतिमतिक्रान्ता 'अतिपत्नी'इत्यपि। **व्यस्ते इति।** "विभाषा सपूर्वस्य" (पा०सू० ४।१।३४) इत्यत्र यज्ञसंयोग इति न सम्ब-ध्यते, **भाष्ये** "कथं तुषजकस्य पत्नी" इति व्यस्ते एव प्रश्नात्। वृष-लत्वेन यज्ञसंयोगाभावात्पूर्वेणाप्राप्तेः, सपूर्वत्वाभावाच्चैतदप्राप्तेरिति भावः।

**उपचारादिति।** पाणिग्रहणाश्रयणादिति भावः। **यद्वेति।** इह प्रौढ्या, तत्प्रकृतिककर्तृक्विपि दृढमानाभावात्। पूर्वसूत्रे यज्ञसंयोग इति तु 'वृषलस्य पतिः स्त्री' इतिप्रयोगसाधनार्थम्। **सपूर्वस्य किमिति।** अव-यववाची पूर्वशब्दः किमर्थ इति प्रश्नः। **गवां पतिरिति।** स्वामिनीत्यर्थः।

---

(१)**नुक्सन्नियोगेनेति।** "अन्तर्वत् पतिवत् गर्भभर्तृसंयोगे" इति वार्त्तिके गर्भिण्यां जीवद्भर्तृकायामिति च लभ्यते इति बोध्यम्।

(२)**इत्यन्ये इति। केचित्तु**—"सिद्धं तु पत्युः प्रातिपदिकविशेषणत्वात्" इति वार्त्तिकस्य "सपूर्वात् प्रातिपदिकात् पत्यन्तादनुपसर्जनात्" इति **भाष्ये** व्याख्या-नात् स्त्रियां वर्तमाने प्रातिपदिके एव सपूर्वत्वानुपसर्जनत्वयोर्लाभात् निरुक्तकर्मधारयो-त्तरपदे बहुव्रीहावपि ङीप्प्रवृत्तेर्दुवारतया नेहार्थोऽनुपसर्जनपदसम्बन्धः। अत एव "अन उपधा" (पा०सू० ४।१।२८) इति सूत्रे "बहुव्रीहेरनुपसर्जनत्वाव्यभिचारात्" इति शेखरकारेणोक्तम्। अन्यथा बहुव्रीहिघटकबहुव्रीहौ उपसर्जनत्वसम्भवेन अनुपसर्जन-त्वाव्यभिचारोक्तिरसङ्गतैव स्यादित्याहुः।

**निपात्यते इति** । तेन चोदात्तसादेशस्यैव प्रवृत्त्या सपत्नीशब्दस्याद्युदात्तत्वमपि सिद्धम् । किञ्च समानस्वामिकस्त्रीविशेषस्यैव रूढ्या बोधनार्थं ङीन्नकारविशिष्टोच्चारणम् । अत एव समानस्वामिकदासीभूम्यादौ सपतिरित्येव । समानत्वं चैकस्यैव तत्तत्पत्नीसम्बन्धेन भेदमारोप्य बोध्यम् । मुख्यसादृश्यवत्पतिकासु तु न तथा प्रयोग इष्यते ।

**त्रिसूत्रीति** । व्याख्यानादिति भावः ।

**सन्नियोगशिष्ट इति** । तेन तदभावे ङीबपि नेति भावः ।

नितान्तानामित्यत्राकार उच्चारणार्थः । नितन्तानामिति पाठे जश्त्वाभावः सौत्रः । **त्रीण्येतानीति** । अत्रैतशब्दस्योपसर्जनत्वेऽपि तदन्तमनुपसर्जनमेव । अनुपसर्जनादिति चात्र तदन्ताविशेषणम् । अत एव गृह्यवृत्तिकृता **नारायणेनात्र** बहुव्रीहिं कृत्वाऽनेन ङीबित्युक्तं, तदनुसारेण चेदम् ।

**परे तु** "उपमानानि" (पा०सू० २।१।५५) इतिसूत्रस्थ**भाष्य**स्वरसात् "टिड्ढाणञ्" (पा०सू० ४।१।१५) इत्यादौ गृह्यमाणविशेषणत्वस्य क्लृप्तत्वाच्चात्रापि तथैवोचितम् । तत्र हि 'शस्त्रीश्यामा' इत्यादौ श्यामाशब्दः शस्त्र्यामेव, उपमेयन्तु समासवाच्यमिति पक्षे 'शस्त्रीश्यामो देवदत्तः' इत्यत्र ह्रस्वत्वन्न सिद्ध्यति । यद्युपसर्जनस्येति (१)ह्रस्वत्वं, तदा (२)'कुम्भकपाललोहिनी' इत्यत्रानुपसर्जनलक्षण ईकारो न प्राप्नोति" इत्यु-

---

(१)**ह्रस्वत्वमिति** । समासवाच्यत्वेनोपमेयस्य प्राधान्यमिति श्यामाशब्दार्थस्य वृत्तिघटकपदार्थत्वेनाप्राधान्यादुपसर्जनत्वमित्यभिमानेन "गोस्त्रियोरुपसर्जनस्य" (पा०सू० १।२।४८) इत्यस्य प्राप्तिरिति भावः । वस्तुतस्तु तत्र "प्रथमानिर्दिष्टम्" (पा०सू० १।२।४३) इति "एकविभक्ति" (पा०सू० १।२।४४) इति च कृत्रिमस्यैवोपसर्जनस्य ग्रहणमिति सामान्यवचनैरितितृतीयानिर्दिष्टत्वाद् अनियतविभक्तिकत्वाच्च श्यामाशब्दस्य कृत्रिमोपसर्जनत्वाभावेन पूर्वोक्तदोषो दुरुद्धर एव । लौकिकोपसर्जनग्रहणमभ्युपेत्य दोषान्तरमाह–(२)**कुम्भकपालेति** । उपमेयं समासवाच्यमिति पक्षे कुम्भकपालं लोहितामिवेति विग्रहः । तथाचोपमानस्य नपुंसकलिङ्गत्वात् समासात् प्राक् स्त्रीप्रत्ययो न, समासोत्तरमुपसर्जनत्वेन "वर्णादनुदात्तात्तोपधातो नः" (पा०सू०

क्तम्। 'श्येण्या' इत्यस्य (१)त्रिषु स्थानेषु एन्येत्यर्थो बोद्धय इत्याहुः। (२)आर्षमत्र णत्वम्। वर्णात्किम्? प्रकृता। "गतिरनन्तरः" (पा०सू० ६।२।४९) इत्याद्युदात्तः। **अन्तोदात्त इति**। "श्वेतो वाजी जायते" इत्यादौ तथा पाठादिति भावः। "छन्दसि क्नम्" (का०वा०) इति नादेशापवादः। तेन 'उत्सर्गसमानदेशा अपवादाः' इति न्यायात् (३)तत्स्थानिकत्वं ङीप्सन्नियोगशिष्टत्वञ्चास्य बोध्यम्। विशुद्धिवाचीति पाठे तत्प्रवृत्तिनिमित्तक इत्यर्थः।

**अन्यतो** (पा०सू० ४।१।४०)। सन्निधानाद् (४)व्याख्यानाच्च तोपधस्यैव प्रतियोगित्वेनान्वय इत्याह—**तोपधभिन्नादिति**। वर्णात्किम्? खट्वा, आद्युदात्तः।

**नर्त्तकीति**। "शिल्पिनि ष्वुन्"। (पा०सू० ३।१।१४५) गौरशब्दो वर्णवाच्यप्यन्तोदात्त इतीह पाठः। **अनड्वाहीति**। "आमनडुहः स्त्रियां वा" (का०वा०) इति वचनात्पक्षे आम्।

**सूर्येति। स चेद्य इति।** सूर्यादीनामङ्गानामुपधाया इति व्याख्याने तु 'सौरी बलाका' इति न सिद्ध्येत्। सूर्यणैकादिगित्यणन्तान् ङीपि अणन्तमङ्गं न सूर्यशब्द इति तदासिद्धिः। वचनं तु 'सूरी कुन्ती' इत्यत्र चरितार्थम् अणो लोपेऽप्याभीयत्वेन सोऽसिद्धः, अणूनिमित्तकाल्लोपस्तु

४।१।३९) इत्यस्य न प्राप्तिरिति भावः। (२)**त्रिषु स्थानेष्विति**। "सुप्सुपा" इति समासः। (१)**आर्षमत्र णत्वमिति**। समानपदत्वाभावाद् "अट्कुप्वाङ्" (पा०सू० ८।४।२) इत्यस्य, सञ्ज्ञात्वाभावात् "पूर्वपदात्सञ्ज्ञायामगः" (पा०सू० ८।४।३) इत्यस्य चाप्राप्तेरिति भावः। (३)**तत्स्थानिकत्वमिति**। न त्वनेकाल्त्वात्सर्वादेश इति शेषः। यद्वा, "वर्णादनुदात्ताद्" (पा०सू० ४।१।३९) इत्यतः त इत्यस्यानुवृत्त्या तकारस्थानिकत्वं क्नादेशस्य। तेन "विषयभेदेऽपि बाध्यबाधकभावः" इति भाष्यमते 'उत्सर्गसमानदेशाः' इतिन्यायाभावेऽपि न दोष इति बोध्यम्।

(४)**व्याख्यानादिति**। 'तित्तिरिकल्माषी' इति "उपमानानि" (पा०सू० २।१।५५) इति सूत्रस्थभाष्यप्रयोगदर्शनमूलकादित्यर्थः। अन्यथा पूर्वसूत्रे विशेष्यभूतवर्णवाचकस्यैव प्रतियोगितयाऽन्वये उक्तप्रयोगानुपपत्तिः स्पष्टैव, कल्माषशब्दस्य वर्णवाचित्वादिति बोध्यम्।

व्याश्रयत्वान्नासिद्ध इति यस्योपधत्वम्, उपधाग्रहणादेव (१)भाधिकारमभिव्याप्याभीयासिद्धत्वमिति बोद्धव्यम् । यग्रहणन्तूत्तरार्थम् । ङ्यामिति निर्देशात्सप्तम्येकवचनस्याग्रहणम् । **नक्षत्राणीति** । नक्षत्रवाचकाद् योऽण् तत्रेत्यर्थः । तेन तिष्येण युक्तं तैषमहः, तिष्ये भवस्तैषः इत्यादि सिद्धम् । **मातरि षिच्चेति** । पितामहीसिध्यर्थमिदम् । **दंष्ट्रेति** । दंशेः "दाम्नीशस" (पा०सू० ३।२।१८२) इति करणे ष्ट्रन् । अयमजादिषु पठ्यते । गौरादिषु मातमहीशब्दपाठोऽनार्ष इत्यन्ये ।

**जानपदीति** । जनपदे भवेत्यर्थः । उत्सादित्वादञ् । ङीप्याद्युदात्तत्वे प्राप्तेऽन्तोदात्तार्थं वचनम् । वृत्तिः अनुच्छेद्या जीविका । **अप्रत्यय इति** । तथा च क्रियाशब्दोऽयमिति भावः । **अमत्रे**—कमण्डलुरूपे* ।

कुण्डी कमण्डलौ, जारात् पतिवत्नीसुते पुमान् ।

इति **मेदिनीकोशात्स** तत्र नित्यस्त्रीलिङ्ग इति भावः । यदि तु 'पिठरे तु न ना कुण्डम्' इति **विश्वकोशे** तस्य नपुंसकत्वमप्युक्तं पिठरामत्रशब्दौ च पर्यायौ, "पिठरं स्थाल्युखा कुण्डम्" **इत्यमरे** नपुंसकत्वमात्रोक्तिस्त्ववयुत्याऽनुवाद इत्युच्यते, तदाऽनेकविधसंस्थानेषु अमत्रेषु कुण्डव्यवहारेण कुण्डत्वे जातित्वाभावादप्राप्तौ ङीषिति बोद्धम् । स्त्रीविषयत्वादित्युपलक्षणमिति बहवः । कमण्डलुसंस्थानस्यानुगतत्वात्तद्रूपामत्रवाचिनो जातित्वमप्यस्ति । सूत्रं तु नियमार्थमेव । अमृते जारजायां कुण्डेत्येवेत्यपरे । आवपने च नित्यस्त्रीत्वादप्राप्तस्य ङीषो विधिः । आवपनमिति सामान्ये नपुंसकम् ।

**गुणयोगादिति** । गौणत्वेऽप्यपदकार्यत्वात्प्रवृत्तिरिति भावः ।

---

(१)**भाधिकारमभिव्याप्येति** । तेन 'शुनः' इत्यादौ सम्प्रसारणस्यासिद्धत्वात् "न संयोगात्" (पा०सू० ६।४।१३७) इति निषेधेन "अल्लोपोऽनः" (पा०सू० ६।४।१३४) इति लोपो न । अल्लोपे हि स्थानिवत्त्वेन यणापत्तिः, 'बहुश्वा' इत्यादौ "अन उपधा" (पा०सू० ४।१।२८) इति ङीबापत्तिश्च । एवं 'भूयान्' इत्यादौ "बहोर्लोपः" (पा०सू० ६।४।१५८) इत्यस्यासिद्धत्वात् ओर्गुणो न । एवं तिर्यञ्चमाचष्टे 'तिराययति' इत्यादौ अचष्टिलोपेनापहारे तस्यासिद्धत्वात् पुनष्टिलोपो नेति बोध्यम् ।

---

* कुण्डरूपे इति क्वचित् पुस्तके पाठः ।

(१)विधित्वानुरोधाद् गौण एवास्य प्रवृत्तिः । **वर्णश्चेदिति**। तादृशिष्ट्वे- दित्यर्थः । अन्यथा 'गुणे शुक्लादयः पुंसि' इत्युक्त्याऽसङ्गतं स्यादिति बोध्य- म् । सूत्रे वर्णशब्दोऽर्शआद्यजन्तः । **कालाऽन्येति** । क्रौर्यगुणयुक्तेत्यर्थः।

**नील्या अनिति** । वृत्त्यनुसारेणेदम् । प्रतिपदोक्तत्वाद् अन्यङ्- तिङीषन्तप्रविष्टनीलशब्दस्यैवात्र ग्रहणं, न त्वस्य लाक्षणिकत्वात् । अना- च्छादने इति नीलवर्णवती शाटीत्यर्थे 'नीली' इति वारणाय चरितार्थम्। नील्या रक्ता गौरित्यर्थे (२)नीलेत्येवोचितमिति परे । मैथुनेच्छाशब्दोऽर्श- आद्यजन्तस्तद्वतीत्यर्थः । **अन्येति** । मैथुनादन्यद् या इच्छति । कमेः "लषपत" (पा०सू० ३।२।१५४) इत्युकञ् । शोणशब्दो वर्णवाची "वर्णानां तण" (पा०सू० २।३।३) इत्याद्युदात्तः । अन्यत इति सिद्धे विकल्पार्थमिदम्।

**वोतो** (पा०सू० ४।१।४४) । (३)अत्र गुणवचनशब्देन समस्त- कृदन्त–तद्धितान्त–सर्वनाम–जाति–सङ्ख्या–सञ्ज्ञाशब्दातिरिक्तशब्दो गृह्यते (४)आकडारसूत्र**भाष्य**पर्यालोचनया तादृशानामेव तत्सञ्ज्ञालाभात् । क

---

**(१)विधित्वानुरोधादिति** । विधिनियमसम्भवे विधेर्ज्यायस्त्वात् । तथा च वृत्तिः–"नागशब्दो गुणवचनः स्थौल्ये ङीषमुत्पादयति, अन्यत्र गुणे एव टापम् । अगु- णवचनात्तु जातिशब्दान् ङीषेव भवति" इति ।

**(२)नीलेत्येवोचितमिति** । अस्य लाक्षणिकत्वेन सूत्रे नीलशब्देनाग्रहणा- दिति भावः ।

**वोतो गुणवचनात्** (पा०सू० ४।१।४४) । अत्र गुणो नादेङ्रूपः उत इ- विशेषणात् , नापि विशेषणम् आखुर्द्रव्यमित्यादावतिप्रसङ्गात् , नापि नैयायिकाभिम- गुणः 'मृद्वी' 'बुद्धिः' इत्यादेरसिद्ध्यापत्तेः, अत आह–(३)**अत्र गुणवचनशब्देनेति**।

**(४)आकडारसूत्रेति** । तत्र सूत्रे **भाष्ये**–"अर्थवत् प्रातिपदिकम्" इति अर्थ- वतः प्रातिपदिकसञ्ज्ञामुक्त्वा तस्यैव "गुणवचनं च" इति गुणवचनसञ्ज्ञा विहिता। ततश्च "समासे–कृत्–तद्धिता–ऽव्यय–सर्वनामा–ऽसर्वलिङ्गा जातिः, सङ्ख्या; डु- एकद्रव्योपनिवेशिनी सञ्ज्ञा" इति समासादिसञ्ज्ञास्तद्बाधकत्वेनोक्ताः । डुशब्देन षट्सञ्ज्ञा । अत्र **कैयटः**–"गुणवचनं चेति । एकविषयत्वाच्चकारकरणाच्च गुणव- नप्रातिपदिकसञ्ज्ञयोः समावेशो भवति । उत्तरासु च सञ्ज्ञासु प्रातिपदिकमित्यनु- नात् ताभिः प्रातिपदिकसञ्ज्ञा समाविशति, गुणवचनसञ्ज्ञा तु ताभिर्बाध्यते" इति। एवञ्च समासादिसञ्ज्ञातिरिक्तप्रातिपदिकानां गुणवचनपदेन ग्राह्यमिति

हि प्रातिपदिकमात्रस्य गुणवचनसञ्ज्ञामुक्त्वाऽग्रे तद्बाधकत्वेनैताः क्रमेण पठिताः । गुणवचनेत्य(१)न्वर्थसञ्ज्ञया गुणोपसर्जनगुणिवाचकानामेव तादृशानां सा सञ्ज्ञेति न रूपादीनां ग्रहणं, जातिपदेनाऽऽकृतिग्रहणद्रव्यवृत्तिजातिवाचकानमेव तत्र ग्रहणात् । कठादिशाखातदध्येतॄणाञ्च तद्धितान्तत्वादेव व्यावृत्तिः । एतत्सूत्र भाष्योक्तम्—

(२)सत्त्वे निविशतेऽपैति पृथग् जातिषु दृश्यते ।
आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः ॥

---

लभ्यते । अत्र समासादिसञ्ज्ञाभिर्गुणवचनसञ्ज्ञाबाधात् 'चित्रगुत्वं' 'कारकत्वम्' 'औपगवत्वम्' 'उच्चैस्त्वं' 'सर्वत्वं' 'घटत्वं' 'बहुत्वं' 'पञ्चत्वं' 'डित्थत्वम्' इत्यादौ न ष्यञ् । नचैवम् 'ऐक्यम्' 'राजपौरुष्यम्' इत्याद्यसिद्ध्यापत्तिः, सङ्ख्यासमाससञ्ज्ञाभ्यां गुणवचनसञ्ज्ञाबाधादिति वाच्यम् , तयोर्ब्राह्मणादिगणे पाठेन ब्राह्मणादित्वात्तत्सिद्धेः । ब्राह्मणादिग्रहणं तु समासादिविषयार्थं, प्राणभृज्जातिलक्षणाऽण्बाधनार्थं, युवादयणा समावेशार्थं चेति कैयटः ।

(१)अन्वर्थसंज्ञयेति । गुणसञ्ज्ञायामेव लाघवात्कर्तव्यायां गुणवचनेतिमहासञ्ज्ञाकरणसामर्थ्यादिति भावः ।

(२)सत्त्वे निविशते इति । सत्त्वे द्रव्ये निविशते सम्बध्यते, अपैति ततो निवर्तते, पृथग् भिन्नासु जातिषु जात्याधारेषु अर्थात् भिन्नजातीयेषु द्रव्येषु दृश्यते च यः स गुणः, यथा शुक्लादिः । स हि घटादौ यस्मिन् सम्बध्यते, तत एव च पाकादिना निवर्तते, भिन्नजातीयेषु पयःशङ्खादिषु दृश्यते च । अनेन जातेर्गुणत्वनिरासः । घटत्वादिजातिर्हि यस्मिन् घटादौ सम्बध्यते न तं कदाचिज्जहाति, न च भिन्नजातीयेषु पटादिषु दृश्यते । एवं सति क्रियायां गुणत्वं प्रसज्यते तस्या अपि घटादौ कदाचिदुपलम्भात् , कदाचित्ततो निवृत्तेः, भिन्नजातीयेषु घटपटादिषु दर्शनाच्च, अतो विशेषणान्तरमाह—आधेय इति । उत्पाद्य इत्यर्थः । अक्रियाजः अनुत्पाद्य इत्यर्थः । तथाच नित्यानित्यवृत्तिपदार्थविभाजकोपाधिमत्वमित्यर्थः । गुणत्वस्य पाकजरूपादिषु अनित्येषु, आकाशमहत्वादिषु नित्येषु च सत्वात्तद्वत्सु शुक्लादिषु लक्षणसमन्वयः । क्रियात्वस्य च नित्यावृत्तित्वात्तद्वत्यां क्रियायां नातिप्रसङ्गः । एवमपि अवयविद्रव्ये अतिव्याप्तिः । तस्यावयवेषु सम्बध्यमानत्वात् , असमवायिकारणसंयोगनिवृत्ता ततो निवर्तमानत्वात् , भिन्नजातीयेषु हस्तपादादिषु दृश्यमानत्वात् , नित्यानित्यवृत्तिद्रव्यत्वरूपोपाधिमत्वाच्च, अत आह—असत्वप्रकृतिरिति । अद्रव्यस्वभाव इत्यर्थः । द्रव्यभिन्नत्वमिति यावत् । तेन तत्र नातिप्रसङ्गः ।

इति गुणलक्षणं त्वेकदेशयुक्ति(१)र्बहुविशेषणानां वैयर्थ्यात् भाष्यकृताऽव्याख्यानाच्च। तस्मादाकडारसूत्रोक्तमेव भाष्यसम्मतमिति भाष्यप्रदीपोद्द्योते निरूपितम्। **शुचिरिति।** शुचेरौणादिकः किन्, उत इत्यस्याभावेऽपि "खरुसंयोगोपधान्न" (का०वा०) इत्येतत्सामर्थ्येनात इत्यस्यात्रासम्बन्धः उणादीनामव्युत्पन्नत्वात् "कृदिकारात्"(ग०सू०) इत्यस्यात्राप्रवृत्तिरित्यभिमानः। (२)शुक्लेति तु प्रत्युदाहरणमुचितम्। तपः

---

(१)**बहुविशेषणानां वैयर्थ्यादिति।** सत्त्वे निविशते इति, पृथग् जातिषु इति वा जातेर्वारणसम्भवे तदन्यतरस्य वैयर्थ्यात्। जातेरनित्यत्वाभावात् नित्यानित्यवृत्तिधर्मवत्त्वमिति क्रियावारकेणैव तस्या वारणसम्भवात् तद्वारकयोरुभयोरपि वैयर्थ्यापत्तेः, गुणत्वजातिमत्त्वमित्येव सिद्धे इतरवैयर्थ्यापत्तेश्चेति भावः। अन्ये तु सर्वेषामपि सफलत्वाच्चिन्त्यमिदम्। तथा हि—सत्त्वे द्रव्ये, निविशते उत्पद्यते, अपैति नश्यति। एवञ्च द्रव्याधिकरणकोत्पादविनाशशालित्वमिति प्रथमविशेषणं फलितम्। जातिषु इति पञ्चम्यर्थे सप्तमी। जातिभ्यः पृथगित्यर्थः। तथाच जातिभिन्नत्वमिति द्वितीयं फलितम्। आधेयश्चाक्रियाजश्च पूर्ववत् नित्यानित्यवृत्तिधर्मवत्त्वमिति तृतीयम्। असत्त्वप्रकृतिः द्रव्यभिन्न इत्यर्थः। तेन द्रव्यभिन्नत्वं चतुर्थम्। तत्र द्रव्याधिकरणकोत्पादविनाशशालित्वमित्याद्यविशेषेणानुक्तावभावे गुणत्वापत्तिः। द्रव्याधिकरणकोत्पादविनाशशालित्वमिति प्रथमविशेषेण उत्पादमात्रोक्तौ ध्वंसेऽतिव्याप्तिः, नाशमात्रोक्तौ प्रागभावेऽतिव्याप्तिः। द्वितीयविशेषणानुक्तौ उत्पादविनाशशालिन्या विशिष्टाचिकीर्षाप्रयोजकत्वेन लाघवात् क्लृप्ताया ब्राह्मणत्वादिसामान्यव्याप्याया विशिष्टब्राह्मणत्वादिजातेरपि गुणत्वापत्तिः। उत्पादविनाशौ चास्याः संस्कारपातित्यादिना तत्तद्वृत्तित्वविशिष्टब्राह्मणत्वादिजातेरुत्पादविनाशयोः सकलानुभवसिद्धत्वेन बोध्यौ। तृतीयानुक्तौ क्रियायां गुणत्वापत्तिः। चतुर्थानुक्तौ अवयविद्रव्ये गुणत्वापत्तिः। गुणत्वजातिमत्त्वमितिलक्षणान्तरसम्भवेऽपि अस्य लक्षणत्वे बाधकाभावः। तद्ग्राहकत्वाच्च न वैयर्थ्यम्। एवञ्च सर्वविशेषणानां सार्थक्यान्नैकदेशयुक्तिरियम्। आकडारसूत्रभाष्यं तु यत्रार्थनिर्णायकं नोपलभ्यते तत्रैव व्यवस्थापकम्, यथा "गुणवचनब्राह्मणादिभ्यः" (पा०सू० ५।१।१२४) इत्यादौ। अत्र तु भाष्यकारेण गुणलक्षणाभिधानात् न तद् व्यवस्थापकम्। बह्वादिग्रहणसार्थक्यप्रयोजकसङ्ख्यानिष्ठगुणत्वाभावार्थं मात्रवृत्तित्वमपि विशेषणं देयम्। न चैकत्वेऽतिव्याप्तिः, अनेकनिरूपितवृत्तिताकदकसङ्ख्यात्वादिधर्मानवच्छिन्नत्वस्यैवैकमात्रवृत्तित्वरूपत्वादित्याहुः।

(२)**शुक्लेतीति।** "संयोगोपधान्न" (का०वा०) इति निषेधस्तु खरुशब्दः उकारान्त एवेति भावः। पीतेत्यस्योपलक्षणं वा। अदन्ताच्चेत् शोणशब्दादेवेति

किम् ? वधूः, कासूः । "वधूः स्नुषा नवोढा स्त्री", "कासूर्विकलवाचि स्याद्" इतिकोशबलेन (१)नवोढात्वस्य (२)विकलवाक्त्वस्य च प्रवृत्तिनिमित्तत्वेन खरुशब्दवद् गुणवचनत्वात् । **पतिंवरेति** । (३)पतिलाभोत्कण्ठावतीत्यर्थः ।

**बह्वादि** (पा०सू० ४।१।४५) । बहुशब्दस्योक्तरीत्या गुणवचनत्वाभावेन ग्रहणम् । "कृदिकाराद्" (ग०सू०) इति "सर्वत" (ग०सू०) इति च गणसूत्रे । अक्तोऽपीत्यर्थः । "व्यवस्थितविभाषाश्रयणात्क्वचिन्न । 'सुगन्धिः, (४)प्रियकतिर्वेश्या' इत्यादि" इति **वृत्तिः** । (५)पुराणशब्दोऽत्र पठ्यते । स यद्यपि 'अयं पन्था अनुवित्तः पुराणः' इत्यादावन्तोदात्तदर्शनेन घृतादिपाठादन्तोदात्त इत्युदात्तनिवृत्तिस्वरेण ततो ङीब्ङीषोः स्वरे विशेषाभावस्तथाप्यत्र पाठसामर्थ्यात्पक्षे टाबेवेति बोद्ध्यम् । **अजननिरिति** । "आक्रोशे नञ्यनिः" (पा०सू० ३।३।११२) इति जनेरनिः । अहन्शब्दोऽत्र पठ्यते । सामर्थ्यादनुपसर्जनाधिकारबाधः । 'दीर्घाह्नी प्रावृड्' इति ङीष्यन्तोदात्तम् । बह्वादिराकृतिगण इति **गणरत्नकृत्** ।

**पुंयोगादा** (पा०सू० ४।१।४८) । हेतौ पञ्चमी । आख्यायामिति (६)पञ्चम्यर्थे सप्तमी । आख्याशब्दो बोधकपरः । आख्याचोपस्थितत्वात्पुंस एव न स्त्रियाः स्त्रियां वर्त्तमानस्य स्त्र्याख्यत्वाव्यभिचारादाख्यापद-

---

"शोणात् प्राचाम्" (पा०सू० ४।१।४३) इत्यस्य नियामकत्वे तु प्रत्युदाहरणं चिन्त्यम् । (१)**नवोढात्वस्येति** । नवोढात्वस्य लज्जाभयपराधीनरतिकत्वस्वरूपतया रतेश्च सुखविशेषरूपत्वेन गुणत्वम् । (२)**विकलवाक्त्वस्येति** । तस्य विकलवचनस्वरूपतया शब्दत्वेन गुणत्वम् । (३)**पतिलाभोत्कण्ठेति** । उत्कण्ठायाश्च स्मृतिरूपत्वाद् गुणत्वम् । कोमलत्वकठोरत्वादीनां संयोगविशेषतया गुणत्वमिति बोध्यम् ।

(४)**प्रियकतिर्वेश्येति** । तथाच परिशिष्टम्—"इतोऽक्तयर्थादनादेशादकतेः" इति । (५)**पुराणशब्द इति** । स च ट्युलन्तः । "पुराणप्रोक्तेषु ब्राह्मणकल्पेषु" (पा०सू० ४।३।१०५) इति निर्देशात् तुडागमाभावः ।

**पुंयोगात्** (पा०सू० ४।१।४८) (६)**पञ्चम्यर्थे सप्तमीति** । यत्तु—इयं सप्तमी अधिकरण एव । तस्याश्च प्रातिपदिकपदार्थेनान्वयः । आख्या च बोधः । तथाच तद्बोधकप्रातिपदिकादित्यर्थः । वृत्तित्वं च जनकतासम्बन्धेनेति, तन्न, जनकताया वृत्त्यनि-

वैयर्थ्यापत्तेः । (१)पुंस्येव यः प्रसिद्धः शब्द इत्यर्थः । (२)पुंयोगाद्धेतोः प्रवृत्तिनिमित्तारोपेण स्त्रियां वर्त्तमानात्पुंबोधकाच्छब्दान्ङीषित्यर्थः । योग-सम्बन्धः । पुंयोगात्किम् ? देवदत्ता । आख्यायां किम् ? प्रसूता । तदभावे हि स्त्रियां वर्त्तमानं यत्प्रातिपदिकं पुंयोगहेतुकप्रवृत्तिनिमित्तकमित्यर्थोऽपि सम्भाव्येत । अस्ति हि तत्प्रवृत्तिनिमित्ते प्रसवे पुंयोगहेतुकत्वम् । उक्तयु-माख्या तु नैषेति भावः । पुंयोगोऽत्र दाम्पत्यरूप एवेति भाष्यस्वरस- "यथेयं भर्तृपापकृतान् बन्धादीन् लभते, एवं तच्छब्दमपि" इति

---

यामकत्वात् । (१)**पुंस्येव यः प्रसिद्ध इति** । इदं चिन्त्यम्, तथा सति चैत्रस्य स्त्री 'चैत्री' इत्यादौ सूत्रस्य चारितार्थ्येऽपि गोपस्य स्त्री 'गोपी' शूद्रस्य स्त्री 'शूद्री' इत्यादेरसिद्ध्यापत्तेः । तत्र गोपशूद्रादेः स्त्रियामपि प्रसिद्धत्वात् । (२)**पुंयोगाद्धेतोः प्रवृत्तिनिमित्तारोपेणेति** । यथा चैत्रस्य स्त्री 'चैत्री' इत्यादौ चैत्ररूपपुंप्रतियोगिक-स्वत्वरूपसम्बन्धप्रयोज्यो यश्चैत्रत्वारोपस्तादृशारोपप्रकारीभूततादृशचैत्रत्वपुरस्कारेण चैत्रस्त्रीबोधकाच्चैत्रपदादनेन ङीष् । नन्वेवं 'गोपी' इत्यादौ ङीष् दुर्लभस्तत्र गोपत्व-रूपप्रवृत्तिनिमित्तस्य स्त्रियामपि स्वत एव सत्त्वेनारोपासम्भवादिति चेत् ? न, अगो-प्यामेव गोपस्त्रियामनेन ङीष्विधानात् । गोप्यां तु जातिलक्षण एव ङीष् । या तु गो-त्वजात्यभाववती,स्वयमपि गोरक्षिणी,गोरक्षकस्त्री च तत्र गोरक्षकस्य स्त्री गोरक्षिकेत्येव

नन्वेवं शूद्रातात्पर्येण शूद्रस्य स्त्रीति व्युत्पत्त्याऽपि 'शूद्री' इति न स्यात् जातौ या-बाधात् । पुंयोगे शूद्रत्वस्य स्त्रीसाधारणत्वेनारोपासम्भवादिति चेत् ? अत्रोच्यते, अ-प्यशूद्रजातीयायामेव शूद्रस्त्रियां 'शूद्री' इति प्रयोग इष्यते, शूद्रजातीयायां तु पुंवद्-टाबेवेति ध्येयम् । केचित्तु पुंवृत्तित्वविशिष्टशूद्रत्वस्यारोपेण शूद्रजातीयायामपि तत्र प्रयोग इष्यते । शूद्रादिपदात् शूद्रजातीयस्त्रीबोधोऽपि आरोपितपुंव्यक्तिवृत्तित्वविशिष्टशू-द्रत्वपुरस्कारेणैवेत्याहुः । यद्वा, यत्र शूद्रजातीयस्त्रियां शूद्रत्वम् अज्ञातं तत्र पुंव्यक्ति-त्वविशिष्टशूद्रत्वारोपेणास्तु शूद्रादिपदात् शूद्रत्वादिपुरस्कारेण बोधः । तद्धर्मावच्छिन्नवि-शेष्यताकबोधे तद्धर्मपर्याप्तप्रकारताकविशेष्यताकज्ञानत्वेन न कारणत्वम्, अपि तु तद्ध-र्मनिष्ठप्रकारताकविशेष्यताकज्ञानत्वेनैव । अत एव 'नीलघटः' इति नीलघटत्वपर्याप्तप्र-कारताकविशेष्यताकज्ञानात् 'सुन्दरो घटः' इति बोधः । न चैवं विशिष्टधर्मारोपो व्यर्थः, शुद्धारोपस्यापि शूद्रजातीयस्त्रियां शूद्रत्वाज्ञानदशायां सम्भवादिति वाच्यम्, आरोपत्व-भ्रमत्वव्याप्यत्वेन भवद्भिरारोपत्वेनाभिमतस्य तादृशस्य ज्ञानस्य तद्वति तत्प्रकारकत्वे भ्रमत्वस्यैवाभावेनारोपत्वस्य तादृशज्ञाने वक्तुमशक्यत्वात् । अस्तु वा घटे रक्तत्वद-शायां रक्तत्वाभावभ्रमात्मकनिश्चये रक्तत्वारोपः, प्रकृते शूद्रस्त्रियां शूद्रत्वाभावभ्रमाभावे

भाष्योक्तेः । 'देवकी' इत्यादि तु गौरादिषु बोद्धव्यमिति (१)केचित् ।

**गोपालिकेति ।** गाः पालयतीति गोपालः, स एव गोपालकस्तस्य स्त्रीत्यर्थः । ण्वुलन्तस्य तु कारकषष्ठ्या समासनिषेधाच्छेषषष्ठ्या समासे आपः सुपः परत्वादित्वं दुर्लभम् । वस्तुतः शेषषष्ठ्या अप्यत्र कारकत्वासुबुत्पत्तेः पूर्वमेव तत्रापि समासः । यथाकथञ्चित्कारकग्रहणेऽपि कथञ्चित्कारकत्वमादाय 'गतिकारकोपपदानाम्' इत्यस्य प्रवृत्ते(२)रत्रत्य**भाष्यात्** (३)"उपपदमतिङ्" (पा०सू० २।२।१९) इतिसूत्र**भाष्याच्च** लाभात् । यद्वा, तन्निषेधस्यानित्यत्वादप्रवृत्तौ कारकषष्ठ्या सुबुत्पत्तेः पूर्वं समासेन तत्रापीत्वं सुलभम् । **सूर्येति ।** सर्त्तेः क्यप्याद्युदात्तसूर्यशब्दाच्चाप्यन्तोदात्तमिदम् । एतेन ङीष्निषेधेन टापैव सिद्धिरित्यपास्तम् । **सूरीति ।** सूर्यस्य स्त्री या कुन्ती इयं मानुषी, न देवतेत्यर्थः ।

**महत्त्वे इति ।** तद्योगे एवैषां स्त्रीत्वमिति भावः । **यवनाल्लिप्यामिति ।** लिप्यर्थकोऽत्र ङीष् "तस्येदम्" (पा०सू० ४।३।१२०) इत्यणबाधक इति बहवः । **लिपिः** अक्षरविन्यासः ।

**मातुलेति ।** मातुलान्नित्ये प्राप्ते उपाध्यायादप्राप्ते विभाषेयम् । **या तु स्वयमेवेति ।** "अपादाने स्त्रियां घञ उपसङ्ख्यानं, तदन्ताच्च वा ङीष्" (का०वा०) इति तृतीये "इङश्च" (पा०सू० ३।३।२१) इति सूत्रे वार्त्तिकादिति भावः । उपेत्याधीयते यस्या इति विग्रहः । अर्येति ह्रस्वादिस्तदाह—**स्वामिनीति ।** "अर्यः स्वामिवैश्ययोः" (पा०सू० ३।

---

शुद्धशूद्रत्वस्यैव चारोपः, तथापि सिद्धमेव न समीहितमिति दिक् ।

(१)**केचिदिति ।** गौरादिषु पाठे मानाभावोऽत्रारुचिः । एवञ्च तेषामसाधुत्वमेवेति प्रामाणिकाः ।

(२)**अत्रत्यभाष्यादिति ।** "गोपालिकादीनां प्रतिषेधः" (का०वा०) इति ह्यत्र वार्त्तिकम् । अस्य 'सिद्धये' इति शेषः । अत्र ह्यविशेषेण इकारघटितानिर्देशात् ण्वुलन्तेऽपि इत्वं भवतीति ध्वन्यते । पूर्वं समासाभावे तु तद् दुर्लभमिति भावः ।

(३)**उपपदमतिङ् इति सूत्रेति ।** तत्र हि "षष्ठीसमासादुपपदसमासो विप्रतिषेधेन" (का०वा०) इति वार्त्तिकमुपन्यस्तम् । षष्ठीसमासस्य सुबुत्पत्त्यनन्तरं प्रवृत्तौ तु उपपदसमासस्यान्तरङ्गत्वात्पूर्वं प्रवृत्तौ विप्रतिषेधासङ्गतिरिति भावः ।

१।१०३) इत्युक्तेः। आर्येति पाठस्तु **कैयटाद्यसम्मतः**। **स्वार्थ इति**। अत एव **भाष्ये** "अर्याणी, अर्या" इत्येवोक्तम्। पुंयोग एव प्रवृत्तौ तु उपाध्यायीतिवद् अर्यीति पक्षे ङीषमेवोदाहरेत्। **कर्मण्यण् इति**। (१)सूत्रं तु 'इन्द्री' इत्यादिव्यावृत्त्यर्थमिति भावः।

**क्रीतात्** (पा०सू० ४।१।५०)। करणादिति वक्तव्ये पूर्वग्रहणादनुवृत्तप्रातिपदिकरूपान्यपदार्थेऽवयववाचिपूर्वशब्देन बहुव्रीहिः। तेन 'वस्त्रेण क्रीता' इति वाक्ये न। अत इति चानुवर्त्तते। करणे किम्? सुक्रीता। **धनक्रीतेति**। "कर्तृकरणे" (पा०सू० २।१।३२) इत्यत्र बहुलग्रहणेन 'गतिकारकोपपदानाम्' इत्यस्यानित्यत्वादत्र सुबुत्पत्त्यनन्तरमेव समास इति भावः। इदम् "उपपदमतिङ्" (पा०सू० २।२।१९) इति सूत्रे **कैयटे** स्पष्टम्। अयमजादिष्वित्यन्ये। एवञ्च 'गति' इत्यादेरनित्यत्वे न मानमिति तदाशयः। अत एवैतत् "कर्तृकरणे"(पा०सू० २।१।३२) इति सूत्रे बहुलग्रहणफलत्वेन **भाष्ये** नोक्तम्। "अम्बाम्ब"(पा०सू० ८।३।९७) इति सूत्रं गवादिग्रहणन्तु नियमार्थम्। तेन 'हृदिस्थः' इत्यादौ षत्वं नेति दिक्।

**अभ्रलिप्तीति**। "कृद्ग्रहणे गतिकारकपूर्वस्यापि" (प०भा०) इति विशिष्टस्य क्तान्तत्वम्। अल्पाख्यायामिति समुदायोपाधिः। अल्पत्वं करणगतं, क्रियागतं वा। **क्तान्तादिति**। क्तान्तान्तादित्यर्थः। प्रत्ययग्रहणपरिभाषालब्धक्तान्तेन प्रातिपदिकस्य विशेषणात्। **ऊरुभिन्नीति**। "जातिकालसुखादिभ्यः परा निष्ठा" (पा०सू० ६।२।१७०) इति भिन्नशब्दस्य परनिपातः। **पाणिगृहीतीति**। अग्निसाक्षिकतया गृहीतपाणिकेत्यर्थः। **भाष्ये** तु "पाणिगृहीत्यादीनां विशेषे" (२)इत्युक्तम्।

---

ननु इन्द्रमानयति जीवयतीत्यर्थेन 'इन्द्राणी' इत्यादीनामपि सिद्धिः स्यादत आह—(१)**सूत्रं त्विति**। इन्द्रस्य स्त्रीत्यर्थविवक्षायाम् 'इन्द्री' इत्यादिर्मा भूत् इत्यर्थमित्यर्थः।

(२)**इत्युक्तमिति**। विशेषश्च "पाणिगृहीती भार्या चेत्। यस्या हि यथाकथञ्चित्पाणिर्गृह्यते पाणिगृहीता सा भवति" इत्येवं **भाष्ये** उक्तः। "यस्या अग्निसाक्षिपूर्वकं पाणिग्रहणं कृतं साऽभिधीयते" इति हि तत्र **कैयटः**।

**अस्वाङ्गपूर्व** (पा०सू० ४।१।५३)। न स्वाङ्गम् अस्वाङ्गं, पूर्वञ्च तत्पदं पूर्वपदं, पुनः कर्मधारयः। अस्वाङ्गभूतात्पूर्वपदात्परं यत् क्तान्तं तदन्तबहुव्रीहेरित्यर्थः, उत्तरसूत्रे **भाष्ये** 'कल्याणपाणिपादा' इत्यादौ तत्प्रवृत्तिवारणाय तत्रैतदनुवर्त्य कर्मधारयस्याश्रयणेनात्रापि तथैवौ(१)चित्यात्। तत्र "यदुपसर्जनं 'पाणिपादम्' इति समुदायो, न स स्वाङ्गम्, स्वाङ्गसमुदायश्च न स्वाङ्गशब्देन गृह्यते। यच्च स्वाङ्गं पादेति, न तदस्वाङ्गरूपपूर्वपदात्परम्" इत्युक्तम्। एवञ्च 'करमुखी' इत्याद्यसाध्वेव। जातिपूर्वादितीहापि सम्बध्यते। दुर्वारत्वात्, तदाह—**नित्ये प्राप्ते इति**। **वस्त्रच्छन्नेति**। बहुव्रीहित्वात् पूर्वपदप्रकृतिस्वरे शेषनिघाते चानुदात्तान्तोऽयम्। 'पुत्रादिनी' इत्यादौ "सुप्यजातौ" इति णिनिनिर्देशेनाऽऽकृतिग्रहणत्वाद्यभावेन च पुत्रशब्दस्य जातिवचनत्वाभावेऽपि 'पुत्रहती' इत्यादौ गौरादिङीषिति बोद्धयम्। अस्वाङ्गादित्येव सिद्धे पूर्वपदग्रहणं स्पष्टार्थम्। किञ्च तदभावेऽस्वाङ्गादिति प्राधान्याद् बहुव्रीहिविशेषणं स्यादिति।

**स्वाङ्गाच्चो** (पा०सू० ३।१।५४)। तदन्तादित्युपसर्जनग्रहणलब्धम्। बहुव्रीहेरित्यनुवर्त्तमाने उपसर्जनग्रहणफलमाह—**अतिकेशीति**। "एकविभक्ति" (पा०सू० १।२।४४) इति केशानामुपसर्जनत्वमप्रधानत्वञ्च। **शिखेति**। इदमेव प्रत्युदाहरणम्। शोभनेत्यादि सुशिखान्तं (२)प्रक्षिप्तं

---

(१)**औचित्यादिति**। अत एव सुन्दरौ ऊरू भिन्नौ यस्या इत्यर्थे 'सुन्दरोरुभिन्ना' इत्यादौ नानेन ङीष्, जातिपूर्वत्वाभावाच्च।

**स्वाङ्गाच्चोपसर्जनात्**। (पा०सू० ३।१।५४) (२)**प्राक्षिप्तमिति**। केचित्तु इदमेव युक्तं, 'कल्याणपाणिपादा' इत्यादौ ङीष्व्यावृत्त्यर्थमस्वाङ्गपूर्वपदादित्यनुवर्त्यास्वाङ्गपूर्वपदात् परं यत् स्वाङ्गं तदन्तात् प्रातिपदिकादिति भाष्योक्तार्थस्य स्वेनैव पूर्वसूत्रे उक्ततया 'शिखा' इत्यादावस्वाङ्गपूर्वपदात्परत्वाभावेन ङीषोऽप्राप्तेः। अत एव **भाष्ये** 'अशिखा' इत्येव प्रत्युदाहृतम्। सहनञ्लक्षणनिषेधस्त्वत्र न शङ्क्यः अस्य शिखा अशिखेति समासे नञोऽभावात्। न च तत्र समासात् प्रागेव टाप्यदन्तत्वाभावात् न दोष इति वाच्यम्, उपसर्जनिष्यमाणन्यायेन, स्त्रीत्वाविवक्षया वा पूर्वं टापोऽप्रवृत्तेः। शिखाशब्दस्य "शीङो ह्रस्वश्च" (उ०सू०) इत्युणादिनिष्पन्नत्वेन सुबुत्पत्तेः प्रागेव समासेनास्यैव प्रवृत्तेश्चेत्याहुः।

अन्येतूपसञ्जनिष्यमाणन्यायेन भविष्यदपवादविषयातिरिक्तत्वेनैव सङ्कोचो, न तु भविष्यदपवादविषयघटकातिरिक्तत्वेन । अत एव 'व्याघ्री' इत्यादेर्गतिकारकेतिपरिभाषाफलत्वं भाष्योक्तं सङ्गच्छते । अन्यथा तत्राप्युपसञ्जनिष्यमाणन्यायेन भविष्यदपवादविषयघटकातिरिक्तत्वेन सङ्कोचे टापोऽप्राप्तौ तदसङ्गतिः स्पष्टैव । अत एव च 'अयजे इन्द्रम्' इत्यादौ पूर्वं गुणः, 'खट्वाक्रीती' इत्यादौ टाप् च सिध्यति । पूर्वं स्त्रीत्वविवक्षाऽपि प्रमाणाभावान्नोपपद्यते । उणादयस्त्वव्युत्पन्ना एवेति न 'गतिकारक' इति परिभाषया सुबुत्पत्तेः पूर्वं समासः । ततश्च न 'अशिखा' 'सुशिखा' इत्यादि प्रत्युदाहरणम्' तत्रान्तरङ्गत्वाट्टापि अदन्तत्वाभावादेव ङीषोऽप्राप्तेः, किन्तु 'शिखा' इत्येव प्रत्युदाहरणम् ।

ननु अस्वाङ्गपूर्वपदादित्यनुवृत्तिपरभाष्येण विरोधः कथम् परिहरणीय इति चेत्? उच्यते, बहुव्रीहिपदानुवृत्त्यैव 'शिखा' इत्यादौ ङीष्व्यावृत्तौ सिद्धायामुपसर्जनग्रहणं "यस्मात् प्रातिपदिकात् ङीष् चिकीर्षितस्तन्निरूपितोपसर्जनत्वविशिष्टस्वाङ्गवाचकान्तप्रातिपदिकात्" इत्यर्थसम्पानद्वारा स्वाङ्गसमुदायवाच्युत्तरपदके 'कल्याणपाणिपादा' इत्यादौ ङीष्व्यावृत्त्यर्थमिति अभिधाय पुनः अस्वाङ्गपूर्वपदादित्यनुवृत्त्या वैयर्थ्यमाशङ्क्य "उपसर्जनग्रहणम् उपसर्जनमात्राद्यथा स्यात् निष्केशी यूका अतिकेशी मालेति" इति तत्प्रयोजनमभिहितं **भाष्ये** । अथ तदर्थमात्रत्वे बहुव्रीहिपदे स्वरितत्वनिवृत्त्यैव अननुवृत्तौ सिद्धायामुपसर्जनग्रहणं किमर्थमिति शङ्कायामिदमुत्तरम्–शिखेत्यादौ ङीषापत्तिरिति । तथाच बहुव्रीहिपदानुवृत्तिमभिप्रेत्योपसर्जनग्रहणफलानिराकरणे प्रवृत्तभाष्यस्यैवास्वाङ्गपूर्वपदादित्यनुवृत्त्यभिलापकत्वेन स्वाङ्गाच्चोपसर्जनादिति यथाश्रुतन्यासे यस्मात् प्रातिपदिकादित्याद्युक्तार्थस्य सत्त्वेन 'कल्याणपाणिपादा' इत्यादौ दोषाभावेनास्वाङ्गपूर्वपदादित्यनुवृत्त्यभावस्यैव सत्त्वेनोपसर्जनग्रहणाभावे 'शिखा' इत्यादिदूषणं सुष्ठुतरम् । न चैवमपि कल्याणपाणिपादेत्याद्येवोक्तार्थसम्पादनद्वारोपसर्जनग्रहणव्यावर्त्यं दातुमुचितं, भाष्योक्तत्वादिति वाच्यम् , **भाष्ये** 'शिखा' इत्यस्यैव प्रथमं प्रत्युदाहरणत्वेनोक्ततया प्रथमत्यागे मानाभावात् ।

**यत्तु**—उक्तरीत्याऽर्थकरणे कल्याणं घटपादं यस्याः सेति बहुव्रीहौ कल्याणघटपादेत्यादौ ङीषोऽनापत्तिः, स्वाङ्गवाचकत्वपर्याप्त्यधिकरणे पादशब्दे स्त्रीप्रत्ययप्रकृतिभूतप्रातिपदिकनिरूपितोपसर्जनत्वपर्याप्तेरभावादिति सिद्धान्तभूते बहुव्रीहिपदानुवृत्तिकल्पे उक्तप्रत्यासत्तिमनाश्रित्यास्वाङ्गपूर्वपदादित्यनुवृत्त्यैव 'कल्याणपाणिपादा' इत्यादौ ङीष् व्यावर्तनीय इति 'शिखा' इति प्रत्युदाहरणं चिन्त्यमेवेति, तदेव चिन्त्यम्, बहुव्रीहिपदानुवृत्तिकल्पे "अस्वाङ्गपूर्वपदादित्यनुवृत्त्यैव उपसर्जनग्रहणव्यावर्त्यकल्याणपाणिपादेत्यादिसिद्धावुपसर्जनग्रहणं बहुव्रीह्यधिकारनिवृत्त्यर्थम्" इतिभाष्यविरोधापत्तेस्तदनभिधानात् । सत्युपसर्जनग्रहणे उक्तरीत्या प्रत्यासत्तिमाश्रित्यार्थकरणे कल्याणघटपादे-

विशिष्टेऽदन्तत्वाभावेनाप्राप्तेः । यद्यपि **भाष्ये** अशिखेति प्रत्युदाहृतं तस्यापेकदेश एव तात्पर्यम् । नञ्पूर्वे "सहनञ्" इति निषेधेन प्राप्त्यभावात् । एतेन क्रीडादिषु शिखाशब्दपाठ इत्यपास्तम् ।

ननु स्वमङ्गं स्वाङ्गञ्चेत् 'सुमुखा शाला' इत्यत्रापि स्यात्, मुखस्य शालाङ्गत्वात् 'सुकेशी रथ्या' इत्यत्र च न स्यात्, केशानां तदङ्गत्वाभावात्, अत आह—**अद्रवमिति** । (१)स्पर्शवद्द्रव्यपरिमाणं मूर्तिः ।

---

स्यादौ ङीष् न प्राप्नोति, अस्वाङ्गपूर्वपदादित्यनुवृत्तौ तु स्यादिति फलभेदस्य स्पष्टत्वात् । न च तत्पक्षे तादृशफलभेदाभावाय तादृशोक्तप्रत्यासत्तिर्नाश्रीयते इति तदनभिधाने मानाभावेन तदेकवाक्यतया तदननुवृत्तिकल्पेऽपि तादृशप्रत्यासत्तिर्नाश्रयणीया, अपि तु 'कल्याणपाणिपादा' इत्यादौ ङीष्व्यावृत्त्यै अस्वाङ्गपूर्वपदात् इत्यनुवर्तनीयमिति 'शिखा' इति प्रत्युदाहरणमयुक्तमेवेति वाच्यम् । उक्तरीत्या प्रत्यासत्त्यनङ्गीकारे स्वाङ्गवाचकपादशब्दे द्वन्द्वसमासनिरूपितोपसर्जनत्वस्य सत्त्वेन उपसर्जनग्रहणस्य कथमपि तदन्ते 'कल्याणपाणिपादा' इत्यादौ ङीष्व्यावर्त्तकत्वं न सम्भवतीति बहुव्रीहिपदानुवृत्तिकल्पे "स्वाङ्गसमुदायप्रतिषेधार्थं तर्ह्युपसर्जनग्रहणं कर्तव्यं, स्वाङ्गाद्यथा स्यात्, स्वाङ्गसमुदायान्मा भूत् कल्याणपाणिपादा" इतिभाष्यविरोधापत्तेः । तस्मात् 'कल्याणघटपादा' इत्यादावपि ङीष् नैवेष्यते । बहुव्रीहिपदानुवृत्तिकल्पे उपसर्जनग्रहणफलखण्डनाय अस्वाङ्गपूर्वपदादित्यनुवृत्त्या 'कल्याणपाणिपादा' इत्यादौ ङीष्वारण 'कल्याणघटपादा' इत्यादेरसङ्ग्रहात् पूर्वपक्षिणो राद्धान्त्याशयानवबोधमूलकमेवेति न तद्बलात् उक्तप्रत्यासत्तेः उक्तभाष्यसिद्धाया अनाश्रयणं युक्तम् । एवञ्च अस्वरितत्वादेव बहुव्रीहिपदाननुवृत्त्या निष्केशी यूका अतिकेशी मालेत्यादिसिद्धावपि 'कल्याणघटपादा' इत्यादौ ङीष्वारणायावश्यकेन उपसर्जनग्रहणेनैव 'कल्याणपाणिपादा' इत्यादावपि तद्वारणसम्भवात् अस्वाङ्गपूर्वपदादित्यनुवृत्तौ फलाभावेन तन्निवृत्त्या 'शिखा' इत्यत्रापि तेनैव वारणमिति **भाष्ये** प्रथमोपात्तं 'शिखा' इति प्रत्युदाहरणमेव युक्तम् ।

न च कृते उपसर्जनग्रहणे उक्तरीत्या प्रत्यासत्त्याश्रयणेऽपि च 'कल्याणपाणिपादा' इत्यादौ ङीष् दुर्वारः, स्वाङ्गसमुदायेऽपि स्वाङ्गत्वस्य स्पष्टमनुभवसिद्धतया पाणिपादात्मकद्वन्द्वस्य तादृशपाणिपादोभयात्मकस्वाङ्गवाचकतायाः स्पष्टत्वादिति वाच्यम् । स्वाङ्गत्वव्याप्यकरत्वपादत्वादिधर्मपर्याप्तावच्छेदकताकवाच्यतानिरूपितवाचकतापर्याप्त्यधिकरणस्यैव स्वाङ्गवाचकव्यवहारविषयतया समुदायत्वविशेषपुरस्कारेण वाचकपाणिपादात्मकसमुदायस्य तत्त्वाभावादित्याहुः ।

(१)स्पर्शवदिति । स्पर्शवन्ति द्रव्याणि पृथिव्यप्तेजोवायवः, तत्परिमाणमि-

**रथ्येति**। इदानीं प्राणिस्थत्वाभावात्पूर्वलक्षणेनासिद्धिः। एवञ्चेदं 'पूर्वलक्षणे प्राणिस्थत्वमुपलक्षणम्' इत्यत्र तात्पर्यग्राहकमिति भावः। प्रतिमादिगतस्तनस्य प्राणिनि कदाप्यदृष्टत्वादाह—**तेन चेदिति**। अप्राणिनोऽपि स्वाङ्गं (यदि) तेन तज्जातीयेन वस्तुना प्राणी यथा सम्बद्धस्तथाऽप्राणी सम्बद्धश्चेदित्यर्थः। अत एव 'तस्य चेत्तत्तथा युतम्' इत्यस्य "अप्राणिनोऽपि स्वाङ्गम्" इति(१)शेषो **भाष्ये** दर्शितः।

**पुरस्तादिति**। स ह्यनन्तरस्यैव बाधकः। **मध्ये इति**। स हि पूर्वस्यैव बाधकः। **प्रामाणिका इति**। एवञ्च 'सुगात्री' इत्यादयोऽपप्रयोगा एवेति भावः।

**उरः क्रोडेति**। टाबन्तोऽयं स्वभावतो विशेषविषयः।

**शूर्पणखेति**। "पूर्वपदात्सञ्ज्ञायाम्" (पा०सू० ८।४।३) इति णत्वम्। केवलयौगिकत्वे तु 'शूर्पनखी' इत्येव।

**न ङीबिति**। अस्वरितत्वादिति भावः।

**इति शब्द इति**। एवञ्च भाषायामिति व्यर्थम्। छन्दसीत्यस्य "दिक्पूर्वपदात्" (पा०सू० ४।१।६०) इत्यत्रासम्बन्धेनास्वरितत्वादसम्बन्धसिद्धेः। परे तु दिगिति सूत्रे "वाहः" (पा०सू० ४।१।६१) इत्यत्र च (२)छन्दसीति वर्त्तते। लोके त्वन्तोदात्तमेव 'प्राङ्मुखी' इति। एवञ्च तन्निवृत्तिबोधनाय भाषाग्रहणम्। इतिश्चार्थे, तेन छन्दस्यपि। अत एव "ङेराम्" (पा०सू० ७।४।११६) इति सूत्रे **कैयटे**—'सख्यशिश्वी च भाषायाम्' इति पाठो दृश्यते इत्याहुः।

---

त्यर्थः। (१)शेष इति। "तस्य चेत् तत् तथा युतम्" इति लक्षणस्य अप्राणिसम्बद्धविषयकत्वं स्पष्टयितुम् "अप्राणिनोऽपि स्वाङ्गम्" इति शेषो दर्शित इत्यर्थः। तत्र तस्येति करणस्यैव शेषत्वविवक्षया षष्ठी। तादिति अप्राणिबोधकम्। तथेति सम्बन्धप्रकारबोधकम्। तथा च "प्राणी यथा प्राण्यङ्गेन सम्बद्धो भवति तथा अप्राणी प्राण्यङ्गजातीयेन वस्तुना सम्बद्धश्चेत् अप्राणिनोऽपि अवयवः स्वाङ्गं स्वाङ्गपदग्राह्यो भवतीत्यर्थः। मूले यदिशब्दघटितोऽपपाठः। अग्रे चेच्छब्दोपादानात्।

(२)छन्दसीतीति। "दीर्घजिह्वी च छन्दसि" (पा०सू० ४।१।५९) इति सूत्रादिति शेषः।

**क्वचिदिति** । सर्वविधीनां छन्दसि वैकल्पिकत्वेन 'सखा सप्तपदी भव' इति सिद्धम् । न विद्यते शिशुरस्या इत्यशिश्वी । क्वचिदस्याद्युदात्तत्वन्तु छान्दसत्वात् ।

जातिशब्देन अर्थे कार्यासम्भवात्तद्वाचकग्रहणमित्याह—**जातिवाचीति** । अनन्यभावे विषयशब्द इत्याह—**न च स्त्रियां नियतमिति** । (१)भिन्नेष्वभिन्नाभिधानप्रत्ययनिमित्तं जातिः, (२)नित्यमेकमने-

---

**जातेरस्त्री (पा०सू० ४।१।६३)** । **(१)भिन्नेष्वभिन्नाभिधानप्रत्ययनिमित्तमिति** । अभिधीयतेऽनेनेत्यभिधानम् । प्रत्ययः प्रतीतिः । अभिधानं च प्रत्ययश्चाभिधानप्रत्ययौ तयोर्निमित्तं हेतुः । एवञ्च भिन्नेषु पदार्थेषु अभिन्नाभिधाननिमित्तं जातिः अभिधानेऽभिन्नत्वं चैकरूपपुरस्कारेण बोधकत्वम् । यद्रूपपुरस्कारेणाभिधानस्यानेकधर्मिबोधकता तदिति यावत् । एवं भिन्नेष्वभिन्नप्रत्ययनिमित्तं जातिः । प्रत्ययेऽभिन्नत्वं चैकरूपनिष्ठप्रकारतानिरूपकत्वेन । यद्रूपपुरस्कारेण प्रत्ययस्यानेकावगाहित्वं तत्त्वमिति तत्त्वम् । घटादावभावादौ चातिप्रसङ्गवारणाय विशेषणान्तरमपि देयमित्यन्यत् । लक्षणान्तरमाह–**(२)नित्यमेकमनेकानुगतमिति**। नित्यत्वे सत्येकत्वे सति समवायेनानेकवृत्तित्वमित्यर्थः । नित्यत्वोक्त्या घटस्य समवायेनानेककपालवृत्तित्वेऽपि न जातित्वम् । एकत्वं सजातीयद्वितीयरहितत्वम् । तच्च स्वसामानाधिकरण्य, स्वाभावसामानाधिकरण्य, स्वसमानाधिकरणाभावप्रतियोगित्व, स्वावृत्तिजात्यभाववत्वैतच्चतुष्टयसम्बन्धेन स्वविशिष्टं यत् तत्सामानाधिकरण्याभावरूपम् । यत् जातित्वेन विवक्ष्यते तत् स्वपदेन ग्राह्यम् । अनेन विशेषणेन दिगाकाशसंयोगादेर्न जातित्वम् । स्वसामानाधिकरण्यादिपूर्वोक्तचतुष्टयसम्बन्धेन दिगाकाशसंयोगविशिष्टो यो दिक्कालसंयोगस्तत्सामानाधिकरण्यस्यैव दिगाकाशसंयोगे सत्त्वेन तदभावरूपसजातीयद्वितीयरहितत्वस्य तत्रासत्त्वात् । अत्र वैशिष्ट्यकुक्षौ प्रथमसम्बन्धानुपादाने पटादिगततद्व्यक्तित्वे घटत्वादिवैशिष्ट्यात् तत्सामानाधिकरण्यात् घटत्वादिजातावव्याप्तिः । द्वितीयसम्बन्धानुपादाने घटादिगततद्व्यक्तित्वे घटत्वादिवैशिष्ट्यात् पूर्ववत् अव्याप्तिः । तृतीयसम्बन्धानुपादाने द्रव्यत्वादौ घटत्वादिवैशिष्ट्यात् तत्सामानाधिकरण्यात् घटत्वादावव्याप्तिः । चतुर्थानुपादाने पृथिवीत्ववैशिष्ट्यस्य पार्थिवपरमाण्वाकाशसंयोगे सत्त्वात् तत्सामानाधिकरण्यात् पृथिवीत्वेऽव्याप्तिः । संयोगस्याव्याप्यवृत्तित्वेन तृतीयसम्बन्धस्यापि सुवचत्वात् । पृथिवीत्वावृत्तिसंयोगत्वजातेस्तत्र सत्त्वेन चतुर्थसम्बन्धाभावान्न चतुष्टयसम्बन्धेन स्वविशिष्टधर्मसामानाधिकरण्यं पृथिवीत्वे इति लक्षणसमन्वयः ।

**केचित्तु** एतत्फलं जातिसमुदायस्य न जातित्वम् । अन्यथा तादृशसमुदायस्य तत्तदवयवजात्यात्मकत्वादनेकवृत्तित्वेन तत्त्वं स्यादेव । यदि च समुदायस्यावयवात्म-

कानुगतं सामान्यमित्यस्य च (१)शुक्लादिगुणस्यैकत्वनित्यत्वपक्षे तत्रातिव्याप्तिः। (२)'जननेन प्राप्यते सा जातिः' इति च युवत्वादावव्याप्तमत आह—(३)**आकृतीति**। ग्रहणमिति करणे ल्युट्। सामान्यं नपुंसकम्। आकृतिरवयवसन्निवेशः। आकृतिर्ग्रहणं यस्या इति विग्रहस्तदाह—**अनुगतेति**। ईदृशाकारो गौरित्याकृत्युपदेशादिव्यङ्ग्या इत्यर्थः। न च बाल्याद्यवस्थाभेदभिन्नानेकदेहवृत्तिदेवदत्तत्वादेराकृतिव्यङ्ग्यत्वेन तत्रातिव्याप्तमिदमिति वाच्यम्, (४)समानकालिकानेकव्यक्तिवृत्त्यनुगतसंस्थानव्यङ्ग्येत्यर्थात्, (५)अवस्थाभेदेऽपि तद्भेदाप्रतीतेश्च, स एवायमिति प्रतीतेश्च, तज्जातीयोऽयमित्यप्रतीतेश्च। (६)अत एवेन्द्रत्वादिकं न जातिः। पञ्चेन्द्री-

---

कतया जातिसमुदायेऽपि जातित्वमिष्यते एवेत्युच्यते, तदा विशेषसमुदायस्य जातित्वाभावस्तत्फलम् इत्याहुः।

(१)**शुक्लादीति**। हिमपयःशङ्खादिषु सर्वत्र 'शुक्लः' 'शुक्लः' इति समानप्रतीत्या समानशब्दप्रयोगेण च तेषामपि घटत्वादिवत् नित्यत्वमेकत्वं च सिध्यतीति भावः। उक्तलक्षणद्वयेऽतिव्याप्तिं प्रदर्श्य तृतीयलक्षणमाह—(२)**जननेन प्राप्यते सा जातिरिति**। स्वतादात्म्य, स्वाधिकरणद्रव्योत्पादकसामग्रीतराप्रयोज्यानुयोगिताकसम्बन्धप्रतियोगित्वं जातित्वम्। घटोत्पादकसामग्र्येव घटत्वप्रतियोगिकसमवायीयघटनिष्ठानुयोगित्वप्रयोजिकेत्याशयः। अत्राप्यव्याप्तिं प्रदर्श्य चतुर्थलक्षणमाह—(३)**आकृतीत्यादि**। तार्किकादिसम्मतस्य देवदत्तत्वादीनां जातित्वस्य 'न च' इत्यादिनाऽऽशङ्काखण्डनमाह—(४)**समानकालिकेति**। समानकालिका या अनेकव्यक्तयस्तद्वृत्ति यदनुगतसंस्थानं तज्ज्ञानजन्यज्ञानविषयीभूता जातिरिति। परिहारान्तरमाह—(५)**अवस्थाभेदेऽपीत्यादि**। एवञ्च परस्परं विभिन्नतया प्रतीयमानानेकव्यक्तिवृत्तित्वविशिष्टसंस्थानज्ञानजन्यज्ञानविषयीभूता जातिरिति लक्षणम् इत्यर्थः। यद्वा, अवस्थाभेदेऽपि धर्मिणाऽभेदात् देवदत्तत्वादीनां न जातित्वम्। अनेकव्यक्तिवृत्तित्वाभावात् इत्यर्थः। ईदृशाकारो गौरित्युपदेशवाक्यस्य गोत्वबोधेच्छाप्रयोज्यतया "ईदृशाकारे गोत्वम्" इति समानाकारकतया गोत्वबोधे एव तात्पर्येण तादृशाकारविशिष्टधर्मिणः प्रत्यक्षादिनाऽवगमे तादृशाकारज्ञानाधीना गोत्वादिजात्यवगतिरेव, धर्मिणः सन्निकर्षेणैव गृहीतत्वात्। एतेन जात्याश्रयव्यक्तेरपि आकृतिग्राह्यतया जातित्वापत्तिरित्यपास्तम्। (६)**अत एवेति**। समानकालिकानेकव्यक्तिवृत्तित्वविशिष्टानुगतसंस्थानव्यङ्ग्याया एव जातित्वादेवेत्यर्थः। इन्द्रत्वादिकं तु ऐश्वर्यविशेषरूपं भूतभविष्यद्यावदिन्द्रवृत्त्येकं, देवदत्तादिपदवत् तत्तद्व्यक्तिवृत्तिनिमित्तकत्वे नानार्थत्वापत्त्या, श्रुत्यादिस्थेन्द्रादिपदस्यैकेन्द्र-

पाख्यानादिभिरनेकेषां समकालिकत्वेऽपि सर्वेषां संस्थानस्यैकत्वे मानाभावात्। 'दुर्गा' 'अपर्णा' इत्यादौ स्त्रीविषयत्वादपि न ङीष्। **तटीति।** अनुगतसंस्थानव्यङ्ग्यमेतत्। जलसमीपदेशविशेषो हि तटम्।

नन्वेवं वृषलत्वादीनां जातित्वं न स्यात्। अवयवसंस्थानस्य ब्राह्मणादिसाधारण्येन तस्या आकृतिग्रहणत्वाभावात्, किन्तु साक्षादुपदेशगम्या सेत्यत आह–(१)**लिङ्गानामिति।** इयमपि जातिरित्यर्थः। लिङ्गानामिति कर्मणि षष्ठी। सर्वाणि लिङ्गानि न भजति इति सर्वशब्दस्य लिङ्गापेक्षत्वेऽपि **भाष्य**प्रामाण्यात् भजो ण्विः, समासश्च। **आख्यातम्** आख्यानम्, उपदेशः। **कथनात्**–उपदेशात्। एकत्र 'इन्द्रः' इत्युपदिष्टे अन्यत्र तद्ग्रहे मानाभावान्नेन्द्रत्वादि तथा। ब्राह्मणत्वन्तु एकत्रोपदिष्टे (२)तत्पित्रादिषु सुग्रहम्। वृषलत्वं (३)तदपत्यतत्सहोदरादौ सुग्रहम्।

---

षेधकृतापत्तौ तदितरेन्द्रपूजने यागादिसम्पादनाभावापत्तेः। एतेनैतस्य देवदत्तत्वाद्यविशेषेण पुनरुक्तत्वमित्यपास्तम्।

लक्षणान्तरमाचष्टे—(१)**लिङ्गानामितीति।** लिङ्गान्वयितावच्छेदकताकूटाभाववत्त्वे सति 'अयं ब्राह्मणः" इत्याद्याकारकवाक्यात्मकोपदेशविशिष्टज्ञानप्रकारत्वं जातित्वम्। उपदेशवैशिष्ट्यं च ज्ञाने स्वजन्यज्ञानजन्यत्वं, स्वजन्यज्ञानविधेयीभूतधर्मविधेयकत्वं, स्वजन्यज्ञानीयधर्मिताव्यधिकरणधर्मिताकत्वमेतत्त्रितयसम्बन्धेन। यथा 'अयं ब्राह्मणः' इत्युपदेशाद् एतद्व्यक्तिधर्मिकब्राह्मणत्वप्रकारकज्ञाने 'एतत्पिता ब्राह्मणः' इति ज्ञानं स्वविशिष्टं, तत्प्रकारकत्वं नपुंसकत्वान्वयितानवच्छेदकत्वेन लिङ्गान्वयितावच्छेदकताकूटाभाववत्त्वं च ब्राह्मणत्वे इति तस्य जातित्वं सिद्धम्।

यत्तु सकललिङ्गविशिष्ट–शूद्रत्वादिविशिष्टार्थकतदादिशब्दजन्यबोधे शूद्रत्वादीनामपि सकललिङ्गान्वयितावच्छेदकतया लिङ्गान्वयितावच्छेदकताकूटाभावाभावेन जातित्वानापत्त्येदं चिन्त्यमिति; तन्न, तत्तल्लिङ्गप्रतियोगिकसम्बन्धस्यापि पदार्थतया आकाङ्क्षाप्रयोज्यतावच्छेदकविलक्षणरूपावच्छिन्नसंसर्गताश्रयत्वरूपान्वयत्वस्याभावेन प्रकृते च तादृशान्वयितावच्छेदकत्वस्यैव विवक्षितत्वेनादोषात्। वस्तुतस्तु लिङ्गानां च न सर्वभागिति शब्दविशेषणम्; जातिरित्यस्य जातिवाचीत्यर्थ इति न कश्चिद्दोष इति दिक्।

(२)**तत्तत्पित्रादिष्विति।** विवाहितायां ब्राह्मण्यां ब्राह्मणात् जातस्यैव स्मृत्या ब्राह्मणत्वबोधनात् पित्रादिषु तत्सुग्रहम्; न तु पुत्रादिषु, अन्यजातीयस्त्रियामुत्पन्नस्य तादृशस्त्वाभावात्। **आदिना**—मातुलपरिग्रहः। (३)**तदपत्यतत्सहोदरादा**-

अत्राकृतिग्रहणेति नित्यानित्यसाधारणमिति (१)युवत्वादिकमपि जातिरेतन्मते। अपरं आहेत्यादिना (२)यावद्द्रव्यभावित्वमित्यनित्यव्यावृत्तं लक्षणान्तरं **भाष्ये** दर्शितम्। एवञ्च भिन्न–ऋषिकर्तृकलक्षणद्वयप्रामाण्येन कुमारादिशब्दे जातिकार्यविकल्पः। अत एव 'युवजानिः" इत्यत्र पुंवत्त्वं, 'युवतितरा' इत्यत्र तदभावश्च **भाष्ये** उदाहृतः।

नन्वेताभ्यामपि 'औपगवी' 'कठी' इत्यादेरसङ्ग्रहोऽनुगतसंस्थानव्यङ्ग्यत्वाभावात्सर्वलिङ्गत्वाच्चेत्यत आह–(३)**गोत्रञ्चेति**। (४)शास्त्रीयमत्र गोत्रम्। अत एव गोत्राद्यूनि प्रत्ययो भवति, (५)"स्त्रियां लुक्" इति न्यासे "औपगवी माणविका" इत्यत्राण् योऽनुपसर्जनमित्यनुपसर्जनलक्षण(६)ईकारो न प्राप्नोति, मा भूदेवम् (७)अणन्तादनुपसर्जनादित्येवं भविष्यति" इति

---

विति। न तु पित्रादौ ब्राह्मणादपि शूद्रायां शूद्रोत्पत्तिसम्भवात्। (१)**युवत्वादिकमपीति**। इदमपि "वोतो गुणवचनात्" (पा०सू० ४।१।४४) इतिसूत्रस्थगुणलक्षणे जातिभिन्नत्वमितिद्वितीयविशेषणोपादानस्य फलं बोध्यम्।

मृदुसंस्थानव्यङ्ग्या कुमारत्वजातिः, कठिनसंस्थानव्यङ्ग्या युवत्वजातिः, शिथिलसंस्थानव्यङ्ग्या च वृद्धत्वजातिरिति बोध्यम्। (२)**यावद्द्रव्यभावित्वमिति**। स्वाधिकरणद्रव्यसत्ताव्यापकसत्ताकत्वं जातित्वमित्यर्थः। कुमारत्वादीनां स्वाधिकरणीभूताया युवावस्थापन्नाया व्यक्तेर्या सत्ता तद्व्यापकसत्ताकत्वाभावान्न तत्त्वम्। चैत्रत्वादीनां जातित्वाभावाय समानकालिकानेकव्यक्तिवृत्तित्वादिविशेषणमत्रापि बोध्यम्।

जातिवाचकताप्रयुक्तशास्त्रीयकार्यप्रवृत्तये आरोपितजातिमत्त्वं व्याचष्टे–(३)**गोत्रञ्चेतीति**। अपत्यमात्रं गोत्रमत्रेति प्राचीनमतं खण्डयितुमाह–(४)**शास्त्रीयमिति**। (५)**स्त्रियां लुगिति**। "गोत्राद्यून्यस्त्रियाम्" (पा०सू० ४।१।९४) इत्यत्र अस्त्रियामितियोगविभागेन स्त्रियामभिधेयायां युवप्रत्ययो न भवतीत्यर्थे युवस्त्रियामभिधेयायां युवप्रत्ययस्य निषेधात् गोत्रसञ्ज्ञायाश्च युवसञ्ज्ञया बाधेन गोत्रार्थप्रत्ययस्यानुत्पादात् अपत्यप्रत्ययान्तेन युवस्त्रिया अभिधानं न प्राप्नोतीत्याशङ्कायां "स्त्रियां लुक्" इति न्यासप्रवृत्तिः। सिद्धान्ते तु स्त्रियां युवसञ्ज्ञानिषेधात् गोत्रार्थकप्रत्ययासिद्धिरिति बोध्यम्। (६)**ईकारो न प्राप्नोतीति**। औपगवस्यापत्यं स्त्रीत्यर्थे "अत इञ्" (पा०सू० ४।१।९५) इतीञ्, तस्य लुकि कृतेऽनुपसर्जनाधिकाराद् गोत्राणश्चार्थद्वारेणोपसर्जनत्वात्तदर्थस्य युवप्रत्ययार्थं प्रति विशेषणत्वादण्लक्षण ईकारो न प्राप्नोतीत्यर्थः। (७)**अणन्तादनुपसर्जनादित्येवं भविष्यतीति**। प्रत्यये लुप्ते प्रकृतिरेव प्रत्ययार्थमाहेत्यणन्तस्यानुपसर्जनत्वमिति भावः।

प्रौढया पूर्वपक्षिणोक्ते तदङ्गीकृत्यैव "इह तर्ह्यौपगवीभार्यः, जातिलक्षणः पुंवत्त्वप्रतिषेधो न प्राप्नोति, मा भूदेवं वृद्धिनिमित्तस्येत्येवं भविष्यति। एवन्तर्हि ग्लुचुकायनीभार्ये दोषः" इति "एको गोत्रे" (पा०सू० ४।१।९३) इति सूत्रस्थ**भाष्ये** युवापत्यस्य जातित्वाभावकथनं सङ्गच्छते। अन्यथा जातिलक्षणङीष एव परत्वाद्वक्तुं युक्तत्वं, पुंवत्त्वप्रतिषेधो न प्राप्नोतीत्यसङ्गतिश्च। ग्लुचुकायनीभार्ये दोषस्तु ङीष्पुंवत्त्वप्रतिषेधयोरसिद्धिरूपो बोद्ध्यः। 'सर्वतोऽक्तिन्नर्थात्' इति ङीषि तु पुंवत्त्वप्रतिषेधासिद्धिरेव दोषः। अत एव "ब्राह्मोऽजातौ" (पा०सू० ६।४।१७१) इति सूत्रेऽपत्ये जातौ नेत्यर्थः सङ्गच्छते। तव त्वपत्यस्य जातित्वाव्यभिचारात्तदसङ्गतिः, 'ब्राह्मो नारदः' इत्यसिद्धिः। अतः सामर्थ्येनात्र शास्त्रीयगोत्रस्यैव ग्रहीतुमौचित्यम्। अनन्तरापत्यप्रत्ययान्ते (१)'अवन्ती' इत्यत्र 'जातिप्रयुक्तो ङीषिति "अनुपसर्जनात्" (पा०सू० ४।१।१४) इति सूत्र**भाष्यं** त्वनन्तरेऽश्वत्थाम्नि द्रौणायनिवद्गोत्रत्वारोप इत्यभिप्रायेण। यूनि तु न शास्त्रीयगोत्रत्वारोपः, तत्र युवैव न गोत्रमिति नियमेन तत्संज्ञानिषेधात्, तदाह—**अपत्यप्रत्ययान्त इति**। "अपत्यं पौत्रप्रभृति" (पा०सू० ४।१।१६२) इति परिभाषित इति शेषः। **शाखाध्येत्रिति** षष्ठीतत्पुरुषः, शाखायामस्त्रीविषयत्वाभावात्। **जातिकार्यं लभते इति**। अनेनास्यातिदेशत्वं बोधयति। कठेन प्रोक्तमधीते इति वैशम्पायनान्तेवासित्वात्प्रोक्तार्थणिनेः "कठचरकात्" (पा०सू० ४।३।१०७) इति लुक्। अध्येत्रणः प्रोक्ताल्लुक्। बह्व्य ऋचोऽध्येतव्या यस्या इति विग्रहे "ऋक्पूः" (पा०सू० ५।४।७४) इत्यप् समा-

---

न च सिद्धान्तेऽपि गोत्रापत्यत्वावच्छिन्नमुख्यविशेष्यताकबोधतात्पर्येण तथा प्रयोग इष्यते, तथा विवक्षायां त्वधुनापि स्यादेव। युवापत्यत्वावच्छिन्नमुख्यविशेष्यताकबोधतात्पर्येणैव युवप्रत्ययोत्पत्तेरिति नैष दोष इति वाच्यम्। इदानीं युवसञ्ज्ञया गोत्रसञ्ज्ञाबाधात् गोत्रापत्यत्वावच्छिन्नमुख्यविशेष्यताकबोधतात्पर्येण तथाप्रयोगानापत्तेः युवापत्यत्वावच्छिन्नमुख्यविशेष्यताकबोधेच्छायाम् 'औपगवा' इत्यस्यापत्तेश्च।

(१)**अवन्तीति**। अवन्तेरपत्यं स्त्रीत्यर्थे "वृद्धेत्कोसलाजादाञ्ञ्यङ्" (पा०सू० ४।१।१७१) इति ञ्यङ्, तस्य "स्त्रियामवन्तिकुन्तिकुरुभ्यश्च" (पा०सू० ४।१।१७६) इति लुक्, ततोऽनेन ङीषिति बोध्यम्।

सान्तः। स्त्रिया अध्ययनाभावेऽपि तद्वंश्यत्वात्ताच्छब्द्यम्, यथाऽनधीयाने माणवके। 'ब्राह्मणी' इत्यत्रापत्येऽणि "ब्राह्मोऽजातौ" (पा०सू० ६।४।१७१) इत्युक्तेष्टिलोपाभावः।

(१)परे तु आकृतिग्रहणेत्येव लक्षणम्। आकृतिपदमुपदेशोपलक्षणम्। आकृतिद्वारा साक्षाद्वोपदेशेन ग्राह्या जातिरित्यर्थः। तत्रेदृशाकारो गौरित्याकृत्युपदेशग्राह्या गोत्वादिजातिः, 'अयं ब्राह्मणः' इतिसाक्षादुपदेशग्राह्या ब्राह्मणत्वादिजातिः। (२)यद्वा, आकृतिग्रहणं (३)जातिग्राहकोपदेशस्याप्यु-

---

परे तु "गोत्रे कुञ्जादिभ्यश्च्फञ्" (पा०सू० ४।१।९८) इतिगोत्राधिकारान्ते "अपत्यं पौत्रप्रभृति गोत्रम्" (पा०सू० ४।१।१६२) इति गोत्रसञ्ज्ञाप्रणयनस्वारस्यात्, "अपत्याधिकारात् परं लौकिकं गोत्रम्" इति "यूनि लुक्" (पा०सू० ४।१।९०) इति-सूत्रस्थभाष्यस्वारस्यात्, "अनुपसर्जनात्" (पा०सू० ४।१।१४) इतिसूत्रस्थभाष्य-स्वारस्याच्चात्र लौकिकमेव गोत्रम्। "एको गोत्रे" (पा०सू० ४।१।९३) इतिसूत्रस्थ-भाष्यं तु असिद्धान्तभूतन्यासोपक्रमे प्रवृत्तत्वात् एकदेश्युक्तिः। अस्तु वा तद्भाष्य-प्रामाण्यात् अत्र युवापत्यस्याग्रहणम्, अनन्तरापत्यस्य तु ग्रहणं भवत्येव। ननु अप-त्यमात्रग्रहणे अपत्यस्य जातित्वाव्यभिचारात्। "ब्राह्मोऽजातौ" इत्यत्रापत्ये जातौ ब्रह्मणष्टिलोपो नेत्यर्थासङ्गतिः, 'ब्राह्मो नारदः' इतिप्रयोगासिद्धिश्चेति चेत्? न, तत्र जातावित्यस्य समुदायोपाधितयाऽपत्यप्रत्ययान्तेन ब्राह्मणत्वरूपजातावनवगम्यायामित्य-र्थस्य तवाप्यवश्यं वक्तव्यस्य सत्वेनादोषात्। अन्यथा तव मतेऽपि शूद्ररूपे ब्रह्मणो गोत्रापत्ये जातित्वेन 'ब्राह्मणः' इत्यापत्तेर्दुर्वारत्वात्। तत्राजाताविति निषेधेन टिलो-पाप्राप्तेः। मम तु शूद्रे वाच्ये ब्राह्मणत्वं समुदायेन नैवावगम्यते इति निषेधाभावेन तत्रापि टिलोपे 'ब्राह्मः' इत्येव भवतीति दिक् इत्याहुः।

"आकृतिग्रहणा जातिर्लिङ्गानां च न सर्वभाक्। सकृदाख्यातनिर्ग्राह्या" इति सम-ष्टया एकमेव लक्षणं, न तु लक्षणद्वयमित्याह-(१)परे त्विति। नन्वेवं शुक्लादिगु-णानां जातित्वं दुर्वारम् 'अयं शुक्लः' इत्युपदेशग्राह्यत्वादत आह-(२)यद्वेति। (३)जातिग्राहकोपदेशस्येति। स चेदृशाकारो गौः, अयं ब्राह्मण इति च। अयं शुक्ल इत्यादिश्च गुणग्राहकोपदेशः। अपिर्निश्चये। नचैवमात्माश्रयत्वापत्तिर्जातिलक्षणे जातेः प्रवेशादिति वाच्यम्। स्वप्रयोजकेच्छीयज्ञाननिष्ठोद्देश्यतानिरूपितावच्छेदकतास-मानाधिकरणा या विशेष्यत्वासामानाधिकरणप्रकारता तादृशप्रकारताकज्ञानजनकत्व, स्वतादात्म्योभयसम्बन्धेनोपदेशविशिष्टस्यैवात्र जातिग्राहकोपदेशपदेन ग्रहणात्। अयं ब्राह्मणः, ईदृशाकारो गौरित्याद्याकारको य उपदेशस्तत्प्रयोजिका या अस्य गोत्वज्ञानं

पलक्षणम् । "लिङ्गानाञ्च न सर्वभाक्" इति तत्स्व(१)रूपानुवादकम् । तेन शुक्लादिगुणानामेकत्वेऽपि जातित्वाभावो बोधितः । (२)अत एव "विशेषणानाञ्च" (पा०सू० १।२।५२) इति सूत्रे जातेराविष्टलिङ्गत्वं **भाष्ये** उक्तम् । आविष्टलिङ्गत्वं नियतलिङ्गत्वमिति **कैयटः** । (३)तच्च प्रायिकमिति **केचित्** । '(४)भाष्यप्रामाण्याज्जातेरेकशब्दवाच्याया न त्रिलिङ्गता, 'तटं त्रिषु' इत्यादिकोशकृतां प्रमादः' **इत्यन्ये** । "सकृदाख्यातनिर्ग्राह्या" इत्यनेनैकत्वमनेकानुगतत्वञ्च बोधितम् । सकृदेकवारं क्वचिद्व्यक्तौ साक्षादाकृतिद्वारा वोपदिष्टा व्यक्त्यन्तरे ग्रहीतुं शक्येति तदर्थः । गोत्रञ्चेत्यादि प्राग्वदेव । (५)अत एव—

प्रादुर्भावविनाशाभ्यां सत्त्वस्य युगपद्गुणैः ।
असर्वलिङ्गां बह्वर्थां तां जातिं कवयो विदुः ॥

इति (६)लक्षणान्तरं **भाष्ये** उक्तम् । **सत्त्वस्य** द्रव्यस्य प्रादुर्भावविनाशाभ्यां या तौ प्राप्नोति सा जातिरिति लक्षणम् । (७)यावद्द्रव्य-

---

भवत्वित्याद्याकारिका इच्छा तदुद्देश्यता गोत्वज्ञाने तन्निरूपितावच्छेदकता विषयित्वसम्बन्धावच्छिन्ना गोत्वे तत्समानाधिकरणा तादृशोपदेशजन्यायं गौरित्याद्याकारकज्ञानीयप्रकारता गोत्वनिष्ठा, सा च विशेष्यत्वासमानाधिकरणाऽपीति तन्निरूपकज्ञानजनकस्योक्तोपदेशस्य ग्रहणम् । अयं शुक्ल इत्याद्याकारकोपदेशजन्यज्ञानीया शुक्लादिनिष्ठा तादृशोपदेशप्रयोजकेच्छीयोद्देश्यतावच्छेदकतासमानाधिकरणा प्रकारता न विशेष्यत्वासमानाधिकरणाऽपि तु गुणत्वव्याप्यशुक्लत्वनिष्ठप्रकारतानिरूपितविशेष्यतासमानाधिकरणैवेति नात्र तादृशोपदेशस्य जातिग्राहकोपदेशपदेन ग्रहणमिति । नच 'अयमभावः' इत्याकारकोपदेशजन्यज्ञानीयाभावत्वनिष्ठप्रकारतायास्तादृशत्वात्तन्निरूपकज्ञानजनकस्यायमभाव इत्याकारकोपदेशस्यापि ग्रहणापत्तिरिति वाच्यम् , अभावत्वस्यानुयोगिताविशेषरूपत्वेन तन्निष्ठप्रकारताया विशेष्यत्वासमानाधिकरणत्वाभावात् इति दिक् ।

**(१)स्वरूपानुवादकमिति** । तादृशोपदेशग्राह्यस्य सकललिङ्गनिष्ठापदार्थसंसर्गावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकत्वाभावादिति भावः । "तटं त्रिषु" इत्यादिकोशस्थ प्रमाद एवेत्यस्य वक्ष्यमाणत्वात् । (२)**अत एवेति** । असर्वलिङ्गत्वादेवेत्यर्थः । (३)**तच्च प्रायिकमिति** । "तटं त्रिषु" इत्यादिकोशबलादिति भावः । स्वमतसिद्धान्तमाह—(४)**भाष्येति** । (५)**अत एवेति** । गोत्वब्राह्मणत्वयोरेकलक्षणेन सङ्ग्राहादेवेत्यर्थः (६)**लक्षणान्तरमिति** । गोत्वब्राह्मणत्वोभयसङ्ग्राहकमित्यर्थः । (७)**याव-**

 

भाविनीति तदर्थः । (१)अनेन गोत्वब्राह्मणत्वाद्योरुभयोरपि सङ्ग्रहः । (२)गुणैर्युगपद् द्रव्येण सम्बध्यते । (३)यथा निर्गुणस्य द्रव्यस्य नोपलम्भस्तथा जातिरहितस्यापीत्यर्थ इति **कैयटः** । इदं स्वरूपकथनमेव । अत्र लक्षणे असर्वलिङ्गमित्येतत् मदुक्तार्थकमेव, न तु लक्षणान्तरम् अनुपयोगात् । **बह्वर्थाम्** । सर्वव्यक्तिव्यापिनीमित्यर्थः । एतदेकवाक्यतया (४)पूर्वलक्षणेऽपि मदुक्तव्याख्यैवोचिता ।

(५)अत एव "कः पुनरेतयोर्जातिलक्षणयोर्विशेषः । यथा पूर्वलक्षणं तथा कुमारीभार्य इति भवितव्यं, यथोत्तरं तथा कुमारभार्यः" इति **भाष्ये** लक्षणमित्येकवचनमेव प्रयुक्तम् । अत एवाकडारसूत्रशेषे "आकृतिग्रहणा जातिः" इत्येवोक्तं **भाष्ये** इत्याहुः ।

**बलाकेति** । अयञ्च बिसकण्ठिकापदवाच्यजातिविशेषवाची । स च बकत्वव्याप्योऽन्यो वेत्यन्यदेतत् । (६)अस्त्रीविषयादित्यस्य प्रवृत्तिनिमित्तैक्ये लिङ्गान्तररहितभिन्नादित्यर्थः । (७)एतेन बलां कायतीति यौगिकस्य सर्वलिङ्गत्वात् ।

बलाका बकपङ्क्तिः स्याद् बकाला बिसकण्ठिका ।
बलाका कामुकी प्रोक्ता बलाकश्च बको मतः ॥

इति कोशे पुँल्लिङ्गस्याप्यभिधानाच्च नेदं युक्तमित्यपास्तम् । (८)अत एव "पाककर्ण" (पा०सू० ४।१।६४) इति सूत्रे चरितार्थम् । तद्धि स्त्रीविषयार्थम् । (९)अन्यथा तेषामपि यौगिकेऽर्थे लिङ्गान्तरसम्भवेन पूर्वेण सिद्धे तद्वैयर्थ्यं स्पष्टमेव ।

---

**द्रव्यभाविनीति** । अस्यार्थः प्रागेवोक्तः । उत्तरलक्षणवत्पूर्वस्याप्युभयसङ्ग्राहकता युक्तेति भावः ।

(१)**अनेन**–एकलक्षणेन । (२)**गुणैरिति** प्रकृत्यादित्वात्तृतीया । द्रव्येणेति सहार्थयोगे तृतीया । तत्तात्पर्यमाह–(३)**यथेति** । (४)**पूर्वलक्षणे**–'सकृदाख्यात' इति लक्षणे । (५)**अत एवेति** । पूर्वोक्तलक्षणद्वयस्यैकलक्षणत्वप्रतिपादनादेवेत्यर्थः ।

नन्वेवमप्याद्ये अस्त्रीविषयत्वमस्त्येव, अत आह—(६)**अस्त्रीविषयादित्यस्येति** । (७)**एतेनेति** । अस्त्रीविषयादित्यस्योक्तार्थकरणेनेत्यर्थः । (८)**अत एवेति** । योगार्थाग्रहणेन रूढ्योक्तरीत्या स्त्रीविषयत्वादेवेत्यर्थः । (९)**अन्यथा**–उक्तरीत्या स्त्रीविषयत्वानङ्गीकारे,

ननु "तित्तिरिः ककुभो लावः" इत्यमरे ककुभलावसाहचर्यादस्य पुंस्त्वेन कथं स्त्री-

**पाककर्ण** (पा०सू० ४।१।६४)। जातिवाचिनः किम् ? बहुपुष्पा शाखा। **स्त्रीविषयादपीति**। अजात्यर्थन्तु न, प्राक्पुष्पादिषु जातिवचनेषु नित्यस्त्रीलिङ्गेषु "सदच्काण्ड" (का०वा०) इत्यादिनिषेधात्। **योपधादपीति**। पुनर्जातिग्रहणादिति भावः। अस्त्रीविषयादिति तु पूर्वसूत्रेण विच्छिन्नम्। **तित्तिरिरिति**।

(१)स्त्रीपुंसयोरपत्यान्ता (२)द्विचतुःषट्पदोरगाः।

इत्यमरादयं स्त्रियामपीति भावः। इतः किम् ? दरत्। "द्व्यञ्मगध" (पा०सू० ४।१।७०) इत्यणः "अतश्च" (पा०सू० ४।१।१७७) इति लुक्।

**ऊङुतः** (पा०सू० ४।१।६६)। ङकारो "नोङ्धात्वोः" (पा०सू० ६।१।१७५) इति विशेषणार्थः। अन्यथा 'यवाग्वा' इत्यादावपि निषेधः स्यात्। दीर्घोच्चारणं प्रश्लेषेणोकारद्वयविधानद्वारा (३)'ब्रह्मबन्धूः' इत्यादिबहुव्रीहौ(४)परकन्निवृत्त्यर्थं, रूपाणां सवर्णदीर्घेण सिद्धेरिति **भाष्ये** स्पष्टम्। (५)श्वश्रूरिति तु "श्वशुरः श्वश्र्वा" (पा०सू० १।२।७१) इति निर्देशात्सिद्धम्। **कुरूरिति**। एकादेशस्य पूर्वान्तवत्त्वात्स्वादयः। **अध्वर्युरिति**। अध्वर्युशाखाध्यायिवंशोद्भवेत्यर्थः। **रज्ज्वादीति**। उत इति तु नेह सम्बध्यते 'अलाबूः' इति **भाष्योदाहरणादिति** भावः। 'कृकवाकुः' इत्यत्र मनुष्यजातित्वाभावात्पूर्वेणापि न।

---

स्वसम्भव इत्यत आह—(१)**स्त्रीपुंसयोरिति**। अपत्यान्ताः—अपत्यार्थकप्रत्ययान्ता इत्यर्थः। तेन 'औपगवः' 'औपगवी' इति च सिद्धम्। (२)**द्विचतुःषट्पदोरगा इति**। द्विपद–चतुष्पद–षट्पद–उरग—वाचिनो जातिविशेषाभिधायिनः स्त्रीलिङ्गाः पुंलिङ्गाश्च इत्यर्थः।

(३) **ब्रह्मबन्धूरिति**। ब्रह्मा बन्धुर्यस्येति बहुव्रीहिरयं मनुष्यजातिविशेषे रूढः। तत्रोङा सह सवर्णदीर्घे तस्य पूर्वान्तवत्त्वेन स्त्रीप्रत्ययान्तत्वं चानीय "गोस्त्रियोः" (पा०सू० १।२।४८) इति ह्रस्वो न; उभयत आश्रयणे तन्निषेधादिति स्पष्टं भाष्ये। (४)**परकबिति**। "शेषाद्विभाषा" (पा०सू०.५।४।१५४) इति प्राप्तकबित्यर्थो, न तु "नद्यृतश्च" (पा०सू० ५।४।१५३) इति, नद्यन्तानां यो बहुव्रीहिरित्यर्थेन तस्यात्राप्राप्तेः। दीर्घोच्चारणं श्वश्रूशब्दार्थम्' इत्युक्तं कैश्चित्, तदसङ्गतमिति ध्वनयन्नाह—(५)**श्वश्रूरिति त्विति**।

**पङ्गोश्च** (पा०सू०४।१।६८)। पङ्गुशब्दो गुणवाचीति पूर्वेणाप्राप्तिः। **श्वशुरस्येति**। 'श्वश्र्वा' इति निर्देशादन्त्याकारस्य लोपः। तन्निर्देशसिद्धमेवैतत्। **भाष्ये** त्विदं न दृश्यते। (१)"ङ्याब्" (पा०सू० ४।१।१) इति सूत्रस्थ**भाष्य**स्वरसस्त्वयमनूङन्तोऽव्युत्पन्नं प्रातिपदिकमिति।

**ऊरूत्त** (पा०सू० ४।१।६९)। उपमीयतेऽनयेत्युपमा उपमानं, तद्भाव औपम्यम् उपमानत्वम्। एवञ्च तद्बोधकोरूत्तरपदादित्यर्थः। उत्तरपदाक्षिप्तं पूर्वपदं प्रत्यासत्त्योपमानवाच्येव। अतः 'करभोपमोरुः' इत्यत्र न, तदाह— **उपमानवाचीति। करभेति।** मणिबन्धादाकनिष्ठं करबहिर्भागः करभस्तद्वदूरू यस्या इत्यर्थः।

**उपचारादिति**। शफशब्दप्रवृत्तिनिमित्तस्योरुपदार्थे आरोपादित्यर्थः। एवञ्च समासस्योपमानोपमेयभावाबोधकत्वेन न पूर्वसूत्रप्राप्तिः। तदारोपे च स निमित्तमित्यन्यदिति भावः।

ननु सहशब्दग्रहणं व्यर्थं सर्वस्योरुमत्त्वेन सहशब्दप्रयोगस्य तत्समभिव्याहारे व्यर्थत्वेन 'सहोरूः' इति प्रयोगस्यैवाभावादत आह—**सहेते इति**। रतिश्रममिति शेषः। सह विद्यमानावूरू यस्या इत्यर्थ इति **कैयटः**। अतिरमणीयावित्यर्थ इति तदाशयः 'कमलानि कमलानि' इतिवत्।

**कद्रूरिति**। नागमातुः सञ्ज्ञा। **अच्छन्दोऽर्थमिति**। छन्दसि "कद्रुकमण्डल्वोश्छन्दसि" (पा०सू० ४।१।७१) इत्यनेनैव सिद्धिरिति भावः।

**अञो य इति**। शार्ङ्गरवादीति लुप्तपञ्चम्यन्तम्, अञ इति च षष्ठी। अनुपसर्जनादिति विभक्तिविपरिणामेनास्य विशेषणम्। एवं 'टिड्ढा" (पा०सू० ४।१।१५) इत्यत्रापि सुवचम्। तद्वदत्र पञ्चम्यन्तत्वमपि सुवचम्। अञ्योऽकार इत्यपि पाठः क्वचित्। शार्ङ्गरव्यां जातिलक्षणे ङीषि प्राप्ते वचनम्। अणि आदिवृद्धयोर्गुणौ। पुत्रशब्दोऽत्र पठ्यते तस्य पाठसामर्थ्याज्जातित्वाभावेऽपि ङीन्।

---

(१)**ङ्याबितिसूत्रस्थभाष्येति**। तत्र हि ङ्याबन्तादेव तद्धितोत्पत्तिर्यथा स्यादिति नियमोत्तरं "त्यूङश्चापि ग्रहणं कर्तव्यं, 'युवतिका' 'ब्रह्मबन्धुका' इति। ऊङ्ग्रहणेन नार्थः। नास्त्यत्र विशेषः। उकारान्तादुत्पत्तावूङन्तादुत्पत्तौ वा दीर्घान्ता-

**नृनरयोरिति** । यद्यपि 'नारी' इति नृशब्देन सिद्धं, 'नरी' इति तु पुंयोगङीषा दुर्वारं, जातिग्रहणानुवृत्त्या तत्रास्याप्रवृत्तेरिति नरग्रहणं व्यर्थं, तथाऽपि नरत्वजातिमात्रप्रतिपिपादयिषायां 'नरी' इति व्यावृत्त्यर्थं तद्ग्रहणम् । अत्राद्याकारस्यैव वृद्धिर्लक्ष्यानुसारिव्याख्यानात् । वस्तुत इदं गणसूत्रमनार्षम् । 'नुर्नरस्य च धर्म्या नारी' इति "ऋतोऽञ्" (पा०सू० ४।४।४९) इति सूत्रेण "नरस्य चेति वक्तव्यम्" (का०वा०)इति वार्तिकेन चाद्युदात्तनार्याः सिद्धेः । रूढया योग्यतया तद्धर्म्या नरत्वजातिविशिष्टैव बुद्ध्यते । अत एव "वसेस्तव्यत् कर्त्तरि णिच्च" इति वचनं वास्तुनि भवो 'वास्तव्यः' इति दिगादित्वात्संसाध्य प्रत्याख्यातं **भाष्ये** । नित्यानां शब्दानां यथाकथञ्चिदन्वाख्यानं कार्यमिति **कैयटः** । रूढया सर्वदोषपरिहार इति तदाशयः ।

**यङश्चाप्** (पा०सू० ४।१।७४) । पकारो "याडापः" (पा०सू० ७।३।११३) इत्यत्र सामान्यग्रहणार्थः । चकारस्य ह्यनुबन्धकत्वसम्पादनद्वारा सामान्यग्रहणाविघातकत्वेन चारितार्थ्येऽपि 'आम्बष्ठ्या' 'आवट्या' इत्यादौ परत्वाच्चित्स्वरः पित्स्वरं बाधते इति बोद्धव्यम् । **षाद्यञ इति** । एवञ्च गौकक्ष्यशब्दस्य गर्गादियञन्तस्योदीचां मतेऽनेनैव चापः सिद्धेः स क्रौड्यादिषु न पाठ्यः । सम्प्रसारणन्तु तस्य नेष्टमिति स्पष्टं **भाष्ये** ॥

**यूनस्तिः** (पा०सू० ४।१।७७) । "ऋन्नेभ्यः" (पा०सू० ४। १।५) इति ङीपोऽपवादः । **उत्तरार्थ इति** । इह करणं तदनित्यत्वज्ञापनार्थमिति केचित् ।

## इति स्त्रीप्रत्ययाः ।

---

दुरपत्तावपि "केऽणः" (पा०सू० ७।४।१३) इतिह्रस्वविधानात्" इत्युक्तम् । श्वश्रूशब्दस्योङन्तस्य सत्वे तु तत्र विशेषसत्वात् "नास्त्यत्र विशेषः" इत्यस्यासङ्गतिः स्पष्टैवेति भावः ।

इति स्त्रीप्रत्ययाः ।

(१)"स्वौजसमौड्" (पा०सू० ४।१।२) इतिविहितस्वादीनामर्थविशेषव्यवस्थां दर्शयितुमाह—**प्रातिपदिकार्थेति** । (२)इदमपि सूत्रं (३)क्रियायोगे एव प्रवर्त्तते (४)अन्ततोऽस्तिक्रियायाः सर्वत्र सत्त्वात् ।

---

अथ कारकप्रकरणम् ।

आरोहणावरोहणक्रमयोर्मध्येऽवरोहणक्रमेण शब्दसाधुत्वाभिधायकग्रन्थरचने प्रवृत्तः श्रीमद्भट्टोजिदीक्षितः पूर्वं वाक्यस्फोटस्यैवास्मत्सिद्धान्तसिद्धतयावाक्यस्फोटाभिव्यञ्जकवाक्यसाधुत्वबोधकं पञ्चसन्धिप्रकरणमुक्त्वा ततो वाक्यसाधुत्वबोधनाय वाक्यघटकसुबन्ततिङन्तपदसाधुत्वबोधनस्य आवश्यकतया सूचीकटाहन्यायेन पूर्वं सुबन्तस्यैव साधुत्वबोधकषड्लिङ्गाव्ययप्रकरणे अभिधाय सुप्प्रकृतिभूतप्रातिपदिकसाधुत्वबोधकसमासतद्धित-प्रकरणापेक्षया तदीयोद्देश्यतावच्छेदकसम्पादकतया सुप्साधुत्वबोधककारकप्रकरणस्य लेखनावश्यकत्वेऽपि सुप्प्रातिपदिकयोरन्तर्गतत्वेन, स्त्रीप्रत्ययोत्तरमपि "ङ्याप्प्रातिपदिकात्" (पा०सू० ४।१।१) इत्यनेन स्वादेर्विधानाच्च पूर्वं स्त्रीप्रत्ययप्रकरणमुल्लिख्य तदनन्तरमस्यैव अवश्यनिरूपणीयत्वादाह—(१)**स्वौजसेति** ।

द्वितीयादिवत् प्रथमाऽपि कारकविभक्तिरित्याह—(२)**इदमपीति** । (३)**क्रियायोग इति** । अत्र च "सहयुक्तेऽप्रधाने" (पा०सू० २।३।१९) इति सूत्रेऽप्रधानग्रहणाभावे 'पुत्रेण सहागतः पिता' इत्यत्र पितृपदादपि तृतीयाप्रसङ्गमाशङ्क्य 'कारकविभक्तित्वात् प्रथमा बाधिका भविष्यति' इत्येतदर्थकं समाधानपरं भाष्यमेव मानम् । अन्यथा क्रियान्वयित्वलक्षणकारकबोधकत्वाभावात्तदसङ्गतिः स्पष्टैव । अत एव "तिङ्समानाधिकरणे प्रथमा" इति वार्त्तिकं च सङ्गच्छते । तिङ्सामानाधिकरण्यं च तिङ्बोध्यकारकबोधकत्वरूपं बोध्यम् ।

ननु 'चैत्रः' इत्यादौ न क्रियायोगोऽत आह—(४)**अन्तत इति** । न च 'त्रयः कालाः' इत्यादौ कस्याश्चिदपि क्रियाया अध्याहारः कर्तुं न शक्यते, वर्तमानकालिकसत्ताया भूतकालिकसत्ताया भविष्यत्कालिकसत्ताया वा कालत्रये बाधितत्वादिति वाच्यम्; 'ज्ञायन्ते' इत्यध्याहारेण वर्तमानकालिकज्ञानविषयताश्रयत्वस्य तत्र सत्त्वेनादोषादिति केचित् । अन्ये तु 'सन्ति' इत्यध्याहारोऽपि कर्तुं शक्यः । स्वोच्चारणाधिकरणत्वम्, स्वबोध्यत्वेन तात्पर्यविषयीभूतक्रियाधिकरणत्वम्, स्वोच्चारणप्रतियोगिकप्रागभाव—ध्वंसान्यतराधिकरणकालाघटितत्वम्, इतिसम्बन्धत्रयेण धातुविशिष्टत्वरूपवर्तमानत्वस्वीकारेण कालत्रयगतैकमहाकालकर्तृकसत्तायामध्याहृतास्धातुविशिष्टकालावच्छिन्नत्वस्याबाधात् । यत्र काले वक्ष्यति तत्पर्यन्तमुच्चारणकालात्परमेकं कालमादायातिप्रसङ्गवारणाय ध्वंसाधिकरणकालाघटितत्वमिति विशेषणम् । उच्चारणकालात्प्राग् यत्र काले पाकः कृतः तत्पर्यन्तमेकं कालमादायातिव्याप्तिवारणाय प्रागभावाधिकरणकालाघटितत्वमिति विशेषणमितीत्याहुः ।

आख्यातार्थकर्त्रादिना(१)ऽभेदान्वयेन तद्द्वारकः क्रियायोगो बोद्धव्यः । प्रथमान्तार्थस्यापि क्रियाजनकत्वादस्याः कारकविभक्तित्वेन भाष्ये व्यवहारः ।

ननु कृष्णादिशब्देषु लिङ्गस्यापि प्रातिपदिकार्थत्वाल्लिङ्गग्रहणमनर्थ-

---

स्वप्रतिपाद्यक्रियानधिकरणकालाघटितत्वम् , स्वोच्चारणाधिकरणत्वम् , स्वप्रतिपाद्यक्रियाधिकरणत्वमेतत्त्रितयसम्बन्धेन धातुविशिष्टत्वं वर्तमानत्वम् । क्रियाद्वयान्तर्गतो यः कश्चित्सूक्ष्मकाल उपलभ्यते तत्रापि यत्नविशेषादिरूपक्रियाऽस्त्येवेति तादृशं कालमादाय नाव्याप्तिः । 'त्रयः कालाः' इत्यादावपि भूतभविष्यद्वर्तमानभेदेन भिन्नत्रीत्वसंङ्ख्याविशिष्टो य एको महाकालस्तत्कर्तृका सत्ता उक्तत्रयसम्बन्धेनाध्याहृतास्धातुविशिष्टकालावच्छिन्ना भवितुमर्हतीति न क्षतिरित्यपरे ।

**परेतु** प्रयोगावच्छिन्नक्रियाधिकरणकालः वर्तमानकालः, स एव च लडाद्यर्थः । कीदृशकालावच्छेदकत्वं प्रयोगे इति परिचयायैव प्रागभावाद्यधिकरणाघटितत्वादिघटितलक्षणमुद्घाटितम् । प्रयोगावच्छिन्नक्रियाऽधिकरणेत्यस्य प्रयोगावच्छिन्ना या क्रियाधिकरणता तद्विशिष्टः काल इत्यर्थः । विशिष्टस्यैव च क्रियायामन्वय इति महाकालमादाय न क्षतिरित्याहुः ।

**(१)अभेदान्वयेनेति** । ननु प्रकृत्यर्थस्य साक्षात्क्रियायोगेन प्रथमादिविभक्तीनां कारकविभक्तित्वं, परम्परया तद्योगेन वा ? नाद्यः, प्रथमाप्रकृत्यर्थस्य आश्रयाभेदद्वारकवृत्तित्वसम्बन्धेन क्रियायामन्वयेन प्रथमायाः कारकविभक्तित्वानापत्तेः । नान्त्यः, 'माणवकस्य पितरं पन्थानं पृच्छति' इत्यादौ माणवकपदोत्तरषष्ठ्या अपि तत्त्वापत्तेः । न च क्रियानिष्ठविशेष्यतानिरूपितसंसर्गानवच्छिन्नप्रकारताप्रयोजकत्वमेव कारकविभक्तित्वमिति विवक्षणेन अभेदस्य संसर्गत्वाभावात् प्रथमायाः संसर्गानवच्छिन्नप्रकारताप्रयोजकत्वेन, षष्ठ्याश्च जन्यजनकभावसंसर्गावच्छिन्नप्रकारताप्रयोजकत्वेनादोष इति वाच्यम्, 'सुन्दरस्य माणवकस्य पितरं पृच्छति' इत्यादौ सुन्दरपदोत्तरषष्ठ्यास्तत्त्वापत्तेः, इति चेद्; न, क्रियानिष्ठविशेष्यतानिरूपितकर्मत्वादिषट्केतरसम्बन्धघटितसम्बन्धानवच्छिन्नप्रकारताप्रयोजकत्वं तत्त्वमिति "कारके" (पा० सू० १।४।१३) इति सूत्रव्याख्याऽवसरे विस्तरेण निरूपणीयत्वात् ।

अथ 'पञ्चकं प्रातिपदिकार्थः' इति निष्कृष्टमते लिङ्गस्यापि तत्त्वात् लिङ्गग्रहणं व्यर्थम् इत्याशङ्कायामाह—मूले-**नियतोपस्थितिक इति** । स्वार्थद्रव्यलिङ्गसङ्ख्याकारकाणां पञ्चानां प्रातिपदिकशक्यत्वेऽपि लिङ्गग्रहणसामर्थ्यात् अत्र सूत्रे प्रातिपदिकार्थपदेन नियतोपस्थितिकस्यैवार्थस्य ग्रहणम् । तेन कर्माद्याधिक्ये प्रथमा न भवतीति भावः ।

अथ नियतोपस्थितिकपदार्थो निरूप्यते ।

नियता उपस्थितिर्यस्य स नियतोपस्थितिकः । निपूर्वकयमधातोर्व्यापकत्वमर्थः, आश्रयश्च क्तार्थः, षष्ठ्यर्थश्च विषयता । तथाच व्यापकताश्रयोपस्थितिविषयत्वं प्राति-

क्रमत आह—**नियतेति** । (१)यस्मिन्प्रातिपदिके उच्चारिते यस्या-

---

पदिकार्थत्वमिति शब्दतो लभ्यते ।

तत्र व्यापकत्वस्य यत्किञ्चिन्निष्ठव्याप्यतानिरूपितत्वेन 'किन्निष्ठव्याप्यतानिरूपिता उपस्थितिनिष्ठव्यापकता' इत्याकाङ्क्षायामाह—**(१)यस्मिन्प्रातिपदिके उच्चारिते** इति । प्रातिपदिकोच्चारणनिष्ठव्याप्यतानिरूपिता व्यापकता वाच्या, तथाच प्रातिपदिकोच्चारणनिष्ठव्याप्यतानिरूपितव्यापकतावदुपस्थितिविषयताश्रयत्वं तत्त्वमिति पर्यवसन्नम् । नन्वेवमपि उच्चारयितरि समवायेन उच्चारणस्य, श्रोतरि च तज्जन्योपस्थितेः सत्त्वेन व्यधिकरणत्वात्कथं व्याप्यव्यापकभावापन्नत्वं तयोः। समवायं परित्यज्य स्वजन्यश्रावणप्रत्यक्षसमवायित्वसंसर्गं व्याप्यतावच्छेदकं, समवायं च व्यापकतावच्छेदकं स्वीकृत्योक्तदोषपरिहारेऽपि अगृहीतशक्तिकघटादिपदश्रोतरि स्वजन्यश्रावणप्रत्यक्षसमवायित्वेनोच्चारणस्य सत्त्वेऽपि घटघटत्वसमवायानामुपस्थितेरभावात्तदुपस्थितेर्व्यापकत्वं दुर्घटमेवेति चेत् ? न, स्वविषयपदनिष्ठशक्तिज्ञानसमवायित्व, स्वजन्यश्रावणप्रत्यक्षसमवायित्वोभयसम्बन्धस्य व्याप्यतावच्छेदकत्वोपगमेनादोषात् ।

एतेन नियतलिङ्गघटादिपदस्य बधिरनिकटे उच्चारणेऽपि उपस्थितेरभावात् निरुक्तप्रातिपदिकार्थत्वं तादृशस्थले न स्यादित्यपास्तम्, स्वजन्यश्रावणप्रत्यक्षसमवायित्वसम्बन्धेन बधिरात्मनि प्रातिपदिकोच्चारणस्याभावेन तत्रोपस्थितेरभावेऽपि क्षतिविरहात्।

**वस्तुतस्तु** प्रातिपदिकोच्चारणे व्याप्यतास्वीकारे स्वजन्यश्रावणप्रत्यक्षसमवायित्व, स्वविषयपदनिष्ठशक्तिज्ञानसमवायित्वोभयस्य व्याप्यतावच्छेदकसम्बन्धत्वस्वीकारे गौरवात् स्वविषयकश्रावणप्रत्यक्षसमवायित्वस्वनिष्ठशक्तिज्ञानसमवायित्वोभयसम्बन्धावच्छिन्नप्रातिपदिकनिष्ठव्याप्यतानिरूपितसमवायसम्बन्धावच्छिन्नव्यापकतावदुपस्थितिविषयत्वं प्रातिपदिकार्थत्वमिति वक्तव्यम् ।

प्रातिपदिकनिष्ठव्याप्यता च न प्रातिपदिकत्वसामान्यरूपेण असम्भवात्, नापि तद्व्यक्तित्वेन, अव्यावर्तकत्वात्, किन्तु तत्तदानुपूर्वीप्रकारेणेति बोध्यम् ।

व्यापकतावदुपस्थितिविषयत्वमित्यस्य च व्यापकतावच्छेदकोपस्थितीयविषयताश्रयत्वमित्यर्थः । तेन घटपदजन्यघटत्वप्रकारकोपस्थितौ उद्बोधकान्तरवशात् कदाचित् पटादिभानेऽपि तद्विषयतायाः निरुक्तोभयसम्बन्धेन घटादिप्रातिपदिकाधिकरणकालान्तरीणघटादिविषयकोपस्थित्यधिकरणात्मनिष्ठाभावीयप्रतियोगितावच्छेदकत्वान्नातिव्याप्तिः ।

ननु गृहीतशक्तिकस्यापि उपेक्षया अनुत्पन्नसंस्कारस्य, कालान्तरे लुप्तसंस्कारस्य वा पुरुषस्य शक्तिज्ञानसत्त्वेऽपि तदुपस्थितेरभावेन प्रातिपदिकनिष्ठव्याप्यतानिरूपिता व्यापकता उपस्थितौ न स्यादिति तु नाशङ्कनीयम्, तदर्थं स्वनिष्ठशक्तिविषयकोद्बुद्धसंस्कारसमवायित्व, स्वविषयप्रत्यक्षसमवायित्वोभयस्य व्याप्यतावच्छेदकत्वोपगमात् ।

नन्वत्रोपस्थितिपदेन स्मृतिर्गृह्यते; शाब्दबोधो वा ? नाद्यः, तटशब्दाल्लिङ्गत्रयविषयकबोधस्य आकाङ्क्षाद्यभावेन युगपदनुदयेऽपि लिङ्गत्रयविषयकोपस्थितेर्युगपत्सम्भवेन लिङ्गत्रयोपस्थितेर्व्यापकत्वाल्लिङ्गस्यापि उक्तप्रातिपदिकार्थत्वेन लिङ्गग्रहणवैयर्थ्यात् । नान्त्यः, शाब्दबोधस्य यत्किञ्चिल्लिङ्गविषयकत्वेनोक्तदोषस्य वारणेऽपि घटादिपदशक्तिग्रहवतोऽपि पुरुषस्य योग्यताकाङ्क्षादिकारणविरहिणः 'घटः कर्मत्वम् आनयनं कृतिः' इत्यतो बोधाभावाद् घटादिबोधेऽपि व्यापकत्वस्य दुर्घटत्वात् इति चेद् ? न, स्वविशेष्यकशक्तिज्ञानाकाङ्क्षादिघटितशाब्दबोधसामग्रीसमवायित्वस्य व्याप्यतावच्छेदकसम्बन्धस्य निवेशेनादोषात् ।

नन्वेवमपि सर्वं वाक्यं क्रियया परिसमाप्यते इति क्रियाविशेष्यकस्यैव शाब्दबोधस्य वैयाकरणैः स्वीकारादुच्चार्यमाणप्रातिपदिकनिष्ठव्याप्यतानिरूपितव्यापकतायाः क्रियाविषयकबोधे सत्त्वात् तादृशबोधीयविषयताश्रयत्वेन क्रियाया अपि प्रातिपदिकार्थत्वापत्तिरिति चेत् ? न, प्रातिपदिकनिष्ठव्याप्यतानिरूपितव्यापकतावद्बोधीयविषयताश्रयत्वे सति प्रातिपदिकनिष्ठशक्तिनिरूपकत्वं तत्त्वमिति विवक्षणेन क्रियायाः प्रातिपदिकनिष्ठशक्तिनिरूपकत्वाभावेन दोषाभावात् ।

ननु हरिपदविशेष्यकसूर्याद्यन्यतमयत्किञ्चिदर्थनिरूपितशक्तिज्ञानादिघटितशाब्दसामग्रीसमवायिनः पुंसः तदन्यविषयकशाब्दानुदयात् चालनीयन्यायेन तज्जन्यसर्वबोधस्यैव तदव्यापकत्वात् कस्याप्यर्थस्य तत्प्रातिपदिकार्थत्वं न स्यात् । तत्तदर्थविषयकशाब्दबोधसामग्रीसमवायित्वसम्बन्धावच्छिन्नप्रातिपदिकनिष्ठव्याप्यतानिरूपितव्यापकतावद्बोधीयविषयताश्रयत्वं तत्त्वमित्युक्तौ तु लिङ्गस्यापि तत्त्वेन लिङ्गग्रहणवैयर्थ्यं दुर्वारमेव । तटादिपदार्थपुंस्त्वविषयकशाब्दसामग्रीसमवायिनि पुंस्त्वविषयकशाब्दबोधस्यावश्यमुदयेन निरुक्तसम्बन्धेन विशिष्टबोधे व्यापकत्वस्य स्फुटत्वेन प्रातिपदिकार्थत्वादेव सिद्धेः।

नच स्वरूपतः प्रातिपदिकनिष्ठशक्तिविषयत्वाभाववद्धर्मानवच्छिन्नविषयताश्रयत्वं तत्त्वम् । एवञ्च तटपदं लिङ्गत्वव्याप्यत्वोपलक्षितधर्मावच्छिन्नं, तटत्वावच्छिन्नं च बोधयत्वित्याकारकशक्तेः स्वीकृततया येन रूपेण शक्तिविषयीभूतः पदार्थः तेनैव रूपेण शक्तिज्ञाने शाब्दबोधे च विषयो भवतीत्यनियमेन प्रकृते लिङ्गत्वव्याप्यत्वेन रूपेण पुंस्त्वत्वादौ शक्तिविषयतायामपि स्वरूपतः पुंस्त्वत्वबोधे बाधकाभावात् स्वरूपतः पुंस्त्वत्वेन पुंस्त्वबोधे स्वरूपतस्तटपदनिष्ठशक्तिविषयत्वाभाववत्पुंस्त्वत्वादिधर्मानवच्छिन्नविषयताश्रयत्वं तटतटत्वयोरेव, न तु पुंस्त्वादेरिति न कोऽपि दोष इति वाच्यम्, तच्छब्देऽपि बुद्धिस्थत्वोपलक्षितधर्मावच्छिन्नविषयिण्या एकस्या एव शक्तेः सत्त्वेन बुद्धिस्थत्वेनैव रूपेण घटत्वादौ शक्तिविषयता, न तु स्वरूपत इति स्वरूपतस्तत्पदनिष्ठशक्तिविषयत्वाभाववद्घटत्वाद्यवच्छिन्नविषयताश्रयत्वेन घटादेस्तत्पदप्रातिपदिकार्थत्वानापत्तेः ।

न च प्रातिपदिकनिष्ठशक्तीयविशेष्यतानिरूपितप्रकारताविशिष्टत्वं तत्त्वम् । वैशिष्ट्यञ्च स्वाश्रयत्व, स्वाश्रयावच्छिन्नविषयताश्रयत्वैतदन्यतरसम्बन्धेन । एवञ्च तत्पदस्थ-

ले स्वनिष्ठशक्तीयविशेष्यता घटादौ, तन्निरूपितप्रकारता बुद्धिस्थत्वोपलक्षितघटत्वादौ, एवं तदाश्रयो घटत्वादिस्तदवच्छिन्नविषयताश्रयत्वं घटादेरिति । घटादिपदस्थले च लिङ्गविशिष्टे एकस्या एव शक्तेः स्वीकारात् पुंस्त्वघटत्वोभयनिष्ठप्रकारतायाः शक्तीयविशेष्यतानिरूपितत्वेन तदाश्रयत्वात्तयोः, तदाश्रयावच्छिन्नविषयताश्रयत्वाच्च घटरूपार्थस्येति लक्षणसमन्वय इति वाच्यम्, तटपदस्थले दोषस्य तदवस्थत्वात् । लिङ्गत्वव्याप्यत्वोपलक्षितपुंस्त्वत्वादि, तटत्व, एतदुभयवृत्तिप्रकारतानिरूपितविशेष्यतायास्तटे पुंस्त्वादौ च सत्त्वात् इति चेद्? न, उच्चारितप्रातिपदिकप्रयोज्यबोधीयमुख्यविशेष्यतासमानाधिकरणशक्तीयविशेष्यतानिरूपितप्रकारताविशिष्टत्वं तत्त्वम् । वैशिष्ट्यं च स्वाश्रयत्व, स्वाश्रयावच्छिन्नविषयताश्रयत्वान्यतरसम्बन्धेनेत्युक्तौ दोषाभावात् । तद्यथा, तटपदप्रयोज्यशाब्दबोधीयमुख्यविशेष्यतासमानाधिकरणा शक्तीयविशेष्यता तटनिष्ठैव, न तु पुंस्त्वादिनिष्ठा, तन्निरूपितप्रकारता तटत्वनिष्ठैव, तदाश्रयत्वं तस्य, तदाश्रयावच्छिन्नविषयताश्रयत्वं च तटस्येति ।

नन्वेवमप्येवशब्दस्थलेऽन्ययोगे, व्यवच्छेदे च खण्डशक्तेरेव स्वीकृततया शाब्दीयविशेष्यतासमानाधिकरणशक्तीयविशेष्यता व्यवच्छेदे, न त्वन्ययोगे, तन्निरूपितप्रकारता व्यवच्छेदत्वे, न त्वन्ययोगत्वे; तद्वैशिष्ट्यं व्यवच्छेदव्यवच्छेदत्वयोर्न तु अन्ययोगान्ययोगत्वयोरिति तयोस्तत्प्रातिपदिकार्थत्वं न स्यात् ।

एतदर्थं यदि स्वनिष्ठशक्तिप्रयोज्योपस्थितिप्रयोज्यशाब्दबोधीयविषयतात्वावच्छिन्नव्यापकताविषयताश्रयत्वं तत्त्वम् । व्याप्यव्यापकतावच्छेदकश्च सम्बन्धो निरूपकत्वमित्युच्यते, तावताऽपि न निर्वाहः । तच्छब्दे हरिशब्दे च दोषस्य तादवस्थ्यात् । तच्छब्दनिष्ठशक्तिप्रयोज्योपस्थितिप्रयोज्यो बोधो घटत्वावच्छिन्नविषयकस्तदीयविषयताधिकरणं निरूपकत्वसम्बन्धेन स एव बोधः, तद्वृत्त्यभावो निरूपकत्वसम्बन्धेन पटत्वावच्छिन्नविषयता नेत्याकारकस्तत्प्रतियोगित्वं पटविषयतायाम् । एवं तत्पदनिष्ठशक्तिप्रयोज्योपस्थितिप्रयोज्यो बोधः पटत्वावच्छिन्नविषयकस्तद्वृत्त्यभावप्रतियोगित्वमेव घटनिष्ठविषयतायामिति कृत्वा काऽपि विषयता न व्यापकतावतीति । एवं हरिपदस्थलेऽपि विघटनं ज्ञेयम् । तदर्थं यदि प्रातिपदिकनिष्ठशक्तिविशिष्टविषयताव्यापकविषयताश्रयत्वं तत्त्वम् । वैशिष्ट्यं च स्वनिरूपितत्वं–स्वप्रयोज्योपस्थितिप्रयोज्यशाब्दबोधीयत्वमिति सम्बन्धाभ्याम् इत्युच्यते, तावता हरिपदस्थले दोषवारणेऽपि तच्छब्दस्थले दोषस्य तादवस्थ्यमेव । तद्यथा–हरिपदनिष्ठशक्तिर्विष्णुत्वावच्छिन्नार्थनिरूपिता तन्निरूपितत्वं विष्णुत्वावच्छिन्नविषयतायाम्, तत्प्रयोज्यशाब्दबोधीयत्वं चेति तद्व्यापकत्वस्य स्वस्मिन् विष्णुत्वविषयतायां च सत्त्वेनादोषः । तत्पदस्थले तु एकैव शक्तिरिति कापि विषयतोपदर्शितरीत्या व्यापिका नेति दोषो दुर्वार एवेति चेत्?

न, स्वजन्यबोधविषयत्वप्रकारकतात्पर्यविषयतापर्याप्त्यधिकरणत्वस्वाभाववत्त्वैतदुभयसम्बन्धेन प्रातिपदिकविशिष्टत्वं प्रातिपदिकार्थत्वमिति परिष्कारेणादोषात् । अभा-

वश्च स्वप्रयोज्यधर्मितानिरूपितप्रकारतावत्त्व स्वनिष्ठशक्तिविशिष्टावच्छेदकतावद्विषयतावत्त्वैतदुभयसम्बन्धावच्छिन्नप्रतियोगिताको ग्राह्यः । शक्तिवैशिष्ट्यं च स्वविषयविषयतानिरूपितनिरूपकत्वसम्बन्धावच्छिन्नत्व—स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधनिष्ठभेदप्रतियोगितानिरूपितत्वैतदुभयसम्बन्धेन ।

प्रवृत्तिनिमित्ते तदाश्रये च स्वप्रयोज्यधर्मितानिरूपितप्रकारताश्रयत्वरूपसम्बन्धाभावादेकसत्त्वेऽपि द्वयं नास्तीति प्रतीत्या निरुक्तोभयसम्बन्धावच्छिन्नप्रतियोगिताकोऽभावस्सुलभ इति सर्वत्र लक्षणसमन्वयः । सावच्छिन्नविशेष्यताया एव धर्मितापदेन ग्रहणात् । नियतलिङ्गस्थले पुंस्त्वादौ स्वप्रयोज्यप्रवृत्तिनिमित्तावच्छिन्नधर्मितानिरूपितप्रकारतावत्त्वस्य सत्त्वेऽपि स्वनिष्ठशक्तिविशिष्टावच्छेदकतावद्विषयतावत्त्वरूपसम्बन्धस्याभावात्तत्रापि निरुक्तदिशा उभयसम्बन्धावच्छिन्नप्रतियोगिताकोऽभावस्सुलभ इति तत्रापि लक्षणसमन्वयः । अनियतलिङ्गस्थले च 'तटी' इत्यादौ स्त्रीत्वादौ स्वप्रयोज्यधर्मितानिरूपितप्रकारतावत्त्वस्य, पुंस्त्वादिविषयकबोधे स्त्रीत्वत्वादिना स्त्रीत्वादिविषयको नेति चालनीन्यायेन भेदमादाय स्वनिष्ठशक्तिविशिष्टावच्छेदकतावद्विषयतावत्त्वस्य च सत्त्वात्तत्र निरुक्तोभयसम्बन्धावच्छिन्नप्रतियोगिताकस्याभावो नेति लिङ्गग्रहणं सार्थकम् । प्रकारतावत्त्वं च स्वाश्रयत्व—स्वनिरूपितावच्छेदकताश्रयत्वान्यतरसम्बन्धेन । तेनानियतलिङ्गस्थले स्त्रीत्वत्वादौ नातिव्याप्तिः ।

अत्र तात्पर्यघटितप्रथमसम्बन्धोपादानेन अश्वविषयकबोधतात्पर्येणोच्चरितहरिशब्दादिन्द्ररूपप्रातिपदिकार्थे प्रथमापत्तिः, क्रियायां प्रातिपदिकार्थत्वापत्तिश्च न भवति । अन्यथा 'अश्वारूढ इन्द्रः' इति प्रकृत्यर्थप्रत्ययार्थयोराधाराधेयभावसम्बन्धेनान्वयबोधापत्तिः । स्वाभाववत्त्वरूपद्वितीयसम्बन्धदानात्सूत्रे लिङ्गग्रहणं सार्थकम् । अभावीयप्रतियोगितावच्छेदकप्रथमसम्बन्धोपादानात्तदादिपदस्थले घटादिपदार्थस्य प्रातिपदिकार्थत्वं सिद्ध्यति । अभावीयप्रतियोगितावच्छेदकद्वितीयसम्बन्धोपादानात् नियतलिङ्गस्थले पुंस्त्वादेः प्रातिपदिकार्थत्वं सिध्यति । शक्तिवैशिष्ट्ये प्रथमसम्बन्धोपादानात् प्रमेयत्वेन पुंस्त्वविषयताको नेति भेदमादाय पुंस्त्वादौ नाव्याप्तिः । प्रमेयत्वस्य घटादिपदनिष्ठशक्त्यविषयत्वेन तदवच्छिन्नपुंस्त्वविषयत्वनिष्ठभेदीयप्रतियोगितावच्छेदकतायाः घटादिपदनिष्ठशक्तिविषयविषयतानिरूपितनिरूपकत्वसम्बन्धावच्छिन्नत्वाभावात् । शक्तिवैशिष्ट्ये द्वितीयसम्बन्धोपादानस्यापि नियतलिङ्गस्थले पुंस्त्वादेः प्रातिपदिकार्थत्वसिद्धिरेव फलम् । अन्यथा पदान्तरप्रयोज्यस्त्रीत्वादिविषयकबोधे घटादिपदनिष्ठशक्तिविषयविषयतानिरूपितनिरूपकत्वसम्बन्धेन पुंस्त्वविषयतावान्नेति भेदस्य सत्त्वेन तादृशभेदीयप्रतियोगितावच्छेदकतायाः शक्तिविषयविषयतानिरूपकत्वसम्बन्धावच्छिन्नत्वेन उक्तरीत्या उक्तोभयसम्बन्धावच्छिन्नप्रतियोगिताकस्याभावस्य पुंस्त्वादौ असत्त्वेन दोषस्य दुर्वारत्वात् ।

यत्तु—प्रातिपदिकविशिष्टत्वं प्रातिपदिकार्थत्वम् । वैशिष्ट्यं च स्वनिष्ठशक्तिज्ञा-

नाधीनोपस्थितिप्रयोज्यशाब्दबोधनिष्ठभेदप्रतियोगितानवच्छेदकविषयतावत्त्वसम्बन्धेनेति। तन्न, हर्यादिनानार्थस्थले विष्णुत्वविष्ण्वादीनां प्रातिपदिकार्थत्वानापत्तेः।

यदपि प्रातिपदिकनिष्ठशक्तिविशिष्टविषयतावत्त्वं प्रातिपदिकार्थत्वम्। शक्तिवैशिष्ट्यं च स्वज्ञानाधीनोपस्थितिप्रयोज्यत्व–स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधनिष्ठभेदप्रतियोगितानवच्छेदकत्वोभयसम्बन्धेन। अत्र प्रथमसम्बन्धदानात् साध्यत्वाविषयकबोधस्य कुत्राप्यजननात्तत्र द्वितीयसम्बन्धसत्त्वेऽपि नातिव्याप्तिः। द्वितीयसम्बन्धोपादानात् लिङ्गस्य तटादिप्रातिपदिकार्थत्वं न, चालनीन्यायेन सर्वलिङ्गनिष्ठविषयतानां शक्तिप्रयोज्यबोधनिष्ठभेदप्रातियोगितावच्छेदकत्वात्। नानार्थस्थले तु शक्तेर्भेदात् न दोष इति। तदपि न, तत्पदस्थले शक्तेरैक्यात् घटादिपदार्थे तत्पदप्रातिपदिकार्थत्वानापत्तेः।

एतेन प्रातिपदिकनिष्ठशक्तिविशिष्टविषयतावत्त्वं प्रातिपदिकार्थत्वम्। वैशिष्ट्यं च स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबधोविषयतात्वावच्छिन्ननिरूपितव्यापकतावत्त्वसम्बन्धेनेत्यप्यपास्तम्। तत्पदेन नियमेन कस्यापि बोधस्यानुदयान्निरुक्तविषयतात्वावच्छिन्नव्यापकत्वस्य दुर्लभत्वात्।

न च भवत्परिष्कारेऽपि तत्पुरुष इत्यादौ तत्पदार्थस्य तत्पुरुषेत्यादिप्रातिपदिकार्थत्वानुपपत्तिः, लोमवल्लाङ्गूलवदादिपरतत्पदार्थत्वानुपपत्तिश्च लोमादीनाम्, स्वप्रयोज्यपुरुषत्वाद्यवच्छिन्नधर्मितानिरूपितप्रकारतावत्त्वस्य, चालनीन्यायेन पूर्वोक्तदिशा स्वनिष्ठशक्तिविशिष्टावच्छेदकतावद्विषयतावत्त्वस्य च सत्त्वेन स्वाभावस्य दुर्लभत्वात्; इति वाच्यम्, स्वप्रयोज्यधर्मितानिरूपितप्रकारतायाम् अपदार्थसम्बन्धावच्छिन्नेति विशेषणदानेनादोषात्। अपदार्थसम्बन्धावच्छिन्नेत्यस्य शक्त्यभास्यसम्बन्धावच्छिन्नेत्यर्थः। आकाङ्क्षाभास्यसम्बन्धावच्छिन्नेति यावत्। तथा च 'तत्पुरुषः' इत्यादौ पुरुषत्वाद्यवच्छिन्नधर्मितानिरूपिततत्पदार्थादिनिष्ठप्रकारता विशिष्टशक्त्यङ्गीकारेण शक्तिभास्यसम्बन्धावच्छिन्नैव, न त्वाकाङ्क्षाभास्यसम्बन्धावच्छिन्नेति न दोष इति।

नन्वेवमपि वासुदेवपरकृष्णपदप्रातिपदिकार्थत्वं पुंस्त्वस्य न स्यात्, तस्य कृष्णपदनिष्ठनीलरूपवन्निरूपितशक्तिज्ञानाधीनोपस्थितिप्रयोज्यक्लीबत्वप्रकारकबोधनिष्ठभेदप्रतियोगितानिरूपिता या तन्निष्ठशक्तिविषयपुंस्त्वविषयतानिरूपितनिरूपकत्वसम्बन्धावच्छिन्नाऽवच्छेदकता तद्वद्विषयताश्रयत्वस्य, कृष्णपदप्रयोज्यधर्मितानिरूपितप्रकारतावत्त्वस्य च सत्त्वेनोभयसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभावस्य दुरुपपादत्वादिति चेत्? न, स्वाभाववत्त्वस्य स्थाने स्वनिष्ठशक्त्यभाववत्त्वस्य निवेशेनादोषात्। उभयार्थनिरूपितशक्ततावच्छेदकानुपूर्व्यैक्येऽपि शक्यतावच्छेदकभेदेन शक्तिभेदात् वासुदेवार्थनिरूपितशक्तिज्ञानाधीनोपस्थितिप्रयोज्यपुंस्त्वप्रकारकबोधनिष्ठभेदप्रतियोगितावच्छेदकत्वस्य वासुदेवार्थनिरूपितशक्तिविषयविषयतानिरूपितनिरूपकत्वसम्बन्धावच्छिन्नत्वस्य पुंस्त्वविषयतायामसत्त्वेन उभयसम्बन्धावच्छिन्नप्रतियोगिताकस्वनिष्ठशक्त्यभाववत्त्वस्य सुलभत्वात्।

यद्यपि शक्त्यभावनिवेशे नीलरूपवत्परकृष्णपदप्रातिपदिकार्थत्वापत्तिः पुंस्त्वस्य, तत्र उभयसम्बन्धेन वासुदेवनिरूपितशक्त्यभावस्य सत्त्वात्, तथापि तेन पूर्वोक्तोभयसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्त्व–स्वप्रयोज्यबोधविषयत्वप्रकारकतात्पर्यविषयत्वोभयसम्बन्धेन स्वनिष्ठशक्तिविशिष्टत्वस्योपलक्षणान्न दोषः। नीलरूपवत्परकृष्णपदवाच्यपुंस्त्वे कृष्णपदनिष्ठवासुदेवनिरूपितशक्त्यभावस्य पूर्वोक्तोभयसम्बन्धेन सत्त्वेऽपि वासुदेवनिरूपितशक्तिप्रयोज्यबोधविषयत्वप्रकारकतात्पर्यविषयत्वाभावेन निरुक्तोभयसम्बन्धेन शक्तिविशिष्टत्वाभावात्। पुंस्त्वविशिष्टघटविषयकबोधे पुंस्त्वविशिष्टघटसंयुक्तपटादिविषयकबोधभेदमादाय घटादिपदवाच्यपुंस्त्वादौ अव्याप्तिदोषस्तु नोद्भावनीयः। स्वनिष्ठशक्तिविषयतत्तदर्थविषयत्वपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकप्रतियोगिताकभेदस्यैव ग्रहणात् इति दिक्।

अन्ये तु—शाब्दबोधजनकशक्तिज्ञानविशिष्टविषयतावत्त्वं प्रातिपदिकार्थत्वम्। शक्तिज्ञानवैशिष्ट्यं च स्वजन्यशाब्दबोधविषयतात्वावच्छि व्यापकत्व–स्वप्रयोज्यत्वोभयसम्बन्धेन। तत्पदार्थस्थले च बुद्धिस्थप्रकारवान् तत्पदवाच्य इति शक्तिज्ञानं न शाब्दबोधजनकं, किं तु घटत्वावच्छिन्नस्तत्पदवाच्य इत्यादि विशिष्यशक्तिज्ञानमेव शाब्दबोधजनकमिति तज्जन्यशाब्दबोधविषयतात्वावच्छिन्नव्यापकत्वं तत्पदार्थेऽव्याहतमिति तत्र न दोषः। तटपदं त्रिषु लिङ्गेषु शक्तमित्यादि शक्तिज्ञानमेव अनियतलिङ्गस्थले शाब्दबोधजनकमिति तत्र कस्यापि लिङ्गस्य नियमेनाभानात् स्वजन्यशाब्दबोधविषयतात्वावच्छिन्नव्यापकत्वं लिङ्गविषयतायां नास्तीति लिङ्गग्रहणं सार्थकम्। पूर्ववत्साध्यत्वेऽतिव्याप्तिवारणाय द्वितीयसम्बन्धोपादानमित्याहुः।

तन्न, पुंस्त्वनिरूपितशक्तिमत् तटपदम् इत्यादिशक्तिज्ञानस्यापि शाब्दबोधजनकत्वे बाधकाभावेन शाब्दबोधजनकतादृशज्ञानवैशिष्ट्यस्य पुंस्त्वादिविषयतायां सत्त्वेन तदाश्रयपुंस्त्वादौ तटपदप्रातिपदिकार्थत्वापत्तेर्दुर्वारत्वात्। वस्तुतस्तु पुंस्त्वत्वादिना विशेषरूपेणैव पुंस्त्वादेर्बोधस्य तटादिपदतोऽनुभवसिद्धत्वात् तस्य च विशिष्य पुंस्त्वनिरूपितशक्तिमत् तटपदम् इत्यादिज्ञानं विनाऽसम्भवात् तटपदं त्रिषु लिङ्गेषु शक्तमिति ज्ञानं न शाब्दबोधजनकमिति तद्वैशिष्ट्याभावो न प्रातिपदिकार्थत्वाभावसाधक इति उक्तनिवेशो विफल एवेति बोध्यम्।

अत्रेदं तत्त्वम्। यस्मिन् प्रातिपदिके उच्चारिते इति वाक्ये स्वार्थबोधायेति शेषः। उपस्थितिपदार्थो विषयता। ज्ञानार्थकभासधातोः "शाब्दबोधे भासते" इत्यादौ विषयतार्थकताया दृष्टत्वात्। निपूर्वकयमधातोर्व्यापकत्वमर्थः। तच्च स्वार्थबोधनिरूपितं ग्राह्यमुपस्थितत्वात्। स्वार्थः–प्रवृत्तिनिमित्तम्, बोधः–उपस्थितिः। तथा च प्रातिपदिकप्रवृत्तिनिमित्तविषयकोपस्थितिव्यापकविषयताश्रयत्वं प्रातिपदिकार्थत्वमिति लभ्यते। उपस्थितिव्यापकत्वं च उपस्थितिनिष्ठभेदप्रतियोगितानिरूपितनिरूपकत्वसम्बन्धावच्छिन्नावच्छेदकत्वाभाववत्त्वम्। एवं च नियतलिङ्गघटादिपदप्रवृत्तिनिमित्तघटत्वादिविषय-

कोपस्थितौ 'निरूपकत्वसम्बन्धेन पुंस्त्वादिविषयतावती न' इत्याकारकभेदस्यासत्त्वेन पुंस्त्वादिविषयतायास्तादृशभेदप्रतियोगिताऽनवच्छेदकत्वात्तदाश्रयत्वाल्लिङ्गस्य प्रातिपदिकार्थत्वं सिध्यति । अनियतलिङ्गतटादिपदप्रवृत्तिनिमित्ततटत्वादिविषयकोपस्थितौ तु चालनीन्यायेन 'पुंस्त्वाद्यवच्छिन्नविषयतावती न' इत्याकारकभेदस्य सत्त्वेन सर्वासां लिङ्गविषयतानां तादृशभेदप्रतियोगितावच्छेदकत्वान्न लिङ्गस्य प्रातिपदिकार्थत्वम् । नहि 'लिङ्गत्वव्याप्यत्वोपलक्षितधर्मावच्छिन्नस्तटादिपदवाच्य' इति सामान्यतो ज्ञानं स्वरूपतः पुंस्त्वत्वादिप्रकारकोपस्थितिं जनयितुमर्हति, येन तटादिपदान्नियमेन सर्वलिङ्गविषयिणी उपस्थितिर्भवेत् । तथा सति 'जातिमान् हस्तिपकसम्बन्धी' इति ज्ञानादपि स्वरूपतो हस्तित्वप्रकारकस्मरणापत्तेः । अत एव तत्पदात् स्वरूपतो घटत्वादिप्रकारकबोधाद्युपपादनाय 'घटस्तत्पदवाच्य' इत्यादि शक्तिज्ञानमेवाङ्गीकृतं गदाधरभट्टाचार्यैः । यथा 'बुद्धिविषयतावच्छेदकधर्मावच्छिन्नस्तत्पदवाच्य' इतिज्ञानानन्तरम् 'अत्र घटोऽस्ति' इत्यादिवाक्यतो घटत्वादौ बुद्धिविषयतावच्छेदकत्वे गृहीते मनसा 'घटस्तत्पदवाच्य' इति शक्तिज्ञानं जायते तथा 'लिङ्गत्वव्याप्यत्वोपलक्षितधर्मावच्छिन्नस्तटादिपदवाच्य' इतिज्ञानानन्तरं पुंस्त्वत्वादौ लिङ्गत्वव्याप्यत्वे गृहीते 'पुंस्त्वं तटादिपदवाच्यम्' इत्यादि शक्तिज्ञानं पृथक् पृथग् जायते । यदा च यद्विषयकः संस्कार उद्बुध्यते तदा तद्विषयकं स्मरणं,न तु पदरूपसम्बन्धिज्ञानमात्रेण सर्वलिङ्गविषयकं स्मरणं नियमेन भवति । नहि चैत्रादिसम्बन्धित्वेन पृथक्पृथग्गृहीतानां पदार्थानां चैत्रादिज्ञानमात्रेण नियमेन सर्वभानमनुभवसिद्धम् । उद्बोधकविशेषस्य नियामकत्वात् । तथा च विसर्गादिसमभिव्याहाररूपोद्बोधकवशात् लिङ्गविशेषस्यैव स्मरणात् न नियमेन सर्वलिङ्गस्मरणमिति न तस्य तटादिप्रातिपदिकार्थत्वमापद्यते ।

हर्यादिपदे तु प्रवृत्तिनिमित्तभेदात् तत्तत्प्रवृत्तिनिमित्तविषयकोपस्थितौ तत्तत्प्रवृत्तिनिमित्तविषयतायास्तत्तल्लिङ्गविषयतायाश्च निरूपकत्वसम्बन्धेन सत्त्वान्न तत्राव्याप्तिः । एवं तत्पदेऽपि प्रवृत्तिनिमित्तभेदादेव लक्षणं सङ्गमनीयम् । प्रवृत्तिनिमित्ताश्रये तु सर्वत्र प्रवृत्तिनिमित्तावच्छिन्नविषयताया ऐक्यात् तस्याश्च प्रवृत्तिनिमित्तोपस्थितावव्यभिचरितत्वात्तदाश्रयत्वाल्लक्षणसमन्वयः । सावच्छिन्नविषयताया अवच्छेदकभेदेनैव भेदाङ्गीकारात् । आश्रयभेदेन भेदाङ्गीकारे तु स्वाश्रयत्व-स्वाश्रयावच्छिन्नविषयताश्रयत्वान्यतरसम्बन्धेन निरुक्तविषयतावैशिष्ट्यं निवेशनीयम् ।

पाकादिपदात् खण्डशक्तिस्वीकारेण कदाचित् केवलफलविषयकबोधस्य तदुपस्थितेश्चाङ्गीकारेऽपि व्यापारत्वरूपप्रवृत्तिनिमित्तोपस्थितौ तद्विषयताया नियतत्वान्न तत्राव्याप्तिः । एवं सम्प्रसारणपदे खण्डशक्तिस्वीकारेण तत्तदंशबोधस्यानियतत्वेऽपि अव्याप्तिपरिहार उपपादनीयः ।

पूर्वोक्तस्वाभाववत्त्वनिवेशवादिनस्तु णिजादिसमभिव्याहारे धातुना फलमात्रविषयकबोधजननेऽपि पाकादिकृदन्तपदात् तन्मात्रविषयकबोधस्याजननात्, नवीनमते

र्थस्य नियमेनोपस्थितिः स तदर्थ इत्यर्थः। (१)अन्वयानुपपत्तिपूर्विका लक्षणा

---

विशिष्टशक्तेरेवाङ्गीकारेण णिजादिसमभिव्याहारेऽपि धातुना फलसमानाधिकरणव्यापारप्रतीतेः सत्वात्कुत्रापि व्यापाराविषयकबोधस्य अजननात्, उद्देश्यताप्रयोजकसम्प्रसारणादिपदेन च सम्प्रसारणपदप्रयोज्यविधेयताश्रयेत्यंशस्य यण्स्थानिकेंऽशविशेष्यतयैव भानान्न कुत्राप्यव्याप्तिरित्याहुः।

साध्यत्वविषयतायाश्च वैयाकरणमते बोधनियतत्वेऽपि प्रवृत्तिनिमित्तोपस्थितिनियतत्वाभावान्नातिव्याप्तिरिति न तव्द्यावृत्त्यर्थं प्रातिपदिकनिष्ठशक्तिनिरूपकत्वविशेषणमुपादेयम्। उपस्थितिव्यापकत्वनिवेशे अनियतलिङ्गपदस्थले लिङ्गस्य प्रातिपदिकार्थत्वापत्तिं मन्यमानैः विषयतायां प्रवृत्तिनिमित्तबोधव्यापकत्वनिवेशे तु तदुपादेयमेव। प्रवृत्तिनिमित्तलक्षणं च लिङ्गव्यावृत्तमग्रे वक्ष्यते इति न प्रवृत्तिनिमित्तत्वेन लिङ्गमुपादायानियतलिङ्गस्थले लिङ्गस्य प्रातिपदिकार्थत्वापत्तिः। अन्यत्सर्वं पूर्ववदिति दिक्।

ननु प्रातिपदिकार्थमात्रे प्रथमेत्यस्य प्रातिपदिकार्थविषयकबोधजनकत्वे सति प्रातिपदिकार्थेतरविषयकबोधाजनकादित्यर्थे प्रमेयपदात्प्रथमा न स्यात्। प्रमेयरूपप्रातिपदिकार्थेतरस्याप्रसिद्धेः। यद्यपि प्रकृत्यर्थतावच्छेदकावच्छिन्न—तदर्थतानवच्छेदकानवच्छिन्नविषयताकबोधजनकादित्यर्थे प्रकृते प्रकृत्यर्थतावच्छेदकं प्रमेयत्वं तदवच्छिन्ना, तदनवच्छेदकं घटत्वं तदनवच्छिन्ना च विषयता प्रमेयनिष्ठा तन्निरूपको बोधः प्रमेयविषयकस्तज्जनकत्वं प्रमेयपदे इति प्रथमा सिद्ध्यति, घटादिपदस्थले च प्रकृत्यर्थतावच्छेदकं घटत्वं तदवच्छिन्ना तदनवच्छेदकं पटत्वं तदनवच्छिन्ना च विषयता घटनिष्ठा तन्निरूपकबोधजनकत्वं तस्येति समन्वयोऽपि तथाऽपि प्रमेयवत्पदात् प्रथमा दुर्लभा। तत्र प्रकृत्यर्थतावच्छेदकं प्रमेयवत्त्वं तच्च प्रमेयस्वरूपमिति तदतिरिक्तस्याप्रसिद्धेरिति चेन्न। प्रकृत्यर्थनिरूपितशक्तीयविशेष्यतावच्छेदकत्वाभाववद्धर्मानवच्छिन्नविषयताकबोधजनकादित्यर्थेनादोषात्। प्रमेयवत्पदनिष्ठशक्तीयविशेष्यतावच्छेदकत्वाभाववद् घटत्वं, 'घटत्वे प्रमेयवत्पदनिष्ठशक्तीयविशेष्यतावच्छेदकत्वं न' इत्याकारकाभावस्य सत्त्वात्, तदनवच्छिन्नप्रमेयवदर्थविषयकबोधजनकत्वेन समन्वयादित्यलम्।

ननु लक्ष्यार्थस्य माणवकादेर्नियतोपस्थितिकत्वाभावेन सिंहादिपदरूपप्रातिपदिकार्थत्वं न स्यादत आह—(१)अन्वयानुपपत्तिपूर्विका लक्षणा पदे एवेति। सिद्धे इत्यर्थः। लक्षणा तु प्रातिपदिकस्यैव। एतेन स्वन्ते शक्तिविरहात् तत्र लक्षणाया अयुक्तत्वादयं ग्रन्थश्चिन्त्य इत्यपास्तम्। पदस्य शक्यार्थे संसाधितस्य तद्घटकस्य प्रातिपदिकस्य लक्षणया लक्ष्यार्थबोधतात्पर्येणोच्चारणे तस्य साधुत्वे च क्षतिविरहादिति भावः। अत एव गङ्गायां घोष इत्यादौ तीरबोधेऽपि न नपुंसकह्रस्वत्वम्, प्रथमप्रवृत्तकार्यबाधायोगात्। यद्यपि अनुगतत्वात्तात्पर्यानुपपत्तेरेव लक्षणाबीजत्वमन्यत्र समर्थितं तथापि गङ्गायां घोषः, सिंहो माणवक इत्यादौ तात्पर्यानुपपत्तेरपि अन्वयानुपपत्तिपूर्व-

पदे एव। प्रत्ययोत्पत्तिः सर्वत्र शक्यार्थे एव। (१)शक्यतावच्छेदकारोप एव च लक्षणेति न लक्ष्यासङ्ग्रहो दोषः। तटादिशब्दानां तत्तत्प्रत्ययसमभिव्याहारे सकललिङ्गबोधकतया न किमपि लिङ्गं ततो नियतोपस्थितिकमिति न तद्बोद्ध्यलिङ्गस्यात्र प्रातिपदिकार्थशब्देन ग्रहणमिति लिङ्गग्रहणमिति भावः।

**लिङ्गमात्रेति**। (२)लिङ्गस्यैवाधिक्ये इति क्रमेणार्थः। यद्यपि (३)विशेष्यविशेषणभावोऽप्यधिको भासते तथापि तस्य वाक्यार्थत्वेन बहि-

---

कत्वाल्लक्षणायामन्वयानुपपत्तिपूर्वकत्वमक्षतमेवेति भावः। मीमांसकमते तु अन्वयानुपपत्तिरेव तद्बीजम्। तन्मते वेदस्यापौरुषेयत्वेन तत्र तत्तदर्थबोधेच्छयोच्चरितत्वरूपतात्पर्यानुपपत्तेर्दुर्वचतया "यजमानः प्रस्तरः" "आयुर्वै घृतम्" इत्यादौ यजमानादिपदानां लाक्षणिकत्वानुपपत्तेः। यष्टीः प्रवेशयेत्यादौ तु सफलान्वयानुपपत्तिर्बोध्या इत्यन्यत्र विस्तरः।

ननु शक्यार्थबोधकाले विभक्त्युत्पत्तौ सत्यां विभक्त्यर्थान्वयः शक्यार्थे एव स्यान्नतु लक्ष्यार्थे इत्यत आह–(१)**शक्यतावच्छेदकारोप एवेति**। एवं च शक्यतावच्छेदकरूपेण लक्ष्यस्य भानान्न तत्र विभक्त्यर्थान्वयानुपपत्तिः। स्वप्रकारकारोपविशेष्यत्वसम्बन्धेन तस्यैव प्रकृत्यर्थतावच्छेदकविशिष्टत्वात्। अत एव "गङ्गायां घोषमीनौ" इतिप्रयोगोपपत्तिः। शक्यलक्ष्ययोर्विभिन्नरूपेणोपस्थितौ तु एकरूपावच्छिन्ने मीनघोषयोरनन्वयात् द्वन्द्वो दुर्लभः स्यादिति बोध्यम्।

**परे तु**—उक्तप्रातिपदिकार्थलक्षणे शक्तेरेव प्रवेशेन लक्ष्यस्य प्रातिपदिकार्थत्वं न स्यादिति शङ्का, शक्तिस्थाने वृत्तिपदप्रवेशेन शक्तिलक्षणयोरुभयोरपि लक्षणघटकत्वेनादोष इत्युत्तरमिति रीत्येमं ग्रन्थं योजयन्ति।

(२)**लिङ्गस्यैवाधिक्ये इति**। न च तटादिपदेभ्यः पुंस्त्वाद्यतिरिक्तपुंस्त्वत्वादेस्तत्सम्बन्धस्य च भानात् कथं प्रथमेति वाच्यम्। लिङ्गग्रहणेन लिङ्गभाननियतपुंस्त्वत्वादि-तदनुयोगिकसम्बन्धयोरपि ग्रहणेन तन्मात्राधिक्यस्यैव सत्त्वेनादोषात्।

(३)**विशेष्यविशेषणभावोऽप्यधिको भासते इति**। ननु विशेषणत्वविशेष्यत्वयोर्ज्ञानीयविषयताविशेषरूपत्वात् कथं भासधात्वर्थज्ञानविषयताश्रयत्वमुच्यते, ज्ञाननिरूप्ययोस्तयोर्ज्ञानात्पूर्वमसत्त्वेन तन्निष्ठज्ञानीयान्यविषयताप्रयोजकस्य तत्र दुरुपपादत्वादिति चेन्न। तदधीनस्थितिकत्वरूपविशेषणत्वस्य, तत्स्थितिनियामकत्वस्य विशेष्यत्वस्य च ज्ञानानपेक्षवस्तुधर्मत्वेन ज्ञानभानप्रयोजकत्वस्य तत्र सूपपादत्वात्। तत्र प्रत्यक्षे तद्भाननियामकः स्वरूपविशेषः, शाब्दे तु घटघटत्वाद्योस्तद्भाननियामकः 'घटपदं घटत्वनिष्ठविशेषणतानिरूपितविशेष्यत्वावच्छिन्ने शक्तम्' इत्याद्याकारकः शक्तिग्रह एव। नीलो घट इत्यादौ घटादिपदार्थनिष्ठविशेष्यतानिरूपितविशेषणताभाननियामकस्तु वा-

क्यशक्तिग्रह एव । एतदर्थमेव वाक्यशक्तिरङ्गीकृता ।

ज्ञानानपेक्षपूर्वोक्तविशेष्यविशेषणभाव एव प्रत्यक्षेऽभावभानप्रयोजकत्वेन नैयायिकैरप्यभिहितः ।

स च 'गुणकर्मसामान्यविशेषसमवायाभावानां द्रव्यं प्रति विशेषणत्वमेव, द्रव्यस्य तु तान्प्रति विशेष्यत्वमेव' इत्येवं तेन सह तेषां व्यवस्थितः । गुणादीनां परस्परमव्यवस्थितः । आश्रयद्वारैव तेषां तत्त्वात् । अभावस्य तु सर्वान्प्रति विशेषणत्वमेवेति तेनापि द्रव्यादीनां नियतः ।

द्रव्याणां तु यस्य यदधीनस्थितिकत्वं नास्ति यथा राजपुरुषयोः, तयोर्धर्मपर्यालोचनया विशेष्यविशेषणभावो भवति । राज्ञः स्वरूपेण पुरुषाधीनस्थितिकत्वाभावेऽपि तन्निष्ठस्वामित्वस्य तदधीनस्थितिकत्वात्तेन सम्बन्धेन पुरुषं प्रति विशेषणता 'राज्ञः पुरुष' इत्यत्र भासते । 'पुरुषनिष्ठस्वत्वस्य च राजाधीनस्थितिकत्वात्तेन सम्बन्धेन राजानं प्रति विशेषणता 'पुरुषाणां राजा' इत्यत्र प्रतीयते । यद्धर्मस्य अन्याधीनस्थितिकत्वं तदाश्रयनिष्ठतदपेक्षविशेषणत्वे तदवच्छिन्नत्वस्यैवौचित्येन राजनिष्ठस्वामित्वापेक्षविशेषणत्वे स्वामित्वसम्बन्धावच्छिन्नत्वस्यैवोचित्वात् तस्यैव षष्ठ्यर्थत्वं प्राचीनाः स्वीकुर्वन्ति ।

पुरुषस्यापि स्वामितानिरूपकत्वं न स्वरूपेण किन्तु स्वत्वविशिष्टत्वेनेति स्वत्वापेक्षया विशेष्यत्वात् स्वत्वसम्बन्धावच्छिन्नं विशेष्यत्वमिति विशेष्यविशेषणभावनियामकः स्वत्वस्वामित्वसमूहः षष्ठ्यर्थ इति नवीनाः ।

सम्बन्धापेक्षविशेष्यविशेषणभावस्य द्विष्ठत्वेन तन्नियामकसम्बन्धस्यापि द्विष्ठत्वौचित्यात् ।

गुणगुण्याद्योरपि स्वरूपतो विशेष्यविशेषणभावस्य व्यवस्थितत्वेऽपि धर्मापेक्षयाऽव्यवस्थितत्वमेव । यथा द्रव्यस्य गुणाद्यनपेक्षत्वेऽपि तन्निष्ठाधारत्वस्य गुणाद्यपेक्षत्वात् आधारतासम्बन्धेन गुणादीन् प्रति विशेषणत्वं 'घटे रूपम्' इत्यादौ प्रतीयते । एतदभिप्रायेणैव "तस्मिन्निति निर्दिष्टे पूर्वस्य" इति सूत्रे गुणगुणिनोरपि विशेष्यविशेषणभावोऽनियतो व्युत्पादितः । स्वरूपतो नियतं विशेष्यविशेषणभावमादाय तु "वर्णो वर्णेन" इति सूत्रस्थभाष्यं प्रवृत्तम् इति न तयोः परस्परं विरोधः । स्पष्टं चेदं "विशेषणं विशेष्येण बहुलम्" इति सूत्रे लघुशब्देन्दुशेखरे । अत एव अनुव्यवसाये विशेषणत्वविशेष्यत्वयोर्भानम् । अन्यथा पूर्वज्ञानविषयीभूतपदार्थस्यैवानुव्यवसाये भानात् भासमानघटादौ स्वरूपसत्या अपि विषयताया भानं न स्यात् । पूर्वज्ञानाविषयस्य ज्ञानविषयवृत्तित्वमात्रेण अनुव्यवसाये भानाङ्गीकारे तु मधुरादीनां चाक्षुषज्ञानानुव्यवसाये भानप्रसङ्गः ।

विशेष्यविशेषणभावस्य ज्ञानीयविषयताविशेषरूपत्वाङ्गीकारेऽपि अनुव्यवसाये तद्भाननिर्वाहार्थम् ज्ञाने तद्भानमावश्यकम् । मीमांसकमते ज्ञानसामान्ये ज्ञानभानप्रयोजकत्वस्य ज्ञानसामान्यसामग्र्या इव विषयताभानेऽपि तस्याः, विशेषसामग्र्या वा प्रयोजकत्वस्याङ्गीकारात् ।

रङ्गतया न स्वार्थमात्रनिमित्तकप्रथमप्रवृत्तसंस्कारबाधकत्वमिति बोद्धयम्। **अभेदेन संसर्गेणेति**। (१)इतरसम्बन्धानवच्छिन्नविशेषणविशेष्यभावसंसर्गेणेत्यर्थः। अभेदस्तु न संसर्ग इत्यन्यत्र प्रपञ्चितम्।

**इहोक्तार्थत्वादिति**। उक्तार्थानामप्रयोगात् प्रातिपदिकप्रतिपादितसङ्ख्याविशिष्टे (२)सङ्ख्यान्तराभावाच्च तदप्राप्तिः। अनन्वितार्थकविभक्त्यपेक्षयाऽनुवादकविभक्तेरेव न्याय्यत्वान्न द्व्यादिभ्यः सर्वविभक्त्यापत्तिरिति भावः। (३)लिङ्गविशिष्टपरिभाषया 'इन्द्राणी' इत्यादौ प्रथमासिद्धिः। परिमाणशब्दश्च परिच्छेदकपर इत्युन्मानादिष्वपि प्रथमासिद्धिरिति बोद्धयम्।

(४)परे त्वत्र सूत्रे प्रातिपदिकार्थशब्देन (५)प्रवृत्तिनिमित्तं तदाश्र-

---

विषयतासम्बन्धेन संशयं प्रति विषयतासम्बन्धेन निश्चयस्य प्रतिबन्धकत्वात् किञ्चिज्ज्ञानानन्तरं 'जानामि न वा' इति संशयानुदयात् ज्ञाने ज्ञानविषयत्वाङ्गीकारवत् घटज्ञाने जाते 'घटे ज्ञानविषयताऽस्ति न वा' इति संशयानुत्थितेर्विषयतायां विषयतास्वीकार आवश्यकः। न चैवं घटविषयतावृत्तिविषताऽस्ति न वा, घटविषयतावृत्तिविषयतावृत्तिविषयताऽस्ति न वा इत्यादिरीत्याऽनवस्थाप्रसङ्ग इति वाच्यम्। अनवस्थापत्त्याऽगत्या क्वचिद् विश्रान्तिस्वीकारेणाऽनवस्थाप्रयोजकसंशयानुत्थितेः। तस्मात् 'विशेष्यविशेषणभावो भासते' इत्युक्तिः साध्व्येवेति।

यद्यपि निरूपकत्वस्य भासधात्वर्थत्वं, निरूप्यत्वस्य तदुत्तराख्यातार्थत्वमङ्गीकृत्यापि 'विशेष्यविशेषणभावो भासते' इत्युक्तियोजनं सम्भवति तथापि तस्य पदार्थत्वाभिप्रायेण प्रातिपदिकार्थमात्रबोधकत्वानुपपत्तिशङ्का, वाक्यार्थत्वाङ्गीकारेण विभक्त्युत्पत्तिवेलायां नियतोपस्थितिकार्थमात्रवृत्तित्वसमर्थनं च भाष्योक्तं नागेशानूदितं विशेष्यविशेषणभावस्य विषयतया भानानङ्गीकारेऽसङ्गतमेव स्यात्। तस्मान्निरुक्तप्रकार एव साधुरिति दिक्।

(१)**इतरसम्बन्धेति**। सम्बन्धानवच्छिन्नविशेष्यविशेषणभावेनेत्यर्थः। इतरेत्यविवक्षितम्। अभेदस्य सम्बन्धत्वाभावेन व्यावर्त्यालाभात्।

ननु एकः, द्वौ, बहवः, इत्यादौ "उक्तार्थानामप्रयोगः" इति न्यायेन क्रमेण एकवचनद्विवचनबहुवचनानि मा भूवन्, वैपरीत्येन कस्मान्न भवन्तीत्यत आह-(२)**सङ्ख्यान्तराभावाच्चेति**। ननु इन्द्रादिपदेन पुंयोगादेर्नियमेनाभानात् स्त्रीप्रत्ययान्तस्य चाप्रातिपदिकत्वात् तस्य प्रातिपदिकार्थत्वाभावेन 'इन्द्राणी' इत्यादौ प्रथमा न स्यादत आह-(३)**लिङ्गविशिष्टपरिभाषयेति**।

स्वसिद्धान्तमाह-(४)**परेत्विति**। (५)**प्रवृत्तिनिमित्तं तदाश्रयश्चेति**।

स्वावच्छिन्नविषयताश्रयत्वं—स्वतादात्म्यमेतदन्यतरसम्बन्धेन तत्तत्पदप्रवृत्तिनिमित्तविशिष्टस्तत्प्रातिपदिकार्थः । प्रवृत्तिनिमित्तलक्षणं तु पक्षधरमिश्रकृत काशग्रन्थेऽभिहितं "वाच्यत्वे सति वाच्यवृत्तित्वे सति वाच्योपस्थितीयप्रकारताश्रयत्वम्" इति । वाच्यत्वनिवेशादाकाशपदाप्रवृत्तिनिमित्ते आकाशपदजन्योपस्थितीयप्रकारतावति शब्दाश्रयत्वे नातिव्याप्तिः । वाच्यवृत्तित्वनिवेशाद् गवादिपदवाच्यावयवसंयोगविशेषरूपाकृतौ नातिव्याप्तिः । वृत्तित्वस्य साक्षात्सम्बन्धेन विवक्षितत्वाच्च तस्याः स्वसमवाय्यवयवसमवेतत्वेऽपि न क्षतिः । सोऽपि च सम्बन्धो वाच्य एव ग्राह्य इति कालिकादिना साक्षात्सम्बन्धेन गवादिवृत्तित्वेऽप्याकृतेर्न तत्त्वम् । एवं च साक्षात्त्वं न निवेश्यम् । तादृशपरम्परासम्बन्धस्य वाच्यत्वाभावेनैवातिव्याप्तेरनवकाशात् । वाच्योपस्थितीयप्रकारतावत्त्वनिवेशादाधाराधेयभावसम्बन्धेन हर्यादिपदवाच्याश्ववृत्तिहर्यादिपदवाच्येन्द्रादौ नातिव्याप्तिः।

नन्वत्र लक्षणे पुंस्त्वत्वादावतिव्याप्तिः, वाच्यत्वादित्रयस्य तत्र सत्त्वात् । नचेष्टापत्तिः, प्रवृत्तिनिमित्तत्वेन तस्य तदाश्रयत्वेन पुंस्त्वादिलिङ्गस्यापि प्रातिपदिकार्थत्वापत्तौ लिङ्गग्रहणवैयर्थ्यापत्तेरिति चेन्न । प्रातिपदिकविशिष्टत्वं प्रवृत्तिनिमित्तत्वम् । वैशिष्ट्यं च स्ववाच्यत्वं–स्ववाच्यवृत्तित्वं-स्वजन्यशाब्दबोधीयमुख्यविशेष्यतासमानाधिकरणोपस्थितीयविशेष्यतानिरूपितप्रकारताश्रयत्वमेतत्त्रितयसम्बन्धेनेति परिष्कारेणादोषात्। पुंस्त्वादिलिङ्गनिष्ठविशेष्यतायाः प्रातिपदिकजन्यबोधीयमुख्यविशेष्यतासमानाधिकरणत्वाभावात्। अत्र विशेष्यतानिरूपितत्वं प्रकारतायां साक्षात्परम्परासाधारणमिति पशुपदार्थप्रवृत्तिनिमित्तलोमत्वादौ नाव्याप्तिः । न च निरूपितत्वं साक्षात्परम्परासाधारणं वक्तुं दुर्वचमित्ययं परिष्कारोऽसङ्गत इति वाच्यम् । प्रातिपदिकविशिष्टत्वं प्रवृत्तिनिमित्तत्वमिति परिष्कारेणादोषात् । प्रातिपदिकवैशिष्ट्यं च स्वजन्यशाब्दबोधीयप्रकारताश्रयत्वं—स्वप्रयोज्यधर्मितानिरूपितप्रकारत्वाभाववत्त्वमेतदुभयसम्बन्धेन । अभावश्च आश्रयत्वअवच्छेदकत्वान्यतरसम्बन्धावच्छिन्नप्रतियोगिताको ग्राह्यः । पुंस्त्वादौ पुंस्त्वत्वादौ चाश्रयत्वावच्छेदकत्वैतदन्यतरसम्बन्धेन स्वप्रयोज्यधर्मितानिरूपितप्रकारत्वमेवास्तीति न तत्रैतदन्यतरसम्बन्धावच्छिन्नप्रतियोगिताकाभाव इति न तत्रातिव्याप्तिः । अत्र स्वप्रयोज्यधर्मितानिरूपितप्रकारता अपदार्थसम्बन्धावच्छिन्ना विवक्षितेति लोमवल्लाङ्गूलावच्छिन्नवाचकपशुपदप्रवृत्तिनिमित्तलोमत्वादौ नाव्याप्तिः । घटत्वादौ पटादिपदप्रवृत्तिनिमित्तत्ववारणायाद्यसम्बन्धोपादानम् । न च एवपदार्थप्रवृत्तिनिमित्तभेदत्वादावव्याप्तिः, एवपदप्रयोज्याभावत्वावच्छिन्नधर्मितानिरूपितापदार्थसम्बन्धानवच्छिन्नप्रकारताया अवच्छेदकत्वाश्रयत्वैतदन्यतरसम्बन्धेन तत्र सत्त्वेन तदभावस्याभावादिति वाच्यम् । स्वनिष्ठशक्तिज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधीयप्रकारताश्रयत्वं–स्वप्रयोज्यधर्मितानिरूपितापदार्थसम्बन्धावच्छिन्ना, पदार्थान्तरनिष्ठप्रकारतानिरूपितविशेष्यत्वाभाववती च या प्रकारता तदभाववत्त्वमेतदुभयसम्बन्धेन प्रातिपदिकविशिष्टत्वं प्रवृत्तिनिमित्तत्वमिति परिष्कारेणादोषात् । विशेष्यत्वाभावश्च स्वसामानाधिकरण्य–स्वाव-

च्छेदकत्वसामानाधिकरण्यैतदन्यतरसम्बन्धावच्छिन्नप्रतियोगिताको ग्राह्यः । 'पार्थ एव धनुर्धरः' इत्यादौ पार्थत्वावच्छिन्नप्रतियोगिताकभेदवत्प्रतियोगिकतादात्म्यरूपसम्बन्धाभावस्य धनुर्धरे बोधनात् प्रतियोगित्वसम्बन्धावच्छिन्नपार्थत्वावच्छिन्नप्रकारतानिरूपितविशेष्यताया अभावत्वावच्छिन्नविशेष्यतानिरूपितापदार्थसम्बन्धावच्छिन्नभेदनिष्ठप्रकारतायां सामानाधिकरण्येन भेदत्वनिष्ठतादृशप्रकारतायाम् अवच्छेदकत्वसामानाधिकरण्येन च वर्त्तनात्तादृशविशेष्यत्वाभाववती इयं प्रकारता न जातेति तत्र नाव्याप्तिः । पुंस्त्वादौ च कस्यापि पदार्थस्यानन्वयात् प्रातिपदिकप्रयोज्यधर्मितानिरूपितापदार्थसम्बन्धावच्छिन्नपुंस्त्वादिनिष्ठप्रकारता सामानाधिकरण्य–अवच्छेदकत्वसामानाधिकरण्य–एतदन्यतरसम्बन्धावच्छिन्नप्रतियोगिताकपदार्थान्तरनिष्ठप्रकारतानिरूपितविशेष्यत्वाभाववती जातेति तादृशप्रकारता आश्रयत्वावच्छेदकत्वैतदन्यतरसम्बन्धेन पुंस्त्वादौ पुंस्त्वत्वादौ च वर्तते एवेति न तादृशप्रकारत्वाभाव इति न तत्रातिव्याप्तिः । आद्यसम्बन्धोपादानस्य फलं तु अत्रापि पूर्ववद् बोध्यम् ।

यद्वा, स्वप्रयोज्योपस्थितीयमुख्यविशेष्यतानिरूपितप्रकारताश्रयत्वं–स्वप्रयोज्यधर्मितानिरूपितापदार्थसम्बन्धावच्छिन्ना, सामानाधिकरण्यअवच्छेदकत्वसामानाधिकरण्यैतदन्यतरसम्बन्धावच्छिन्नप्रतियोगिताकपदार्थान्तरनिष्ठप्रकारतानिरूपितविशेष्यत्वाभाववती च या प्रकारता तदवच्छेदकत्वाभाववत्त्वमेतदुभयसम्बन्धेन प्रातिपदिकविशिष्टत्वं प्रातिपदिकप्रवृत्तिनिमित्तत्वम् ।

अत्र लक्षणे प्रकारत्वाभावोऽन्यतरसम्बन्धावच्छिन्नप्रतियोगिताको न निवेशनीयः। आद्यसम्बन्धोपादानेनैव पुंस्त्व दिलिङ्गे अतिव्याप्तिवारणात् इत्याहुः ।

अत्रेदं बोध्यम् । पुंस्त्वादिनिष्ठप्रकारतानिरूपितप्रवृत्तिनिमित्तावच्छिन्नविशेष्यताकावान्तरबोधे तत्तदुपस्थितेराकाङ्क्षादेश्च कारणत्वाकल्पनलाघवानुरोधेन नियतलिङ्गपदानां लिङ्गविशिष्टे शक्तिकल्पने लिङ्गनिष्ठशाब्दबोधीयप्रकारताया अपदार्थसम्बन्धावच्छिन्नत्वाभावात् तद्घटितानि सर्वाणि लक्षणानि असङ्गतान्येव । इत्थं च प्रवृत्तिनिमित्तलक्षणं पुंस्त्वत्वादिव्यावृत्तं दुर्वचमेव । तेषां पशुपदवाच्यलोमत्वाद्यविशिष्टत्वादिति चेत् ?

अत्र केचित्–पुंस्त्वादीनाम् आश्रयत्वादेरिव वैयाकरणमते अखण्डोपाधित्वाङ्गीकारेण अखण्डोपाधिरूपाणां तेषां शब्दाश्रयत्वादीनामिव स्वरूपत एव भानाङ्गीकारेण पुंस्त्वत्वादेः घटादिपदवाच्यत्वानङ्गीकारात् तेषां वाच्यत्वाभावेन, वाच्योपस्थितीयप्रकारत्वाभावेन वा न तेषु प्रवृत्तिनिमित्तलक्षणातिव्याप्तिः । यद्यपि विशिष्टशक्तिकल्पे पुंस्त्वादौ वाच्योपस्थितीयप्रकारत्वमस्ति तथापि वाच्यार्थनिष्ठोपस्थितीयविशेष्यतायानिरवच्छिन्नायां विवक्षितत्वान्न दोषः। लिङ्गस्य प्रवृत्तिनिमित्तावच्छिन्ने एवान्वयेन तन्निष्ठप्रकारतानिरूपितविशेष्यतायाः सावच्छिन्नत्वनियमात् । पश्वादिपदवाच्यलोमादीनां लाङ्गूलत्वावच्छिन्ने अन्वयेन तत्त्वाभावेऽपि न क्षतिः । प्रवृत्तिनिमित्तलोमत्वाद्याश्रयत्वेनैव तेषां प्रातिपदिकार्थत्वसिद्धेः । एवमेव एवपदार्थभेदेऽपि प्रातिपदिकार्थत्वमुपपादनीयम् इत्याहुः ।

यश्च । स च मुख्य इवाऽऽरोपितदाश्रयोऽपि । अत एव 'गोपी' इत्यादौ स्वादिप्रकृतेर्लाक्षणिकत्वेऽपि न दोषः । (१)अत एव लिङ्गग्रहणं सार्थकम् । (२)अन्यथा "स्वमोर्नपुंसकात्" (पा०सू० ७।१।२३) इत्यादिशास्त्रप्रामा-

---

अन्ये तु विशिष्टशक्तिकल्पे पुंस्त्वत्वादीनां वाच्यत्वमङ्गीकृत्यापि समादधुः । तथाहि–स्व-स्वान्य–एतदन्यतरपदप्रयोज्यप्रकारतानिरूपितविशेष्यतावच्छेदकतापर्याप्त्यधिकरणपर्याप्तत्व–स्वप्रयोज्योपस्थितीयविशेष्यतानिरूपितत्वोभयसम्बन्धेन प्रातिपदिकविशिष्टनिरवच्छिन्नप्रकारताश्रयत्वं तत्त्वम् । पुंस्त्वत्वाद्यवच्छिन्ने कस्यापि पदार्थस्यानन्वयात् स्वस्वान्यपदार्थनिष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकतापर्याप्तेः उपस्थितीयप्रकारतापर्याप्त्यधिकरणेऽभावान्नातिव्याप्तिः । पश्वादिपदवाच्यानां लोमादीनाम्, एवपदवाच्यानां भेदादीनां च दीर्घलोमवानित्यादौ, पार्थ एवेत्यादौ च स्वस्वान्यान्यतरपदार्थान्वयित्वस्य सत्त्वात् लोमत्वादिनिष्ठोपस्थितीयप्रकारतायाः पदार्थान्तरनिष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकतापर्याप्तिमत्पर्याप्तत्वमस्त्येवेति न तत्राव्याप्तिरिति । यद्यपि घटस्य पुंस्त्वमित्यादौ पुंस्त्वत्वाद्यवच्छिन्नेऽपि पदार्थान्तरान्वयः, तथापि पुंस्त्वादिशब्देन पुंस्त्वादेः प्रातिपदिकार्थोद्भूतत्वेन भानात् पदार्थान्तरान्वयितावच्छेदकत्वस्य उद्भूतत्वविशिष्टपुंस्त्वत्वादावेव पर्याप्तत्वात् घटादिपदप्रयोज्योपस्थितीयप्रकारतायाश्च पुंस्त्वत्वादिमात्रपर्याप्तत्वान्न दोषः । कर्मादिशब्दानां तिङादीनां च 'अनुद्भूतकर्मत्वादिशक्तिबोधकत्वस्येव घटादिशब्दानामनुद्भूतपुंस्त्वादिबोधकत्वात् ।

यथा विभक्तेः कर्मत्वादिशब्दानां च उद्भूतकर्मत्वादिशक्तिबोधकत्वं तथा स्त्रीत्वादिशब्दानामुद्भूतस्त्रीत्वादिबोधकत्वम् । उद्भूतत्वं च भेदेनावभासमानत्वमेवेति मञ्जूषायां स्पष्टम् । भेदादीनां लोमादीनां च निरवच्छिन्नप्रकारत्वाभावेन प्रवृत्तिनिमित्तत्वाभावेऽपि तदाश्रयत्वात् प्रातिपदिकार्थत्वम् । जातिमानित्यादौ जातिमतः प्रवृत्तिनिमित्तजातित्वाश्रयत्वाभावेऽपि तदवच्छिन्नविषयताश्रयत्वमक्षतमेव । तन्निष्ठविषयतायास्तद्घटितजातिमत्त्वावच्छिन्नत्वेन तदवच्छिन्नत्वस्य सत्त्वात् । तन्मात्रावच्छिन्नत्वस्याप्रवेशात् इति सुधियो विभावयन्तु ।

उक्तार्थे मानमाह—(१)**अत एव लिङ्गग्रहणमिति** । तयोरेव प्रातिपदिकार्थपदेन ग्रहणादेवेत्यर्थः । यदि अत्रत्यलिङ्गग्रहणेन अनियतलिङ्गस्य न प्रातिपदिकवाच्यत्वं तदा नियतानियतलिङ्गपदसाधारण्येन नपुंसकपदप्रयोगोऽसङ्गतः स्यात् । तद्बलात् यदि लिङ्गमात्रस्य वाच्यत्वं तदा प्रातिपदिकार्थत्वेनैव सिद्धे लिङ्गग्रहणं व्यर्थं स्यात् । मम तु लिङ्गमात्रस्य वाच्यत्वेऽपि अत्र सूत्रे प्रातिपदिकार्थपदेन द्वयोरेव ग्रहणाल्लिङ्गग्रहणं परिमाणग्रहणं च सार्थकम् । नियतोपस्थितिकत्वनिवेशे तु गौरवात् परिमाणग्रहणवैयर्थ्यापरिहाराच्च न तन्निवेशो युक्त इति भावः । (२)**अन्यथा**—प्रातिपदि-

ण्येन लिङ्गस्यापि (१)प्रातिपदिकार्थतया तद्वैयर्थ्यं स्पष्टमेव । (२)अत एव "स्त्रियाम्" (पा०सू० ४।१।३) इति सूत्रे स्त्रीत्वे द्योत्ये इत्यर्थ इति **भाष्ये** सिद्धान्तितम् । (३)"तस्माच्छसः" (पा०सू० ६।१।३) इत्यत्र पुंसीत्यस्य पुंशब्दस्य प्रकृतित्वे इत्येवार्थः । (४)"अभिहिते प्रथमा" इति वार्त्तिकस्य तत्तत्प्रातिपदिकार्थगतकारकशक्तावन्येनाभिहितायां स्वार्थे प्रातिपदिकात्प्रथमेत्यर्थ इति न तद्विरोधः । एतेन (५)तन्नये कारकस्य प्रत्ययार्थत्वं, (६)तव तु तन्नेति विरोध इत्यपास्तम् ।

तटादिशब्दानामपि लिङ्गं वाच्यमेव । द्योतकास्तु विसर्गादयः । पूर्वं तत्तल्लिङ्गं बुद्धिस्थीकृत्यैव तस्य तस्य विसर्गादेः साधुत्वान्वाख्यानम् । नियमांशनिवेशे तु न मानम् । इदमेवाभिप्रेत्य वृत्तौ "प्रातिपदिकार्थः सत्ता" इत्यु-

---

कनिष्ठशक्तिनिरूपकमात्रस्य प्रातिपदिकार्थत्वे । (१)**प्रातिपदिकार्थतया**—प्रातिपदिकवाच्यतया । (२)**अत एवेति** । लिङ्गस्य प्रातिपदिकवाच्यत्वादेवेत्यर्थः । प्रत्ययवाच्यत्वे-स्त्रीत्वे वाच्ये टाबित्यर्थो वाच्यः स्यादिति भावः ।

ननु 'पुंसि विद्यमानस्य शसः सकारस्य नत्वम्' इत्यर्थकस्य "तस्माच्छसो नः पुंसि" (पा०सू० ६।१।३) इतिशास्त्रस्य प्रामाण्येन लिङ्गस्य विभक्तिवाच्यत्वमेवात आह-(३)**तस्माच्छस इत्यत्रेति** । एवं च लिङ्गस्य विभक्तिवाच्यत्वे प्रमाणाभाव इति भावः । नन्वेवमपि 'कृत्तद्धिताद्यभिहितकारकवाचिनी प्रथमा' इत्यर्थकस्य "अभिहिते प्रथमा" इतिवार्तिकस्य बलेन प्रथमाया अन्याभिहितकारकार्थकत्वमपीति गम्यते, प्रातिपदिकार्थमात्रे वर्तमानात् प्रातिपदिकात् प्रथमा भवतीति भवदभिमतसूत्रार्थे तु प्रथमाया अन्याभिहितकारकार्थकत्वाभावो गम्यते इति वार्तिकोक्तिविरोध इत्यत आह-(४)**अभिहिते प्रथमेति** । (५)**तन्नये**—वार्तिकमते । (६)**तव**—प्रातिपदिकार्थमात्रे वर्तमानात् प्रथमा इत्यर्थं वदतः । ननु पञ्चकं प्रातिपदिकार्थ इति बुध्वा 'अभिहिते प्रथमेति वार्तिकस्य' इति ग्रन्थ आहोस्वित् जातिव्यक्तिलिङ्गत्रयं प्रातिपदिकार्थ इति बुध्वा ? नाद्यः । तथा सति प्रवृत्तिनिमित्त तदाश्रय-रूपप्रातिपदिकार्थेतरत्र कारकादौ वर्तमानत्वेन 'कृष्णः' इत्यादौ क्वापि प्रथमा न स्यादित्यस्यैव वक्तव्यत्वात् । न द्वितीयः । लिङ्गान्तत्रितयस्यैव प्रातिपदिकार्थत्वे वार्त्तिकविरुद्धार्थाभिधायित्वाभावेन विरोधस्यैवाप्रसक्तेरिति चेन्न । "द्येक्योः" (पा०सू० १।४।२२) इत्यादिशास्त्रबलेन प्रातिपदिकार्थेतरत्वेन सङ्ख्याया अग्रहणवत् "तिङसमानाधिकरणे प्रथमा"इतिवार्त्तिकबलेन अभिहितकारकस्यापि मात्रपदेनाव्यवच्छेदात् पञ्चकपक्षे एतद्ग्रन्थस्य सुयोजत्वात् ।

क्तम् । सत्तेति प्रवृत्तिनिमित्तोपलक्षणम् । आश्रयस्तु तदाक्षिप्तत्वान्न पृथगुक्तः । एवञ्च प्रातिपदिकार्थ इत्यस्याऽलिङ्गा लिङ्गप्रवृत्तिनिमित्तकाश्चाव्ययपुमादय उदाहरणम् । लिङ्गविशिष्टपरिभाषया स्त्रीशब्दोऽप्यस्यैवोदाहरणम् । अन्ये सर्वे लिङ्गाधिक्ये इत्यस्य ।

द्रोणत्वादिप्रवृत्तिनिमित्तकानां द्रोणादिशब्दानां परिमाणत्वेन परिमाणमपि लिङ्गवद्विशेष्यान्वय्यर्थः । एवञ्च तस्य लिङ्गवत्प्रातिपदिकार्थत्वाभावात्परिमाणग्रहणम् । द्रोणः परिमाणमित्येष तु "द्वौ ब्राह्मणौ" इतिवत्प्रयोगः, द्रोणशब्दस्यानेकार्थत्वाद्वा । मूलोक्तं तु न युक्तम् । 'द्रोणो व्रीहिमानय' (१)इत्यस्याप्यापत्तेः । किञ्च "तिङ्समानाधिकरणे प्रथमा" इतिवार्त्तिकैकवाक्यतया भेदान्वये 'द्रोणो व्रीहिः' इत्यनिष्टम् । न च—"यदा मेये द्रोणादीनां वृत्तिस्तदा तस्यानेकत्वेन परिमाणमात्रपरत्वे तदबोधेन च व्यभिचारान्मेयस्य नियतोपस्थितिकत्वाभावेनाप्रातिपदिकार्थत्वादसिद्धौ कर्मव्युत्पत्त्या प्रमेयार्थकं परिमाणग्रहणम्" इति **कैयटोक्तं** युक्तमिति वाच्यम् । "सिंहो माणवकः" इत्यस्या(२)सिद्ध्यापत्तेः तद्वदस्यापि सिद्धेश्च नियमांशनिवेशे मानाभावाच्च ।

---

**(१)इत्यस्याप्यापत्तेरिति** । अपिना 'प्रमेयो व्रीहिः' इत्यादौ प्रमेयाभिन्नं यत्परिमाणं तत्परिच्छेद्यो व्रीहिरिति बोधापत्तेर्ग्रहणम् । 'प्रत्ययार्थपरिमाणस्य स्वबोधकविभक्तिसजातीयविभक्तिप्रकृत्यर्थे एवान्वयः, स्वेनाभेदान्वयश्च परिच्छेदकत्वव्याप्यद्रोणत्वादिविशिष्टस्यैव' इतिव्युत्पत्तिस्वीकारेण निरुक्तदोषवारणं तु न सम्भवति । तादृशव्युत्पत्तिकल्पने प्रमाणाभावात् । अस्यैव शास्त्रस्याकाङ्क्षानियामकत्वेन तादृशव्युत्पत्तेः कल्पयितुमशक्यत्वाच्च । **(२)असिद्ध्यापत्तेरिति** । वस्तुतस्तु असम्भवदोष एवात्र बोद्धव्यः । घट इत्यादावपि तत्तद्घटव्यक्तीनां भाने नियमाभावात् कदाचित्काचिद्व्यक्तिः कदाचित्सर्वा व्यक्तयो भासन्ते इत्यनुभवसिद्धत्वात् ।

एतत्कल्पेऽपि प्रमेयादिपदात् प्रथमाविभक्त्युत्पत्तिः 'प्रातिपदिकार्थमात्रवृत्तित्वं प्रातिपदिकार्थत्वसम्पादकविषयताभिन्नविषयताप्रयोजकत्वाभाववत्त्वम्' इति परिष्कारेण बोद्धव्या । वैयाकरणमते प्रतियोग्यप्रसिद्धेर्गुणत्वाच्च ।

एतत्सूत्रार्थस्तु नवीनमते "अभिहिते प्रथमा" इतिवार्तिकैकवाक्यतया, "द्व्येकयोः" (पा०सू० १।४।२२) इत्याद्येकवाक्यतया, परिमाणग्रहणात् "लिङ्गग्रहणाच्च इतरयोगव्यवच्छेदरूपमात्रपदार्थैकदेशे इतरत्र लिङ्गातिरिक्तत्वेन, परिमाणातिरिक्तत्वेन, सङ्ख्या-

'एकः' 'द्वौ' इत्यादिसिद्धये तु वचनग्रहणम् । अन्यथैतत्सूत्रोपस्थित "अनभिहित" इत्यस्यात्र फलाभावादेतदेकवाक्यतापन्नसङ्ख्यावाक्यान्वयित्वेन तदप्राप्तेः । 'रामौ' इत्यादौ सङ्ख्याधिक्ये प्रथमा तु "द्व्येकयोः" (पा०सू० १।४।२२) इत्याद्येकवाक्यतयेति बोद्ध्यम् । (१)मात्रग्रहणाभावे तु यथा

---

तिरिक्तत्वेन, अनुद्भूतकारकातिरिक्तत्वेन च सङ्कोचात् लिङ्गेतरः, परिमाणेतरः सङ्ख्येतरः अनुद्भूतकर्मत्वादिशक्तीतरश्च यः प्रवृत्तिनिमित्ततदाश्रयरूपप्रातिपदिकार्थेतरः अर्थात् उद्भूतकर्मत्वादिरूपः स्वस्वामिभावादिरूपश्च तद्विषयकबोधतात्पर्येणानुच्चरितात् प्रातिपदिकात् स्वार्थे प्रथमेति ।

प्राचीनमते तु लिङ्गग्रहणात् अनियतलिङ्गेतरो यो नियतोपस्थितिकरूपप्रातिपदिकार्थेतरस्तत्रावर्तमानात् व्द्येकयोरित्याद्येकवाक्यतया संख्यायामनुद्भूतकारके च प्रथमेत्यर्थे परिमाणस्यापि नियतोपस्थितिकत्वात्प्रातिपदिकार्थग्रहणेनैव प्रथमायाः सिद्धौ परिमाणग्रहणम् आवृत्त्या परिमाणत्वतद्व्याप्यधर्मेतरधर्मानवच्छिन्नविषयताप्रयोजकात् परिमाणार्थे प्रथमेत्यर्थलाभार्थम् । तेन 'द्रोणो व्रीहिः' इत्यादौ परिमाणार्थे प्रथमा सिध्यति । तथाच प्रथमार्थे परिमाणे प्रकृत्यर्थस्याभेदेनान्वयः । तस्य च व्रीह्यादौ परिच्छेद्यत्वसम्बन्धेनान्वयः । प्रातिपदिकार्थमात्रे प्रथमाविधाने तु नामार्थयोः साक्षाद्भेदसम्बन्धेनान्वयस्याव्युत्पन्नत्वाद् द्रोणादिपदार्थस्य व्रीह्यादौ परिच्छेद्यत्वसम्बन्धेनान्वयो न स्यात् । परिमाणस्य प्रथमार्थत्वे तु प्रत्ययार्थनामार्थयोर्भेदान्वयेऽपि न क्षतिरिति बोध्यम् । नन्वेवं द्रोणो व्रीहिमानय इति स्यात् । अभेदान्वयस्थले एव समानविभक्तिकताव्युत्पत्तेरिति चेन्न । अभेदेन प्रकृत्यर्थान्वितप्रत्ययार्थस्य यत्र भेदेनापि पदार्थान्तरेऽन्वयस्तत्रापि तादृशव्युत्पत्तिस्वीकारात् । कृष्णादिप्रातिपदिकानां तु परिमाणत्वतद्व्याप्यधर्मेतरकृष्णत्वादिधर्मावच्छिन्नविषयताप्रयोजकत्वान्न तेभ्यः परिमाणार्थे प्रथमेति न कृष्णो व्रीहिरित्यादयः प्रयोगाः ।

ननु प्रथमार्थपरिमाणस्य भेदेनान्वयस्वीकारे सर्पिः कुडव इत्यादौ "समानाधिकरणसमर्थवत्" इत्यतिदेशाप्रवृत्त्या "इसुसोः सामर्थ्ये" इति षत्वविकल्पापत्तिरिति चेन्न । व्यवस्थितविभाषाश्रयणात् ।

वस्तुतस्तु 'सिंहो माणवकः' इत्यादेरिव द्रोणो व्रीहिरित्यादेरपि द्रोणादिपरिच्छिन्ने द्रोणत्वाद्युपचारादेव सिद्धेः परिमाणग्रहणसार्थक्यं नियतोपस्थितिकत्वनिवेशो दुरुपपादमेवेति प्रवृत्तिनिमित्ततदाश्रययोरेव प्रातिपदिकार्थपदेन ग्रहणं युक्तमिति न काऽप्येतन्मते क्लिष्टकल्पनेति दिक् ।

**(१)मात्रग्रहणाभावे त्विति ।** शङ्खः पाण्डुर एवेत्यादौ एवकारो यथा अयोगस्य व्यवच्छेदरूपं विशेषणीभूतपाण्डुरत्वाभावस्याभावं बोधयति तथा "कर्मणि द्वितीया" इत्यादिभिः 'कर्मणि विवक्षिते एव द्वितीया' इत्येवं सामर्थ्याद्बोधने एवकारेण कर्म-

"कर्मणि द्वितीया" (पा०सू० २।३।२) इति नियमेन कर्मत्वाज्ञानसमानकालिकार्थान्तरस्यैव व्यावृत्तिः, न तु तज्ज्ञानसमानकालिकार्थान्तरस्य । अत एव 'गां दोग्धि पयः' इत्यादावपादानत्वादिबोधेऽपि द्वितीया । एवञ्च 'कर्मणि सत्येव 'द्वितीया, न तु तदसत्त्वे' इति नियमाकारः । तथाऽनेनापि प्रातिपदिकार्थसत्त्वे एव प्रथमा, न तु तदसत्त्वे' इत्येव नियमः स्यात् । एवञ्चानर्थकनिपातेभ्यः प्रथमा नैव स्यात् । एवञ्च तत्समभिव्याहारे "सपूर्वायाः प्रथमा" (पा०सू० ८।२।२६) इत्यादिशास्त्रप्रवृत्तिर्न स्यात् । तत्सत्त्वे कर्मादियोग्यार्थकप्रातिपदिकाच्चेत्तद्रहितस्वार्थे इत्यर्थान्न दोषः । इदमेव मात्रग्रहणं "कर्मणि द्वितीया"(पा०सू० २।३।२) इत्यादेर्मदुक्ताकारनियमत्वे मानम् । मात्रग्रहणाच्च सूत्रकारस्य प्रत्ययनियमपक्ष एवाभिमत इति गम्यते । तदकरणलाघवेन तु 'कर्मणि द्वितीयैव' इत्यर्थनियम उक्तो भाष्यादौ । स्पष्टञ्चेदं सर्वं **भाष्ये** इति भाष्यप्रदीपोद्द्योते निरूपितमित्याहुः ॥

**(१)सम्बोधने च** (पा०सू० २।३।४७)। तत्र वर्त्तमानादित्यर्थः ।

---

णोऽविवक्षायामेव द्वितीयादेः साधुत्वाभावो बोध्यते; न तु 'कर्मण्येव विवक्षिते' इत्येवं बोधनात् कर्मान्यस्मिन् विवक्षते द्वितीयादेरसाधुत्वम् । तथा सति कर्मापादानोभयविवक्षायां कस्या अपि विभक्तेरप्राप्त्या "अपादानमुत्तराणि कारकाणि बाधन्ते" इति भाष्योक्तिरसङ्गता स्यात् । तथाच प्रथमाविधायकेऽपि मात्रग्रहणाभावे 'प्रातिपदिकार्थे विवक्षिते एव प्रथमा' इत्येवं सामर्थ्यान्नियमे एवकारेण प्रातिपदिकार्थाविवक्षायां प्रथमाया असाधुत्वबोधनादनर्थकनिपातेभ्यः प्रथमायाः साधुत्वं न स्यात् । स्याच्च कर्मादिविवक्षायामपि प्रातिपदिकार्थविवक्षाया अपि सत्त्वात् प्रथमायाः साधुत्वम् । केवलकर्मादिविवक्षायां द्वितीयादिविभक्तीनां चारितार्थ्येन कर्मापादानोभयविवक्षायां प्रथमाया एव परत्वाद्बाधकत्वापत्तेः । तत्सत्त्वे तु प्रातिपदिकार्थमात्रे एव विवक्षिते इत्येवं नियमस्वीकारान्न दोषः । प्रातिपदिकार्थान्यविवक्षायां प्रथमाया असाधुत्वात् । अन्यविवक्षायामसाधुत्वे बोधितेऽपि तदविवक्षायामसाधुत्वस्याबोधनात् अनर्थकनिपातेभ्योऽपि सा सिध्यति । "कर्मणि द्वितीया" (पा०सू० २।३।२) इत्यादिभिः कर्मादिमात्रे द्वितीयादय इत्येवं नियमाकरणात् सर्वासां विभक्तीनामभेदार्थकत्वमपि सिध्यति । अभेदकर्माद्युभयविवक्षायां तासां साधुत्वस्य सूपपादत्वात् । एतन्मूलक एव 'अभेद एव वा विशेषणविभक्तेरर्थः' इति प्रवाद इति दिक् ।

**(१)सम्बोधने च** (पा०सू० २।३।४७) । अत्र केचिन्नैयायिकाः । समीहितं

बोधनं सम्बोधनमिति व्युत्पत्तिमनुसृत्य विषयत्वस्याकाङ्क्षालभ्यत्वात् समीहा बोधनं च खण्डशो विभक्तिशक्यम्। समीहा–इच्छा, बोधनं–ज्ञानम्। तत्र 'राम मां पाहि' इत्यादौ विभक्त्यर्थज्ञाने प्रकृत्यर्थरामादेः समवायेन, तदर्थेच्छाया विषयतासम्बन्धेनान्वयः। इच्छा च प्रयोक्तुरेव, प्रत्यासन्नत्वात्। तादृशज्ञानस्य च प्रवर्तनाविषयमत्कर्मकरक्षणादिरूपवाक्यार्थेऽन्वयः। तथा च प्रयोक्त्रिच्छाविषयरामसमवेतज्ञानविषयमत्कर्मकप्रवर्तनाविषयरक्षण--जनककृतिमांस्त्वमिति तार्किकमते बोधः। त्वत्कर्तृकमत्कर्मकत्वादिविशिष्टं रक्षणं प्रयोक्त्रिच्छाविषयत्वादिविशिष्टज्ञानविषय इति शाब्दिकमते बोधः। प्रकृत्यर्थरामसमवेतज्ञानस्य प्रयोक्त्रिच्छाविषयत्वे, वाक्यार्थरक्षणादेः विशिष्टज्ञानविषयत्वे च शब्दतोऽवगते प्रकृतवाक्यार्थरक्षणादिविषयकबोधसमवायित्वप्रकारकेच्छाविषयत्वरूपं सम्बोध्यत्वं प्रकृत्यर्थरामादेः फलति इति प्राहुः।

**गदाधरभट्टाचार्यास्तु**—बोधनस्य समीहा इति व्युत्पत्तिमवलम्ब्य प्रत्यासत्त्या श्रोतृसमवेतबोधेच्छाया लाभात् सम्बोधनपदाव्यवहितवाक्यजन्यबोधाश्रयत्वप्रकारकेच्छां विभक्त्यर्थमङ्गीकृत्य तस्याः प्रकृत्यर्थरामादौ विषयतासम्बन्धेनान्वयमङ्गीकुर्वन्ति। "नामार्थस्य स्वप्रकृतिकप्रत्ययार्थान्वयद्वारैव क्रियान्वयः" इतिनियमानुरोधादेव सङ्ख्यातिरिक्तसुवर्थकर्मत्वादेः प्रकृत्यर्थविशेष्यतया भानात् सम्बोधनविभक्तिप्रकृत्यर्थस्य च अन्यत्र (धात्वर्थे) विशेषणतयाऽनन्वयात् सम्बोधनस्य प्रकृत्यर्थविशेष्यतया भानं निर्युक्तिकमिति च वदन्ति। तन्मते वाक्यार्थमत्कर्मकरक्षणादेः सम्बोधनविभक्त्यर्थैकदेशे बोधे विषयित्वसम्बन्धेनान्वयः। तथा च मत्कर्मकरक्षणविषयकबोधाश्रयत्वप्रकारकेच्छाविषयत्वरूपं सम्बोध्यत्वं शब्दत एव लभ्यते इति बोध्यम्।

प्राचीनवैयाकरणास्तु प्रयोक्तृवचनार्थबोधाय अवधानादिवैशिष्ट्योपलक्षितावस्थितिरूपस्याभिमुखीभावस्यापि सम्बोधनपदप्रयोगे प्रतीतेः बोधनाय सम्मुखीकरणं सम्बोधनमिति व्युत्पत्त्या प्रकृतवाक्यार्थविषयकबोधफलकश्रोत्रभिमुखीभावरूपव्यापारानुकूलव्यापारो विभक्त्यर्थः। स च प्रयोजकनिष्ठ इच्छारूप एव। इच्छायां व्यापारानुकूलत्वं च व्यापारविषयकत्वमेव। विभक्त्यर्थैकदेशे श्रोतृनिष्ठाभिमुखीभावरूपव्यापारे वृत्तित्वसम्बन्धेन प्रकृत्यर्थरामादेरन्वयः। विशिष्टेच्छायाश्च विषयत्वसम्बन्धेन धात्वर्थरक्षणादौ अन्वयः,

सम्बोधनपदं यच्च तत् क्रियाया विशेषणम्।

इति हर्युक्तेः। बोधजनकव्यापारस्येच्छाविषयत्वेऽवगते बोधस्य व्यापारजन्यत्वेनेच्छाविषयत्वं सिध्यति। तादृशेच्छाविषयस्य बोधस्य वाक्यार्थविषयकत्वात् वाक्यार्थरक्षणादेर्व्यापारजन्यबोधविषयत्वेनेच्छाविषयत्वं बोध्यम्। रामादिवृत्त्यभिमुखीभावरूपव्यापारस्येच्छाविषयत्वात् प्रकृतवाक्यार्थविषयकबोधानुकूलव्यापाराश्रयत्वप्रकारकेच्छोद्देश्यत्वरूपं सम्बोध्यत्वं रामादौ लभ्यते। चैत्रो मैत्रं सम्बोधयतीत्यादौ ण्यन्तबोधिधातुना प्रतीयमानस्य तादृशेच्छोद्देश्यत्वबोधानुकूलस्य सम्बोधनविभक्त्यन्तशब्दप्रयोग-

रूपव्यापारस्येतरनैरपेक्ष्येणैव सम्बोधनविभक्त्यन्तप्रयोगे प्रतीतेस्तस्य वाक्यार्थत्वाभावः "सम्बोधनं न वाक्यार्थः" इति हरिणोक्तः । "सर्वं वाक्यं क्रियया परिसमाप्यते" इति वैयाकरणानां सिद्धान्तात्, "भावप्रधानमाख्यातम्" इति यास्कवचनात्; श्रुतत्वाच्च वाक्यार्थप्रधानभूतश्रूयमाणक्रियायामेव सम्बोधनविभक्त्यर्थान्वयः । विभक्त्यर्थसम्बन्धेन वा प्रकृत्यर्थस्य तत्रान्वयः । अत एव 'व्रजानि देवदत्त' इत्यादौ एकवाक्यत्वादामन्त्रितनिघातसिद्धिः । अध्याहृतक्रियायामन्वये तु व्रजनक्रियानिष्ठविशेष्यतानिरूपितत्वस्य, तादृशनिरूपितत्वविशिष्टप्रकारत्वावच्छिन्नविशेष्यतानिरूपितत्वस्य वा देवदत्तप्रकारतायामभावेन तदन्यतरवत्प्रकारताप्रयोजकत्वरूपैकवाक्यत्वाभावात् स न स्यात् । एकतिङन्तघटितत्वाभावेन अध्याहृतक्रियाघटितस्य वाक्यत्वाभावाच्चेत्याहुः ।

**नवीनास्तु—**

सिद्धस्याभिमुखीभावमात्रं सम्बोधनं विदुः ।
प्राप्ताभिमुख्यो ह्यर्थात्मा क्रियासु विनियुज्यते ॥

इति हर्युक्तेः, लाघवाच्च प्राचीनमतोक्तव्यापारोद्देश्यकेच्छारूपाभिमुखीकरणफलभूतो मुखपरावृत्त्याद्यभिव्यङ्ग्योऽभिमुखीभाव एवात्र सम्बोधनम् । बोधनाय (बोधाय) सम्मुखीभावः सम्बोधनमितिव्युत्पत्तेः ।

न च अभिमुखीकरणं सम्बोधनमिति तदुक्त्या अभिमुखीकरणस्य प्रयोजकव्यापारस्य विभक्त्यर्थत्वं तदभिमतमिति वाच्यम् । "राम मां पाहीत्यादौ चाभिमुखीभवद्रामाद्युद्देश्यकप्रवर्तनाविषयः" इत्युत्तरत्र अभिमुखीभावमात्रस्यैव प्रकृत्यर्थरामादिविशेषणतयोल्लेखात् "उद्देश्यविधेयभावो वाक्यार्थः" इति तदुक्तेश्च तस्यैव विभक्त्यर्थत्वाङ्गीकारस्य बोधनात् । सम्बोधनमभिमुखीकरणमित्युक्तिस्तु न विभक्त्यर्थत्वाभिप्रायेण, किन्तु सम्पूर्वकबोधिधात्वर्थत्वाभिप्रायेण । चैत्रो मैत्रं सम्बोधयतीत्यादौ बोधनाय सम्मुखीकरोतीत्यर्थस्य प्रतीतेः । अत्र तु अभिमुखीभावानुकूलस्य सम्बोधनपदात्मकव्यापारस्य तत्प्रयोगेणैव प्रतीतेः, बोधद्वारा तज्जनिकाया इच्छाया अपि इच्छाविशेष्यत्वरूपोद्देश्यत्वघटितसम्बन्धेन प्रवर्तनायामन्वयस्य वाक्यतो लाभेन लब्धत्वादेव न विभक्त्यर्थत्वम् ।

तस्य च सङ्ख्याया इव प्रकृत्यर्थे रामादौ आश्रयत्वसम्बन्धेनान्वयः । तस्य च विभक्त्यर्थत्वं प्रकृत्यर्थत्वमेव वेत्यन्यदेतत् । प्रकृत्यर्थस्य च "क्रियासु विनियुज्यते" इत्युक्त्या प्रवर्तनान्वयद्वारा विधेयरक्षणादिक्रियायामन्वयलाभात् स्वोद्देश्यकत्वसम्बन्धेन साक्षात् विध्यर्थप्रवर्तनायामेवान्वयः । तथाऽन्वयस्वीकारादेव "नामार्थधात्वर्थयोरभेदान्वय एव" इतिव्युत्पत्तिविरोधोऽपि न । प्रवर्तनायाम् आभिमुख्याश्रयरामाद्युद्देश्यकत्वं च तदिच्छाप्रयोज्यत्वमेव । प्रवर्तनायाश्च विषयत्वसम्बन्धेन रक्षणादिक्रियायामन्वयः । प्रवर्तनाविषयत्वं च तत्साध्यत्वं तत्साध्यप्रवृत्तिविषयत्वं वा । तथा च राम मां पाहीत्यादौ अभिमुखीभवनाश्रयरामाद्युद्देश्यकप्रवर्तनाविषयो मत्कर्मकं त्वत्कर्तृकं

सम्बोधनमभिमुखीकरणम्। तत्फलं प्रवृत्तिनिवृत्ती। सम्बोध्यतावच्छेदकरूपेण सम्बोध्यस्य सिद्धिं विना तत्वासम्भवादनुवाद्ये एवैषा विभक्तिः। अत एव विधेयभूतक्रियायामेवैतदर्थान्वय उद्देश्यतया। अत एव 'राजा भव, युद्ध्यस्व' 'राजन् युद्ध्यस्व' इत्यनयोर्व्यवस्थयैव प्रयोगः। 'राम मां पाहि' इत्यादौ चाभिमुखीभवद्रामाद्युद्देश्यकप्रवर्तनाविषयो रक्षणमिति बोधः। 'व्रजानि देवदत्त' इत्यादावपि जानीहि इत्यादिः शेषो बोद्ध्यः। तत्र व्रजनस्य कर्मत्वाद्देवदत्तस्योद्देश्यत्वादुभयोः समानवाक्यस्थत्वम्। "एकतिङ् वाक्यम्" इत्यस्य च श्रूयमाणैकतिङित्यर्थ इति न दोषः। उद्देश्यविधेयभावो वाक्या-

---

रक्षणमिति बोधः। राम देवदत्तं मां पाहीत्यादौ तु तादृशरामाद्युद्देश्यकनिवर्तनाविषयो देवदत्तकर्मकरक्षणाभाव इति बोधः। तद्विषयत्वं चाभावे तत्प्रयोज्यत्वम्। उभयानुगतं च प्रेरणात्वमेव। क्रियायां प्रवृत्तिनिवृत्त्यन्यतरफलकाभिमुखीभावः 'राजा अभिमुखीभावाश्रयत्वेनेच्छोद्देश्यः' इत्येवं ज्ञानं विना न सम्भवति। न च तज्ज्ञानं स्वस्य राजत्वप्रकारकं ज्ञानं विना सम्भवति। ततश्च येन रूपेण सम्बोध्यत्वं तेन रूपेण ज्ञानस्य तन्निष्ठसम्बोध्यत्वज्ञानार्थं पूर्वमपेक्षणात् तज्ज्ञानाभावे तेन रूपेण सम्बोध्यत्वज्ञानाभावात् अभिमुखीभावासम्भवेन सम्बोधनपदे अभिमुखीभावानुकूलत्वासम्भवात् न अज्ञातधर्मप्रकारकबोधजनकपदात् सम्बोधनविभक्तिः प्रयुज्यते। अत एव राजत्वस्यासिद्धौ राजन् युध्यस्वेति न प्रयोगः। "विधेयक्रियायामेव सम्बोधनप्रकृत्यर्थान्वय" इतिनियमबलात् व्रजानि देवदत्तेत्यादौ जानीहीत्यादेः शेषो बोध्यः। तत्र ज्ञाने व्रजनस्य विषयत्वसम्बन्धेन, देवदत्तस्य स्वोद्देश्यकत्वसम्बन्धेन प्रवर्तनायामन्वयद्वाराऽन्वयः। प्रवर्तनायाश्च विषयत्वसम्बन्धेन तत्रान्वयः। ज्ञानस्य तद्विषयत्वन्तु पश्य मृगो धावतीत्यादाविव तत्प्रयोजकसामग्रीघटकव्यापारद्वारकं बोध्यम्। एकवाक्यत्वं तु साक्षात्परम्परासाधारणाख्यातार्थनिष्ठविषयतानिरूपितत्ववद्विषयताप्रयोजकत्वम्। अस्ति च देवदत्तपदस्य व्रजानीत्याख्यातार्थव्रजननिष्ठविषयतानिरूपितज्ञाननिष्ठविषयतानिरूपितप्रवर्तनानिष्ठविषयतानिरूपितदेवदत्तनिष्ठविषयताप्रयोजकत्वमिति आमन्त्रितनिघातसिद्धिः। एकतिङ्वाक्यमित्यस्य च श्रूयमाणैकतिङन्तघटितमित्यर्थ इति न तद्विरोधः। श्रूयमाणदेवदत्तपदेनैव लक्षणया देवदत्तोद्देश्यकप्रवर्तनाविषयज्ञानप्रतिपादनाद्वा। अध्याहारस्वीकारादेव अध्याहृतक्रियाकर्तृसम्बोध्यार्थकयुष्मत्पदसमानाधिकरणत्वात् सम्बोधनस्य वृद्धोक्तः कर्तृकारकत्वव्यवहारः सङ्गच्छते। अत एव च तिङ्समानाधिकरणे प्रथमेतिवार्तिकमते प्रथमा सिध्यति। अनध्याहारे तु व्रजानीत्युत्तमपुरुषसामानाधिकरण्याभावात् सम्बोधनार्थकदेवदत्तादिपदात् प्रथमा न स्यात्। 'सम्बोधने च' इति सूत्रस्य तन्मते प्रत्याख्यातत्वात् इत्याहुः इति प्रघट्टकार्थ इत्यलम्॥

र्थः । अभिमुखीभवनानुकूलव्यापारश्च सम्बोधनविभक्त्यन्तशब्दप्रयोगरूपः । व्रजानीति प्राप्तकाले लोट् । अत एव गच्छेत्याद्यध्याहारे 'धिक् मूर्ख' इत्यादौ प्रथमा, अनध्याहारे तु द्वितीयैवेति दिक् । इति प्रथमा ॥

**कारके** (पा०सू० १।४।२३) । कारकत्वे (१)क्रियाजनकत्वम् । भाष्ये "करोति—क्रियां निर्वर्त्तयति" इतिव्युत्पत्तिप्रदर्शनात् । (२)ब्राह्मणस्य पुत्रं पन्थानं पृच्छति" इत्यादौ ब्राह्मणस्य न कारकत्वम् । पुत्रेणाऽ-(३)न्यथासिद्ध्या तत्त्वाभावात् । अत एवैषां क्रियायामेवान्वयः । क्रियाजनकमिति ज्ञाते का सा क्रियेत्याकाङ्क्षोदयेन, क्रियाया जनकाकाङ्क्षया च तत्रैवान्वयस्यौचित्यात् । सर्वेषां च कारकाणां (४)स्वस्वावान्तरक्रियाद्वारा (५)प्रधानक्रियानिष्पादकत्वं बोद्धव्यम् । (६)असन्निहितसम्प्रदानस्यापि दातृबुद्धिस्थत्वावश्यकत्वेन (७)स्वज्ञानपूर्वकालकत्वेनैव जनकत्वम् । एवं 'स्तोकं पचति' इत्यादौ फलस्यापि । (८)घटं करोति स्मरति इत्यादौ बौद्धघटादेः पूर्वकालत्वेन स्मृत्यादिनिष्पादकत्वं बोद्धव्यम् ।

---

**कारके** (पा०सू० १।४।२३) **(१)क्रियाजनकत्वमिति** । क्रियानिरूपितत्वोपलक्षितं जनकत्वमित्यर्थः । अत एव 'क्रियायामेवान्वयः' इत्युत्तरग्रन्थसङ्गतिः । जनकत्वं चात्र कारणत्वरूपं विवक्षितम् । तत्फलमाह—**(२)ब्राह्मणस्येति** । **(३)अन्यथासिद्ध्येति** । कुलालजनकस्येव चतुर्थ्याऽन्यथासिद्ध्येति भावः । नन्वेवमपि 'ब्राह्मणस्य पितरं पन्थानं पृच्छति' इत्यादौ ब्राह्मणस्य कारकत्वं दुर्वारम् । न च रासभादेरिवास्यापि पञ्चमान्यथासिद्धिरिति वाच्यम् । तथापि 'ब्राह्मणपितुरेव पन्थाः प्रष्टव्य' इतिप्रतिज्ञावत्पुरुषकर्तृकप्रश्नपरे 'ब्राह्मणस्य पितरं पन्थानं पृच्छति' इत्यादौ ब्राह्मणादेः कारकत्वापत्तेः । तत्र ब्राह्मणपितृत्वेनैव प्रश्नं प्रति कारणत्वादिति चेद्; न । तथापि दण्डत्वादेरिवाऽऽद्यान्यथासिद्धेस्तत्रापि सत्त्वात् । **(४)स्वस्वावान्तरक्रियाद्वारेति** । अत एव "वह्निना स्थाल्यां तण्डुलं पचति चैत्रः" इत्यादौ तत्तत्कार्यं तत्तदितरेण नोत्पद्यते इत्यनुभवोऽप्यनुकूलः । **(५)प्रधानक्रियेति** । प्राधान्यं चात्र अन्यानधीनत्वरूपम् । ननु सम्प्रदानासत्त्वेऽपि तज्ज्ञानमात्रेणैव तदुद्देशेन दानदर्शनात् सम्प्रदानस्य क्रियाजनकत्वाभावेन कारकत्वं न स्यादत आह—**(६)असन्निहितेति** । **(७)स्वज्ञानपूर्वकालत्वेनेति** । सम्प्रदानज्ञानवर्तिन्या दानजनकतायाः सम्प्रदाने आरोप इति भावः । नन्वेवमपि घटस्यानुत्पत्तिदशायामेव 'घटं करोति' इतीष्यते, स न स्यात् । तदानीं घटाभावेन तत्र जनकत्वासम्भवात् । एवं घटं स्मरतीत्यादावपि घटे स्मरणजनकत्वासम्भवात् कारकत्वानापत्तिरत आह—**(८)घटं करोति स्मरतीत्यादाविति** । अत्राप्याद्ये

(१)कर्तुरीप्सित (पा०सू० १।४।४९)। ईप्सितशब्दोऽत्र (२)क्रियापरो, (३)नाभिप्रेतपरो रूढः। (४)स्पष्टञ्चेदं "वारणार्थानाम्" (पा०सू० १।४।२७) इत्यत्र भाष्यकैयटयोः। कर्तुरिति "क्तस्य च वर्त-

मृदादिवृत्तिजनकत्वस्य, अन्ते सम्बन्धिज्ञाननिष्ठजनकत्वस्यारोप इति भावः। वैयाकरणमते बौद्धस्यैवार्थस्य पदशक्यत्वात् शाब्दबोधविषयत्वेन बौद्धार्थविषयकबोधतात्पर्येणैव पदानामुच्चारणात् घटादिपदानां क्रियाजनककर्मादिरूपार्थविषयकबोधतात्पर्येणोच्चरितत्वरूप "कर्मणि द्वितीया" (पा०सू० २।३।२) इत्यादिशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वेन ततः परं द्वितीयादिविभक्तीनां साधुत्वं सूपपादम्। प्रवृत्तिविषयता तु तत्तद्बौद्धार्थरूषिततत्तद्बाह्यार्थे एवेति नातिप्रसङ्गः। बौद्धार्थरूषिते बाह्यार्थे जनकत्वव्यवहारस्तु क्वचिद् उक्तरीत्याऽऽरोपेणैवोपपादनीय इति तत्त्वम्। शेषं "कर्तुरीप्सिततमम्" (पा०सू० १।४।४९) इतिसूत्रव्याख्याने निरूपयिष्यते। एतेन स्वेच्छयैव जनकत्वारोपेण कारकत्वे सर्वेषामेव कारकत्वापत्तिरित्यपास्तम्।

**केचित्तु**—"करोति क्रियां निर्वर्तयति" इत्यस्य क्रियाविषयकनिराकाङ्क्षबोधोत्पादक इत्यर्थः। ज्ञानमात्रं प्रति विषयस्य कारणत्वात्। क्रियाविषयकबोधस्य तत्तत्कारकावगाहित्वे हि किङ्कर्तृकेयमित्याद्याकाङ्क्षा शाम्यति। अत एव मयाऽस्य लक्षणं कृतमितिव्यवहारोपपत्तिः। तत्रापि च लक्षणज्ञानमेव वाक्यविशेषविरचनद्वारा तेन क्रियते, न तु लक्षणम्। तस्य वस्तुधर्मत्वात्। एवञ्च क्रियाविषयकनिराकाङ्क्षबोधानुकूलत्वं कारकपदस्य योगार्थतावच्छेदकम्। क्रियाया अपि क्रियाविषयनिराकाङ्क्षबोधजनकत्वात् तत्र अतिप्रसङ्गभङ्गाय कारकपदवत्त्वस्य रूढ्यर्थतावच्छेदकत्वमपि स्वीकरणीयम्। इदं च द्रष्टुं यातीत्यादौ यानादिक्रियाया दर्शनादिक्रियाजनकत्वात्तत्रातिव्याप्तिवारणाय पूर्वोक्तकल्पेऽप्यावश्यकमित्यादि सर्वमूह्यमित्याहुः।

(१)**कर्तुरीप्सित** (पा०सू० १।४।४९)। (२)**क्रियापर इति**। सम्बन्धार्थकाऽऽऽप्धातुनिष्पन्नत्वेन सम्बन्धेच्छाविषयार्थक इत्यर्थः। (३)**नाभिप्रेतपर इति**। अभिप्रेतः कर्तुः इच्छोद्देश्यं सुखदुःखनिवृत्त्यन्यतरत्, तत्साधनं वा। (४)**स्पष्टं चेदमिति**। तत्र हि "किमुदाहरणम्? माषेभ्यो गा वारयेति। भवेद्यस्य माषाः, न गावः, तस्य माषा ईप्सिताः स्युः। यस्य तु खलु गावो, न माषाः, कथं तस्य माषा ईप्सिताः स्युः। तस्यापि माषा एवेप्सिताः। आतश्चेप्सिताः, यदेभ्यो गा वारयति" इत्युक्तम्। माषा एवेप्सिता इत्यस्य ईप्सिता एवेत्यर्थः। तच्च माषाणां स्वकीयत्वाभावेन अनुपाधिकेच्छाविषयसुखदुःखनिवृत्त्यन्यतरसाधनत्वाभावेन, तदिच्छाविषयत्वरूपेष्टत्वाभावेऽपि राजभयादिना ततो गवां वारणेन गोनिष्ठव्यापारप्रयोज्यसंयोगप्रागभावाश्रयत्वेन इच्छाविषया भवन्त्येवेति तत्र ईप्सितशब्दस्य क्रियापरत्वाभिप्रायेण सङ्गच्छते। अग्रे च 'अग्नेर्माणवकं वारयति' इत्यत्र माणवके अपादानसञ्ज्ञायां अतिप्रसङ्गमाशङ्क्य

माने" (पा०सू० २।३।६७) इति (१)कर्तरि षष्ठी । आप्नोतेः सन्नन्तात् "मतिबुद्धि" (पा०सू० ३।२।१८८) इति वर्त्तमाने कर्मणि क्तः । 'मतिः—इच्छा' इति तत्राऽऽकरः । एवञ्च कर्त्राऽऽप्तुमिष्यमाणं कर्मेत्यर्थः । आप्तिश्चात्र सम्बन्धः । स च कर्तृपदार्थविशेषणीभूतव्यापारद्वारक एव । उपस्थितपरित्यागेनानुपस्थितकल्पने मानाभावात् । (२)एवञ्च कर्त्रा स्वनिष्ठव्यापा-

---

अग्न्यादौ ईप्सितमात्रे सावकाशाया अपादानसञ्ज्ञाया ईप्सिततमे माणवकादौ कर्मसञ्ज्ञया परत्वाद्बाध इत्युक्तम् । "कर्तुरीप्सिततमम्" (पा०सू० १।४।४९) इत्यत्र अभिप्रेतार्थकस्यैव ग्रहणे तु अनभिप्रेते अग्न्यादौ अपादानसञ्ज्ञायाश्चारितार्थ्येन अनवकाशत्वाद्बाधशङ्काऽनुपपन्ना स्यात् । तस्मादुभयत्रापि ईप्सितशब्दः क्रियापर इति तद्भाष्याल्लभ्यत इति बोध्यम् ।

**(१)कर्तरि षष्ठीति ।** कर्तृपदं चात्र सूत्रे प्रधानभूतव्यापाराश्रयत्वरूपस्वातन्त्र्यपुरस्कारेण बोधकम् । कर्तरि षष्ठी च कर्तृत्वशक्तिमत्त्वेन बोधिकेति तदर्थयोरभेदान्वय उपपद्यते । अत्रत्यकर्तृपदस्य स्वातन्त्र्यपुरस्कारेण बोधकत्वादेव 'चैत्रः सार्थाद्धीयते' इत्यादौ "अपादाने चाहीयरुहोः" (पा०सू० ५।४।५४) इति ज्ञापकेन कर्तृसञ्ज्ञां बाधित्वाऽपादानसञ्ज्ञायां सत्यामपि स्वातन्त्र्यस्याक्षतत्वेन कर्तुरित्यनेन चैत्रादेः कर्मसञ्ज्ञायां चैत्रादिरूपे कर्मणि लकारः सिध्यति । अन्यथा सार्थादेः सङ्केतसम्बन्धेन कर्तृपदवत्त्वाभावेन तज्ज्ञाप्यकर्तृत्वशक्त्यभावात् चैत्रादेः कर्मसञ्ज्ञाऽप्राप्त्या स दुर्लभः स्यात् । हीययोगे अपादानसञ्ज्ञाया कर्तृसञ्ज्ञया अबाधे तु हीयेतिकर्मलकारसिद्ध्यर्थं सार्थादेः कर्तृत्वस्यावश्यकतया हीयेत्येतदर्थनिरूपितापादानत्वासम्भवेन तद्भिन्नापादानवाचकात्तसिरिति पर्युदासाश्रयणमनर्थकं स्यात् । ननु षष्ठ्याः कर्तृत्वशक्तिमत्त्वेन बोधकत्वस्वीकारेऽपि सार्थादेः कर्तृपदवत्त्वाभावात्कर्तृत्वशक्त्यभावेनोक्तदोषस्तदवस्थ एवेति चेत् ? सत्यम् । तस्मात्तिवादेरिव षष्ठ्या आश्रयमात्रमर्थः । एवञ्च स्वतन्त्राभिन्नाश्रयः सार्थादिरिति तद्वृत्तिव्यापारप्रयोज्यफलाश्रयत्वरूपसम्बन्धप्रकारकेच्छोद्देश्यः चैत्रादिरिति तस्य कर्मसञ्ज्ञा निर्बाधैवेति । अभेदान्वयश्च नीलघटो घट इत्यादाविवोपपद्यते इत्याहुः ।

**केचित्तु**—वैयाकरणमते शब्दस्यापि तत्तत्पदजन्यशाब्दबोधे भानेनात्राभेदान्वयः । नैयायिकैरपि घटपदस्य घटपदवाच्यघटे, कलशपदस्य च कलशपदवाच्यघटे लक्षणायामिष्यते एवाभेदान्वयः । विरूपेणोपस्थितेः सत्त्वेन तथा स्वीकारे बाधकाभावात् । न चैवं सर्वत्रैवाभेदान्वयः स्यादिति वाच्यम् । घटो घट इत्यादावुक्तरीत्याऽप्यभेदान्वयासम्भवात् इत्याहुः ।

**(२)एवञ्चेति ।** 'कर्तृवृत्तिव्यापारप्रयोज्यफलाश्रयत्वप्रकारकेच्छोद्देश्यः कर्म' इत्यर्थ

रप्रयोज्यफलेन सम्बन्धुमिष्यमाणमित्यर्थः । यथा—'तण्डुलं पचति' इत्यादौ ।

इति सारम् । इच्छार्थकधातुसमभिव्याहारे उद्देश्यताख्यविलक्षणविषयताया एव कर्मप्रत्ययार्थत्वनियमात् । फलाश्रयता च फलतावच्छेदकसम्बन्धेन बोध्या । अत एव कालिकविशेषणतासम्बन्धेन कालस्य फलाश्रयत्वप्रकारकेच्छोद्देश्यत्वेऽपि 'कालं पचति' इत्यादयो न प्रयोगाः । फलतावच्छेदकसम्बन्धश्च न फलनिष्ठकार्यतावच्छेदकः सम्बन्धः । कालिकसम्बन्धेन फलोत्पत्तौ तादात्म्येन कालस्य कारणतया कालिकादेरपि तत्त्वापत्तेः । त्यजतिविभजत्योः फलतावच्छेदकसम्बन्धस्यैक्यापत्त्या ग्रामाद्विभजते इत्यादौ ग्रामादेरपि कर्मत्वापत्तेश्च । न हि तयोर्भेदेन कार्यकारणभावो विद्यते । त्यजतिविभजत्योरुभयोरपि विभागानुकूलव्यापारार्थकत्वेन विभागनिष्ठकार्यतावच्छेदकसमवायस्य फलतावच्छेदकत्वे उभयोरपि सकर्मकतापत्तिः अकर्मकतापत्तिर्वेति । फलतावच्छेदकसम्बन्धेन फलाधिकरणवृत्तिव्यापारार्थकस्यैवाकर्मकत्वात्, फलतावच्छेदकसम्बन्धेन फलव्यधिकरणव्यापारार्थकस्यैव सकर्मकत्वात् ।

किन्तु तत्तद्धातुनिष्ठशक्तौ व्यापारे फलनिरूपितं स्वरूपसम्बन्धविशेषरूपं स्वानुकूलत्वं, स्वेच्छाधीनेच्छाविषयत्वं च भासते । तथा च तण्डुलं पचतीत्यादौ 'समवायेन विक्लित्त्याश्रयस्तण्डुलो भवतु' इत्याकारकेच्छायाः कर्तृनिष्ठत्वेन तादृशेच्छीयफलनिष्ठविषयतावच्छेदकत्वस्य समवाये एव सत्त्वेन तत्सम्बन्धेन फलाश्रयस्यैव कर्मत्वं, नतु कालिकादिना फलाश्रयस्य । तत्सम्बन्धस्य निरुक्तेच्छीयविषयतावच्छेदकत्वाभावात् । एवं ग्रामाद्विभजते इत्यादौ विभागसमानाधिकरणव्यापारार्थकविपूर्वकभजधातुयोगे ग्रामादेर्न कर्मत्वम् । तस्य प्रकृतधात्वर्थव्यापारप्रयोज्यविभागरूपफलाश्रयत्वेऽपि 'अनुयोगित्वेन विभागाश्रयोऽहं भवानि' इत्याकारकेच्छाया एव तत्र कर्तृनिष्ठायाः प्रतीयमानत्वेन अनुयोगित्वस्यैवेच्छीयविषयतावच्छेदकत्वेन तेन सम्बन्धेन विभागरूपफलाश्रयत्वाभावात् । ग्रामं त्यजतीत्यादौ त्यजधातुयोगे तु ग्रामादेः कर्मत्वं भवत्येव । तत्र त्यजधातुना कर्तृव्यापारव्यधिकरणस्य विभागस्यैव प्रतीत्या 'प्रतियोगित्वेन विभागविशिष्टो ग्रामो भवतु' इत्याकारकेच्छाया एव तत्समभिव्याहारे प्रतीत्या प्रतियोगित्वस्यैव फलतावच्छेदकत्वेन तेन सम्बन्धेन फलाश्रयत्वस्य तत्र सत्त्वात् ।

प्रतियोगितारूपफलतावच्छेदकसम्बन्धेन फलानधिकरणसमवेतव्यापारवाचकत्वेन त्यजेः सकर्मकत्वम्, अनुयोगितारूपफलतावच्छेदकसम्बन्धेन फलाधिकरणसमवेतव्यापारवाचकत्वेन च विभजतेरकर्मकत्वं च सिद्धम् ।

नन्वेवं यत्रोभयव्यापारजन्य उभयनिष्ठप्रतियोगितानुयोगिताक एको विभागो जन्यते; तत्र 'चैत्रात् मैत्रो विभजते' इत्यादावनुयोगितासम्बन्धेनापि चैत्रस्य विभागाश्रयत्वेन कर्मत्वापत्तिरिति चेन्न । चैत्रस्य अनुयोगित्वेन विभागाश्रयत्वेऽपि तेन रूपेण कर्तृवृत्तीच्छोद्देश्यत्वाभावात् । मैत्रस्य तु परया कर्तृसंज्ञया बाधान्न कर्मत्वम् ।

फलस्यापि (१)व्यपदेशिवद्भावेन फलसम्बन्धित्वात्कर्मत्वम् । अत एव तत्स-

नचैवमपि "तथायुक्तम्" (पा०सू० १।४।५०) इत्यनेन तदापत्तिः, तत्र इच्छोद्देश्यत्वानिवेशादिति वाच्यम् । फलाश्रयत्वमित्यस्य फलनिष्ठविशेष्यतानिरूपितानुयोगित्वसम्बन्धावच्छिन्नबोधीयप्रकारत्वेन तात्पर्यविषयत्वमित्यर्थेनादोषात् । चैत्रस्य वस्तुतस्तदनुयोगित्वेऽपि प्रतियोगित्वसम्बन्धावच्छिन्नप्रकारत्वेनैव तात्पर्यविषयत्वात् । तथा विवक्षायान्तु मैत्राच्चैत्रो विभजते इति भवति । परया कर्तृसंज्ञया वाधात् । विभजतेः व्यापारजन्यविभागार्थकत्वं वा स्वीकृत्य 'ग्रामाद्विभजते' इत्यादौ कर्मत्वापत्तिर्वारणीया । धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारत्वविशिष्टधात्वर्थप्रयोज्यत्वरूपफलत्वस्य व्यापारविभागयोरुभयोरपि अभावात् इति दिक् ।

(१)व्यपदेशिवद्भावेनेति । ननु घटितत्वघटकत्वमात्रस्यैव तेनातिदेशात् फले फलाश्रयत्वं तेन नातिदेष्टुं शक्यमिति चेन्न । स्वस्मिन् स्वघटितत्वेऽतिदिष्टे घटितत्वसम्बन्धावच्छिन्नाधिकरणताया आर्थसमाजग्रस्तत्वात् । यदि च फलतावच्छेदकसम्बन्धेन फलाश्रयस्यैव कर्मत्वस्याङ्गीकारात् घटितत्वस्य फलतावच्छेदकत्वाभावादिदं न युज्यते इत्युच्यते, तदा तुल्यास्यसूत्रादिस्थभाष्यप्रामाण्येन आश्रयत्वस्यापि घटितत्वघटकत्वयोरिव तेनातिदेशस्वीकाराच्च दोष इति वोध्यम् ।

केचित्तु—पच्यादेर्विक्लित्त्युत्पत्त्यनुकूलव्यापारादिरर्थ इति उत्पत्तिरूपफलाश्रयत्वेन विक्लित्त्यादेर्विक्लित्त्यादिरूपफलाश्रयत्वेन तण्डुलादेश्च कर्मत्वसिद्धिरित्याहुः ।

अन्ये तु—विधेयतावच्छेदके अपूर्ववोध्यत्वाविशेषात् विधेयत्वस्वीकारवत् इच्छोद्देश्यतास्वरूपफलताऽवच्छेदकस्य विक्लित्तित्वादेरपि इच्छोद्देश्यत्वेन फलत्वस्वीकारात् तन्निष्ठेच्छीयोद्देश्यतावच्छेदकतावच्छेदकसमवायादेरपि फलतावच्छेदकत्वात् तेन सम्बन्धेन विक्लित्तित्वादिरूपफलाश्रयत्वाद् विक्लित्त्यादीनां कर्मत्वसिद्धिरित्याहुः ।

परे तु—फलस्य कर्मत्वाभावेऽपि नीलं घटमानयेत्यादौ कर्मवाचकघटादिपदसमानाधिकरणनीलादिपदानां कर्मत्वेतरकरणत्वादिसम्बन्धानवच्छिन्नप्रकारताप्रयोजकत्वात्तेभ्य इव फलवाचकपदादपि द्वितीया सेत्स्यति इत्याहुः ।

वस्तुतस्तु फलस्य साध्यत्वसम्बन्धेन व्यापारेऽन्वयस्वीकारात् साध्यत्वनिष्ठसांसर्गिकविषयतायाः धात्वर्थव्यापारनिष्ठविशेष्यतानिरूपितत्वात् धात्वर्थप्रयोज्यत्वे सति धात्वर्थनिष्ठविशेष्यतानिरूपितविषयताश्रयत्वरूपफलत्वस्य साध्यत्वे सत्त्वात्तदाश्रयत्वाद् विक्लित्त्यादीनां कर्मत्वसिद्धिरित्याहुः ।

अत्रेदं बोध्यम् । शोभनं पचतीत्यादौ फले शोभनत्वाद्यन्वये फले शोभनत्वस्य व्यापारशोभनत्वापेक्षत्वात् व्यापारे शोभनत्वमाक्षिप्यते, न तु व्यापारे शोभनत्वाद्यन्वयः शाब्दः । तथाऽन्वयतात्पर्येण, द्वितीयाविभक्तेः साधुत्वस्यानुशासनतोऽलाभात् । क्रियाविशेषणानां कर्मत्वमित्यभियुक्तोक्तौ क्रियापदं फलपरम् । व्यापारे शाब्दान्वयतात्पर्येण तु 'शोभनः पाकः' इत्याद्येवेति दिक् ।

मानाधिकरणे 'स्तोकं पचति' इत्यादौ कर्मत्वसिद्धिः। क्तप्रत्ययोपात्त(१)वर्त्त-

---

(१)वर्तमानत्वं तु न विवक्षितमिति। कर्मपदवाच्यत्वनिष्ठप्रकारतानिरूपितकर्मसञ्ज्ञाविधायकशास्त्रजन्यबोधीयविशेष्यतावच्छेदकत्वेन पाणिनितात्पर्यविषयत्वेऽपि कर्मपदवाच्यतावच्छेदकत्वेन तत्तात्पर्यविषयत्वं वर्तमानत्वस्य नेत्यर्थः। एतेन अविवक्षितत्वे "वर्तमानार्थबोधतात्पर्येणोच्चरितक्तप्रत्यययोगे षष्ठी" इत्यर्थकस्य "क्तस्य च वर्तमाने" (पा०सू० २।३।६७) इत्यस्य प्रवृत्त्यनापत्तिरित्यपास्तम्।

अत्रायं भावः–उद्देश्यविशेषणतयोपस्थितधर्मे क्वचिद् विधेयान्वयितावच्छेदकत्वं भासते। यथा–'घटपदात् घटो बोद्धव्यः' इत्यादौ उद्देश्यविशेषणे घटत्वादौ विधेयभूतबोधविषयत्वादेराश्रयतावच्छेदकत्वम्। अत एव शक्तिप्रमातो न घटादिपदात् द्रव्यत्वादिप्रकारको बोधः। यत्र धर्मान्तरस्यावच्छेदकत्वेनान्वयः, यथा 'द्रव्यं द्रव्यपदात् गुणवत्त्वेन बोद्धव्यम्' इत्याधुनिकसङ्केते, तत्र न द्रव्यत्वे बोधविषयतावच्छेदकत्वं भासते। अतो न द्रव्यपदात् उक्ताधुनिकसङ्केतप्रमातो द्रव्यत्वप्रकारको बोधः; किन्तु गुणवत्त्वप्रकारक एव। तथा 'दण्डो घटस्य कारणम्' इत्यत्र दण्डत्वे कारणतावच्छेदकत्वं, 'पटो न घट' इत्यत्र भेदानुयोगितावच्छेदकत्वं 'पटे न घटत्वम्' इत्यत्र अभावानुयोगितावच्छेदकत्वं च पटत्वे भासते। अतो न 'द्रव्यं घटस्य कारणम्' 'द्रव्यं न घटः' 'द्रव्ये न घटत्वम्' इत्यादयः प्रयोगाः। क्वचित्तु विशेषणतयोपस्थितधर्मे न तदवच्छेदकत्वं भासते। 'यथा बुद्धिविषयतावच्छेदकधर्मावच्छिन्नस्तत्पदाद् बोद्धव्यः इति सङ्केते बुद्धिविषयतावच्छेदकत्वे बोधविषयतावच्छेदकत्वं न भासते। अतो घटत्वादेर्न बुद्धिविषयतावच्छेदकत्वेन भानम्। यथा वा 'चन्द्रसूर्यौ पुष्पवन्तपदात् बोद्धव्यौ' 'अन्ययोगव्यवच्छेदौ एवपदाद्बोद्धव्यौ' 'धातुना फलव्यापारौ बोद्धव्यौ' इत्यादौ द्वित्वादेः साहित्यस्य च विशेषणतयोपस्थितस्यापि न बोधविषयतावच्छेदकत्वम्। अतस्तत्र तत्र न द्वित्वादिप्रकारेण बोधः। तद्धर्मप्रकारकबोधं प्रति तत्र सङ्केतीयतत्पदजन्यबोधविषयतावच्छेदकत्वभानस्य प्रयोजकत्वात्।

एवं प्रकृतेऽपि ईप्सितपदार्थविशेषणतयोपस्थितवर्तमानत्वे न कर्मपदजन्यबोधविषयतावच्छेदकत्वं भासते। पाणिनेस्तथा तात्पर्याभावात्। अन्यथा "कर्मणि हनः" (पा०सू० ३।२।८६) इत्यनेन कर्मणि उपपदे हनधातोः भूतार्थे णिनेर्विधानं तस्य नोपपद्येत। तत्तद्धर्मे तत्तद्विधेयान्वयितावच्छेदकत्वानवगाहनेऽपि तत्तन्निष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकत्वं तत्र तत्र भासत एव। अतो घटभिन्नं द्रव्यमानय, घटत्वाभाववद्द्रव्यमानय, घटकारणद्रव्यमत्रास्ति इत्यादयः प्रयोगा उपपद्यन्ते। उपपद्यते च बुद्धिविषयतावच्छेदकत्वस्य अनुगमकत्वम्।

न च वर्तमानत्वस्य कर्मपदजन्यबोधविषयतावच्छेदकत्वेनाविवक्षितत्वेन "कर्मणि द्वितीया" (पा०सू० २।३।२) इत्यादौ कर्मपदात् तत्प्रकारकबोधाभावात् द्वितीयाविभ-

मानत्वन्तु न विवक्षितम् । (१)तेन कटं कृतवान् करिष्यतीत्यादिसिद्धिः ।

**कारकं कर्मसञ्ज्ञं स्यादिति** । 'कारके' इति प्रथमार्थे सौत्री सप्तमी । तेन कारकं सत् कर्मसञ्ज्ञमित्यर्थः । सञ्ज्ञिनः (२)क्रियाजनकत्वन्तु

---

क्षितोऽपि तत्प्रकारकबोधाभावेऽपि 'ग्रहं सम्मार्ष्टि' इत्यादौ उद्देश्यतावच्छेदकग्रहत्वादेः सम्मार्जनादिविधेयसम्बन्धप्रयोजकत्वस्य चमसादौ सम्मार्जनव्यावृत्त्यर्थं स्वीकारवत् वर्तमानत्वस्यापि भूतकालिकेच्छाविषये कर्मसञ्ज्ञाव्यावृत्त्यर्थं कर्मसंज्ञारूपविधेयसम्बन्धप्रयोजकत्वस्वीकारस्यावश्यकतया 'कटं कृतवान्' इत्यादिप्रयोगानुपपत्तिस्तदवस्थैवेति वाच्यम् । विधेयसम्बन्धप्रयोजकत्वद्वाराऽन्यव्यावर्तकत्वेन विवक्षितत्वाभावस्यापि "कर्मणि हनः"(पा०सू० ३।२।८६) इत्यनेन ज्ञापनात् । यथा ग्रहत्वस्य विवक्षितत्वेऽपि ग्रहविशेषणतया एकवचनोपस्थितमेकत्वं स्वभिन्नैकत्वाश्रये सम्मार्जनव्यावर्तकत्वेन न विवक्षितम् उद्देश्यगतत्वात्, तथा च सर्वेषां ग्रहाणां सम्मार्गः सिध्यति–तथा क्तप्रत्ययोपस्थितं वर्तमानत्वं स्वभिन्नवर्तमानत्वाश्रयकालिकेच्छाविषये कर्मसंज्ञाव्यावर्तकत्वेन न विवक्षितम् । उद्देश्यगतत्वात्, "कर्मणि हनः" इति शास्त्राच्च । अतो यत्किञ्चित्प्रयोगाधिकरणकालत्वरूपवर्तमानत्वभिन्नयत्किञ्चित्प्रयोगाधिकरणत्वाश्रयकालिकेच्छाविषयाणामपि कटादीनां कर्मत्वसिद्धिः । वर्तमानत्वस्य शाब्दबोधविषयत्वाङ्गीकाराच्च षष्ठ्याद्युपपत्तिः । 'पशुना यजेत' इत्यादौ तु विधेयपशुविशेषणत्वेनोपस्थितमेकत्वं स्वाश्रयपशुसम्बन्धिनि यागे स्वभिन्नैकत्वाश्रयपशुसम्बन्धव्यावर्तकत्वेन विवक्षितम्, विधेयगतत्वात् । वर्तमानत्वं तु विधेयान्वयितावच्छेदकत्वेन, विधेयसम्बन्धव्यावर्तकत्वेन चाविवक्षितम् । "तस्यापत्यम्" (पा०सू० ४।१।९२) इत्यादौ लिङ्गसङ्ख्यावदिति पर्यवसितोऽर्थ इति दिक् ।

**(१)तेन कटं कृतवान् करिष्यतीत्यादिसिद्धिरिति** । ईप्सितपदकर्मकपाणिनिकर्तृकोच्चारणाधिकरणीभूतकालात् प्राक् परो वा यो यः कालस्तद्वृत्तिक्रियाबोधतात्पर्येणेत्यर्थः । एवञ्च तादृशक्रियाबोधतात्पर्येण 'कटं करोति' इत्यपि सिद्धमित्यपि बोध्यम् । पाणिनिकर्तृकोच्चारणाधिकरणीभूतकालवृत्तिक्रियाबोधतात्पर्येण तत्कालात् प्राक् प्रयोगे 'कटं करिष्यति' इति, तत्कालात् परप्रयोगे 'कटं कृतवान्' इति यथा, तथा तत्समानकालप्रयोगे 'कटं करोति' इति च स्यादेवेति भावः ।

**(२)क्रियाजनकत्वं त्विति** । अत्र **प्राचीनाः**—करोति स्वसम्बन्धेन क्रियां विशेषरूपतामापादयति इति व्युत्पत्तेः महासंज्ञया क्रियान्वयित्वमेव कारक-कर्मादिसंज्ञोद्देश्यतावच्छेदकम् । कारकशब्दस्य क्रियापरत्वपक्षे शीघ्रोपस्थितिकत्वेन अन्वयीत्यध्याहारेण तदन्वयित्वस्यैव कर्मादिसंज्ञोद्देश्यतावच्छेदकत्वलाभात् । रूढ्यर्थतावच्छेदकं तु कारकपदवत्त्वं तज्ज्ञाप्यशक्तिमत्त्वं वा । तेन न 'कारकाणां क्रियान्वयः' इति प्रयोगानुपपत्तिः । ब्राह्मणस्य पुत्रं पृच्छतीत्यादौ क्रियान्वयित्वाभावान्न ब्राह्मणादेः

महासञ्ज्ञयाऽऽक्षिप्तम् । यद्वा सप्तमी यथाश्रुतैव । कारकपदञ्च क्रियापरम् । करोति कर्तृकर्मादिव्यपदेशानिति व्युत्पत्तेः । जनकमित्यध्याहारः । विषयत्वं सप्तम्यर्थः । कारकग्रहणे च स्वरितत्वप्रतिज्ञया तदधिकारोक्तकर्त्रादिषट्कमेव, तेन नटश्रवणमित्यादौ न कृदुत्तरपदप्रकृतिस्वरः । ग्रामेवासः इत्यादौ च (१)तत्स्वरासिद्धिरित्यन्यत्र विस्तरः ।

**कर्तुः किमिति** । तदभावेऽपि केनाऽऽप्तुमित्याकाङ्क्षायां (२)कारकाधिकाराद्व्यापारलाभ इति प्रश्नः । **माषेष्विति** । माषेषु प्रसक्तमश्वं माषनाशो मा भूदित्यन्यत्र (३)बध्नातीत्यर्थः । तदाह—**कर्मण इति** । त-

---

कारकत्वम् । घटं करोतीत्यादौ घटादेः क्रियान्वयित्वस्य सत्त्वादाञ्जस्येनैव कारकत्वमुपपद्यते इति न आरोपापेक्षा । अधिकरणस्यापि कर्तृ–कर्मघटितपरम्परासम्बन्धेन साक्षादेव क्रियायामन्वय इति न कारकत्वानुपपत्तिः । 'अक्षशौण्डः' इत्यादौ समासस्तु शौण्डादिपदस्य आसक्तशौण्डादौ लक्षणाश्रयणादुपपादनीय इत्याहुः ।

**नवीनास्तु**—करोतीति कारकमिति व्युत्पत्त्या क्रियाजनकत्वस्यैव आञ्जस्येन लाभात् तदेव कारकत्वमिति अधिकरणस्य कर्तृकर्मद्वारा क्रियान्वयेऽपि कारकत्वस्योपपत्तेः 'अक्षशौण्डः' इत्यादौ समासो लक्षणाश्रयणं विनैव सिध्यतीति न तत्र लक्षणा । अत एव अक्षविषयकशौण्डत्ववान् इति विवक्षितबोधस्तत उपपद्यते । अक्षशौण्डस्य धनमस्तीत्यादौ तु अगत्या लक्षणाश्रयणम् । तत्र शौण्डत्वस्य अविधेयत्वेन लक्षणाश्रयणे बाधकाभावादित्याहुः ।

**(१)तत्स्वरसिद्धिरिति** । थाथादिस्वरसिद्धिरित्यर्थः । तस्य "गतिकारकोपपदात् कृत्" (पा०सू० ६।२।१३९) इत्यस्यापवादत्वात् ।

**(२)कारकाधिकाराद्व्यापारलाभ इति** । तथा च कारकवृत्तिव्यापारप्रयोज्यफलाश्रयत्वप्रकारकेच्छोद्देश्यं कर्मेत्यर्थः स्यादिति भावः ।

**(३)बध्नातीत्यर्थ इति** । अश्वो हि बध्नातेः कर्म, न कर्ता । न च कर्तृग्रहणेऽप्ययं दोषस्तदवस्थः, भक्षणकर्तृत्वस्याश्वे सत्त्वादिति वाच्यम् । कर्तृग्रहणसामर्थ्येनैव प्रकृतधात्वर्थकर्तुर्ग्रहणेनादोषात् । यद्वा धातुवाच्यफलाश्रयत्वेनेष्टस्य कर्मत्वं चिकीर्षितं तद्धात्वर्थनिरूपित एव कर्ता गृह्यते इति भावः । न चैवमपि दुहादीनां व्यापारद्वयार्थत्वपक्षे 'गां दोग्धि पयः' इत्यादावुभयोः कर्मत्वाय प्रयोज्यत्वलाभसम्पादकतमव्ग्रहणस्य सत्त्वेन यत्र पुष्ट्यर्थं माषक्षेत्रेऽश्वबन्धनं तत्र भक्षणस्यापि बन्धनप्रयोज्यत्वेन चैत्रकर्तृकबन्धनव्यापारप्रयोज्यभक्षधात्वर्थफलाश्रयत्वेन माषाणां कर्मत्वं दुर्वारमिति वाच्यम् । कर्तृग्रहणेन व्यापारफलोभयस्यापि प्रकृतधातुवाच्यस्यैव ग्रहणेनादोषात् । प्रकृते च बन्धनप्रयोज्यभक्षधात्वर्थफलस्य प्रकृतबन्धधातुवाच्यत्वाभावात् ।

मन्ग्रहणं किमिति । अवयवद्वारा समुदायस्य प्रश्नः । (१)कर्तुरुद्देश्यं कर्मेत्येवास्त्विति भावः । (२)पयसौदनमिति । यदा कृतभोजनोऽपि

---

(१)कर्तुरुद्देश्यं कर्मेत्येवास्त्विति । कर्तृवृत्तीच्छीयोद्देश्यताश्रयः कर्मेत्यर्थः । उद्दिशेरिच्छार्थकत्वात् । यत उद्देश्यताख्यविषयताश्रयार्थकत्वात् । (२)पयसौदनमितीति । पयसेति करणे तृतीया । अयमाशयः—ईप्सितग्रहणाभावे यत्किञ्चित्प्रकारकेच्छोद्देश्यस्य कर्मत्वापत्तौ फलाश्रयत्वप्रकारकेच्छोद्देश्यत्वाभाववतोऽपि यत्किञ्चित्प्रकारकेच्छोद्देश्यस्य कर्मत्वं दुर्वारम् । तत्सत्त्वे तु फलाश्रयत्वप्रकारकेच्छोद्देश्यस्यैव कर्मत्वेन यत्किञ्चित्प्रकारकेच्छोद्देश्यत्वेऽपि फलाश्रयत्वप्रकारकेच्छोद्देश्यत्वाभावान्न दोषः । फलाश्रयत्वेनेच्छायां तु 'पयो भुङ्क्ते' इतीष्यते एव ।

केचित्तु—अत्र यत्किञ्चित्पदेन साधकतमत्वग्रहणे करणसञ्ज्ञैवापद्येत । भोजनकर्मत्वादीनां ग्रहणे त्विष्टापत्तिरेव । तस्माद्धेतावेषा तृतीया । एवञ्च पयोलाभहेतुकभोजनस्थले इदं प्रत्युदाहरणमिति लभ्यत्वेनैवेच्छोद्देश्यस्य पयसः कर्मत्वापत्तिः । लाभद्वारा क्रियाजनकत्वस्यापि सत्त्वेन क्रियाजनकत्वरूपकारकत्वस्याप्यबाधितत्वात् । ईप्सितग्रहणे तु भोजनव्यापारवाचकधातुवाच्यफलाश्रयत्वेनेष्टत्वरूपस्य ईप्सितत्वस्य तत्र बाधान्न कर्मत्वमित्याहुः ।

कश्चित्तु ईप्सितग्रहणे सम्बन्धत्वेन बोधकेनाप्याब्धातुना साध्यत्वेनेच्छाविषयफलद्वारकः व्यापारवाचकधातुवाच्यफलाश्रयत्वरूप एव सम्बन्धो बोध्यते; न तु व्यापारसमानकालिकफलाश्रयत्वादिरूप इति येन प्रत्यासत्त्यादिरूपप्रमाणेनोच्यते तेनैव प्रमाणेन मयाऽपि तत्प्रकारिकैवेच्छा ग्रहीष्यते इति कर्तुरिष्टं कर्मेत्येव सुवचम् । कर्तुरुद्देश्यं कर्मेति तु न युक्तम् । उदो देश्यशब्दस्य च पदत्वेन पदगौरवापत्तेः । 'अग्नेर्माणवकं वारयति' इत्याद्यर्थं प्रयोज्यत्वलाभसम्पादकं तमब्ग्रहणं क्रियतां, न तत्राऽऽग्रहः । अनुपदमेव वक्ष्यमाणरीत्या माऽस्तु वेति दिगिति गदति ।

वस्तुतस्तु ईप्सितपदसत्त्वे आब्धातूपस्थाप्यसम्बन्धः प्रकृते प्रत्यासत्त्या क्रियाघटित एव गृह्यते इत्येवंरूपेण तात्पर्यं निश्चेतुं शक्यते, तदभावे तु पदादनुपस्थितत्वेन किंप्रकारिकेच्छेत्याकाङ्क्षामुत्थाप्य प्रत्यासत्त्या सम्बन्धविशेषप्रकारिकेति प्रत्यासत्तिमहिम्ना नैव लब्धुं शक्यते, इति ईप्सितग्रहणमावश्यकमेव । एवञ्च तत्सत्त्वे पयसेति करणतृतीयान्तं प्रत्युदाहरन्तोऽप्यपास्ता एव । उक्तरीत्या कर्तृपदार्थविशेषणीभूतक्रियाद्वारकसम्बन्धप्रकारिकेच्छा क्रियाप्रयोज्यफलाश्रयत्वप्रकारिका, क्रियावाचकधातुवाच्यफलाश्रयत्वप्रकारिका वा गृह्यते इति 'रामेण बाणेन हतो वाली' इत्यादौ बाणोद्देश्यकसाधकतमत्वप्रकारकेच्छायां तथात्वाभावेनातिप्रसङ्गाभावात् इत्याहुः ।

अत्र प्राचीनानुयायिनः—केवलसाधकतमत्वप्रकारकेच्छायां करणसंज्ञायाः

पयोलाभेनौदनभोजने प्रवर्तते तदेदं प्रत्युदाहरणम् । तत्क्रियायाः पयउद्देश्यकत्वात् । ईप्सिततमशब्दस्य तु क्रियाशब्दत्वात्पयसस्तदा फलाश्रयत्वेना-

---

फलाश्रयत्वमात्रेच्छायां कर्मसंज्ञायाश्च चारितार्थ्ये उभयेच्छायामुभयोः प्राप्तौ गां दोग्धीत्यादाविव परत्वात् कर्मसंज्ञा स्यात् । सा मा भूदित्येतदर्थम् ईप्सितपदप्रवृत्तिनिमित्तभूतेच्छाप्रकर्षलाभार्थं तमब्ग्रहणम् । अत एव कौमुद्यां "कर्तुरीप्सिततमम्" (पा०सू० १।४।४९) इति सूत्रवृत्तौ आप्तुमिष्टतममिति इष्टपदोत्तरं तमबुल्लेखः । इच्छायां प्रकर्षश्च अन्येच्छानधीनत्वलक्षणः । तथा च ओदनभोजनोपकारकत्वेन पयआदेर्भोजनेच्छायाम् उपकारकत्वेच्छाधीनत्वेन अन्येच्छानधीनत्वलक्षणप्रकर्षाभावात् प्रकृतधात्वर्थफलाश्रयत्वेनेच्छाविषयत्वेऽपि पयआदेर्न कर्मत्वम् । इदमेव तमब्ग्रहणफलम् । आपधात्वर्थसम्बन्धघटकफले प्रधानभूतधात्वर्थव्यापारप्रयोज्यत्वांशस्तु प्रत्यासत्त्या तत्र प्रकृतधात्वर्थत्वांशवत् प्रत्यासत्तिलभ्य एव । कर्त्रा केन सम्बन्द्धुमिष्यमाणमित्याकाङ्क्षायां तद्वृत्तिव्यापारेणेत्यर्थस्यैव शीघ्रोपस्थितिकत्वेन ग्रहीतुमुचितत्वात्—इत्याहुः ।

**नवीनानुयायिनस्तु**—उपकारकत्वफलाश्रयत्वोभयविवक्षायां परत्वात् कर्मसंज्ञा गां दोग्धीत्यादौ ध्रुवत्वफलाश्रयत्वोभयविवक्षायामिव भवत्येव । "कर्तुरीप्सिततमम्" (पा सू० १।४।४९) इति सूत्रभाष्ये "इह कश्चित् आमन्त्रयते—सिद्धे भुज्यतामिति । स आमन्त्र्यमाण आह–प्रभूतं भुक्तमस्माभिरिति । आमन्त्र्यमाण आह–दधि खलु भविष्यति पयः खलु भविष्यति । आमन्त्र्यमाण आह–दध्ना खलु भुञ्जीय पयसा खलु भुञ्जीयेति । अत्र कर्मसंज्ञा प्राप्नोति-तद्धि तस्येप्सिततमं भवति" इत्याशङ्क्य "तस्याप्योदन एवेप्सिततमः । नतु गुणेष्वस्यानुरोधः । तद्यथा–भुञ्जीयाहमोदनं यदि मृदुविशदः स्यादिति, एवमिहापि दधिगुणमोदनं भुञ्जीयं, पयोगुणमोदनं भुञ्जीयेति" इति समाहितम् । अत्र "तस्याप्योदन एवेप्सिततम" इत्यस्य ओदने एव फलाश्रयत्वविवक्षा, "नतु गुणेष्वस्यानुरोध" इत्यस्य च गुणमात्रे दध्यादौ अनुरोधः फलाश्रयत्वविवक्षा नतु–नैवेत्यर्थः । ततश्च ईप्सितशब्दस्य क्रियापरत्वाभिप्रायेण तादृशस्थले फलाश्रयत्वाविवक्षयैव कर्मत्वाभावः, नतु फलाश्रयत्वविवक्षायामपि कर्मत्वाभावः भाष्याभिप्रेतः । तत्सूत्रे एव भाष्ये तमब्ग्रहणस्य 'अग्नेर्माणवकं वारयति' इत्यत्र अनवकाशत्वात्प्राप्ताया अपादानसंज्ञाया व्यावृत्त्यर्थत्वस्योक्तत्वेन धात्वर्थफले धात्वर्थप्रधानव्यापारप्रयोज्यत्वरूपप्रकर्षस्यैव लाभेन तद्द्वारैव इच्छायां प्रकर्षस्य ग्रहीतुमुचितत्वेन इच्छायां साक्षादुक्तप्रकर्षाश्रयणे प्रमाणाभावात् । आकडारसूत्रे "करणमुत्तराणि" इत्यत्र कर्मसंज्ञाया अनुदाहरणन्तु अनभिधानात्, धनुर्विध्यतीत्यादिकर्तृसंज्ञोदाहरणस्य दिक्प्रदर्शनार्थत्वाद्वा । तस्मात् उभयविवक्षायां कर्मत्वाभावो न तमब्ग्रहणस्य फलम् । स्पष्टं चेदं सर्वं कर्तुरिति सूत्रे विवरणे इत्याहुः । तद् ध्वनयन्—

विवक्षणान्न दोष इति भावः । (१)तमस्य फलं तु 'अग्नेर्माणवकं वारयति' इति । तदभावे हि "वारणार्थानाम्" (पा०सू० १।४।२७) इति सूत्रम-(२)स्यापवादः स्यात् । एवञ्च माणवकस्य कर्मत्वं न स्यात् । न चाग्नौ तच्चरितार्थम् । तस्यापि तदुपस्थाप्यसंयोगरूपफलाश्रयत्वात् । वारयतेश्च (३)संयोगाद्यनुकूलव्यापाराभावानुकूलव्यापारोऽर्थः । एष एव प्रवृत्तिवि-

---

तमब्ग्रहणफलमाह—(१)तमस्य फलं त्वित्यादिना । (२)अस्यापवादः स्यादिति । ननु यद्यपि निवारकस्यामात्यादेर्दुष्टत्वात् 'माणवकोऽग्निं संयुनक्तु' इत्यपीच्छा, परं तु स्वामिभयेन तं निवारयति, तत्र निवारणानुकूलप्रधानीभूतव्यापाराश्रयीभूतभृत्यवर्त्तिनी तद्वृत्तिव्यापारवाचकवारिधातुवाच्यसंयोगरूपफलाश्रयत्वप्रकारकेच्छा अग्न्युद्देश्यिकेति तत्रोभयोः "कर्तुरीप्सिततमम्" (पा०सू० १।४।४९) इतिसूत्रेण कर्मसंज्ञायाः प्राप्तिस्तथापि यत्र 'माणवकोऽग्निं संयुनक्तु' इति वारकस्य भृत्यस्येच्छा नास्ति तत्र भृत्यवृत्तिव्यापारवाचकधातुवाच्यसंयोगरूपफलाश्रयत्वप्रकारकभृत्यसमवेतेच्छोद्देश्यत्वाभावेनाग्नेः "कर्तुरीप्सित" इति सूत्रेण कर्मसंज्ञाया अप्राप्तौ तत्रापादानसंज्ञायै "वारणार्थानाम्" (पा०सू० १।४।२७) इत्यस्य चारितार्थ्येनापवादत्वमयुक्तमिति चेन्न । तत्रापि "तथायुक्तं चानीप्सितम्" (पा०सू० १।४।५०) इत्यनेन परत्वात्कर्मसंज्ञाप्राप्तेः स्पष्टत्वात् । न च बाधितमिदम्—'एकदेवेप्सितत्वेन "वारणार्थानाम्" इत्यनेनापादानसंज्ञाप्राप्तिः, अनीप्सितत्वेन च "तथायुक्तम्" इत्यनेन कर्मसंज्ञाप्राप्तिः' इति वाच्यम् । "वारणार्थानाम्" इत्यत्र कर्तृपदासत्त्वेन कारकसामान्यवृत्तीप्साया ग्रहणेन "तथायुक्तम्" इत्यत्र च कर्तुरीप्सितसूत्रात् कर्तृग्रहणानुवृत्त्या कर्तृमात्रवृत्तीप्साया ग्रहणेन बाधानवकाशात् । तथा च अग्नेः माणवकात्मककर्मरूपकारकवृत्तीप्साविषयत्वस्य सत्त्वेनापादानसंज्ञाप्राप्तिः, वारकभृत्यरूपप्रधानीभूतव्यापाराश्रयकर्तृवृत्तीप्साविषयत्वाभाववत्त्वेन तथायुक्तमित्यनेन कर्मत्वप्राप्तिश्च सुलभा । फलत्वं च न प्रधानीभूतव्यापारप्रयोज्यत्वमेव, अपि तु धात्वर्थेऽनुकूलत्वसम्बन्धेन प्रकारताश्रयत्वे सति धात्वर्थत्वमेवेति संयोगादीनामपि वारिधातुफलत्वम् ।

ननु वाचकवाच्यत्वापेक्षया प्रयोज्यत्वस्य स्वरूपसम्बन्धरूपत्वेन लघुभूततया लाघवात् तत्सम्बन्धस्यैव लाभः स्यादिति तदर्थं तमब्ग्रहणकरणमयुक्तमिति चेन्न । पुष्ट्यर्थं माषक्षेत्रेऽश्वबन्धने "माषेष्वश्वं बध्नाति" इत्यादौ माषाणां कर्मत्वाभावाय प्रत्यासत्त्या कर्तृग्रहणसामर्थ्येन वाचकवाच्यत्वस्यावश्यं वाच्यतया प्रयोज्यत्वलाभाय तत्करणस्य युक्ततरत्वात् ।

(३)संयोगाद्यनुकूलव्यापाराभावानुकूलव्यापारोऽर्थ इति । नन्वत्र संयोगानुकूलव्यापाराभावपदेन कोऽभावो गृह्यते ? न तावदन्योन्याभावो धर्तुं शक्यते । यत्र निवारणेतरव्यापारं भृत्यादिः विधत्ते, न च निवारयति तत्रापि 'वारयति' इति

घातः। ईप्सितशब्द उभयत्रापि क्रियाशब्द एव। न च संयोगो न तत्कर्तृव्यापारजन्य इति तत्र कर्मत्वाप्राप्तिरिति वाच्यम्। कर्तृव्यापारवाचकधातूपात्तफलाश्रयत्वमित्यर्थस्यैव तेन लाभात्। तमब्ग्रहणे त्वीप्सितमात्रे सावकाशस्य परत्वादीप्सिततमेऽनेन बाधः। (१)ईप्सिततमत्वञ्च प्रकृतधा-

---

प्रयोगापत्तेः। भेदस्य नित्यत्वेन प्रधानव्यापारे तदनुकूलत्वस्य बाधितत्वाच्च। नाप्यत्यन्ताभावः। तस्यापि नित्यत्वेन मुख्यव्यापारेऽत्यन्ताभावानुकूलत्वस्य बाधित्वात्। नापि ध्वंसः अननुभवात्। तथा हि—यत्राकृताग्निसंयोगमग्निसंयोगाय चोद्यतं माणवकं निवर्तयति तत्रैव वारयतीति प्रयुज्यते। यत्र चाग्निं संयुञ्जन्तं माणवकं निवर्तयति तत्र तु 'अग्नेर्माणवकं विभाजयति' इत्येव प्रयुज्यते इति। एवं चाग्निसंयोगात्प्रागग्निसंयोगरूपप्रतियोगिनोऽसत्त्वेन ध्वंसस्य वक्तुमशक्यत्वम्। नापि प्रागभावः। तस्य प्रतियोगिसमवायिकारणवृत्तित्वशीलस्य स्वप्रतियोग्युत्पादकत्वनियमेन माणवकस्याग्निसंयोगापत्तेरिति चेत्?

अत्र **केचित्**। अत्यन्ताभाव एव चात्र संयोगानुकूलव्यापारस्याभावः। तदनुकूलता च प्रधानव्यापारे न तज्जनकतारूपा, अपि तु तदभावप्रयोजकाभावप्रतियोगितारूपा। तथा च संयोगानुकूलव्यापाररूपतदभावाभावप्रयोजकाभावप्रतियोगित्वं निवारकवृत्तिव्यापारेऽक्षतम्। अभावयोः प्रयोज्यप्रयोजकभावश्च स्वरूपसम्बन्धविशेष एव। व्यापकाभावप्रयोज्यत्वस्य व्याप्याभावे व्यवहारात्। यथा वह्न्यभावप्रयोज्यो धूमाभाव इति।

**केचित्तु**—प्रागभाव एवात्र गृह्यते। अयं च प्रागभावो न प्रतियोग्युत्पत्तिकारणीभूतः, अपि तु स्वरूपयोग्यतारूपकारणताश्रयवृत्तिः कार्यानुत्पादको विलक्षण एव। स्पष्टं चैतत् कणादसूत्रव्याख्याने उपस्काराख्ये। तत्र हि—"को मुक्तिपदार्थः" इति जिज्ञासायां "दुःखाभावो मुक्तिपदार्थः" इत्युक्तौ "कोऽसावयमभावो दुःखस्य? न तावदन्योन्याभावोऽत्यन्ताभावो वा। तयोर्नित्यत्वेन ज्ञानानुत्पाद्यतया ज्ञानान्मुक्तिरित्यसङ्गत्यापत्तेः। नापि ध्वंसः। दुःखस्य स्वत एव तृतीयक्षणविनाशित्वेन तदर्थं ज्ञानादेरनपेक्षाप्रसङ्गात्। नापि प्रागभावः, पुनर्दुःखापत्तेः" इत्युक्त्वा "प्रतियोग्यनुत्पादकोऽयं स्वरूपयोग्यतात्मककारणताश्रयवर्ती ज्ञानादिना परिरक्ष्यः प्रागभावविशेष एव दुःखभावः" इत्युक्तम्। ज्ञाने तादृशाभावपरिरक्षकता च तत्प्रतियोगिदुःखोत्पादकव्यापारध्वंसकारणत्वाद्बोद्धव्येति दिक्।

ईप्सिततमलक्षणमाह—(१)**ईप्सिततमत्वं चेति**। स्वप्रयोज्यत्वं—स्ववाचकधातुवाच्यत्वमेतदुभयसम्बन्धेन व्यापारविशिष्टफलवत्त्वरूपः सम्बन्ध आब्धात्वर्थः। तत्र प्रयोज्यत्वं तमब्ग्रहणलभ्यम्। वाचकवाच्यत्वं कर्तृग्रहणलभ्यम्। प्राधान्यांशस्तु व्यापारे कर्तृग्रहणमहिमलभ्यः।

त्वर्थप्रधानीभूतव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयत्वेनोद्देश्यत्वम् । तच्च नाग्न्यादौ । फलव्यापारयोः प्रकृतधात्वर्थत्वन्तु प्रत्यासत्तिलभ्यम् । तेन यदा पुष्ट्यर्थं माषभक्षणाय माषक्षेत्रे एवाश्वबन्धनं तदा 'माषेष्वश्वं बध्नाति' इत्यादौ माषाणां न कर्मत्वम् । बन्धनप्रयोज्यभक्षणफलाश्रयत्वेऽपि भक्षणस्य बध्नात्यर्थत्वाभावात् । (१)प्रयोज्यत्वनिवेशाद् 'गां पयो दोग्धि' इत्यादौ विभागानुकूलव्यापारानुकूलव्यापारार्थकदुहियोगे पयसः कर्मत्वसिद्धिरिति स्पष्टं भाष्ये ।

**कर्मेत्यनुवृत्ताविति । "अधिशीङ्स्थासाम्"** (पा०सू० १।४।

---

**कश्चित्तु** प्रयोज्यत्वलाभाय तमब्ग्रहणकरणमयुक्तमेव । प्रयोज्यत्वालाभे परत्वादनेन बाधापत्त्या "वारणार्थानाम्" (पा०सू० १।४।२७) इत्यस्य वैयर्थ्यात्तत्सामर्थ्यादेव प्रयोज्यत्वलाभस्य सुकरत्वात् । साक्षाच्छास्त्रबाधापेक्षयाऽस्यैवौचित्यादिति निगदति । तन्न, रथकाराधिकरणन्यायेन बाध एव स्यादिति ।

ननु जन्यत्वनिवेशेनैवेष्टसिद्धौ किं प्रयोज्यत्वनिवेशेन ? अत आह–(१)**प्रयोज्यत्वनिवेशादिति ।** गोव्यापारं विना पयसि व्यापारपूर्वकविभागानुत्पत्तेः गोपव्यापारजन्यो गोव्यापारो धातुवाच्यः । तज्जन्यस्तु पयोनिष्ठो व्यापारपूर्वको विभागः । तत्र पयोनिष्ठव्यापारस्य विभागनान्तरीयकत्वान्न धातुवाच्यतेति न तदुल्लेखः । एवञ्च पयोनिष्ठविभागरूपफलस्य गोपनिष्ठधात्वर्थप्रधानव्यापारजन्यत्वाभावात्कर्मसञ्ज्ञा न स्यादिति साक्षात्परम्परासाधारणं प्रयोज्यत्वं निवेशनीयमिति भावः ।

अत्रेदं बोध्यम् । काशीम् अगच्छन् काशीं गत इत्यादिप्रयोगदर्शनात् "कर्तुरीप्सित" (पा०सू० १।४।४९) इतिसूत्रविहितकर्मसञ्ज्ञाविषये तज्ज्ञाप्यकर्मत्वशक्तिवद्विशेषणतया तद्बोधकपदोत्तरद्वितीयया उद्देश्यत्वमपि बोध्यते, "तथायुक्तं चानीप्सितम्" (पा०सू० १।४।४९) इति विहितकर्मसञ्ज्ञाविषये तु अनीप्सितपदोपादानात् तद्बोधकपदोत्तरद्वितीयया तन्न बोध्यते । ततश्च अगच्छन् इत्येतत्समभिव्याहृतया काशीमिति द्वितीयया उद्देश्यत्वस्योपस्थितेः, गत इत्येतत्समभिव्याहृतया काशीमितिद्वितीयया च तदनुपस्थितेः उक्तवाक्यात् काश्यभिन्नकर्मोद्देश्यकगमनकर्तृत्वाभाववान् काशीकर्मकगमनकर्ता चैत्रादिः इति बोधः । विशिष्टाभावश्च तादृशोद्देश्यत्वरूपविशेषणाभावप्रयुक्तोऽत्र बोध्यः । एवं तण्डुलं पचतीत्यादावपि तण्डुलकर्मोद्देश्यकपाकानुकूलो व्यापारश्चैत्राभिन्नाश्रयवृत्तिरिति बोधः । अत एव सम्प्रदानसञ्ज्ञासूत्रे कर्मणेत्यस्याभावे कर्मणोऽपि सम्प्रदानसञ्ज्ञायां ततश्चतुर्थ्यापादनं भाष्यकैयटोक्तं सङ्गच्छते । चतुर्थ्यास्तु उद्देश्यत्वार्थकत्वं सर्वसम्मतमेवेति ।

४६) इति सूत्रात्। **आधारेति** । (१)कर्तृकर्मद्वारा क्रियाश्रयो हि

---

(१)**कर्तृकर्मद्वारा क्रियाश्रयो हि स इति** । फलतावच्छेदकसम्बन्धेन फलाश्रयो यस्तदधिकरणं, व्यापारतावच्छेदकसम्बन्धेन व्यापाराश्रयो यस्तदधिकरणमेतदन्यतरस्मिन्नेवाधारपदस्य रूढत्वात्। पूर्वसूत्रे एतदर्थपरत्वस्यैव दृष्टत्वेनार्थाधिकारानुरोधादत्रापि तादृशार्थपर एव स्यात्। एतेन तत्र तथाऽर्थकत्वस्य सूत्रारम्भसामर्थ्याल्लाभेऽपि प्रकृते क्रियाधारपरत्वमेव स्यादिति न दोषः स्यादित्यपास्तमिति भावः। एतेन "आधारोऽधिकरणम्" (पा०सू० १।४।४५) इतिसूत्रस्थशेखरे यदुक्तं "साक्षात्क्रियाधारस्य कर्तृकर्मसञ्ज्ञाभ्यामेव बाधः स्यादिति अत्राधारपदं कर्मकर्त्राधारपरम्" इति, तदप्यपास्तम्। कालिकादिसम्बन्धेन साक्षादेव क्रियाधारस्य लाभात्। न हि तत्र कर्तृकर्मसञ्ज्ञाप्राप्तिः। फलतावच्छेदक-व्यापारतावच्छेदकान्यतरसम्बन्धेन फलव्यापारानधिकरणत्वात्।

**कश्चित्तु** आधारपदं फलतावच्छेदक-व्यापारतावच्छेदकान्यतरसम्बन्धेन फलव्यापारान्यतराधिकरणे एव रूढम्। तत्र च कर्तृकर्मसञ्ज्ञाभ्यामेव बाधः स्यादिति कर्मकर्त्रधिकरणमेवाऽऽधारपदेन लक्ष्यते इति शेखरस्याशयं वर्णयति। तन्न, तादृशमुख्यार्थपरस्याऽऽधारपदस्यादर्शनात्। "तण्डुलो विक्लित्याधारः" इत्यादौ समवायस्य फलतानवच्छेदकत्वात्। प्रयोगभेदेन फलतावच्छेदकसम्बन्धभेदस्य व्यवस्थापितत्वेन समवायस्य प्रकृतवाक्यघटकधात्वर्थफलतावच्छेदकत्वाभावादिति ध्येयम्।

**यत्तु**—"धातोः कर्मणः समानकर्तृकादिच्छायां वा" (पा०सू० ३।१।७) इतिसूत्रारम्भसामर्थ्यात् "कर्मणि हनः" (पा०सू० ३।२।८६) इत्याद्यारम्भाच्चात्राधारपदानुवृत्तिरिति। तन्न, क्रियाधारनिरूपिताधारतायाः कालिकादिसम्बन्धावच्छिन्नायाः सर्वत्र सत्त्वेन तयोः सार्थक्यात्।

नन्वेवं 'गेहं प्रविशति इत्यादावेव स्यात्' इतिग्रन्थासङ्गतिः, एवं रीत्या 'तण्डुलं पचति' इत्यादावपि कर्मसञ्ज्ञायाः सुवचत्वात्, इति चेत्सत्यम्। पूर्वसूत्रे आधारपदस्य कर्तृकर्माधारत्वेन विवक्षितार्थपरतया प्रकृतेऽपि कर्तृकर्माधारत्वेन विवक्षितार्थपरत्वमेव स्यादिति कर्तृकर्माधारत्वेन विवक्षायामसत्यां कर्मसञ्ज्ञा न स्यादित्येवं ग्रन्थस्य सुयोजत्वात् इति दिक्।

इत्थं च स्ववाचकवाच्यत्वं-स्वप्रयोज्यत्वमेतदुभयसम्बन्धेन स्ववृत्तिव्यापारविशिष्टफलनिरूपितफलतावच्छेदकसम्बन्धावच्छिन्नाश्रयत्वप्रकारकत्वं-स्वसमवेतत्वमेतदुभयसम्बन्धेन कर्तृविशिष्टा या इच्छा तन्निरूपितोद्देश्यताख्यविलक्षणविषयताश्रयः सङ्केतसम्बन्धेन कर्मपदवान् इति सूत्रार्थः सम्पन्नः। इच्छायां कर्तृसमवेतत्वविशेषणात् चैत्रस्य तथेच्छायां 'मैत्रः पचति' इति न प्रयोगः। अन्येषां फलं तूक्तमेव। न चैवं यत्रोभयव्यापारज एको विभागः संयोगो वा तत्र 'चैत्रः स्वं त्यजति' इति, गच्छति इति वा प्रयो-

सः । तदाह—**गेहमित्यादि** । **अनुक्ते कर्मणीति** । (१)कर्मपदेनैतच्छास्त्रबोधितकर्मसंज्ञकं (२)कर्मत्वशक्तिमद् गृह्यते । सर्वकर्मविहितद्वितीयादीनां कर्मत्वशक्तिमानर्थः । क्रियाकारकभावः सम्बन्धश्च तदर्थः ।

---

गापत्तिः, उक्तरीत्या तद्वृत्त्यनुयोगितायाः फलतावच्छेदकत्वात् इति वाच्यम् । परत्वात् कर्तृसञ्ज्ञया बाधेन व्यापारासमानाधिकरणस्यैव फलस्य ग्रहणात् । नच व्यापारासमानाधिकरणस्यैव फलस्य ग्रहणे 'स्वं जानाति' इत्यादावव्याप्तिः इति वाच्यम् । अन्तःकरणावच्छिन्नात्मनोऽत्र कर्तृत्वेन, शरीरावच्छिन्नजीवस्य च कर्मत्वेन व्यापारस्य फलव्यधिकरणत्वात् । एवञ्च शरीरविशेषावच्छिन्नः शरीरविशेषावच्छिन्नं गच्छतीति, त्यजतीति वा तात्पर्येण "चैत्रः स्वं गच्छति" इत्यादीष्टमेव । इतरथाऽत्र कर्तृसञ्ज्ञयैव बाधः स्यादिति तथापत्त्यसम्भवः । एतेनाकर्मकधातुस्थले कर्तुः कर्मसञ्ज्ञामापादयन्तोऽपास्ता इत्यलम् ।

प्राचीनोक्तमाश्रयमात्रार्थकत्वं विभक्तीनां खण्डयति--**(१)कर्मपदेनेति** । **(२)कर्मत्वशक्तिमदिति** । कर्मत्वशक्तिश्च कर्मसञ्ज्ञाज्ञाप्या । तथाच "अधिशीङ्स्थासां कर्म" (पा०सू० १।४।४६) इत्यादिशास्त्रीयोद्देश्यतावच्छेदकानां भिन्नत्वेऽपि कर्मसञ्ज्ञाज्ञाप्यकर्मत्वशक्तेः सर्वत्रैक्येन "कर्मणि द्वितीया" (पा०सू० २।३।२) इत्यनेन अनुगतकर्मत्वशक्तिपुरस्कारेण द्वितीयाविभक्तिवाच्यत्वबोधनमुपपद्यते । एवं "गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ" (पा०सू० २।३।१२) इत्यादिनाऽपि । तथाच कर्मणीत्येवं विहितविभक्तीनां कर्मत्वशक्तिमानर्थः, कर्तरीत्येवं विहितविभक्तीनामपि तत्तच्छक्तिमानर्थः । क्रियाकारकभावः सम्बन्धश्च सर्वकारकविभक्तीनामर्थः, अन्यासां विभक्तीनां तु स्वस्वामिभावादिः सम्बन्धोऽर्थः । "राजपुरुषयोः सम्बन्धस्य षष्ठी वाचिका, क्रियाकारकयोः सम्बन्धस्य द्वितीया वाचिका" इति समर्थसूत्रभाष्यात् । विशेषणत्वज्ञाने एव सम्बन्धाकाङ्क्षोदयेन विशेषणत्वं च सर्वविभक्तीनामर्थः । क्रियाकारकभावश्च साध्यसाधनभावरूप एव । तथाच हरिं भजतीत्यादौ हर्यभिन्नकर्मनिष्ठसाध्यसाधनभावसम्बन्धावच्छिन्नविशेषणतानिरूपितविशेष्यतावद्भजनमिति बोधः । तत्र विशेष्यत्वं वाक्यशक्तिगम्यम् । कर्मत्वस्य हरिनिष्ठत्वे बुद्धे तत्समानाधिकरणप्रीतिफलस्यापि हरिनिष्ठत्वं बुध्यते । तन्मूलक एव हरिनिष्ठप्रीत्यनुकूलो व्यापार इति बोधः । ननु धात्वर्थप्रीत्यात्मकफले प्रकृत्यर्थहरेरन्वयः शाब्दः । सर्वकारकाणां भावनान्वयव्युत्पत्तेः । कारकाणां कर्तृनिष्ठधात्वर्थभावनासाधनत्वं च भावनाभाव्यफलनिष्पादकत्वमेव । इत्थमेव यागस्य भावनाकरणत्वमुपपादितं मीमांसकैः । प्राधान्याद्भावनायामेव कारकाणामन्वयो नतु फले इति स्पष्टं भूषणसारे धात्वर्थनिर्णये । तस्मात् क्वचित् फलीभूतफलान्वयप्रदर्शनात् न कर्मकारकस्य तत्र शाब्दान्वय इति भ्रमितव्यमिति दिक् ।

"राज्ञः पुरुष इत्यत्र राजपुरुषयोः सम्बन्धस्य षष्ठी वाचिका, कष्टं श्रित इत्यत्र क्रियाकारकयोः सम्बन्धस्य द्वितीया वाचिका" इतिसमर्थसूत्रस्थ-भाष्यात् । एवञ्च 'हरिं भजति' इत्यादौ हरिकर्मकं भजनमिति बोधः ।

**अभिहिते त्विति ।** अनभिहिताधिकारादिति भावः । (१)पञ्चकं प्रातिपदिकार्थ इति पक्षे "कर्मणि द्वितीया" (पा०सू० २।३।२) इत्यादेः "द्व्येकयोः" (पा०सू० १।४।२२) इत्यादेश्च नियमत्वम् । एतदभावेऽपि स्वादिसूत्रेण "अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे" इति कर्मादौ सङ्ख्यायाञ्च स्वादीनां सिद्धेः । तत्र यदा कर्मणीत्यादेर्द्व्येकयोरित्यादेश्चैकवाक्यतायामेकस्मिन् कर्मणीत्यन्वयेन सूत्रजबोधे कर्माद्यर्थस्य प्राधान्यं तदा नार्थोऽ(२)नेन । (३)सूत्रजबोधविषयप्रधानविषयेण 'उक्तार्थानाम्' इति न्यायेन

---

**(१)पञ्चकं प्रातिपदिकार्थ इति ।** द्विकं त्रिकं वा प्रातिपदिकार्थ इति पक्षे हि कर्मादिकारकेषु, एकत्वादिसङ्ख्यासु च विवक्षितेषु द्वितीयादिविभक्तीनाम् एकवचनादीनां च साधुत्वबोधनार्थं "कर्मणि द्वितीया" (पा०सू० २।३।२) इत्यादीनां "द्व्येकयोः" (पा०सू० १।४।२२) इत्यादीनां च चारितार्थ्यात् भाष्योक्तनियमत्वानुपपत्तिः । अतः पञ्चकं प्रातिपदिकार्थ इत्याश्रीयते । तथा च प्रातिपदिकेनैव सङ्ख्याकारकयोरप्यभिधाने 'कर्मणि वर्तमानात् प्रातिपदिकात् द्वितीया' 'एकत्वे वर्तमानात् एकवचनम्' इत्येवं तत्तदर्थस्य वाच्यतया तत्र च स्वादिसूत्रेणैव विभक्तेः सिद्धतया तेषां नियमत्वमुपपद्यते । नियमश्च प्रत्ययानाम् , अर्थानां वेत्यन्यदेतत् । अत एव 'दधि' इत्यादौ लोपादिक्रमजानतोऽपि कारकसङ्ख्याबोधः सर्वानुभवसिद्धः । सर्वकारकेषु प्रातिपदिकमात्रस्य शक्तावपि अमादिसमभिव्याहारेण कर्मत्वादिशक्तिः उद्भूतत्वेन स्वरूपतश्चावभासते इति तत्तत्समभिव्याहारे एव स्वरूपतः कर्मत्वादिशक्तिपुरस्कारेण बोध इति नानवस्था । अयं भावः—'कारकत्वव्याप्यत्वोपलक्षितधर्मावच्छिन्नः, सङ्ख्यात्वव्याप्यत्वोपलक्षितधर्मावच्छिन्नश्च घटादिपदवाच्यः' इत्येवं सामान्यतः शक्तिग्रहानन्तरम् अमादिसमभिव्याहारज्ञाने कर्मत्वादौ कारकत्वव्याप्यत्वादौ च अवगते मनसा 'कर्मत्वादिशक्तिमान् एकत्वादिमांश्च घटादिपदवाच्यः' इति विशिष्य शक्तिज्ञाने स्वरूपतस्तत्तद्विशेषपुरस्कारेण बोधः । दध्यादिपदात्तु तृतीयाद्यसमभिव्याहारज्ञानेनैव तथा शक्तिं गृहीत्वा तथा बोधः । शब्दशक्तिस्वभावात् । एवम् 'अजर्घाः' 'अवेत्' इत्यादौ तिङ्समभिव्याहारं विनैव कालकारकसङ्ख्यानां बोधात् धातोरेव तेषु शक्तिः । तस्मात् सुपां तिङां च द्योतकत्वमेवेति सिद्धान्त इति दिक् ।

**(२)अनेनेति ।** अनभिहिताधिकारेणेत्यर्थः । **(३)सूत्रजबोधविषयप्रधान-**

सिद्धेः । यद्यपि "द्विर्बद्धं सुबद्धम्" इति न्यायेन 'द्वौ ब्राह्मणौ' 'व्यतिलुनीते' इत्यादौ द्योतकवाचकयोर्द्योतकयोश्च समुच्चयो दृष्टस्तथापि प्रकृते लक्ष्यानुसारादुक्तार्थानामिति न्यायानुसरणस्यैव वक्तुं शक्यत्वात् । एवञ्च कर्मादीनां द्योत्यत्वमेव । यदा तु कर्मगते एकत्वे इत्यन्वयेन सङ्ख्यायास्तत्त्वं तदा सूत्रमारब्धव्यम् । **भाष्ये** एषु विभक्त्यर्थत्वव्यवहारो द्योत्यतयैव, न त्वेतावता तच्छक्यत्वमेषां भ्रमितव्यं; नियमत्वानुपपत्तेरिति स्पष्टं "बहुषु" (पा०सू० १।४।२१) इति सूत्रे **भाष्या**दिषु । द्योतकविषयेऽप्युक्तार्थानामिति न्यायो "अधिपरी" (पा०सू० १।४।९३) इति सूत्रे **भाष्ये** दृश्यते । तत्र हि अध्यागच्छतीत्यादावागच्छतीत्यतोऽनधिकार्थयोरधिपर्योः प्रयोगस्योक्तार्थानामितिन्यायेनाभावमाशङ्क्य 'अपूपौ द्वौ' इत्यादावुक्तार्थानां प्रयोगदर्शनेन समाधानं कृतम् । तत्र हि द्विशब्दापूपशब्दयोर्वाचकयोः प्रकृतिप्रत्यययोर्वाचकद्योतकयोर्द्वावित्यत्र तयोर्वाचकानुवादकयोश्च समुच्चयः । अत एव द्विदशा इत्यादौ समासेन सुजर्थस्योक्तत्वान्न सुजिति **भाष्ये** उक्तम् । तत्र हि समासः सुच्चेत्युभयमपि द्योतकम् । सुजर्थश्च जन्मेति तत्रैव वक्ष्यते । तथा तद्धिताद्विर्वचनयोर्द्योतकयोस्तद्धितेनोक्तत्वाद्वीप्सायां न द्विर्वचनं माषश इत्यादाविति "सर्वस्य द्वे" (पा०सू० ८।१।१) इति सूत्रे **भाष्ये** उक्तम् । एवं च धातोरपि क्रियात्वक्रियाकालकारकसङ्ख्यारूपं पञ्चकमर्थः । अत एव तद्विषयेऽपि "द्व्येकयोः" (पा०सू० १।४।२२) इत्यादेः "भावकर्मणोः" (पा०सू० १।३।१३) इत्यादेश्च नियमत्वं **भाष्य**सम्मतं सङ्गच्छते । अत एव दधि अजर्घा अवेत् इत्यादौ प्रातिपदिकधातुभ्यामेव सर्वबोधः । अत एव "भावकर्मणोः" (पा०सू १।३।१३) इत्यस्य तद्वृत्ताद्धातोरित्यर्थः "स्नुक्रमोः" (पा०सू० ७।२।३६) इतिसूत्रे **भाष्ये** दर्शितः । द्योत्यत्वादेवोभयत्रापि प्रत्ययार्थस्य विशेषणत्वमेवेत्यन्यत्र विस्तरः ।

**प्रथमैवेति ।** सा हि प्रातिपदिकार्थस्य तेनोक्तत्वेऽपि भवत्येवेति

---

**विषयेणेति** । सूत्रजबोधे यत्किञ्चिन्निष्ठप्रकारतानिरूपितविशेष्यतया भासमानो योऽर्थः स चेत्पदान्तरेणोक्तस्तदा तस्मिन्नर्थे पदान्तरं शास्त्रेण न साधुत्वेन बोध्यते इति हि तस्यार्थः ।

भावः। अत एव "अभिहिते प्रथमा" इति वार्तिकं सङ्गच्छते। तिङ्कृदित्यादि(१) परिगणनादेव 'कटं भीष्मं कुरु' इत्यादौ विशेष्यादुत्पन्नाद्वितीयया गतार्थत्वेऽपि विशेषणात् सा। यदा तु प्रक्रियादशायां कटोऽपि कर्म भीष्मादयोऽपि इत्याश्रयणात् (२)कटत्वविशिष्टकटनिष्ठकर्मत्वोक्तावपि भीष्मत्वादिगुणविशिष्टनिष्ठस्य तस्य बोधार्थं ततोऽपि सा। (३)बोधस्तु परस्परं तयोर्विशेष्यविशेषणभावेनैव। कारकाणां भावनाऽन्वयव्युत्पत्तिः साक्षात्स्वाश्रयद्वारा वाऽन्वयविषयेति, तदा परिगणनं भाष्ये प्रत्याख्यातम्। तिङ्-

---

'तिङ्कृत्तद्धितसमासैः' इत्युदाहरणमात्रं न तु परिगणनमिति प्राचीनोक्तं खण्डयन्नाह–(१)परिगणनादेवेति। (२)कटत्वविशिष्टकटनिष्ठकर्मत्वोक्तावपीति। कटपदोत्तरद्वितीययेति भावः। प्रक्रियादशायां तत्तत्पदोत्तरद्वितीयार्थकर्मत्वस्य स्वप्रकृत्यर्थमात्रान्वितस्यैव सत्त्वात्।

परिनिष्ठितेन तर्हि बोधः किमाकारक इत्याह—(३)बोधस्त्वित्यादि। भीष्माभिन्नकटकर्मकं करणमित्याकारक इति भावः। ननु कटत्वविशिष्टकटनिष्ठकर्मत्वस्योक्तावपि भीष्मत्वगुणविशिष्टनिष्ठं तदनुक्तमेवेति प्रक्रियादशायां यथा, तथा परिनिष्ठितेऽपीति प्रक्रियादशायामित्युक्तिर्न युज्यते इति चेन्न। परिनिष्ठिते कटांशे भीष्मस्य विशेषणतया भीष्माभिन्नकटस्यैव कटपदोत्तरद्वितीयार्थकर्मत्वान्वयाद्भीष्मत्वविशिष्टनिष्ठकर्मत्वस्य स्वातन्त्र्येणाभानात्। भीष्माभिन्नकटनिष्ठकर्मत्वस्य भानमित्येतावतैव भीष्मनिष्ठस्यापि तस्य भानं तयोरभिन्नत्वादिति पर्यवसितोऽर्थः। यतः प्रकारत्वांशे साक्षात् परम्परया वा विशेषणीभूता यावन्तो धर्मास्तावन्तः सर्वे तन्निष्ठप्रकारताया अवच्छेदकाः, एवं विशेष्यांशे यावन्तः साक्षात् परम्परया वा विशेषणीभूतास्तावन्तः सर्वे तन्निष्ठविशेष्यताया अवच्छेदका इति नियमः। अत एव 'चैत्रस्य कम्बलमानय' इतिवाक्यजन्यबोधस्य चैत्रस्वामिकैककम्बलविषयकत्वे एव प्रमात्वं; न तु अपरस्वामिकैककम्बलविषयकस्य, चैत्रीयस्वत्वविशिष्टकम्बलस्यैव कर्मत्वेऽन्वयात् इति चैत्रीयस्वत्वविशिष्टकम्बलत्वावच्छिन्नस्यैवानयनमिति। तथा चैत्रीयैककम्बलसत्त्वे चैत्रभिन्नीयैककम्बलसत्त्वे च 'चैत्रस्य कम्बलौ' इति न प्रयोगः। चैत्रस्वत्वविशिष्टकम्बलत्वावच्छेदेन द्वित्वस्य बाधादिति।

केचित्त्वत्रेत्थमाहुः–भीष्मत्वविशिष्टमपि कर्म, कटत्वविशिष्टमपि कर्म। तत्र 'रङ्गं रजतं जानाति' इत्यादौ ज्ञाने रङ्गादिविशेष्यकत्वावच्छिन्ने रजतादिप्रकारकत्वस्येव कृञादिधात्वर्थे कटकर्मकत्वावच्छिन्ने भीष्मकर्मकत्वस्यान्वयः। विशिष्टवैशिष्ट्यावगाहिबोधमर्यादया च योग्यत्वाद् भीष्मकटयोरभेदो भासते इति सर्वमनवद्यम्।

कृतौ स्वप्रकृत्यर्थं प्रति यस्य कर्मता तस्य (१)सर्वस्यापि कर्मतामाहतुरिति 'कृतः कटः सुन्दरः' इत्यादौ न क्वापि द्वितीयेति दिक् ।

**शत्य इति ।** (२)अत्र वदन्ति––कर्मादिपद इवात्रापि न विभक्तिवाच्यतावच्छेदकरूपेण कर्मादेर्भानम् । अत औपगवश्चित्रगुरिति युक्तं प्रत्युदाहर्तुम् । तत्र च सम्बन्धस्य येन रूपेण षष्ठ्या भानं, तेनैव ताद्धितान्तादिभिस्समुदायशक्त्या । एतदधिकाराभावे च घट इत्यादौ षष्ठ्यवाच्य-

---

(१)**सर्वस्यापि कर्मतामाहतुरिति ।** नचैवम् 'अजा ग्रामं नीयते' इत्यादौ ग्रामनिष्ठकर्मत्वस्याप्युक्तौ ततोऽपि द्वितीया न स्यादिति वाच्यम् । 'स्वप्रकृत्यर्थं प्रति यस्य कर्मता' इत्युक्त्या 'व्यापारप्रयोज्यैकफलाश्रयत्वप्रयुक्तां सर्वस्य कर्मतामाहतुः' इत्यर्थस्य लाभेन संयोगाद्यनुकूलव्यापारानुकूलव्यापारार्थकनीप्रभृतिधातुयोगे संयोगाद्यनुकूलव्यापाररूपफलाश्रयत्वप्रयुक्ताजादिनिष्ठकर्मत्वस्याभिधानेऽपि संयोगाश्रयत्वप्रयुक्तग्रामादिनिष्ठकर्मत्वस्यानभिधानेन तद्वाचकग्रामादिपदात् द्वितीयायाः सुलभत्वात् । केचित्तु समानाधिकरणमेव कर्मत्वमुच्यते न तु व्यधिकरणमिति न पूर्वोक्तस्थले दोष इति वदन्ति । 'तन्न, 'शिवः केशवश्च भज्येते' इत्यादौ शिवकेशवयोः कर्मत्वस्यानभिधानापत्तेः । तस्मात् पूर्वोक्तमेव शोभनम् । नन्वेवमपि 'काष्ठं भस्म क्रियते' इत्यादौ प्रकृतिभूतकाष्ठादेः नाशरूपफलाश्रयत्वात् , विकृतिभूतभस्मादेश्च उत्पत्तिरूपफलाश्रयत्वात् एकफलाश्रयत्वप्रयुक्तकर्मत्वाभावेन उभयनिष्ठकर्मत्वानभिधाने अन्यतरत्र द्वितीयापत्तिरिति चेन्न । प्रकृतिविकृत्योः भेदविशिष्टाभेदरूपतादात्म्यस्याङ्गीकारेण अभिन्नफलाश्रयत्वस्यापि सत्त्वेनादोषात् इति दिक् ।

(२)'**अत्र वदन्ति**' इत्यादेः 'वारयितुं सः' इत्यन्तस्यायमाशयः––यथा विभक्तिवाच्यतावच्छेदकोद्भूतशक्तिपुरस्कारेण कर्मादिभासकतासामर्थ्यं कर्मादिपदानां नास्ति, एवं तद्धितादेरपीति शत्यादिपदाद् उक्तविलक्षणरूपपुरस्कारेण बोधकताशीलानां द्वितीयादीनामापत्तिर्न सम्भवति । अतश्चित्रगुशब्दादौपगवशब्दाच्च चित्रगवीनिष्ठस्वत्वनिरूपकत्वस्य, उपगुनिरूपितापत्यत्वान्वयिनिरूपितस्वस्य च बोधिका षष्ठी नेत्यनभिहिताधिकारफलम् । तथा हि–तत्र चित्रगव्युपगुनिरूपितः सम्बन्धः पदार्थोऽपि तत्पदजन्यबोधे संसर्गतयैव भासते । संसर्गतया स्वार्थबोधकषष्ठ्यर्थे तद्धितबहुव्रीह्योर्विधानात् । प्रातिपदिकार्थसूत्रे च तत्पदजन्यबोधे प्रकारतया यो भासते स एव प्रातिपदिकार्थशब्देन गृह्यते । प्रवृत्तिनिमित्ततदाश्रयान्यतरत्वात् । "षष्ठी शेषे" (पा॰सू॰ २।३।५) इत्यत्र च शेषपदेनोपयुक्तान्यो गृह्यते । एवं च प्रथमादिप्रवृत्तावुपयुक्तो यः प्रवृत्तिनिमित्ततदाश्रयादिस्तदितरोऽत्र शेषपदार्थः । तत्त्वं च चित्रगव्युपगुसम्बन्धादेः स्पष्टमेवेति तदर्थे षष्ठी दुर्वारैव एतदधिकारे तु प्रकृत्यैव तदर्थस्योक्तत्वान्न तत्रार्थे षष्ठीति ।

त्वेन दृष्टानामेव प्रातिपदिकार्थपदेन ग्रहणं स्यात् , तद्भिन्नस्यैव च षष्ठीविधायके शेषपदेन ग्रहणं स्यादित्यत्रत्यसम्बन्धस्य षष्ठीवाच्यत्वेन दृष्टतया प्राप्तां षष्ठीं वारयितुं सः ।

(१)वस्तुतस्तु 'कटं भीष्मम्' इति परिगणनफलमुक्त्वा तत्प्रत्याख्यानाय (२)'अशेषत्वान्नात्र शेषलक्षणा षष्ठी, अन्यानभिहितकर्मादीनामभावाच्च नान्या' इत्याशङ्क्य "न केवला प्रकृतिः इति समयः कृतः न चान्योत्पद्यमाना एतमभिसम्बन्धमुत्सहते वक्तुमिति कृत्वा द्वितीया" इत्युक्तं भाष्ये । तेनौपगवादावपि षष्ठी वारितैवेति तयोरप्यप्रत्युदाहरणत्वमेव । (३)तदुक्तम् "अनेकम्" (पा०सू० २।२।२४) इत्यत्र भाष्येऽपि "चित्रगुरित्यत्र षष्ठ्य-

---

नन्वेवं कटादिपदादेव कटत्वप्रतियोगिकसमवायरूपेऽर्थे षष्ठी आपाद्यतां, तस्यापि प्रवृत्तिनिमित्ततदाश्रयव्यतिरिक्तत्वात् , किं दूरानुधावनेन ?, इति चेन्न । समवायस्य षष्ठ्यर्थत्वाभावादेव तत्र षष्ठ्यप्राप्तेः । षष्ठीवाच्यः बोधीयसंसर्गतयैव भासते इति षष्ठ्यवाच्यत्वेन दृष्टानामित्यनेन बोधीयसंसर्गतयाऽभासमानानामिति सूचितम् । एतदपि प्रत्युदाहरणं खण्डयितुं कोऽप्यन्यः प्रत्यवतिष्ठते-(१)**वस्तुतस्त्वित्यादिना ।**

(२)**अशेषत्वान्नात्र शेषलक्षणा षष्ठीति ।** कर्मत्वं हि द्वितीयायामुपयुज्यते इति न तस्योपयुक्तान्यत्वमिति न षष्ठी । शेषत्वाभावात् । नापि द्वितीया । कर्मसत्त्वेऽपि तस्यानभिहितत्वाभावात् । नापि तृतीयादिः । कर्त्राद्यभावात् । अन्यानभिहितकर्माद्यभावश्च क्वचिदन्यानभिहितत्वरूपविशेषणाभावप्रयुक्तः, क्वचिच्च विशेष्याभावप्रयुक्त इति । नापि प्रथमा । तिङ्सामानाधिकरण्यविरहात् । एवं च "अपदं न प्रयुञ्जीत" इति कस्यां चिद्विभक्तौ प्रयोक्तव्यायाम् अनन्वितार्थकविभक्त्यपेक्षया अनुवादकविभक्तिरेव कटादिपदोत्तरामादिबोध्यसम्बन्धबोधिका प्रयोक्तुं युक्तेति भाष्याशयः । अनेन च संसर्गतयाऽपि भासमानं कर्मत्वादि उपयुक्तत्वेनैव गृहीतमिति प्रथमायामपि संसर्गतया भासमानमपि स्वामित्वादि उपयुज्यते एवेत्यत्रापि शेषाभावादेव न षष्ठी ।

ननु द्वितीयादौ संसर्गतया भासमानकर्मत्वाद्यप्युपयुज्यताम्, प्रातिपदिकार्थसूत्रे तु प्रवृत्तिनिमित्ततदाश्रययोरेव प्रातिपदिकार्थत्वेन तत्र संसर्गतया भासमानस्वामित्वादिपदार्थस्योपयुक्तत्वे मानाभाव इत्याशङ्क्य औपगवपदात् चित्रगुपदाच्च स सम्बन्धः प्रकारतयैव भासते इत्यर्थे प्रमाणमाह-(३)**तदुक्तमित्यादिना ।** अत एव "कृत्तद्धितसमासेभ्यः सम्बन्धाभिधानं भावप्रत्ययेन" इति सिद्धान्तव्याकोपो न । अन्यथा तस्य संसर्गतया भाने प्रकृतिजन्यबोधे प्रकारत्वस्यैवाभावेन तस्य भावार्थकप्रत्ययार्थत्वं दुर्लभमेव स्यात् इति भावः ।

र्थस्य नियमेन भानात् षष्ठी प्राप्नोति" इत्याशङ्क्य "अभिहितः सोऽर्थोऽन्तर्भूतः प्रातिपदिकार्थः सम्पन्न इति प्रथमा" इत्युक्तम् । अनेनाशेषस्वरूपं षष्ठ्यप्राप्तिबीजमुक्तम् । अन्तर्भूत इत्यनेन चित्रग्वादौ सम्बन्धस्यैव प्रवृत्तिनिमित्तत्वेन प्रातिपदिकार्थपदेन ग्रहणयोग्यतोक्तेति बोद्धव्यम् ।

(१)परे तु— 'शत्यः' इत्यादौ कारकान्वययोग्यतावच्छेदकसाध्यत्वेन न क्रयादेर्भानम् । अत एव न तत्रेतरकारकाणामन्वयः । इदञ्च "कर्तृकर्मणोः" (पा०सू० २।३।६५) इत्यत्र निरूपयिष्यते । एवं 'प्राप्तानन्दः' इत्यादौ यत्कर्मकप्राप्तिकर्त्ताऽऽनन्द इति विग्रहतो बोधे समासतश्चानन्दकर्तृकप्राप्तिकर्मेति बोधे विशेष्यविशेषणभावव्यत्यासेनैकार्थीभावः कल्प्यः स्याद्, (२)वृत्तिविग्रहयोः समानार्थत्वभङ्गश्च । किं च तथा सति बहुव्रीह्युपजीव्यस्यैकधर्मिबोधकत्वरूपसामानाधिकरण्यस्य हानिः । किं चैवं प्राप्ता भार्या यं स 'प्राप्तभार्यः' इत्यादौ पुंवत्त्वानापत्तिः । पूर्वोत्तरपदयोरेकविशेष्यकप्रतीतिजनकत्वरूपवक्ष्यमाणसामानाधिकरण्याभावात् । तस्मात् "कालाः परिमा-

---

इदानीं चैवं रीत्या 'शत्यः' इत्यादौ द्वितीयामात्रस्य वारणेऽपि शत्य इत्यादौ तद्धितार्थक्रयादौ काश्यामित्यादिकारकान्तरान्वयो दुर्वार एव स्यादिति सर्वं सङ्ग्रहीतुं स्वमतानुसारेणाह–(१)परे त्वित्यादिना ।

(२)वृत्तिविग्रहयोः समानार्थत्वभङ्गश्चेति । वृत्त्यारम्भकाणि यानि पदानि यादृशार्थानि तादृशार्थान्येव विग्रहे स्थितानि तानीत्यर्थः । विग्रहश्चात्र समासारम्भकपदानामसमासावस्थायां यादृशानि रूपाणि तादृशरूपकाणां तेषां प्रदर्शकं वाक्यम् । विग्रहार्थानुसारेणैव च वृत्त्यर्थः कल्प्यते । एवं च प्राप्तस्यानन्दस्यायमित्येवात्र लौकिको विग्रहः । प्राप्तानन्द इति च वृत्तिः । तत्र च यादृशार्थकं विग्रहे पदं तादृशार्थकमेव वृत्तावपीति उभयोः समानार्थत्वम् । समुदायेनान्यपदार्थोऽधिकोऽपि भासते इत्यन्यत् । 'पाचक इत्यस्य पचतीत्यर्थः' इत्यत्रापि पचतीत्यस्य वृत्त्यर्थबोधकत्वविवक्षायाम् आश्रयप्रधानार्थकत्वमेवेति न वृत्तिविग्रहयोः समानार्थत्वहानिः । एवञ्च प्राचीनमते प्राप्तिकर्त्रभिन्नानन्द इति विग्रहार्थः, आनन्दकर्तृकप्राप्तिश्च वृत्त्यर्थ इति समानार्थत्वभङ्गः स्पष्ट एव । नव्यमते तु प्राप्तिकर्त्रभिन्नानन्द इति विग्रहार्थः, वृत्त्यर्थश्चेति न तद्भङ्गः । विशिष्टशक्त्या कर्मस्वरूपस्याधिकस्य भानेऽपि न क्षतिरित्युभयोरपि तुल्यमेव । प्राप्तिकर्त्रभिन्नानन्दनिरूपितकर्मत्वं यत्पदार्थे पुरुषे बाधितमिति "सविशेषणे हि विधिनिषेधौ सति विशेष्यबाधे विशेषणमुपसङ्क्रामतः" इति न्यायेनानन्दविशेषणप्राप्तिनिरू-

णिना" (पा०सू० २।२।५) इत्यादिसूत्रभाष्योक्तस्य वृत्तिविग्रहयोः समानार्थत्वस्य निर्वाहार्थं वृत्तिविग्रहयोः (१)प्राप्तिकर्त्रानन्दकर्मेत्येव बोधः। विशे-

---

पितं तदत्र विश्राम्यति, तदाह-(१)प्राप्तिकर्त्रानन्दकर्मेत्यादिना। क्वचित्पुस्तकेऽत्र 'प्राप्तिकर्ताऽऽनन्दकर्म इत्येव बोधः' इति पाठः, स चात्यशुद्धत्वादुपेक्ष्यः।

अत्र प्रमाणमाह-कालाः परिमाणिनेति। तत्र हि "किंप्रधानोऽयं समासः" इति प्रश्नस्य "उत्तरपदार्थप्रधानः" इत्युत्तरे "राज्ञः पुरुषः राजपुरुषः इत्यादौ विग्रहे उत्तरपदादुत्तरं श्रूयमाणा विभक्तिः यथा समासादपि श्रूयते तथाऽत्रापि मासो जातस्येति विग्रहे जातपदादुत्तरं श्रूयमाणा षष्ठीविभक्तिः 'मासजातः' इति समासादपि श्रूयेत' इत्याशङ्क्य "अभिहितः सोऽर्थोऽन्तर्भूतः प्रातिपदिकार्थः इति षष्ठी न भवति" इत्युक्तम्। अत्र भाष्ये किंप्रधानोऽयं समासः इत्यत्र समासपदं समासविग्रहोभयपरमिति प्रश्नोत्तरयोरुभयोरपि विग्रहसमासोभयपरत्वम्।

समासमात्रपरत्वे विग्रहस्य पूर्वपदार्थप्रधानत्वेऽपि समासस्य उत्तरपदार्थप्रधानत्वेन विग्रहवाक्यीयविशेषणवाचकाच्छ्रूयमाणविभक्तेः राजपुरुष इत्यादौ क्वचिदपि समासाददर्शनेन तत्र षष्ठ्यापादनमसङ्गतं स्यात् वृत्तिविग्रहयोः समानार्थत्वनियमानुरोधेन उभयोरपि उत्तरपदार्थप्रधानत्वे तु मासो जातस्येति विग्रहे, मासजात इति समासे च जातपदार्थस्यैव प्राधान्येन विग्रहे विशेष्यवाचकजातपदोत्तरं तत्स्थितिवत् मासजात इति समासोत्तरमपि तच्छ्रवणसम्भवः। विग्रहे विशेष्यवाचकपदोत्तरं श्रूयमाणविभक्त्या विशेषणसम्बन्धप्रतीतिवत् समासोत्तरविभक्त्याऽपि विशेषणसम्बन्धप्रतीतिसम्भवात्। न च विग्रहेऽपि जातस्य प्रधानत्वे तस्मात् षष्ठी नोत्पद्येत, विशेषणादेव षष्ठीविधानादिति वाच्यम्। वाक्यस्य वृत्त्यर्थबोधकत्वविवक्षायां जातस्य प्राधान्येऽपि परिच्छेद्यपरिच्छेदकसमभिव्याहारे परिच्छेद्यस्यैव विशेषणत्वेन तस्मादेव षष्ठ्युत्पत्तेः। वृत्त्यर्थबोधकत्वविवक्षायां तद्व्यत्यासेऽपि पूर्वमन्तरङ्गत्वाज्जातकार्यस्य 'गङ्गायां घोषः' इत्यादौ टाबादिवदनिवृत्तेः। अत एव 'हास्तिकः' इत्यादिविवरणभूतस्य हस्तिना चरतीत्यादेः आश्रयार्थप्रधानत्वमेव। अत एव तस्माच्छक्तिग्रहोऽप्युपपद्यते। अन्यथा भिन्नार्थत्वात्स न स्यात्। तस्मात् वृत्तिविग्रहयोः समानार्थत्वात्षष्ठी प्राप्नोतीत्याशङ्कोपपद्यते। समासेनैव माससम्बन्धस्य प्रत्यायनात् प्रातिपदिकार्थत्वेन शेषत्वाभावात् षष्ठी नेति समाहितमित्यन्यत्। स्पष्टं चेदं "कालाः परिमाणिना" (पा०सू० २।२।५) इति सूत्रे शेखरे इत्यधिकं तत्रैव द्रष्टव्यम्।

नन्वेवं 'वृत्तिविग्रहयोः समानार्थत्वम्' इत्यस्यार्थस्य कल्पने "इष्यते पुत्र इत्यर्थे 'पुत्रीयति' इति न प्रयोगः समानार्थत्वाभावात्" इतिभाष्यविरोधः। पुत्रमात्ररूपविग्रहतस्तद्रूपवृत्त्यारम्भकपदस्य विभिन्नार्थकत्वाभावादिति चेन्न। "धातोः कर्मणः" (पा०सू० ३।१।७) इत्यतोऽनुवर्तमानेच्छापदार्थस्य सुबन्तार्थनिरूपितविशेष्यत्वे एव

ष्ये तन्निरूपकत्वबाधेन तु विशेषणभूतप्राप्तौ तत्पर्यवसानं 'स्वर्गी ध्वस्तः' इतिवत् । शाब्दबोधस्तु विशिष्टे तदारोपेणोपपाद्यः ।

एवञ्चात्र शब्दात्कर्मादेः क्रियाजनकत्वेन विभक्तिवाच्यतावच्छेदकोद्भूतशक्तिमत्त्वेन च न भानम्, अतो न विभक्तिप्रसक्तिः । अत एव "गतिकारकोपपदात्" (पा०सू० ६।२।१३९) इति सूत्रे "गतिकारकोपपदादिति किमर्थं परमं कारकं परमकारकम्" इति प्रतीकमुपादाय "यथा सम्प्रदानादयः शब्दा न कारकरूपतां प्रतिपादयन्ति, तथा कारकशब्दोऽपीति । कृदन्ता हि क्रियायोग्यताविशिष्टद्रव्यवाचिनो न तूद्भूतां कारकशक्तिं प्रतिपादयन्ति" इति कैयटेनोक्तम् । अत एव तस्य कर्मत्वस्य न क्रियान्वयनियमः । अन्यथा कारकशक्तेः क्रियाविशेषणत्वनियमेन कर्मादिप्राधान्यानापत्तिः । एवं कर्मादिपदैरिव पक्कादिपदैरपि न विभक्तिप्रयोजकरूपेण कर्मादीनां भानम् ।

"तिङ्कृत्तद्धितसमासैरभिधाने" इत्यस्यायमर्थः । यत्तैरभिधाने तत्तच्छक्त्यावेशेन न भानमिति विभक्त्यप्रसक्तिः । अत्रैव "अनभिहिते" (पा०सू० २।३।१) इतितात्पर्यग्राहकम् । ध्वनितञ्चेदं "सुप आत्मनः" (पा०सू० ३।१।८) इति सूत्रे **भाष्ये** । तत्र हि इष्टः पुत्र इष्यते पुत्र इत्यर्थे क्यचमाशङ्क्य "स्वशब्देनोक्तत्वान्न" इति समाहितम् । इष्टशब्दसामानाधिकरण्यात्पुत्रार्थे कर्मत्वावगतावपि पुत्र इति सुबन्तं न कर्मवाचीति न ततः क्यजिति तद्भावः । स्वं कर्मत्वं तद्वाचकशब्देन पुत्रगतं कर्मत्वमुक्तं, न तु पुत्रशब्दस्य तत्र वृत्तिरित्यक्षरार्थः । "सुप आत्मनः" (पा०सू० ३।१।८) इति सूत्रस्य कर्मत्वविशिष्टबोधकसुबन्तादित्यर्थं इति तदाशयः । वस्तुतः कर्मत्वविशिष्टो योऽर्थस्तद्बोधकादित्यर्थे 'इह भवन्त' इत्यादिना

---

क्यच् इत्यस्य सिद्धान्तेऽपि भवद्भिरपि केनापि प्रमाणान्तरेणैव स्वीकरणीयतया तत्प्रमाणस्येदानीमपि जागरूकत्वात् । नोचेत् पुत्रमिच्छतीत्यर्थे एव क्यज् भवति, इष्यते पुत्र इत्यर्थे न भवतीत्यस्य 'वृत्तिविग्रहयोः' इति बलेन दुर्वचत्वात् । इष्यते पुत्र इत्येव चेद्विग्रहः स्यात्तदा तदनुरोधेन पुत्रीयतीत्यस्यापि तादृशार्थ एव कल्प्यः स्यात्, तत्कथं नेति त्वमेव प्रतिपादयेत्यास्तां तावत् ।

समाध्यन्तरमुक्तम्। वाक्ये फलं विशेष्यं, वृत्तौ व्यापार इति समानार्थत्वाभावात्तत्रार्थे वृत्तिर्नेतीत्याहुः।

प्राचीनानुसारेणोक्तस्य प्रायेणेत्यस्य फलमाह–**क्वचिदिति**। परे त्वत्र तुमुनः साधुत्वायेष्यते इत्यध्याहार आवश्यकः। अन्यथा क्रियार्थक्रियोपपदत्वाभावाच्छकादियोगाभावाच्च स दुर्लभः स्यात्। अध्याहारे तु इच्छार्थेषु तुमुनिति सुलभः। विषवृक्षोऽपि सम्वर्द्ध्य छेत्तुमिष्यते इति यत् तदसाम्प्रतम्–अन्याय्यमित्यर्थः। एवञ्चाद्ध्याहृततिङाऽभिधानान्न द्वितीया। तादृशेच्छाया अन्याय्यत्वञ्च तद्विषयस्यान्याय्यत्वेन। एवम् 'अमुं नारद इत्यबोधि सः' इत्यादौ 'नारद इति' इति श्रीकृष्णीयज्ञानाकारानुकरणम्। नारद इत्येतच्छब्दाभिलप्यमानाकारो बोध इत्यर्थ इति प्रथमान्तस्या(१)-प्रातिपदिकत्वान्न तत्र द्वितीया। अत एव 'अधिहरि' इत्यादौ समासः। तद्वचनसामर्थ्येन ह्रस्य परिगणनत्वकल्पनैव युक्ता। अत एव 'अभ्र आँ अपः' इत्यादौ सप्तमी। (२)किञ्च निपातेनाभिधानेऽपि प्रातिपदिकादुद्भूत-

---

(१)अप्रातिपदिकत्वान्न तत्र द्वितीयेति। केचित्तु–नारदोऽत्र इतिपदार्थः, तस्य तदर्थत्वे एव च नारदपदं तात्पर्यग्राहकम्। इतिपदाच्च द्वितीया जातैव। अव्ययत्वाच्च सा लुप्तेत्याहुः। (२)किञ्च निपातेनेत्यादि। इदं च दुर्बलम्। उद्भूततत्तच्छक्तिमत्त्वपुरस्कारेण तेषां समभिव्याहारे नास्ति मानम्। अत्रैवानभिहिताधिकारस्य तात्पर्यग्राहकताया उक्तत्वात्।

'ग्रामं न गच्छति' इत्यादौ ग्रामस्योक्तेच्छोद्देश्यत्वाभावेन कथं "कर्तुरीप्सित" (पा०सू० १।४।४९) इति सूत्रेण ग्रामस्य कर्मत्वमिति जिज्ञासायामुच्यते–पदार्थो हि द्विविधः–बाह्यो बौद्धश्च। प्रकृते च ग्रामस्य बाह्यतादृशेच्छोद्देश्यत्वाभावेऽपि बौद्धव्यापारप्रयोज्यफलवत्त्वप्रकारकेच्छोद्देश्यत्वमस्त्येवेति तदादाय कर्मसञ्ज्ञा। बौद्ध एवात्र व्यापारादिरित्यत्रैव नञ् तात्पर्यं ग्राहयति इति कश्चित्।

केचित्तु 'मातुः स्मरति' इत्यादौ मात्रादीनां तादृशेच्छोद्देश्यत्वेऽपि कर्मत्वाभावदर्शनाद् 'विवक्षातः कारकाणि भवन्ति' इत्यस्यावश्यं वक्तव्यतया कर्तृवृत्तिव्यापारप्रयोज्यफलाश्रयत्वप्रकारकेच्छोद्देश्यत्वनिष्ठविशेष्यतानिरूपितनिष्ठत्वसम्बन्धावच्छिन्नप्रकारताश्रयत्वेन वक्त्रा विवक्षितो यः स कर्म। उद्देश्यत्वनिष्ठविशेष्यतानिरूपितनिष्ठत्वसम्बन्धावच्छिन्नप्रकारता च विवक्षीया ग्राह्या। प्रकृते च व्यापारप्रयोज्यफलाश्रयत्वप्रकारकेच्छीयग्रामनिष्ठोद्देश्यत्वाभावविशेष्यकविवक्षानिरूपिताऽभावनिष्ठविशेष्यतानिरूपितप्रकारतासमानाधिकरणविशेष्यता उद्देश्यत्वनिष्ठा, तन्निरूपिता [illegible] प्रकारता-

तच्छक्तिमत्त्वेनैव भानमिति तत्र विभक्तिः सुलभा । शब्दशक्तिस्वभावादस्यैवार्थस्य द्योतकोऽधिर्निपातः । अत एव परिगणनप्रत्याख्यानेऽपि न दोष इत्याहुः ।

**तथायुक्तम्** (पा०सू० १।४।५०) । (१)तत्त्वञ्च समभिव्याहृतधात्वर्थप्रधानव्यापारप्रयोज्यतद्धात्वर्थ (२)फलाश्रयत्वरूपम् । पराधीनतया विषं भुञ्जानेऽपि भुजिक्रियाफलाश्रयत्वेनोद्देश्यत्वात्पूर्वसूत्रेणैव सिद्धम् । तदुक्तं **भाष्ये** "आतश्च विषमीप्सितं यत्तद्भक्षयति" इति । (३)तस्मात् 'चोरान् पश्यति' इति (४)द्वेष्योदाहरणम् । विषयेन्द्रियसम्बन्धाद् दृश्यमाना अपि

---

ऽस्ति ग्रामे इत्यदोषः । एवं 'गामं गच्छति' इत्यादावपि व्यापारप्रयोज्यफलाश्रयत्वप्रकारकेच्छीयग्रामनिष्ठोद्देश्यत्वविषयिका विवक्षाऽस्त्येवेत्यदोष इति ।

केचित्तु 'कर्मणि बुबोधयिषिते द्वितीया' इत्यादिः "कर्मणि द्वितीया" (पा०सू० २।३।२) इत्यादेरर्थः । कर्म च व्यापारप्रयोज्यफलाश्रयत्वेनेच्छोद्देश्यरूपम् । प्रातिपदिकं चेदृशकर्मबोधकमेव यद्भवति तस्मादेव द्वितीयेति तु न नियमः । इत्थं च 'चैत्रो ग्रामं न गच्छति' इत्यादौ ग्रामे विभक्त्यर्थभूतचैत्रवृत्तिव्यापारप्रयोज्यफलाश्रयत्वप्रकारकेच्छोद्देश्यरूपकर्मणोऽभेदस्याऽप्रसिद्धत्वेऽपि तदप्रसिद्धिप्रयुक्तैव तादृशोद्देश्याभिन्नग्रामवृत्तिसंयोगजनकव्यापारस्याप्यप्रसिद्धिरिति तदभावः सुष्ठु प्रतीयते । अप्रसिद्धप्रतियोगिताकाभावस्य वैयाकरणैः स्वीकारात् । 'चैत्रो ग्रामं गच्छति' इत्यादौ चैत्रादिपदात्तु न द्वितीया । द्वितीयार्थस्य प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यफलाश्रयत्वेनेच्छोद्देश्यरूपकर्मणोऽभेदस्य चैत्रादौ बाधितत्वादित्यलमतिपल्लवितेनेति शम् ।

**तथायुक्तं चानीप्सितम्** (पा०सू० १।४।५०) (१)**तत्त्वं चेति** । तथायुक्तत्वं चेत्यर्थः । (२)**फलाश्रयत्वरूपमिति** । कारकमात्रस्य विवक्षाधीनत्वात् तादृशफलाश्रयत्वेन वक्त्रा विवक्षितत्वरूपमित्यर्थः । "कर्तुरीप्सित" (पा०सू० १।४।४९) इत्यत्रेप्सिततमत्वं च तादृशफलाश्रयत्वप्रकारकेच्छोद्देश्यत्वेन विवक्षितत्वरूपमिति विवेकः । अनीप्सितेति नञा पूर्वसूत्रे सन्क्ताभ्यां यदुच्यते इच्छोद्देश्यत्वं तदिह व्यवच्छिद्यते, अन्यत्सर्वं पूर्वसूत्रवदत्रापि बोध्यम् । तथा च कर्तृवृत्तिप्रकृतधात्वर्थप्रधानव्यापारविशिष्टफलाश्रयत्वेन वक्त्रा विवक्षितोऽर्थः कर्मसंज्ञ इत्यर्थः । वैशिष्ट्यं च स्ववाचकवाच्यत्वं स्वप्रयोज्यत्वमेतदुभयसम्बन्धेन । एतदुदाहरणं प्राचीनैः 'अन्नं भुञ्जानो विषं भुङ्क्ते' इत्यादौ विषाद्युक्तम् । तत्रान्नत्वेनैव विषेऽपीच्छोद्देश्यत्वमस्त्येवेतिपूर्वेणैव सिद्धम्, यत्रापि च भयादिवशेन विषं भुङ्क्ते तत्रापि विषभोजनाद्यभावरूपादधिकसुखरूपेष्टसाधनत्वप्रकारकग्रहोऽस्त्येव विषभक्षणे इति विषस्य पूर्वेण सिद्धमिति उदाहरणान्तरं वक्तुमुत्सहते—(३)**तस्मादिति** । (४)**द्वेष्यमिति** । तत्त्वं चेच्छोद्देश्यीभूताभाव-

ते न दर्शनोद्देश्याः, अपि तु अनिष्टदर्शना एवेति स्पष्टं **भाष्यकैयटयोः**। एवञ्च तत्र पूर्वेणाप्राप्तौ वचनम्। अनीप्सितम्—अनुद्देश्यम्। तच्च द्वेष्यम् (१)उदासीनञ्च। **तृणमिति**। यथा स्पृश्यमानस्य गङ्गादेः स्पर्शादिजन्यसंयोगादिफलाधारत्वं तथैव तृणादेरपीति भावः। (२)अनीप्सितपदाभावे ईप्सितस्य (३)प्रकर्षहीनस्याप्यनेन संज्ञाप्राप्तौ वारणार्थानामित्यनवकाशं स्यात्। (४)तथायुक्तमिति किम्? "विषेणौदनं भुङ्क्ते" इत्यादौ करणत्व-

---

प्रतियोगित्वम्। **(१)उदासीनमिति**। तत्त्वं चेच्छोद्देश्यत्वाभाववत्त्वम्। तत्राद्यं 'चोरान् पश्यति' अन्त्यं 'ग्रामं गच्छन् तृणं स्पृशति' इति बोध्यम्।

ननु तथायुक्तमित्यस्य सादृश्यार्थकथाल्घटितत्वेनेप्सिततमसादृश्ययुक्तमित्यर्थलाभः स्यादेव। ईप्सिततमस्यैव तथायुक्तपदेन ग्रहणे तु सूत्रमेव व्यर्थं स्यात्—इत्यनीप्सितग्रहणं किमर्थमिति शङ्कते-**(२)अनीप्सितपदाभावे इति**। **(३)प्रकर्षहीनस्यापीति**। अपिना कर्तृसमवेतेच्छानुद्देश्यस्यापीत्यर्थः। ततश्च प्रयोज्यत्वं फले, इच्छायां कर्तृवृत्तित्वं च त्यक्त्वा तथायुक्तपदेन अर्थो बोधितः स्यात्। तथा च कर्तृवृत्तिव्यापारवाचकधातुवाच्यफलाश्रयत्वेन वक्त्रा विवक्षितं कर्मेत्यर्थे 'अग्नेर्माणवकं वारयति' इत्यादावग्नेर्माणवकस्य चानेन परत्वात्कर्मसंज्ञाप्राप्तौ तदपवादः स्यात्। ततश्च माणवकादपि पञ्चमी स्यात्। एतेन प्रयोज्यत्वरूपप्रकर्षालाभेऽपि इच्छायां कर्तृवृत्तित्वं लभ्येतैवेति यत्र वारकस्य संयोगप्रकारकाग्न्युद्देश्यिकेच्छा नास्ति तत्र सूत्रस्य सार्थक्यादिदं चिन्त्यमित्यपास्तम्। विनिगमनाविरहेणेच्छायां कर्तृवृत्तित्वपरित्यागस्यापि दुर्वारत्वात्।

नन्वेवमस्यैव नाप्राप्तत्वाद् "वारणार्थानाम्" (पा०सू० १।४।२७) इत्यपवादः स्यात्। ततश्च "कर्तुरीप्सित" (पा०सू० १।४।४९) इति सूत्रेण 'अग्नेर्माणवकं वारयति' इत्यादौ माणवकस्य परत्वात् कर्मत्वस्य सूपपादतया न दोष इति चेद्, न। यत्र वारकस्य माणवकोद्देश्यिका संयोगानुकूलव्यापाराभावप्रकारिकेच्छा नास्ति स्वामिभयेन तु वारयति तत्र "कर्तुरीप्सित" इतिसूत्राप्राप्त्याऽस्य च "वारणार्थानाम्" इत्यनेनानवकाशत्वाद् बाधे 'अग्नेर्माणवकाद्वारयति' इत्यापत्तेर्दुर्वारत्वात्। ननु 'न ईप्सितमनीप्सितम्' इति अनीप्सितशब्दस्य नञ्समासनिष्पन्नत्वाद् नञिवयुक्तन्यायेन तद्भिन्नस्य तत्सदृशस्य तथायुक्तस्येत्यर्थेन इष्टसिद्धौ तथायुक्तग्रहणं किमर्थमित्याशङ्कते-**(४)तथायुक्तमिति किमिति**। तथापि तदभावे कर्तृवृत्तिव्यापारप्रयोज्यफलाश्रयः कर्मेत्येवार्थः स्यादिति 'विषेणौदनं भुङ्क्ते' इत्यादौ विषादेरपि गलाधःसंयोगरूपतादृशफला-

मात्रविवक्षायां (१)विषस्य मा भूत् । (२)'प्रयागात्काशीं गच्छति' इत्यत्र प्रयागस्य च मा भूत् । तत्सत्त्वे तु प्रकृतधात्वर्थफलाश्रयत्वरूपतत्त्वाभावान्न दोषः ।

**अपादानादिविशेषैरिति** । (३)तत्तद्रूपेणाभासमानमित्यर्थः ।

---

श्रयत्वात्कर्मत्वापत्तिरित्याह-(१)**विषस्य मा भूदिति** । एतेन एतद्ग्रहणाभावेऽपि "वारणार्थानाम्" (पा०सू० १।४।२७) इत्यस्य अनवकाशत्वमभिलपन्नपास्तः । अभिनिष्ठसंयोगरूपफलस्य कर्तृवृत्तिप्रधानव्यापारप्रयोज्यत्वाभावेनाग्न्यादेः कर्मत्वाप्राप्तेः ।

ननु कर्मत्वादिकारकस्य विवक्षाधीनत्वात् कर्तृवृत्तिव्यापारप्रयोज्यफलाश्रयत्वेन वक्त्रा विवक्षितस्यैव कर्मसञ्ज्ञेति करणत्वेन विवक्षितस्य विषस्य न कर्मसञ्ज्ञाप्राप्तिरिति नायं दोष इत्यत आह—(२)**प्रयागात् काशीङ्गच्छतीति** । अत्र गमनप्रयोज्यविभागरूपफलाश्रयत्वेन काश्याः कर्मत्वापत्तिः । तथायुक्तग्रहणे तु व्यापारवाचकधातुवाच्यत्वस्यापि फले लाभाद्विभागस्य प्रकृतधात्ववाच्यत्वान्न दोषः । यदि च "ध्रुवमपाये" (पा०सू० १।४।२४) इत्यत्र विभागस्यापि गत्यर्थकधात्वर्थताया वक्तव्यतया तदुक्तौ फले व्यापारवाचकवाच्यत्वलाभेऽपि च कथं न तत्र कर्मत्वमित्युच्यते तदा फलतावच्छेदकसम्बन्धेन फलाश्रयत्वाभावान्न प्रयागादीनां कर्मत्वमिति बोध्यम् । तथायुक्तग्रहणेन तस्यापि लाभात् । तदभावे तु तन्न लभ्येतेति दोषो दुरुद्धर एवेत्यास्तां तावत् ।

**अकथितं च (पा०सू० १।४।५१)** । "ननु दुहादीनां विभागानुकूलव्यापारार्थकत्वेन विभागादिरूपफलाश्रयत्वात् पयआदीनां, तदनुकूलव्यापाररूपफलाश्रयत्वाच्च गवादीनां कर्मत्वं सिद्धम् । 'गौणे कर्मणि दुह्यादेः' इति त्ववाच्यमेव । ईदृशरीत्या गवादौ प्रधानकर्मत्वस्यैव सत्त्वेन 'गौर्दुह्यते पयः' इत्यादेः सिद्धत्वात् । एवं चेदं सूत्रं व्यर्थमिति चेन्न । गवादिनिष्ठकर्मत्वस्य सम्बन्धत्वेन विवक्षायां प्राप्तषष्ठीबाधनार्थत्वात् । तेनैतद्बोधितकर्मसञ्ज्ञावदर्थबोधकपदोत्तरद्वितीयातः सम्बन्धत्वपुरस्कारेणैव कर्मत्वं बोध्यते" इति प्राचीनोक्तमाक्षिपन् वदति—(३)**तत्तद्रूपेणाभासमानमित्यादि** । अपादानत्वादिरूपेणेत्यर्थः । कारकाधिकारात् कारकत्वस्योद्देश्यतावच्छेदकतया तेन रूपेणाविवक्षितत्वस्य प्रहीतुमशक्यतया पूर्वोक्तैरपादानत्वादिविशेषैरविवक्षितमित्यर्थो लभ्यते । "केनाकथितम् । अपादानादिविशेषकथाभिः" इति भाष्योक्तप्रश्नोत्तराभ्याम् अकथितशब्दस्य असङ्कीर्तितरूपयोगार्थपरत्वलाभात् । अप्रधानरूपरूढ्यर्थपरत्वे तु पाणिना कांस्यपात्र्यां पयो दोग्धीत्यादौ कांस्यपात्र्यादेः अधिकरणत्वादिविवक्षायामपि कर्मत्वमनेन परत्वादापद्येत । दुहादिव्यतिरिक्तधातुयोगे तत्तत्सञ्ज्ञानां चारितार्थ्यात् इति भावः । असङ्कीर्तितत्वं च क्वचिद् प्रसक्तस्य अपादानादेरप्यपादानत्वादिरूपेणाविवक्षितत्वरूपं, क्वचिच्च सर्वथाऽपादानत्वाप्राप्तिरूपमेव । आद्यं 'गां दोग्धि पयः' इत्यत्र । द्वितीयं 'बलिं याचते वसुधाम्' इत्यत्र । अत्रापादानत्वाप्रसक्तेरनुपदमेव "न

अकथितशब्दोऽत्रासङ्कीर्तितपरो नाप्रधानपर इति भावः। (१)एवञ्च पूर्व-

---

चात्रापादानत्वप्रसक्तिः" इत्यादिग्रन्थेन वक्ष्यमाणत्वात्, तदाह—(१)एवञ्चेति। तस्माद् व्यापारद्वयार्थकत्वे "कर्तुरीप्सित" (पा०सू० १।४।४९) इतिसूत्रेण सिद्धावपि विभागानुकूलव्यापारमात्रस्य धात्वर्थत्वे फलतावच्छेदकसमवायात्मकसम्बन्धेन विभागरूपफलाश्रयस्य पय आदेः कर्मसञ्ज्ञायाः कर्तुरीप्सितसूत्रेण सिद्धावपि फलतानवच्छेदकावधितात्मकसम्बन्धेन तादृशविभागरूपफलाश्रयस्य गवादेः कर्मसञ्ज्ञार्थमेतत् सूत्रम्। अत एव "अप्रधाने दुहादीनाम्" इत्याद्यपि सङ्गतम्। एवं च यद्यपादानत्वेन गवादेर्विवक्षा तदा पञ्चम्येव, यदा च कर्मत्वेन विवक्षा तदा द्वितीयैव, क्षीरान्वयिसम्बन्धप्रतियोगित्वेन यदि विवक्षा तदा षष्ठ्येव। "स्वान्वययोग्यनामार्थेऽन्वये सम्भवति षष्ठ्यर्थस्य क्रियायामन्वयोऽव्युत्पन्नः" इति क्रियायां सम्बन्धत्वेनान्वयविवक्षायां षष्ठ्यपि न। एवञ्च 'एतत्सूत्रं यदि न स्यात् तदा षष्ठी स्यात्' इति सम्भावनयाऽस्य षष्ठ्यपवादत्वमाश्रित्य सम्बन्धत्वेन कर्मादिबोधकताकल्पने कर्तुरीप्सितसूत्रविहितकर्मसञ्ज्ञावद्बोधकपदोत्तरद्वितीयाया अपि सम्बन्धार्थकतापत्तेः, षष्ठीविधायकस्य कर्मसञ्ज्ञाविधायकस्य च विरोधाभावेन बाध्यबाधकभावाप्रसक्तेश्च प्राचीनोक्तं चिन्त्यम्। कर्मत्वपुरस्कारेण कर्मवाचकताविधायकतया, सम्बन्धत्वपुरस्कारेण कर्मवाचकताविधायकतया च "कर्मणि द्वितीया" (पा०सू० २।३।२) इत्यस्य वाक्यभेदापत्तेश्च। एकवाक्येन वैरूप्येण बोधस्याशक्यत्वात्। न चैतद्वैरूप्येण बोधकत्वं भवतोऽप्यावश्यकं, "दिवः कर्म च" (पा०सू० १।४।४३) "अधिशीङ्स्थासां कर्म" (पा०सू० १।४।४६) "कर्तुरीप्सिततमं कर्म" (पा०सू० १।४।४९) इत्याद्यनेकसूत्रविहितकर्मसञ्ज्ञकार्थकपदोत्तरद्वितीयाया एकरूपेणाबोधकत्वादिति वाच्यम्। करणाधारादिरूपकर्मणां भेदेऽपि तावत्सु कर्मत्वशक्तेरैक्येन कर्मत्वशक्तिमद्बोधिका द्वितीयेत्यर्थे वैरूप्याभावात्। प्राचीनानां तु एतद्विहितद्वितीयायास्तादृशशक्तिपुरस्कारेणाबोधकत्वाद्वैरूप्यं दुर्वारमेवेति दिक्।

केचित्तु प्राचीनोक्तं समर्थयन्ति। तथा हि—यदुक्तं 'यदीदं न स्यात्तदा षष्ठी प्रवर्तेत' इतिसम्भावनामात्रेणापवादतामाश्रित्य सम्बन्धार्थकत्वे सर्वत्र तथापत्तिरिति। तन्न, तत्तत्सूत्रसत्त्वे कर्मत्वादिना विवक्षायां शेषत्वाभावेन षष्ठ्यप्राप्त्या तत्र सम्बन्धार्थकत्वासम्भवेऽपि प्रकृतसूत्रे सत्यपि षष्ठीप्राप्त्याऽपवादत्वस्य स्पष्टतया सम्बन्धार्थकत्वसम्भवात्। यदप्युक्तं सञ्ज्ञाशास्त्रेण विधेर्बाध इति, तदप्ययुक्तम्। कर्मप्रवचनीयसञ्ज्ञावदर्थबोधकोत्तरं द्वितीयाविधानाय कल्प्यमानद्वितीयाविधेः षष्ठीबाधकत्वमित्यस्य स्वेनैव वक्ष्यमाणतया तद्रीत्याऽत्रापि वक्तुं शक्यत्वात्। वैरूप्यं तु अस्मिन् मते सह्यमेव। उद्देश्यतावच्छेदकफलाश्रयत्वादिव्यतिरिक्तकर्मत्वादिशक्तीनां प्रमाणतोऽसिद्धानां तैरनङ्गीकारात्। फलाश्रयत्वात् कर्मत्वमित्यादेस्तु तत्त्वात् कर्मसञ्ज्ञेत्येवार्थः। कर्मत्वाविवक्षायामप्यनेन कर्मत्वमित्यस्य तु फलाश्रयत्वस्य स्वरूपतः फलाश्रयतात्वेन

विधिविषयप्रसक्तिपूर्वकं तदविवक्षायां, सर्वथा पूर्वविधेरप्रसक्तौ चैतत्प्रवृत्तिरिति बोद्धव्यम् । अपादानत्वादिविवक्षायां पञ्चम्याद्येव । केन रूपेण विवक्षेति चेत्–कर्मत्वेनेति गृहाण । कारकत्वव्याप्यसञ्ज्ञानां स्वबोद्ध्यार्थे कर्मत्वादिशक्तिमत्त्वबोधकत्वात् । बोधोऽपि तथैव ।

तत्तच्छास्त्राभावे सर्वत्र षष्ठीप्राप्त्या सर्वासां तदपवादत्वेन तदपवादत्वमात्रेण सम्बन्धार्थकत्वं न युक्तम् । अत एव "कर्मणि द्वितीया" (पा०सू० २।३।२) इत्यस्य न वैरूप्यम् । (१)अत्र एवैतत्सूत्रशेषे **भाष्ये**ऽनेनैव सिद्धे (२)आद्यसूत्रद्वय (३)वैयर्थ्यमाशङ्क्येप्सितमात्रस्याप्यनेन सञ्ज्ञायां (४)"वारणार्थानाम्" (पा०सू० १।४।२७) इति सूत्रस्यानवकाशत्वे माण-

---

वाऽविवक्षायामपि सम्बन्धत्वेन तद्विवक्षायामप्यनेन कर्मसंज्ञेत्यर्थ इति न वदतो व्याघातः । वास्तुनि भवो वास्तव्य इत्यर्थे यत्प्रत्ययेन 'वास्तव्यः' इत्येतत् संसाध्य "वसेस्तव्यत् कर्तरि णिच्च" इत्यस्य प्रत्याख्यानवत् "अकथितञ्च" (पा०सू० १।४।५१) इत्यनेन शाब्दबोधवैलक्षण्यानादरेण "कर्तुरीप्सिततमम्" (पा०सू० १।४।४९) "तथायुक्तम्" (पा०सू० १।४।५०) इत्यनयोर्वैयर्थ्यशङ्कायाः सम्भवात् न वैयर्थ्यशङ्कापरभाष्यासङ्गतिरित्यलम् ।

स्वमते प्रमाणमुपन्यस्यति–(१)**अत एवैतत्सूत्रशेषे इति** । कर्मत्वेन विवक्षायामेव "अकथितं च" (पा०सू० १।४।५१) इत्यस्य प्रवृत्तेरेवेत्यर्थः । (२)**आद्यसूत्रद्वयेति** । कर्तुरीप्सितसूत्र–तथायुक्तसूत्रद्वयेत्यर्थः । (३)**वैयर्थ्यमिति** । सूत्रद्वयविषयेऽप्यनेनैव सिद्धेः ।

ननु कर्तुरीप्सितसूत्रबोधितसञ्ज्ञावदर्थपरपदोत्तरद्वितीयया इच्छोद्देश्यत्वमपि प्रत्याय्यते, तदभावे तु तन्न प्रत्याय्येत–इति चेद् ? अस्तु तत् तदर्थं, तथाऽपि 'तथायुक्तम्' इत्येतद्वैयर्थ्यमस्त्येवेति । किञ्च बोधवैलक्षण्यमनादृत्यापि बहुत्र खण्डने भाष्यकृत्प्रवृत्त्याऽत्रापि तथात्वे क्षत्यभावः । न चात्र परिगणनमावश्यकम्, अन्यथा सर्वेषां द्विकर्मकतापत्तिरित्यपरिगणितधातुयोगे कर्मत्वायोक्तसूत्रद्वयं सावकाशमिति वाच्यम् । परिगणनमबुध्वैवैतद्ग्रन्थप्रवृत्तेः । एवञ्च "वारणार्थानाम्" (पा०सू० १।४।२७) इत्यस्य वैयर्थ्योपपादनमपि युक्तम् । अन्यथाऽपरिगणितत्वाद्वारेस्तन्न युज्येत । (४)**वारणार्थानामितिसूत्रस्यानवकाशत्वे इति** । नच यत्र कर्मत्वेन विवक्षा तत्रैव कर्मसंज्ञा स्यादित्यपादानत्वेन विवक्षायां वारणार्थानामिति सूत्रं चरितार्थमिति वाच्यम् । "अनेनैव सिद्धे" इत्यस्य "कारकमात्रं कर्मसञ्ज्ञमित्यर्थकाकथितञ्चेत्यनेन सिद्धे" इत्यर्थेनापादानत्वविवक्षायां च प्रवृत्त्या वैयर्थ्यस्य स्पष्टत्वात् । नन्वेवं कारकमात्रं व्यर्थं

वकादपि पञ्चमी स्यादिति ईप्सिततममित्याद्यारब्धव्यमित्यु(१)त्तरितम्। एतेन दुह्यादीनां व्यापारद्वयार्थकत्वे कर्तुरिति कर्मत्वे तत्त्वेनाविवक्षायामप्यनेन कर्मत्वमिति परास्तम्। वदतो व्याघातात्। अत एव कर्तुरित्यनेन सिद्धिमाश्रित्यास्य वैयर्थ्यं **भाष्ये** (२)नाशङ्कितम्।

**कारकमिति**। क्रियाजनकमित्यर्थः। नन्वेवं 'नटस्य शृणोति' इत्यादावतिप्रसङ्गः। सर्वथा तत्र तदप्राप्तेः। गीतद्वारा च तस्य क्रियाजनकत्वम्। न च तस्य कर्मयुक्त्वाभावः। तदंशस्यापि परिगणनलभ्यत्वात्। नटस्यापादानत्वविवक्षा तु न कदापि। "आख्यात" (पा०सू० १।४।२९) इति सूत्रे उपयोगग्रहणेनानुपयोगे आख्यातुरपादानत्वाविवक्षाया बोधनात्; अतः परिगणनमाह—**दुह्याजिति**। **कर्मयुगिति**। कर्मयुक्त्वं धात्वर्थव्यापारात्प्राक् तदनन्तरं वा तत्सम्बद्धत्वम्। तत्र ब्रुविशास्यतिरिक्ते धात्वर्थव्यापारात्प्रागेव तत्सम्बद्धत्वं, तद्विषये तु तदनन्तरं तत्सम्बद्धत्वं बोद्ध्यम्। तत्र सति सम्भवे प्राक् तत्सम्बद्धत्वमेव ग्राह्यम्। एतेन स्थाल्यादेरपि तद्व्यापारादनन्तरं पयःसम्बद्धत्वेन कर्मत्वं तेषां दुर्वारमित्यपास्तम्। तेन 'गां

---

स्यादिति चेत् ?, का क्षतिः। "वारणार्थानाम्" (पा०सू० १।४।२७) इतिसूत्रवैयर्थ्यस्यापि सत्वात्। न चैवं 'नटस्य शृणोति' इत्यादावेवं दूषणं देयं स्यादिति वाच्यम्। तस्य दूषणान्तरत्वेऽप्येतद्दूषणस्यापि सम्भवात् इति दिक्।

कश्चित्तु कर्मत्वेन विवक्षेत्यस्य फलाश्रयत्वेन विवक्षेत्येवार्थः। "वारणार्थानाम्" इत्यत्रापादानत्वेन विवक्षेत्यस्यापि स एवार्थ इत्यपादानत्वविवक्षायामपि कर्मसञ्ज्ञा स्यादेवेति तत्सूत्रं व्यर्थं स्यादेवेति। नतु धात्वर्थविभागाश्रयस्यैवापादानसञ्ज्ञाया वक्ष्यमाणतया "ध्रुवमपाये" (पा०सू० १।४।२४) इत्यपि व्यर्थं स्यादिति चेत्, अस्तु—तथाऽप्येतद्वैयर्थ्यस्य स्पष्टत्वादित्याह।

(१)**उत्तरितमिति**। षष्ठ्यपवादत्वमात्रेण सम्बन्धत्वमात्रविवक्षायां यदीदं प्रवर्तेत, तर्हि कर्मत्वविवक्षायां प्रवर्तमानाभ्यां पूर्वसूत्राभ्यामस्य सामानाधिकरण्याभावादेव वैयर्थ्यशङ्काऽनवकाशे समाधानानुधावनमयुक्तं स्यात् इति भावः।

(२)**नाशङ्कितमिति**। दुह्यादीनां व्यापारद्वयार्थकत्वे गवादीनामपि फलाश्रयत्वात् कर्तुरिति सूत्रेण सिद्धेऽस्य वैयर्थ्यमाशङ्क्य कर्मत्वेनाविवक्षायां षष्ठीप्राप्त्या तद्बाधनार्थमिदमिति भाष्यकृता उक्तं स्यात्, तदनुक्त्या च कर्मत्वेन विवक्षायामेवैतत्प्रवृत्तिरिति बोध्यते इति भावः।

पयो दोग्धि स्थाल्याम्' इत्यादौ स्थाल्यादेरधिकरणत्वाविवक्षायामपि नानेन कर्मत्वम् । एवञ्चापादानादीत्यादिशब्देनापादानसम्प्रदानाधिकरणान्येव । करणन्तु न गृह्यते । हस्तादेः करणस्य पयआदिकर्मयुक्त्वाभावात् ।

यदपि—'गां दोग्धि' इत्यादौ गौः पयस्त्यजति, गवा पयस्त्याजयतीत्याद्यर्थप्रतीत्या "कर्तुरीप्सिततमम्" (पा०सू० १।४।४९) इत्येव सिद्धम् । प्रधानकर्मत्वञ्च गवादीनामिति तत्रैव लादिसिद्धिः । प्रधानकर्मत्वञ्च कर्तृप्रत्ययसमभिव्याहारे कर्तृनिष्ठप्रधानव्यापारविशेषणफलाश्रयत्वम् । ण्यन्तविषये ईदृशप्राधान्यस्यैव ग्रहात् । प्रकृते च पयोनिष्ठविभागानुकूलो यो गोनिष्ठव्यापारस्तदनुकूलव्यापारस्य (१)शब्दतः प्राधान्यात् । 'गर्गाः शतं दण्ड्यन्ताम्' इत्यत्र गर्गाणामेव तत्त्वम् । उद्देश्यत्वरूपमार्थं प्राधान्यं तु शतस्येत्यनुद्देश्यत्वेनाप्रधानगर्गानुरोधान्न शतावृत्तिरिति न वृद्धिसूत्रस्थभाष्यविरोधः । एवमेव (२)शकारमसि चोदित" इत्याद्युपपत्तिः । (३)अत एव—

प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम् ।
अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मणः ॥

इत्युक्त्वोत्तरार्द्धोपात्तातिरिक्ता द्विकर्मकाः के ? इति प्रश्ने—

नीवह्योर्हरतेश्चापि गत्यर्थानां तथैव च ।
द्विकर्मकेषु ग्रहणं द्रष्टव्यमिति निश्चयः ॥

इत्युक्तम् । तत्र न्यादिग्रहणं तव कृषिवन्मम व्यापारद्वयार्थकधातू-(४)पलक्षणम् । एवञ्चेदं सूत्रं व्यर्थं, तथापि यदा पयोनिष्ठविभागानुकूलव्या-

---

(१)शब्दतः प्राधान्यादिति । शाब्दबोधीयविशेष्यत्वरूपप्राधान्यादित्यर्थः । (२)शकारमसि चोदित इति । जिज्ञासाज्ञापनं हि चोदेरर्थः । शकारपदं च "हलः श्नः शानज्झौ" (पा०सू० ३।१।८३) इतिसूत्रस्थशानच्प्रत्ययघटकशकारप्रयोजनपरम् । कर्मप्रत्ययसमभिव्याहारे च फलभूतज्ञानस्य व्यापारापेक्षया प्राधान्यम् । तथाच मद्वृत्तिव्यापारजन्यं यत् शकारप्रयोजनविषयकजिज्ञासाविषयकज्ञानं तदाश्रयो युष्मच्छब्दप्रतिपाद्य इति बोध इति । अत्रापि युष्मदर्थे एव शाब्दप्राधान्यम् इति तत्रैव कः । नीवह्योरिति कारिकां स्वमतेन योजयति-(३)अत एव प्रधानकर्मणीति । (४)उपलक्षणमिति । अन्यथाऽन्येषामपि वाच्यत्वे

पारादिरेव धात्वर्थस्तदाऽपादानत्वाद्यविवक्षायामन्येनासिद्धकर्मत्वार्थमिदमावश्यकम् । तदा च 'अप्रधाने दुहादीनाम्' इत्युक्तेरप्रधाने गवादावेव लादयः । अप्रधानकर्मत्वञ्चोक्तप्रधानकर्मभिन्नकर्मत्वम् । तच्चोक्तार्थे गवादीनामस्त्येव, (१)फलानाश्रयत्वात् ।

**गां दोग्धीति ।** अन्तःस्थितद्रवद्रव्यनिष्ठविभागानुकूलव्यापारो दुहेरर्थः । तत्र गोरपादानत्वाविवक्षायामनेन कर्मत्वम् । तद्विवक्षायां पञ्चमी । गोः पयस्यन्वये षष्ठी । द्विकर्मकेषु गवादीनां कर्मत्वाविवक्षया क्रियाऽन्वये षष्ठी न, अनभिधानात् । षष्ठ्यन्तस्य स्वान्वययोग्यनामसमभिव्याहारे तत्रैवान्वयस्योत्सर्गतो व्युत्पत्तेश्च । अत एव 'तण्डुलानामोदनं पचति' इत्यत्र "द्व्यर्थश्चैव पचिर्विकारयोगे षष्ठी" इत्येव कर्तुरिति सूत्रे **भाष्ये** उक्तमिति दिक् ।

**बलिं याचते इति ।** यदा परस्वत्वनिवृत्ति–स्वस्वत्वोत्पत्त्युभयानुकूलो व्यापारो याचेरर्थः, स्वत्वे बलेर्निरूपकतयाऽन्वयः, तदाऽनेन कर्मत्वम् । पूर्वविषयस्य कस्याप्यभावात् । न चात्रापादानत्वप्रसक्तिः । विभागस्य धात्वर्थत्वाभावात् । 'न हि याचनादेवापायो भवति, याचितो यदि ददाति तदाऽपायेन युज्यते' इति भाष्योक्तेः । "असङ्कीर्तिपर्यायाकथितग्रहणे 'गां दोग्धि' 'गौर्दोग्धि' इति च, याचिपृच्छिभिक्षियोगे कर्मसञ्ज्ञैवेत्येषा व्यवस्था" इति च सिद्धान्ते कैयटोक्तेश्च । व्यापारद्वयार्थत्वे तु कर्तुरिति कर्मत्वं बोद्धव्यम् । वसुधायाः स्वामित्वसम्बन्धात् कर्मयुक्त्वम् ।

**अविनीतमिति ।** याचेः स्वीकारानुकूलव्यापारोऽर्थः । स्वीकारश्च 'इदमवश्यं करिष्यामि' इतिशब्दप्रयोगजनको ज्ञानविशेषः । विनयेन च तद्विषयज्ञानवत्त्वं सम्बन्धः ।

---

न्यूनतापत्तेः । (१)फलानाश्रयत्वादिति । फलतावच्छेदकसम्बन्धेनेति शेषः । एवञ्च फलताऽनवच्छेदकसम्बन्धेन फलाश्रयो गौणकर्म । फलतानवच्छेदकसम्बन्धश्च न यावान् ग्राह्यः, अपि तु संयोग–समवाय–विषय–विषयिभावाद्यन्यतम एव । अन्यथा कालिकादिसम्बन्धेन सर्वेषां फलाश्रयत्वात् स्थाल्यादेः कर्मतापत्तेः । याचस्यादावपि धनीयबौद्धत्यागसमवायोऽस्त्येवेति न दोषः ।

**तण्डुलानिति ।** तण्डुलान् विक्लेदयन्नोदनं निर्वर्त्तयतीत्यर्थस्य कर्त्तुरितिसूत्रस्थभाष्यकैयटसम्मतत्वेन कर्त्तुरित्येव कर्मत्वसिद्धेरस्यैतदुदाहरणत्वं चिन्त्यम् । एवं स्वसम्प्रदानकदानानुकूलव्यापारानुकूलशासनरूपव्यापारार्थदण्ड्यादियोगेऽपि तेनैव सिद्धम् । एवं व्यापारद्वयार्थत्वेन सति प्रयोगे बहूनां द्विकर्मकत्वं बोद्धव्यम् ।

**व्रजमिति ।** निर्गमप्रतिबन्धपूर्वकयत्किञ्चिदधिकरणकचिरस्थित्यनुकूलव्यापारो रुधेरर्थः व्रजे गौस्तिष्ठति, तत्र तां निर्गमप्रातिबन्धपूर्वकं चिरं स्थापयतीति सम्प्रत्ययात् । अधिकरणत्वाविवक्षायामनेन कर्मत्वम् । व्यापारद्वयार्थत्वे कर्त्तुरिति कर्मत्वम् ।

**पन्थानमिति ।** जिज्ञासाविषयार्थज्ञानानुकूलः 'केन पथा गन्तव्यम्' इत्यभिलापादिरूपो व्यापारः पृच्छेरर्थः । ज्ञानविषयत्वेन पथः कर्मत्वम् । माणवकेन च तज्ज्ञानाश्रयत्वं सम्बन्धः । अपादानत्वं तु नात्र । "न प्रश्नादेवापायो भवति पृष्टोऽसौ यद्याचष्टे तदाऽपायेन युज्यते" इति भाष्योक्तेः । सम्प्रदानत्वमपि न । कर्मसम्बन्धवत्त्वेनेच्छाविषयत्वाभावात् । व्यापारद्वयार्थत्वे तु कर्त्तुरिति कर्मत्वम् ।

**वृक्षमिति ।** विभागपूर्वकोऽऽदाने चिञ् । वृक्षात्फलान्यादत्ते इत्यर्थात् । अपादानत्वाविवक्षायामनेन कर्मत्वम् ।

**धर्मं ब्रूते इत्यादि ।** ज्ञानानुकूलः शब्दप्रयोगरूपो व्यापारो ब्रूञर्थः । प्रवृत्तिपर्यवसायी स शासेः । स च 'धर्मं कुरु' इत्यादिविधिघटितोपदेशरूपः । विषयता च फलतावच्छेदकः सम्बन्धः । वचनादिकर्मणा धर्मेण माणवकस्याभिप्रेयमाणत्वात्तस्य सम्प्रदानत्वम् । तदविवक्षायाञ्चानेन कर्मत्वम् । अत्र कर्तृव्यापारानन्तरं तज्ज्ञानाश्रयत्वरूपो माणवकस्य धर्मेण सम्बन्धः । नयतेः संयोगानुकूलव्यापारानुकूलव्यापारोऽर्थः । स एव स्कन्धग्रहणादिपूर्वो वहेरर्थः । गत्यनुकूलव्यापारविशेषः कृषेः । बलाद्ग्रहणपूर्वकं देशान्तरप्रापणं हरतेः । एषु "कर्तुः" (पा०सू० १।४।४९) इति कर्मत्वं बोद्धव्यम् । एवञ्च भाष्यानुक्तानामत्र ग्रहणं प्राचामनुरोधेनेति तत्त्वम् । भाष्योक्ता हि 'दुहियाचिरुधिप्रच्छिभिक्षिचिञ्ब्रुविशासयः' ।

**अर्थनिबन्धनेयमिति**। इदमपि कैयटानुरोधेन। वस्तुतस्तु येषामेतदर्थानां द्विकर्मत्वमिष्टं तेषां व्यापारद्वयार्थत्वेन कर्तुरित्येव सिद्धम्। (१)अन्यथा "आख्यातोपयोगे" इतिसूत्र**भाष्यो**क्तपरिगणनभङ्गापत्तिः। किञ्च **भाष्ये** भिक्षिग्रहणवैयर्थ्यापत्तिः। उभयार्थकयाचिग्रहणेनैव सिद्धेरित्यन्ये।

**अकर्मकधातुभिरिति**। तेषां स्वकरणकव्यापने वृत्त्या व्याप्तिरूपफलाश्रयत्वेन कर्तुरिति कर्मत्वम्। 'मासमास्ते' इत्यादेर्मासमासनेन व्याप्नोतीत्यादिक्रमेणार्थ इति भावः। यत्त्विदमेव कर्मसञ्ज्ञाविधायकमिति। तन्न, **भाष्ये** तादृशवचनानुपलम्भात्। "अकथितञ्च" (पा०सू० १।४।५१) इति सूत्रे अकर्मकप्रकृतिकण्यन्तानां कथं द्विकर्मकत्वमिति शङ्कायां 'कालभावाध्वगन्तव्याः कर्मञ्सज्ञा ह्यकर्मणां देशश्च' इति **भाष्ये** उक्तम्। तच्च न विधायकं, हिशब्दघटितत्वात्। किं च "कालाध्वनोः" (पा०सू० २।३।५) इति सूत्रे "कालाध्वानौ कर्मवदिति वक्तव्यम्" इतिवार्त्तिकप्रत्याख्याने "प्राकृतमेवैतत्कर्म, यथा कटं करोति" इत्युक्तम्। अस्य वचनत्वे 'उक्तं वा' प्राकृतं वा' इति वदेत्। तस्मादु(२)क्तरीत्या कालादीनां तद्योगे कर्मतया द्विकर्मकत्वमित्येव तत्तात्पर्यम्। (३)अत एव "समां समां विजायते" (पा०सू० ५।२।१२) इति सूत्रे 'समायां समायां विजायते' इति (४)विग्रहकथनपरं **भाष्यं** सङ्गच्छते। (५)अन्यथा अनेन द्वितीयाया एव तत्र साधुत्वेन तदसङ्गतिः स्पष्टैव। अत एवोक्तभाष्यार्थानुवादिका हरेः कारिका—

कालभावाध्वदेशानामन्तर्भूतक्रियान्तरैः।
सर्वैरकर्मकैर्योगे कर्मत्वमुपजायते॥ इति।

सकर्मकविषयेऽप्यनेन प्रकारेण कालादिकर्मणा सकर्मकत्वम्। तुल्य-

---

(१)**अन्यथा**—अस्या अर्थनिबन्धनत्वे। (२)**उक्तरीत्या**–धात्वर्थकरणकव्याप्तिरूपफलाश्रयत्वेनेत्यर्थः। (३)**अत एव**—धात्वर्थकरणकव्याप्तिरूपफलाश्रयत्वेन विवक्षायामेव कर्मत्वादेव। (४)**विग्रहेति**। सप्तम्यन्तेत्यर्थः। (५)**अन्यथा**—"कालभावाध्वगन्तव्या" इत्यस्य विधायकत्वे।

न्यायात्। तेन 'मासमोदनं पचति' इति भवति। तत्र कालादिकर्म अप्रधानं, द्रव्यकर्म तु प्रधानम्। कालस्याधारत्वेन द्रव्यद्वारा क्रियासम्बन्धात्। किञ्च कठिनपाक्यस्य महापरिमाणस्य बहुसङ्ख्यस्य च चिरेण पाकोऽन्यस्याचिरेणेति द्रव्यधर्मं पर्यालोच्य क्रियासु कालयोग इति स बहिरङ्गः। अपि च साधनसम्बन्धे जाते क्रियायाः परिच्छेदकग्राह्यकालाकाङ्क्षेति स बहिरङ्गः। अकर्मकव्यवहारस्तु धातूनां द्रव्यकर्माभावनिमित्त एव। अत्र बीजं वक्ष्यते। तदुक्तम्—

अतस्तैः कर्मभिर्युक्तो धातुर्द्रव्यैरकर्मकः।
लस्य कर्मणि भावे च निमित्तत्वाय कल्पते॥ इति।

**गतिबुद्धिप्र** (पा०सू० १।४।५२)॥ शब्दः कर्म कारकं येषामित्यर्थो (१)व्याख्यानात्। तेन ह्वाययतिक्रन्दयत्योर्न। **अणाविति।**

---

**गतिबुद्धि** (पा०सू० १।४।५२) **(१)व्याख्यानादिति।** भाष्ये तथैव सिद्धान्तितत्वादिति भावः।

अत्र **प्राञ्चः**—आकडारसूत्रे भाष्ये "आकडारात् परं कार्यम्" इति पाठे "गतिबुद्ध्यादीनां ण्यन्तानां कर्म कर्तृसंज्ञमपि प्राप्नोति—आरम्भसामर्थ्याच्च कर्मसंज्ञा, परकार्यत्वाच्च कर्तृसंज्ञा प्राप्नोति" इत्युक्तम्। तत्रारम्भसामर्थ्यादित्युक्तिः गत्यादिसूत्रस्य विधायकत्वे एवोपपद्यते। नियामकत्वे तु 'पाचयत्योदनं देवदत्तेन' इत्यादौ देवदत्तादेः कर्तुरीप्सिततेत्यनेन प्राप्तकर्मसंज्ञाव्यावृत्त्यर्थं गत्यादिसूत्रस्यावश्यकतया, कर्तुरीप्सिततेत्यस्य च 'हरिं भजति' इत्यादौ कर्मत्वार्थं चारितार्थ्येन कस्यापि वैयर्थ्याभावाद् आरम्भसामर्थ्यादित्युक्तिरसङ्गता स्यात्। तस्मात् कर्मसंज्ञासूत्रस्थकर्तृपदस्य स्वतन्त्रोपलक्षकत्वेन कर्तृसंज्ञायाः कर्मसंज्ञोपजीव्यत्वाभावेऽपि परत्वान्तरङ्गत्वयोः सुवचत्वेन प्रयोज्यस्य परत्वादन्तरङ्गत्वाच्च प्राप्तकर्तृसंज्ञाबाधनार्थं गत्यादिसूत्रमिति।

**नवीनास्तु** एवं सति "हेतुमति च" (पा०सू० ३।१।२६) इतिसूत्रभाष्ये प्रयोजकव्यापारस्य णिज्वाच्यत्वे "प्रयोजकव्यापारेण प्रयोज्यस्येप्सिततत्वेन कर्मसञ्ज्ञा प्राप्नोति पाचयत्योदनं देवदत्तेनेति" इत्याशङ्क्य "गतिबुद्धीति सूत्रं नियमार्थं भविष्यति एतेषामेव ण्यन्तानां यः कर्ता स णौ कर्मसञ्ज्ञो भवति नान्येषामिति" इत्युक्तं नियामकत्वं न सङ्गच्छेत। अतः कर्तृसञ्ज्ञायाः परत्वान्तरङ्गत्वयोरपि कर्मसञ्ज्ञायाः प्रधानव्यापाराश्रितत्वात् प्रधानाश्रितायाश्च 'मूलकेनोपदंशं भुङ्क्ते' इत्यादौ तृतीयादीनामिव सर्वतो बलवत्त्वात् प्रयोज्ये सर्वत्र प्राप्तायां तस्यां "गतिबुद्धि" (पा०सू० १।४।५२) इति सूत्रं नियामकं 'णिजर्थव्यापारप्रयोज्यफलाश्रयस्य कर्मसंज्ञा भवति

णिच्यनुत्पन्ने इत्यर्थः। अत्र णिज् हेतुमण्णिजेव। णावित्यत्रापि स एव। व्याख्यानात्। अत एव भक्षेर्निषेधश्चरितार्थः। स हि नित्यण्यन्तश्चुरादिरिति बोद्ध्यम्। (१)अन्यानधीनत्वलक्षणाऽर्थप्राधान्य(२)शाब्दप्राधान्ययोः प्रयोजकव्यापारे सत्त्वेन तदनुरोधिकर्मत्वस्यान्तरङ्गादपि कर्तृत्वाद् बलवत्त्वेन कर्तुरित्येव सिद्धे णिजर्थेनाप्यमानस्य चेद् गत्यर्थादीनामेवेति नियमार्थमिदम्। तेन पाचयत्यादियोगे नेति "हेतुमति च" (पा०सू० ३।१।२६) इति सूत्रे भाष्यकृतः। 'प्रधानकार्यं सर्वतो बलवत्' इति आकडारसूत्रे **कैयटे** स्पष्टम्। तेन गत्यादियोगे प्रयोज्यस्य कर्मत्वशक्तिमत्त्वं, पाचयत्यादियोगे कर्तृत्वशक्तिमत्त्वमेवेति बोद्ध्यम्। **गमयति देवदत्तेनेति।** यज्ञदत्तकर्मकगमनानुकूलदेवदत्तकर्तृकव्यापारानुकूलो विष्णुमित्रकर्तृको व्यापार इति बोधः। (३)अत्र देवदत्तस्य **न** कर्मत्वम्।

---

चेद् गत्यादीनामेव' इति। तेन पाचयत्यादियोगे न। आकडारसूत्रभाष्योक्तस्य आरम्भसामर्थ्यादित्यस्य तु ण्यन्तधातुविषयस्य कर्तुरीप्सितसूत्रस्यारम्भसामर्थ्यात् इति, अविरोधात् सर्वत्र संज्ञाद्वयप्रसङ्गे 'कर्तृसंज्ञाविशिष्टा कर्मसंज्ञा भवति चेद् गत्यर्थादीनामेव' इत्येतन्नियमारम्भसामर्थ्यादिति वाऽर्थः। परं कार्यमिति पाठे अविरोधात् संज्ञाद्वयप्रसङ्गे विधायकत्वस्य सर्वथा दुरुपपादत्वात् इत्याहुः।

तदुपपादयति-**(१)अन्यानधीनत्वेति।** ननु उद्देश्यत्वलक्षणमार्थप्राधान्यं प्रयोज्यव्यापारेऽप्यस्ति, अत आह-**(२)शाब्दप्राधान्ययोरिति।** तच्च शाब्दबोधीयविशेष्यताश्रयत्वरूपम्। इदं जनकत्वलक्षणार्थप्राधान्यस्याप्युपलक्षणम्। तेन स्वमते कर्मप्रत्ययसमभिव्याहारे फलस्य विशेष्यत्वेऽपि न क्षतिः।

**(३) अत्र देवदत्तस्य न कर्मत्वमिति।** ननु अण्यन्तानामित्यस्याभावे 'गमयति देवदत्तो यज्ञदत्तम्' इत्यत्रापि कर्तृसंज्ञां बाधित्वा देवदत्तस्य कर्मत्वमनेन दुर्वारमेवेति किमर्थं ण्यन्तप्रकृतिकणिच्पर्यन्तानुधावनमिति चेद्, न। पूर्वसूत्रात् 'ईप्सिततमम्' इत्यस्यानुवृत्त्या कर्तृव्यापारप्रयोज्यफलाश्रयस्यैव गत्यर्थादिकर्तुः कर्मसञ्ज्ञाविधानेन द्वितीयणिचं विना कर्तृव्यापारप्रयोज्यफलाश्रयत्वस्य तत्र दुरुपपादत्वेन कर्मत्वाप्राप्तेस्तत्पर्यन्तानुधावनस्य सार्थक्यात्। न च ण्यन्तस्य संयोगानुकूलव्यापारानुकूलव्यापारार्थकत्वेन संयोगानुकूलव्यापारप्रधानताकप्रतीतिजनकत्वरूपगत्यर्थत्वाभावात् उक्तप्रयोगे देवदत्तादेः कर्मत्वं नापादयितुं शक्यते इति वाच्यम्। संयोगानुकूलव्यापाररूपगतेर्ण्यन्ते प्राधान्यविरहेऽपि अण्यन्तानामित्यनेन 'विशेषणतया विशेष्यतया वा तादृशगतिबोधकस्य गत्यर्थकपदेन ग्रहणम्' इत्यर्थस्य ज्ञापनात्। अत एव "नीव-

**नियन्त्रेति ।** नियन्तृकर्तृकण्यन्तप्रकृतिभूतस्येत्यर्थः । प्रापणार्थवहेर्गत्यर्थत्वाभावेऽपि 'ग्रामं प्राप्तः' इत्यादौ तत्प्राप्तेर्गतिं विनाऽसम्भवादा-(१)क्षिप्तगत्याऽपि (२)गत्यर्थत्वमित्यभिमानेन वार्तिकारम्भः । 'सुखं प्राप्तः' इत्यादौ न तदाक्षेपः, तत्र कर्तरि क्त आदिकर्मणि बोद्धयः । अत एव ग्रामं प्रापयति देवदत्तेनेत्येवेति ध्वनितं "न गति" (पा०सू० १।३।१५) इति, "न वा" (पा०सू० १।१।४४) इति सूत्रे च **भाष्ये** । नयतेस्तु 'या प्रापणे' इत्यादेरिव गत्युपसर्जनं प्रापणं वाच्यमिति तस्य गत्यर्थत्वमेवेति बोद्धयम् । (३)**अदिखाद्योरिति ।** प्रत्यवसानार्थत्वात्प्राप्तिः । प्रत्यवसानं भक्षणम् । **भक्षयति बलीवर्दानिति ।** हिंसाङ्गे भक्षणे भक्षेर्वृत्तिः । परकीयसस्यभक्षणे परो हिंसितो भवतीति तत्स्वामिनोऽत्र हिंसा द्रष्टव्या ।

**जल्पयतीति ।** पुत्रो धर्मं जल्पति—तद्बोधकवाक्यानि कथयति, देवदत्तो जल्पयति धर्मं पुत्रमित्यर्थः । **शब्दाययतीति ।** शब्दं करोतीत्यर्थे "शब्दवैर" (पा०सू० ३।१।१७) इत्यादिक्यङन्ताण्णिच् । **परे**

---

ह्योर्न" इति वार्तिके नीग्रहणं चरितार्थम् । तेन गत्युपसर्जनन्यादिधातुभ्योऽधिकरणे कर्तरि च क्तप्रत्ययः सिध्यतीति दिक् ।

(१)**आक्षिप्तगत्याऽपीति ।** सुखं प्राप्तः, धनं प्राप्तः इत्यादौ समवाय—स्वस्वामिभावादेरपि प्रतीत्या प्राप्तिः सम्बन्धमात्ररूपा, न केवलसंयोगरूपा । ततश्च 'गङ्गां प्राप्तः' इत्यादौ सम्बन्धत्वेन प्रतीयमानायाः संयोगरूपप्राप्तेः तदनुकूलव्यापाररूपगतिं विनाऽसम्भवात् तदाक्षेपादाक्षिप्तगत्या गत्यर्थत्वमङ्गीकृत्य "गत्यर्थाकर्मक" (पा०सू० २।३।१२) इत्यनेन कर्तरिक्त उपपादनीयः । सुखं प्राप्त इत्यादौ तु समवायादिरूपप्राप्तेः गत्याक्षेपकत्वासम्भवेन आक्षिप्तगत्याऽपि गत्यर्थत्वासम्भवादगत्या आदिकर्मणि क्तो बोध्यः । अत एव तद्योगे "द्वितीयाश्रित" (पा०सू० २।१।२४) इत्यनेन समासविधानमुपपद्यते । एवञ्च उक्तवार्तिके वहिग्रहणं तस्य आक्षिप्तगत्या गत्यर्थत्वाभिमानेन । तदाह—(२)**गत्यर्थत्वमित्यभिमानेनेति ।** वस्तुतस्तु 'न वहिर्गत्यर्थः' इति "न गतिहिंसार्थेभ्यः" (पा०सू० १।३।१५) इत्यादिसूत्रस्थभाष्यस्य प्रामाण्येन गत्यर्थपदेन न तस्य ग्रहणमिति 'ग्रामं प्रापयति देवदत्तेन" इत्येव । अत एव—

'सितं सितिम्ना सुतरां मुनेर्वपुर्विसारिभिः सौधमिवाथ लम्भयन् ।' इति माघपद्ये सितिम्नेति प्रयोज्यकर्तरि तृतीयोपपद्यते इति दिक् । (३)**अदिखाद्योरितीति ।** आदिखाद्योरिति त्वपपाठः । अण्णन्तावस्थायां सर्वत्र निर्देशात् ।

तु शब्दक्रियाणामित्यर्थे ह्वाययतिशब्दाययतिक्रन्दयतीनां प्रतिषेध उक्तो **भाष्ये**, न तु शब्दकर्मकाणामिति पक्षे। एवञ्च तत्र पक्षे **भाष्ये** शब्दाययतौ प्रतिषेधानुक्त्याऽकर्मकशब्दायतिसत्त्वे न मानम्। शब्दस्य धात्वर्थसंङ्गृहीतत्वेऽपि बहिर्भूतपुत्रादिकर्मणोऽभावे मानाभावाद् ह्वयताविवेति चिन्त्योऽयं निषेध इत्याहुः।

**येषामिति**। अयं भावः—"गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ" (पा०सू० १।४।५२) इति सूत्रं (१)नियमस्य

---

**(१)नियमस्य सजातीयापेक्षत्वादिति**। यद्यपि कर्मणोऽविवक्षया गत्याद्यर्थका अप्यकर्मका लभ्यन्ते इति सकर्मकत्वेन साजात्यं वक्तुमशक्यं, तथापि शब्दकर्मणः सर्वदा सकर्मकस्य साहचर्येण गत्याद्यर्थानामप्यत्र सकर्मकाणामेव ग्रहणेनेदृशसाजात्यस्य सुवचत्वमेव। नन्वेवं फलभेदः—सत्यकर्मकग्रहणे कर्मणोऽविवक्षयाऽकर्मकाणां गत्याद्यर्थानामपि योगे णिसमभिव्याहारे कर्मसंज्ञैवेष्यते, तदभावे तु न प्राप्नोति, भवद्रीत्या शब्दकर्मणः साहचर्येण गत्याद्यर्थानामपि सकर्मकाणामेव ग्रहणादिति चेत्—अत्रोच्यते—"शब्दकर्मणामणि कर्ता स णौ" इत्येको योगः कर्तव्यः। अयमेव च नियमार्थो योगः, सकर्मकाणां चेच्छब्दकर्मकाणामेवेति। एवञ्च गत्यर्थादियोगेऽप्यप्राप्तकर्मसंज्ञाविधानार्थं "गतिबुद्धिप्रत्यवसानार्थानाम्" इति योगः। अणि कर्ता स णाविति वर्तते। गत्याद्यर्थानामणि कर्ता णौ कर्म भवतीत्यर्थ इति कर्मणोऽविवक्षयाऽकर्मकस्य—गत्याद्यर्थकस्य, गत्याद्यर्थभिन्नस्य वा योगे पूर्वेणैव कर्मसंज्ञा सिद्धा, सकर्मकत्वाभावेन नियमाप्रवृत्तेरिति अकर्मकग्रहणं व्यर्थं सदुक्तार्थे ज्ञापकं समञ्जसतया सिद्धमिति विदांकुर्वन्तु सुधियः।

गत्यादिसूत्रे **भाष्ये** 'अकर्मकग्रहणे कालकर्मणामुपसङ्ख्यानं कर्तव्यम्। मासमास्ते देवदत्तः, मासमासयति देवदत्तमित्यादौ कर्मत्वार्थम्' इत्यभिधाय अनन्तरम् 'अकर्मकत्वातिदेशेन अकर्मकेभ्यो भावे विधीयमाना लादयोऽपि कालकर्मभ्यः सिध्येयुः' इत्यभिप्रायेण "सिद्धं तु कालकर्मणामकर्मकवद्वचनात्" इत्युक्त्वा "न वक्तव्यम्। अकर्मकाणामित्युच्यते। न च केचित् कालभावाध्वभिरकर्मकाः, त एवं विज्ञास्यामः—क्वचिद्येऽकर्मका इति" इत्युक्तम्।

अत्र **कैयटोपाध्यायाः**—"न च केचित्" इति भाष्यप्रतीकमुपादाय "ननु क्रियामात्रविवक्षायां कालादीनामविवक्षितत्वात् तैरपि अकर्मकत्वं भवत्येव—यथा शेते देवदत्तो, न भुङ्क्ते इति" इत्याशङ्क्य "अत्यन्ताविद्यमानकर्माणो धातवोऽकर्मकग्रहणेन गृह्यन्ते, नत्वविवक्षितकर्माणः। अन्यथा पचादीनामपि कर्माविवक्षायामकर्मकनिबन्धनानि कार्याणि भवेयुः। अकर्मकशब्दस्य च धातवोऽन्त्यपदार्थत्वेनाभिमतो, न त्वर्थाः।

धातुषु आश्रीयमाणेषु क्वचिदपि कर्मसम्बन्धदर्शनेन सारूप्यात् त एवैते इतितत्त्वप्रत्ययविषया नाकर्मकत्वेन व्यपदिश्यन्ते" इति समादधुः ।

अत्र **भाष्ये** कालादीनां कर्मत्वेन ग्रहणे अकर्मकत्वासम्भवप्रदर्शनेन 'न विद्यते कर्म-कर्मान्वययोग्योऽर्थो येषाम्' इति व्युत्पत्त्या कर्मान्वययोग्यार्थबोधकत्वाभाववत्त्वमकर्मकत्वमिति लभ्यते । 'न विद्यते कर्म-कर्मान्वयी अर्थो येषाम् इति व्युत्पत्त्या कर्मत्वावच्छिन्नविषयतानिरूपितविषयताकबोधतात्पर्येणानुच्चरितत्वरूपाकर्मकत्वस्वीकारे तु कालादीनां कर्मत्वेन ग्रहणेऽपि तदन्वयाविवक्षायां निरुक्ताकर्मकत्वस्य सम्भवात् असम्भवप्रदर्शनपरं भाष्यमसङ्गतं स्यात् । तस्मात् अविवक्षितकर्मणां न अकर्मकपदेन ग्रहणम्, अतो न पचादिभ्योऽविवक्षितकर्मभ्यो लादयः । नवा देवदत्तेन पाचयतीत्यादौ कर्माविवक्षायां गतिबुद्धीति कर्मत्वमिति कैयटानुयायिनः प्राचीनाः ।

**नवीनास्तु**—एवं सति "कर्तृकर्मणोः कृति" (पा०सू० २।३।६५) इति सूत्रे भाष्ये 'कृतपूर्वी कटम्' इत्यादौ अविवक्षितकर्मतया भावे क्तप्रत्ययसाधनस्य उपलभ्यमानस्य, 'लूयते केदारः स्वयमेव, लावयति केदारं देवदत्तः' इति निवृत्तप्रेषणाण्णिचि कर्मद्वितीयान्तस्य "णेरणौ" (पा०सू० १।३।६१) इति सूत्रे **कैयटे** उपलभ्यमानस्य चासङ्गत्यापत्तिः । तस्मात् "नच केचित्कालभावाध्वभिरकर्मकाः" इति भाष्यमन्यथा योजनीयम् । तथा हि—अकर्मका इत्यस्य न विद्यते कर्म-कर्मसञ्ज्ञाप्रयोजकोऽर्थो येषां धातूनामित्यर्थः, न विद्यते कर्म-कर्मान्वितोऽर्थो येषां धातूनामित्यर्थो वा । तत्राद्ये सर्वेषां धातूनां कालादिनिष्ठकर्मसञ्ज्ञाप्रयोजकार्थसद्भावात् अकर्मकत्वासम्भवेन उदाहरणासम्भवं भाष्यकार आह—**नच केचिदिति** । द्वितीये कर्माविवक्षया उदाहरणसम्भवेऽपि गत्यादिनियमस्य तुल्यजातीयापेक्षतया सकर्मकविषयत्वेन अकर्मकविषये कर्तुरित्यनेनैव कर्मत्वोपपत्तौ अकर्मकग्रहणं व्यर्थं स्यादिति तत्सामर्थ्यं मनसि निधाय **भाष्यकार** आह "त एवं विज्ञास्यामः क्वचिद्येऽकर्मका" इति । क्वचिदित्यस्य द्रव्ये कर्मणीत्यर्थः । एतच्च सामान्यापेक्षं ज्ञापकं 'शास्त्रेऽकर्मकपदेन कालाद्यतिरिक्तकर्माभाववन्तो गृह्यन्ते' इति । ते च सर्वथा द्रव्यकर्माभाववन्तः शीङादयः, अविवक्षितकर्माणश्चेत्युभयेऽपि । तेन मासं शाययति देवदत्तमित्यादौ कर्मत्वं, कृतपूर्वी कटमित्यादौ भावे क्तप्रत्ययः, लावयति केदारमित्यादौ कर्मत्वं च सिध्यति । अत एव अकर्मकाधिकारे श्रुदृश्यादिभ्य आत्मनेपदविधानं च सङ्गच्छते । पचादिषु तु कर्माविवक्षया न अकर्मकत्वप्रयुक्ता भावे लादयः । अविवक्षायाः प्रयोगानुसारित्वात् । यद्वा क्वचिदित्यस्य कालादीनां कर्मसञ्ज्ञाप्रयोजकव्याप्यत्वादिरहिते इत्यर्थः । एवंच कालादिकर्मणो विवक्षा अकर्मकत्वाभावप्रयोजिका न भवतीति भाष्यतात्पर्यम् । सकर्मकत्वप्रयोजिका तु भवत्येव । अकर्मकपदघटककर्मपदेन कालादीनामग्रहणे गत्यादिसूत्रस्थाकर्मकग्रहणवत् सकर्मकपदघटककर्मपदेन कालादीनामग्रहणे प्रमाणाभावात् । तेन 'आस्यते मासः' इत्यादौ कर्मणि लकारः सिध्यति । अकर्मकत्वाच्च भावेऽपि लकार इति मासमास्यते इत्यपी-

सजातीयापेक्षत्वात्सकर्मकाणाञ्चेदेषामेवेतिनियमपरम् । एवं सिद्धेऽकर्मकग्रहणे सामर्थ्याद्देशकालादिभिन्नकर्माभाववतोऽकर्मकग्रहणेन ग्रहणार्थम् । तच्च सामान्यापेक्षं ज्ञापकम् । शास्त्रेऽकर्मकपदेन ईदृशानामेव ग्रहणमिति । तेन 'मासमास्यते' इत्यादौ भावे लो भवति । न **त्विति** । तदविवक्षा हि द्वेधा—तदन्वययोग्यधात्वर्थत्यागात् , सत्येव तस्मिन्नर्थे तत्र सम्बन्धित्वेनान्वयविवक्षणाद्वेति भावः । इदं **कैयटानुरोधेन** ।

**(१)परे** त्वविवक्षितकर्मणामप्यकर्मकपदेन ग्रहणम् । क्तादीनामविव-

---

त्याहुः । तदाह—(१)**परे त्वित्यादिना** ।

**अन्ये तु** "नपुंसके भावे क्तः" (पा०सू० ३।३।११४) इति क्तप्रत्ययस्य 'कृतपूर्वी कटम्' इत्यादौ कर्मणोऽविवक्षया भावे विधानेऽपि तदन्येषां लादीनां तदविवक्षया अकर्मकत्वेन साधने प्रमाणाभावः । अत एव 'तण्डुलं पच्यते देवदत्तेन' इत्यादयो न प्रयोगाः । भवताम् अनभिधानात् तदभावकल्पने अस्माकमपि अभिधानस्वाभाव्यात् क्वचित् तत्कल्पनम् । ननु अकर्मकपदेन अविवक्षितकर्मणां ग्रहणम् । "नपुंसके भावे क्तः" इत्यत्र तदनुपादानात् । अनभिधानादेव अकर्मकेभ्यस्तदनुत्पत्तेः । अविवक्षितकर्मणो न गृह्यन्ते इत्यस्य च फल–तद्व्यधिकरणव्यापारोभयबोधतात्पर्येणोच्चरिताः कर्मान्वयित्वेन स्वार्थबोधतात्पर्येणानुच्चरितत्वमात्रेण अकर्मकपदेन न गृह्यन्ते इत्यर्थः । तेन कर्मणः कर्तृत्वविवक्षायां 'लावयति केदारं देवदत्तः' इत्यादौ लूप्रभृतिधातूनां फल–तद्व्यधिकरणव्यापारोभयबोधतात्पर्येणोच्चरितत्वाभावेन अकर्मकत्वात् केदारादेः गतिबुद्धीत्यनेन कर्मत्वं सिध्यति । 'मातुः स्मर्यते' इत्यादावपि धातोः उभयावाचकत्वादेव भावे लकारः सिध्यति । कालादिभिन्नद्रव्यनिष्ठकर्मसञ्ज्ञाप्रयोजकार्थबोधतात्पर्येणानुच्चरिता धातवोऽकर्मकपदेन गृह्यन्ते इति निष्कृष्टोऽर्थः । यद्वा, सर्वत्र फलस्य व्यापारे कर्मत्वेनान्वयात् तदुभयबोधका धातवः कर्मविशेषानन्वयमात्रेण अकर्मकपदेन न गृह्यन्ते इत्यर्थः । इत्थं च कर्मणः कर्तृत्वविवक्षायां फलस्य व्यापारे कर्मत्वेनानन्वयात् , 'मातुः स्मर्यते' इत्यादौ समभिव्याहृतपदार्थस्य धात्वर्थे सम्बन्धित्वेन अन्वयविवक्षायां च फलस्य कर्मत्वेनान्वयानङ्गीकारात् कर्मत्वेन कर्मान्वय्यर्थबोधकत्वाभाववत्त्वरूपाकर्मकत्वस्य सुवचत्वेन केदारादेः कर्मत्वं, स्मर्यते इत्यादौ भावे लकारश्च सिध्यतः । देवदत्तेन पाचयतीत्यादौ तु विक्लित्त्यादिरूपकर्मणो व्यापारे कर्मत्वेनान्वयात् नाकर्मकत्वमिति न तत्र कर्मत्वं प्रसज्यते । धात्वन्तराविशेषणीभूताकर्मकपदस्य एतादृशार्थकत्वेऽपि तद्विशेषणीभूताकर्मकपदस्य अविवक्षितकर्मार्थकत्वं भवत्येवेति न शुद्धस्यादिभ्योऽकर्मकेभ्य आत्मनेपदविधानासङ्गतिरित्यलमित्याहुः ।

नन्वानुपूर्व्यैक्येन शब्दैक्याद् व्यापारमात्राद्यर्थपचाद्यपेक्षया फलव्यापारोभयार्थक-

क्षितकर्मकेभ्यः 'कृतपूर्वी कटम्' इत्यादौ **भाष्यकृता कैयटेन** चाङ्गीकारात् । लुनातेर्निवृत्तप्रेषणाण्णिचि 'लावयति केदारं देवदत्तः' इत्यादौ केदारस्य कर्मद्वितीयान्तस्य "णेरणौ" (पा०सू० १।३।६१) इत्यत्र **कैयटेन** प्रयोगाच्च । न चात्रार्थान्तरे वृत्त्याऽकर्मकत्वं, न त्वविवक्षयेति वाच्यम् । तत्त्वप्रत्यभिज्ञयाऽर्थान्तरत्वाभावात् । तदुदाहरणं तु स्यदन्ते इत्याद्यर्थकं 'नदी वहति' इत्याद्याकरे स्पष्टम् । "अधीगर्थ" (पा०सू० २।३।५२) इति सूत्रे कर्मणः शेषत्वविवक्षयाऽकर्मकत्वे 'मातुः स्मर्यते' इत्यत्र भावे लस्य **भाष्ये** उदाहृतत्वाच्च ।

**यत्तु** प्रकृतसूत्रे **भाष्ये** "कालकर्मणामुपसङ्ख्यानं कर्त्तव्यम् । न कर्त्तव्यम् । न च केचित्कालभावाध्वभिरकर्मकाः, त एवं विज्ञास्यामः—क्वचिद्येऽकर्मका इति" इत्युक्तम् । क्वचिदित्यस्य कालादेः कर्मसञ्ज्ञाप्रयोजकव्याप्त्यादिरहितेऽर्थे इत्यर्थः । तस्यायं भावः—उक्तरीत्याऽकर्मकपदसामर्थ्यादत्र शास्त्रेऽकर्मकपदस्यावस्थान्तरे कर्मरहिताः इत्यर्थ इति । तादृशत्वञ्च सर्वथा द्रव्यकर्माभावात्तदविवक्षणाद्वेत्युभयविधमपि कृतपूर्वीत्यादिभाष्याद्ग्राह्यं, विनिगमनाविरहाच्च । अत एवाकर्मकाधिकारे श्रुदृश्यादिभ्य आत्मनेपदविधानं सङ्गच्छते । अकर्मकशब्दे च धातुरेवान्यपदार्थः । (१)अर्थभेदेन च शब्दभेदः । कर्मत्वेन कालाद्यतिरिक्तकर्मानन्वय्यर्थकत्वञ्च तत्त्वमिति बोद्धव्यम् । 'न च केचित्' इति **भाष्येण** धातुमात्रस्य कालकर्मकार्थवृत्तित्वमिति दर्शितम् । यद्वा "यत्कर्म भवति न च भवति तेनाकर्मकाणां, न चैतत्कर्म क्वचिदपि न भवति" इति **भाष्यो**क्तपक्षान्तरेण तत्सामर्थ्याद् व्यभिचारिद्रव्यकर्मरहितेत्यर्थो बोधितः । एवञ्च मासादिप्रयोगेऽपि तदवस्थायामेवाकर्मकत्वं बोध्यम् । एतेनात्र सूत्रे "न च केचित्" इति प्रतीकमुपादाय "कालादेरविवक्षया तैरकर्मकत्वसम्भवोऽस्त्येव" इत्याशङ्क्य "अत्यन्ताविद्यमानकर्मकाणामेवात्र शास्त्रेऽकर्मकपदेन ग्रहणम् , अन्यथा पचादी-

---

पचादेरभिन्नतया "पाचयति देवदत्तं यज्ञदत्तः" इत्यादाविव "पाचयत्योदनं देवदत्तेन यज्ञदत्तः" इत्यादावपि कर्मसञ्ज्ञापत्तिः, पचादिधातोरेवाकर्मकपदरूपबहुव्रीहावन्यपदार्थत्वादत आह—(१)अर्थभेदेन च शब्दभेद इति ।

नामविवक्षितकर्मत्वे लादयः स्युः" इति **कैयटे**नोक्तं, तत्परास्तम्। अति-प्रसङ्गस्त्वनभिधानाद्वारणीय इति वदन्ति।

**हृक्रोरन्य** (पा०सू० १।४।५३)। तत्राभ्यवपूर्वस्य हरतेर्भक्षणार्थ-त्वाद्विकारार्थकरोतेश्चाकर्मकत्वात्प्राप्ते, अर्थान्तरे चाप्राप्ते उभयत्र विभाषेयम्।

(१)(**अभिवादिदृ**)। हेतुमण्ण्यन्तस्याभिवादेः (२)दृशिप्रकृतिक-ण्यन्तस्य चेत्यर्थः॥

**अधिशीङ्** (पा०सू० १।४।४६)॥ आधार इत्यनुवर्त्तते। तस्यैव कर्मत्वशक्तिमत्ताऽनेन बोध्यते॥

**अभिनिविश** (पा०सू० १।४।४७)॥ (३)व्याख्यानाद् 'अभि-नि' इति द्वन्द्वे तत्पूर्वो विशिति समासः। अभिनिवेशः—आग्रहः। सन्मार्ग-विषयकाऽऽग्रहवानित्यर्थः। **व्यवस्थितेति**। "परिक्रियण" (पा०सू० १।४।४४) इत्यतोऽन्यतरस्याङ्ग्रहणानुवृत्तेरस्य (४)वैकल्पिकत्वम्। (५)अतिप्रसङ्गस्त्वनभिधानाद्वारणीयः। एतच्च "एष्वर्थेष्वभिनिविष्टानाम्" इति प्रतीके समर्थसूत्रे **कैयटे**।

परे त्वेतद्भाष्यप्रयोगाद् '(६)अभिनिविश्' इत्यानुपूर्व्या अविकृताया

---

(१) वार्त्तिकप्रतीकमिदमित्यवधेयम्। (२)**दृशिप्रकृतिकेति**। दृशिप्रकृतिको यो णिस्तदन्तस्येत्यर्थः।

**अभिनि** (पा०सू० १।४।४७)। सङ्घातग्रहणे प्रमाणमाह-(३)**व्याख्यानादिति**। व्याख्याने च अल्पाचो नेः पूर्वनिपाते कर्तव्येऽभेः पूर्वनिपातकरणरूपं मनोरमायामुक्तम्।

(४)**वैकल्पिकत्वमिति**। व्यवस्थितविभाषाश्रयणं तु नैव शक्यम्। "देवत्रातः" इत्यादावेव तदाश्रयणस्य सिद्धान्तितत्वात्। अस्य वैकल्पिकत्वे पक्षे सन्मार्गे इति सप्तमी स्यादित्यत आह-(५)**अतिप्रसङ्गस्त्वनभिधानादिति**। (६)**अभिनिविश्' इत्यानुपूर्व्या अविकृताया इति**। तेन 'क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते, इत्यपि सिद्धम्। अभेरकारस्य पूर्वरूपेण विकृतत्वादिति। "चैत्रोऽभिनिविशते सन्मार्गम्" इत्यादि तु नैवेष्यते। यद्वा "अपवादविषये" इति व्यधिकरणबहुव्रीहिणाऽपवादीयोद्देश्यतावच्छेदकावच्छिन्नघटितलक्ष्यपरम्। अध्याहृतं चापरम् अपवादविषयम्। इति द्वितीयान्तम् अपवादीयोद्देश्यतावच्छेदकावच्छिन्नपरम्। ततश्चायमर्थो भवति—अपवादविषयघटितलक्ष्येऽपवादविषयमुत्सर्गोऽभिनिविशत इति। तथा च सप्तम्यन्तार्थस्य द्वितीयान्तार्थे एवान्वयेन अभिनिवेशेऽन्वयात् कर्मत्वातिप्रसङ्ग इति भावः।

यत्र श्रवणं तत्रैवैतत्सूत्रप्रवृत्तिः, अन्यतरस्याङ्ग्रहणानुवृत्तौ व्यवस्थितविभाषाश्रयणे च न मानमित्याहुः ॥

**उपान्वध्याङ्वसः** (पा०सू० १।४।४८) । अलुग्विकरणत्वाद् भ्वादेरेव ग्रहणमित्याह—**वसतेरिति । भाष्ये** 'अश्यर्थस्य न' इत्युक्तम् । 'मशकार्थो धूमः' इतिवदाशिनिवृत्त्यर्थस्येति तदर्थः, तत्फलितमाह—**अभुक्त्यर्थस्य नेति ।** 'उपोष्य रजनीमेकाम्' इत्यादौ "कालाध्वनोः" (पा०सू० २।३।५) इति द्वितीया । 'ग्रामे उपवसति' इत्यत्र 'ग्रामे वसन् त्रिरात्रमुपवसति' इत्यर्थ इतीदं न कार्यमिति **भाष्ये** स्पष्टम् ।

उपपदविभक्तिमाह—**उभेति ।** उपपदविभक्तीनां सम्बन्धोऽर्थः । विशिष्यानुक्तेः, षष्ठ्यपवादत्वाच्च । उभसर्वयोस्तसाविति विग्रहः । उभांशे उभयशब्दनिष्ठं प्रकृतित्वमुभशब्दे आरोप्य तत्प्रकृतिकत्वं षष्ठ्यर्थः । उभयशब्दसर्वशब्दप्रकृतिकतसन्तयोगे इत्यर्थः । **आम्रेडितान्तेष्विति ।** कृतद्विर्वचनेष्वित्यर्थः । **धिक् कृष्णेति ।** (१)धिगर्थो निन्दा । कृष्णाभक्तसम्बन्धिनी निन्देत्यर्थः । उपर्यादीनां समीपोर्ध्वदेशादिवृत्तित्वमर्थः । अभितः परित इत्यत्र "पर्यभिभ्यां च" (पा०सू० ५।३।९) इति तसिल् । तत्राद्यस्योभयत इत्यर्थोऽन्त्यस्य सर्वत इत्यर्थ इति "पर्यभिभ्याञ्च" (पा०सू०५।३।९) इत्यत्र **भाष्ये** ।

(२)**अन्तराऽन्तरेण** (पा०सू० २।३।४) ॥ अन्तरेणेत्यटाबन्त-

---

(१)**धिगर्थो निन्देति ।** 'कृष्णं धिक् करोति' इत्यादौ धिक्शब्देन तस्या एव प्रतीतेः । निन्दा च खेदजनकः 'त्वं निन्दितः' इत्याद्यभिलापादिरूपो व्यापारः ।

(२)**अन्तरान्तरेण युक्ते** (पा०सू० २।३।४)। द्वन्द्वनिर्देशे 'घटपटाः सुन्दराः' इत्यादौ सर्वत्र समभिव्याहृतसुन्दरादिपदार्थस्य घटे पटे च प्रत्येकं सम्बन्धप्रतीतेः, तथाऽन्वयतात्पर्याभावे एकधर्मावच्छिन्नेऽन्वयाभावेन सहविवक्षाया अभावाद् द्वन्द्वानुपपत्तेश्च अन्तरा, अन्तरेणेत्युभाभ्यां युक्तपदार्थेन सम्बन्धात् अन्तरायुक्ते अन्तरेण युक्ते च द्वितीया स्यादित्यर्थः । ननु

पतिपुत्रवती नारी भर्तुरग्रे मृता यदि ।
वृषोत्सर्गं न कुर्वीत गां च दद्यात् पयस्विनीम् ॥

इत्यादौ द्वन्द्वनिर्देशे साहित्यस्य अन्वयितावच्छेदकत्वेन बोधविषयत्वात् पति-

साहचर्यादन्तरेत्यटाबन्तम्, अन्तरेत्यतृतीयान्तसाहचर्यादन्तरेणेत्यतृतीयान्तम्। **साहचर्यं**—सादृश्यम्। "तद्यथा अस्य गोर्द्वितीयेनार्थ इति गौरेवानीयते नाश्वो न गर्दभः" इति दृष्टान्तपरभाष्येण सदृशानामेव प्रयोगे सहायतेत्यर्थस्य प्रतिपादनात्। तेन 'किमनयोरन्तरेण ज्ञातेन' इति (१)सिद्धम्। **अन्तरेण**—विशेषेणेत्यर्थः। एवञ्चैतयोरव्यययोरेव ग्रहणम्। यद्वा अन्तराशब्दस्य प्रथमैकवचनान्तस्यानभिधानाद् 'अन्तरा इत्यानुपूर्वीकमव्ययमेव प्रयोगेषु दृश्यते इति तत्साहचर्यादन्तरेणेत्यप्यव्ययमेव। तदुक्तं **भाष्ये** "अन्तराशब्दोऽयमदृष्टापचारो निपात एवेति" इति बोद्धयम्। अवधित्वरूपः सम्बन्धो मध्यत्वान्वयी मद्ध्यार्थान्तराशब्दयोगे द्वितीयार्थः। तस्यैव (२)सम्बन्धत्वेन बोधे षष्ठी। हर्यादिपदात्तु न द्वितीया, "उपपद-

---

पुत्रोभयविशिष्टाया मरणे एव वृषोत्सर्गानुष्ठानं शास्त्रार्थः, ननु अन्यतरयुक्ताया मरणे इति प्रकृतेऽपि उभाभ्यां योगे एव द्वितीयायाः साधुत्वबोधनेन प्रत्येकयोगे साधुत्वं न स्यात्। एवं "नमः स्वस्ति" (पा०सू० २।३।१६) इति चतुर्थ्या अपि इति चेद्, न। सति तात्पर्ये एव विशेषणतयोपस्थितधर्मस्य अन्वयितावच्छेदकत्वेन बोधविषयत्वाङ्गीकारात्। अत एव "यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः" इति वैशेषिकसूत्रे साहित्यस्य न तत्त्वमिति अभ्युदयसाधकस्य, निश्श्रेयससाधकस्य च प्रत्येकं धर्मत्वमुपपद्यते। एवमेव "उद्यतासिविषाग्निश्च" इत्यादौ प्रत्येकम् आततायित्वम्, "मातापितृगुरुमरणे वपनं कुर्यात्" इत्यादौ प्रत्येकमरणे वपनम् "आश्विनीपुनर्वसुपुष्येषु यात्रां कुर्यात्" इत्यादौ प्रत्येकं यात्रानुष्ठानं चेत्यादिकमुपपादनीयम्। 'गर्गाः शतं दण्ड्यन्ताम्' इत्यादौ तु बहुत्वस्य तत्त्वेन विवक्षितत्वात् न प्रत्येकं दण्डनान्वयः। तात्पर्यविशेषेण च अनयोर्व्यवस्था। तात्पर्यग्राहकं च प्रकरणादिकमेव। स्पष्टं चेदं प्रातिपदिकार्थसूत्रे भाष्ये इति दिक्।

**(१)सिद्धमिति**। अनव्ययस्यान्तरेणेत्यस्य योगे द्वितीयाया अप्राप्त्या अनयोरिति षष्ठी सिद्धेत्यर्थः।

**(२)सम्बन्धत्वेन बोधे इति**। "चतुर्थीतदर्थ" (पा०सू० २।१।३६) इति सूत्रे भाष्ये गुरोरिदं गुर्वर्थमित्यत्र तादर्थ्यस्य सम्बन्धत्वेन विवक्षायां षष्ठ्युक्तेः विशेषविवक्षायामेव षष्ठ्यपवादभूतविभक्तीनां साधुत्वं बोध्यते। तेन 'तव मम चान्तरा कमण्डलुः' इत्यत्र त्वन्मत्सम्बन्धिमध्ये कमण्डलुरित्यर्थविवक्षया षष्ठी सिध्यति। एतेन तव ममेत्यनयोः कमण्डलुरित्यनेनान्वयविवक्षया षष्ठ्युपपादनम्, 'युक्तग्रहणात् अवधित्वस्य सम्बन्धत्वेन बोधे षष्ठी न, तेन अविद्यमाना अन्तरा येषाम्, द्वयोश्चैवान्तरा,

विभक्तेः" (प०भा०) इति न्यायेन तत्र प्रथमाया एव प्राप्तेः । (१)युक्तग्रहणन्तु स्पष्टार्थम् ।

**अधिकृत्येति ।** "विभाषा कृञि" (पा०सू० १।४।९८) इत्यन्तमिति बोद्धव्यम् । महासञ्ज्ञाकरणन्त्वन्वर्थत्वाय । कर्म—क्रियां प्रोक्तवन्तः कर्मप्रवचनीयाः । बाहुलकात् कर्तरि भूते अनीयः । तेन सम्प्रति (२)क्रियां न द्योतयन्ति किन्तु क्रियानिरूपितं सम्बन्धविशेषं (३)द्योतयन्ति । क्वचित्सम्बन्धविशेषाद्योतकेऽपि वचनसामर्थ्यात्संज्ञा, यथा—"अधिपरी अनर्थकौ" "सुः पूजायाम्" इति च । (४)निपातसञ्ज्ञासमावेशस्त्वस्या अप्युक्तः ।

**लक्षणे इति ।** तत्सम्बन्धे लक्ष्यलक्षणभावरूपेऽनुना द्योत्ये इत्यर्थः ।

**अपवाद इति ।** (५)तद्द्योत्यसम्बन्धस्य क्रियान्वयात्तयोः प्राप्तिः । तेन प्रकृते "गतिर्गतौ" (पा०सू० ८।१।७०) इति निघातो न । द्वितीयार्थो लक्ष्यलक्षणभावः सम्बन्धो, हेतुश्च अनुना द्योत्यते । लक्षणत्वञ्च ज्ञानजनकज्ञानविषयत्वम् । (६)जपज्ञानेन हि कालविशेषविशिष्टा वृष्टिर्ज्ञाप्यते । जपाभिन्नहेतुज्ञानजन्यज्ञानविषयो वर्षणमिति बोध इत्याह—**हेतुभूतेति । पराऽपीति ।** (७)कर्मप्रवचनीयसञ्ज्ञावकाशो हेतुत्वाविवक्षायां,

---

तव मम चान्तरा कमण्डलुरित्यादिप्रयोगा उपपद्यन्ते' इति **कैयटोक्तं** चापास्तम् । तद् ध्वनयन्नाह-**(१)युक्तग्रहणं तु स्पष्टार्थमिति ।**

**(२)क्रियां**—क्रियाविशेषणम् । **(३)द्योतयन्ति**—इत्यर्थो लभ्यते इति शेषः । **(४)निपातसंज्ञासमावेश इति ।** "प्राग्रीश्वरान्निपाताः" (पा०सू० १।४।५६) इत्यस्य "अधिरीश्वरे" (पा०सू० १।४।९७) इत्यभिव्याप्य प्राङ् निपातसंज्ञाः सन्तो गत्यादिसंज्ञाः" इत्यर्थात् । तेन कर्मप्रवचनीयानामव्ययत्वं सिध्यतीति भावः ।

**(५)तद्द्योत्यसम्बन्धस्य क्रियान्वयादिति ।** अत्रत्यं तत्त्वम् "उपसर्गाः क्रियायोगे" (पा०सू० १।४।५९) इत्यत्रोक्तम् । **(६)जपज्ञानेन हि कालविशेषविशिष्टेति ।** अत एव कदा वृष्टिरभूत् इति प्रश्ने 'जपमनु प्रावर्षत्' इत्युत्तरं सङ्गच्छते । तेन जपकालज्ञानद्वारा तदुत्तरकाला वृष्टिर्ज्ञाप्यते इत्यर्थः । पूर्वं वृष्टिज्ञानसत्त्वेऽपि तत्कालज्ञानाभावात् कालविशेषविशिष्टत्वेन वृष्टिज्ञानं हेतुभूतजपज्ञानेन तत्कालज्ञानद्वारा जन्यते । कार्यकालस्य कारणकालोत्तरत्वात् । वृष्टेश्च जपकार्यत्वात् । ततश्च वृष्टेः ज्ञानजनकज्ञानविषयत्वरूपं लक्षणत्वं हेतुभूते जपे उपपद्यते इति भावः । **(७)कर्मप्रवचनीयसंज्ञावकाश इति ।** "लक्षणेत्थंभूत" (पा०सू० १।

हेतुतृतीयावकाशो 'धनेन कुलम्' इति, प्रकृते च हेतुत्वाविवक्षायां परत्वात्तृतीयाप्राप्तिरिति भावः। **पुनःसञ्ज्ञेति**। "लक्षणेत्थंभूत" (पा०सू० १।४।९०) इत्येव सिद्धे पुनःसञ्ज्ञाकरणबोधितपुनर्द्वितीयाविधानसामर्थ्यादित्यर्थः। एतेन सञ्ज्ञाया विजातीयत्वाद्विभक्तिबाधः कर्तुमशक्य इति परास्तम्। (१)स्पष्टञ्चेदं **भाष्ये**॥

---

४।९०) इत्यनेन विहितकर्मप्रवचनीयसंज्ञावकाश इत्यर्थः। **(१)स्पष्टञ्चेदं भाष्ये इति**। इत्थं हि तत्र भाष्यम्—"लक्षणेत्थंभूतेत्यनेन अनोः कर्मप्रवचनीयसंज्ञायां सिद्धायां हेत्वर्थमिदं वक्तव्यम्। हेतुः शाकल्यस्य संहिता वर्षस्य, न लक्षणम्। लक्षणं हि नाम स भवति, येन पुनः पुनर्लक्ष्यते, न यः सकृदपि निमित्तत्वाय कल्पते। सकृच्चासौ शाकल्येन सुकृतां संहितामनुनिशम्य देवः प्रावर्षत्" इति। न च व्याप्यत्वसमनियतलक्षणत्वस्य हेतौ अभावात् हेतुत्वविवक्षायां कथम् "अनुर्लक्षणे" (पा०सू० १।४।८४) इत्यनेन कर्मप्रवचनीयसंज्ञेति वाच्यम्। "न ह्यवश्यं तदेव लक्षणं भवति येन पुनः पुनर्लक्ष्यते। किन्तर्हि? यत्सकृदपि निमित्तत्वाय कल्पते। तद्यथा—अपि भवान् कमण्डलुपाणिं छात्रमद्राक्षीत्। सकृदसौ कमण्डलुपाणिश्छात्रो दृष्टस्तस्य तदेव लक्षणम्" इति भाष्येण प्रकृते वह्न्यादिव्याप्यधूमादिगवाद्यसाधारणसास्नादिमत्त्वादि-विशेषणभूतकमण्डलुत्वादिसाधारणस्य ज्ञानजनकज्ञानविषयत्वरूपलक्षणत्वस्याश्रयणेन तस्य च अव्याप्येऽपि "लताप्रतानोद्ग्रथितैः स केशैः" इत्यादौ विशिष्टज्ञानकारणज्ञानविषयविशेषणभूते केशादौ "इत्थम्भूतलक्षणे" (पा०सू० २।३।२१) इति विहिततृतीयान्तप्रयोगे दर्शनेन प्रकृते हेतुभूतजपादावपि सम्भवात् लक्षणेत्वेनैव उक्तसंज्ञायाः सुवचत्वात्। न चैवं सति "लक्षणेत्थम्" (पा०सू० १।४।९०) इत्यनेन गतार्थत्वं शङ्कनीयम्। असति प्रकृतसूत्रे हेतुत्वाविवक्षायां लक्षणेत्थमित्यस्य 'वृक्षमनु विद्योतते विद्युत्' इत्यादौ द्वितीयार्थे चरितार्थतया हेतुत्वविवक्षायां परत्वात्तृतीयया बाधापत्तेः। न च निघाताद्यभावार्थमस्यावश्यकत्वम्। निशमनादिक्रियां प्रत्येव तस्य योगेन प्रवर्षणादिक्रियां प्रति योगाभावादेव तदप्राप्तेः। हेत्वर्थं तु वचनमिति भाष्यात्तु हेतुत्वमपि अनुद्योत्यं द्वितीयार्थ इति सूचितम् इत्यलम्।

**गदाधरभट्टाचार्यास्तु**—"अनुर्लक्षणे" (पा०सू० १।४।८४) इत्यत्र लक्षणशब्दस्य हेतुपरत्वात् हेतुत्वं, तन्निरूपकत्वं वा द्वितीयार्थः। "लक्षणेत्थंभूत" (पा०सू० १।४।९०) इत्यत्र तु परिचायकत्वरूपं लक्षणत्वं लक्षणशब्दार्थ इति न तेनास्य गतार्थता। 'जपमनु प्रावर्षत्' इति वाक्येन वृष्टौ जपहेतुकत्वज्ञाने 'इयं वृष्टिः जपोत्तरकालिकी जपहेतुकत्वात्' इत्यनुमानेन कालविशेषविशिष्टत्वेन वृष्टेर्ज्ञाने हेतुभूतजपे वृष्टिलक्षणत्वं फलति, न तु तत्र तल्लक्षणत्वं शब्दगम्यमित्याहुः।

**तृतीयार्थे** (पा०सू० १।४।८५) ॥ तृतीयाशब्देन तन्निमित्तशब्दः "सहयुक्ते" (पा०सू० २।३।१९) इत्यत्रोपात्तो(१)ऽनन्तरत्वात् सहशब्दो लक्ष्यते । तदर्थे (२)साहित्ये द्योत्ये इत्यर्थः । साहित्यरूपः सम्बन्धोऽनुद्योत्यो द्वितीयार्थस्तदाह—**नद्येति** । **क्त इति** । कर्तरीति भावः ॥

**उपोऽधिके च** (पा०सू० १।४।८७) ॥ चाद्धीने । **सप्तमीति** । "यस्मादधिकम्" (पा०सू० २।३।९) (३)इत्यनेनेति भावः । (४)उपखार्यां द्रोण इति यथा । (५)खार्यपेक्षयाऽधिकत्ववान् द्रोण इत्यर्थः । (६)तेनोभयमस्तीति फलति ।

इत्थंभूतः—कञ्चित्प्रकारं प्राप्तः, स आख्यायतेऽनेनेति इत्थंभूताख्यानं—प्रकारविशेषनिरूपकम् । भागशब्देनार्शआद्यजन्तेन तत्स्वामी उच्यते । वीप्साया द्विर्वचनविशिष्टवृक्षशब्दबोध्यत्वादाह—**विषयभूतेष्विति** । **वृक्षं प्रतीति** । वृक्षप्रकाशेन विद्युद्विद्योतदेशज्ञानात् वृक्षो लक्षणम् । **वृक्षं वृक्षमिति** । वृक्षस्य व्यापकतासम्बन्धेनान्वयो यद्यपि द्विर्वचनबलादेव, तथापि प्रत्यादिसत्त्वे सोऽपि तन्निर्णायक इति सम्बन्धपरिच्छेदकत्वं

---

(१)**अनन्तरत्वादिति** । "कर्तृकरणयोस्तृतीया" (पा०सू० २।३।१८) "सहयुक्तेऽप्रधाने" (पा०सू० २।३।१९) इति सूत्रपाठादिति भावः । (२)**साहित्ये द्योत्ये इति** । नचैवं सति "सहार्थे" इत्येव लाघवात् सूत्र्यतामिति वाच्यम् । तृतीयानिमित्तभूतसमानकालिकक्रियादिमत्त्वरूपसहार्थद्योतकस्यैव कर्मप्रवचनीयसंज्ञा यथा स्यादित्येतदर्थं तथा सूत्रणात् । तेन सहार्थसादृश्यद्योतकस्यानोर्न संज्ञा ।

(३)**इत्यनेनेतीति** । 'उपपरार्धे हरेर्गुणाः' इत्यादौ । उदाहरणान्तरमप्याह—(४)**उपखार्यां द्रोण इति** । (५)**खार्यपेक्षयाऽधिकत्ववानिति** । ननु द्रोणस्य "खारी द्रोणचतुष्टयम्" इत्यादिपरिभाषया खार्यपेक्षया न्यूनत्वात् कथमधिकत्वमित्याशङ्क्याह—(६)**तेनोभयमिति** । द्रोणादिशब्दानां तत्परिच्छेद्यधान्ये वृत्तेः खारीपरिच्छेद्यधान्यापेक्षया द्रोणपरिच्छेद्यधान्यमत्राधिकं वर्तते इत्युक्ते द्रोणमात्रस्य तदधिकत्वासम्भवात् तदध्यारूढमन्यद् वर्तते इत्यर्थात् उभयमस्तीति फलतीति भावः । आधिक्ये 'उपसुरान् हरिः' इति द्वितीयाया उदाहरणं बोध्यम् ।

वृक्षं वृक्षं प्रति सिञ्चतीत्यादौ द्वितीयायाः "कर्मणि द्वितीया" (पा०सू० २।३।२) इत्यनेनैव सिद्धत्वात् षत्वाभाव एवात्र कर्मप्रवचनीयसंज्ञाफलमिति प्राचीनमतं खण्ड-

बोध्यम्। (१)वृक्षादीनां सेचने कर्मत्वेऽपि तत्त्वेनाविवक्षायामनेन द्वितीया। (२)किञ्च यद्यत्र कर्मणि द्वितीया स्यात्तदा प्रतिना सामर्थ्याभावात्प्रतिवृक्षमितिसमासानापत्तिः। (३)किञ्च प्रत्यादेः। (४)क्रियाविशेषकत्वेऽन्वर्थतया कर्मप्रवचनीयसञ्ज्ञाया एवानापत्तिः। (५)अत एव **भाष्ये** "किमर्थं पुनरिदमुच्यते ? न चोपसर्गसञ्ज्ञाबाधनार्थं, क्रियायोगाभावात्" इत्युक्त्वा "द्वितीयार्थम्" इति सिद्धान्तितम्। (६)अत एव 'प्रत्यर्थं शब्दनिवेशः'

---

यितुमाह—(१)**वृक्षादीनां सेचने इति**। अत्र कर्मणि द्वितीयायां दूषणमप्याह—(२)**किञ्च यद्यत्रेति**। दूषणान्तरमप्याह-(३)**किञ्च प्रत्यादेरिति**। (४)**क्रियाविशेषकत्वे इति**। क्रियाविशेषविषयकतात्पर्यग्राहकत्वे इत्यर्थः। अन्वर्थतया कर्मप्रवचनीयसंज्ञाया एवानापत्तिः। पूर्वं क्रियां प्रोक्तवन्त इति व्युत्पत्त्या सम्प्रति क्रियाविशेषद्योतकस्यैव कर्मप्रवचनीयसंज्ञालाभादिति भावः। अत्र कर्मप्रवचनीयत्वादेव द्वितीयेत्यत्र भाष्यसम्मतिमाह—(५)**अत एव भाष्ये किमर्थमिति**। भाष्यान्तरस्थप्रयोगमपि प्रमाणतयोपन्यस्यति—(६)**अत एव प्रत्यर्थमिति**।

**परे** तु अत्र "कर्मणि द्वितीया" (पा०सू० २।३।२) इत्यनेनैव द्वितीया। "उपपदविभक्तेः" इति न्यायात्। कर्मत्वाविवक्षा तु कर्तुमशक्या। तथा सति द्वित्वस्यैवानापत्तेः। तथा हि-"नित्यवीप्सयोः" (पा०सू० ८।१।४) इति द्वित्वं पदे एव प्रवर्तते। पदं च द्विरुच्चारणीयत्वेन चिकीर्षितनिष्ठपदसंज्ञाप्रयोजकविभक्त्यर्थसम्बन्धावच्छिन्नव्यापकतानिरूपितव्याप्यतावदर्थबोधपरं ग्राह्यम्। अत एव कर्मतासम्बन्धावच्छिन्नव्यापकताया द्विर्वचनेन बुबोधयिषायां 'वृक्षो वृक्षः सिञ्चति' इति न प्रयोगः। कर्मत्वस्य स्वर्थत्वाभावात्। अत एव चैकवृक्षमात्रसेचनेऽपि कालिकादिसम्बन्धेन वृक्षादिव्यापकतायाः सेचने सत्त्वेऽपि 'वृक्षं वृक्षं सिञ्चति' इत्यादयो न प्रयोगाः। एवञ्च यदि कर्मणि द्वितीया विधीयते; तदा द्विरुच्यमानवृक्षपदनिष्ठपदसंज्ञाप्रयोजकामर्थकर्मत्वसम्बन्धावच्छि व्यापकतानिरूपितव्याप्यतावद्वृक्षबोधकस्य वृक्षमित्यस्य प्राग् द्वित्वं, ततश्च तद्व्यापकत्वद्योतकत्वप्रयुक्तैव प्रतेः कर्मप्रवचनीयसंज्ञेति षत्वनिषेधोऽपि सिद्ध्यति। कर्मत्वाविवक्षायां तूक्तरूपव्यापकतानिरूपितव्याप्यतावदर्थबोधकत्वाभावात् पूर्वं द्वित्वं नैव स्यात्। ततःकर्मप्रवचनीयसंज्ञाऽपि न स्यात्। द्वित्वादिसहकारेणैव प्रत्यादिप्रयोगं विनाऽपि 'वृक्षं वृक्षं सिञ्चति' इत्यादितो व्यापकताबोधाद् द्वित्वं विना 'वृक्षं प्रति सिञ्चति' इत्यादितो व्यापकताप्रत्ययाभावेन प्रतेर्व्यापकताद्योतकत्वाभावात्। न च द्वित्वेन प्रत्येतव्यव्यापकताद्योतकत्वप्रयुक्तैव कर्मप्रवचनीयसंज्ञा प्रागेव स्यादिति वाच्यम्। द्वित्वसहकारेणैव व्यापकताद्योतकस्य प्रत्यादेर्द्वित्वादेः प्राग्व्यापकताद्योतकत्वस्याप्रामाणिकत्वात्। कर्मत्वाविवक्षायामपि प्रतेर्व्यापकतार्थकत्वमङ्गीकृत्य वृक्षं वृक्षं

इत्यादावर्थस्य निवेशनक्रियानिरूपिताधिकरणत्वेऽपि 'अर्थमर्थं प्रति' इति विग्रहो **भाष्ये** दर्शितः । वृत्तिविषये प्रतिरेव वीप्साया अपि द्योतक इत्यन्यदित्यास्ताम् । फलान्तरमप्याह—**अत्रेति ।**

**यदत्रेति ।** यद्वस्तु मम भागः स्यादित्यर्थः ।

**कुतोऽधीति ।** कुत इत्यपादाने पञ्चमी । द्वितीया तु न । कर्मप्रवचनीयद्योत्यसम्बन्धप्रतियोगित्वरूपस्य कर्मप्रवचनीययुक्तत्वस्याभावात् । **गतिसञ्ज्ञाबाधादिति ।** धात्वर्थमात्रद्योतकत्वेन क्रियायोगाद्गतित्वं प्राप्तं, विशेषद्योतकत्वाभावात्त्वनर्थकत्वव्यवहारोऽपीति भावः ।

**सुसिक्तमिति ।** सेकगतपूज्यत्वद्योतकः सुः । क्रियापूज्यत्वकृते तत्तत्क्रियाकर्तुः पूज्यत्वे गम्ये एवैषा सञ्ज्ञा । अत एव (१)सुषिक्तं किं तव' इत्यत्र न ।

---

प्रतिसिञ्चतीत्यादौ "कर्मप्रवचनीययुक्ते द्वितीया" (पा०सू० २।३।८) इति द्वितीयाऽङ्गीकारे तु 'वृक्षो वृक्षः प्रतिसिच्यते' इत्यादावपि द्वितीयापत्तिः । अस्माकं तु लकारेण कर्मत्वस्याभिधानान्न दोषः ।

यदप्युक्तं प्रतिवृक्षमित्यादौ समासानापत्तिरिति, तदपि न । वाचकाव्ययैरेव अव्ययीभावसमासस्य "अव्ययं विभक्ति" (पा०सू० २।१।६) इति सूत्रे **भाष्यकैयटयोः** शेखरे च व्यवस्थापितत्वात् तत्र अव्ययीभावार्थं प्रतेः व्यापकतावाचकत्वस्यैव अङ्गीकारेण तदर्थव्यापकतायां वृक्षादिपदार्थान्वयेनैकार्थीभावोपपत्तेः । विग्रहप्रदर्शनं तु व्यापकत्वबोधसाम्येनैव । यदप्युक्तं किञ्च प्रत्यादेरित्यादि, तदपि न । पूर्वकालिकक्रियाविशेषकत्वमात्रस्यैवान्वर्थताबललभ्यत्वेन विरोधाभावात् । यदप्युक्तम्—अत एव **भाष्ये** किमर्थं पुनरित्यादि, तदपि न । तद्भाष्यस्य 'वृक्षं प्रति विद्योतते विद्युत्' इत्याद्युदाहरणपरत्वात् । 'अर्थमर्थं प्रति शब्दो निविशते' इत्यादौ तु सत्तानुकूलव्यापारो निविशधात्वर्थः । प्रकारतारूपार्थपदार्थान्वयि चात्र सत्तारूपं फलम् । फलतावच्छेदकसम्बन्धश्च प्रयोज्यत्वम् । तथा च तादात्म्यसम्बन्धावच्छिन्न-प्रकारतानिष्ठव्याप्यता-निरूपित—प्रयोज्यत्वसम्बन्धावच्छिन्नफलभूतसत्ताश्रयत्वरूपकर्मत्वसम्बन्धावच्छिन्नव्यापकता द्विर्वचनद्योत्या शब्दनिष्ठसत्तानुकूलव्यापारान्वयिनीति तत्रापि "कर्तुरीप्सिततमम्" (पा०सू० १।४।४९) इति कर्मत्वात् "कर्मणि द्वितीया" (पा०सू० २।३।२) इत्यनेनैव द्वितीयेति बोध्यमिति प्राहुः ।

(१)**सुषिक्तं किं तवेत्यत्रेति ।** पूज्यसेकः किं त्वत्कर्तृक इत्याक्षेपात् सेककर्तुः

अतिक्रमणम्-उचितादधिकानुष्ठानम् । चात् पूजायामित्यनुकृष्यते । **अतिदेवानिति ।** देवेभ्योऽधिको देवपूज्य इति वाऽर्थः । द्वितीये "कुगति" (पा०सू० २।२।१८) इति समासस्याभावस्तु अनभिधानात् । आद्ये तु प्राप्तिरेव न, "स्वती पूजायामेव" इत्युक्तेः ॥

**अपिः पदार्थ** (पा०सू० १।४।९६) । पदस्य—अप्रयुज्यमानपदान्तरस्य अर्थः—पदार्थः । **सर्पिषोऽपीति** । अत्र बिन्दुरित्यादेः पदस्यार्थोऽपिद्योत्यः तदुक्तं वृत्तिकृता—"मात्रा बिन्दुः स्तोकमित्यस्यार्थेऽपिर्वर्तते" इति । **सम्भावनायां लिङिति ।** "उपसंवादाशङ्कयोश्च" (पा० सू० ३।४।८) इतिसूत्र**भाष्ये** पठितेन "उपसंवादाशङ्कयोर्लिङ्" इत्यनेन । तच्च लोकसाधारणमित्यपि तत्रैव **भाष्ये** स्पष्टम् । तत्राऽऽशङ्का—उत्प्रेक्षा । सम्भावनाऽप्युत्कटकोटिका शङ्कैवेति भावः । कर्मप्रवचनीयत्वात्तद्द्योत्यसम्बन्धमाह—**तस्या एवेति ।** सम्भावनाया एवेत्यर्थः । कर्तृदौर्लभ्यमिति षष्ठीतत्पुरुषः । कर्तृपदं प्रकृताभिप्रायम् । सर्पिषोऽपि पिबेदित्यादौ कर्मदौर्लभ्येत्यादि बोध्यम् । तत्र बिन्दोस्तद्दौर्लभ्यप्रयुक्तदौर्लभ्यसम्बन्धस्य द्योतकोऽपिः । **सम्बध्यत इति ।** स्यात्पदवाच्यक्रियायामपिद्योत्यबिन्दोः कर्तृतया, द्योत्योक्तसम्बन्धेन चान्वयादिति भावः । तदाह—**अपिशब्दबलेनेत्यादि ।** एवञ्च सर्पिरवयवबिन्दुदौर्लभ्यप्रयुक्तदौर्लभ्यवती तत्कर्तृका (१)सम्भावनाविषयः सत्तेति बोधः । विशिष्टसत्तायाः सम्भावनाविषयत्वबोधे दौर्लभ्यस्यापि सम्भावनाविषयत्वमनुभवसिद्धम् ।

नन्वेवं कर्मप्रवचनीयद्योत्येऽर्थे सर्पिषोऽन्वयेन तस्य कर्मप्रवचनीययुक्त-

---

पूज्यत्वाप्रतीतेरत्र न कर्मप्रवचनीयत्वमिति षत्वं भवत्येवेति भावः । (१)**सम्भावनाविषयः सत्तेति ।** अनेन लिङन्तेऽपि धात्वर्थमुख्यविशेष्यक एव बोध इति बोध्यते । विधावपि यजेतेत्यादौ यागानुकूलो व्यापारः प्रवर्तनासाध्य इति धात्वर्थभावनाविशेष्यक एव बोधः । 'अभिनिविशते सन्मार्गम्' इत्यत्र "सन्मार्गविषयकाग्रहवान् इत्यर्थः इति लेखनं तु फलितार्थपरमेव । नत्वेतावता प्रथमान्तार्थमुख्यविशेष्यकत्वं वैयाकरणाभिमतमिति भ्रमितव्यम् । लघुमञ्जूषादौ स्पष्टतया तत्खण्डनस्योपलम्भादित्यलम् ।

त्वाद् द्वितीया स्यादत आह—**द्वितीया त्विति । न त्वपिनेति ।** बिन्दुना योगेऽप्यपिद्योत्यसम्बन्धेनानन्वय इत्यर्थः । कर्मप्रवचनीयद्योत्यसम्बन्धप्रतियोगित्वमेव तद्युक्तत्वम्, प्रकृते चापिद्योत्यस्योक्तसम्बन्धस्य बिन्दुः प्रतियोगी, न सर्पिरिति भावः । यदा स्पष्टप्रतिपत्तयेऽपिद्योत्यस्यापि बिन्दोः प्रयोगस्तदापि द्वितीयां बाधित्वोपपदविभक्तेरिति (१)प्रथमैव । तत्र कारकविभक्तित्वे क्रियाजनकत्वार्थकविभक्तित्वमिति दिक् ।

सञ्ज्ञाफलमाह—**अनुपसर्गत्वादिति । अपि स्तुयादिति ।** पूर्ववल्लिङ् । (२)क्रियाविषयं शक्यत्वादिना सम्भावनमपिद्योत्यम् । प्रकृतेऽवाङ्मनसगोचरं विष्णुमपि स्तुयादिति शक्त्युत्कर्षाविष्करणम् । अत्युक्तिरसम्भाव्यार्थसम्भावनम् । सम्भावनपदस्येदृशार्थकत्वे व्याख्यानमेव शरणम् । विष्णुविषयायाः शक्यत्वसम्भावने चान्यविषया निश्चयेन शक्या कर्तुमिति फलति । शक्त्युत्कर्षमित्यौचित्योत्कर्षादेरप्युपलक्षणम् । 'अपि वेदान्तपारगं हन्यात्' इत्यादौ हननक्रियायां सम्भावनाविषयौचित्योत्कर्षद्योतनात् । सम्भावितौचित्यस्य चानुष्ठानमयुक्तमिति अस्य स्वार्थे तात्पर्याभावो धर्मशास्त्रोक्तः सङ्गच्छते । कामचारः—इच्छया प्रवृत्तिः । स्तुहि, मा वा; यथेष्टं कुर्विति यावत् । "प्रैषातिसर्ग" (पा०सू० ३।३।१६३) इति लिङ् । **अपि स्तुयात् वृषलमिति ।** "उपसंवाद" (पा०सू० ३।४।८) इतिसूत्रपठितवार्तिकेन परेणान्तरङ्गेण च "गर्हायां लडपि" (पा०सू० ३।३।१४२) इति बाधित्वा सम्भावने लिङ् । क्रियागतं गर्ह्यत्वमपिद्योत्यं वृषलपदसमभिव्याहारात् स्तुतेर्गर्ह्यत्वेन तत्कर्तुर्गर्ह्यत्वं फलति । तदेव धिगित्यादिनाऽनूद्यते । **अपि सिञ्चेत्यादि ।** अपिद्वयेन मिलितेन समुच्चयद्योतनात्प्रत्येकं सञ्ज्ञायामुभयत्रापि षत्वाभावः ।

**कालाध्वनो** (पा०सू० २।३।५) । अत्यन्तसंयोगो—निरन्तरं सम्ब-

---

(१)**प्रथमैवेति ।** नच तस्य प्रयोगे अपिशब्दस्य अविद्यमानपदार्थद्योतकत्वाभावात् कर्मप्रवचनीयसंज्ञा न स्यात्, ततश्च षत्वं स्यादिति वाच्यम् । अविद्यमानपदार्थद्योतकत्वस्योपलक्षणत्वेनादोषात् । (२)**क्रियाविषयमिति ।** 'अपि गिरिं शिरसा

न्धः । स च गुणक्रियाद्रव्यैरभावेन च । तेन मासं भोजनाभाव इत्यादेः संग्रहः । गुणादिभिः कालाध्वनोरत्यन्तसंयोगे प्रत्यासत्त्या कालाध्ववृत्तिभ्यां द्वितीयेत्यर्थः । (१)**मासमधीत इति** । (२)बुद्धिस्थयावदवयवसम्बन्धरूपा व्याप्तिर्द्वितीयार्थः । 'एकादश्यां रात्रौ जागृयात्' इत्यादावधिकरणत्वविवक्षणान्न द्वितीया ।

इति द्वितीया ॥

**स्वतन्त्रः कर्ता** ( पा० सू० १।४।५४ ) ॥ कारकाधिकारात् (३)क्रियाजनने (४)स्वतन्त्र इत्यर्थस्तदाह—**क्रियायामिति** ।

---

भिन्द्यात्' इत्यादौ । (१)**मासमधीत इतीति** । यद्यप्यत्र अध्ययनकरणकव्यापने धातोर्वृत्त्या 'मासमास्ते' इत्यादाविव कर्मत्वेनैव द्वितीया सिद्धा; तथापि 'मासं गुडधानाः, क्रोशं कुटिला नदी' इत्यादौ क्रियायोगाभावात् अप्राप्तद्वितीयाविधानार्थमिदमिति भाष्ये स्पष्टम् । 'मासमासिता' इत्यादौ कृद्योगे षष्ठीबाधनार्थं चेदम् । (२)**बुद्धिस्थयावदवयवसम्बन्धरूपेति** । 'मासमधीते' इत्यादौ मासपदस्य त्रिंशद्दिनकूटपरत्वात् दिनस्य च सूर्योदयावधिसूर्योदयान्तरपर्यन्ताखण्डकालरूपत्वात् बुद्धिस्थदिनरूपावयवेषु सर्वेषु अध्ययनसन्बन्धे तादृशप्रयोगोपपत्तिः । 'मासं स्वपिति' इत्यादौ तु मासघटकदिनपदार्थस्य क्षणकूटात्मकत्वात् न घटिकादिकालावच्छिन्नस्वापमादाय तादृशप्रयोगः । यावदवयवसम्बन्धित्वं च तद्वृत्तिप्रयोगिव्यधिकरणाभावाप्रतियोगित्वम् । तेन दिनरूपावयवे रात्र्यवच्छेदेन अध्ययनाभावेऽपि नानुपपत्तिरिति दिक् । विस्तरस्तु व्युत्पत्तिवादादौ द्रष्टव्यः ।

*** इति द्वितीया ***

**स्वतन्त्रः कर्ता (पा०सू० १।४।५४)** । प्रत्यासत्तिं दर्शयति-(३)**क्रियाजनने इति** । (४)**स्वतन्त्र इति** । स च स्वार्थकारकाप्रयोज्यं यत् स्वार्थनिरूपितकारकत्वं तदाश्रयत्वसम्बन्धेन धातुविशिष्टः । कारकमात्रवृत्तिक्रियाजनकत्वरूपकारकत्वस्य कर्तृरूपतथाविधकारकप्रयोज्यत्वात् नातिप्रसङ्गः । न चैवं सौकर्यादिविवक्षायां "स्थाली पचति" इत्यादौ स्थाल्यादेः कर्तृत्वानापत्तिः, स्थाल्यादिनिष्ठक्रियाजनकत्वस्य चैत्रादिरूपतत्कर्तृप्रयोज्यत्वादिति वाच्यम् । स्वार्थकारकाप्रयोज्यमित्यस्य स्वार्थनिरूपितकारकत्वेन विवक्षिताप्रयोज्यमित्यर्थात् । तदा पाककर्तृत्वेन चैत्रादेरविवक्षितत्वात् । नन्वेवं यत्र 'हरिणा मां भज' इति प्रयोजितो भक्तो हरिं भजति तत्र 'हरिं भजति' इत्यनुप-

(१)स्वातन्त्र्यञ्च (२)कर्तृप्रत्ययसमभिव्याहारे प्रधानीभूतधात्वर्थाश्रयत्वम् । 'पक्वस्तण्डुलो देवदत्तेन' इत्यत्र फलस्य प्राधान्येऽपि देवदत्तस्य कर्तृत्वसिद्धये 'कर्तृप्रत्ययसमभिव्याहारे' इति । (३)णिचस्तु वाचकत्वमेव, अतस्तत्र ण्यन्तधातु–तत्प्रकृतिधातु–एतदुभयवाच्यव्यापारयोस्स्वस्वार्थं प्रति प्राधान्याद् 'देवदत्तेन यज्ञदत्तः पाचयति' इत्यादौ (४)प्रयोज्यव्यापाराश्रयस्यापि

---

पत्तिः, एवं 'काष्ठैः स्थाली पचति' इत्यादौ काष्ठादेः कर्तृत्वापत्तिः, तद्व्यापारस्य स्थाल्यादिव्यापाराप्रयोज्यत्वात्––अतः स्वातन्त्र्यं परिष्करोति––(१)**स्वातन्त्र्यञ्चेति । (२)कर्तृप्रत्ययसमभिव्याहारे इति ।** कर्तृप्रत्ययसमभिव्याहारे स्वजन्यबोधीयमुख्यविशेष्यताश्रयो योऽर्थस्तदाश्रयत्वसम्बन्धेन धातुविशिष्टः कर्तेति । विशेष्यतायां मुख्यत्वं च स्वप्रयोजकप्रयोज्यविशेष्यतानिरूपितप्रकारताऽसामानाधिकरण्यम् ।

नन्वेवं 'चैत्रेण मैत्रस्तण्डुलं पाचयति' इत्यादौ णिचो द्योतकत्वेन विक्लित्त्यनुकूलव्यापारानुकूलव्यापारस्य पचधातुवाच्यतया प्रयोज्यव्यापारस्य मुख्यविशेष्यताश्रयत्वरूपप्रधानत्वाभावेन तदाश्रयस्य कर्तृत्वानापत्तिरत आह–(३)**णिचस्तु वाचकत्वमेवेति ।** एवञ्च विक्लित्त्यनुकूलव्यापारवाचकपचनिरूपितं कर्तृत्वं प्रयोज्यकर्तरि सुलभम्, पाचिनिरूपितं कर्तृत्वं च प्रयोजके सुलभमिति न कश्चिद्दोष इति बोध्यम् । नच करणतृतीयया निर्वाहः । काष्ठादेः करणत्वविवक्षायां देवदत्तादेः तदविवक्षायामपि कर्तृत्वप्रयुक्ततृतीयार्थं, 'देवदत्तः शतेन बन्धयति' इत्यादौ शतपदात् "अकर्तर्यृणे पञ्चमी" (पा०सू० २।३।२४) इति पञ्चमीनिषेधार्थं च कर्तृत्वस्यावश्यकत्वात् इति दिक् ।

**(४)प्रयोज्यव्यापाराश्रयस्यापीति ।** नन्वेतदयुक्तम्–प्रयोजकव्यापाराश्रयस्य कर्तृत्वसिद्धिरित्यस्यैव वक्तुं युक्तत्वात् । तथा हि–स्वमते द्योत्यार्थस्य विशेषणत्वस्यैव सिद्धान्तितत्वेन द्वितीयव्यापारस्य णिज्द्योत्यत्वे स प्रयोज्यव्यापारे विशेषणमेव स्यात् । ततश्च 'चैत्रेण मैत्रः पाचयति' इत्यादौ मैत्रवृत्तिव्यापारप्रयोज्यश्चैत्रवृत्तिव्यापार इत्येव बोधः स्यात्, प्रयोज्यव्यापारस्यैव प्राधान्यादिति चेद्; न । न हि द्योतकतां जल्पन्तीत्येतावता बोधे वैलक्षण्यमङ्गीकुर्वन्ति । बोधं तु वाचकतावादिसिद्धमेव मन्यन्ते । नन्वेवमेषोऽप्येको द्योतकतावादिनये दोषः स्यात्, यद् द्योत्यार्थस्य विशेष्यत्वमभिधीयते इति चेत्? अस्तु, अस्माभिरपि 'चैत्रेण मैत्रः पाचयति' इत्यादौ प्रयोज्यस्य चैत्रादेः कर्तृतासिद्धये द्योतकतामतस्य दुष्टत्वेनैवाभिलपितत्वात् ।

**केचित्तु** बोधे वैलक्षण्यमनभिप्रेयतां द्योतकतावादिनामयमाशयः–"हेतुमति च" (पा०सू० ३।१।२६) इत्यत्र हेतुमत्पदं प्रयोज्यव्यापारपरमेव । हेतुः प्रयोजको विद्यते यस्येत्यर्थे मतुपो विधानात् । एवञ्च प्रयोज्यव्यापाररूपे हेतुमति द्योत्ये णिजित्यर्थ इति विक्लित्त्यनुकूलव्यापारस्यैव द्योत्यत्वेन तस्य विशेषणत्वेऽपि क्षतिविरहः । **यत्तु**–णिचः

प्रयोज्यव्यापारद्योतकत्वे द्योतकं विना द्योत्यार्थाप्रतीत्या पचतीत्यादिवाक्याद् तद्व्यापारबोधानापत्तिरिति, तन्न । अन्तर्भावितण्यर्थतामङ्गीकृत्य पचतीत्यादितो व्यापारद्वयबोधस्यानुभविकतया प्रयोजकव्यापारद्योतकतामतेऽपि तत्र बोधानुपपत्त्या द्योतकं विनापि द्योत्यबोधस्याङ्गीकर्तव्यत्वादित्याहुः ।

ननु कर्तृलक्षणे एव कर्तृत्वं प्रविष्टमित्यात्माश्रयः । कर्तृप्रत्ययपदस्य कर्तृबोधनियामकतिवादिसमभिव्याहृतशबादितत्तद्विकरणपरत्वेऽननुगमापत्तिः । यग्भिन्नविकरणत्वेन त्वनुगमोऽशक्यः । 'पक्ष्यते' इत्यादौ स्य--समभिव्याहारे व्यभिचाराद्, इति चेन्न । अनुकूल्यत्वेनाप्रतीयमानधात्वर्थाश्रयत्वस्यैव कर्तृत्वात् । अनुकूल्यत्वेनाप्रतीयमानत्वं च अनुकूलत्वसम्बन्धावच्छिन्नप्रकारतानाश्रयत्वम् । कर्तृप्रत्ययसमभिव्याहारे व्यापारे फलस्य अनुकूलत्वसम्बन्धेनान्वयात् अनुकूलत्वसम्बन्धावच्छिन्नप्रकारताश्रयत्वं फलेऽस्तीति न तदनाश्रयत्वमिति न तदाश्रयस्य कर्तृत्वप्रसक्तिः ।

नन्वेवं स्वस्वत्वध्वंससमानाधिकरण-परस्वत्वोत्पत्ती-च्छाबोधानुकूलव्यापारार्थकदाधातुनिरूपितकर्तृत्वमुत्पत्त्याश्रयस्यापि स्यात्, उत्पत्तिरूपधात्वर्थस्य निरुक्तानुकूलत्वसम्बन्धावच्छिन्नप्रकारतानाश्रयत्वात् । न चानुकूलत्वेन प्रतीयमानत्वे सति अनुकूल्यत्वेनाप्रतीयमानत्वं धात्वर्थे प्राधान्यम्, उत्पत्तिश्च न तथेति न दोष इति वाच्यम् । तथा सत्यपि 'अग्नेर्माणवकं वारयति' इत्यादौ संयोगानुकूलव्यापाराश्रयस्य माणवकादेः कर्तृत्वापत्तेः, तद्वृत्तिसंयोगानुकूलव्यापारादेरुक्तरूपत्वात्-इति चेन्न । अनुकूलत्वसम्बन्धावच्छिन्नप्रकारतानाश्रयत्वमित्यस्य स्वाश्रयत्व--स्वनिरूपितावच्छेदकताश्रयत्वान्यतरसम्बन्धावच्छिन्नप्रतियोगिताकप्रकारत्वाभावाश्रयत्वम् इत्यर्थात् । तथाच संयोगानुकूलव्यापाराभावानुकूलव्यापाररूपवारिधात्वर्थघटकस्य संयोगानुकूलव्यापारस्य, परस्वत्वोत्पत्तीच्छाबोधानुकूलव्यापाररूपदाधात्वर्थघटकपरस्वत्वोत्पत्तेश्च अनुकूलत्वसम्बन्धावच्छिन्नप्रकारतानाश्रयत्वेऽपि तत्सम्बन्धावच्छिन्नाभावादिनिष्ठप्रकारतावच्छेदकताश्रयत्वेन तदन्यतरसम्बन्धावच्छिन्नप्रकारत्वाभावस्यासत्त्वात्तदाश्रयस्य माणवकादेर्न कर्तृत्वम् । एवं च फलाभावादनुकूलत्वेन प्रतीयमानत्वे सतीति विशेषणं न देयम् । स्वजन्यशाब्दबोधीयानुकूलत्वसम्बन्धावच्छिन्नप्रकारतात्वावच्छिन्नप्रतियोगिताकाभाववत्त्व--स्वप्रयोज्यविषयताश्रयत्वैतदुभयसम्बन्धेन धातुविशिष्टो योऽर्थस्तदाश्रयत्वं कर्तृत्वम् । प्रतियोगिताच स्वाश्रयत्व--स्वावच्छेदकताश्रयत्वान्यतरसम्बन्धेन प्रकारताविशिष्टा ग्राह्येति निष्कृष्टोऽर्थः ।

यद्वा आश्रयत्वसम्बन्धावच्छिन्ना या स्वजन्यशाब्दबोधीयानुकूलत्वसम्बन्धावच्छिन्नप्रकारतात्वावच्छिन्ना प्रतियोगिता तादृशप्रतियोगिताकाभावाश्रयत्व-स्वजन्यशाब्दबोधीयमुख्यविशेष्यताश्रयत्वोभयसम्बन्धेन धातुविशिष्टो योऽर्थस्तदाश्रयत्वं तत्त्वमिति ।

नन्वेवं ण्यन्ताण्णिचि एकस्य लोपे "यः शिष्यते" इति न्यायेन व्यापारद्वयस्यापि ण्यन्तवाच्यत्वेन धात्वर्थव्यापारानुकूलव्यापाराश्रयस्य मैत्रादेः 'चैत्रेण मैत्रेण पाचयति

कर्तृत्वसिद्धिः । द्योतकत्वे तु नैतत् सिध्येत् । "कारके" (पा०सू० १।४।२३) इतिसूत्रभाष्यात्स्वक्रियाकारकप्रवर्तकत्वं स्वातन्त्र्यमिति लभ्यते, प्रकृतसूत्रभाष्याच्चेति मञ्जूषायां निरूपितम् ।

**प्रकृष्टेति ।** यद्व्यापाराव्यवधानेन क्रियानिष्पत्तिस्तत्प्रकृष्टम् । **(१)तमब्ग्रहणं किमिति ।** कारकाधिकारात्करणल्युडन्तकरणेतिमहासञ्ज्ञया च साधकत्वे लब्धे साधकग्रहणमेव साधकतमार्थं भविष्यतीति प्रश्नः । **(२)गङ्गायामिति ।** अधिकरणमित्याधिकरणल्युडन्तमहासञ्ज्ञयैव

---

चैत्रः' इत्यादौ कर्तृत्वानापत्तिः, अनुकूलत्वसम्बन्धावच्छिन्नप्रकारतानाश्रयत्वस्य तद्व्यापारेऽसत्त्वात्–इति चेन्न । धातुनिष्ठशक्तिविशिष्टत्वस्यैव प्राधान्यरूपत्वात् । शक्तिवैशिष्ट्यं चोक्तरीत्यैव । शक्तेश्च शक्यतावच्छेदकभेदेन भिन्नत्वात् पाचिनिष्ठायाः शक्तेः विक्लित्त्यनुकूलव्यापारानुकूलव्यापारानुकूलव्यापारनिरूपितायाः विक्लित्त्यनुकूलव्यापारानुकूलव्यापारनिरूपितायाश्च विभिन्नत्वेनादोषादित्यलं पल्लवितेनेति शिवम् ।

कश्चित्तु ण्वुल्समभिव्याहारे प्रधानीभूतधात्वर्थाश्रयत्वं कर्तृत्वम् । ण्वुल् च कर्त्रर्थकः सर्वस्मादपि धातोर्भवतीति न दोष इत्याह ।

**साधकतमं करणम्** (पा०सू० १।४।४२)। **(१)तमब्ग्रहणं किमिति ।** अयं भावः—यद्यपि तमब्ग्रहणाभावे साधकमात्रस्य करणसञ्ज्ञाविधाने 'काष्ठैः पचति' इत्यादौ अनपायभूते काष्ठादौ चरितार्थायाः करणसञ्ज्ञायाः 'धनुषा विध्यति' इत्यादौ अपाययुक्ते धनुरादौ अनवकाशत्वादपादानसञ्ज्ञा प्राप्नोति तद्वारणार्थमिदमावश्यकं तथापि क्रियतेऽनेनेत्यर्थे करणशब्दस्य निष्पन्नतया महासञ्ज्ञाबलात् कारकाधिकाराच्च साधकस्यैव करणसञ्ज्ञा स्यात् इति सामर्थ्यात् साधकपदं साधकतमार्थं भविष्यतीति तमब्ग्रहणं किमर्थमिति प्रश्नाशयः । **(२)गङ्गायामितीति ।** एवं रीत्या "आधारोऽधिकरणम्" (पा०सू० १।४।४५) इत्यत्राप्यधिकरणल्युडन्ताधिकरणेतिमहासञ्ज्ञाबलेनैवाऽऽधारस्याधिकरणसञ्ज्ञालाभे आधारग्रहणं सर्वावयवव्याप्त्याऽऽधारपरं भविष्यतीति 'गङ्गायां घोषः' इत्यादौ अधिकरणसञ्ज्ञा न स्यात् । प्रकृतसूत्रस्थतमब्ग्रहणेन तु 'कारकप्रकरणे प्रकर्षार्थप्रत्ययं विना शब्दसामर्थ्यगम्यः प्रकर्षो नाश्रीयते' इति ज्ञापने तु न किञ्चिद् दूषणम् इति उत्तराशयः ।

अत्र कश्चित्—यदि "करणाधिकरणयोश्च" (पा०सू० ३।३।११७) इत्यत्रत्यकरणपदं लोकव्यवहारादेव गृहीतशक्तिकं भवेत्तदा लोकव्यवहारेणैव साधकतमनिरूपिताऽपि तत्रत्यकरणपदशक्तिर्गृह्येतेति महासञ्ज्ञाबलादेव साधकतमलाभोऽपि भविष्यतीति साधकग्रहणमपि व्यर्थं स्यात् । एवञ्च प्रकृते उद्देश्यलाभार्थमेव साधकतमग्रहणस्य करणीयत्वे 'अर्थः करणम्' इत्येव क्रियताम् । 'करणम्' इत्येव वा क्रियताम्—'कारका-

सिद्धे आधारग्रहणसामर्थ्यात्सर्वावयवव्याप्त्या य आधारः सोऽधिकरणमित्यर्थः स्यात् । एवञ्चेदं सूत्रं 'तिलेषु तैलम्' इत्यादावेव प्रवर्तेत । न हि गङ्गा तीरं वा सर्वावयवैर्व्याप्ते । तीरधर्मस्य घोषाधारत्वस्यात्यन्तसामीप्यात्प्रवाहे आरोपोऽत्र बोद्धयः । यदा तु व्यवहितो गङ्गातो घोषः; तदा गङ्गाशब्दस्य तत्तीरे लक्षणा । तमब्ग्रहणेन 'शब्दसामर्थ्यगम्यः प्रकर्षो नाश्रीयते' इति ज्ञाप्यते इति गौणाधारस्याप्यधिकरणसञ्ज्ञा सिद्ध्यति । एवञ्च गङ्गायां गाव इत्यप्युदाहरणम् । सर्वावयवव्याप्त्यभावेन मुख्याधारत्वाभावात् । गौणमप्याधारत्वादि सप्तम्यादिशक्यमेवेति बोध्यम् । इदं प्रकृतसूत्रे **भाष्ये** स्पष्टम् ।

(१)यदि तु महासञ्ज्ञया तदाक्षेपकरणासमर्थं प्रति आधारादिपदं चरितार्थं, साधकशब्दस्य यद्व्यापारानन्तरमव्यवधानेन फलोत्पादस्तत्र शक्तिः । आधारशब्दस्य चाध्रियते यस्मिन्निति व्युत्पत्त्या कर्तृकर्मणोर्धारणक्रियां

---

धिकारात्क्रियाजनकमेवोद्देश्यीक्रियताम्, नार्थः साधकतमग्रहणेन । करणपदेनैव महासञ्ज्ञाबलेनोपस्थितस्य साधकतमस्योद्देश्यत्वं च स्यादिति तु न वाच्यम् । एकपदोपस्थाप्ययोरर्थयोरुद्देश्यविधेयभावेनान्वयस्य सर्वादिप्रकरणे शेखरे निरस्तत्वात् । किञ्च "आधारोऽधिकरणम्" (पा०सू० १।४।४५) इत्यत्राधारग्रहणमपि तथासति निरर्थकं भवति । कारकाधिकारात् क्रियाजनकस्य महासञ्ज्ञाबलेनैवाधिकरणपदलभ्यस्याधारस्यैवाधिकरणसञ्ज्ञोद्देश्यत्वसम्भवात् । न हि तत्र महासञ्ज्ञाबलेन सर्वावयवव्याप्त्या य आधार इत्यर्थस्य लाभः । अधिकरणल्युड्विधायकशास्त्रस्थेऽधिकरणपदे लोकतोऽधिकरणसामान्यनिरूपितशक्तेरेव ग्रहात् । सति ह्याधारग्रहणे तत्सामर्थ्यात्सर्वावयवव्याप्त्या य आधार इत्यर्थो लभ्यते, तदभावे तु नैव लभ्येतेति दोषानवकाशात् ।

यद्वा अस्तु लोकव्यवहारेण करणपदे "करणाधिकरणयोः" (पा०सू० ३।३।११७) इत्यत्र साधकनिरूपितशक्तेरेव लाभः, तथापि नार्थस्तमब्ग्रहणेन । साधकपदस्यैव साधकतमार्थत्वसम्भवात् । "आधारोऽधिकरणम्" (पा०सू० १।४।४५) इत्यत्र तु आधारग्रहणं मैवास्तु इति न सर्वावयवव्याप्त्याऽऽधारस्यैवाधिकरणसञ्ज्ञा प्राप्नोतीति न, 'गङ्गायां घोषः' इत्यादौ कोऽपि दोष इत्याह ।

सत्येव साधकतमाधारग्रहणे करणपदे साधकतमनिरूपिता, अधिकरणपदे च आधारनिरूपिता शक्तिर्गृह्यते, तदभावे तु नैव गृह्येत । महासञ्ज्ञया तत्तदर्थनिरूपितशक्तिग्रहस्य बहूनां दुर्लभत्वेन तदर्थं तयोः सार्थक्यात् इत्यभिप्रेत्य कश्चिन्मतनिरासाय प्रकारान्तरेण तमब्ग्रहणचारितार्थ्यमाह-(१)यदि त्वित्यादिना ।

प्रति सर्वावयवव्याप्त्या य आधारस्तत्र शक्तिरित्युच्यते, तदोक्तप्रयोगादिसाधनाय कारकप्रकरणे उद्देश्यवाचके पदे स्वरितत्वप्रतिज्ञया गौणाधारादेर्ग्रहणं वाच्यम् । स्वरितेनाधिकं कार्यमित्यर्थात् । तमपा तु प्रकृते तदभावो बोद्ध्यते । एवञ्च व्यवधानेन फलोत्पादके करणकत्वोपचारेण तृतीयान्तप्रयोगस्यासाधुत्वबोधनं तमप्फलम् । एतत्तमब्ग्रहणादेवान्यत्र स्वरितत्वमिति ज्ञायते इति दिक् । स्पष्टञ्चेदं "स्वरितेन" (पा०सू० १।३।११) इति सूत्रे **भाष्ये ।**

**रामेणेति ।** (१)कर्तृतृतीयायाः कर्तृत्वादिशक्तिमान्, कर्तृक्रियाभावसन्बन्धश्चार्थः । करणतृतीयायाः करणत्वशक्तिमान्, क्रियाकरणभावः सम्बन्धश्चार्थः । तच्छक्तिमत्त्वञ्च व्यापारवत्त्वेव । (२)रामकर्तृकबाणकरणकप्राणवियोगाश्रयो वालीति बोधः ।

**प्रकृत्यादिभ्य इति ।** इदं यथायोगं (३)सर्वविभक्त्यपवादः ॥

---

(१)**कर्तृतृतीयायाः कर्तृत्वादिशक्तिमान् इति ।** अत्रादिपदेन "तत्प्रयोजको हेतुश्च" (पा०सू० १।४।५५) इति विहितकर्तृसञ्ज्ञासमानाधिकरणहेतुसञ्ज्ञाज्ञाप्या कर्तृत्वशक्तिसमानाधिकरणा हेतुत्वशक्तिर्गृह्यते । 'देवदत्तेन यज्ञदत्तेन पाचित ओदनः' इत्यादौ देवदत्तहेतुकर्तृकव्यापारजन्य–यज्ञदत्तकर्तृकव्यापार–जन्यविक्लित्त्याश्रयस्तण्डुलः इति बोधस्यानुभविकत्वात् इत्यन्यत्र विस्तरः ।

(२)**रामकर्तृकेति ।** रामकर्तृकबाणकरणकव्यापारजन्यो यः प्राणवियोगस्तदाश्रयो वालीति बोधः । कर्मप्रत्ययसमभिव्याहारे फलस्य प्राधान्यात् । कर्तृप्रत्ययसमभिव्याहारे तु व्यापारविशेष्यक एव बोधः । धात्वर्थव्यापारे बाणादिकरणत्वं च फले तत्करणत्वात् तद्विशिष्टं प्रति करणत्वं नोपपाद्यम् ।

(३)**सर्वविभक्त्यपवाद इति ।** तत्र 'प्रायेणात्र याज्ञिका' इत्यत्र 'अत्र बहवो याज्ञिका' इत्यर्थे प्रथमा प्राप्नोति । प्रायशब्दस्य बहुत्वविशिष्टार्थपरत्वात् । तस्य बहुत्वार्थपरत्वे वैशिष्ट्यसम्बन्धेन तस्य याज्ञिकपदार्थे अन्वयात् तदर्थे "इत्थंभूतलक्षणे" (पा०सू० २।३।२१) इत्यनेनैव यद्यपि तृतीया सिध्यति तथापि तस्य सम्बन्धत्वेन विवक्षायां षष्ठी प्राप्ता तां बाधितुमिदम् । तथाच बहुत्वसम्बन्धिनो याज्ञिका इति ततो बोधः । एवं बहुशब्दस्य बह्वाचारपरत्वेऽपि ज्ञाप्यत्वस्य सम्बन्धत्वेन विवक्षायां तृतीयाविधानार्थमिदम् । 'प्रकृत्या चारुः' इत्यस्य प्रकृतिसम्बन्धी चारुरित्यर्थः, तत्र षष्ठी प्राप्नोति । 'गोत्रेण गार्ग्यः' इत्यस्य गोत्राभिन्नो गार्ग्य इत्यर्थे प्रथमा, गोत्रसम्बन्धिगार्ग्यत्ववानित्यर्थे षष्ठी प्राप्नोति । 'समेन धावति' इत्यत्र धावनकर्मदेशसामानाधिकरण्याद्

(१)दिवः कर्म च (पा०सू० १।४।४३)। चेन सञ्ज्ञयोः समावेशः। तेन दिवः साधकतमस्य शक्तिद्वययोगो बोद्ध्यते। तेन 'अक्षैर्देवयते' इत्यत्र (२)तृतीया परत्वात्, (३)कर्मत्वाच्च कर्मत्वप्रयुक्तपरस्मैपदाभावः। अत्र विप्रतिषेधशास्त्रबलात्तृतीयैव शक्तिद्वयबोधिका। (४)यदाऽक्षाणां फलाश्रयत्वसमानाधिकरणकर्मत्वविवक्षा तदा 'अक्षान्दीव्यति' इत्यादि (५)साधु। '(६)अक्षाणां देविता' इत्यादौ तृतीयातः परत्वात्कृद्योगलक्षणा षष्ठी। '(७)मनसा देवः' इत्यादौ (८)हेतुतृतीयान्तेन पचाद्यजन्तदेवशब्दस्य (९)समासः। न च शक्तिद्वयस्वीकारे(१०)ऽत्र कर्मणि लकारे करणत्वशक्तेरनुक्तत्वेन तृतीयापत्तिरिति वाच्यम्। 'अपादानमुत्तराणि' इत्यस्योदाहरणे

---

द्वितीया प्राप्नोति। 'द्विद्रोणेन धान्यं क्रीणाति'इत्यत्र परिच्छेद्यपरिच्छेदकयोरभेदोपचारणे द्विद्रोणाभिन्नं धान्यमित्यर्थात् द्वितीया प्राप्नोति। एवं 'पञ्चकेन पशून् क्रीणाति' 'साहस्रेणाश्वान् क्रीणाति' इत्यादावपि सङ्घसङ्घिनोरभेदात् द्वितीया प्राप्नोति। भाष्यकारास्तु प्रकृत्या स्वभावेन कृतश्चारुः सुन्दरः न तु वस्त्रादिना, ग्रहणधारणयोः सौकर्याय बाहुल्येन अधीयते याज्ञिकाः, अहं 'गार्ग्यः' इति गोत्रेण सञ्ज्ञाये (सञ्ज्ञाता भवामि), समेन पथा एति गच्छति, पञ्चकेन पञ्चपशुसङ्घसाधनेन मूल्येन पशून् क्रीणाति, साहस्रेण सहस्रपरिमाणेन हिरण्येन अश्वान् क्रीणाति इति सर्वत्र अध्याहृतक्रियादिकमादाय करणविभक्तिमुपपाद्य प्रकृत्यादिभ्य इति वार्तिकं प्रत्याचख्युः। तेषां मते उक्तप्रयोगेषु सम्बन्धत्वेन विवक्षायां षष्ठी अनभिधानान्न भवतीति बोध्यम्।

(१)दिवः कर्म च (पा०सू० १।४।४३)। 'अत्र चकारबलेन सञ्ज्ञाद्वयसमावेशः। तेनात्र पर्यायेण तृतीयाद्वितीये। अत एव 'मनसा देवः' इत्यादौ तृतीयासिद्धिः' इति प्राचीनोक्तिं खण्डयति–(२) तृतीया परत्वादिति। कर्मत्वफलमाह–(३)कर्मत्वादिति। नन्वेवम् 'अक्षान् दीव्यति' इत्यादेः सर्वथैवासाधुतापत्तिरत आह–(४)यदाऽक्षाणामिति। (५)साध्विति। "कर्तुः" (पा०सू० १।४।४९) इति सूत्रेणैतद्विवक्षायां द्वितीयायाः साधुत्वादेवेत्यर्थः। एवं स्थिते कृद्योगे तृतीयातोऽपि परत्वात् "कर्तृकर्मणोः" (पा०सू० २।३।६५) इत्येवेत्याहुः।

(६)अक्षाणां देवितेति। नन्वेवं षष्ठीस्वीकारे 'मनसा देवः' इत्यादेः का गतिरत आह–(७)मनसा देव इत्यादाविति। (८)हेतुतृतीयान्तेनेति। कर्तृकर्मबोधकत्वाभावान्न मनःशब्दात् षष्ठीप्राप्तिः। एतेन 'मनसः कर्मत्वाद् देवेत्यत्राण्, मनःशब्दात् तृतीया च' इति मनोरमोक्तिः परास्ता। (९)समास इति। "मनसः सञ्ज्ञायाम्" (पा०सू० ६।३।४) इत्यलुक्। (१०)अत्रेति। 'अक्षा दीव्यन्ते' इत्यत्रे-

'गां दोग्धि' इत्यादौ तत्र कर्मणि लकारे पञ्चम्यापत्तिवारणायैकद्रव्यगतानेकशक्तिमद्ध्ये एकस्या अभिहितत्वे परस्या अपि तद्वत् प्रकाशेनाक्षतेः। एकैव शक्तिः सञ्ज्ञाद्वयोपयोगिनीति तु चिन्त्यम्। कर्मादिपदानां कर्मत्वादितत्तच्छक्तिरूपेण बोधकतया तयो(१)र्भेदस्यैवौचित्यादिति मञ्जूषायां विस्तरः।

**फलप्राप्तिरिति**। तस्याञ्च सत्यां प्रयोजनाभावादेव न क्रियाप्रवृत्तिरिति फलप्राप्तिशब्देन तत्पूर्वकस्त्याग उच्यते। त्यागस्य च फलप्राप्तिर्व्यङ्ग्येत्यन्यत्र विस्तरः। **नायात इति**। अनेन फलाप्राप्तिरेव स्फुटमुच्यते॥

**(२)सहयुक्ते** (पा०सू०२।३।१९)। "पृथग्विनानानाभिः" (पा०

---

त्यर्थः। **(१)भेदस्यैवौचित्यादिति**। केचित्तु एकैव शक्तिस्तत्र करणत्वशक्तित्वं कर्मत्वशक्तित्वं च रूपद्वयं भिन्नं भिन्नं, करणत्वशक्तित्वेन बोधे करणसञ्ज्ञाऽन्यथा कर्मसञ्ज्ञेतिविवेक इति प्राहुः।

**(२)सहयुक्ते** (पा०सू० २।३।१९)। अत्र अप्रधानत्वं शाब्दगुणाद्यन्वयित्वाभावरूपम्। 'पुत्रेण सह स्थूलः पिता' इत्यादौ साहित्यवाचिसहशब्दयोगे शाब्दस्थूलत्वादिगुणान्वयित्वम्, आगत इत्यादौ तादृशक्रियान्वयित्वं च पित्रादेरिति नाप्रधानत्वम्। पुत्रादेस्तु सहशब्देन स्थूलादिपदसमभिव्याहारबलात् प्रतीयमानैः स्थूलत्वादिभिरन्वय आर्थो, न शाब्द इति शाब्दत्वरूपविशेषणाभावप्रयुक्तः शाब्दगुणाद्यन्वयाभाव इति अप्रधानत्वात् तृतीया भवति। इतरसमभिव्याहारं विना शब्देन प्रतीयमानत्वस्यैव शाब्दत्वात्।

'सहैव दशभिः पुत्रैर्भारं वहति गर्दभी'।

इत्यादौ विद्यमानतावाचिसहशब्दयोगे दशानां पुत्राणां विद्यमानत्वेऽपीत्यर्थके अन्यसमभिव्याहारं विना सहशब्देन प्रतीयमानविद्यमानतारूपपदार्थान्वयित्वेऽपि पुत्राणां तदन्वयिगर्दभ्याद्यन्वितवहनादिक्रियान्वयित्वाभावात् विशेष्याभावप्रयुक्तः शाब्दगुणाद्यन्वयित्वाभाव इति अप्रधानत्वात् तत्रापि तृतीया सिध्यति। एवं पुत्रेण सह यः, स गत इत्यादौ वैशिष्ट्यार्थकसहशब्दयोगेऽपि अप्रधानत्वं बोध्यम्। केचित्तु सहैव दशभिः पुत्रैरित्यादौ 'विद्यमाना' इत्यध्याहारेण साहित्यरूपमेव सहशब्दार्थमङ्गीकृत्य साहित्यबलात् तत्राध्याहृतक्रियान्वयमङ्गीकुर्वन्ति। तेषां मते तत्रापि शाब्दगुणाद्यन्वयित्वाभावो विशेषणाभावप्रयोज्य एवेत्यवधेयम्। अत्र सर्वत्र आगमनादिसमानकालिकागमनादिकं सहशब्दार्थः। तस्य कर्तृत्वादिसम्बन्धेन प्रथमान्ताद्यर्थे अन्वयः। आगत इत्यादिपदप्रतिपाद्यागमनकर्तृत्वादेश्च आश्रयतासम्बन्धेन तत्रैवान्वयः। विशेषणीभूतागमनादौ च पुत्रादेः कर्तृत्वादिसम्बन्धेनान्वयः। अतो न सापेक्षत्वप्रयुक्ता 'सपुत्रः'

सू०२।३।२२)इतिवत् 'सहेन' इत्येव सिद्धे युक्तग्रहणं शब्दविशेषानादरेणार्थयोगे भवत्वित्यर्थमित्याह—**सहार्थेनेति**। अत एव क्वचित् शब्दयोगं विनापि भवति। तदाह—**विनापीति**। न्यायसिद्धेऽर्थे लिङ्गमप्याह—**वृद्ध इति**। सहार्थः साहित्यं, तच्च स्वसमभिव्याहृतक्रियादिसमानकालिकतक्रियादिमत्त्वं, क्वचित्समानदेशक्रियावत्त्वम्। अत एव माषवापोत्तरं तत्रैव क्षेत्रे तिलवापे 'तिलैः सह माषान्वपति' इति भवति। यद्यपि 'पुत्रेण सहागतः' इत्यादौ आगमनक्रियाकर्तृत्वादेव पुत्रात्तृतीया सिद्धा; तथापि 'पुत्रेण सह स्थूलः' इत्यादि अस्य मुख्यमुदाहरणमिति **भाष्ये** स्पष्टम्॥

(१)**अङ्गेन**—अवयवेन। इदं सन्निधानलब्धम्। **अङ्गिनः**—अवयविनः। सूत्रे अङ्गशब्दोऽर्शआद्यजन्तो व्याख्यानादिति भावः। **अक्ष्णा काण इति**। यद्यप्यक्ष्येव काणं तथाप्यवयवधर्मस्य समुदाये आरोपाच्छरीरे तदवच्छिन्ने च व्यवहारो निरूढ इति ध्येयम्। यद्यपि काणशब्दोऽक्षिगतविकारवाचक एव तथापि 'द्वौ विप्रौ' इतिवदक्ष्णेति प्रयोगस्य साधुत्वम् ईदृशरीत्येदृशानां साधुत्वे चेदमेव मानम्। षष्ठ्यपवादोऽयमित्याह—**अक्षिसम्बन्धीति**। **अङ्गविकारः किमिति**। अङ्गग्रहणप्रयोजनप्रश्नः। **अक्षि काणमिति**। प्रथमां बाधित्वाऽ(२)त्रैव स्यात्। लेशतोऽपि दर्शनसामर्थ्यहीनत्वं काणत्वम्।

---

इत्यादौ समासानुपपत्तिः। कर्तृत्वादिसम्बन्धेन सहशब्दार्थगमनादिक्रियाया अन्यपदार्थे एवान्वयात्। नापि उद्देश्यतावच्छेदकविधेययोरैक्यापत्तिः। कर्तृतासम्बन्धेन आगमनादिवैशिष्ट्यरूपस्योद्देश्यतावच्छेदकस्य विधेयभूतागमनादिकर्तृत्वतो भिन्नत्वात्। नापि क्रियावाचकादिपदप्रयोगवैयर्थ्यम्। सहपदस्य समभिव्याहृतपदप्रतिपाद्यक्रियादिप्रतिपादकत्वस्यैव व्युत्पत्तिसिद्धतया तं विना तेन तत्प्रतिपादनासम्भवादिति च व्युत्पत्तिवादे विस्तरः।

(१)**येनाङ्गविकारः** (पा०सू० २।३।२०)। विकारवाचकः काणशब्दो यदाऽङ्गिपरस्तदा अङ्गवाचकात् तृतीया। यथा—अक्ष्णा काणः। यदा चाङ्गपरस्तदा त्वङ्गवाचकात् प्रथमा। यथा—अक्षि काणमस्य। एतत्सर्वं च अर्शआद्यजन्ताङ्गपदमहिमलभ्यमेवेति तदभावे यदाऽङ्गपरस्तदैव स्यादित्याह—(२)**अत्रैव स्यादिति**। सम्प्रत्युभयप्रसक्तौ लाघवाद्विकृताङ्गरूपशक्यपरग्रहणसम्भवे विकृताङ्गविशिष्टरूपलक्ष्यपरो न गृह्यतेति भावः।

इत्थंशब्दः प्रकारमात्रपरः । प्राप्त्यर्थाद् भुवः कर्तरि क्तः । कर्मविभक्त्यन्तेत्थंशब्देन भूतशब्दस्य समासः । लक्षणशब्दः करणसाधनः । तस्य कर्मषष्ठ्यन्तेनेत्थम्भूतशब्देन समास (१)इत्याह—**कश्चिदित्यादि** ।

---

**इत्थम्भूतलक्षणे** (पा०सू० २।३।२१)। (१)इत्याहेति । तापसत्वादिरूपप्रकारविशिष्टस्य तापसादेर्ज्ञानं येन जटादिना तद्वाचकजटादिपदरूपलक्षणवाचकात् तृतीयेति सूत्रार्थः फलितः । एवञ्च 'जटाभिस्तापसः' इत्यत्र जटापदोत्तरतत्सूत्रविहिततृतीयायाः स्वज्ञानजन्यज्ञानविषयत्वमर्थः । तस्य तापसत्वादिप्रकारविशिष्टेऽन्वयः ।

**परे तु** साङ्ख्यमते ज्ञापकत्व–स्थापकत्व–उत्पादकत्वादिभेदेन त्रिविधस्यापि हेतोः "हेतौ" (पा०सू० २।३।२३) इति तृतीयाविधायकसूत्रे हेतुपदेन ग्रहणमावश्यकम् । अत एव 'धूमज्ञानजन्यज्ञानविषयो वह्निः' इत्यर्थतात्पर्येण 'धूमेन वह्निः' इत्यादिवाक्यानां 'पृथिवीप्रयोज्यस्थित्याश्रयो नरः' इत्यर्थतात्पर्येण 'पृथिव्या नरः' इत्यादिवाक्यानां 'दण्डप्रयोज्योत्पत्त्याश्रयो घटः' इत्यर्थतात्पर्येण 'दण्डेन घटः' इत्यादिवाक्यानां च प्रामाण्यं सिद्धम् । एवञ्च स्वज्ञानजन्यज्ञानविषयत्वार्थकतृतीयायाः "हेतौ" (पा०सू० २।३।२३) इति सूत्रेणैव विधानसिद्धौ तदर्थकत्वे सूत्रस्यैव वैयर्थ्यापत्तिः । अतो लक्षणपदं भावप्रत्ययान्ततया ज्ञानपरम् । इत्थम्भूतपदं तूक्तार्थकमेव । जनकत्वं सप्तम्यर्थः । एवञ्च प्रकारविशिष्टविषयकज्ञानजनकपदात् तृतीयेति सूत्रार्थः । तत्र विशिष्टज्ञानजनकात् 'कमण्डलुपाणिं छात्रमद्राक्षीत्' इत्यादौ कमण्डलुपाण्यादिपदात् प्रधानक्रियान्वयनिमित्तकविभक्तेर्बलवत्त्वात् तथा बाधे विशिष्टज्ञानजनकविशेषणज्ञानजनकात् 'कमण्डलुना छात्रो दृष्टः, जटाभिस्तापसः' इत्यादौ कमण्डलुजटादिपदात् तृतीयाऽनेन भवति । वैशिष्ट्यमात्रं तृतीयाऽर्थः । जटादिविशिष्टस्तापस इत्येव बोधः । एवञ्च 'घटत्वेन वह्निर्नास्ति' 'रजतत्वेन रङ्गं जानाति' इत्यादौ घटत्वादिपदोत्तरा प्रतियोगित्व–प्रकारित्वादिरूपवैशिष्ट्यार्थिका तृतीयाऽप्यनेनैव । वैशिष्ट्यार्थकत्वायानेकेषां प्रकृत्यादिगणे पाठे गौरवापत्तेः । जटाज्ञानजन्यज्ञानविषयत्वं तु तापसत्वविशिष्टस्य फलति । नैतावताऽसौ कस्याप्यर्थ इति प्राहुः ।

**अन्ये तु** लक्षणपदं करणसाधनमेव ज्ञानजनकज्ञानविषयत्वेन रूपेण विशेषणार्थकम् । विशिष्टबुद्धिं प्रति विशेषणज्ञानस्य करणत्वात् । एवञ्च प्रकारविशिष्टज्ञानजनकज्ञानविषयविशेषणार्थवाचकात् तृतीयेति सूत्रार्थः । अन्यत्सर्वं परेतुमतोक्तमेवात्रानुसन्धेयमित्याहुः ।

**केचित्तु** ज्ञाप्यज्ञापकभावस्य तृतीयार्थत्वाङ्गीकारेऽपि नात्र "हेतौ" इति सूत्रेण गतार्थत्वं शङ्कनीयम् । धूमादिनिष्ठस्य वह्न्यादिज्ञानजनक–धूमादिविशेष्यकवह्न्यादिव्याप्यत्वप्रकारकप्रमा–विषयत्वरूपलक्षणत्वस्य समभिव्याहृतपदार्थतावच्छेदकवह्नित्वाद्यव-

**जटाभिरिति** । यद्यपि ताभिस्तापसो ज्ञात इत्यर्थे ज्ञानक्रियायां करणत्वादिदं सिद्धं, तथापि करणत्वाविवक्षायां लक्ष्यलक्षणभावमात्रविवक्षायां तृतीयार्थमिदम् । (१)इत्थम्भूतस्य यत्र लक्षणवाचकात्पृथगुपस्थितिरेव तत्रैवानेन तृतीया । तेन 'कमण्डलुपाणिं छात्रमद्राक्षीत्' इत्यादौ कमण्डलुपदान्न तृतीया । न चोत्पन्नायास्तृतीयायाः "सुपो धातु" (पा०सू० २।४।७१) इति लुगिति वाच्यम् । कृते समासे तस्या उत्पत्त्या समासरूपप्रातिपदिकानवयवत्वादिति **कैयटे** स्पष्टम् । कमण्डलुः पाणौ यस्येति बहुव्रीहिः ।

**परे तु**—कमण्डलुपाणिशब्दादत्र तृतीयापत्तिः, कमण्डलुयुक्तपाणिरूपस्य कमण्डलुपाणित्वस्य लक्षणत्वेन तस्यैव तद्वाचकत्वात् । तदुक्तम् "अनुर्लक्षणे" (पा०सू० १।४।८४) इति सूत्रे **भाष्ये** "सकृदसौ कमण्डलुपा-

---

च्छिन्ननिरूपितस्य प्रकृत्यर्थतावच्छेदकधूमत्वाद्यवच्छिन्ने "हेतौ" (पा०सू० २।३।२३) इत्येतद्विहिततृतीयया बोधनात् । अत एव धूमेन पर्वतो वह्निमानित्यादय एव प्रयोगाः, नतु वह्निना धूमवान्पर्वत इत्यादयः । नवा द्रव्यत्वेन वह्निमानित्यादयः । एवञ्च प्रकृते तृतीयाप्रकृत्यर्थतावच्छेदकजटात्वाद्यवच्छिन्ने अन्वयितावच्छेदकावच्छिन्नतापसत्वादिनिरूपितस्य तद्विशेष्यकतन्निरूपितव्याप्यत्वप्रकारकप्रमाविषयत्वरूपलक्षणत्वस्याभावान्न तेनात्र तृतीयाप्रसक्तिः । एतद्विहिततृतीयया तु कादाचित्कजटाज्ञानजन्यज्ञानविषयत्वरूपं लक्ष्यत्वं तापसत्वे बोध्यते । 'अत्र कस्तापस' इति प्रश्ने तत्र अन्यस्य कस्यापि जटावत्त्वाभावात् 'यो जटावान्' इत्युत्तरवाक्यात् व्यक्तिविशेषे जटावत्त्वज्ञाने तापसत्वज्ञानात् ज्ञानजनकज्ञानविषयत्वरूपलक्षणत्वस्य तत्रोपपत्तेः । एतादृशलक्षणत्वं तु 'वह्निना धूमवान्' इत्यादौ न विवक्षितमिति न तत्रानेन तृतीया । कस्मिंश्चिद् गृहे कस्याचित् पुरुषस्य कदाचित् वह्निना धूमवत्त्वज्ञाने तादृशज्ञानमादाय उपपद्यमानलक्षणत्वस्य विवक्षणे तु भवत्येव तादृशः प्रयोगः । अत एव लक्ष्यलक्षणभावमात्रविवक्षायां तृतीयार्थमिदमिति शेखरकारेणोक्तम् । अत एव न मतुबापत्तिः । वैशिष्ट्यार्थकत्वे तु सा दुर्वारेत्याहुः ।

**गदाधरभट्टाचार्यास्तु**—"इत्थम्भूत" (पा०सू० २।३।२१) इति भूतार्थकक्तप्रत्ययोपादानात्, व्यावर्तकार्थकलक्षणपदोपादानाच्च पूर्वं प्रकारविशिष्टस्य सम्बन्धि यदिदानीमविद्यमानत्वेऽपि व्यावर्तकं जटादि तद्वाचकात् तृतीया । अविद्यमानजटादेः सम्बन्धविवक्षायां मतुबाद्यप्राप्तेः । अविद्यमानजटासम्बन्धी तापस इति ततो बोध इत्याहुः ।

**(१)इत्थम्भूतस्य यत्र लक्षणवाचकात्पृथगुपस्थितिरेवेति** । लक्षणवाचकपदाप्रयोज्या यत्र इत्थम्भूतस्योपस्थितिरित्यर्थः ।

णिश्छात्रो दृष्टस्तस्य तदेव लक्षणं भवति" इति । तदेवेत्यस्य कमण्डलुपाणित्वमेवेत्यर्थः । कमण्डलोर्लक्षणत्वे हि स एवेति वदेत् । किञ्च तन्मध्यपतितन्यायेन तद्विशिष्टस्य प्रातिपदिकत्वेन तस्य तदनवयवत्वोक्तेरनौचित्येन लुको दुर्वारत्वम् । अत एव 'नरम्मन्यः' इत्यादौ इजन्तस्योत्तरपदपरत्वाय पूर्वं सुपो लुकि उत्पन्नस्यामः "सुपो धातु" (पा०सू० १।४।७१) इति लुक् अम्विधिसामर्थ्येन वारित "इच एकाचोऽम्" (पा०सू० ६।३।८६) इति सूत्रे भाष्ये (१)इत्याहुः ॥

**सञ्ज्ञोऽन्यतर** (पा०सू० २।३।२२) ॥ दैवादिकस्य जनेर्न ग्रहणं तस्याकर्मकत्वात् तदाह—**जानातेरिति** । कर्मत्वशक्तिरेवात्र तृतीयाऽर्थः ॥

**हेतौ** (पा०सू० २।३।२३) ॥ हेतुरिह कारणं न शास्त्रीयः । तस्य कर्तृसञ्ज्ञाया अपि सत्त्वेन कर्तृतृतीययैव सिद्धेः । ननु लौकिकेहेतुरपि करणमित्यत आह—**द्रव्यादीति** । आदिना गुणक्रिये । **साधारणमिति** ।

---

(१)**इत्याहुरिति** । वस्तुतस्तु यदुक्तं कमण्डलोर्लक्षणत्वे स एव वदेदिति, तदयुक्तम् । "उद्देश्यप्रतिनिर्देश्ययोरैक्यमापादयत् सर्वनाम पर्यायेण तत्तल्लिङ्गभाग् भवति" इत्यस्य स्वेनैवोक्ततया लक्षणशब्दानुरोधेन नपुंसकत्वनिर्देशस्योचितत्वात् । यदपि तन्मध्यपतितन्यायेन लुको दुर्वारत्वमिति, तदपि न । तन्मध्यपतितस्य तत्समुदायनिष्ठोद्देश्यतानिरूपितविधेयताश्रयस्यैव तद्ग्रहणेन ग्रहणस्य तन्न्यायेन बोधनात् । अत एव जनराशब्दे न जरस् । नापि 'ग्रामं प्रापितः' इत्यादौ "प्राप्तापन्ने" (पा०सू० २।२।४) इति समासः । तद्घटकस्योद्देश्यत्वेऽपि समुदायस्यानुद्देश्यत्वात् । 'नरम्मन्यः' इत्यादौ तु खिदन्तोत्तरपदकसमासावयवपूर्वपदस्य खिदन्तरूपोत्तरपदपरकस्य नृरूपस्येजन्तैकाचोऽम् विधीयते इति समुदायस्यापि उद्देश्यत्वं परम्परयाऽस्त्येवेति न "इच एकाचः" (पा०सू० ६।३।६८) इति सूत्रस्थभाष्यविरोधोऽपि । यदुक्तं कमण्डलुपाणिपदात् कमण्डलुयुक्तपाणिरूपकमण्डलुपाणित्वविशिष्टवाचकात् तृतीयावारणाय लक्षणवाचकादित्थम्भूतस्य पृथगुपस्थितिरपेक्ष्यते इति, तच्चाप्ययुक्तम् । कारकविभक्तित्वेन बलीयस्या द्वितीयादिकया बाधात् । कारकविभक्तिवत् प्रधानार्थनिमित्तकविभक्तेरपि उपपदविभक्तितो बलवत्त्वस्य "सहयुक्तेऽप्रधाने" (पा०सू० २।३।१९) इति सूत्रे अप्रधानग्रहणप्रत्याख्याने 'शिष्येण सहोपाध्यायस्य गौः' इत्यादौ उपाध्यायपदात् तृतीयाव्यावृत्त्यर्थं ध्वनिततया कर्मणः शेषत्वविवक्षायां "कमण्डलुपाणेश्छात्रस्याद्राक्षीत्" इत्यादावपि न तदापत्तिः । तस्मात् कैयटोक्तमेव फलं युक्तमिति वदन्ति ।

तज्जनकेऽपि वर्तते इत्यर्थः। करणं तु क्रियाजनकमेवेति भावः। वैषम्यान्तरमाह—**निर्व्यापारेति**। करणन्तु व्यापारवदेवेति भावः। (१)एवञ्च करणत्वशक्तेर्भिन्नैव हेतुत्वशक्तिरत्र तृतीयार्थ इति तात्पर्यम्। स्फुटप्रतिपत्तये करणे वैलक्षण्यमाह—**करणत्वन्त्विति**। हेतुहेतुमद्भाव एव तृतीयार्थः। दण्डे व्यापारसत्त्वेऽपि क्रियाजनकत्वाभावान्न करणत्वम्। पुण्ये क्रियाजनकत्वेऽपि निर्व्यापारत्वान्न तत्त्वम्। **फलमपीहेति**। **इह**—एतत्सूत्रोदाहरणे। क्वचित्फलमपि हेतुत्वेन विवक्ष्यत इत्यर्थः। तस्यापि स्वज्ञानद्वारा जनकत्वात्। एतच्च "प्रत्ययः" (पा०सू० ३।१।१) इत्यादिसूत्रेषु **कैयटे** स्पष्टम्।

ननु 'अलं श्रमेण' इत्यादौ क्रियावाचकपदाभावात्क्रियाया अप्रतीत्या कथं करणत्वमत आह—**गम्यमानापीति**। श्रमेणेत्यादिपदजबोधविषयापीत्यर्थः। न तूच्चार्यमाणतद्वाचकपदजन्यबोधविषयैवेति भावः। अलंशब्दो निषेधार्थस्तदाह—**साध्यं नास्तीति**। ननु साध्यमित्यर्थज्ञानेऽपि तस्य श्रमेणेति नामार्थत्वेन न क्रियात्वमत आह—**इहेति**। (२)स्ववाच्यक्रियां प्रति स्वस्य करणत्वमित्यर्थः। स्पष्टं चेदम् "इग्यणः" (पा०सू०१।१।४५) इति सूत्रे 'प्रविश' 'पिण्डीम्' इति 'वाक्यार्थे वाक्यैकदेशप्रयोगः' इत्यादिना **भाष्ये** इति मञ्जूषायां विस्तरः।

---

**(१)एवञ्चेति**। ननु हेतुत्वस्य करणत्वनियतत्वाभावेन हेतुतृतीयाया आवश्यकत्वेऽपि करणत्वस्य हेतुत्वनियतत्वात् हेतुतृतीयया करणतृतीयाया गतार्थत्वं सम्भवत्येवेति चेन्न। हेतुतृतीयावाच्यहेतुत्वशक्तेः करणतृतीयावाच्यकरणत्वशक्तेश्च घटत्वपृथिवीत्वयोरिव परस्परं भिन्नतया तत्तच्छक्तिप्रकारकबोधार्थमुभयोरावश्यकत्वात्। हेतुत्वशक्तेः कारकत्वाभावेन 'घटवद् भूतलम्' इत्यादौ समासैकदेशे घटादौ दण्डेनेति तृतीयाप्रतिपाद्यहेतुत्वस्यान्वयाभावेन 'शरैः शातितपत्रः' इत्यादौ समासैकदेशशातनादावपि अन्वयासम्भवेन तादृशप्रयोगाणामसाधुत्वापत्तेश्च। करणत्वविवक्षायां 'शतेन बध्नाति' इत्यादौ "अकर्तर्यृणे पञ्चमी" (पा०सू० २।४।२४) इति हेतुतृतीयाबाधिकां पञ्चमीं बाधित्वा तृतीयाविधानार्थं तदावश्यकत्वाच्च।

**(२)स्ववाच्येति**। स्वघटितपदवाच्येत्यर्थः। 'ग्रामस्य द्विरुक्' इत्यादौ द्वितीयावारणाय धातुवाच्यतावच्छेदकविलक्षणरूपेण नाम्नः क्रियावाचकताविरहेऽपि 'पिण्डीम्' इत्यादिसम्प्रसारणसंज्ञासूत्रभाष्यात् वाक्यैकदेशभूते पदे तद्रूपपुरस्कारेणैव क्रियावाच-

**अशिष्टेति** । अशिष्टानां सङ्कीर्णाचाराणां यो व्यवहारः क्रिया तद्बोधकपदप्रयोगे प्रत्यासत्त्या यत्सम्बन्धेन व्यवहारस्य सङ्कीर्णाचारत्वं तद्वाचकाच्चतुर्थ्यर्थे तृतीयेत्यर्थः । **दास्येति** । दासीसम्प्रदानकं रतिफलकं दानमि(१)ति बोधः ।

इति तृतीया ॥

---

**दानस्येति** ॥ (२)दाधात्वर्थस्येत्यर्थः ॥ इदमुपलक्षणं (३)क्रियामात्रस्य । **कर्मणेति** । सम्बन्धुमिति शेषः । **अभिप्रैति**—इच्छति । कर्मणा सम्बन्धश्च स्वत्वादिरूपः । सम्प्रदानत्वशक्तिमान् सम्प्रदानचतुर्थ्यर्थः ।

---

कत्वाङ्गीकारात् । (१)**इति बोध इति** । दाण्धातोः दानपूर्वके उपभोगे वृत्तेः 'दत्त्वा तया सह ( ताम् ) उपभुङ्क्ते' इत्यर्थ इति लघुमञ्जूषायाम् ।

* इति तृतीया *

---

**कर्मणा यमभि** (पा०सू० १।४।३२) । (२)**दाधात्वर्थस्येत्यर्थ इति** । तेन 'खण्डिकोपाध्यायस्तस्मै चपेटां ददाति' इत्यत्र संयोजनार्थत्वेऽपि तस्मै इति सम्प्रदानचतुर्थीप्रयोगः वृद्धिसञ्ज्ञासूत्रस्थः सङ्गच्छते । चपेटा—पाणितलम् । संयोगश्च अभिघातरूप एव अभिधानस्वाभाव्यात् । (३)**क्रियामात्रस्येति** । तेन 'शिष्याय शास्त्रं कथयति' इत्यादीनां सिद्धिः । 'अजा ग्रामं नयति' इत्यादौ ग्रामादेः अजादिसम्बद्धत्वेनोद्देश्यत्वाभावान्नातिप्रसङ्गः । तथा विवक्षायां तु इष्यते एव चतुर्थीति भावः । अत एव "क्रियाग्रहणं कर्तव्यम्" इतिवार्त्तिकप्रत्याख्यानं सङ्गच्छते । 'रजकस्य वस्त्रं ददाति' इति तु सम्बन्धसामान्यविवक्षायां बोध्यम् । अत्र हि अधीनीकरणार्थो ददातिः । मुख्यदानं हि स्वस्वत्वनिवृत्ति–परमात्रस्वत्वोत्पत्ति–एतदुभयानुकूलो व्यापारः । उपेक्षायामतिव्याप्तिवारणाय परेत्यादि । स्वासाधारणस्वत्वनिवृत्तिजनके स्वपरसाधारणस्वत्वजनके संसर्जनरूपे व्यापारेऽतिव्याप्तिवारणाय परमात्रेति । दानमेव स्वत्वजनकं प्रतिग्रहस्तु फलातिशयार्थो न स्वत्वजनकः । अत एव देशान्तरस्थब्राह्मणोद्देशेन द्रव्यदाने तस्य मरणे तत्पुत्राणां तस्य द्रव्यस्य पितृदायत्वेन ग्रहणमुक्तं निबन्धेषु । अस्वीकारश्च तदुत्पत्तिप्रतिबन्धकः । तस्मिन् सति दानेऽपि न तदुत्पत्तिः । प्रतिग्रह एव स्वत्वजनक इति मते तु स्वत्वोत्पत्तीच्छाबोधानुकूलो व्यापारो दानम् । तदुत्पत्तीच्छामात्रं तु न धात्वर्थः । तदिच्छाबोधानुकूलकायिकव्यापारकाले एव ददातीति प्रयोगात् । स्वस्वत्वनिवृत्तिं विना परस्वत्वोत्पत्तेरयोगात् साऽपि धात्वर्थः । अन्यथा शब्देन परस्वत्व-

स एवोद्देश्य इत्युच्यते। क्रियाकारकभावः सम्बन्धश्च तदर्थः। विप्रसम्प्रदानकं दानमिति बोधः। कर्मणेति किम्? तदभावे हि कर्मणोऽप्युद्देश्यतयाऽन्तरङ्गत्वात्तस्यैव सञ्ज्ञा स्यात्। (१)कर्मसञ्ज्ञया तु पर्यायो भविष्यति। यं सग्रहणं किम्? तदभावे क्रियाकर्मणा योऽभिप्रैति ब्राह्मणादिस्तस्यैव स्यात्। कर्तृसञ्ज्ञा त्वकर्मकविषये सावकाशा। न च कर्तुः कर्तृत्वाभावे कथं गोः कर्मत्वम्। कर्मसञ्ज्ञायां कर्तृग्रहणस्य (२)स्वतन्त्रोपलक्षणत्वात्। अत एव 'सार्थाद्धीयते' इत्यत्र कर्तुरपादानत्वेऽपि कर्माणि लकारः सिद्धः। ननु कर्मणेत्युक्तावकर्मकक्रियोद्देश्यस्य सम्प्रदानत्वं न स्यादत आह—**क्रियेति**। कर्मरहितक्रिययेत्यर्थः। सकर्मकेषु कर्मसञ्ज्ञा अस्या बाधिकेत्याशयेनाह—(३)**पत्ये शेते इति**। न च दानादीनां तदर्थत्वात्तादर्थ्यचतुर्थ्यैव सिद्धे किमनया सञ्ज्ञयेति वाच्यम्। (४)"दाशगोघ्नौ सम्प्रदाने"

---

बोधे जातेऽपि द्यामुष्यायणादाविव तद्दत्तगवादावपि तत्स्वत्वबोधापत्तेः। (१)**कर्मसञ्ज्ञयाऽत्र पर्यायो भविष्यतीति**। ननु 'पत्ये शेते' इत्यादौ चरितार्थायाः सम्प्रदानसञ्ज्ञायाः गवादौ "कर्तुरीप्सिततमम्" (पा०सू० १।४।४९) इत्यनेनं अनवकाशत्वाद् बाध एवापादनीयो, न तु पर्याय इति चेद्, न। कर्मणेत्यस्याभावे "कर्तुरीप्सिततमम्" इत्यस्येव अस्यापि 'यमभिप्रैति' इत्युक्त्या कर्तुः स्वव्यापारेण साध्यत्वेनेच्छाविषये फले, तद्वत्त्वेनेच्छाविषये गवादौ चेत्युभयत्रैव शीघ्रोपस्थितिकत्वेन प्रवृत्त्या विप्रादाविव 'पत्ये शेते' इत्यादावपि अप्रवृत्त्या अस्याप्यनवकाशत्वेन पर्यायापादनस्यैवोचितत्वात्। स्पष्टं चेदमत्रैव भाष्यकैयटयोः। अन्तरङ्गत्वानाश्रयणे तु बाध एवापादनीय इति दिक्।

(२)**स्वतन्त्रोपलक्षणत्वादिति**। इदं च कर्तुरीप्सितसूत्रे निरूपितम्। (३)**पत्ये शेते इतीति**। पतिमुपाश्रित्य शेते इत्यर्थः। सम्प्रदानपत्युद्देश्यकं शयनमिति बोधः। क्रियाया अपि प्रारम्भादिक्रियानिरूपितं कृत्रिमकर्मत्वमप्युपपाद्य "क्रियाग्रहणं कर्तव्यम्" इति वार्तिकप्रत्याख्याने तु प्रारम्भक्रियाकर्मभूतं पतिसम्प्रदानकं पत्नीकर्तृकं शयनमिति बोधः। एवं रीत्या गत्यर्थकर्मण्यपि ग्रामायारभ्यते गमनमित्यर्थविवक्षायां चतुर्थीसिद्ध्या "गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ" (पा०सू० २।३।१२) इति सूत्रमपि प्रत्याख्यातम्। आरम्भक्रियाया भेदेनानवभासे द्वितीया, तेनावभासे चतुर्थीति व्यवस्थेति न सङ्करः। कटं करोतीत्यादौ तु आरम्भक्रियाया न भेदेनावभासः कृधातुना, अनभिधानादिति न तत्र चतुर्थीति सर्वं **कैयटे** स्पष्टम्। (४)**दाशगोघ्नौ**

(पा०सू० ३।४।७३) इत्यर्थत्वात्, (१)तत्सम्प्रदानकं दानमिति बोधार्थं तदावश्यकत्वाच्च । अत एव तादर्थ्यचतुर्थ्यां दानकर्मणो गवादेः सम्प्रदानार्थत्वेऽपि दानक्रियायास्तदर्थत्वाभावेन चतुर्थ्यन्तार्थस्य (२)दानक्रियान्वयानापत्तिरिति **हेलाराजः** । (३)तादर्थ्यचतुर्थ्यैव सिद्धे "चतुर्थी सम्प्रदाने"

---

**सम्प्रदाने इति** । नन्वत्र दाशगोघ्नौ तदर्थे इत्येव कार्यमित्यत आह–**(१)तत्सम्प्रदानकमित्यादि** । **(२)दानक्रियान्वयानापत्तिरिति** । दानक्रियायाः स्वर्गार्थत्वात् स्वर्गरूपोपकारस्य दानक्रियाकर्तृगामित्वात् तद्गतफलद्वारा तज्जनकत्वरूपतादर्थ्यस्य ब्राह्मणादिनिरूपितस्य दानक्रियायामभावेन चतुर्थ्यन्तार्थस्य तत्रान्वयानापत्तिरित्यर्थः । 'तदिच्छाधीनेच्छाविषयव्यापाराश्रयत्वं तादर्थ्यम्, न तु तादृशेच्छाविषयत्वमात्रम् । अत एव 'यागाय याति' इत्यादौ चतुर्थीसिद्धये "तुमर्थाच्च भाववचनात्" (पा०सू० २।३।१५) इति सूत्रं चरितार्थम् । अत एव च स्वर्गाय पुण्यमित्यादयो न प्रयोगाः' इति वदतां गदाधरभट्टाचार्याणां मतेऽपि तादृशेच्छाविषयव्यापाराश्रयत्वरूपतादर्थ्यस्य पुण्यादाविव दानादिक्रियायामभावात् चतुर्थ्यन्तार्थस्य क्रियान्वयानापत्तिर्ध्रुवैव । मतद्वयेऽपि मुक्तये हरिं भजतीत्यादौ चतुर्थी "क्रियाग्रहणं कर्तव्यम्" इति वार्तिकादेव साध्या ।

"तस्मा इत्युपकार्यं हि कार्यं प्रत्यवमृश्यते" ।

इति कैयटोक्त्या, तत्प्रतीकमुपादाय "विद्यमानमेव यत्किञ्चिदुपकारविशिष्टं कार्यमित्यर्थः । तेन 'घटाय दण्डः' इत्यादि नेत्याहुः" । इति विवरणोक्त्या च तदुभयसम्मतस्य तद्गतोपकारजनकत्वरूपतादर्थ्यस्य, गदाधरसम्मतस्य पूर्वोक्ततादर्थ्यस्य च मुक्तिनिरूपितस्य भजनेऽभावादिति दिक् ।

तादर्थ्यरूपरूपविभक्त्यर्थस्य दानादावनन्वये गवादावेवान्वये च 'ब्राह्मणाय गोदानम्' इत्यादौ सापेक्षत्वात् समासानापत्तिः । कारकविभक्त्यर्थसाकाङ्क्षस्येव तादर्थ्यसापेक्षस्यापि समासाङ्गीकारे ब्राह्मणाय कम्बलरोमाणीत्यादेरप्यापत्तिरिति बोध्यम् ।

ननु स्वर्गरूपोपकारस्य विप्राद्यगामित्वेऽपि दुग्धाद्युपभोगरूपोपकारस्य तद्गामित्वात् तज्जनकत्वस्य दुग्धादिद्वारा गवादाविव गवादिद्वारा तद्दानादावपि सम्भवात् तादृशस्यैव तादर्थ्यस्य विवक्षया कयटादिमते दानादिक्रियान्वयोपपत्त्या कारकत्वमुपपद्यते एवेति न तत्प्रयुक्तकार्याणामनापत्तिः सूत्राभावेऽपि इत्यत आह—**(३)तादर्थ्यचतुर्थ्यैवेत्यादि** । "चतुर्थी सम्प्रदाने" (पा०सू० २।३।१३) इत्यस्यावश्यकत्वे च सम्प्रदानसंज्ञाया अप्यावश्यकत्वात् "दाशगोघ्नौ" (पा०सू० ३।४।७३) इत्यत्र तदर्थे इति पदद्वयघटितन्यासकरणे न लाघवम् । एवञ्च यथा कथञ्चित् तादर्थ्यविवक्षया 'विप्राय गां ददाति' इत्यादौ चतुर्थ्युपपादनं न युक्तमिति भावः । अत एव 'मैत्रा-

(पा०सू० २।३।१३) इति सूत्रं "रुच्यर्थानाम्" (पा०सू० १।४।३३) इत्यादिविषये चतुर्थ्यर्थमिति **भाष्ये** स्पष्टम् । **पशुनेति** । कर्म तृतीयाऽर्थः । सम्प्रदानं द्वितीयाऽर्थः । एतच्च दानार्थकयजधातुविषयम् । पूजार्थत्वे तु पशोः करणत्वं न्यायसिद्धम् । इदं छान्दसमिति **कैयटः** ।

**अन्यकर्तृक इति** । अभिलष्यतिकर्त्रपेक्षयाऽन्यदभिलष्यतिकर्म, तत्कर्तृक इत्यर्थः । (१)यत्किञ्चिद्विषयकप्रीत्यनुकूलव्यापाराश्रयोऽभिलष्यतिकर्ता । हरिर्भक्तिमभिलष्यतीति प्रत्ययात् । यत्किञ्चिन्निष्ठप्रीत्यनुकूलः प्रीतिव्यधिकरणो यो व्यापारस्तदाश्रयो रोचतेः कर्ता, इति अभिलषते रुच्यर्थत्वाभावान्न तद्योगे सम्प्रदानत्वमिति भावः । तदाह—**हरिनिष्ठेति** । **पथीति** । न च प्रीयमाणपदाभावे सूत्रस्य क्रियाजनकत्वमात्रविवक्षायां सञ्ज्ञान्तराप्राप्तिविषये चारितार्थ्येन परत्वादधिकरणसञ्ज्ञया बाधसिद्धेः

---

वरुणाय दण्डं प्रयच्छति' इत्यत्र चतुर्थीश्रुत्या दानक्रियाकर्मसम्बन्धित्वेन मैत्रावरुणस्योद्देश्यत्वरूपशेषित्वबोधनात् मैत्रावरुणोद्देश्यकं दण्डदानं कृष्णविषाणप्रासनवन्न प्रतिपत्तिः, किन्तु अर्थकर्मेति चतुर्थाध्याये पूर्वतन्त्रे निर्णीतमिति दिक् ।

**रुच्यर्थानाम्** (पा०सू० १।४।३३)। (१)**यत्किञ्चिद्विषयकेति** । विषयतासम्बन्धावच्छिन्नप्रीत्यनुकूलः प्रीतिसमानाधिकरणो यो व्यापारः स रुचेरर्थः, विषयतासम्बन्धावच्छिन्नप्रीत्यनुकूलः प्रीतिव्यधिकरणो यो व्यापारः सोऽभिलषेरर्थः, स्वीयविषयत्वासामानाधिकरण्यं, स्वीयसमवायित्वासामानाधिकरण्यं, स्वानुकूलत्वमेतत्त्रितयसम्बन्धेन प्रीतिविशिष्टो व्यापारो गानादिरूपो भजेरर्थः—इति त्रयाणां भेद इति बोध्यम् । न च प्रीधातोरपि रुच्यर्थत्वात् प्रीयमाण इति कर्मणि शानजनुपपन्न इति वाच्यम् । उभयोरपि समवायसम्बन्धावच्छिन्नप्रीतिव्यधिकरणव्यापारवाचित्वेऽपि अनेनैव निर्देशेन प्रीधातूपात्तप्रीत्याश्रयस्य न सम्प्रदानत्वमिति ज्ञापनात् । अत एव 'हरिं प्रीणयति भक्तिः' इत्यादिप्रयोगाः सङ्गच्छन्ते इति **केचित्** ।

**अन्ये तु** समवायसम्बन्धावच्छिन्नप्रीत्यनुकूलः प्रीतिव्यधिकरणो व्यापारः प्रीधातोरर्थः । तत्र फलतावच्छेदकसमवायसम्बन्धेन प्रीत्याश्रयत्वात् हरेः कर्मत्वम् । सकर्मकत्वाच्च कर्मणि प्रीयमाण इति शानजुपपद्यते । रुचधातोस्तु विषयतासम्बन्धावच्छिन्नप्रीत्यनुकूलप्रीतिसमानाधिकरणव्यापारवाचित्वेन फलतावच्छेदकसम्बन्धस्य विषयतात्मकत्वात् तेन सम्बन्धेन प्रीत्याश्रये तु कर्तृसञ्ज्ञया परत्वाद्बाधात् न सकर्मकत्वमिति हर्यादेः समवायेन प्रीतावन्वये षष्ठ्यां प्राप्तायामिदं वचनमिति न प्रीधातुयोगेऽस्याप्रवृत्तिकल्पकत्वं प्रीयमाण इति निर्देशस्येत्याहुरिति दिक् ।

कथमेतदिति वाच्यम् । (१)'देवदत्तं रोचते' इत्यस्याप्यापत्तेरित्याशयात् । तत्सत्त्वे त्वस्य कर्मसञ्ज्ञापवादत्वान्न दोषः ।

**गोपी स्मरादिति** । श्लाघादेः (२)स्तुत्यादिना बोधनमर्थः । स्मरादिति हेतौ पञ्चमी । स्तुत्याऽऽत्मानुरागं कृष्णं बोधयतीत्यर्थः । स्तुतिश्च कृष्णस्यैव । एवं ह्नुत्या स्वानुरागं कृष्णं बोधयतीत्यर्थः । ह्नुतिः सपत्न्यादिभ्यः कृष्णस्यैव । एवं स्थित्या शपथेन च कृष्णं स्वानुरागं बोधयतीत्यर्थः । यद्वा, स्तुत्या ह्नुत्या च कृष्णं स्वसखीजनं बोधयति, स्थित्या शपथेन च कृष्णं तं बोधयतीत्यर्थः । ज्ञीप्स्यमानपदे (३)ण्यर्थकर्मणः प्रकृत्यर्थकर्मणश्च ग्रहणादित्यन्यत्र विस्तरः । स्तुत्यादिमात्रार्थत्वे 'कृष्णं श्लाघते' कृष्णं ह्नुते' इत्येव । ज्ञीप्स्यमान इति ज्ञापनवचनाज्ज्ञपेः सन्नन्तात्कर्मणि शानच् ।

**धारेरु** (पा०सू० १।४।३५) । 'धृङ् अवस्थाने' इति ण्यन्तस्य

---

**(१)देवदत्तं रोचते इत्यस्याप्यापत्तेरित्याशयादिति** । वस्तुतस्तु कर्मत्वादिरूपव्याप्यशक्त्यविवक्षायामपि क्रियाजनकत्वरूपकारकत्वविवक्षा "आख्यातोपयोगे" (पा०सू० १।४।२९) इत्यत्रोपयोगग्रहणात् 'नटस्य शृणोति' इत्यादावेव भवति, न सर्वत्र । अत एव तदर्थकशेषषष्ठ्या न तत्त्वम् । एवञ्च व्याप्यशक्तिविवक्षाऽऽवश्यकी । ततश्च तत्तत्सञ्ज्ञया बाधे इदं बाध्यसामान्यचिन्तया सर्वस्यापवादः स्यादिति पथश्चतुर्थ्यापत्तिरित्येवापत्तिर्बोध्या । सर्वत्र तथाविवक्षाया अभावादेव 'वारणार्थानामिति सूत्रमस्यापवादः स्यात्' इति पूर्वोक्तमिति सङ्गच्छते । अन्यथा क्रियाजनकत्वमात्रविवक्षायां "वारणार्थ" (पा०सू० १।४।२७) इत्यस्य चारितार्थ्येन तदसङ्गतमेव स्यात् । किञ्चैवं सति सत्यपि प्रीयमाणग्रहणे क्रियाजनकत्वमात्रविवक्षायामस्य चारितार्थ्येन कर्मत्वेन विवक्षायां 'भक्तिर्हरिं रोचते' इत्यापत्तिर्दुर्वारैव स्यादिति दिक् ।

**(२)स्तुत्यादिनेति** । तत्र गुणवत्त्वबोधकः शब्दः स्तुतिः । अदर्शनयोग्यदेशस्थापनं ह्नुतिः । स्थितिः प्रसिद्धा । उपालम्भदानं शापः । अत्र तत्तत्पूर्वकबोधने श्लाघादीनां वृत्तिः । **(३)ण्यर्थकर्मणः प्रकृत्यर्थकर्मणश्चेति** । प्राधान्यात् ण्यर्थकर्मणो ग्रहणे कृष्णं स्वानुरागं बोधयतीत्यर्थः । सन्बलात् प्रकृत्यर्थकर्मणो ग्रहणे कृष्णे स्वसखीजनं बोधयतीत्यर्थः ।

ननु ऋणं नाम सजातीयद्रव्यान्तरदानमङ्गीकृत्य परदत्ततदीयद्रव्यादानं, तज्जन्योऽधमर्णनिष्ठः परिशोधननाश्योऽदृष्टविशेषो वा । उभयथाऽपि नेह प्राप्तिः । मोक्षस्यो-

ग्रहणं व्याख्यानात् । **भक्त्यायेति** । ध्रियमाणं स्वरूपेणावतिष्ठमानं मोक्षं हरिः प्रयुङ्क्ते इत्यर्थः । प्रेरणाया भक्तासत्त्वेऽभावात्तस्यापि प्रेरणाजनकत्वेन कारकत्वं बोद्धव्यम् । (१)अवश्यदेयत्वेन मोक्षेऽपि ऋणत्वं बोद्धव्यम् ।

**प्रकर्षविवक्षायान्त्विति** । फलाश्रयत्वेन विवक्षायामित्यर्थः । **परत्वादिति** । इदं सूत्रं विषयतया क्रियाजनकत्वमात्रविवक्षायां चरितार्थमिति भावः । पुष्पसम्प्रदानिकेच्छेति चतुर्थीसमभिव्याहारे बोधः ।

कुमार्य इव कान्तस्य त्रस्यन्ति स्पृहयन्ति च ।

इत्यत्र क्रियासम्बन्धित्वमात्रविवक्षया षष्ठी । अन्ये तु 'भोगाय' इत्यध्याहृत्य कान्तायेति विभक्तिविपरिणामेन वा व्याख्येयमित्याहुः । स्पृहधातुरिच्छामात्रवाची (२)फलावच्छिन्नेच्छावाची च । आद्ये सम्प्रदानत्वम्, अन्त्ये कर्मत्वम् । ईप्सितत्वं धात्वर्थजन्यफलाश्रयत्वं, न तु फलस्य धात्वर्थत्वपर्यन्तमाग्रहः । कर्मसञ्ज्ञायान्तु यथा तल्लाभस्तथोक्तम् ।

---

क्तरूपत्वाभावात्, अत आह—(१)**अवश्यदेयत्वेनेति** । "लुम्पेदवश्यमः कृत्ये" इति मलोपः ।

(२)**फलावच्छिन्नेच्छावाची चेति** । विषयतापत्तिरूपफलावच्छिन्नेच्छावाचीत्यर्थः । आश्रयता च फलतावच्छेदकः सम्बन्धः । तेन सम्बन्धेन विषयतारूपधात्वर्थफलाश्रयत्वात्कर्मत्वं पुष्पादीनाम् । इच्छामात्रवाचित्वे इच्छाया धात्वर्थत्वेऽपि धात्वर्थत्वजन्यत्वाभावाद् विषयतायाश्च धात्वर्थत्वाभावान्न तद्विषयस्य कर्मत्वम् । कर्तृग्रहणेन प्रत्यासत्त्या धात्वर्थफलाश्रयस्यैव कर्मसञ्ज्ञाविधानादिति भावः । अन्ये तु फलावच्छिन्नेच्छावाचीत्यस्य विषयतासम्बन्धावच्छिन्नेच्छानुकूलमनःसंयोगादिरूपव्यापारवाचीत्यर्थः । इच्छामात्रवाचीत्यस्य च समवायसम्बन्धावच्छिन्नेच्छानुकूलेच्छासमानाधिकरणव्यापारवाचीत्यर्थः । एवञ्च पूर्वत्र फलतावच्छेदकविषयतासम्बन्धेन इच्छारूपफलाश्रयत्वात् पुष्पादीनां कर्मत्वम्, उत्तरत्र च फलतावच्छेदकसमवायसम्बन्धेन इच्छारूपफलाश्रयत्वाभावात्पुष्पादीनां न कर्मत्वप्राप्तिरिति शेषषष्ठीं बाधित्व अनेन सम्प्रदानत्वम् । समवायेन फलाश्रये तु परत्वात् कर्तृसञ्ज्ञयाऽस्य बाधः । पूर्वकल्पे तु विषयतायाः कर्ममात्रनिष्ठत्वात् कर्मस्थभावकत्वापत्तिः । अस्मन्मते तु इच्छायाः विषयतासमवायान्यतरसम्बन्धेन कर्तृकर्मोभयसाधारणत्वात्कर्तृस्थभावकत्वमुपपद्यते । येन कर्ममात्रनिष्ठं फलं प्रतिपाद्यते स कर्मस्थभावकः, येन च कर्तृकर्मसाधारणं फलं प्रतिपाद्यते स कर्तृस्थभावकः इति तल्लक्षणयोः परमलघुमञ्जूषायां व्यवस्थापितत्वादित्याहुः ।

(१)भार्यामीर्ष्यतीति । नात्र भार्यां प्रति कोपः, किं तु परैर्दृश्यमानां तां न सहते इत्येव । एवञ्चात्र न कोपजन्येर्ष्या किन्त्वन्यपुरुषदर्शनजन्येति भावः । हरेः (२)क्रोधद्रोहाभ्यामिच्छाविषयत्वाभावात् "क्रियया यम्" (का०वा०) इत्यनेन न सिद्धिः । 'न ह्यकुपितः क्रुध्यति' इति भाष्येण (३)प्ररूढकोप एव क्रोध इति कुपेस्तदर्थत्वाभावेन न तद्योगे इदम् । 'कुप्यति कस्मैचित्' इत्याद्यसाध्वेव ।

---

(१)भार्यामीर्ष्यतीति । अन्यकर्तृकदर्शनविषयकासहनरूपो व्यापार ईर्ष्यतेरर्थः । दर्शने च भार्यायाः कर्मत्वसम्बन्धेनान्वयः । अत्र अन्यकर्तृकदर्शने एव द्वेषो न भार्यायामिति 'यं प्रति कोपः' इति विशेषोपादानान्न तस्याः सम्प्रदानत्वमिति भावः । एवं शिष्यमीर्ष्यति इत्यत्र मैनमन्योऽध्यापयेदित्यर्थके शिष्यस्य न सम्प्रदानत्वम् ।

यद्यपि 'देवदत्ताय ईर्ष्यति' इत्यादौ देवदत्तादिसम्बन्ध्युत्कर्षविरोधिधर्मारोपानुकूलव्यापारजनकश्चित्तवृत्तिविशेष एव ईर्ष्यधातुना प्रत्याय्यते, प्रकृते तु भार्यायां कोपाभावान्न तथा, तथापि चित्तवृत्तिविशेषरूपेर्ष्यार्थकत्वमुभयत्र समानम् । सा च यस्मिन् ताडनवाक्पारुष्याद्यनुकूलव्यापारजनकचित्तवृत्तिविशेषरूपकोपजन्या तमुद्दिश्य तत्सम्बन्ध्युत्कर्षविरोधिधर्मारोपानुकूलं व्यापारं जनयति, यत्र च न उक्तविधकोपजन्या किन्तु अन्यदर्शनजन्या तमुद्दिश्य तत्सम्बन्ध्युत्कर्षविरोधिधर्मारोपानुकूलव्यापारं न जनयतीति विशेषः । यं प्रति कोप इत्यस्यानुपादाने तु ईर्ष्याजनककोपविषये देवदत्तादाविव तज्जनकान्यदर्शनविषये भार्यादावपि प्रसज्येतैव सम्प्रदानत्वमिति दिक् ।

ईर्ष्याऽसूयाविषययोः कर्मत्वं प्राप्ते इदमित्याहुः ।

(२)क्रोधद्रोहाभ्यामिति । वाक्चक्षुरादिविकारानुमेयो वधताडनाद्यनुकूलव्यापारजनकश्चित्तवृत्तिविशेषः क्रोधः । दुःखजनकक्रियाजनकश्चित्तवृत्तिविशेषो द्रोहः । वधादीनां, दुःखस्य च धात्ववाच्यत्वात् तदाश्रयत्वेन विवक्षितदेवदत्तादेः कर्मत्वाप्राप्त्या षष्ठ्यां प्राप्तायामिदमित्याहुः ।

(३)प्ररूढकोप एवेति । यावत् वाचः स्फुरणं, चक्षुषो रक्तत्वं, दन्तानां घर्षणमित्यादयो विकारा नाभिव्यज्यन्ते, किन्तु सूक्ष्मरूपेणावस्थिताः तावत् चित्तस्य कोपावस्था । अभिव्यक्तेषु च तेषु क्रोधावस्थेति तयोर्विशेषः । ईर्ष्या पूर्वं व्याख्याता । असूया तु शौचाचारादिषु दम्भादिकृतत्वाध्यासप्रयोजिका चित्तवृत्तिः । द्वेषस्तु दुःखसाधनत्वज्ञानजन्याऽनभिनन्दनात्मिका चेतनाचेतनविषयसाधारणी चित्तवृत्तिः । सा च क्रोधादिभ्यो विलक्षणेवेति न तद्योगे अनेन सम्प्रदानत्वमिति औषधं द्वेष्टि असमान् द्वेष्टीत्येवेत्यलम् ।

उपसृष्टयोरित्यस्यार्थमाह—**सोपसर्गयोरिति** । वैयाकरणनिकाये एष एतदर्थकत्वेन प्रसिद्धः । पूर्वसूत्रापवादोऽयम् ।

**यदीय इति** । यदीयशुभाशुभसम्बन्धीत्यर्थः । राधीक्ष्योः प्रश्नविषयार्थपर्यालोचनमर्थः । कर्मणः प्रश्नविषयस्य धात्वर्थेनोपसङ्ग्रहादकर्मकावेतौ । अत एव श्यन् । 'राधोऽकर्मकादेव' इत्युक्तेः । कृष्णसम्प्रदानकं शुभाशुभपर्यालोचनमर्थः ॥

**प्रत्याङ्भ्याम्** (पा०सू० १।४।४०) । व्याख्यानात्प्रत्येकं निमित्तत्वमित्याशयेनोदाहरति—**गां प्रतिशृणोतीति** । अनयोः प्रवर्तनापूर्वकाभ्युपगमोऽर्थः । तत्र विप्रस्य कर्तृप्रयोजकत्वेन हेतुत्वे प्राप्ते वचनम् ॥

**अनुप्रति** (पा०सू० १।४।४१) । अनुप्रतीति भिन्नं पदं लुप्तपञ्चम्यन्तम् । गृण इति श्नान्तानुकरणात् षष्ठी । शंसितुः शंसनाविषयहर्षानुकूलव्यापारलक्षणं प्रोत्साहनमनयोरर्थः । **पूर्वव्यापारस्येति** । शंसनस्येत्यर्थः । **प्रोत्साहयतीति** । ओथामेत्यादिशब्दैरिति शेषः । **शतायेति** । करणस्यैव सम्प्रदानत्वेन भानमत्र । शतव्यापारश्च दानरूप एवेति बोद्ध्यम् ।

**तादर्थ्ये** । (१)तादर्थ्यमुपकार्योपकारकभावरूपः सम्बन्धः । यदा तादर्थ्यस्य सम्बन्धत्वेन भानं तदा षष्ठी—गुरोरिदं गुवर्थमिति अत्र **भाष्ये** स्पष्टम् । **क्लृपीति** सप्तमी । अर्थग्रहणञ्चात्र । सम्पत्तिः—उत्पत्तिः । क्लृप्त्यर्थकधातुयोगे उत्पद्यमानेऽर्थे वर्तमानाच्चतुर्थीत्यर्थः । **हितयोगे च** । चात्सुखयोगेऽपि ॥

(२)**क्रियार्थोप** (पा०सू० २।३।१४) ॥ क्रिया अर्थः फलं यस्य

---

(१)**तादर्थ्यमिति** । इदं सम्प्रदानसञ्ज्ञासूत्रे निरूपितम् ।

(२)**क्रियार्थोपपदस्य** (पा०सू० २।३।१४) । ननु 'ब्राह्मणाय दधि' इत्यादौ यथा स्वसम्बन्धिभोजनरूपोपकारजनकत्वरूपतादर्थ्यसम्बन्धेन ब्राह्मणादेरन्वयविवक्षया चतुर्थी ब्राह्मणादिपदोत्तरं प्रयुज्यते तथा 'फलेभ्यो याति' इत्यादावपि स्वसम्बन्ध्याहरणादिजनकत्वसम्बन्धेन फलादेर्यानादिक्रियायामन्वयविवक्षया फलादिपदेभ्योऽपि चतुर्थी सिध्येदितीदं व्यर्थम् । नचोक्तविवक्षायां फलान्याहर्तुं यातीत्यादावपि तदापत्तिरिति वाच्यम् । उपपदविभक्तेरिति न्यायेन तत्र द्वितीयाया एव युक्तत्वादिति चेन्न । फलकर्मकाहरणफलकं यानमितिबोधेच्छायाम् आहरणादिक्रियानिष्ठविशेष्यतानिरूपित-

तत् क्रियार्थम् । तेन स्ववाचकं लक्ष्यते । क्रियाफलकार्थवाचकमुपपदं यस्येत्यर्थः । सोऽर्थश्च प्रत्यासत्त्या क्रियारूप एव । स्थानिशब्दश्च अप्रयुज्यमानवाची वैयाकरणानां निकाये प्रसिद्धः । क्रियार्थक्रियोपपदत्वञ्च तुमुनादेरेवेत्याह—**क्रियार्था क्रियेति** । 'फलेभ्यो याति' इत्यादौ फलकर्मकाऽऽहरणफलकं यानमिति बोधः । यथा वाक्यार्थे वाक्यैकदेशप्रयोगस्थले 'प्रविश पिण्डीम्' इत्यादौ तस्यैव पदस्य सम्पूर्णवाक्यार्थशक्तता तथाऽस्य समुदायस्याहरणघटितोक्तार्थे शक्तिरेतच्छास्त्रबलात् । स्थानिन इत्युक्तेस्तत्प्रयोगे नेति बोद्धव्यम् । अयमेवार्थाध्याहारः ।

**नमस्कुर्मो नृसिंहायेति** । "नमःस्वस्ति" (पा०सू० २।३।१६) इत्यनेन तु न सिद्धिः, उपपदाविभक्तेरिति न्यायेन द्वितीयापत्तेः । पिण्डीमित्यादावप्रयुज्यमानभक्षणक्रियाकर्मणि चतुर्थीवारणाय (१)क्रियार्थोपपदस्येति ।

**तुमर्थात्** (पा०सू० २।३।१५) । 'तुम्' शब्देन तदर्थो लक्ष्यते, सोऽर्थो यस्येत्यर्थः । **इति सूत्रेणेति** । भावे ये प्रत्यया वक्ष्यन्ते ते क्रियार्थक्रियायामुपपदे भविष्यति स्युरिति तदर्थः । **यागायेति** । (२)यागफलकं यानमित्यर्थः ।

**उपपदविभक्तेरिति** । वाचनिकमेवेदं **भाष्ये** पठितमिति के-

---

कर्मत्वसम्बन्धावच्छिन्नप्रकारताप्रयोजकत्वेन तात्पर्यविषयात् फलादिपदात् चतुर्थीसिद्धये एतस्य सत्त्वात् । गदाधरमते यानादिक्रियायां निरुक्तेच्छाविषयव्यापाराश्रयत्वरूपतादर्थ्यस्याभावाच्च । **(१)क्रियार्थोपपदस्येतीति** । यद्यपि 'प्रविश, पिण्डीम्' इत्यादौ प्रवेशनक्रिया भक्षणार्थो भवति तथापि प्रविशेत्यादीनां "तत्रोपपदं सप्तमीस्थम्" (पा०सू० ३।१।९२) इति परिभाषितमुपपदत्वं नास्ति, फलान्याहर्तुं यातीत्यादौ यातीत्यादीनां तु तुमुन्विधायके 'क्रियार्थायां क्रियायाम्' इत्युक्तेस्तदस्तीति भावः ।

**(२)यागफलकं यानमिति** । अत एव क्रियार्थोपपदस्येत्यनेन न गतार्थता । तथा सति यागानुकूलकृतिफलकं यानमिति बोधः स्यात् । तादर्थ्यचतुर्थ्यास्तु अत्र न प्राप्तिः । भाववचनाश्चेत्यनेन तुमुनर्थे घञो विधानेन तेनैव तस्योक्तत्वात् । तस्मात् तुमुन्नन्तादिव तदर्थकघञन्तादपि प्रातिपदिकार्थमात्रे प्रथमायां प्राप्तायां चतुर्थ्यर्थभिदमिति वैयाकरणाः । भाववचनाश्चेत्यनेन तुमुनर्थे घञो विधानात् भविष्यद्यागफलकं यानमिति बोधाकारः प्रदर्शनीयः ।

चित् । क्रियाकारकयोः सम्बन्धोऽन्तरङ्गः, उपपदार्थेन तु यत्किञ्चित्क्रियाकारकभावमूलकः सम्बन्धे इति तन्निमित्ता विभक्तिर्बहिरङ्गेति "अन्तराऽन्तरेण" (पा०सू० २।३।४) इति सूत्रे **कैयटः** । अत्राहुः—एवं सति 'नमस्यति देवान्' इत्यादौ नमःपदार्थे क्रियाकारकभावेनैवान्वये परत्वाच्चतुर्थीमाशङ्क्यानेन वारणस्य (१)**भाष्योक्त**स्यासङ्गतिः । (२)एतेन प्रधानत्वात् क्रियायास्तत्सम्बन्धनिमित्तकत्वेन बलवत्त्वमित्यपि (३)परास्तम् । कारकविभक्तित्वं च क्रियाजनकत्वसमानाधिकरणकर्त्रादिषट्कान्यतमार्थत्वम् । अन्याभिहितानुद्भूतकर्त्राद्यन्यतमार्थत्वं प्रथमाया अपि । "अभिहिते प्रथमा" (का०वा०) इतिवार्तिकस्वारस्यात् । अतः प्रथमापि कारकविभक्तिरिति बोध्यम् । द्वावित्यादौ द्वित्वादेरिव 'देवदत्तः पचति' इत्यादौ उभाभ्यामेक-

---

(१)**भाष्योक्तस्यासङ्गतिरिति** । उभयोरपि क्रियाकारकभावसम्बन्धनिमित्तकत्वेन अन्तरङ्गत्वे तस्य बाधबीजत्वाभावात् परत्वाच्चतुर्थ्याशङ्कायां तस्य द्वितीयाव्यवस्थापकत्वायोगात् तदसङ्गतिरित्यर्थः । तस्माद्वाचनिकमेवेदम् । एवं च द्वितीयाचतुर्थ्योः प्राप्तयोः परत्वाच्चतुर्थ्याशङ्कायां वाचनिकेनानेन व्यवस्था युज्यते इति भावः । (२)**एतेन**—पूर्वोक्तचतुर्थीवारणपरभाष्यासङ्गतिप्रदर्शनेन । (३)**परास्तमिति** । चतुर्थ्या अपि क्रियासम्बन्धनिमित्तकत्वेन तेन हेतुना द्वितीयाया बलवत्त्वासम्भवादित्यर्थः ।

**परे तु** क्रियाजनकत्वसमानाधिकरणकर्त्रादिषट्कान्यतमार्थकविभक्तेः उपपदार्थान्वयनिमित्तकविभक्त्यपेक्षया वचनेन बलवत्त्वाङ्गीकारेऽपि पुत्रेण सहागतस्य पितुर्धनम्, शिष्येण सहोपाध्यायस्य गौः इत्यादौ षष्ठ्यास्तत्त्वाभावात् उक्तवचनेन बलवत्त्वबोधनासम्भवात् तेन न्यायेन तृतीयां वारयित्वा कृतस्य अप्रधानग्रहणप्रत्याख्यानस्यासङ्गतिः । तस्मात् प्रधानान्वयनिमित्तकविभक्तित्वमेव कारकविभक्तित्वम् । क्रियार्थककारकपदेन प्राधान्योपलक्षणात् । प्रधानकार्ये च सर्वतो बलवत्त्वस्य "गतिबुद्धि" (पा०सू० १।४।५२) इति सूत्रे व्यवस्थापनात् तन्मूलिकैवेयं परिभाषा इति प्राचामाशयः । 'नमस्यति देवान्' इत्यादौ चतुर्थ्याः प्रधानधात्वर्थान्वयनिमित्तकत्वेऽपि अन्यत्र उपपदार्थधात्वर्थयोर्मध्ये धात्वर्थस्यैव प्राधान्यात् प्रधानतावच्छेदकक्रियात्वरूपधर्मावच्छिन्नान्वयनिमित्तकत्वं द्वितीयाया एव नतु चतुर्थ्या इति न तेन न्यायेन द्वितीयाया बलवत्त्वप्रतिपादकभाष्यासङ्गतिः । एवमन्तरङ्गमूलकत्वाङ्गीकारेऽपि नैतद्भाष्यविरोधः । 'नमस्यति देवान्' इत्यादौ नमःपदार्थस्य धात्वर्थघटकत्वेन तत्र क्रियाकारकभावेनैव देवादिपदार्थान्वयेऽपि क्रियाकारकभावेनान्वयस्य चतुर्थीप्रत्ययनिमित्तत्वात् । तं विनाऽपि 'हरये नमः' इत्यादौ तदुत्पत्तेः । तस्मात् **कैयटो**क्तं च सम्यगेवेत्याहुः ।

स्यैव कर्तृत्वस्य बोध इति न तद्बोधावृत्तिः ।

**नमस्करोति देवानिति ।** उत्कृष्टनिष्ठो यः (१)स्वनिष्ठापकृष्टत्वबोधः तदनुकूलव्यापाररूप–(२)नमस्कारफलस्य तादृशबोधस्याश्रयतया देवानां कर्मत्वम् । स्वशब्देन प्रयोक्ता । नमःशब्दस्य साक्षात्प्रभृतिषु ऊर्यादिषु वा पाठेन गतित्वात्सत्वम् । (३)एकस्या एवोपपदविभक्तित्वे कारकविभक्तित्वे चायं न्याय इति तु न युक्तम् । 'नमस्यति देवान्' इत्यत्रैतत्परिभाषोपन्यासपरभाष्यविरोधात्, "सहयुक्ते" (पा०सू० २।३।१९) इत्यादिसूत्रस्थभाष्यविरोधाच्च ।

**अलमितीति ।** अलमित्यनेन पर्याप्त्यर्थानां ग्रहणे व्याख्यानादित्यर्थः । तत्र ज्ञापकमप्याह—**तस्मै प्रेति ।** षष्ठ्या अपि साधुत्वं बीजं—**स एषामिति ।**

**आशीर्विवक्षायामिति ।** (४)आशीर्विषयत्वविवक्षायामित्यर्थः । स्वस्त्यर्थः कुशलं मङ्गलं वा । स्वस्तियोगे चतुर्थ्या अवकाशः—स्वस्ति जाल्मायास्तीति तत्त्वकथनम् । कुशलार्थैराशिषीत्यस्यावकाशः स्वस्तिभिन्नाः

---

**(१)स्वनिष्ठापकृष्टत्वेति ।** स्वविशेष्यको यः अपकृष्टत्वबोधस्तदुद्देश्यको व्यापारो नमस्कारस्तत्फलस्येत्यर्थः । तेन प्रयोक्तुः नमस्कार्यापेक्षया अपकृष्टत्वाभावेऽपि उत्कृष्टत्वाभिमाननिरासार्थं न अपकृष्टोद्देशेन न नमस्कारप्रयोगानुपपत्तिः । नापि चैत्रोद्देशेन नमस्कारे मैत्रस्य बोधेऽपि 'मैत्रं नमस्करोति' इतिप्रयोगापत्तिः, तद्बोधस्योद्देश्यत्वाभावादिति बोध्यम् । 'एषोऽर्घः शिवाय नमः' इत्यादौ त्यागो नमःशब्दार्थः । त्यागश्च स्वस्वत्वनिवृत्त्यनुकूलो व्यापार इति लघुमञ्जूषायां विस्तरः ।

**(२)नमस्कारफलस्येति ।** निपातानां द्योतकत्वात् कृधातोरेव फलवाचकत्वात् धात्वर्थफलाश्रयत्वात् कर्मत्वं देवानां सिध्यति । वाचकत्वाभावेऽपि बोधरूपफलनिष्ठविषयताया नमःपदप्रयोज्यत्वाच्चतुर्थीप्राप्तिरिति न्यायाश्रयणमिति भावः । **(३)एकस्या एवेति ।** "तत्र च दीयते" (पा०सू० ५।१।९६) इत्यादौ पाणिन्युच्चारिताया एकस्या एव सप्तम्यादेः उपपदार्थान्वयनिमित्तकसाधुत्वकविभक्त्यर्थबोधतात्पर्येणोच्चरितत्वं, क्रियान्वयनिमित्तकसाधुत्वकविभक्त्यर्थबोधतात्पर्येणोच्चरितत्वं वेति सन्देहे कारकविभक्तेर्बलवत्त्वबोधनेन तदर्थबोधतात्पर्येणोच्चरितत्वनिर्णायिका वाचनिकी परिभाषा इति तेषामाशयः । तदाशयानवबोधमूलकमेव खण्डनमित्याहुः ।

**(४)आशीर्विषयत्वेति ।** एतेन आशिषः स्वस्तिशब्दार्थत्वं निराकृतम् । तस्य तदर्थत्वे 'स्वस्ति गोभ्यो भूयाद्' इति स्वस्तिशब्दयोगे आशीर्लिङः प्रयोगानापत्तेः ।

कुशलार्थाः । स्वस्तिशब्दो(१)ऽनव्ययमपि,

प्रतिगृह्णामि ते धेनुं कुटुम्बार्थे विशेषतः ।
स्वस्तिर्भवतु मे नित्यं सुखञ्चानुत्तमं तथा ॥

इति भविष्योत्तरे प्रयोगात् ।

**मन्यकर्मणि** (पा०सू० २।३।१७) । **तिरस्कार इति** । अनादरो न आदराभावमात्रम्, अपि तु नञोऽधर्मादाविव प्रतिपक्षवाचित्वात्तिरस्कार इति भावः । तत्रानादर इति मन्यकर्मविशेषणं तद्द्योतकं यत्कर्मेत्यर्थः । तेन युष्मच्छब्दाच्चतुर्थी न । तिरस्कारश्च व्याख्यानादपकृष्टनिरूपितोपमेयत्वस्याप्यभावरूप उपमेयेऽत्र गृह्यते न त्वपकृष्टसादृश्यरूपः । तत्प्रतीतिश्च नञ्समभिव्याहारे एव । तृणतुल्यमपि न मन्ये इत्यर्थः । 'तृणाय मत्त्वा रघुनन्दनोऽपि' इत्यादौ नञोऽध्याहारः, तदाह–**न त्वां तृणमिति** । कर्माऽत्र चतुर्थ्यर्थः । **श्यनेति** । न तु यका, व्याख्यानादिति भावः । श्यंस्तूपलक्षणम् । तेन लिडादावपि भवति । तत् ध्वनयन्नाह–**तानादिकयोगे नेति** । **नौकाकेति** । **भाष्ये** येषु प्राणिषु नेष्यते ते नावादयो भविष्यन्तीति येष्विति बहुवचनेन वृत्त्युदाहरणबलेन चैष्वेवानिष्टनिर्णय इति भावः ॥

**गत्यर्थकर्म** (पा०सू० २।३।१२) ॥ कर्मात्रापि चतुर्थ्यर्थः । गत्यर्थेति किम्? आदेनं पचति । कर्मणीति किम्? अश्वेन गच्छति । **चेष्टायां किमिति** । धात्वर्थस्य क्रियारूपत्वात् प्रश्नः । शरीरक्रियाया एव ग्रहणमित्युत्तरम् । **पन्थानमिति** । अध्वशब्दोऽर्थपरो व्याख्यानादिति भावः । **अधिष्ठित इति** । शब्दप्रयोगसमकालिकगन्तृव्यापारजन्यफलाश्रय इत्यर्थः । अध्वपदेन गन्तृव्याप्तोऽर्थ उच्यते, तेन गन्तृयुक्तस्त्रियां 'स्त्रियं गच्छति' इत्यादौ न । स्पष्टञ्चेदं **भाष्ये उत्पथादिति** । उत्पथं सन्त्यज्येत्यर्थः । **इष्यत इति** । न त्वाक्रान्त इत्यर्थः । **उत्पथेनेति** । गन्तुमशक्त इति शेषः ॥ इति चतुर्थी ॥

---

(१) **अनव्ययमपीति** । चतुर्थी तु साहचर्यात् अव्यययोगे एवेति बोध्यम् ।

इति चतुर्थी ।

(१)**ध्रुवमपायेऽपा** (पा०सू० १।४।१४) ॥ ध्रुवं स्थिरम् । अपायो विभागजनको व्यापारः, तदनाश्रयमिति यावत् । विभागश्च न वास्तवसम्बन्धपूर्वको वास्तव एव, किन्तु बुद्धिपरिकल्पितसम्बन्धपूर्वको बुद्धिकल्पितोऽपि । 'माथुराः पाटलिपुत्रकेभ्य आढ्यतराः' इत्यादौ बुद्धिकल्पितापायाश्रयेणैव **भाष्ये** पञ्चमीसाधनात् । कर्तृवारणाय ध्रुवमिति । अन्यथा कर्तृसञ्ज्ञाया इयमपवादः स्यात् । अपायविषये यत् कारकं तद्रूपक्रियाजनकं तदपादानमित्यर्थसम्भवात् । कर्तृसञ्ज्ञा तु पचत्यादियोगे चरितार्था । हरिरप्याह—

अपाये यदुदासीनञ्चलं वा यदि वाऽचलम् ।
ध्रुवमेवातदावेशात्तदपादानमुच्यते ॥ इति ।

स्पष्टञ्चेदं **कैयटादौ** । **भाष्यानुसारिण**स्तु एवं हि 'त्रस्तादश्वात्पतितः'—'धावतः पतितः' इत्यादौ ध्रुवत्वाभावादपादानत्वं न स्यादित्याशङ्क्य "अध्रौव्यस्याविवक्षितत्वमत्र, यतः सतोऽप्यविवक्षा भवति" इति समाहितं **भाष्ये,** तदसङ्गतं स्यात् । त्वदुक्ताध्रुवत्वस्य पतधात्वर्थव्यापाराश्रयत्वस्यात्रासत्त्वेन सतोऽध्रौव्यस्याविवक्षेत्यस्यासङ्गतेः । सिद्धान्तेऽपि त्वदुक्तध्रुवपदार्थकथनमेवोचितमिति तदसङ्गतिश्च । लोकसिद्धातिरिक्तार्थे ध्रुवपदस्य शक्तिकल्पने गौरवञ्च । अतदावेशादित्यस्य हरिकारिकायां तदावेशाविवक्षणादित्यर्थः । (२)तस्मादपाये गतिविशेषे सति यद् ध्रुवम(३)वधिभावोपगमाश्रयत्वे सति (४)तदतिरिक्तस्यावधित्वोपयोगिव्यापारस्यानाश्रयं तदपादानमिति सूत्रार्थः । त्रासादेरवधित्वोपयोगित्वाश्रयणेन शङ्का, 'वृक्षात्पर्णम्' इत्यादौ तस्यासत्त्वान्न तदुपयोगित्वं तस्य, प्रकृते विद्यमानस्यापि तस्याविवक्षितत्वान्न तदुपयोगित्वं तस्येत्युत्तरम् । "ध्रुवमपाये" (पा०सू० १।४।२४) इति तु 'वृक्षस्य पर्णं पतति' इत्यादौ वस्तुतस्तस्य पर्णद्वारा पातजनकत्वात्प्राप्तापादानत्ववारणाय । एवञ्चापाये इति कारके इत्यस्य क्रियाजनक-

---

(१)**ध्रुवमपाये** (पा०सू० १।४।२४) । प्रकृतधात्वर्थप्रधानीभूतव्यापारानाश्रयत्वे सति तज्जन्यविभागाश्रयत्वं ध्रुवत्वं प्राचीनाभीष्टं, तद्विपरीतमाह—(२)**तस्मादि**त्यादि । (३)**अवधिभावोपगमाश्रयत्वे सतीति** । अवधित्वेन विवक्षितत्वे सतीत्यर्थः । (४)**तदतिरिक्तस्य अवधित्वोपयोगिव्यापारस्य**—अवधिताप्रयोजकप्र-

त्वेन विवक्षिते इत्यर्थे तात्पर्यग्राहकं बोद्धव्यम्। ध्रुवग्रहणन्तु कारकान्तराणामिवापादानस्यावधिभावोपगमातिरिक्त (१)व्यापाराभावबोधनाय इत्याहुः।

आपादानत्वशक्तिश्च प्रकृतधात्वर्थविभागाश्रयत्वसमानाधिकरणेति अपादानसमभिव्याहारे विभागोऽपि धात्वर्थ इति बोध्यम्। एवञ्च 'वृक्षात्पतति' इत्यादौ तदपादानकविभागपूर्वकः संयोगः पर्णवृत्तिरिति बोधः। 'वृक्षाद् भूमिं पतति' इत्यादौ वृक्षापादानकविभागपूर्वकसंयोगानुकूलो व्यापार इति बोधः। 'परस्परस्मान्मेषादपसरतः' इत्यादौ मेषपदोपात्तयोरेव क्रियाश्रयत्वात्कर्तृत्वं, परस्परपदोपात्तयोरेव विभागाश्रयत्वादपादानत्वम्। मेषपदोपात्ते तदविवक्षणात्। प्रयोगानुसारित्वाद्विवक्षायाः। विभागपूर्वकं पृष्ठतो गमनमपसरणम्। 'आत्मानमात्मना' इत्यादावन्तःकरणाद्युपाधिकृतभेदवत् शब्दरूपोपाधिकृतभेदाग्रहणे मानाभावात्। शब्दालिङ्गितार्थभानस्यैव सत्त्वाच्चेत्यन्यत्र विस्तरः।

यत्त्वपसरत इति सृधातुना गतिद्वयस्याप्युपादानादेकनिष्ठाङ्गतिं प्रति इतरस्यापादानत्वमविरुद्धमिति, तन्न। वस्तुतस्तन्निष्ठव्यापारयोर्भेदेऽपि सृधातुना निवृत्तभेदस्यैवापायस्योपादानादुभयोरपि तत्क्रियाश्रयत्वेन परत्वात्कर्तृत्वापत्तेः। अत एवैकशेषसूत्रे **भाष्ये** उक्तं 'न वै तिङन्तान्येकशेषारम्भं प्रयोजयन्ति क्रियाया एकत्वात्' इति। 'धनुषा विध्यति' इत्यत्र निःसरच्छरजन्यवेधार्थत्वाद्व्यधेरपादानत्वकरणत्वोभयप्राप्तौ परत्वात् करणत्वं बोध्यम्।

**ग्रामादायातीति**। आयातेर्विभागपूर्वकोत्तरदेशसंयोगानुकूलो व्यापारोऽर्थः। 'वृक्षं त्यजति' इत्यादौ व्यापारव्यधिकरणविभागस्यैव धात्वर्थत्वेन कर्मसञ्ज्ञयाऽपादानत्वस्य बाधः। स्पन्देस्तु न विभागोऽर्थ इति 'वृक्षे स्पन्दते' इत्येव। चलतेस्त्वासनाच्चलित इति प्रयोगादस्त्येव विभागार्थत्वम्। 'सार्थाद्धीयते' इत्यत्र सार्थस्य धात्वर्थप्रधानव्यापाराश्रयत्वेऽपि "अपादाने चाहीयरुहोः" (पा०सू० ५।४।४५) इति ज्ञापकात्कर्मप्रत्ययान्तहीधातुप्रयोगेऽपादानत्वम्। कर्मसञ्ज्ञायाञ्च कर्तृपदं स्वतन्त्रोपलक्षणमिति कर्मणि

---

कृतधात्वर्थस्य, तद्भिन्नस्य वेत्यर्थः। (१)व्यापाराभावबोधनायेति। एतेन सौकर्यादिविवक्षायां 'स्थाली पचति' इत्यादिवत् 'अश्वः पतति' इत्यादयो नेति सूचितम्।

लकारः । सार्थेन त्यज्यते देवदत्त इत्यर्थः ।

**धावत इति** । क्रियाविशिष्टस्याप्यश्वस्य प्रकृतधातूपात्तगत्यनावेशात्, धावनस्याविवक्षणाद्वा ध्रुवत्वं बोद्धव्यम् ।

**जुगुप्सेत्यादि** । (१)जुगुप्सादीनां यद्विषयकत्वेन विवक्षा तदपादानम् । तस्यैव विषयस्य क्रियाजनकत्वरूपकारकत्वेनाविवक्षायां सम्बन्धित्वेन च विवक्षायां 'पापस्य जुगुप्सते' इति षष्ठी भवत्येव सत्यभिधाने । एवमुत्तरसूत्रेष्वपि बोद्धव्यम् । एषां धातूनां स्वार्थपूर्वकबौद्धविश्लेषजनकनिवृत्तिलक्षणया सूत्रेणैव सिद्धेदं वार्त्तिकमुत्तरसूत्राणि च प्रत्याख्येयानिति (२)स्पष्टं **भाष्ये** ।

(३)भयं भी(४)स्त्राणन्त्रास्तदाह—**भयार्थानामिति** । हेतुतृतीयापवादोऽयम् । **अरण्ये इति** । भयाद्यर्थानां योगे कारकमपादानमि-

---

(१)**जुगुप्सादीनामिति** । अनिष्टसाधनत्वज्ञानं जुगुप्सतेरर्थः । तत्समभिव्याहृतपञ्चम्या विषयत्वमर्थः । तथा च 'पापाज्जुगुप्सते' इत्यादौ पापविषयकमनिष्टसाधनत्वज्ञानमिति बोधः । विरमतेस्तु प्रागभावसाधारणकृत्यभावानुकूलो व्यापारोऽर्थः । योगक्षेमसाधारणी चात्र अनुकूलता स्वरूपसम्बन्धविशेषप्रयोजकत्वरूपा । धर्माद्विरमति' इत्यादौ धर्मविषयककृत्यभावानुकूलो व्यापारः उपेक्षाविशेषरूप एव । प्रमाद्यतेस्तु इष्टसाधने वस्तुनि समानदेशत्वसमानकालत्वोभयसम्बन्धेनाधिकारविशिष्टेष्टसाधनत्वाभावज्ञानमर्थः । पञ्चम्यर्थश्च विषयत्वं ज्ञानेऽन्वेति इति दिक् ।

(२)**स्पष्टं भाष्ये इति** । एतेन तत्तदर्थपूर्वकनिवृत्तिलक्षणयाऽपादानत्वसिद्धौ सम्बन्धित्वेन विवक्षायां प्राप्तायाः षष्ठ्या बाधनार्थमिमानीति शङ्का निराकृतेति बोध्यम् ।

(३)**भयमिति** । अनिष्टज्ञानं भयम् । (४)**त्राणमिति** । अनिष्टविरहानुकूलो व्यापारस्त्राणम् । 'चोराद्बिभेति' इत्यादौ पञ्चम्यर्थापादानत्वस्य धात्वर्थैकदेशेऽनिष्टेऽन्वयः । तथा च चोरापादानकानिष्टज्ञानं, चोरापादानकानिष्टविरहानुकूलो व्यापार इति च बोधः । भयहेतुरित्यस्य च भयैकदेशानिष्टहेतुरित्यर्थः । तेन 'चोरात् त्रायते' इत्यादौ चोरतः अनिष्टज्ञानाभावेऽपि अनिष्टजनकत्वस्य तत्र सत्त्वात् न पञ्चम्यनुपपत्तिः । ननु यस्मात् कण्टकादेः अनिष्टं नैवोत्पन्नं ततः पञ्चमी न स्यात् अनिष्टहेतुत्वस्य तत्रासत्त्वादिति चेद्, न । हेतुत्वारोपेणैव 'कण्टकात् त्रायते' इत्यादिप्रयोगाणामिष्टत्वात् । एवमेव आकाशो न पश्यति, घटो न पचति इत्यादिप्रयोगा उपपद्यन्ते । दर्शनादौ आकाशकर्तृत्वादिकमारोप्य तस्यैव निषेधात्, बोधाच्च । शशशृङ्गं नास्तीत्यादिवदित्याहुः ।

त्यर्थेऽविशेषात्सर्वसञ्ज्ञापवादः स्यादिति भावः ॥

(१)**पराजे** (पा०सू० १।४।२६)। असोढो ग्लानिविषयः। एवञ्च पराजेरकर्मकत्वे उदाहरणत्वम्, तदाह—**ग्लायतीत्यर्थ इति। अभिभवतीति।** तिरस्कारानुकूलो व्यापारो धात्वर्थ इति भावः।

**प्रवृत्तिविघात इति।** (२)भक्षणसंयोगादिजनकव्यापाराभावानुकूलो व्यापार इत्यर्थः। **ईप्सित इति।** वारणार्थधात्वर्थफलाश्रय इत्यर्थः। उदाहरणे च तद्धात्वर्थव्यापारजन्यसंयोगादिरूपफलाश्रयत्वाद्यवानामपादानत्वम्। ईप्सित इत्यनेन प्रधानाप्रधानान्यतरव्यापाराश्रयमात्रस्याक्षेपः, कर्मलक्षणे तु तमब्ग्रहणात् (३)प्रकृतधात्वर्थप्रधानभूतव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयस्य ग्रहणमिति भावः।

---

(१)**पराजे** (पा०सू० १।४।२६)। कृत्यसाध्यत्वधीसमानाधिकरणोऽनुत्साहः पराजयतेरर्थः।

(२)**भक्षणसंयोगादीति।** 'यवेभ्यो गां वारयति' इत्यादौ भक्षणजनकव्यापाराभावानुकूलो व्यापारः। 'कूपादन्धं वारयति' इत्यादौ तु संयोगजनकव्यापाराभावानुकूल इति भावः।

(३)**प्रकृतधात्वर्थप्रधानभूतव्यापारेति।** धात्वर्थप्रधानभूतव्यापाराश्रयस्यैव कर्तृत्वात् तमब्ग्रहणात् कर्तुः स्वव्यापारेण आप्यत्वेनेष्टस्य कर्मसंज्ञेत्यर्थे कर्तृत्वस्य प्रत्यासत्त्या प्रकृतधात्वर्थनिरूपितस्यैव ग्रहणे फलवत्त्वरूपाप्यत्वघटकफलस्यापि उपस्थितत्वात् प्रकृतधात्वर्थस्यैव ग्रहणात् प्रकृतधात्वर्थप्रधानव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयस्यैव ग्रहणमित्यर्थः। प्रकृतसूत्रे तु ईप्सित इत्येतावन्मात्रोपादानेन आप्यत्वेनेष्टस्येत्यर्थे आप्यत्वघटकफलस्य उपस्थितत्वात् प्रकृतधात्वर्थस्यैव ग्रहणेऽपि आप्तिक्रियायाः जनकं विनाऽनुपपन्नत्वात् जनकमात्रस्याक्षेपेण कारकस्य प्रकृतधात्वर्थफलाश्रयत्वेन यदिष्टमित्यर्थस्यैव लाभः। कर्तृपदानुपादानेन कर्तुः आप्यत्वेनेष्टमित्यर्थासम्भवात्। प्राधान्यात् कथंचित् कर्त्राक्षेपेण कर्तुः आप्यत्वेनेष्टमिर्थसम्भवेऽपि तस्य पदादनुपस्थित्या प्रकृतधात्वर्थनिरूपितस्यैव तस्य ग्रहणे मानाभावेन प्रकृतधात्वर्थप्रधानभूतव्यापारप्रयोज्यत्वसम्बन्धेन आप्धात्वर्थफले तस्यान्वयासम्भवेन प्रकृतधात्वर्थप्रधानव्यापारप्रयोज्यफलाश्रयस्येत्यर्थो दुरुपपाद एव। ननु कर्तृग्रहणेनैव प्रत्त्यासत्त्या एतदर्थस्य सुलभत्वात् तमब्ग्रहणं व्यर्थमिति चेद्, न। लाघवात् तमब्ग्रहणेनैव एतदर्थलाभसम्भवे कर्तृग्रहणस्य प्रत्याख्येयत्वात्। ध्वनितं चेदं "वारणार्थानाम्" (पा०सू० १।४।२७) इतिसूत्रे माणवकेऽपादानत्ववारणार्थं कृतस्य कर्मणो यदीप्सितमिति न्यासस्य

**अन्तर्धौ** (पा०सू० १।४।२८)। अन्तर्द्धिरन्यकर्तृकस्वकर्मकदर्शनाभावानुकूलो व्यवहितदेशास्थितिरूपस्तद्घटकं यत्कर्तृकदर्शनाभावमिच्छति तदपादानमित्यर्थस्तत्फलितमाह—**व्यवधाने सतीति**। येनेत्यत्र "कर्तृकर्मणोः" (पा०सू० २।३।६५) इति षष्ठी न, सौत्रत्वात्। आत्मन 'इति प्रत्यासत्तिलब्धम्। 'मातुर्निलीयते' इत्यादावाक्षेपलभ्येच्छा बोद्धया। **चोरानिति**। चोरकर्मकदर्शनेच्छाऽभाव इति शाब्दोऽर्थः। स च चोरकर्तृकस्वदर्शनाभावायेति प्राप्तिः। इच्छामात्रस्याक्षेपलभ्यत्वे इव विशिष्टस्याक्षेपलभ्यत्वेऽपि स्यादिति भावः। प्रकृते नान्तार्द्धिरिति न दोषः। येनेत्यस्याभावे हि स्वकर्मकदर्शनाभावं य इच्छति इत्यर्थे कर्तुरेव स्यादतस्तत्। **इच्छतिग्रहणं किमिति**। अन्तर्धौ सति यत्कर्तृकदर्शनस्याभावस्तदपादानमित्यर्थाऽस्त्विति भावः। **सत्यपीति**। अदर्शनेच्छया तदनुकूलव्यापारकरणे दैववशाद्दर्शने सत्यपीत्यर्थः। अन्यथा यत्र दर्शनाभाव एव तत्रैव स्यादिति भावः।

**नियमेति**। उपयोगशब्दस्य तत्रैव रूढेः। नियमो ब्रह्मचर्यादिः। **नटस्येति**। नटजन्यं श्रवणमिति बोधात् कारकत्वम्। नियमपूर्वकविद्यावक्तृत्वाभावान्नेत्युत्तरम्॥

**जनिक** (पा०सू० १।४।३०)॥ प्रकृतिरुपादानकारणं, ब्रह्म च मायाशबलञ्जगदुपादानकारणम्। वृत्तौ हेतुपदमप्युपादानकारणपरमेवेति बोद्धव्यम्। (१)विभाषेत्येव सिद्धे इदमपादानत्वेन बोधनार्थम्। तत्र हि 'गुणे-

---

तमब्ग्रहणात् प्रत्याख्यानेन भाष्ये इति तत्रैव विवरणे स्पष्टम्। फले प्रकृतधात्वर्थत्वांशस्तु न तमब्लभ्यः। तस्य प्रत्यासत्त्यैव लभ्यत्वात्। अत एव कर्तुरीप्सितसूत्रे भाष्ये तमब्ग्रहणाभावे "वारणार्थानाम्" (पा०सू० १।४।२७) इत्यस्यानवकाशत्वमापादितम्। न तु 'पयसा ओदनं भुङ्क्ते' इत्यादौ पयआदीनां कर्मत्वनिवारणं फलमुक्तम्। तस्मात् कर्तुः स्ववृत्तिव्यापारप्रयोज्यत्वसम्बन्धेन आप्धात्वर्थे फलेऽन्वय एव तमब्लभ्यः। फलत्वघटकधातौ शीघ्रोपस्थितिकप्रकृतत्वरूपविशेषणापेक्षया व्यापारप्रयोज्यत्वसम्बन्धेन तत्रान्वयस्यैव यत्नसाध्यत्वाच्चेति दिक्।

(१)**विभाषेत्येवेति**। 'पुत्रात्प्रमोदो जायते' इत्यादौ अनेनैव पञ्चमीति भावः। "यतो वा इमानि भूतानि जायन्ते" इत्यादौ "जनिकर्तुः" (पा०सू० १।४।३०) इति

ऽस्त्रियाम्' इति प्रायिकम्, बाहुलकं प्रकृतेस्तनुदृष्टेरिति (१)वार्त्तिकप्रयोगात् ॥

(२)**भुवः** (पा०सू० १।४।३१) ॥ प्रभवनं प्रथमप्रकाशः प्रग्रहणात् । तदधिकरणमपादानमित्यर्थः । 'प्रभवो जलमूले स्यात् जन्महेतौ पराक्रमे । ज्ञानस्य चादिमस्थाने' इति विश्वः । प्रकाशत इत्यस्य योगे तु न, प्रथमप्रकाशार्थत्वाभावात् । तदाह—**तत्र प्रकाशते इत्यर्थे इति** ।

**ल्यब्लोप इति** । ल्यबन्तशब्दाज्ज्ञाने इत्यर्थः । **कर्मणीति** । प्रत्यासत्त्या ल्यबन्तधात्वर्थस्येति भावः । **प्रासादादिति** । 'फलेभ्यो याति' इत्यत्रेव बोधप्रक्रिया । "आजघ्ने विषमविलोचनस्य वक्षः" इत्यत्र कर्मणः शेषत्वविवक्षया षष्ठी । वक्ष इत्यस्य प्राप्येति शेषः । **गम्यमानाऽपीति** । विशिष्य तद्वाचकपदानुपात्ताऽपीत्यर्थः । 'कस्मात् त्वम्' इत्यादौ 'फलेभ्यो याति' इत्यत्रेव बोधप्रक्रिया ।

**अन्येत्यर्थेति** । तदर्थश्च भेदवान् । अत एव 'घटात् भिन्नः' इत्यादिसिद्धिः ।

**परे तु** "ध्रुवम्" (पा०सू० १।४।२४) इति सूत्रे अपायशब्देन भेदस्यापि ग्रहणम् । "पञ्चमी विभक्ते" (पा०सू० २।३।४२) इत्यत्र विभागार्थकविभक्तपदेन भेदस्य व्याख्यानात् । 'भिदिर् विदारणे' (धा०सू०) इत्यत्र भेदज्ञानविषयत्वमपि विदारणम् । एकत्वेन गृहीतस्य तथा बोधे बुद्धिविदारणस्य तत्रापि सत्त्वात् । अत एव 'घटात् भेदः' इति सिद्धं, तद्योगेऽप्यपादानत्वात् । तस्यैव सम्बन्धत्वेन विवक्षायाङ्घटीयो भेद इत्यपि । अन्यशब्दार्थस्याक्रियात्वात् तद्योगे एतद्विधानम् । अत एव घटः पटो नेत्यादौ

---

पञ्चमी । स्थितिलयाधारत्वश्रवणेन तस्योपादानत्वनिर्णयात् । 'जनितुः प्रकृतिः' इत्येव सिद्धे कर्तृग्रहणं कर्तृसंज्ञकत्वविवक्षार्थम् । तेन मृदो घटं जनयतीत्यादौ नापादानत्वमित्याहुः।

(१)वार्तिकेति । "उणादयो बहुलम्" (पा०सू० ३।३।१) इति सूत्रे इति शेषः । उणादौ पठितानां प्रकृतीनामल्पत्वदर्शनात् बाहुलकमाश्रितमिति तदर्थः ।

(२)भुवः प्रभवः (पा०सू० १।४।३१) । जनिकर्तुरित्यतः कर्तृग्रहणमनुवर्तते । तत्सामर्थ्यात् कर्तृसंज्ञकस्य ग्रहणम् । तेन 'हिमवति गङ्गां भावयति' इत्यादौ अधिकरणत्वाविवक्षायां नेत्याहुः ।

न पञ्चमी । नञो भेदवदर्थकत्वेऽपि अक्रियात्वात् । घटादेक इत्याद्यसाध्वेव । अत एवेतरग्रहणञ्चरितार्थम् । अत एव **भाष्ये**ऽर्थग्रहणं नोक्तमि(१)त्याहुः ।

आराद् दूरसमीपयोः । एतद्योगे "दूरान्तिकार्थैः" (पा०सू० २।३।३४) इति प्राप्तम् । नन्वयं देशवाची न दिक्शब्दः, अत आह—**दिशि दृष्ट इति** । शब्दग्रहणादिति भावः । ते च रूढ्या दिग्विशेषवाचकाः पूर्वादय एव गृह्यन्ते, न ऐन्द्रीककुबादयो व्याख्यानात् । **अवयववाचीति** । तद्वाचिपूर्वादियोगेऽवयविवाचकान्नेत्यर्थः । ज्ञापकस्य सजातीयापेक्षत्वात् । अत एवास्मादयं पूर्वो भागः कायस्येति सिद्धम् । अवयवे पूर्वत्वम् अवयवान्तरापेक्षया प्रथमकालोत्पत्तिकत्वेन बोद्ध्यम् । **अञ्चूत्तरपदस्येति** । दिक्शब्दसाहचर्येण तस्य दिग्वाचकस्यैव ग्रहणं, तेन 'सध्र्यङ्' इत्याद्यर्थं तन्नेति भावः । **बाधितुमिति** । परत्वात्प्राप्तमित्यादिः । यदि तु "षष्ठ्यतसर्थ" (पा०सू० २।३।३०) इत्यत्र प्रत्ययग्रहणात्तस्य श्रूयमाणप्रत्यय एव प्रवृत्तिस्तदेदं माऽस्त्विति तत्त्वमिति **भाष्ये** स्पष्टम् । **दक्षिणा ग्रामादिति** । दक्षिणस्यां दिशीत्यर्थे "दक्षिणादाच्" (पा०सू० ५।३।३६) "आहि च दूरे" (पा०सू० ५।३।३७) इत्याजाही । षष्ठ्यतसर्थेत्यस्यापवादः ।

**प्रभृतियोग इति** । प्रभृत्यर्थयोग इत्यर्थः । "अपादाने पञ्चमी" (पा०सू० २।३।२८) इति सूत्रे "यतश्चाध्वकालनिर्माणं ततः पञ्चमी, कार्तिक्या आग्रहायणी मासे" इति वार्त्तिकप्रत्याख्यानाय "इदमत्र प्रयोक्तव्यं सन्न प्रयुज्यते कार्तिक्याः प्रभृत्याग्रहायणी मासे" इति भाष्येण 'प्रभृ-

---

(१)इत्याहुरिति । अन्ये तु—अन्येति भावप्रधाननिर्देशेन अन्यत्वार्थकयोगे पञ्चमीत्यर्थः । तेन 'घटाद्भेदः' इत्यादीनां सिद्धिः । 'घटादेकः' इत्याद्यपीष्यते एव । 'घटः पटो न' इत्यादौ तु न पञ्चम्यापत्तिः । अन्यार्थकस्य अन्यशब्दसदृशस्य लिङ्गसङ्ख्यान्वय्यर्थकस्यैव ग्रहणात् । 'घटीयो भेदः' इति तु घटस्यायम् इति इदमर्थान्वयविवक्षया साधु । "इतरस्त्वन्यनीचयोः" इति कोशात् नीचार्थकेतरशब्दयोगे तु "पञ्चमी विभक्ते" (पा०सू० २।३।४२) इत्यनेन सिद्धिः । तस्मात् इतरग्रहणं स्पष्टतया भेदविशिष्टार्थकयोगेऽपि पञ्चमीत्यर्थबोधनार्थं सत् प्रपञ्चार्थमेव इत्याहुः ।

तिशब्दाभावेऽपि तदर्थसत्तामात्रेण पञ्चमी' इत्यर्थकेन 'प्रभृत्यर्थयोगे पञ्चमी' इतिवचनसत्त्वस्य भगवता बोधितत्वात्। अन्यथा प्रभृतिपदाभावे पञ्चम्यर्थं वचनस्यावश्यकत्वेन तत्प्रत्याख्यानासङ्गतिरिति भावः। एवञ्च तदर्थकारभ्य-शब्दयोगेऽपि पञ्चमी। यथा "अवीचिमारभ्य मेरुपृष्ठपर्यन्तं भूर्लोको मेरु-पृष्ठादारभ्य ध्रुवपर्यन्तङ्ग्रहनक्षत्रतारागणचित्रितोऽन्तरिक्षलोकः" इति **पातञ्जलभाष्यप्रयोगे**। प्रभृतीत्यस्य चावधिमादायेत्यर्थः। आरभ्येत्यस्यैतदर्थक-तापि। अवधौ पञ्चम्यन्तार्थस्याभेदेनान्वयः। तद्विशेषणत्वेऽपि न द्वितीया। प्रभृत्यर्थयोगे पञ्चमीति **भाष्यकृद्बो**धितवचनात्। आरभ्येत्यस्य गृहीत्वेत्यर्थेन 'अवीचिमारभ्ये'त्यादौ द्वितीया।

वस्तुतोऽवधित्वं तस्य समभिव्याहृतपदार्थनिरूपितं गम्यमानक्रियापेक्ष-मित्यपादानत्वादेवात्र पञ्चमी सिद्धा। (१)कार्तिकीतो विभक्ते—अत एव कार्तिक्यवधिके आग्रहायणीघटिते मासे कार्तिकीमादाय गते आग्रहायणीति बोधः। भवात्प्रभृति आरभ्य वेत्यत्र भवकालाद्विभक्ते—अत एव भवावधिके मरणान्ते काले—भवकालमादाय 'हरिः सेव्यः' इति बोधः। एवमन्यत्राप्यू-ह्यमित्यलं विस्तरेण।

**ज्ञापकादिति**। पञ्चम्यन्तेन समासविधानाज्ज्ञापकादित्यर्थः। अयं भावः—परस्परसाहचर्यात्त्रापपरी वर्जनार्थौ कर्मप्रवचनीयावेव। तद्योगे "पञ्च-म्यपाङ्परिभिः" (पा०सू० २।३।१०) इति वचनात्, लक्षणप्रतिपदोक्त-परिभाषयाऽपपरिनिमित्तकसुबन्तस्यैव ग्रहणाच्च पञ्चम्यैव सिद्धः समासः—तत्साहचर्यादुक्तपरिभाषया चाञ्चूत्तरपदेनापि तन्निमित्तपञ्चम्यैव सिद्धः समासः इति व्यर्थं तत् बहिःशब्देन पञ्चम्यन्तेन समासविधानद्वारा तद्योगे पञ्चम्या अपि (२)ज्ञापनार्थमिति। इदम् "अपपरिबहिः" (पा०सू० २।१।१२)

---

'कार्तिक्या आग्रहायणी मासे' इतिवाक्यजबोधाकारमाह—(१)**कार्तिकीतो विभक्ते इति**। कश्चित्तु कार्तिक्या अव्यवहितोत्तरत्वेन मासे तस्य चान्त्यत्वसम्ब-न्धेनाग्रहायण्यामन्वय इत्याह। (२)**ज्ञापनार्थमिति**। एतेन पञ्चम्येत्यस्य अपादि-योगे चारितार्थ्यात् सामर्थ्यात् अन्यसुबन्तेनैव बहिःशब्दस्य समासः स्यादित्यपास्तम्।

इति सूत्रे **भाष्ये** स्पष्टम् । **पञ्चमीति** । (१)सापीत्यर्थः । तेन करस्य करभो बहिरिति सिद्धम् ॥

**प्रतिनिधि** (पा०सू० १।४।९२) ॥ यस्मादिति पञ्चम्यर्थः सम्बन्धः । अस्मादेव निपातनात् षष्ठ्यर्थे पञ्चमी । प्रतिनिधिप्रतिदानशब्दौ कर्मकि—भावल्युडन्तौ । प्रतिनिधिप्रतिदाने यत्सम्बन्धिनी ततः कर्मप्रवचनीययुक्तात्पञ्चमीत्यर्थः । प्रतिनिधिः सदृशः, प्रतिदानम् दत्ततुल्यमूल्यस्य वस्तुनः प्रत्यर्पणम् । **कर्तृवर्जितमिति** । कर्तृसञ्ज्ञारहितमित्यर्थः । ऋणत्वं वस्तुसन्निमित्तं न तु तृतीयावाच्यकोटिनिविष्टम् । **हेतुभूतमिति** । तेन करणत्वविवक्षायान्तृतीयैवेति भावः ।

**विभाषा गुणे** (पा०सू० २।३।२५) । **योगविभागादिति** । 'बाहुलकं प्रकृतेस्तनुदृष्टेः' इत्युक्तवार्तिकप्रयोगाद् 'गुणेऽस्त्रियाम्' इति प्रायिकमित्यन्ये । **धूमादिति** । (२)धूमपदं स्वज्ञानेऽग्निमत्पदं स्वज्ञानविषये लाक्षणिकं बोद्ध्यम् । **समुच्चयार्थमिति** । स्पष्टञ्चेदं **भाष्ये** । एतेनान्यतरस्य आमङ्गीकार इत्यर्थकं (३)पदद्वयमेतदित्यपास्तम् । विकल्पविषयेऽप्यर्थासङ्गतेश्च ।

**परे** तु द्वितीयासमुच्चयो न फलम् । विना वातं वर्षमित्यादौ ऋतेशब्दयोग इव 'ततोऽन्यत्रापि दृश्यते' (का०वा०) इत्यनेन द्वितीयासिद्धेः । अत एव **भाष्ये** द्वितीयासमुच्चयो नोक्तः । "पञ्चम्या अधिकारे द्वितीयाषष्ठीविषये (४)प्रतिषेधो वक्तव्यः, दक्षिणेन ग्रामं दक्षिणतो ग्रामस्य" इति प्रकृतसूत्रस्थ**भाष्येण** "एनपा द्वितीया" (पा०सू० २।३।३१) इति सूत्रं "षष्ठ्यतसर्थ" (पा०सू० २।३।३०) इत्यतः प्रागिति च सूचितम् ।

---

(१)**सापीति** । ज्ञापकसिद्धस्य असार्वत्रिकत्वादिति भावः । एतेन पञ्चमीप्रकरणे एव बहिर्ग्रहणं कर्तुमुचितमित्यपास्तम् ।

(२)**धूमपदं स्वज्ञाने इति** । धूमज्ञानस्यैव अग्निमज्ज्ञानं प्रति हेतुत्वात् । ज्ञाननिष्ठहेतुहेतुमद्भावस्य विषये आरोप इति भावः ।

(३)**पदद्वयमेतदिति** । द्विविषयनिर्धारणार्थकान्यतरशब्दप्रकृतिकषष्ठ्यन्तम् अन्यतरस्येत्येकम् , आमिति अङ्गीकारार्थकं च द्वितीयमित्यर्थः । (४)**प्रतिषेध इति** ।

अन्यथा (१)सौत्रक्रमत्यागे, (२)न्यायविपरीतपूर्वनिपातकरणे च बीजानापत्तिः। (३)अत एव "करणे च" (पा०सू० २।३।३३) इति सूत्रे द्वितीयासमुच्चयो (४)नेत्याहुः॥

**करणे च** (पा०सू० २।३।३३)॥ करणे तृतीयायाः सिद्धत्वेन पक्षे पञ्चम्यर्थं वचनमिदम्। चकारः तृतीयान्यतरस्यामित्यनुकर्षणार्थः। षष्ठी गापोष्टगितिवत्। **अद्रव्येति**। द्रव्यभिन्नवचनेभ्य इत्यर्थः। द्रव्यपदेनात्र सर्वनामपरामर्शयोग्यं, लिङ्गनिरूपितविशेष्यं वा। स्तोकशब्दो यद्धर्मावेशाद् द्रव्ये स्तोकव्यवहारस्तद्धर्मपरः। स च धर्मोऽल्पादिशब्दप्रवृत्तिनिमित्तमेव। शुक्लादिवच्चैते धर्मवचना अपि। करणत्वञ्च परम्परया। ईदृशार्थ एव च साधुत्वं सूत्रबलादिति स्पष्टम् "अलुगुत्तरपदे" (पा०सू० ६।३।१) इत्यत्र **कैयटे**। करणे किम्? स्तोकम्पचति। असत्त्वरूपफलसमानाधिकरणविशेषणत्वादत्र स्तोकशब्दस्यासत्त्ववचनत्वमिति दिक्।

**दूरान्तिका** (पा०सू० २।३।३५)। अत्र "दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्" (पा०सू० २।३।३४) इत्यतः समुच्चयार्थकान्यतरस्याङ्ग्रहणानुवृत्त्यैवार्थाधिकारात्पञ्चम्याः सिद्धौ चकारो व्यवहिततृतीयासमुच्चयार्थो व्याख्यानादित्याह–**चादित्यादि**। **प्रातिपदिकार्थमात्रे इति**। व्याख्यानादिति भावः।

इति पञ्चमी॥

---

पञ्चम्या इति शेषः। (१)**सौत्रक्रमत्यागे इति**। द्वितीयाषष्ठीत्युक्त्या "षष्ठ्यतसर्थप्रत्ययेन" (पा०सू० २।३।३०) "एनपा द्वितीया" (पा०सू० २।३।३१) इतिसूत्रक्रमत्यागः स्पष्ट एव। (२)**न्यायेति**। अल्पाच्त्वेन षष्ठीद्वितीयेति न्याय्यम्। (३)**अत एव**–द्वितीयासमुच्चयाभावादेव। (४)**नेति**। अत्र द्वितीयानुवृत्तौ सन्नियोगशिष्टत्वाद् उत्तरत्रापि द्वितीयानुवृत्तिरापद्येत। अत्रैव तन्निवृत्तौ तु उत्तरत्रापि सा नानुवर्तत इति भावः।

* इति पञ्चमी *

**षष्ठी शेषे** (पा०सू० २।३।५०) । शेष उक्तादन्यः । स च तत्तद्रूपेण स्वत्वादिः, सम्बन्धत्वेन रूपेण च । कारकविभक्तीनां क्रियाजनकत्वसमानाधिकरणकर्तृत्वादिशक्तिरूपेण बोधकत्वम् । तत्रापि तन्मूलके सम्बन्धे विवक्षिते षष्ठी । तदाह—**कारकेति** । **स्वस्वामिभावादिरिति** । स्वत्वस्वामित्वसमूहः सम्बन्ध इत्यन्यत्र विस्तरः । एवं सर्वत्र बोद्ध्यम् । षष्ठ्यर्थस्य (१)संसर्गविधयैव भानम् । कारकविभक्तिभ्योऽपि क्रियाकारकभावस्य संसर्गविधया भानमित्युक्तम् । **सम्बन्धमात्रविवक्षायामिति** । सम्बन्धत्वेन भाने इत्यर्थः । यद्वा क्रियाकारकभावमूलकसम्बन्धस्यैव विवक्षायां न तु तद्विवक्षायामित्यर्थः । कर्तुरपि तथा विवक्षा "क्तस्य च वर्तमाने" (पा०सू० २।३।६७) इति सूत्रे 'छात्रस्य हसितम्" इत्यादौ **भाष्ये** स्पष्टा । संयोगसम्बन्धावच्छिन्नाधारस्य न तथा विवक्षा । अत एव 'घटवद् भूतलम्' इतिप्रयोगसाधकं मतुप्सूत्रे अस्मिन्निति चरितार्थमिति तत्रैव **भाष्ये** स्पष्टम् । 'लोहितोष्णीषाः' इत्यादावपि सप्तम्यर्थे बहुव्रीहिर्बोद्ध्यः ।

**एधो दकस्येति** । एधः कर्तृ कर्ता वा । दकस्योदकस्येत्यर्थः । एधशब्दोऽदन्तः पुँल्लिङ्गः "कारके" (पा०सू० १।४।२३) इति सूत्रे **भाष्ये** प्रयुक्तः—एधाः पक्ष्यन्ते इति । सान्तः क्लीबोऽपि **हेतौ द्योत्ये**

---

(१)**संसर्गविधयैव भानमिति** । ननु व्युत्पत्तिवादोक्तरीत्या प्रतिबध्यप्रतिबन्धकभावलाघवानुरोधेन प्रकारतयैव भानमिष्यतां किं तद्विरुद्धोक्त्येति चेद्, न । ज्ञानद्वयस्य युगपदसम्भवेन ज्ञानघटितसामग्रीककार्यद्वयासम्भवात् प्रतिबध्यप्रतिबन्धकभावोपगमस्य व्यर्थत्वात् । समूहालम्बनस्यैकस्यापि कार्यद्वयप्रयोजकस्य सम्भवे तु प्रत्यक्षशाब्दात्मकस्यापि एकस्यैव समूहालम्बनात्मकस्य कार्यस्य सम्भवेन प्रतिबध्यप्रतिबन्धकभावोपगमवैयर्थ्यं तदवस्थमेव ।

मनसः परमाणुरूपस्य निरवयवस्य सत्त्वेन युगपज्ज्ञानद्वयासम्भवेन तार्किकाणां कथञ्चित् प्रतिबध्यप्रतिबन्धकभावावश्यकत्वेऽपि 'जन्यत्वेन सावयवं मनः' इति साङ्ख्यमतमनुगच्छतां वैयाकरणानां प्रतिबध्यप्रतिबन्धकभावानभ्युपगम एव । एकदेशावच्छिन्नेनैकस्यापरदेशावच्छिन्नेन मनसाऽपरस्य ज्ञानस्य इति युगपज्ज्ञानद्वयजननसम्भवात् । दीर्घशष्कुलीभक्षणादौ युगपदनेकज्ञानानुभवाच्च । तस्मादभेदवादोक्तकार्यकारणभावलाघवानुरोधेन संसर्गविधयैव भानमङ्गीकार्यमिति दिक् ।

इति। हेताविति वर्तते। हेतुहेतुमद्भावेनेतरान्वये इत्यर्थः। तेन 'अन्नं हेतुं पश्य' इत्यादौ न। **षष्ठीति।** हेतुवाचकादित्यर्थः। **निमित्तेत्यादि।** निमित्तादिप्रयोगे तेभ्यस्तत्समानाधिकरणशब्देभ्यश्चेत्यर्थः। **किन्निमित्तमिति।** प्रथमान्तं द्वितीयान्तञ्च। **प्रायग्रहणादिति।** एवञ्च "षष्ठी हेतुप्रयोगे" (पा०सू० २।३।२६) "सर्वनाम्नस्तृतीया च" (पा०सू० २।३।२७) इति सूत्रे व्यर्थे इति बोद्धव्यम्॥

**षष्ठ्यत** (पा०सू० २।३।३०)। दिक्शब्दात्पञ्चम्यां प्राप्तायामिदम्। (१)"ततः पश्चात्" इत्यत्र तु सार्वविभक्तिकः षष्ठ्यन्तात्तासिः। **षष्ठ्यपीति।** स्पष्टञ्चेदं वृत्तौ। **भाष्ये** तु न दृश्यते। विपरीतं "षष्ठ्यतसर्थ" (पा०सू० २।३।३०) इति सूत्रात्पूर्वम् "एनपा" (पा०सू० २।३।३१) इत्यस्य पाठ इति लभ्यते इति "पृथग्विनाना" (पा०सू० २।३।३२) इति सूत्रे उक्तम्।

**दूरान्तिकार्थैः** (पा०सू० २।३।३४)॥ यदपेक्षं दूरत्वादिकं ततः षष्ठीत्यर्थः। **पञ्चमी चेति।** (२)तस्या एव समुच्चयो, न द्वितीयातृतीययोरपीति भावः॥

**ज्ञोऽविदर्थ** (पा०सू० २।३।५१)॥ अत्र सूत्रेऽविदर्थस्येति छेदो (३)व्याख्यानात्। **सर्पिषो ज्ञानमिति।** जानातेः प्रवृत्तिरर्थः। सर्पिःसम्बन्धिनी प्रवृत्तिरित्यर्थः।

**अधीग** (पा०सू० २।३।५२)॥ अधीगर्थः स्मृतिः। कर्मणि किम्? मातुर्गुणस्मरणम्। करणे शेषेऽनेन षष्ठ्यभावे समासो भवत्येव। अत एवात्र सूत्रे **भाष्ये** शेष इति वर्तत इत्युक्तम्। "प्रतिपदविधाना षष्ठी न

---

(१)**ततः पश्चादिति।** पश्चाच्छब्दयोगे अनेन षष्ठ्या एव युक्तत्वादिति भावः।

(२)**तस्या एवेति।** "पृथग्विना" (पा०सू० २।३।३२) इति साहचर्यात् अन्यतरस्याङ्ग्रहणं समुच्चयार्थम्। तत्र तद्ग्रहणेन पञ्चम्याः समुच्चयात् अत्रापि तस्या एव समुच्चयः। सन्निहितत्वात् तृतीयायाः समुच्चये तु पुनरत्र अन्यतरस्याङ्ग्रहणं व्यर्थं स्यात्। षष्ठीचेत्युक्त्यैव सन्निहिततदनुवृत्तिसम्भवात् इति पदमञ्जर्यां हरदत्तः।

(३)**व्याख्यानादिति।** "विदर्थस्य ज्ञ" इत्येव लघुभूतासन्दिग्धपाठेन सिद्धे "ज्ञोऽविदर्थस्य" इतिगुरुभूतसन्धिघटितपाठमूलकादित्याहुः।

समस्यते" इति (१)एतैः षष्ठीसमासनिषेधात् । **एधो दकस्येति** । एध इति पृथक्पदं, दकशब्द उदकवाची ॥

**रुजार्थानाम्** (पा०सू० २।३।५४)॥ रोगार्थानां (२)धातूनामित्यर्थो व्याख्यानात् । धातोर्भाववचनत्वाव्यभिचारेण सामर्थ्याद्वचन इति कर्तरि ल्युट् । भावशब्देन सिद्धरूपोऽर्थ उच्यते, ल्युट्प्रकृत्यर्थोऽ(३)विवक्षितस्तदाह–**भावकर्तृकाणामिति । रोगकर्तृकामिति च** । रोगोऽत्र क्षयादिः । भावकर्तृकाणां किम् ? श्लेष्मणश्चौररुजा । श्लेष्माऽत्र न भावः । **सर्पिषो नाथनमिति** । सर्पिर्मे भूयादित्याशासनमित्यर्थः ॥

**जासिनि** (पा०सू० २।३।५६) ॥ जसु मोक्षणे इति दैवादिकस्य (४)न ग्रहणम् । जासीति निर्देशाद्, हिंसायामित्युक्तेश्च । निप्रोपसृष्टो हनो निप्रहणः । शब्दपरत्वेऽपि सौत्रत्वाद् "हन्तेः" (पा०सू० ८।४।२२) इति णत्वम् । **चुरादिरिति** । घटादेस्तु न ग्रहणं, दीर्घनिर्देशात् । **'क्राथनम्'** इति घटादेः क्रथेः । क्राथेति सूत्रे निपातनाद् वृद्धिरिति वृत्तिः । **परे** तु एतत्सूत्रप्रामाण्यान्नटसाहचर्य्याच्चायमपि चुरादिर्बोध्यस्तस्याकृतिगणत्वात् । निपातनस्य शेषषष्ठीसन्नियोगशिष्टत्वे कर्मत्वेन विवक्षायां चोरस्य क्राथनमित्यस्यानापत्तिः । सामान्येन निपातने चिण्णमुल्विषये क्रथं क्रथमित्यादेः क्रथयतीत्यादेश्चानापत्तिरित्याहुः ।

**समर्थयोरिति** । समपर्यायसंशब्देन समासः, शकन्ध्वादित्वात् पररूपं वा । **ब्राह्मणपणनमिति** । आयप्रत्ययो वैकल्पिकत्वान्न कृतः । उदाहरणे स्तुतावेवेति नियमादपि न ।

**दिवस्त** (पा०सू० २।३।५८) । **कर्मणि षष्ठी स्यादिति** ।

---

(१)**एतैरिति** । अधीगर्थादिभिः ।

(२)**धातूनामित्यर्थ इति** । यद्यपि रुजाशब्दो दुःखजनकव्याधौ रूढस्तथापि अज्वरेरितिपर्युदासबलात् प्रकृत्यर्थमात्रविवक्षया तदर्थको धातुरेव गृह्यते । कर्मणस्तस्यैव सम्भवाच्चेति भावः । (३)**अविवक्षित इति** । भावस्य वक्तृत्वासम्भवादिति भावः । 'चौरस्य रोगस्य रुजा' इत्यादौ सर्वत्र रुजा पीडेति बोध्यम् ।

(४)**न ग्रहणमिति** । किन्तु जसु ताडने, जसु हिंसायाम् इति चुराद्योर्ग्रहणमित्यर्थः ।

शष इति त्वत्र न सम्बध्यते (१)व्याख्यानात्। अत एव "द्वितीया ब्राह्मणे" (पा०सू० २।३।६०) इति सूत्रं 'गामस्य तदहः सभायान्दीव्येयुः' इत्यत्र नित्यं षष्ठीप्राप्तौ द्वितीयार्थमिति **भाष्ये** उक्तम्। तद् ध्वनयन् तिङन्तमुदाहरति—**शतस्य दीव्यतीति**। यद्यपि पूर्वसूत्रे दिवं पठित्वा तदर्थस्येति त्यक्तुं शक्यते तथापि योगविभाग उत्तरार्थः, शेषइत्यस्यासम्बन्धार्थश्च।

---

(१)व्याख्यानादिति। "विभाषोपसर्गे" (पा०सू० २।३।५९) "द्वितीया ब्राह्मणे" (पा०सू० २।३।६०) इतिसूत्रद्वयारम्भमूलकादित्यर्थः। तथाहि—अत्र शेषे इत्यस्य सम्बन्धे "विभाषोपसर्गे" (पा०सू० २।३।५९) इत्यत्र शेषे इति सम्बध्यते न वा। सम्बन्धे तस्य वैयर्थ्यम्। एतच्च तत्रैवोपपादयिष्यते। तत्र शेषे इत्यस्य असम्बन्धे वेदेऽपि "विभाषोपसर्गे" (पा०सू० २।३।५९) इत्यनेनैव कर्मणि द्वितीयायाः सिद्धौ "द्वितीया ब्राह्मणे" (पा०सू० २।३।६०) इत्यस्य वैयर्थ्यापत्तिः। न च पक्षे प्राप्तषष्ठीनिवृत्त्यर्थं तदिति वाच्यम्। दृष्टानुविधानस्यैव वेदे सत्त्वेन षष्ठ्यापादनासम्भवात्। न च निरुपसर्गे द्वितीयार्थं "द्वितीया ब्राह्मणे" (पा०सू० २।३।६०) इत्यस्य चारितार्थ्यं वक्तुं शक्यम्। "दिवस्तदर्थस्य" (पा०सू० २।३।५८) इत्यत्र शेषग्रहणानुवृत्त्यङ्गीकारे अशेषभूते कर्मणि तेन षष्ठ्या अप्राप्तौ "कर्मणि द्वितीया" (पा०सू० २।३।२) इत्यनेनैव द्वितीयायाः सिद्धत्वात्। न च "द्वितीया ब्राह्मणे" (पा०सू० २।२।६०) इत्यत्र शेषग्रहणानुवृत्त्या कर्मत्वाविवक्षायां द्वितीयार्थं तदिति वाच्यम्। "विभाषोपसर्गे" (पा०सू० २।३।५९) इत्यत्र विच्छिन्नत्वेन उत्तरत्रानुवृत्तेरयुक्तत्वात्। नच क्र्योगे पुनर्द्वितीयाविधानं समासाभावार्थमिति वाच्यम्। "किमुदाहरणं, गां प्रति दीव्यन्ति। पूर्वेणाप्येतत्सिद्धम्। इदं तर्हि, गामस्य तदहः सभायां दीव्येयुः" इति "द्वितीया ब्राह्मणे" (पा०सू० २।३।६०) इतिसूत्रस्थभाष्योक्त्या अत्र "दिवस्तदर्थस्य" (पा०सू० २।३।५८) इति षष्ठी प्राप्नोति" इति **कैयटा**क्त्या च क्र्योगे तस्याप्रवृत्तेर्लाभात्। तस्मात् "दिवस्तदर्थस्य" (पा०सू० २।३।५८) इत्यत्र शेषपदसम्बन्धाङ्गीकारे "विभाषोपसर्गे" (पा०सू० २।३।५९) इत्यत्र तत्सम्बन्धे तस्यैव वैयर्थ्यम्, विभाषोपसर्गे इत्यत्र तदसम्बन्धे "द्वितीया ब्राह्मणे" इत्यस्य वैयर्थ्यम्—इति दिव इत्यादित्रिसूत्र्याम् उभयोः सार्थक्याय तदसम्बन्ध आवश्यकः। तथा च उपसर्गयोगे 'शतस्य शतं वा प्रतिदीव्यति' इति द्वितीयाषष्ठीविधानार्थं "विभाषोपसर्गे" (पा०सू० २।३।५९) इति, 'गामस्य तदहः सभायां दीव्येयुः' इत्यत्र "दिवस्तदर्थस्य" (पा०सू० २।३।५८) इति षष्ठीं बाधित्वा द्वितीयाविधानार्थं "द्वितीया ब्राह्मणे" (पा०सू० २।३।६०) इति च चरितार्थमिति दिक्।

**विभाषोप** (पा०सू० २।३।५९)। अत्रापि शष इति (१)न सम्बध्यते, तदर्थस्येति च वर्तते । तदाह—**पूर्वयोगेति** । अत एवेयं प्राप्तविभाषेति "नवेति" (पा०सू० १।१।४४) इतिसूत्रे **भाष्ये** स्पष्टम् ।

**कृत्वाऽर्थप्रयो** (पा०सू० २।३।६४)। **शेषे किमिति** । "दिवस्तदर्थस्य" (पा०सू० २।३।५८) इत्यादिना विच्छेदादधिकरणकारक एव षष्ठीविधानं युक्तमिति प्रश्नः । **द्विरह्नीति** । वृत्त्यादिप्रामाण्यान्मण्डूकानुवृत्तिः स्वीकार्येत्युत्तरम् । "अधीगर्थ" (पा०सू० २।३।५२) इति सूत्रे "कर्मादीनामविवक्षा शेषः" इति **भाष्ये** (२)बहुवचनेनात्रापि शेषपदसम्बन्धबोधनाच्च । वस्तुतस्तु "कर्माश्रयषष्ठीविषये सूत्रोपात्तसकर्मकाणामकर्मकवद्वचनम्" इतिवार्तिकप्रत्याख्यानाय शेषे इति वर्तते इति **भाष्यकृ**तोक्ते परेण "शेषश्च कः" इति पृष्टे "शेषे षष्ठी" (पा०सू० २।३।५०) इतिसूत्रोक्तं "कर्मादीनामविवक्षा शेषः" इति सिद्धान्तिना स्मारितम् । नैतावता "कृत्वोर्थ" (पा०सू० २।३।६४) इत्यत्र तत्सम्बन्धो लक्ष्यते । (३)किञ्चैतद्भाष्यबलात् "दिव" (पा०सू० २।३।५८) इति सूत्रेऽपि शेषप-

---

(१)**न सम्बध्यते इति** । अत्र शेषग्रहणानुवृत्तौ इदं सूत्रं व्यर्थं स्यात् । "दिवस्तदर्थस्य" (पा०सू० २।३।५८) इत्यनेनैव समासाभावस्य सिद्धत्वात् । न च अनेन विकल्पेन षष्ठीविधाने पक्षे "शेषे षष्ठी" (पा०सू० २।३।५०) इत्यस्य प्रवृत्त्या पक्षे समासप्रवृत्तिरेवास्य फलमिति वाच्यम् । तथापि "नोपसर्गे" इति न्यासेन "दिवस्तदर्थस्य" (पा०सू० २।३।५७) इत्यस्य निषेधे शेषषष्ठ्यां समासविकल्पेन रूपद्वयस्य सिद्धौ विभाषाग्रहणवैयर्थ्योपपत्तेर्दुर्वारत्वादिति भावः ।

**कृत्वोर्थ** (पा०सू० २।३।६४) । (२)**बहुवचनेनेति** । अधिकरणघटितेऽस्मिन् सूत्रे शेषपदासम्बन्धे 'कर्मादीनामविवक्षा शेषः' इति बहुवचनासङ्गतिः । एतद्व्यतिरिक्ते कर्मकरणयोर्द्वयोरेवोपलम्भादित्यर्थः । (३)**किञ्चैतद्भाष्यबलाद् दिव इति सूत्रेऽपीति** । वार्तिकसत्त्वे कर्मत्वेनैव षष्ठ्याः कर्म बोधकत्वेऽपि 'शतस्य दीव्यते' इतीष्यते । वार्तिकाभावे शेषाननुवृत्तौ तद् न स्यादिति भावः । एतेन "दिव" इति सूत्रे शेषाननुवृत्तावपि वार्तिकाभावेऽपि शेषत्वविवक्षयैव 'शतस्य दीव्यते' इत्यत्र षष्ठी, अकर्मकत्वाद्भावे लकारश्च सिध्यत्येवेति तदभावेऽपि एतत्प्रयोगसिद्धौ न विरोधः" इत्यपास्तम् । "दिवस्तदर्थस्य" इत्यनेन कर्मणि षष्ठ्यामकर्मकत्वाभावेन भावे लकारस्य वार्तिकमते इष्टस्य असिद्ध्यापत्तेस्तदवस्थत्वात् । शेषग्रहणानुवृत्तौ तु न तेन कर्मणि

दसम्बन्ध आवश्यकः। अन्यथा वार्तिकरीत्या 'शतस्य दीव्यते' इति भावे इष्टस्य प्रयोगस्यासिद्धिः। अत एव वार्तिकव्याख्यायाम् "अधीगर्थादयः (१)प्रेष्यब्रूपर्यन्ताः कर्माश्रयपदेनोच्यन्ते" इति **कैयटः**। एवञ्च शेषइत्यनुवृत्त्या वार्तिकप्रत्याख्यानवत् एत(२)त्सूत्रद्वयप्रत्याख्याने एव **भाष्य**तात्पर्यम्। "द्वितीया ब्राह्मणे" (पा०सू० २।३।६०) इतिसूत्रस्थ**भाष्यं** तु वार्तिकरीत्येत्याहुः।

किञ्च "यदा कर्म विवक्षितं भवति तदा षष्ठी न भवति स्मराम्यहं मातरम्" इति **भाष्ये** उक्तम्। त्वद्रीत्या तु यदा कर्मादि विवक्षितं भवतीति वदेत्। (३)एवञ्च "ज्ञोऽविदर्थस्य" (पा०सू० २।३।५१) इत्यत्रापि तदसम्बन्ध एव। एवञ्च तद्योगे न कदापि तृतीया। 'शतं दीव्यति'इत्यादि च सिद्ध्यति। "अधीगर्थ" (पा०सू० २।३।५२) इत्यादौ च मण्डूकानुवृत्तिरिति सुधियो विभावयन्तु॥

---

षष्ठी किन्तु भावे एवेति न तत्र भावे लकारानुपपत्तिः। ननु भाष्यकृता शेषानुवृत्त्या कथं वार्तिकं प्रत्याख्यातम्, वार्तिकसत्त्वे कर्मत्वेनैव षष्ठ्याः कर्मबोधकत्वं, तदभावे तु नैवेति फलभेद इति चेन्न। बोधवैलक्षण्येऽपि "वसेस्तव्यत् कर्तरि णिच्च" इत्यादीनां प्रत्याख्यानदर्शनात्। (१)**प्रेष्यब्रूपर्यन्ता इति**। कृत्वोर्थेत्यत्र तत्सम्बन्धे तु कृत्वोर्थपर्यन्ता इति वदेत्। दिव इत्यत्र तत्सम्बन्धेऽपि इदं मानम्। तस्यापि तदन्तर्गतत्वात्, दिवभिन्ना इत्यनुक्तेश्चेति भावः। (२)**सूत्रद्वयप्रत्याख्याने एवेति**। "विभाषोपसर्गे" (पा०सू० २।३।५९) "द्वितीयाब्राह्मणे" (पा०सू० २।३।६०) इति सूत्रद्वयेत्यर्थः। "दिवस्तदर्थस्यानुपसर्गे" इत्येव पाठ्यमिति तदाशयः। कश्चित्तु "व्यवहृपणानुपसृष्टदिवां समर्थानाम्" इति पाठ्यम्। "दिवस्तदर्थस्य" (पा०सू० २।३।५८) विभाषोपसर्गे" (पा०सू० २।३।६०) इति सूत्रद्वयं न कार्यम्। एवं "द्वितीयाब्राह्मणे" (पा०सू० २।३।६०) इत्यपि न कार्यमित्याशय इत्याह। (३)**एवं च ज्ञोऽविदर्थस्येति**। यदा कर्म विवक्षितमित्यादिभाष्यप्रामाण्येन कर्मग्रहणे एव शेषग्रहणानुवृत्तिलाभेन "ज्ञोऽविदर्थ" (पा०सू० २।३।५१) इत्यत्रापि तदसम्बन्धो लभ्यते इति भावः। यदि च प्रकृताभिप्रायकत्वेन "यदा कर्म" इत्यादिभाष्यं योज्यते; तदा तु मण्डूकानुवृत्तौ प्रमाणाभावः।

**केचित्तु** शेषानुवृत्तिरेव प्रयत्नसाध्या। आरम्भसामर्थ्येन समासाभावकल्पने गौरवात्। अननुवृत्तिस्तु स्वारसिकी। एवं च कर्मघटिते उक्तभाष्यस्य [illegible]त्वेऽपि उत्तरत्र मानाभावादननुवृत्तिरिति रीत्यैतद्ग्रन्थं योजयन्ति।

**कर्तृकर्मणोः** (पा०सू० २।३।६५) । अत्र शेष इति न सम्बद्ध्यते, सूत्रवैयर्थ्यापत्तेः । "कृद्योगा षष्ठी समस्यते" इति वार्तिकेन तत्र समासस्येष्टत्वात् । **कृतिरिति** । भावे क्तिन् । कृष्णः कर्ता । **जगत इति** । कर्मेदम् । कर्तृसाहचर्यात् । कर्मापि धात्वर्थे भेदेनान्वय्येव गृह्यते । 'तेन स्तोकं पाकः' इत्यादौ (१)न क्रियाविशेषणात् षष्ठी । किञ्च क्रियाविशेषणेन 'स्तोकम्पाचकः' इत्यादौ न समानाधिकरणसमासो, नापि सुप्सुपेत्यादिः । सुबन्तार्थविशेष्येणान्वयेना(२)सामर्थ्यात् । "द्वितीयाश्रित" (पा०सू० २।१।२४) इत्यादेस्तु सामर्थ्यादवयवद्वारके सामर्थ्ये प्रवृत्तिः । द्वितीयाप्रकरणोक्तपरेतुमतरीत्या वा सामर्थ्यम् । अत एव "पूजनात्पूजितम्" (पा०सू० ८।१।६७) इति सूत्रे दारुणं यथा भवति तथाऽध्यापक इत्यर्थकस्य 'दारुणाध्यापकः' इत्यस्य सिद्ध्यर्थं (३)मलोपवचनमारब्धं **भाष्ये** । (४)अन्यथा समासेन सिद्धे (५)तद्व्यर्थं स्यात् । एतदेव **भाष्यं** ततः षष्ठ्यभावेऽपि मानम् । अन्यथा षष्ठीसमासस्य "तृजकाभ्यां कर्तरि" (पा०सू० २।२।१५) इत्यादिनिषेधैरुक्तसामर्थ्येऽपि प्रवृत्त्या तत्समासेनैव सिद्धौ मलोपवचनं व्यर्थमेव स्यादिति बोध्यम् । न च (६)भिन्नपदत्वेऽपि तथाप्रयोगसाधुत्वार्थं—मलोपवचनमिति वाच्यम् । (७)तथा सति वाक्ये मलोपश्च वक्तव्यः इति वदेत् । अत एव **कैयटेन** क्रियाविशेषणं दारुणादयस्तत्र वैयधिकरण्यात् समासाभावात् मलोपो विधीयते इत्युक्तम् ।

---

**कर्तृकर्मणोः कृति** (पा०सू० २।३।६५) । **(१)न क्रियाविशेषणात् षष्ठीति** । स्तोकादेः कर्मणः पाकक्रियायामभेदेनान्वयात् । **(२)असामर्थ्यादिति** । प्रधानन्यायेन विशेष्यद्वारकमेव सामर्थ्यं गृह्यत इति भावः । षष्ठीसमासे तु "तृजकाभ्याम्" (पा०सू० २।२।१५) इत्यादिगमकादवयवद्वारकसामर्थ्यस्यापि ग्रहणम् इत्यन्यत् । **(३)मलोपवचनमारब्धमिति** । अन्यथाषष्ठ्येवात्रापि स्यादिति मकारो न लभ्येतेति भावः । **(४)अन्यथेति** । अवयवद्वारकसामर्थ्यमादाय प्रकृतेऽपि समासस्वीकारे । **(५)तद्व्यर्थं स्यादिति** । समासे कृते विभक्तेर्लुकि मस्यैवाभावे मलोपवचनं व्यर्थं स्यात् । **(६)भिन्नपदत्वेऽपीति** । समासस्य वैकल्पिकत्वेन तदभावे वाक्ये मलोपार्थं तद्वचनं चरितार्थमिति भावः । **(७)तथा सतीति** । वाक्ये एव मलोपार्थं

सुप्सुपेत्यादिसमासो (१)न सार्वत्रिक इति तदाशय इत्यलम् ।

**कृति किमिति ।** कर्तृकर्मभ्यां क्रिया सन्निधाप्यते । तद्वाची तु धातुरेव । कारकान्वययोग्यतावच्छेदकरूपेण साध्यत्वेन धातुभिरेव तदुपस्थितेः । 'शत्योऽश्वः, आङ्भ्रिकः' इत्यादौ तद्धितान्न तेन रूपेणोपस्थितिरिति न तत्र कारकाणामन्वयः, एतद्भाष्यप्रामाण्यात् । अत एव हिरुगादियोगे न कर्मादिसञ्ज्ञा । एतेन 'देवदत्तेन शत्योऽश्वः' इत्यादौ षष्ठीनिवृत्त्यर्थं कृद्ग्रहणमित्यपास्तम् । अधिका खारी द्रोणेनेत्यत्र हेतौ तृतीया । क्रियायोगाभावात् कर्तुः कर्तृत्वाभावे जनकत्वरूपहेतुत्वसत्त्वात् । धातोश्च द्वये प्रत्ययास्तिङः कृतश्च । तत्र तिङ्योगे "न लोक" (पा०सू० २।३।६९) इति निषेधात् कृद्योगे एव भविष्यतीति किं तेन । "नलोक" (पा०सू० २।३।६९) इति सूत्रे कृदव्ययस्यैव ग्रहणं तु अव्ययार्थस्य ये कर्तृकर्मणी इति व्याख्यानेन सिद्धम् । "उभयप्राप्तौ" (पा०सू० २।३।६६) इत्यत्र बहुव्रीहिस्तु "एकाचो द्वे" (पा०सू० ६।१।१) इत्यादाविवान्यपदार्थस्याशाब्दत्वेऽपि व्याख्यानाद्भविष्यति । न च भेदिका देवदत्तस्य काष्ठानामित्यादौ गुणभूते णिच्प्रकृत्यर्थकर्तरि षष्ठ्यर्थं करोतीति कृदिति कर्तृपरं तदिति वाच्यम् । तृतीयावत्तत्र षष्ठ्या अपि विनैव यत्नसिद्धेरिति प्रश्नः ।

**तद्धित इति ।** (२)तद्धितान्तशक्तिग्रहमात्रप्रयोज्योपस्थितिविषयक्रियायाः कर्तरि कर्मणि च मा भूदित्यर्थः । उदाहरणे सकर्मकप्रकृतिक-

---

तद्वचनस्य सार्थक्ये सति । (१)**न सार्वत्रिक इति ।** विस्पष्टं पटुर्विस्पष्टपटुरित्यादौ प्रधानेन सामर्थ्याभावेऽपि सुप्सुपेति समासस्य **भाष्य**कृता कृतत्वात् । वस्तुतस्तु "अन्यथा समासेन" इत्यादिग्रन्थश्चिन्त्य एव । नितान्तं दारुणाध्यापक इत्याद्यर्थं मलोपवचनावश्यकत्वात् । समासे "वृत्तस्य च विशेषणं न" इति न्यायेन दारुणपदार्थे नितान्तादिविशेषणान्वयानापत्तेः । तस्मात् षष्ठ्यापत्तौ मकारस्य दुर्लभत्वान्मलोपवचनासङ्गत्यापत्त्या क्रियाविशेषणे षष्ठी न भवति, समासस्तु असामर्थ्यात् न भवतीत्येव सारमिति दिक् ।

(२)**तद्धितान्तशक्तिग्रहमात्रप्रयोज्योपस्थितिविषयक्रियाया इति ।** शक्तिश्चात्र आनुभाविकी आकाङ्क्षास्थानीया, उपस्थितिश्च वाक्यार्थबोधः । एवञ्च तद्धितान्तपर्याप्तानुभाविकशक्तिग्रहमात्रप्रयोज्यशाब्दबोधविषयक्रियायाः कर्तरि कर्मणि च

भावक्तान्तस्येदृशवृत्तिमात्रविषयताया भाष्यसम्मतत्वेन तस्य केवलस्य क्वाप्यप्रयोगेण तद्धितान्यसमुदायशक्त्यैव क्रियोपस्थापकत्वात् (१)कृद्ग्रहणात्कृ-

षष्ठी मा भूदित्यर्थः। (१)कृद्ग्रहणादिति। तत्सामर्थ्यात् कृदन्तपर्याप्तानुभाविकशक्तिग्रहप्रयोज्यशाब्दबोधविषयक्रियानिरूपितकर्तृकर्मणोः षष्ठी इति सूत्रार्थः। 'कृष्णस्य कृतिः' 'तण्डुलानां पाचकः' इत्यादौ च तमबादिसमभिव्याहारं विनाऽपि पाकादिक्रियानिष्ठविशेष्यतानिरूपितकर्मत्वकर्तृत्वान्यतरसम्बन्धावच्छिन्नतण्डुलादिनिष्ठप्रकारताकबोधस्योदयात् तादृशबोधं प्रति तण्डुलादिपदसमभिव्याहृतकृदन्तपाचकादिपदस्यैव कारणत्वेन कृदन्तशक्तिग्रहप्रयोज्यबोधीयक्रियानिष्ठविशेष्यतानिरूपितकर्तृत्वकर्मत्वान्यतरसम्बन्धावच्छिन्नप्रकारताप्रयोजकत्वं 'तण्डुलानां पाचकतमः' इत्यादावपि अस्त्येवेति तत्रापि षष्ठी भवत्येव। 'कृतपूर्वी कटम्' इत्यादौ तु पूर्वं कर्माविवक्षया भावे प्रत्यये पश्चात् कर्मान्वयस्य तद्धितविषये एव भाष्यप्रामाण्यात् स्वीकारेण कृधात्वर्थनिष्ठविशेष्यतानिरूपितकर्मत्वसम्बन्धावच्छिन्नकटादिनिष्ठप्रकारताकबोधं प्रति कटादिपदसमभिव्याहृतकृतपूर्वीतितद्धितान्तस्यैव कारणत्वात् न कटादीनां कृदन्तपर्याप्तशक्तिग्रहप्रयोज्यबोधविषयक्रियानिरूपितं कर्मत्वमिति न ततः षष्ठीति भावः।

एतेन "कृतमिति व्यस्ते कृतपूर्वीति वृत्तौ च विद्यमाने कृतपदे एकस्या एव क्रियाविषयकबोधानुकूलायाः शक्तेः सत्त्वेन 'कृतपूर्वी' इत्यत्र कृदन्तशक्तिग्रहप्रयोज्योपस्थितिविषयत्वं क्रियायां नास्तीति दुर्वचम्" इति शङ्का समाहिता। एवमेव च 'देवदत्तेन कृतम्'इत्यादौ क्तान्तस्यार्थवत्त्वेन कृद्ग्रहणपरिभाषया कृदन्तत्वात्प्राप्तप्रातिपदिकसञ्ज्ञाया अर्थवत्समुदायविषयकेण समासग्रहणनियमेन वारणं सङ्गच्छते। अत एव च 'देवदत्तो गार्ग्यः' इत्यादौ देवदत्तोगार्ग्येत्यस्य सुरहितस्यार्थवत्त्वाभावेन समासग्रहणेनाव्यावृत्तौ प्राप्तायां प्रत्ययग्रहणपरिभाषया प्रातिपदिकसञ्ज्ञा भाष्ये वारिता। देवदत्तकर्तृककरणकर्मरूपार्थस्य 'देवदत्तेन कृतपुत्रः' इति वाक्यादपि प्रतीतेः सुरहिते एवाकाङ्क्षास्थानीयानुभाविकी शक्तिः। सुरहिताद्देवदत्तोगार्ग्येत्यस्मात्तु न देवदत्ताभिन्नो गार्ग्य इति प्रत्यय इति तत्र सुसहिते एव सेति सुधीभिर्विचार्यताम्।

न च 'कृतपूर्वी कटम्' इत्यत्र "न लोका" (पा०सू० २।३।६९) इति निषेधादेव षष्ठी न स्यादिति कृद्ग्रहणाभावेऽपि नात्र दोष इति वाच्यम्। कृतपूर्वी कटमित्यस्य कर्तव्यपूर्वी कटमित्येतदुपलक्षणत्वात्। निष्ठान्तपर्याप्तानुभाविकशक्तिग्रहप्रयोज्यबोधविषयक्रियाकर्तृकर्मणोरेव "नलोक" (पा०सू० २।३।६९) इत्यनेन षष्ठीनिषेधाच्च। यद्वा "निष्ठा" (पा०सू० ३।२।१०२) इत्यनेन नात्र क्तः, किन्तु "नपुंसके भावे क्तः" (पा०सू० ३।३।११४) इत्यनेन। एवञ्च अनेन निषेधप्राप्तौ "नपुंसके भावे क्तस्य योगे षष्ठ्या उपसङ्ख्यानम्" इति वार्तिकेन षष्ठी प्राप्ता कृद्ग्रहणान्न। यद्यपि वार्तिकमिदं शेषत्वविवक्षया भाष्यकृता प्रत्याख्यातं तथापि वार्तिकरीत्यैवेदमुदाहरणमिति केचिदाहुरिति दिक्।

दन्तशक्तिग्रहप्रयोज्योपस्थितिविषयक्रियाकर्तृकर्मणोर्ग्रहणम् , न चात्र तथा । 'तण्डुलानां पाचकतरः' इत्यादौ च पाचकादेः पृथक्प्रयोगेण तच्छक्तिग्रहस्यापि सत्त्वेन कृदन्तशक्तिग्रहप्रयोज्योपस्थितिविषयत्वं क्रियाया अस्त्येवेति भवत्येव षष्ठी । अत एव तद्धिते माभूदित्येवोक्तं, न तु ताद्धिताधिक्येऽपीति । **भाष्ये**ऽपि ताद्धितस्य ये कर्तृकर्मणी तत्र मा भूत्कृतो ये कर्तृकर्मणी तत्रैव यथा स्यादित्येवोक्तम् ।

**कृतपूर्वीति** । अत्र कर्मविशेषस्य तत्तद्रूपेण प्रागन्वयाविवक्षयाऽकर्मकत्वाद्भावे क्ते "पूर्वादिनिः" (पा०सू० ५।२।८६) इति तद्धितः । तदनन्तरं तु विशेषरूपेण कर्मयोगो भवत्येव । तत्रोक्तरीत्या षष्ठ्यभावेऽनभिहितत्वाद् द्वितीया । एवं रीत्या साधुत्वेऽत्रत्यभाष्यमेव मानम् । वृत्तेः पूर्वं कर्मान्वयाभावाच्च सापेक्षत्वाद् वृत्तिर्न स्यादिति न शङ्क्यम् । एवम् 'अधीती व्याकरणे' इत्यादावपि बोद्धयम् । तदुक्तं **भाष्ये**—यदा वाक्यं न तदा प्रत्ययः, यदा प्रत्ययः सामान्येन तदा वृत्तिरिति । न तदा प्रत्ययः— न तदा भावे प्रत्ययः । धातोः सकर्मकत्वात् । यदा प्रत्ययः—भावे इति शेषः । तदा वृत्तिरेव । सा च वृत्तिर्न कदापि कर्मक्तान्तेनेत्याह । सामान्येनेति । कर्मविशेषस्य तत्तद्रूपेण प्रागन्वयाविवक्षाविशिष्टो योऽर्थः तदर्थकधातुप्रकृतिकक्तान्तेनेत्यर्थः । इयमेव कर्मणोऽविवक्षा नाम । अनेन तादृशक्तान्तस्य वाक्ये न प्रयोग इति स्पष्टमेवोक्तम् । प्रयोगानुरोधिनी हि विवक्षेति तद्भावः । न चाविवक्षितकर्मतया भावे क्तसाधनयत्नो व्यर्थः, नपुंसके भावे इत्यनेन सकर्मकेभ्योऽपि सिद्धेरिति वाच्यम् । तस्याप्यकर्मकेभ्य एवेष्टेः । अत्र चेदमेव **भाष्यं** मानम् ।

ददैर्दुःखस्य मादृग्भ्यो धायैरामोदमुत्तमम् ।
लिम्पैरिव तनोर्वातैश्चेतयन् स्याज्ज्वलो न कः ॥

इति भट्टिपद्यम् । मादृग्भ्यो दुःखं ददद्भिरुत्तमामोदं पुष्पादीनां गृहीत्वा मादृशां दत्तस्य दुःखस्य पोषकैर्मादृशां शरीरं लिम्पद्भिरिववातैः को मादृक् विरहाग्निव्याप्तश्चेतयन् ज्वलः ज्वलन्निव न स्यादिति तदर्थः । दाधातोः पोषणार्थाद्धाञश्च "ददातिदधात्योः" (पा०सू० ३।२।१३९) इति शणौ,

लिम्पेः शः, ज्वलेर्णं इति । जयमङ्गलाश्लोकव्याख्याप्येतज्जातीयैव तत्रेति दिक् । तत्र धायैरामोदमुत्तममित्यत्र (१)गृहीत्वेत्यध्याहृत्य तद्योगे द्वितीया बोद्धया ।

**उभयोः प्राप्तिर्यस्मिन्निति ।** तेनैकनिमित्तत्वलाभादोदनस्य पाको ब्राह्मणानाञ्च प्रादुर्भाव इत्यादौ विभिन्नक्रियाकर्तृकर्मणोः षष्ठीप्राप्तौ नायं नियम इति भावः । प्राप्तिपदेन चो(२)भयोः प्रयोग एवायं निषेध इति ध्वनितम् । **स्त्रीप्रत्यययोरिति ।** "स्त्रियां क्तिन्" (पा०सू० ३।३।९४) इत्यधिकारविहितयोरित्यर्थः । **नायं नियम इति ।** तेनो-

---

**(१)गृहीत्वेति ।** एतेन "तदर्हम्" (पा०सू० ५।१।११७) इति निर्देशात् अस्यानित्यत्वकल्पनं मनोरमोक्तं व्यर्थमिति ध्वनितम् ।

**उभयप्राप्तौ कर्मणि । (पा०सू० २।३।६६)। (२)उभयोः प्रयोगे एवेति ।** ननु सति प्राप्तिपदे यत्र कर्तृकर्मणोरुभयोरपि कृदन्तार्थेऽन्वयः सम्भवी तत्रैवायं नियमः प्रवर्तते, तदभावे तु यत्राविवक्षितकर्मतया कर्मान्वयस्य नैव योग्यता तत्रापि 'चैत्रस्य पाकः' इत्यादौ एतत्कृतेन 'उभयोः कर्मण्येव षष्ठी' इति नियमेन कर्तरि षष्ठी न प्रवर्तेत इति तदर्थं प्राप्तिपदस्य चारितार्थ्येनोभयोः प्रयोगे एवायमित्यर्थे प्रमाणाभाव इति चेन्न । एवं सत्यकर्मकेष्वेव कर्तरि षष्ठी स्यात् , सकर्मकेषु तु सति सम्भवे कर्मण्येवेति "अकर्मके कर्तरि कृति" ततः "कर्मणि" इति योगविभागेन सिद्धौ उभयोर्ग्रहणसामर्थ्याद्यत्रोभयोरन्वययोग्यता तत्रैव प्रवृत्तिसिद्धौ पुनः प्राप्तिग्रहणाद् , "कृत्वोऽर्थप्रयोगे" (पा०सू० २।३।६४) इत्यतः प्रयोगग्रहणानुवृत्तेः, "आत्ममाने खश्च" (पा०सू० ३।२।८३) इतिसूत्रस्थभाष्यप्रामाण्याच्च यत्रोभयार्थकं पदं श्रूयते तत्रैवेत्यर्थस्य सम्भवात् । "आत्ममाने" (पा०सू० ३।२।८३) इति सूत्रे भाष्ये हि "आत्ममाने इत्यात्मग्रहणं परमाने माभूत् इत्येतदर्थम् । क्रियमाणेऽपि तस्मिन् प्राप्नोति । कुतः । आत्मन इति कर्तरि षष्ठी, मान इति भावे घञ् । नैष दोषः । आत्मन इति कर्मणि षष्ठी । ननु कर्तर्यपि प्राप्नोति । एवं तर्हि आत्मग्रहणसामर्थ्यात् कर्मणि षष्ठी विज्ञास्यते" इत्युक्तम् । उभयोः प्रयोगमन्तराऽपि नियमप्रवृत्तौ तु प्रकृते "उभयप्राप्तौ कर्मणि" (पा०सू० २।३।६६) इति नियमेन कर्मषष्ठ्याः सिद्धत्वेन आत्मग्रहणसामर्थ्येन कर्मषष्ठ्याः साधनं भाष्यकृतो विफलं स्यात् । तत्फलं तु "अथ शब्दानुशासनम्" इत्यादौ यत्र सत्यामपि कर्त्रन्वययोग्यतायाम् आचार्यादिरूपकर्तृबोधकं पदं न श्रूयते तत्रास्य नियमस्य न प्रवृत्तिरिति समासः सिद्धः । एतत्प्रवृत्तौ तु "कर्मणि च" (पा०सू० २।३।११६) इति निषेधात् समासो न स्यात् । "उभयप्राप्तौ" (पा०सू० ३।३।६६) इत्यनेन षष्ठ्यभावे तु न समासनिषेधः । इति–शब्दार्थकचकारेण 'कर्मणि' इत्येवं विहितषष्ठ्या एव समासनिषेधादिति भावः ।

भयत्रापि षष्ठी भवत्येवेति भावः । **भेदिकेति ।** धात्वर्थनिर्देशे ण्वुल्, सन्नन्ताद्भिदेः "अ प्रत्ययात्" (पा०सू० ३।३।१०२) इत्यकारप्रत्ययः । **शेषे इति ।** नियमस्यायं विकल्पः । 'इत्येके' इत्येतल्लब्धमर्थं स्पष्टप्रतिपत्तये आह—**केचिदिति ।** अकाकारभिन्ने कृन्मात्रे इत्यर्थः । **अनुशासनमिति ।** अनुशिष्यन्तेऽऽसाधुभ्यो विविच्ये बोद्ध्यन्ते येनेति करण ल्युट् ।

मत इत्यादौ "मतिबुद्धि" (पा०सू० ३।२।१८८) इति वर्तमाने क्तः ।

**इदमेषामिति ।** कर्तरि षष्ठी । सकर्मकेभ्यस्त्वधिकरणे क्ते कर्तृकर्मणोर्द्वयोरपि षष्ठी, इदमेषां भुक्तमोदनस्य । "उभयप्राप्तौ" (पा०सू० २।३।६६) इति तु मध्येऽपवादन्यायेन "कर्तृकर्मणोः" (पा०सू० २।३ ६५) इत्यस्यैव नियम इति बोध्यम् ।

**न लोका** (पा०सू० २।३।६९)। **लादेशा इति ।** लकारसम्बन्धिन इत्यर्थः, तेन (१)'ददिर्गाः' इति सिद्धम् । केवललस्य क्वापि प्रयोगाभावादेवं व्याख्यातम् । **कुर्वन्निति ।** तृन्प्रत्याहारघटकस्तु नायम् । तृशब्दस्य तद्घटकत्वेऽपि शतुस्तद्घटकत्वाभावात् । लिडादेशकस्वादियोगे लिट्सदृशकिकिनोर्योगे च निषेधार्थं (२)तस्यावश्यकत्वाच्च । **उ इति ।** उकारेण व्याख्यानात्तदन्तविधिः, व्यपदेशिवद्भावेनोकारस्यापि । "सनाशंस" (पा०सू० ३।२।१६८) इति, 'अलंकृञ्" (पा०सू० ३।२।१३६) इति च उइष्णुचौ । **घातुक इति ।** "लषपतपद" (पा०सू० ३।२।१५४) इत्युकञ् , वृद्धिस्तत्वम् । **कमेरिति ।** उकान्तस्येति शेषः । इदञ्च भाषायामेव । भाषायामिति भाष्योक्तेः । **निष्ठेति ।** एतदपवादतया **भाष्ये** वार्तिकं पठ्यते—नपुंसके भावे क्तस्य योगे षष्ठ्या उपसङ्ख्यानं छात्रस्य हसितमिति । इदञ्च प्रतिपदोक्तत्वात् "नपुंसके भावे क्तः" (पा०सू० ३। ३।११४) इतिसूत्रविहितक्तान्तयोग एव । (३)अत एव 'भ्रान्तं देशम्'

---

(१)**ददिर्गा इति ।** अत्र किप्रत्ययस्य लादेशत्त्वाभावात् यथाश्रुते निषेधो न स्यात् । लकारसम्बन्धिन इति व्याख्याने तु तस्य लिड्वत् इत्यतिदेशात् स सिध्यतीति भावः । (२)**तस्येति ।** लग्रहणस्येत्यर्थः ।

(३)**अत एवेति ।** अस्य वार्तिकस्य "नपुंसके" (पा०सू० ३।३।११४) इति

इत्यादौ "गत्यर्थाकर्मक" (पा०सू० २।३।११२) इत्यनेन क्ते नानेन षष्ठी। नपुंसके भावे क्तस्तु नात्र । तस्याप्यकर्मकेभ्य एवेष्टेः । अविवक्षितकर्मतयाऽकर्मकत्वेन क्तस्तु 'कृतपूर्वी' इत्यादिवृत्तिविषये एवेत्युक्तम् । (१)एवञ्च इह 'अहः सुप्तम्' इत्यादौ (२)परत्वेन "क्तोऽधिकरणे च" (पा०सू० ३।४।७६) इत्यनेन भावे क्ते शेषत्वविवक्षयैत्र षष्ठीसाधनस्यावश्यकत्वेन इदं शेषत्वविवक्षया **भाष्ये** प्रत्याख्यातम् ।

(३)वार्तिकेन चानेन कारकषष्ठीनिषेधविषये शेषत्वविवक्षा नेति ज्ञाप्यते । शेषत्वविवक्षया भाष्योक्ततत्प्रत्याख्याने तु अनभिधानात् क्तातिरिक्तविषये (४)न सा । (५)"पूरणगुण" (पा०सू० २।२।११) इति सूत्रे **भाष्ये** ध्वनितामिदम् । तत्र हि "सति किमुदाहरणं, ब्राह्मणस्य कुर्वन्, नैतदस्ति कारकषष्ठीनिषेधात्, शेषषष्ठ्या तु ब्राह्मणस्य कटमित्यर्थेनासामर्थ्यात्" (६)इत्याद्यर्थकमुक्तमिति **परे** ।

**अधीयन्निति**। "इङ्धार्योः शत्रकृच्छ्रिणि" (पा०सू०३।२।१३०) इति शता । **द्विषन्निति** । "द्विषोऽमित्रे" (पा०सू० ३।२।१३१) इति शता । **शेषे षष्ठी त्विति** । इदाञ्चिन्त्यमि(७)त्युक्तं परैः ।

---

विहितक्तप्रत्ययविषयत्वादेव 'श्रान्तं देशम्' इत्यत्र देशपदान्न षष्ठीत्यर्थः ।

**(१)एवञ्चेति** । षष्ठीविधायकस्य वार्तिकस्य "नपुंसके भावे" (पा०सू० ३।३।११४) इति विहितक्तप्रत्ययविषयत्वेचेत्यर्थः । **(२)परत्वेनेति** । "नपुंसके भावे क्तः" (पा०सू० ३।३।११४) इति बाधित्वेति शेषः ।

**(३)वार्तिकेन चानेनेति** । सर्वत्रोत्सर्गतः शेषत्वविवक्षायां तु अस्य वार्तिकस्यानुत्थानमेव स्यादिति भावः ।

**(४)न सेति** । न शेषत्वविवक्षेत्यर्थः । अनेन "सर्वोऽयं कारकषष्ठ्याः प्रतिषेधः शेषे षष्ठी तु स्यादेव" इति मूलोक्तमयुक्तमिति ध्वनितम्। अत्रैव मानमाह–**(५)पूरणगुणेतीति** । **(६)इत्याद्यर्थकमुक्तमिति** । यदि तु क्तातिरिक्ते कृति शेषत्वविवक्षा भवेत् तदा तु शत्रन्तयोगे शेषत्वविवक्षा नास्तीत्यर्थकं नैतदस्तीत्युक्त्वा कटादिपदार्थान्वयविवक्षया शेषषष्ठ्यां तु असामर्थ्यात् समासाभावमुपपाद्य कृतं सद्ग्रहणप्रत्याख्यानं भाष्योक्तमसङ्गतं स्यात् । तस्मादनेन क्तातिरिक्ते कृति शेषत्वविवक्षा नेति बोध्यते इति भावः । वार्तिकभाष्ययोर्विरोधपरिहारस्तु यथोत्तरं मुनीनां प्रामाण्याद्बोध्यः ।

**(७)इत्युक्तं परैरिति** । क्तातिरिक्तविषये न सेत्यादिना ।

**अकेनो** (पा०सू० २।३।७०)॥ अत्र यथासंख्यं नेष्यते। अक-स्याधमर्ण्येऽसम्भवादाह—**भविष्यत्यकस्येति**। वर्षशतस्य पूरक इत्यादौ 'एतत्कर्मकयाजनकर्तारः' इत्यर्थके 'अङ्ग यजतां लप्स्यन्तेऽस्य याजकाः' इत्यादौ च षष्ठी भवत्येव। कर्तृमात्रार्थके "ण्वुल्तृचौ" (पा०सू० ३।१।१३३) इति ण्वुलि पदान्तरसम्बन्धेन भविष्यत्त्वप्रतीतावपि अकस्य तत्रा-वृत्तेः। "तुमुन्ण्वुलौ" (पा०सू० ३।३।१०) इति ण्वुल् तु भविष्यतीत्य-धिकृत्य विधानाद्भविष्यदर्थक एवेति भावः। **व्रजङ्गमीति**। "गमेरिनिः" (उ०सू०) इत्यौणादिक इनिः। स च भविष्यति "भविष्यति गम्यादयः" (पा०सू० ३।३।३) इत्युक्तेः। गामीति पाठे बाहुलकाद् वृद्धिः। **शत-न्दायीति**। "आवश्यकाधमर्ण्ययोः" (पा०सू० ३।३।१७०) इति णिनिः। आवश्यके णिनावप्ययं निषेधः। सूत्रे आधमर्ण्यपदेन तत्सूत्रोक्ता-र्थोपलक्षणात्। अत एव "अंशं हारी" (पा०सू० ५।२।६९) इति निर्देशः सङ्गच्छते। तत्र हि आवश्यके णिनिः। न च तत्र भविष्यदर्थकत्वेन सिद्धिः, भूतवर्त्तमानयोरावश्यकत्वबोधनस्य वैफल्येन भविष्यत एव ततो बोधादिति वाच्यम्। वस्तुतो भविष्यतो बोधेऽपि तत्त्वेनाबोधात्। णिनेस्त-दर्थकत्वाभावाच्च। अत एवावश्यङ्कारी कटस्येति वृत्त्युदाहृतं सङ्गच्छते। तत्र हि नानेन णिनिः, (१)अवश्यम्पदोपादानात्। किन्तु "सुप्यजातौ" (पा०सू० ३।२।७८) इत्येवेति **नव्याः**॥

**कृत्यानाम्** (पा०सू० २।३।७१)। "कर्तृकर्मणोः" (पा०सू० २।३।६५) इति नित्ये प्राप्ते विभाषा। कर्मनिवृत्त्यर्थं कर्त्तृग्रहणम्। **अनु-वर्त्तत इति**। निषेधोऽयं कर्त्तरि कर्मणि च। "कर्तरि वा" इति त्वनु-भयप्राप्तिविषयमिति वृत्तिकैयटादयः। व्रजमित्यत्र "गुणकर्मणि वेष्यते" इति विकल्पस्तु न, कृत्यातिरिक्ते चरितार्थस्य तस्य 'दोग्धव्या गावः पयः कृष्णेन' इत्यादौ गुणकर्मण उक्तत्वात् प्रधाने चरितार्थेनानेन परत्वाद्बाधात्।

**तुल्यार्थैर्योग इति**। तुल्यत्वार्थैरित्यर्थः। अत एवातुलोपमा-

(१)अवश्यम्पदोपादानादिति। उक्तार्थानामप्रयोगादिति भावः।

भ्यामिति चरितार्थम् । अत एव पर्युदासादनव्ययोग एवेदं, तेन इवशब्दयोगे न ।

**चतुर्थी चाशिषि** (पा०सू० २।३।७३) । आशीर्विषयक्रियान्वय्यर्थकात् प्रातिपदिकाच्छ्वारके आयुष्यादियोगे चतुर्थीषष्ठ्याविात्यर्थः । अत एवैतदर्थकचतुर्थ्यायन्तेन सुखहितादिभिर्न समासः । उभयोरपि क्रियान्वयेन परस्परमसामर्थ्यात्, अत एव हि तेन चतुर्थीसमासविधानं तद्योगे चतुर्थीज्ञापकमित्या(१)करोक्तं सङ्गच्छते । यत्तु वृत्तावुद्देश्यविधेयभावेनानन्वयादाशीर्विषये च तथाऽन्वयान्न समास इति । तन्न, वृत्तावपि प्राप्तत्वादिपर्यालोचनेन 'लोहितोष्णीषाः' इत्यादौ (२)तथान्वयदर्शनात् । **भाष्ये** तथान्वये वृत्तेरसाधुताया—अनुक्तेश्चेति समासवादे मञ्जूषायां विस्तरः । **व्याख्यानादिति** । सूत्रेऽर्थशब्दः पृथङ्निमित्तमिति भावः । **भाष्ये** तु नैतद् दृश्यते ।

इति षष्ठी ॥

**आधारो** (पा०सू० १।४।४५)॥ "कारके" (पा०सू० १।४।२३) इत्यधिकारात्क्रियाजनके एतत्प्रवृत्त्योपस्थितत्वादाधारः क्रियाया एव । तत्रेप्सिततम—स्वतन्त्रपदाभ्यां साक्षात्क्रियाधारयोः कर्मकर्तृसञ्ज्ञाभ्यां (३)बाधा-

---

**(१)आकरोक्तं सङ्गच्छते इति** । अनेन सुखहितादियोगेऽपि चतुर्थ्यां सामर्थ्येन चतुर्थीसमासोपपत्तौ समासविधानसामर्थ्याद् "हितयोगे च" (का०वा०) इति कल्पनं **भाष्यकृतो**ऽयुक्तं भवेदिति भावः ।

**(२)तथान्वयदर्शनादिति** । प्राप्तमुष्णीषमुद्दिश्य अप्राप्तलौहित्यमात्रविधानदर्शनात्, अभ्यासलोपश्चेत्यादावपि अभ्यासोद्देशेन लोपविधाने समासदर्शनात् 'पृथगुपस्थितयोरेव उद्देश्यविधेयभावेनान्वयः' इति नियमो नाश्रीयते इति भावः ।

*** इति षष्ठी ***

**(३)बाधादिति** । अत एव 'गृहं प्रविशति' 'मोक्षमिच्छति' इत्यादौ न सप्तमी । 'मोक्षे इच्छाऽस्ति' इत्यादौ तु श-प्रत्ययोपात्तसिद्धावस्थापन्नेच्छारूपकर्तृद्वारा अस्तिक्रियायामन्वयात् अधिकरणत्वम् । धात्वर्थसाध्यावस्थापन्नेच्छायामन्वये तु कर्मत्वमेव । 'ग्रामं गच्छति' इत्यादौ ग्रामस्य संयोगरूपफलाधारत्वं विना देवदत्तादिरूपकर्तृ-

त्परम्परया तदाश्रयस्य ग्रहणम्। परम्परा च कर्तृकर्मद्वारिकैव व्याख्याना-दित्याह—**कर्तृकर्मद्वारेति**। यद्यपि कालस्य साक्षात्क्रियापरिच्छेदकत्वं तथापि तदधिकरणं कर्तृकर्मद्वारैव। तथैवानुभवात्। साक्षात्तदाधारत्वेऽपि स्वरितत्वप्रतिज्ञानात्परम्पराधारस्य ग्रहणम्। किञ्च साक्षात्तदाधारत्वे कर्तृत्व-मेव तस्य स्यात्। कालः पचति भूतानीतिवत्। एवञ्च क्रियान्वयोऽप्यस्य कर्त्राद्यन्वयद्वारैव। यस्य यद्द्वारा कारकत्वं तस्य तद्द्वारैव क्रियान्वय इति व्युत्पत्तेः। अत एव 'अक्षशौण्डः' इत्यादौ समासः। अत्र आसक्त्यादिक्रि-यान्तर्भावेण बोधाननुभवात् "क्रियाद्वारा सामर्थ्यम्" इति (१)**कैयटाद्युक्तं** न युक्तम्। 'मूले वृक्षः कपिसंयोगी' इत्यादावस्तिक्रियामध्याहृत्य तस्याः स्वकर्तृकपिसंयोगिवृक्षद्वारा मूलवृत्तित्वादाधारत्वम्। (२)विशिष्टवृक्षस्य मूल-वृत्तित्वबोधेऽन्यत्रावयवे (३)तद्विशिष्टवृक्षाभावप्रतीतेः। कपिसंयोगे तदव-च्छेद्यत्वं फलतीति दिक्।

**चकारादिति**। प्रातिपदिकार्थे इति शेषः। **त्रिधेति**। तत्र सक-लावयवव्याप्तौ व्यापकाधारत्वम्। यथा तिलेषु तैलम्। इदमेव मुख्यमधि-करणमिति "स्वरितेन" (पा०सू० १।३।११) इत्यत्र "साधकतमम्"

---

द्वारा क्रियाश्रयत्वासम्भवात् न कर्तृद्वारा क्रियाश्रयत्वविवक्षयाऽधिकरणत्वम्। अन्त-रङ्गत्वात् कर्मत्वेन बाधात्। यदा तु संयोगसमानाधिकरणव्यापारो गम्यर्थस्तदा "ग्रामं गच्छति" इत्यादिप्रयोगोपपत्तिरिति आकडारसूत्रे विवरणे स्पष्टम्।

(१)**कैयटाद्युक्तमिति**। 'अक्षशौण्डस्य धनम्' इत्यादौ कर्तृकर्मद्वाराऽपि क्रिया-न्वयोपपादनासम्भवात् आसक्त्यादिक्रियान्तर्भावेण वृत्तिकल्पनाया आवश्यकत्वात् सर्वत्र तथैव वृत्तिनिर्वाहे अधिकरणकारकस्य परम्परया क्रियान्वयकल्पनमयुक्तमिति **कैयटाद्याशयः**। 'अक्षशौण्डस्य धनमस्ति' इत्यादौ उद्देश्यवाचके लक्षणाश्रयणेऽपि 'अक्षशौण्डः' इत्यादौ विधेयवाचके लक्षणाश्रयणस्यायुक्तत्वात् अक्षविषयकशौण्डत्व-स्यैव विवक्षितत्वाच्च न तत्र लक्षणाश्रयणमिति कर्तृद्वारैव तत्र अधिकरणकारकान्वय इति आञ्जस्येन तत्र वृत्तिरुपपद्यते इति **नवीनाशय** इति दिक्।

(२)**विशिष्टवृक्षस्येति**। कपिसंयोगविशिष्टवृक्षस्येत्यर्थः। (३)**तद्विशिष्ट-वृक्षाभावप्रतीतेरिति**। संयोगस्याव्याप्यवृत्तित्वादिति भावः। 'शिरसि मे वेदना' इत्यादि तु अवच्छेद्यावच्छेदकभावस्यापि आधाराधेयभावनियामकत्वादुपपादनीय-मिति दिक्।

(पा०सू० १।४।४२) इत्यत्र च **भाष्ये** स्पष्टम्। उप—समीपे—श्लेषः, सम्बन्धस्तत्कृतमौपश्लेषिकम्, अत एव "इको यणचि" (पा०सू० ६।१।७७) इत्यादावौपश्लेषिके आधारे सप्तम्युक्ता "संहितायाम्" (पा०सू० ६।१।७२) इति सूत्रे **भाष्ये**। तत्राजादिसामीप्यमेवेगादीनाम्। "यन्मासेऽतिक्रान्ते दीयते तस्य मास औपश्लेषिकमधिकरणम्" इत्युक्तं "तत्र च दीयते" (पा०सू० ५।१।९६) इति सूत्रे **भाष्ये**। "तदस्मिन्नधिकम्" (पा०सू० ४।१।६७) इति सूत्रे च **भाष्ये** स्पष्टमिदम्। 'कटे आस्ते' इति तु नौपश्लेषिकोदाहरणं युक्तम्। उक्तभाष्यविरोधात्। यद्वा, एकदेशावच्छेदेन श्लेषेऽपि श्लेषस्य समीपमुपश्लेषं तत्कृतमिति व्युत्पत्त्यौपश्लेषिकत्वमित्यभिप्रायेण तदुदाहरणम्। तदेतत् सर्वं गौणमधिकरणं, 'गङ्गायाङ्गावः' इत्यादिकञ्चेति "स्वरितेन" (पा०सू० १।३।११) इत्यादौ **भाष्ये** स्पष्टम्। गौणोऽप्याधारादिः सप्तम्यादिशक्य एवेति बोद्धव्यम्। एतदतिरिक्तं सर्वं वैषयिकम्। अधिकरणत्वशक्तिमांश्चाधिकरणविभक्त्यर्थः।

**इन्विषयस्येति**। इनो विषयस्येन्प्रकृतेः क्तान्तस्य कर्मणीत्यर्थः। तेन 'कृतपूर्वी कटम्' इत्यत्र न। उदाहरणे न कर्मणि क्तः, अभिहितत्वेन सप्तम्यनापत्तेः। किन्तु भावे। **इष्टादिभ्यश्चेति**। तत्र हि श्राद्धमनेनेत्यतोऽनेनेति वर्तते। अत्र कर्मशब्देन कालादिव्यतिरिक्तमेव गृह्यते व्याख्यानात्, तेन 'मासमधीती व्याकरणे' इत्यत्र नेति **कैयटः**।

**साध्वसाधु** (का०वा०)। शेषषष्ठ्यपवादोऽयम्। "साधुनिपुणाभ्याम्" (पा०सू०२।३।४२) इत्येव सिद्धे अनर्चार्थमत्र साधुग्रहणम्। तेन तत्त्वकथनेऽपि भवति। सूत्रेऽर्चाग्रहणन्तु (१)निपुणार्थम्।

**निमित्तादिति**। निमित्तवाचकात् सप्तमी भवति, तस्य निमित्तस्य प्रत्यासत्त्या (२)स्वान्वयिक्रियाकर्मणा योगे इत्यर्थः। निमित्तञ्चात्र क्रिया-

---

(१)**निपुणार्थमिति**। तथाच सूत्रे साधुग्रहणं व्यर्थमिति भावः।

(२)**स्वान्वयिक्रियाकर्मणेति**। दार्शनिकास्तु कर्म क्रिया तस्या योगे सम्बन्धे निमित्तवाचकात् सप्तमी भवतीति वार्त्तिकार्थः। निमित्तं तु यत्प्राप्तीच्छाप्रयोज्या, यत्प्रयोजिका वा क्रिया तदुभयम्। तत्राद्ये 'चर्मणि द्वीपिनम्' इत्यादौ सप्तमी। अन्त्ये

फलम् । एवञ्च फलं सप्तम्यर्थः । **चर्मणीति** । चर्मणः फलत्वञ्च हननस्य तल्लभेच्छाधीनत्वात् । कर्मसम्बन्धश्च स्वरूपसन्नेव निमित्तम् । द्वीपिचर्मणोरण्डकोशमृगयोश्च समवायः, इतरयोः संयोगः । मुक्ताफलाय करिणं रघुवीरेत्यादौ "क्रियार्थोपपदस्य" (पा०सू० २।३।१४) इति चतुर्थी । घ्नन्तीति शेषः । मुक्ताफलान्याहर्तुमित्यर्थः ॥

**यस्य च भा** (पा०सू० २।३।३७) । भावः क्रिया । ततः—ज्ञापकक्रियाश्रयवाचकात् । तेन गोपदद्दुह्यमानपदयोरुभयोरपि सप्तमी सिद्धा । क्रियाश्रयः कर्त्ता कर्म च । तत्र 'ब्राह्मणेष्वधीयानेषु गतः' इति कर्तर्युदाहरणम् । कर्मण्याह—**गोष्विति** । तत्र काचित् क्रिया स्वाधारकालेनान्यां क्रियां परिच्छिनत्ति यथा प्रकृते, काचित्तु स्वाधारकालाव्यवहितपूर्वकालेन यथा गोषु धोक्ष्यमाणास्वित्यादौ, काचित्स्वाधारकालानन्तरकालेन यथा गोषु दुग्धास्वित्यादौ । ज्ञापकत्वं सप्तम्यर्थस्तस्य च भावलक्षणमित्युक्तेः क्रियायामेवान्वयः । लक्ष्यलक्षणभावः शब्दबोध्य एवैतच्छास्त्रप्रवृत्तौ निमित्तं न तु तस्य भूयोदर्शनादिरूपमानान्तरेण ग्रहणापेक्षेति बोद्धव्यम् । अन्यथोदिते आदित्ये तमो नष्टमित्यादावेव स्यान्न तु प्रकृते कदाचिद्धि गोषु दुह्यमानास्वसौ गतः । इदञ्च यत्र मानान्तरेण ज्ञातस्वरूपस्यार्थस्य कालविशेषादिज्ञापनार्थं शब्दप्रयोगस्तत्रैव प्रवर्तते **भाष्यस्वरसात्** । "राहूपरागे स्नायाद्" इत्यत्र राहूपरागपदेन तदाश्रयकाल उच्यते इति अधिकरणसप्तम्येव । विवाहे नान्दीमुखङ्कुर्यादित्यत्र विवाहपदेन तत्प्राक्काल उच्यते 'गवान्दोहे आगतः' इत्यत्राप्यधिकरणसप्तम्येवेत्यन्यत्र विस्तरः ।

**अर्हाणाम्** (का०वा०) ॥ कर्तृत्वार्हाणाम् । **तद्वैपरीत्ये**—अर्हा-

---

'अविद्यारजनीक्षये यदुदेति' इत्यादौ सप्तमी । तथा च 'चर्मणि द्वीपिनम्' इत्यादौ प्राप्तीच्छैव सप्तम्या अर्थः । 'अविद्यारजनीक्षये' इत्यादौ च अनुकूलत्वे सप्तम्यर्थः । अनुकूलत्वे च चतुर्थीतृतीया—सप्तम्यो भवन्तीति न परस्परं तासां बाध्यबाधकभाव इत्याहुरिति विभक्त्यर्थनिर्णये । एतदभिप्रायेणैव "तत्र स्थितौ यत्नोऽभ्यासः" इति सूत्रे स्थिताविति निमित्तसप्तमीति वाचस्पतिमिश्रैरुक्तम् । महाभाष्यकारास्तु अत्रोदासीना एवेति दिक् ।

णामकर्तृत्वं अनर्हाणां च कर्तृत्वे इत्यर्थः । वाक्यचतुष्टयमेतत् । कर्तृसमर्पकादकर्तृसमर्पकाच्च सप्तमीत्यर्थः । सप्तम्यां तदन्वयिक्रियावाचकाद्धातोरप्रथमासामानाधिकरण्याच्छतृशानचावेव । लक्ष्यलक्षणभावाविवक्षार्थमिदम् ।

**सत्स्विति ।** सन्तो हि तरणक्रियाकर्तृत्वार्हाः । तरणक्रियाकर्तृसत्सम्बन्धि असत्कर्तृकमासनमिति बोधः । स्वक्रियाधिकरणकालवृत्तित्वं सम्बन्धः ।

**असत्स्विति ।** तरणक्रियाकर्तृत्वानर्हाणां तदकर्तृत्वमत्र । यद्यपि स्थितिक्रियाकर्तृत्वार्हत्वेनेदं सिद्धं तथाप्यसतां तरणक्रियानर्हत्वादिकमपि बोधविषय इति भावः ।

**सत्स्विति ।** तरणक्रियाकर्तृत्वार्हाणां तदकर्तृत्वमत्र ।

**असत्स्विति ।** तरणकर्तृत्वानर्हाणां तत्कर्तृत्वमत्र ॥

**षष्ठी चा** (पा०सू० २।३।३८) । 'अनादरे' इति विषयसप्तमी, "यस्य च भावेन" (पा०सू० २।३।३७) इत्याद्यनुवर्तते । अनादरे गम्यमाने सति यस्य क्रियया क्रियान्तरं लक्ष्यते ततः सप्तमी षष्ठी चेत्यर्थः । फलितमाह—**अनादराधिक्य इति ।** लक्ष्यलक्षणभावः षष्ठ्यर्थः । अनादरविशिष्टं प्रव्रजनं धात्वर्थः । तत्र षष्ठी तात्पर्यग्राहिका, (१)अनादरश्च प्रत्यासत्त्या पुत्रादिविषयक एवेति भावः ॥

**स्वामीश्वरा** (पा०सू २।३।३९) । शब्दपरत्वाद् "विरूपाणामपि" (का०वा०) इति नैकशेषः । पर्यायान्तरसङ्ग्रहापत्त्या स्वाम्यर्थ इति नोक्तम् । दीयते इति व्युत्पत्त्या दीयमानांशरूपं दायमादत्ते इति सोपसर्गादप्यादन्तादत एव निपातनात्कः । गवादिकं च दीयमानेऽन्वेति । नित्यसाकाङ्क्षत्वाद् वृत्तिः । दायादशब्दः स्वामिपर्याय इत्यन्ये । **षष्ठ्यामेवेति ।** "शेषे षष्ठी" इत्यनेनेति भावः ।

**तात्पर्ये इति ।** आसेवापदस्य तत्र रूढरिति भावः । तात्पर्य-

---

(१)**अनादर इति ।** यदुद्देश्यकेच्छाप्रयोज्या क्रिया क्रियान्तरं लक्षयति तस्य समाहितस्यासिद्धिरनादरः । अस्ति च 'पश्यतः सुवर्णं हरति' इत्यादौ दर्शनक्रिया हरणाभावोद्देश्यिकेति समीहितस्य हरणाभावस्यासिद्धिरिति तत्र षष्ठी भवति । भोजनक्रिया तु न तादृशीति न 'भुञ्जानस्य स्वर्णं हरति' इति प्रयोग इति दिक् ।

ञ्च तदेकव्यापारता । आयुक्तयोगेऽधिकरणत्वविवक्षायां सप्तमीप्राप्तौ, सम्बन्धविवक्षायाम् (१)अत्र कुशलयोगे च षष्ठीप्राप्तौ वचनम् ।

**यतश्च** (पा०सू० २।३।४१)।**जातिगुणक्रियासंज्ञाभिरिति।** विशिष्टस्येत्यध्याहारः । तद्विशिष्टस्य यतः स्वघटितसमुदायात्स्वेतरसमुदायघटकव्यावृत्तधर्मकरणकं(२)पृथक्करणं तद्वाचकात् षष्ठीत्यर्थः । यत इति किम् ? यस्य जात्यादिविशिष्टस्य स्वेतरव्यावृत्तधर्मवत्त्वबोधनं तत एव मा भूत् । षष्ठ्यपवादत्ववत् प्रथमापवादत्वस्यापि सम्भवात् । स्वघटितसमुदायावधिक–स्वेतरसमुदायघटकव्यावृत्तधर्मकरणकपृथक्करणरूप(३)निर्धारण–वि-

---

(१)**अत्रेति** । आयुक्तयोगे इत्यर्थः ।

(२)**पृथक्करणमिति** । जात्यादिविशिष्टस्य स्वेतरव्यावृत्तधर्मवत्त्वप्रकारकज्ञानविषयीकरणं निर्धारणमित्यर्थः । यत इति पञ्चमी निर्धारणघटकीभूतव्यावृत्तत्वेऽन्वेति । एवञ्च यद्व्यावृत्तधर्मवत्त्वं जात्यादिविशिष्टस्य प्रतिपाद्यते; ततः षष्ठीसप्तम्यौ इति फलति । अस्ति च 'नराणां ब्राह्मणः श्रेष्ठः' इत्यादौ ब्राह्मणत्वादिविशिष्टस्य तदितरनरादिव्यावृत्तश्रेष्ठत्वधर्मवत्तया प्रतिपत्तिरिति तत्र षष्ठीसप्तम्यौ भवतः । 'नरेभ्यो राक्षसः क्रूरतमः' इत्यादौ राक्षसत्वविशिष्टे तदितरनरादिव्यावृत्तक्रूरतमत्वविवक्षायामपि नानेन षष्ठीसप्तम्यौ । "पञ्चमी विभक्ते" (पा०सू० २।३।४२) इत्यनेन बाधात् । एवञ्च व्यावृत्तत्वाख्यः सम्बन्धो निर्धारणविभक्तेरर्थः । व्यावृत्तत्वं च अत्यन्ताभावप्रतियोगित्वरूपं विधेयतावच्छेदकावच्छिन्नम् । अतो 'नराणां ब्राह्मणः प्राणी' इत्यादिर्न प्रयोगः । ब्राह्मणेतरनरेषु प्राणित्वघटोभयाभावसत्त्वेऽपि प्राणित्वत्वस्य तद्वृत्त्यभावप्रतियोगितावच्छेदकतापर्याप्त्यनधिकरणत्वात् । व्यावृत्तत्वं च अभेदान्वयिविधेयसमभिव्याहारस्थले विधेयतावच्छेदकेऽन्वेति, भेदान्वयितत्समभिव्याहारस्थले तु विधेये एव । व्युत्पत्तिवैचित्र्यात् । विभक्त्यर्थव्यावृत्तत्वघटकाभावे च सामानाधिकरण्यसम्बन्धेन ब्राह्मणत्वादिविशेषधर्मावच्छिन्नप्रतियोगिताकभेदविशिष्टो यः प्रकृत्यर्थतावच्छेदकनरत्वादिः तन्निष्ठाधारतानिरूपिताधेयतासम्बन्धेन प्रकृत्यर्थनरादिपदार्थान्वयः । आकाङ्क्षावशात् । तथाच तादृशसम्बन्धेन नरवृत्त्यभावप्रतियोगिश्रेष्ठत्ववदभिन्नो द्विज इति बोधः । 'नराणां क्षत्रिये शौर्यम्' इत्यादौ तु तादृशसम्बन्धेन नरवृत्त्यभावप्रतियोगिशौर्यमिति बोध इत्याहुः ।

अत्र मते "न निर्धारणे" (पा०सू० २।२।१०) इतिसूत्रसम्मतं निर्धारणस्य विभक्त्यर्थत्वं न सिध्यतीति तत्सिद्ध्यर्थं निर्धारणघटितस्य विभक्त्यर्थत्वमाह—

(३)**निर्धारणविषयत्वरूप इति** । "पञ्चमी विभक्ते" (पा०सू० २।३।४२) इति

षयत्वरूपो(१)ऽवयवावयविभावरूपश्च सम्बन्धो विभक्त्यर्थः । नृसमुदायावधिक—द्विजेतरनरव्यावृत्तधर्मकरणकपृथक्करणरूपनिर्धारण—विषयो नृसमुदायावयवो द्विजः श्रेष्ठ इति बोधः । संसर्गघटककरणं च श्रेष्ठत्वादिरूपमेव प्रत्यासत्तेः । (२)अत एव "न निर्धारणे" (पा०सू० २।२।१०) इति सूत्रबोधितं निर्धारणस्य (३)विभक्त्यर्थत्वं सङ्गच्छते । उद्भूतावयवभेदविवक्षया नृणामिति बहुवचनम् । तिरोहितावयवभेदाविवक्षया निर्धारणविषये एकवचनं त्वसाध्विति "कारके" (पा०सू १।४।२३) इति सूत्रे **भाष्ये** स्पष्टम् । तत्र हि निर्धारणे कारकेष्विति ब्रूयादित्युक्तम् । "मिदचोऽन्त्यात्" (पा०सू० १।१।४७) इत्यादौ तु सौत्रो निर्देश इति (४)तदाशयः । द्वन्द्वः

---

सूत्रविहितपञ्चम्यर्थापेक्षयाऽत्र विशेषमाह-(१)**अवयवावयविभावरूपश्चेति** । तेन 'नराणां राक्षसः क्रूरतमः' इति न प्रयोगः । 'नृणां मध्ये द्विजः श्रेष्ठः' इत्यादौ तु मध्यशब्दयोगे षष्ठी, न तु निर्धारणे । नृसमुदायमध्यवर्ती द्विजः श्रेष्ठ इति हि तत्र बोधः। श्रेष्ठत्वादौ द्विजेतरव्यावृत्तत्वबोधस्तु तत्र मानसः । देवदत्तो वामेनाक्ष्णा पश्यतीतिवत् । गोमण्डले वर्तमानाया कृष्णा गौः सा बहुक्षीरा इत्याधारसप्तमीवाक्येऽपि उक्तन्यायेनैव तथा प्रतीतिः। नृषु मध्ये इति त्वसाध्वेव। सप्तम्युपपत्तेरभावात्। ननु जलपृथिव्योर्जलं स्नेहवत् इत्यादौ जलपृथिव्योर्जलभेदाप्रसिद्धेः, जलपृथिव्युभयव्यावृत्तत्वस्य जले बाधेन च निर्धारणासम्भव इति चेद्, न। समुदायेऽवयवभेदाभेदयोरङ्गीकारेण जलपृथिव्युभये जलभेदस्य, तदुभयव्यावृत्तत्वस्य स्नेहे चाबाधेन निर्धारणोपपत्तेः । समुदाये अवयवभेदानङ्गीकारेऽपि जलपृथिव्युभयपर्याप्तसाहित्यावच्छेदेन तद्भेदाङ्गीकारे बाधकाभावाच्च । पृथिवीजलोभयं न गन्धवत् इति प्रतीतेः सर्वानुभवसिद्धत्वात्। "पञ्चमी विभक्ते" (पा०सू० २।३।४२) इत्यनेन पञ्चमी तु न । निर्धारणावधेर्निर्धार्यमाणे भेदमात्रसत्त्वे एव तत्प्रवृत्तेः । साङ्काश्यकानां पाटलिपुत्रकाणां च पाटलिपुत्रका अभिरूपतमा इति **भाष्य**प्रयोगोऽपि एवमेवोपपद्यते। उभयारब्धसमूहे पाटलिपुत्रकाभेदस्य सत्त्वेन पञ्चम्या अप्राप्तेः। तद्भेदस्यापि सत्त्वेन निर्धारणोपपत्तेश्चेति दिक् । **केचित्तु** 'नृणां मध्ये द्विजः श्रेष्ठः' इत्यादौ मध्ये इत्यव्ययेन विभक्त्या च हे चैत्रेत्यादौ सम्बोधनवत् समुच्चित्य सम्बन्धो द्योत्यते इत्याहुः ।

(२)**अत एवेति** । निर्धारणविषयत्वस्य षष्ठ्यर्थत्वादेवेत्यर्थः । (३)**विभक्त्यर्थत्वं सङ्गच्छते इति** । निर्धारणस्य आकङ्क्षाभास्यत्वे तु विभक्त्यर्थत्वं न स्यादित्यर्थः।

(४)**तदाशय इति** । **केचित्तु** कारकशब्दस्य तिरोहितावयवभेदकसमुदायबोधकत्वाभावात् निर्धारणे "कारकेष्विति ब्रूयात्" इति **भाष्योक्तं** सङ्गच्छते । समाहारद्वन्द्वस्य तु तिरोहितावयवभेदकसमुदायबोधकत्वस्य प्रमाणसिद्धत्वात् तद्विषये पाणिपा-

सामासिकस्य चेत्यत्र समाससमूहमध्ये इत्यर्थः। समूहेऽर्थे "अचित्त" (पा०सू० ४।२।४७) इति ठक्।

**पञ्चमीवि** (पा०सू० २।३।४२)॥ "यतश्च निर्धारणम्" (पा०सू० २।३।४१) इत्यनुवर्तते विभागोऽत्र भेदः। तत्र निर्धारणे यथाकथञ्चिद्भेदस्य सत्त्वेन विभक्तग्रहणसामर्थ्यात् यत्र भेद एव न तु केनाप्युपात्तरूपेण अभेदस्तत्रैव प्रवृत्तिरित्याह—**भेद एवेति**। अत्र पञ्चम्यर्थो निर्धारणविषयत्वरूप एव। पाटलिपुत्रकावधिकनिर्धारणाविषया माथुरा आढ्यतरा इति बोधः। एवञ्च त्रितयोपादान एव निर्धारणप्रतीतिरिति 'पुरुषोत्तमः' इत्यादौ सम्बन्धसामान्ये षष्ठी उत्तमनिरूपितेति (१)समाससिद्धिरिति तरप्सूत्रे **कैयटः**।

**साधुनि** (पा०सू० २।३।४२)। निपूर्वात् 'पुण कर्मणि शुभे' इत्यत इगुपधलक्षणः कः। अर्चतेश्च भौवादिकाद् "गुरोश्च हलः" (पा०सू० ३।३।१०३) इत्यप्रत्ययः—अर्चा। चौरादिकात्तु "ण्यासश्रन्थ" (पा०सू० ३।३।१०७) इति युच् स्यात्। षष्ठ्यपवादोऽयम्। **अप्रत्यादिभिरिति**। "लक्षणेत्थम्" (पा०सू० १।४।९०) इति सूत्रोपात्ताः प्रत्यादयः।

**नक्षत्रे च** (पा०सू० २।३।४५)। लुप्शब्देन लुप्सञ्ज्ञया लुप्तप्रत्ययार्थो लक्ष्यते इति बोध्यम्। अधिकरणे किम्? अद्य पुष्यः। (२)असत्यां तदनुवृत्तावन्तरङ्गत्वात्प्रातिपदिकार्थे एव स्यात्। **मूलेनेति**। "नक्षत्रेण युक्तः कालः (पा०सू० ४।२।३) इत्यणो "लुबविशेषे" (पा०सू० ४।२।४) इति लुप्। नक्षत्रे किम्? पञ्चालेषु तिष्ठन्ति। "जनपदे लुप्" (पा०सू० ४।२।८१) इति लुप्।

---

दस्य पाणिः श्रेष्ठ इति निर्धारणषष्ठ्येकवचनान्तः प्रयोगो भवत्येव। "द्वन्द्वः सामासिकस्य च" इत्यत्रापि मध्ये इत्यध्याहारं विनैव निर्धारणषष्ठ्यैव निर्वाहः। ठकास्तिरोहितावयवभेदकसमुदायबोधकत्वादित्याहुः।

(१)**समाससिद्धिरिति**। निर्धारणषष्ठ्यां तु निर्धार्यमाणे एव अवयवावयविभावसम्बन्धेन निर्धारणावधेरन्वयेन उत्तमत्वेऽन्वयाभावेन सामर्थ्याभावात् "न निर्धारणे" (पा०सू० २।२।१०) इति निषेधाच्च समासो न स्यादिति भावः।

(२)**असत्यामिति**। असति तदनुवृत्तौ इति पाठे तस्यानुवृत्तिर्यस्मिन् सूत्रे इति विगृह्य तदनुवृत्तिघटिते सूत्रे असतीति व्याख्येयम्।

**सप्तमीपञ्चम्यौ** (पा०सू० २।३।७)। "कालाध्वनोः" (पा०सू० २।३।५) इत्यतस्तदनुवर्त्तते । तच्च पञ्चम्या विपरिणम्यते । मध्यस्यावधिद्वयसापेक्षतया (१)द्विवचनान्तेन समासः । बोधस्तु शक्तित्वेन शक्तिद्वयस्य, न तु द्वित्वेनेति बोद्धव्यम् । ननु कर्तृरूपस्य कारकस्यैकत्वाद्भेदनिबन्धनमध्यव्यपदेशासम्भवोऽत आह—**शक्तिद्वयमध्ये याविति** । कर्तृत्वादिशक्तिरेव कारकम् । सा च क्रियाभेदेन भिन्नेति भावः । यद्यप्यवध्यवधिमतोस्साजात्यनियमान्न कालाध्वानौ कारकमध्ये सम्भवतस्तथापि शक्तिशब्देन तदाधारकालादिग्रहणान्न दोषः । षष्ठ्यपवादोऽयम् । स्वानन्तरकालवृत्तित्वादिकं विभक्त्यर्थः । शक्तिद्वयमध्यवर्त्तित्वन्तु (२)वस्तुसन्निमित्तम् ।

**अधिकशब्देनेति** । कर्त्तरि क्तप्रत्ययान्ताध्यारूढशब्दार्थकाधिकशब्दयोगे लोकशब्दात् षष्ठ्यां प्राप्तायां ज्ञापकादिमे इष्येते इत्यर्थः। "तदस्मिन्नधिकम्" (पा०सू० ४।२।६७) इति सूत्रे **भाष्ये** तु उपश्लिष्टपदाध्याहारेणौपश्लेषिकेऽधिकरणे सप्तमीत्युक्तम् । कर्मणिक्तप्रत्ययान्ताध्यारूढशब्दार्थकाधिकयोगे तु अधिको लोको हरिणेति प्रथमैव । **उपपरार्द्धे इति** । "उपोऽधिके च" (पा०सू० १।४।८७) इति कर्मप्रवचनीयत्वम् । ननु 'मामुद्दिश्य विनियोक्ष्यते' इत्यर्थादत्र कर्मणि द्वितीयैवेति किङ्कर्मप्रवचनीयत्वेनेत्यत आह—**अगतित्वादिति** । **तिङि चेति** । उदात्तवति तिङन्ते गतिर्निहन्यते इत्यर्थः । अत्र "तिङ्ङतिङः" (पा०सू० ८।१।२८) इति निघातस्य "निपातैर्यद्यदि" (पा०सू० ८।१।३०) इत्यादिना निषेधात् करिष्यतीति तिङन्तस्योदात्तवत्त्वमिति सर्वेष्टसिद्धिः ॥

इति विभक्त्यर्थाः ।

---

**(१)द्विवचनान्तेनेति** । कारकयोर्मध्ये इति विग्रहः । **(२)वस्तुसन्निमित्तमिति** । न तु तस्य शाब्दबोधे भानमपेक्षणीयम् ।

इति विभक्त्यर्थाः ।

**समर्थः पद** (पा०सू० २।१।१) । विधिशब्दः कर्मसाधनः, शेषषष्ठ्या समासस्तदाह–**पदसम्बन्धीति** । (१)पदविधिसहचरितोऽपि पदविधिशब्देन गृह्यते । अत एव सन्नन्तादेकार्थीभावः । पदविधिश्च समाससञ्ज्ञादिः । तस्य च न सामर्थ्यं साक्षात् विशेषणमसम्भवात् अत आह–**समर्थाश्रित इति** । सामर्थ्यं चात्र न व्यपेक्षा । व्याख्यानात्, समासादिवृत्तिषु तस्यासम्भवाच्च । किन्त्वेकार्थीभावः । स च विशेष्यविशेषणभावावगाह्युपस्थितिजनकत्वम् । "संसृष्टार्थं समर्थम्' इतिभाष्योक्तेः । अत एव राजपुरुषैकदेशे राज्ञि ऋद्धस्येत्यादिविशेषणान्वयो न । 'देवदत्तस्य गुरुकुलम्' इत्यादौ तु गमकत्वाद्भवत्येव वृत्तिः । एवं 'राजपुरुषः' इत्यादौ विशेषणपदे सङ्ख्याऽनवगमोऽप्येकार्थीभावकृतः । सङ्ख्याविशेषप्रकारेण तत्तदर्थभाने पृथगुपस्थितेस्तन्त्रत्वात् । यथा 'घटाः' इत्यादितो बहुत्वेनैव त्रिचतुरादिव्यक्तीनां भानं, न तु त्रित्वचतुष्ट्वादिना तथा वृत्तौ राजत्वादिनैकानेकव्यक्तिभानं तात्पर्यवशान्न त्वेकत्वद्वित्वादिना । एवं 'तावकीनः, यौष्माकीणः' इत्यादौ सम्बोध्यत्वेनैवैकानेकव्यक्तिभानं न त्वेकत्वबहुत्वादिना । विग्रहवाक्यीयैकवचनत्वारोपेण । शास्त्रप्रवृत्तिमात्रं न तु तद्बोधः, वृत्तिस्वभावविरोधादिति मञ्जूषायां विस्तरः ।

गमकत्वादेव 'शिवस्य भगवतो भक्तः' इत्यर्थे 'शिवभागवतः' इति

---

(१)**पदविधिसहचरितोऽपीति** । वस्तुतस्तु पदसञ्ज्ञाप्रयोजकप्रत्ययोत्पत्तिप्रयोजकसञ्ज्ञाविधायकशास्त्रीयोद्देश्यतावच्छेदकरूपावच्छिन्नसम्पादकविधित्वं पदविधित्वम् । तच्च कृत्प्रत्ययविधायके, तद्धितप्रत्ययविधायके, समाससञ्ज्ञाविधायके, सनादिविधायके, चास्ति । तत्र आद्यानां त्रयाणां पदसञ्ज्ञाप्रयोजकसुप्प्रत्ययोत्पत्तिप्रयोजकप्रातिपदिकसञ्ज्ञाविधायकशास्त्रीयोद्देश्यतावच्छेदककृत्त्व–तद्धितत्व-समासत्वान्यतमावच्छिन्नसम्पादकत्वात् । सनादिविधायकस्य च पदसञ्ज्ञाप्रयोजकतिङ्प्रत्ययोत्पत्तिप्रयोजकधातुसञ्ज्ञाविधायक "सनाद्यन्ताधातवः" (पा०सू० ३।१।३२) इत्येतच्छास्त्रीयोद्देश्यतावच्छेदकसन्त्वाद्यवच्छिन्नसम्पादकत्वात् । इत्थमेव "समासेऽङ्गुलेः सङ्गः" (पा०सू० ८।३।८०) इत्यत्रत्यसमासग्रहणस्य "पदान्ताद्वा" (पा०सू० ६।१।७६) इति सूत्रस्थान्तग्रहणस्य च चारितार्थ्यम्, "ओत्वोष्ठयोः" इत्यादौ चाप्रवृत्तिरुपपद्यते इति तत्र तत्र निरूपितमिति दिक् ।

"अयःशूल" (पा०सू० ५।२।७६) इति सूत्रे भाष्ये प्रयोगः । परं तु तत्र वृत्तिरेव न तु शिवस्य भागवत इति वाक्यं साधु । तत्र भगवच्छब्दादण्, शिवपदेन भगवच्छब्दस्य समासश्च युगपदेवेति बोध्यम् । तथोपस्थितिश्च समुदायशक्तिसाध्या । एवञ्च क्लृप्तशक्तित्यागे मानाभावात् प्रत्येकशक्तिसहकृतया समुदायशक्त्या तथोपस्थितिः । अयमेव चैकार्थीभावः । जहत्स्वार्था वृत्तिः पदानामानर्थक्यमिति तु न युक्तम् । 'महाबाहुः' 'सुपन्थाः' इत्यादावात्वाद्यनापत्तेः । (अर्थवत्त्वे) भूतपूर्वगत्याश्रयणं तु सत्यां गतावयुक्तम् । तदुक्तं वृद्धैः—

जहत्स्वार्था तु तत्रैव यत्र रूढिर्विरोधिनी । इति ।

अवयवार्थविरुद्धो यत्र समुदायार्थस्तत्रैव सेति तदर्थः । यथा गौरखर—कृष्णसर्पादौ ।

परिभाषेयम् । सा च पदविधिरिति सूत्रस्वरसात्, "समासेऽङ्गुलेः सङ्गः" (पा०सू० ८।३।८०) इत्यादौ समासग्रहणाच्च, "गतिर्गतौ" (पा०सू० ८।१।७०) इति सूत्रे 'पदस्येत्यधिकारात् समर्थपरिभाषोपस्थितिः' इति कैयटस्वरसाच्च पदत्वेन सुबन्तत्वेन वा यत्र साक्षादुद्देश्यता तत्रैव प्रवर्त्तते । तेन "अन्यारादितर" (पा०सू० २।३।२९) इत्यादौ नास्याः प्रवृत्तिः ।

एकार्थीभावश्चालौकिकविग्रहवाक्य एव कल्प्यते । यथा शत्रादौ द्वितीयासामानाधिकरण्यं दृष्ट्वा लकारेऽपि तत्कल्पना तथा 'अन्यपदार्थे' 'समर्थः' 'चार्थे' इत्यनुवादबलादस्य तत्र कल्पनेति । तथा च शतृविधायके भाष्यम्—"लस्याप्रथमासमानाधिकरणेनार्थेनायोगादादेशानुपपत्तिस्तस्य क्वापि प्रयोगाभावात्" इत्याशङ्क्य "आदेशसामानाधिकरण्यं दृष्ट्वाऽनुमानाद्गन्तव्यं प्रकृतेरपि तद् भवतीति" । तत्र कैयटः—सिद्धानां शब्दानामन्वाख्यानात् 'पचन्तं देवदत्तं पश्य' इत्यादिप्रयोगदर्शनात् स्थानिनोऽपि लटः प्रक्रियार्थं विहितस्याप्रथमासामानाधिकरण्यमनुमीयत इति । अत्रानुमाने सौत्रानुवाद एवानुकूलस्तर्कः । अत्र प्रक्रियार्थं विहितस्येत्यनेनान्यस्यापि प्रक्रियार्थं कल्पितस्य लोकेऽबोधकत्वं सूचितमित्यन्यत्र विस्तरः । समर्थः

किम्? पश्य कृष्णं, श्रितो राममित्यत्र कृष्णश्रितयोः परस्परसम्बन्धाभावेनैकोपस्थित्यजनकत्वेनासामर्थ्यम् ॥

**सह सुपा** (पा०सू० २।१।४) ॥ "सुबामन्त्रिते" (पा०सू० २।१।२) इत्यतः सुबिति वर्त्तते। सुबन्तसहितं सुबन्तं समाससञ्ज्ञकमित्यर्थः। समस्यते इत्युक्तिस्त्वबुधानां भिन्नयोः शब्दयोरनेन संश्लेषः क्रियत इति प्रतिपत्तेस्तदनुसारेण। सम्पूर्वकास्यतेश्च संश्लेषोऽर्थः। "प्राक्कडारात्" (पा०सू० २।१।३) इत्यत प्राग्ग्रहणमावर्त्तते। तेन प्राक्समाससञ्ज्ञा भवन्ति, तत्सञ्ज्ञाः सन्तोऽव्ययीभावादिसञ्ज्ञका इत्यर्थात्तयोः समावेश इति **भाष्ये** स्पष्टम्। अन्यथा आकडारत्वात् पर्यायः स्यात् इति दिक्।

अत्र सुबित्येकत्वं विवक्ष्यते। तेन महिष्या अजायाश्च क्षीरमित्यत्र सुबन्तसमुदायस्य न क्षीरशब्देन समास इति **कैयटादयः**।

**परे** तु (१)अनुवाद्यत्वादेकत्वाविवक्षैव। किञ्च तद्विवक्षायामेकेनैव केनचित्सुबन्तेन किञ्चिदेकं सुबन्तं समस्येत न त्वन्यैरन्यानि। तस्मात्सुबित्यादौ जातिविवक्षा। एवञ्च यथा स्वाङ्गग्रहणेन स्वाङ्गसमुदायस्य न ग्रहणं, स्वाङ्गत्वस्य प्रत्येकं समाप्तत्वात्, एवं सुबन्तत्वादेरपि प्रत्येकं समाप्तत्वेन सुबन्तादिग्रहणेन न सुबन्तादिसमुदायस्य ग्रहणमिति नोक्तदोषः। स्पष्टञ्चेदं मतुप्सूत्रसमर्थसूत्रयो**र्भाष्ये**। तत्रत्य**कैयटा**दीनां तु प्रमादः। अत एव "विभक्तिश्च" (पा०सू० १।४।१०४) इति सूत्रे प्रतिप्रत्ययं विभक्तिसञ्ज्ञेति पक्षे प्रथमयोरित्यादौ विभक्तिसमुदायस्य विभक्तिग्रहणेनाग्रहणात् प्रथमयोः प्रत्यययोरेव ग्रहणं प्राप्नोतीत्युक्तं **कैयटेने**त्यन्यत्र विस्तर इत्याहुः।

**अनुव्यचलदिति**। अनोर्व्यचलदित्यनेन वेश्च अचलदित्यनेन युगपत्समासः। अनु इति सुबन्तेन व्यचलदिति समुदायस्य समर्थत्वात्।

**सुपेति**। इदं लक्षणमधिकारश्च। अन्त्ये फलन्तु देवः करोति, मातुः स्मरतीत्यादौ विशेषणसमास-षष्ठीसमासयोरभावः॥

---

(१)अनुवाद्यत्वादिति। 'ग्रहं सम्मार्ष्टि' इत्यादौ ग्रहैकत्वादेः उद्देश्यगतत्वेन यथाऽविवक्षा तथा प्रकृतेऽपीति भावः।

**सुपो धा** (पा०सू० २।४।७१) ॥ (१)अङ्गनिमित्तस्य सुप इत्यर्थभ्रमवारणायाङ्गस्य सुप इति नोक्तम्। **पूर्वनिपात इति**। भूशब्दस्यैवेत्यर्थः। अन्यथा विनिगमनाविरहेण प्रथमानिर्दिष्टत्वाविशेषाद(२)नियमः स्यादिति भावः। (३)अत एव निर्देशादीदृशे विषयेऽवयवद्वारकसामर्थ्येऽप्यस्य प्रवृत्तिः। 'विस्पष्टपटुः' इत्यादावपि विस्पष्टादीनि गुणवचनेष्विति गमकं बोध्यम्। तत्र हि विस्पष्टमित्यादि पटुत्वादिविशेषणमिति **कैयटे** स्पष्टम्। **इवेनेति**।

हरीतकीं भुङ्क्ष्व राजन्मातेव हितकारिणीम्।

इत्यसाध्वेव। 'तिङ्समानाधिकरणे प्रथमा, अभिहिते प्रथमा" इतिवार्त्तिकस्वारस्येन, प्रथमायास्तत्र तत्र कारकविभक्तित्वोक्तिपरभाष्येण च क्रियायोगे एव प्रथमायाः प्रवृत्त्या मातेति प्रथमाया मातृसदृशीमित्यर्थेऽसाधुत्वादित्यन्यत्र विस्तरः। एतद्योगविभागसिद्धसमासस्य विशेषसञ्ज्ञा न

---

**(१)अङ्गनिमित्तस्येति**। ननु अङ्गावयवस्य सुप इत्यर्थेऽपि 'परमसर्वस्मै' इत्यादौ समासप्रकृतिकसुबुत्पत्त्यनन्तरम् अङ्गसञ्ज्ञायां सुपो लुकि विभक्तेः सर्वनाम्नो विहितत्वाभावात् स्मायादिकं न स्यादिति चेद्; न। तदादिरूपात् सर्वनाम्नः परस्येत्यर्थेनादोषात्। "ओतो णिदिति वाच्यम्" इति वार्तिके तु नवीनमते ओत्सूत्रस्थभाष्यप्रामाण्येन वर्णग्रहणेऽपि लक्षणप्रतिपदोक्तपरिभाषाप्रवृत्त्यङ्गीकारेण प्रतिपदोक्तस्य ओकारस्य ग्रहणेन 'हे भानो' इत्यादौ दोषाभावेन विहितविशेषणानाश्रयणात् 'परमगावौ' इत्यादौ समासप्रकृतिकसुबुत्पत्त्यनन्तरम् अङ्गसञ्ज्ञायां सुपो लुक्यपि न दोषः-इति दिक्।

**(२)अनियमः स्यादिति**। न च अनियमे भूतशब्दस्य पूर्वनिपातेन निर्देशोपपत्त्या कथं तस्य नियतपूर्वनिपातज्ञापकत्वमिति वाच्यम्। "भूतपूर्वे चरट्" (पा०सू० ५।३।५३) "पूर्वे भूतपूर्वे" (पा०सू० ६।२।२२) "गोष्ठात् खञ् भूतपूर्वे" इत्यादौ सर्वत्र भूतशब्दस्यैव पूर्वप्रयोगकरणेन तत्पूर्वप्रयोगस्यैवेष्टत्वानुमानात्। भूतपूर्वेतिनिर्देशेन अवयवद्वारकसामर्थ्यमादाय भूतशब्दादेरेव समासत्वस्य ज्ञापनेन पूर्वं भूत इत्यत्र पूर्वशब्दादिप्रयोगविवक्षायां प्रधानेन सामर्थ्याभावात् समासाप्रवृत्तेश्च। तद् ध्वनयन्नाह—

**(३)अत एव निर्देशादिति**। यत्तु उपसर्जनमिति महासञ्ज्ञाकरणात् लौकिकोपसर्जनत्वविशिष्टस्यैव पूर्वनिपात इति पूर्वशब्दस्यैव पूर्वनिपातप्रसक्तिरिति भूतशब्दस्य पूर्वनिपातकरणं तज्ज्ञापकमिति, तन्न। नवीनमते समासशास्त्रीयशब्दगताप्राधान्यस्याश्रयणेन विनिगमनाविरहस्यावश्यकत्वादिति दिक्।

सन्त्येव। तत्तदधिकारेष्वपाठात्। **जीमूतस्येवेति**। अत्र यथार्थत्वादिप्रयुक्तोऽव्ययीभावस्तु न। "तत्र तस्येव" (पा०सू० ५।१।११६) इति निर्देशात्॥

**अव्ययी** (पा०सू० २।४।१८)। अनव्ययमव्ययं भवतीति "भवतेर्णस्य उपसङ्ख्यानम्" इति कर्तरि णः। महासञ्ज्ञाकरणं प्राचामनुरोधात्।

**योगो विभज्यते इति। भाष्ये** त्विदं न दृश्यते। 'अपदिशम्' इत्यादिमान्तानां स्वरादिपाठादव्ययत्वम्। 'अपदिशेन' इत्यादि तु चिन्त्यमेवेत्यन्ये।

ननु समासगतेऽन्तर्वर्तिविभक्त्याश्रये प्रथमान्तत्वे आश्रीयमाणे कष्टश्रितादौ श्रितस्य पूर्वनिपातापत्तिः, निर्दिष्टपदञ्च व्यर्थमत आह—**समासशास्त्रे इति**॥ समाससञ्ज्ञाविधायके शास्त्रे इत्यर्थः। न च राज्ञः कुमारीं श्रितो राजकुमारीश्रित इत्यत्र द्वितीयाया "द्वितीयाश्रित" (पा०सू० २।१।२४) इति सूत्रे प्रथमानिर्दिष्टत्वेन कुमारीशब्दस्य पूर्वनिपातापत्तिरिति वाच्यम्। "अप्रधानमुपसर्जनम्" इति शास्त्रान्तरोक्तमहासञ्ज्ञाकरणेनास्य तदर्थकतया "समासशास्त्रे प्रथमानिर्दिष्टमप्रधानत्वसमानाधिकरणोपसर्जनपदवत्" इति वाच्यार्थे निष्पन्नेऽप्रधानत्वस्य ससम्बन्धिकत्वाद् यं प्रति यदप्रधानं तं प्रति तदुपसर्जनसञ्ज्ञमित्यवगतेरदोषादिति **भाष्येणैव** समाधानात्। प्रकृते च न राजनिरूपितमप्राधान्यं कुमार्या इति न तदपेक्षोऽस्य पूर्वनिपातः।

न चैवं पूर्वकायाद्यसिद्धिः, कायनिरूपिताप्राधान्यस्य पूर्वपदार्थेऽभावादिति वाच्यम्। समासशास्त्रस्थप्रथमानिर्दिष्टशब्दगताप्राधान्यस्याश्रयणेनादोषात्। समासशास्त्रे यं प्रति यदप्रधानं तं प्रति तदुपसर्जनमित्यर्थात्। भवति च श्रितादीन्प्रति द्वितीयान्तं तथा। सहयुक्ततृतीयान्तार्थस्य शाब्दगुणान्वयित्वाभावरूपाप्राधान्येऽपि तत्समभिव्याहृतप्रथमाद्यन्तार्थे तदधीनत्वरूपाप्राधान्यप्रतीतेः। अत एव समकक्षयोरप्येकस्य 'परेण सहागन्तव्यम्' इत्युक्ते दुःखं दृश्यते। प्रकृतेऽपि द्वितीयान्तं श्रिताद्यधीनम्। तं विना समा-

साघटकत्वात् । श्रितादिकन्तु तं विनापि समासान्तरे घटकमिति द्वितीया-न्तस्य श्रिताद्यधीनता । एवमन्यत्राप्यूह्यम् । "यस्य शब्दस्य समासविधौ यत्प्रथमानिर्दिष्टं तं प्रति तदुपसर्जनमिति वक्तव्यम्" इतिवार्तिकप्रत्याख्या-नाय तद्भाष्यप्रवृत्तेः, **भाष्येऽपि** "यं शब्दं प्रति यत्प्रथमानिर्दिष्टमप्रधानं तं शब्दं प्रति तत्प्रथमानिर्दिष्टवाच्यं पदम् उपसर्जनम्" इत्यर्थस्यैवौचि-त्यात् । अत एव यं यदिति भिन्नलिङ्गनिर्देशः । बहुव्रीहौ त्वेकविभक्तीत्ये-वोपसर्जनत्वमित्यनुपदमेव स्फुटीभविष्यति अन्वर्थत्वविरोधान्नानेनेति भाष्य-सिद्धान्त इति बोध्यम् । यत्त्वर्थगताप्राधान्येनान्वर्थत्वेऽपि पूर्वकायादौ न दोषो, ऽन्वर्थसञ्ज्ञा हि यत्र सोऽर्थः सम्भवति तत्र प्रवृत्तिनिमित्तापेक्षा प्रव-र्तते, अन्यत्र तु विधानसामर्थ्यात्तन्निरपेक्षा, यथा स्वादीनां कर्मप्रवचनीय-त्वमिति प्रथमानिर्देशसामर्थ्यात्पूर्वादीनां प्रवर्त्तते इति, तन्न । निर्विभक्तिक-स्योच्चारणासम्भवेन तत्सामर्थ्यायोगात् । प्राथम्यादन्वितार्थकत्वाल्लघुत्वाच्च प्रथमैवोच्चारितेत्यस्य वक्तुं शक्यत्वादित्यलम् ।

**उपसर्जनम्** (पा०सू० २।२।३०) । समास इत्यधिकृतं योग्यताब-लेन सप्तम्या विपरिणम्यते, तदाह—**समासे इति** । न च राज्ञः कुमार्या इति परिनिष्ठितविभक्त्या समासे कुमार्या अपि पूर्वनिपातापत्तिरिति वाच्यम् । "षष्ठ्यन्तयोः समासेऽर्थाभेदात् प्रधानस्यापूर्वनिपातः" इति **भाष्येण** समाधानात् । अर्थाभेदात्—अर्थस्य प्रधानस्याभेदात्समस्यमानराजपदार्थनिरू-पितसम्बन्धाभावात् अस्य (१)षष्ठ्यन्तस्य प्रथमानिर्दिष्टत्वाभावान्न पूर्वनि-पात इति तदर्थः ।

**अयं भावः** । "षष्ठी" (पा०सू० २।२।८) इत्यादिसूत्रे येन सुब-न्तेन समासस्तदर्थनिरूपितसम्बन्धाद्यर्थकमेव षष्ठ्याद्यन्तं गृह्यते । तदेव च तत्र प्रथमानिर्दिष्टमिति । तदुक्तं **कैयटेन** "राज्ञः पुरुषस्येत्यत्र राजापेक्षया पुरुषः प्रधानमेवेति नासौ भिद्यते राजापेक्षया न व्यतिरिच्यते इत्यप्रधान-स्यैव पूर्वनिपातः" इति । उक्तरीत्याऽप्रधानषष्ठ्यन्तमेव तत्र प्रथमानिर्दिष्टं

---

(१)षष्ठ्यन्तस्येति । कुमार्या इत्यस्येत्यर्थः ।

न तु प्रधानमिति तद्भावः। यत्तूपसर्जनसञ्ज्ञाऽन्वर्थत्वादप्रधानस्यैवेति "उपसर्जनं पूर्वम्" (पा०सू० २।२।३०) इत्यत्र **कैयटस्तन्नेत्युक्तमेवेत्यलम्।**

"प्रथमानिर्दिष्टम्" (पा०सू० १।१।४३) इत्यतोऽनुवृत्तं 'समासे' इति तदर्थविग्रहपरमित्याह—**विग्रहे इति। नियतेति।** एकग्रहणादवधारणगर्भसमासलाभ इति भावः। 'निष्कौशाम्बिः' इत्युदाहरणम्। परिनिष्ठितविभक्त्यापि समासे 'निष्क्रान्ते' 'निष्क्रान्तेन' इत्यादिक्रमेण तस्यानियतविभक्तिकतया कौशाम्बीपदस्य तदपेक्षया नियतविभक्तिकत्वादनेनोपसर्जनत्वेन ह्रस्वत्वम्। परिनिष्ठितविभक्त्या समासे चेदमेव ज्ञापकम्। अयं पक्षः—"तत्पुरुषे तुल्यार्थ" (पा०सू० ६।२।२) इति सूत्रे **भाष्ये।** प्रथमान्तेन समास इति पक्षोऽपि "अनेकम्" इति सूत्रे **भाष्ये** इति **केचित्।**

**परे तु** "अनेकम्" (पा०सू० २।२।२४) इति सूत्रे **भाष्ये** समासार्थविग्रहे प्रत्यासत्त्या समासापेक्षया नियतविभाक्तिकस्यानेनोपसर्जनत्वमुक्तम्, 'राज्ञः कुमारी, राजकुमारी इत्यत्र परिनिष्ठितविभक्त्यापि समासस्य सत्त्वान्न तदपेक्षया कुमार्या नियतविभक्तिकत्वमिति न तस्या उपसर्जनत्वमित्युक्तम्। चित्रगुरित्यत्र च गोपदस्यानेनोपसर्जनत्वमङ्गीकृत्यानेकग्रहणं प्रत्याख्यातम्। बहूनां समासस्तु "तद्धितार्थ" (पा०सू० २।१।५१) इत्यनेनोत्तरपदे द्विगुविधानात् ज्ञापकात्सिद्ध इति चोक्तम्। एवञ्चोत्तरपदेन परिमाणिनेत्यपि प्रत्याख्यातम्। अतिप्रसङ्गस्त्वनभिधानान्न। तदुक्तम्—अनेकवचनमुपसर्जनार्थं, न वैकविभक्तित्वादिति। वार्त्तिककृताऽन्वर्थत्वानुक्तेस्तद्रीत्या प्रयोजनवार्त्तिकं, नवेति तु तत्खण्डनं, भाष्यरीत्या त्वेतदप्राप्तिरेवात्रेति बोद्धव्यम्। अन्यथा 'चित्रगुः' इत्यस्य विग्रहे द्वयोरपि नियतविभक्तिकतया किमपेक्षं गोशब्दस्य नियतविभक्तिकत्वं स्यात्। एकस्यानियतविभक्तिकत्वे हि तदपेक्षमन्यस्य तत्त्वं वाच्यम्। समासापेक्षं नियतविभक्तित्वमेव युक्तमाश्रयितुम्। अन्यथा 'सभार्यः' इत्यत्रोपसर्जनह्रस्वानापत्तिः। सहशब्दस्याव्ययतया विभक्तिमात्राभावेन, लुकाऽनुत्पत्तेरेवान्वाख्यानेन चानियतविभक्तित्वाभावात्तदपेक्षनियतविभक्तित्वस्य भार्ययेत्यत्राभावेनोपसर्जनत्वानापत्तिः। मम तु समासस्यानियतविभक्तित्वात्तदपेक्षं तत्त्वमस्त्येवेति न दोष इत्याहुः।

**गोस्त्रियोः** (पा०सू० १।२।४८) । अत्र स्त्रीशब्दः स्वर्यते । तेन स्त्र्यधिकारोक्तचातुर्थिकप्रत्ययलाभः । उपसर्जनस्येति. गोस्त्रियोर्विशेषणम् । प्रत्ययग्रहणपरिभाषया च स्त्रीशब्देन तदन्तग्रहणम् । ताभ्याञ्च प्रातिपदिक-विशेषणात्तदन्तविधिरित्याह—**उपसर्जनं य इत्यादि** । 'गोकुलं' 'राज-कुमारीपुत्रः' इत्यादौ तु न दोषः । महासञ्ज्ञाकरणेन येन शब्देन समास-विधौ यत्प्रथमानिर्द्दिष्टं तस्य तं प्रत्येवोक्तरीत्याऽप्रधानत्वेनोपसर्जनत्वात् । प्रत्यासत्त्या तदन्ततत्समासप्रातिपदिकान्त्यस्यैव ह्रस्व इत्यदोष इति **भाष्ये** स्पष्टम् । तत्र ह्येवं **भाष्यम्**—"अप्रधानमुपसर्जनमिति सम्बन्धिशब्दावेतौ तत्र सम्बन्धादेतद्गन्तव्यं यं प्रति यदप्रधानं तस्य चेत्सोऽन्तो भवतीति" । यत्प्रथमानिर्द्दिष्टं तस्य तद्घटितसमासस्य सोऽप्रधानशब्दोऽन्तो भवतीति तदर्थः । यद्यपि 'कुक्कुटमयूर्यौ' इतिद्वन्द्वे बहुव्रीहाविव एकविभक्तीत्युपस-र्जनत्वम् । द्वन्द्वः प्रथमान्तानामेवेति "चार्थे द्वन्द्वः" (पा०सू० २।२।२९) इत्यत्र वक्ष्यते । "एकविभक्ति" (पा०सू० १।२।४४) इत्युपसर्जनसञ्ज्ञाऽ-प्रधानार्थकस्यैवेति मतेऽपि उद्भूतावयवभेदसाहित्यं प्रति मयूरीपदार्थस्य तत्त्वमस्ति । सर्वत्र द्वन्द्वे साहित्यमेव विशेष्यमिति चार्थसूत्रे **भाष्ये** स्प-ष्टम्, तथापि **भाष्ये** "द्वन्द्वे न" इतिवचनारम्भान्न दोषः । अत एव कुमारीमिच्छन् ब्राह्मणः कुमारीत्यत्र ह्रस्वो न । "प्रथमानिर्द्दिष्टम्" (पा०सू० १।१।४३) इत्यादेः शास्त्रीयस्यैवात्रोपसर्जनस्य ग्रहणात् । अत एव 'गोब-ष्कयणी' इत्यादौ बष्कयणीशब्दस्य गुणशब्दत्वाद(१)प्रधानत्वेऽपि तद-न्तस्य ह्रस्वो न । एतच्च (२)"इद्गोण्याः" (पा०सू० १।२।५०) इति सूत्रे **भाष्ये** स्पष्टम् ।

---

(१)**अप्रधानत्वेऽपीति** । शास्त्रीयोपसर्जनग्रहणे तु "पोटायुवति" (पा०सू० २।१।६५) इत्यादिना समासे जातिवाचकगोशब्दस्यैव प्रथमानिर्दिष्टत्वेन उपसर्जनत्वमिति भावः । (२)**इद्गोण्या इति सूत्रे इति** । तत्र हि "गोण्या न" इत्येव वक्तव्यम्, किमर्थमित्वं विधीयते, पञ्चगोणिरित्यादौ "लुक् तद्धितलुकि" इति लुकि प्रतिषिद्धे "एकविभक्ती"त्यनेनोपसर्जनत्वाद् गोणीशब्दस्य ह्रस्वत्वं सिध्यतीति किमर्थमित्व-मित्याशङ्क्य गोणीमात्रमिदं गोणिः इत्यत्र 'शास्त्रीयोपसर्जनत्वाभावात् ह्रस्वो न स्यात्'

(१)अतिराजकुमारिरित्यादौ स्त्रीप्रत्यये तदादिनियमनिषेधात् राजकुमारीत्यस्य स्त्रीप्रत्ययान्तत्वम्। न च तस्यात्यर्थं प्रत्युपसर्जनत्वेन कथं स्त्रीप्रत्ययान्तत्वमुपसर्जनस्त्रीप्रत्यये तदादिनियमादिति वाच्यम्। यस्य समुदायस्य स्त्रीप्रत्ययान्तत्वमानेयं तदर्थं प्रति स्त्रीप्रत्ययस्यानुपसर्जनत्वमेवेत्यदोषात्। प्रत्यासत्त्या तादृशानुपसर्जनत्वस्यैव निषेधनिमित्तत्वात्। अस्य चातिक्रान्तार्थं प्रत्युपसर्जनत्वेऽपि राजकुमारीत्येतदर्थं प्रत्यनुपसर्जनत्वमेवेति दिक्।

**नाव्ययीभावा** (पा०सू० २।४।८३)। अपञ्चम्या इत्यस एव विशेषणं न लुगभावस्य। तुना व्यवच्छेदात्। **अपदिशमिति**। यद्यपि नपुंसकह्रस्वेनापीदं सिध्यति; तथापि चित्रगुरित्याद्यर्थमावश्यकेन गोस्त्रियोरित्यनेनापीदं सिद्ध्यतीति तदुपन्यासः। दिश्शब्दस्य शरदादिषु पाठेऽपि लिङ्गविशिष्टपरिभाषयाऽत्र न टच्। समासान्तप्रकरणे लिङ्गविशिष्टपरिभाषाऽभावस्य ङ्याप्सूत्रे **भाष्ये** उक्तत्वात्। टाबन्तदिशाशब्दोऽकारान्तप्रकृतिक एवेति मते टचः प्राप्तेरेवाभावः। अमरस्वारस्यात् दिश्शब्देन विग्रहे तु न ह्रस्वः प्रयोजनम्। **इत्यादाविति**। आदिनैकविंशतिभारद्वाजं, सप्तगङ्गमित्यादिसङ्ग्रहः।

**विभक्तीत्यादेरिति**। विभक्तिशब्देन तदर्थो लक्ष्यते। वचनशब्दः कर्मसाधनः प्रत्येकं सम्बध्यते। विभक्त्यादयश्च श्रुतत्वादव्ययस्यैव

---

इत्यभिप्रायेण इत्वविधानमावश्यकमित्युक्तम्। अनेन च **भाष्येण** शास्त्रीयोपसर्जनस्यैवात्र ग्रहणमिति स्पष्टमेव लभ्येत इति दिक्।

ननु अतिराजकुमारिरित्यादौ राजकुमारीशब्दस्य शास्त्रीयोपसर्जनत्वेऽपि स्त्रीप्रत्ययान्ततदादित्वाभावात् ह्रस्वो न स्यात्, कुमारीमात्रस्य च विग्रहीयविभक्त्यन्तत्वाभावात्, अत आह-(१)**अतिराजकुमारिरित्यादाविति**। आचारक्विबन्तकुमारीशब्दघटितराजकुमारीशब्दस्य अतिशब्देन समासे 'अतिराजकुमारी' इत्यत्र तु न ह्रस्वः। परिभाषायां लौकिकोपसर्जनग्रहणेन राजकुमारीशब्दार्थं प्रति स्त्रीप्रत्ययस्योपसर्जनत्वेन तदादिनियमस्य दुर्वारत्वेन शास्त्रीयोपसर्जनस्य राजकुमारीशब्दस्य स्त्रीप्रत्ययान्तत्वाभावात्। सुन्दरौ रैगावौ यस्येति द्वन्द्वगर्भबहुव्रीहावपि न ह्रस्वः। द्वन्द्वात्मकसमुदायस्य बहुव्रीह्यर्थं प्रति उपसर्जनत्वेऽपि गोशब्दमात्रस्य तत्त्वाभावात्। अत एव कल्याणं घटपादं यस्या इति द्वन्द्वगर्भबहुव्रीहौ "स्वाङ्गाच्चोपसर्जनात्" (पा०सू० ४।१।५४) इति न ङीषिति तत्रैव विस्तरेण निरूपितम्।

विशेषणानि । तदाह—**विभक्त्यर्थादिष्विति ।** अत्र सुबन्तेनेत्यस्य समर्थेनेति विशेषणम् । अत एव तदुत्तरविभक्त्यर्थान्तर्भावेणैकार्थीभावः । "द्वितीयाश्रित" (पा०सू० २।१।२४) इत्यादौ समर्थेन सुबन्तेनेत्यस्य समर्थप्रकृतिकसुबन्तेनेत्यर्थः । अत एव कष्टं श्रितस्येति परिनिष्ठितविभक्त्या समासेऽप्युत्तरपदीयविभक्त्यर्थान्तर्भावेण न सः । अत एव कष्टश्रितस्य धनमित्यादौ (१)षष्ठी द्वितीयान्तं समर्थमित्यर्थात्तदर्थान्तर्भावेणैकार्थीभावादुक्तार्थत्वान्न द्वितीयेत्याहुः ।

**हरि ङीति ।** फलाविशेषेऽपि "अन्तरङ्गानपि" इतिन्यायप्रवृत्तिमभ्युपेत्येदम् । ङ्यध्योः समानार्थत्वध्वननाय ङ्युत्तरमेवात्राधिशब्दप्रयोगः । **वचनेति ।** प्रत्यासत्त्या यद्विभक्त्यर्थवाचकाव्ययेन सुबन्तस्य समासस्तद्विभक्त्यैव यत्सुबन्तं तस्य ग्रहणादिति भावः । तिङ्कृत्तद्धितसमासैरिति भाष्यसम्मतपरिगणनाच्च तेनाभिहिते सप्तमीत्यपि बोध्यम् । अत एव गृहस्योपरि इत्यादौ न समासः । उपरीत्यस्याधिकरणशक्तिप्रधानत्वेऽपि येन सुबन्तेन समासस्तद्घटकविभक्त्यर्थावाचकत्वात् । अधिहरि भक्तिरित्यत्र हर्यधिकरणिका भक्तिरिति बोधः । न च "प्रतेरुरसः सप्तमीस्थात्" (पा०सू० ५।४।८२) इति सूत्रसम्मतसप्तम्यर्थमात्रवृत्तिप्रतिरूपाव्यये चरितार्थस्याधेः शौण्डादिपठितत्वेन परत्वात् "सप्तमी शौण्डैः" (पा०सू० २।१।४०) इत्यनेन बाधः स्यादिति वाच्यम् । आधेयप्रधानस्यैवाधेस्तत्र पाठात् । **विधानसामर्थ्यादिति ।** एतच्च रक्षितानुसारेण । वस्तुतो मध्यार्थकसमयाशब्दयोगे द्वितीयाविधानस्य दूरार्थकाऽऽराच्छब्दयोगे पञ्चमीविधानस्य च चारितार्थ्यादि(२)दमयुक्तम् । समया—निकषा—ऽऽराच्छब्दा अधिकरण-

---

(१)**षष्ठीति ।** अन्यथा समासेनैव सम्बन्धस्योक्तत्वान्न स्यादित्यर्थः ।

(२)**इदमयुक्तमिति ।** अन्ये तु—मध्यार्थकसमयाशब्दयोगे न द्वितीया । निकषाशब्दसाहचर्येण समीपार्थकसमयाशब्दयोगे एव तद्विधानात् । नचैवं द्वितीयाविधानसामर्थ्योपपादनेऽपि पञ्चमीविधानसामर्थ्यं दुरुपपादम्, दूरार्थकाऽऽराच्छब्दयोगे तद्विधानस्य चारितार्थ्यात्, समीपार्थे विशिष्य तद्विधानाभावादिति वाच्यम् । 'आ जाहिभिः' इति तृतीयानिर्देशेनैव सिद्धे युक्तग्रहणसामर्थ्येन तद्युक्तमात्रे पञ्चमीविधानेन समीपा-

शक्तिप्रधाना इति समीपमात्रवाचित्वाभावान्नैतैः समासः । समीपे इति हि तेषामर्थः । अब्भक्षन्यायेन विभक्त्यर्थसमीपादिमात्रवृत्त्यव्ययस्यैव तेन समासात् । उपशब्दस्तु तन्मात्रवाची कृष्णसामीप्यवन्त इति बोधादिति बोध्यम् ।

**सुमद्रमिति** । वचनग्रहणात्समृद्ध्यादिवाचकत्वेऽव्ययीभावः । 'सुमद्राः' इत्यादौ तु सुशब्दो द्योतकः, समृद्धा मद्रा इति बोधादिति नायमव्ययीभावः । निपातानां वाचकत्वं द्योतकत्वञ्चेत्यत्रैव **भाष्ये** स्पष्टम् । उपदेशादावुपस्य समीपवर्त्तिपदार्थबोधकत्वेन समीपमात्रबोधकत्वाभावान्नाव्ययीभावः । **विगतेति** । ऋद्धेरभाव इति यावत् । अर्थाभावशब्देन समस्यमानपदार्थाभावस्यैव ग्रहणादत्र तेन न सिद्धिः, तद् ध्वनयन्नाह— "**मक्षिकाणामभाव**" इत्यादिना । अर्थाभावशब्देन उत्तरपदार्थाभावस्यैव ग्रहणं व्याख्यानात् । (१)नञा तु नायं समासः । अर्थाभावशब्दे नञ उपादानेन सूत्रगृहीताव्ययेनैतत्समासाप्राप्तेः । तच्च नञ्सूत्रे उपपादयि-

---

ऽर्थेऽपि विशिष्यविधानसत्त्वेन तत्सामर्थ्यस्य सूपपादत्वात् । तत्फलं च समासाभाव एव । अत एव अव्ययमिति विभक्तसूत्रेणापि नात्र समासः । अब्भक्षन्यायेन वारणे तु विभक्तसूत्रेण स दुर्वार एव । किञ्च अब्भक्षन्यायेन पदान्तरसमभिव्याहारे वारणेऽपि तदसमभिव्याहारे तद्वारणं दुःशकम् । अधिकरणत्वस्य संसर्गतया पदान्तरसमभिव्याहारं विना तत्प्रतीतेरसम्भवेन अधिकरणशक्तिप्रधानस्यापि प्रातः—शब्दादेः 'प्रातः कल्पम्' इत्यादौ वृत्तिविषये अधिकरणताविशिष्टबोधकत्वस्यैव पदान्तरासमभिव्याहारे अधिकरणताविशिष्टसमीपमात्रार्थकत्वस्यैव समयादीनां सम्भवात् । तस्मात् मूलोक्तरीत्यैव समासवारणमुचितमित्याहुः ।

(१)**नञा त्विति** । अन्ये तु-'पचतितराम्' 'घटः पटो न' इत्यादौ नाव्ययीभावः । अर्थग्रहणसामर्थ्येन लिङ्गसङ्ख्यान्वयिसमस्यमानपदजन्यप्रतीतिविशेष्यविरोधिनोऽभावस्यैव अर्थाभावशब्देन ग्रहणात् । आद्ये लिङ्गसङ्ख्यान्वयित्वाभावात् । अन्त्ये भेदस्य प्रतियोगितावच्छेदकविरोधित्वेन समस्यमानपदजन्यप्रतीतिविशेष्यविरोधित्वाभावात् । 'भूतले घटो नास्ति' इत्यादौ तु न समासः । नञोऽभावार्थतया क्रियान्वयित्वेन घटेनानन्वयात् । प्रकारतासम्बन्धेन अत्यन्ताभावविशेष्यकबोधे क्रियोपस्थितेः कारणत्वात् । भूतलाधारकघटाभावप्रतीतिस्तु तत्रार्थिकी । समानियताभावानामैक्येन घटाभावस्य घटसत्ताऽभावरूपत्वाद्वा । अविघ्नमित्यादौ तु क्रियान्तर्भावात्समासो ज्ञेय इत्याहुः ।

ष्यते । न चाभावेत्येव सिद्धेऽर्थग्रहणं व्यर्थम् । (१)प्रतियोगिभूतबहिर्विद्यमानार्थसमानाधिकरणाभाववाचकेनैव समासो यथा स्यादित्येतदर्थं तत्सत्त्वात् । तेनाभावार्थनिराशशशृङ्गादिशब्दानामयं न । (२)प्रागभावार्थेन च तेन स न । अत एवात्ययग्रहणञ्चरितार्थम् । तदुदाहरणं 'निर्हिमं, निःशीतम्' इति वृत्त्युक्तमेव युक्तम् । अतेस्तदर्थत्वाभावाद् । 'अतिहिमम्' इत्युक्ते तदतिशयस्यैव प्रतीतेः । अत्ययशब्देऽतेः सूत्रगृहीताव्ययत्वाच्चेति दिक् ।

**सम्प्रति न युज्यत इति** । वृत्तौ युजिक्रियान्तर्भावेणैकार्थीभावः । 'अतिनिद्रमासीत्' इत्यादौ तथाव्यवहारविषयेऽतिनिद्रशब्दस्य लक्षणेति बोध्यम् ।

शाब्दप्रादुर्भावेत्यस्य शब्दविषयप्रकाशार्थेनाव्ययेन समास इत्यर्थः । **भाष्यप्रयोगेति** । "अचः परस्मिन्" (पा०सू० १।१।५७) इति सूत्रेऽयं प्रयोगः । एतद्भाष्यप्रयोगादेतत्सूत्रे तत्तदर्थबोधकपदघटकतया गृहीताव्ययेन तत्तदर्थकेन नायं समासः । अत एव "यथाऽसादृश्ये" (पा०सू० २।१।७) इति सूत्रे (३)'सादृश्यसम्पत्तीति प्राप्नोति' इति **भाष्ये** उक्तम् । यथाशब्देन तु भवत्येव, उत्तरसूत्रारम्भादिति भावः ।

ननु नित्यसमासत्वाद्वाक्यं दुर्लभमत आह—**प्रतिशब्दस्येति** । इदं प्राचामनुरोधेन । वस्तुतः 'प्रतिस्थानम्' इत्यादौ षत्वाभावसम्पादनेन सा चरितार्था । तस्मादर्थमर्थं प्रति प्रत्यर्थमिति सरूपसूत्रादिस्थभाष्यप्रयोगात् यदा द्विर्वचनं तदा प्रतिशब्दस्य वीप्सावृत्तित्वाभावात्समासाप्राप्त्या वाक्यं साध्विति तत्त्वम् । वृत्तौ द्विर्वचनन्तु न, समासेन वीप्साया द्योतितत्वात् इति "हयवरट्" सूत्रे **कैयटः** । प्रतिना तस्या उक्तत्वादिति तत्त्वम् ।

---

एतन्मते 'घटः पटो न' इत्यादौ समासाभावस्यान्यथैव सिद्धेः प्रकारान्तरेण अर्थग्रहणसार्थक्यमुपपादयति—(१)**प्रतियोगीति** । (२)**प्रागभावार्थेनेति** । प्रतियोग्युत्पत्त्या प्रागभावस्य नाशेन तस्य तत्समानाधिकरणत्वाभावात् । अत्यन्ताभावस्य तु प्रतियोग्यधिकरणे सत्त्वेऽपि सम्बन्धविशेषाभावेन प्रतियोगिसत्ताकाले प्रतीतिमात्रानुदयादिति भावः ।

(३)**सादृश्यसम्पत्तीति** । न तु 'यथार्थत्वात् प्राप्नोति' इत्युक्तम् इति भावः ।

**शक्तिमनतिक्रम्येति**। "परावरयोगे च" (पा०सू० ३।४।१०) इति क्त्वा। परावरत्वञ्च बौद्धम्। **हरेः सादृश्यमिति**। 'हरि टा सह' इत्यलौकिकम्। **वक्ष्यमाणेनेति**। अत्र सूत्रालेखो वैचिन्त्र्यार्थः। यथा सूत्रेषूत्तरत्र कृतस्य पूर्वत्रापकर्षणं वैचित्र्याय तद्वत्।

'अनुज्येष्ठं कार्यं कृतम्, अनुज्येष्ठं प्रणमति' इत्यादौ करणत्वेनान्वयात्परिनिष्ठितविभक्त्या समासमभिप्रेत्याह—**ज्येष्ठस्यानुपूर्व्येणेति**। आनुपूर्व्यं क्रमः। पूर्वं क्रमेणेत्यनुपूर्वमिति सूत्रगृहीताव्ययेनाप्यनुना समासः, एतस्मात्सूत्रप्रयोगात्।

युगपच्छब्देन तु न समासः, सूत्रगृहीतत्वात्। उभयत्रापि स्वार्थे ष्यञ्, तद् ध्वनयन्नाह—**चक्रेण युगपदिति**।

**गुणभूते इति**। व्याख्यानात्सादृश्येति स्वार्थे ष्यञिति भावः।

सम्पत्तिसमृद्ध्योः पर्यायत्वमाशङ्क्याह—**ऋद्धेरिति**। धनधान्यादेरित्यर्थः। अनुरूपो योग्य आत्मनः समस्यमानोत्तरपदस्य भावः प्रवृत्तिनिमित्तं क्षत्रत्वादिः सम्पत्तिरित्यर्थः। सक्षत्रमित्यस्य क्षत्रियाणां योग्यं क्षात्रमित्यर्थः।

**तृणमपि इति**। साकल्यबोधकाव्ययेन समासः। समासस्य नित्यत्वादस्वपदविग्रहो दर्शितः। तृण टा सहेत्यलौकिकम्। **अपरित्यज्येति**। "परावरयोगे च" (पा०सू० ३।४।२०) इति क्त्वा। तद्योगश्च बौद्धः। **न त्वत्रेति**। 'तृणेन सह भुङ्क्ते' इतिबोधोत्तरं यस्तृणानि भक्षयेत्स कथमन्यत्परित्यजेदिति प्रतीतेः सकलं भोज्यमत्तीत्यत्रैव तात्पर्यादिति भावः।

**अग्निग्रन्थपर्यन्तमिति**। बहुव्रीहौ द्वितीयान्तं, ग्रन्थोऽन्यपदार्थः। अधीतइत्यस्य तु न समासेऽन्तर्भावो मानाभावात्। अन्त्यत्वं साहित्यञ्च सहार्थः। अन्त्याग्निग्रन्थसहितमिति बोधः। 'अग्नि टा सह' इत्यलौकिकम्। न च "तदधीते" (पा०सू० ४।२।२९) इत्यण्प्रसङ्गो, वैकल्पिकत्वात्॥

**यथाऽसा** (पा०सू० २।१।७)॥ असादृश्ये इति च्छेदः, तत्रैव वर्त्तमान इत्यर्थः। **तथा हर इति**। तथाशब्दस्य सादृश्यार्थकत्वेऽपि न समासः। सदृश इत्युक्तेर्नियमेन प्रतियोग्याकाङ्क्षादर्शनात्सादृश्यप्रतियोगिवाचकेनैव तद्बोधकाव्ययस्य समासात्। **द्योतयतीति**। सामान्यस्य

भेदको यो विशेषस्तद्रूपे प्रकारे थालिति यद्विशेषवान् हरिस्तद्विशेषवद्भिन्नो हर इति बोधे यत्तच्छब्दाभ्यां तयोरेकत्वावगमेऽर्थादुपमानत्वप्रतीतेरिति भावः । सूत्रेऽपि सादृश्यशब्देनोपमानत्वमेव । थाल्सूत्रे सादृश्यस्य प्रकार-शब्देन ग्रहणे यत्सादृश्यवान्हरिस्तत्सादृश्यवान्हर इत्येव बोधः स्यान्न तु हरिसदृशो हर इति ।

**भाष्यानुसारिणस्तु**—"यथाऽसादृश्ये" (पा०सू० २।१।७) इत्यस्य यथाशब्दः सुबन्तेन समस्यते, सादृश्ये द्योत्ये नेत्यर्थः । यथाशक्ति, यथाबलम् इत्याद्युदाहरणम् । अत एव **भाष्ये** "असादृश्ये इति किमर्थं, यथा देवदत्तस्तथा यज्ञदत्तः" इत्युक्तं, न तु सूत्रमेव किमर्थमित्युक्तम् । यथार्थत्वेन तु न सिद्धिः । सूत्रगृहीताव्ययेन तेनासमासात् । अत्र चेदमपि ज्ञापकम् । न च प्रकारवचने थाला निष्पन्नस्य यथा-शब्दस्य सर्वथा सादृश्य-द्योतकत्वेन सूत्रोदाहरणासम्भव इति सूत्रं व्यर्थमिति वाच्यम् । अत्र सूत्रे अव्युत्पन्नस्य वीप्सा-योग्यता-पदार्थानतिवृत्तिबोधकस्यैव ग्रहणेनादोषात् । 'यथाशक्ति' इत्युदाहरणे तदर्थक एव सः ।

यद्यपि—"यथाशब्द उपमानत्वं द्योतयति" इति सकलाभियुक्तोक्तेर्यद्विशेषवानित्यादिप्रागुक्तबोधोत्तरमुपमानदेवदत्ताभिन्न उपमेयो यज्ञदत्त इति बोधः । गृहीतविशेषधर्म एव च साधारणधर्मः । लक्षणामूलकव्यञ्जनाजन्य-बोधस्थले इवोभयोः शाब्दत्वं सुवचम् । अत एवोपमानोपमेययोः समान-विभक्तिकत्वसिद्धिः । एवञ्च पूर्वपदार्थप्राधान्याभावेन नात्राव्ययीभावप्र-सक्तिः,—तथापि प्रसिद्धत्वात्प्रकारवचनस्यैवात्र ग्रहणे तत्सामर्थ्याद् 'द्विमुनि' इत्यादाविव तदभावेऽपि समासः स्यात् ;—अतोऽसादृश्ये इति सूत्रे कृतम् । तत्र कृते तु तद्भिन्नस्याव्युत्पन्नस्यैवात्र सूत्रे ग्रहणम् । न च यथाबलमित्याद्यु-दाहरणे प्रकारवाचिथालन्तस्यैव ग्रहणमस्तु, सादृश्यसम्पत्तीत्यनेन च समा-सोऽस्तु इदं सूत्रञ्च मास्तु, पूर्वसूत्रे यथाग्रहणञ्च मास्त्विति वाच्यम् । एत-त्सूत्रारम्भसामर्थ्येन तत्र तदप्रयोगात् । तत्रार्थे साधोरन्यत्रार्थेऽसाधुत्वापत्तेश्च । इदमेव सूत्रमव्युत्पन्नस्य तदर्थकस्य यथाशब्दस्य सत्त्वे मानम् । तथा च **भाष्ये** "असादृश्ये इत्युच्यते, तत्रेदं न सिद्ध्यति—यथाशक्ति यथाब-

लम् , प्रकारे यस्थाल् तदन्तस्य सादृश्य एव वृत्तेः" इत्याशङ्क्य वीप्सादिवाचिनोऽत्र सूत्रे, यथाबलमित्युदाहरणे च ग्रहणमित्यर्थकोक्त्यनन्तरम् "अथ यः प्रकारवचने थाल् तदन्तस्य ग्रहणं कस्मान्न भवति, पूर्वेण प्राप्नोति सादृश्यसम्पत्तीति" इति पूर्वपक्षिणोक्ते "प्रतिषेधवचनसामर्थ्यान्न भविष्यति" इत्युत्तरितम्। नानेन भाष्येण प्रकृतसूत्रे प्रकारवचनथालन्तस्य ग्रहणं शङ्क्यते इति वक्तुं युक्तम्। असादृश्ये इत्यस्य सूत्रे श्रवणात्। यद्यपि तद्विस्मरणेनायं पूर्वपक्ष इत्यपि वक्तुं शक्यम् , तथापि पूर्वेण प्राप्नोतीत्यादेरसङ्गतिः। तस्मादुदाहरणे थालन्तस्य ग्रहणं तत्र सादृश्यार्थकेन समासं कृत्वाऽन्यत्रार्थे प्रयोगे बाधकाभाव इत्यभिमानेनार्थघटितं साधुत्वमित्यजानतोऽव्युत्पन्नसत्त्वे मानञ्चापश्यतः शङ्क्यमिति युक्तम्। प्रतिषेधवचनेत्यस्य प्रतिषेधयुक्तैतद्वचनसामर्थ्यादित्यर्थः। एवञ्चाव्युत्पन्नतत्सत्त्वेऽर्थघटितं साधुत्वमित्यत्र चैतदेव मानमिति भावः।

**यत्तु**—प्रतिषेधेति प्रतीकमुपादाय "यथार्थे यदव्ययमिति पूर्वेणैव सिद्धे समासे सादृश्यप्रतिषेधार्थत्वादस्यारम्भस्य" इति **कैयटः**, तन्न। सूत्रगृहीताव्ययेन तेन सूत्रेणासमासात्। नियमत्वापेक्षयैतदर्थज्ञापकत्वस्यैवोचितत्वात्। तत्र सूत्रे यथार्थशब्देन सादृश्याग्रहणाच्च। अत एव तत्र सूत्रे सादृश्यग्रहणं चरितार्थम्। अत एव भगवता "सादृश्यसम्पत्तीति प्राप्नोति" इत्युक्तम्। न च सादृश्यग्रहणं गुणभूतसादृश्यग्रहणार्थम्। लक्ष्यानुरोधेन प्रधानन्यायाप्रवृत्त्योभयत्रापि तेन सिद्धेः। यथा योग्यताया यथार्थत्वेऽपि रूपस्य योग्यमनुरूपमित्यादौ तद्वदर्थकेनापि समासस्तद्वत्। पूर्वसूत्रे यथार्थग्रहणं तदर्थकान्याव्ययग्रहणार्थम्। एवञ्च यथाशक्तीति एतदुदाहरणमेवेति **भाष्ये** स्पष्टम्। वीप्सादावपि यथाशब्देन समासो भवत्येव। "यदव्युत्पन्नं वीप्सावाचि तस्येदं ग्रहणम्" इति **भाष्यात्**। एवञ्च स्पष्टमेवोपक्रमोपसंहाराभ्यामस्य सूत्रस्य विधित्वं भाष्याल्लभ्यते। अत्र सूत्रे यथाशब्देन यथार्थस्य न ग्रहणं मानाभावात्। पूर्वसूत्रे तु (१)वचन-

---

(१)वचनग्रहणादिति। "अव्ययं विभक्ति" (पा० सू० २।१।६) इति सूत्रं यथा

ग्रहणात्तथा, विभक्तिशब्देनैवे(१)त्याहुः ॥

विभक्तिशब्देन तदर्थग्रहणं तथा यथाशब्देनापि, कर्मप्रत्ययान्तवचनशब्दसामानाधिकरण्यादित्यर्थः । (१)इत्याहुरिति । कैयटानुयायिनस्तु—"यथाऽसादृश्ये" (पा०सू० २।१।७) इति सूत्रे भाष्ये "असादृश्ये इति किमर्थम् । यथा देवदत्तस्तथा यज्ञदत्त इति । असादृश्ये इत्युच्यते, तत्रेदं न सिध्यति—यथाशक्ति, यथाबलमिति । किं कारणं ? यथेत्ययं प्रकारवचने थाल्, स च सादृश्ये वर्तते । नैष दोषः, अयं यथाशब्दोऽस्त्येवाव्युत्पन्नं प्रातिपदिकं वीप्सावाचि । अस्ति प्रकारवचने थाल् । तत्र यदव्युत्पन्नं प्रातिपदिकं वीप्सावाचि तस्येदं ग्रहणम् । अथ यः प्रकारवचने थाल्, तस्य ग्रहणं कस्मान्न भवति ? पूर्वेण प्राप्नोति सादृश्यसम्पत्तीति । प्रतिषेधवचनसामर्थ्यान्न भविष्यति" इत्युक्तम् ।

तत्र कैयटेन "असादृश्ये इति किमर्थम्" इति प्रतीकमादाय प्रश्ने त्रीणि कारणानि उपन्यस्तानि । देवदत्तसादृश्यवानिति बोधे 'कः' इति उपमेयाकाङ्क्षादर्शनात् उपमेयसापेक्षत्वात्समासो न स्यादिति असादृश्ये इति व्यर्थमिति सापेक्षत्वरूपमेकं प्रश्नकारणमुपन्यस्य प्रधानस्य सदृशार्थस्य सापेक्षत्वेऽपि विशेषणस्य देवदत्तार्थस्य सापेक्षत्वाभावात्, यत्सादृश्यवान् देवदत्त इति प्राथमिकबोधे च विशेषणस्य सापेक्षत्वेऽपि उपमानस्य उपमेयं प्रति नित्यसापेक्षत्वाद् 'देवदत्तस्य गुरुकुलम्' इत्यादाविव समासः प्राप्नोत्येवेति तत्सार्थक्यमुपपाद्य यथाशब्दस्य सादृश्यार्थकथाला निष्पन्नत्वाद् सादृश्ये एव शक्तेः असादृश्यार्थकत्वासम्भवात् सूत्रवैयर्थ्यमेव हृदि निधाय असादृश्ये इति किमर्थम् इति भाष्यकारेण प्रश्नः कृतः इति यथाशब्दस्य सादृश्यमात्रवाचकत्वरूपं द्वितीयप्रश्नकारणमुपन्यस्तम् ।

भाष्यकारेण च प्रथमप्रश्नकारणपरिहारस्य प्रधानसापेक्षत्वरूपस्य नित्यसापेक्षत्वरूपस्य च सुबोधत्वात्तं स्पष्टतोऽनुल्लिख्यैव प्रत्युदाहरणमात्रं 'यथा देवदत्तस्तथा यज्ञदत्तः' इत्युल्लिख्य सादृश्यमात्रवाचकत्वरूपं द्वितीयं प्रश्नकारणम्—'असादृश्ये इत्युच्यते, तत्रेदं न सिध्यति यथाशक्ति' इत्यादिना प्रयोगासिद्धिव्याजेनोपन्यस्य 'नैष दोषः' इत्यादिना वीप्सादिवाचिनोऽव्युत्पन्नस्य यथाशब्दस्य सूत्रेऽस्मिन् ग्रहणं नतु थालन्तस्येति सूत्रसार्थक्यमुपपादितम् ।

नाप्राप्तस्यैव असादृश्ये इत्यनेन निषेधात् सादृश्यसम्पत्तीत्यादिना सादृश्यार्थकयथाशब्देन समासो दुर्वार एवेति असादृश्ये एवेति व्यर्थमेव इति अनाप्राप्तत्वाद् पूर्वप्राप्त्यनिषेधरूपं तृतीयं प्रश्नकारणमुक्तम् । तत्परिहारश्च 'अथ यः प्रकारवचने थाल् तस्य ग्रहणं कस्मान्न भवति' इत्यादिशङ्कायां 'प्रतिषेधवचनसामर्थ्यान्न भविष्यति" इतिभाष्योक्त एव तत्प्रतीकमुपादाय "यथार्थे यदव्ययमिति पूर्वेणैव सिद्धे समासे सादृश्यप्रतिषेधार्थत्वादस्यारम्भस्य" इति कैयटेन स्पष्टीकृतः ।

**यावदव** (पा०सू० २।१।८)। सङ्ख्यादिनेयत्तापरिच्छेदोऽवधार-

---

'अत्र असादृश्ये इत्युच्यते, तत्रेदं न सिध्यति यथाशक्ति' इत्यादि द्वितीयाक्षेपे प्रयोगासिद्धिव्याजेन सूत्रवैयर्थ्यस्यैवोद्भावितत्वात् तदेकवाक्यतया प्रथमतृतीयाक्षेपयोरपि सूत्रवैयर्थ्योद्भावने एव पर्यवसानमुन्नेयम्। तत्र प्रथमाक्षेपे सापेक्षत्वात् समासाप्राप्त्या सादृश्यार्थकयथाशब्दे असादृश्ये इत्यस्य वैयर्थ्ये अन्यार्थकयथाशब्दे यथार्थत्वादेव समाससिद्धेः सूत्रवैयर्थ्यमेव पर्यवस्यति। अथ 'यः प्रकारवचने थाल्' इत्यादितृतीयाक्षेपेऽपि नाप्राप्तत्वाभाववतः सादृश्यसम्पत्तीति प्राप्तस्यानिषेधे अन्यत्र यथार्थत्वादेव समासे सिद्धे सूत्रवैयर्थ्ये एव पर्यवसानम्।

सादृश्यसम्पत्तीति प्राप्तस्यानिषेधे हि नियमकरणं व्यर्थमेव स्यात् इति तत्सामर्थ्यात् व्यर्थताऽप्रयोजकस्यापि सादृश्यसम्पत्तीति प्राप्तस्यानेन निवृत्तिः। अत एव 'यथार्थत्वात्प्राप्नोति' इति नाशङ्कितम्। तस्य नाप्राप्तत्वादेव निषेधात्। एतेन 'पर्युदासघटितकैयटोक्तनियामकत्वपक्षे सूत्रवैयर्थ्यस्यैवोद्भावयितुमुचितत्वाद् असादृश्ये इत्येतन्मात्रस्य वैयर्थ्योद्भावनं भाष्यकृतोऽसङ्गतं स्यात्, इत्यपास्तम्। त्रिष्वप्याक्षेपेषु सूत्रवैयर्थ्योद्भावनपर्यवसाने एव भाष्यकृदिष्टत्वस्योपपादितत्वात्।

**यत्तु** नियमत्वापेक्षया 'सूत्रगृहीताव्ययेन न समासः' इत्येतदर्थज्ञापकत्वस्यैवोचितत्वादिति। तन्न, सूत्रगृहीताव्ययातिरिक्तत्वेन सङ्कोचापेक्षया यथाशब्दातिरिक्तत्वेन सङ्कोचकल्पने एव लाघवात्। घटः पटो नेत्यादौ समासवारणं तु न तत्फलम्। तस्यान्यथैव पूर्वं कृतत्वात्।

अविघ्नमित्यादौ अव्ययीभावो भवत्येव। नञ्सूत्रे भाष्ये नञ्समासस्य पूर्वपदार्थप्रधानत्वपक्षे नञ्समासेन अव्ययीभावस्य येननाप्राप्तिन्यायेन बाधात्, अव्ययीभावासिद्धेः दोषतयाऽनुपन्यासाच्च अन्यपक्षे नञा अव्ययीभावस्यानिष्टत्वकल्पनं तु नोचितम्। अनेकमित्यादौ एकवचनासिद्ध्या, ताभ्यां भिन्नोऽस्तीत्याद्यर्थे अतौ स्त इत्याद्यसिद्ध्यापत्त्या, अत्वं भवसि अनहं भवामि इत्याद्यसिद्ध्यापत्त्या च तत्पक्षस्य दूषितत्वात्। असिद्धान्तपक्षे दोषानुपन्याससमात्रेण कस्यचिदर्थस्य कल्पयितुमनुचितत्वाच्च।

थाल्सूत्रे च प्रकारशब्देन सादृश्यस्यैव ग्रहणम्। 'यथेत्ययं प्रकारवचने थाल् स च सादृश्ये वर्तते' इति भाष्याक्षरस्वारस्यात् यत्सादृश्यवान् हरिस्तत्सादृश्यवान् हर इति प्रथमतो बोधेऽपि अनन्तरं हरिसदृशो हर इति बोधेन सदृशसदृशिभावस्य विषयीकरणात्। एकप्रतियोगिकसादृश्यवतोः परस्परं सादृश्यस्य नियमात्। उभयोः शाब्दत्वं तु 'गङ्गायां घोषः' इत्यादौ लक्षणामूलकव्यञ्जनाजन्यबोधस्थले घोषे आरोपितगङ्गाधारत्वपावनत्वायोरिव सुवचम्। तव 'यद्धर्मवान् हरिस्तद्धर्मवान् हरः, उपमानदेवदत्ताभिन्न उपमेयो यज्ञदत्तः, इत्यनयोरिव। तस्मात् अत्र कैयटोक्तं सर्वं साध्वेवेत्याहुः॥

नतु अव्ययानां सत्त्वप्रधानत्वाभावेन मात्रावति अर्थे शक्तेरभावात् मात्रार्थान्वय-

णम् । तद्बोधकं यावदित्यव्ययं समस्यते इत्यर्थः । अवधारणे किम् ? यावद्दत्तं तावद् भुक्तम् । कियद् भुक्तमिति नावधारयामीत्यर्थः ।

**सुप्प्रतिना** (पा०सू० २।१।९) । मात्राशब्दोऽल्पपर्यायः । पुनः सुब्ग्रहणमव्ययनिवृत्त्यर्थम् । अन्यथा 'दोषामन्यमहः' इत्यादौ दोषादीनां वृत्तिविषये (१)सत्त्वप्रधानतादर्शनाचादृशाव्ययेनैव समासः स्यात् ।

**वृक्षं प्रति इति** । लक्षणे प्रतिः । कर्मप्रवचनीयत्वन्तु प्रतेः "गतिर्गतौ" (पा०सू० ८।१।७०) इति निघाताभावायेत्याहुः ॥

**अक्षशला** (पा०सू० २।१।१०) । समस्यन्ते इति शेषः । **पराजय एवेति** । पञ्चिका नाम द्यूतं पञ्चभिः कपर्दैर्भवति । तत्र यदि सर्वे उत्ताना अवाञ्चो वा पतन्ति, तदा पातयिता जयति, अन्यथा जीयते । विपरीतवर्त्तने कर्तृत्वेनाक्षादेस्तृतीया । वृत्तौ परे(२)स्तदर्थः । 'अक्ष ङस् परि' इत्यलौकिकम् । नित्यसमासत्वादस्वपदविग्रहः । वैपरीत्यञ्च जयापेक्षयेति भावः । **अक्षेणेति** । अक्षाभ्यां विपरीतं वृत्तमित्याद्यर्थे न समासो(३)ऽनभिधानात् । अक्षत्वेनैकाक्षबोधे एवास्य साधुत्वम्, न तु तेन रूपेणानेकाक्षबोधे । एकत्वादिना बोधस्तु वृत्तौ नास्त्येवेति **भाष्ये** स्पष्टम् ॥

**विभाषा** (पा०सू० २।१।११) ॥ यद्यपि एकार्थीभावे समासस्य, व्यपेक्षायो वाक्यस्य च सिद्धेरिदं व्यर्थम् । एकार्थीभावे एव समाससञ्ज्ञादिविकल्पस्तु (४)नेष्यते । एवं समासनिषेधसूत्राणि, "नित्यं क्रीडा" (पा०सू० २।२।१७) इत्यत्र नित्यग्रहणञ्च व्यर्थम् । निषेधविषये एकार्थी-

---

योग्यत्वाभावेनैव तन्निवृत्तिः स्यात्, अत आह-(१)सत्त्वप्रधानतेति । पूर्वसूत्रे तु यावदित्यव्ययमेव गृह्यते इति न तत्र तन्निवृत्तिः । अत एव तत्र यावन्तः श्लोका इत्यनव्ययेन विग्रहप्रदर्शनम् । अन्यथा नित्यसमासत्वात्तदयुक्तं स्यादिति भावः ।

(२)**तदर्थ इति** । विपरीतवर्तनमर्थः ।

(३)**अनभिधानादिति** । एकपरि, द्विपरि, त्रिपरि, चतुष्परि इत्यत्र च समासो भवति, न तु पञ्चपरि इत्यत्र । पञ्चानामुत्तानानामवाचां वा पाते पातयितुर्जयस्यैव भावेन पञ्चानां विपरीतवर्तनकर्तृत्वासम्भवात् इति बोध्यम् ।

(४)**नेष्यते इति** । 'नच सञ्ज्ञाया भावाभावाविष्येते' इति भाष्याद्युक्तेः । "पारेमध्ये षष्ठ्या वा" (पा०सू० २।१।१८) इत्यत्रत्यवाग्रहणेन तदभावज्ञापनाच्चेति भावः ।

भावाभावेन समासाप्राप्तेः। नित्याधिकारविषयेऽस्याभावेन वाक्याप्राप्तेश्च; तथापि लक्षणैकचक्षुष्कान् मन्दान् प्रति क्वैकार्थीभावो नित्यः, क्व पाक्षिकः, क्व नास्त्येवेत्यर्थबोधनार्थं सर्वमावश्यकम्। ध्वनितं चेदं "समर्थानाम्" (पा०सू० ४।१।८२) इति सूत्रे **भाष्ये**। लक्ष्यैकचक्षुष्कं प्रति "समर्थः" (पा०सू० २।१।१) इति सूत्रे **भाष्ये** तत्प्रत्याख्यातम्। एवञ्च विशेषणीभूतैकार्थीभावस्य विकल्पादिबोधकानीमानि। अत एव "पारेमध्ये" (पा०सू० २।१।१८) इति सूत्रे **भाष्ये** एकया वृत्तिर्विभाषा, परया वृत्तिविषयेऽनित्योऽपवादः" इत्युक्तम्। तत्र वृत्तिरेकार्थीभावः।

**एतत्सामर्थ्यादिति**। अत्रैतत्करणात् प्राक् तदसम्बन्धेन तद्विषये एकार्थीभावस्य नित्यत्वमिति भावः। नन्वेवं "सुप्सुपा" इत्यस्यापि नित्यतापत्तिः। एवञ्च **भाष्ये** सुप्सुपेत्युदाहरणभूते 'विस्पष्टपटुः' इत्यत्र विस्पष्टं पटुरितिविग्रहप्रदर्शनासङ्गतिरत आह—**सुप्सुपेति त्विति**। एतत्समासानुवादेनैवाव्ययीभावादिसञ्ज्ञाविधानेन सिद्धे पुनस्तैः समाससञ्ज्ञाविधाने तदनित्यत्वज्ञापकम्। "उपपदमतिङ्" (पा०सू० २।१।१९) "कर्तृकरणे कृता" (पा०सू० २।१।३) "आख्यातमाख्यातेन" (का०वा०) इत्यादावुद्देश्याप्रसिद्ध्या "अनेकमन्यपदार्थे" (पा०सू० २।२।२४) इत्यादौ द्व्यादिपदघटितसमासरूपोद्देश्याप्रसिद्ध्या तेषु समाससञ्ज्ञाविधानस्यावश्यकत्वेनार्थाधिकारानुरोधात्सर्वत्र (१)तस्य विधेयसमर्पकत्वम्। "प्रथमानिर्दिष्टम्" (पा०सू० १।१।४३) इतिसूत्रे 'समासे' इत्यस्य समासत्वव्याप्यसञ्ज्ञाविधायके लक्षणयाऽव्ययादीनामुपसर्जनत्वं साधयितुं शक्यमिति न तदर्थं समाससञ्ज्ञाविधानं चरितार्थमिति भावः। विग्रहप्रदर्शनपरोक्त**भाष्याद**पि तस्यानित्यत्वं बोध्यम्॥

**लक्षणेनाभिप्रती** (पा०सू० २।१।१४)॥ अभिप्रती आभिमुख्यस्याग्नेर्ज्ञापकत्वसम्बन्धेनान्वयस्य च द्योतकौ।

---

(१)**तस्य विधेयसमर्पकत्वमिति**। एवञ्च तैः समासविधानस्य सुप्सुपेत्यस्यानित्यत्वज्ञापकत्वं युक्तम्। उद्देश्यसमर्पकत्वे तु तैः समासविधानाभावात् तस्य तज्ज्ञापकत्वकथनासङ्गतिरिति भावः।

अग्निज्ञाप्यं शलभकर्तृकं पतनमिति बोध उदाहरणे । तथाबोधे चाग्न्यभिमुखत्वं शलभपतनस्य लोकप्रसिद्ध्या मनसा गृह्यते इत्याभिमुख्यद्योतकताऽभिशब्दस्य ।

अग्निज्ञाप्यं शलभकर्तृकं प्रत्यासत्त्याऽग्न्यभिमुखं पतनमिति बोध इत्यन्ये । कर्मप्रवचनीयद्योत्यसम्बन्धेनान्वयाद्वाक्ये द्वितीया, तदाह—**अग्निमभीति** । लक्षणेनेति किम् ? स्रुघ्नं प्रतिगतः । (१)स्रुघ्नादागतस्तमेव प्रतिनिवृत्त इत्यर्थः । आभिमुख्ये किम् ? 'वृक्षं प्रति विद्योतते' इत्यादावाभिमुख्यद्योतनाभावे समासो मा भूदिति । अस्य समासस्य वैकल्पिकत्वेन पक्षे कर्मप्रवचनीयत्वं चरितार्थम् । अभिप्रती इति किम् ? अग्नेः सम्मुखं शलभाः पतन्तीत्यर्थे सांमुख्यार्थकसंशब्देन लक्षणत्वसम्बन्धेनान्वये समासो मा भूदिति ।

**अनुर्यत् (पा०सू० २।१।१५)** ॥ लक्षणेनेति वर्त्तते । समयेत्यधिकरणशक्तिप्रधानम् । यदिति सामान्ये नपुंसकं द्वितीयान्तम् । यं पदार्थं समयेत्यर्थद्योतकोऽनुः तेन लक्षणभूतेन तद्वाचकेन समस्यते इत्यर्थस्तदाह—**यामिति** । वनादेर्लक्षणत्वं समीपद्वारा । स्वसामीप्येन हि वनेनाशनिर्देशो ज्ञाप्यते । लक्षणत्वन्तु वस्तुसन्निमित्तं, न तु तेन सम्बन्धेनान्वयस्तदाह—**वनस्य समीपमिति** ।

**यस्य दैर्घ्यमिति** । यद्दैर्घ्यसदृशदैर्घ्यमित्यर्थः । अत्रापि लक्षणत्वं वस्तुसदेव निमित्तम् । तद् ध्वनयन्नाह—**गङ्गाया अन्विति** । तद्द्योत्यसम्बन्धेनान्वयाभावान्न द्वितीया । **उपलक्षितेति** । विशिष्टेत्यर्थः । दैर्घ्यसदृशदैर्घ्यविशिष्टत्वमनोरर्थः । तथा बोधे च गङ्गायां ज्ञापकत्वस्य, गङ्गासमीपं गत इति बोधे च गङ्गायां ज्ञापकत्वस्य नियमेन मनसा बोधादन्यलभ्यत्वेन नात्र (२)तद् अनोर्द्योत्यमिति तात्पर्यम् । तेन सम्बन्धेनान्वये तु

---

ननु लक्षणत्वाभावे द्वितीयानुपपत्तिरित्याशङ्क्याह—(१)स्रुघ्नादागत इति । परावृत्य गमनं धात्वर्थः, तन्निरूपितकर्मत्वाद् द्वितीयेति भावः ।

(२)तदिति । ज्ञापकत्वमित्यर्थः । ततश्च लक्ष्यलक्षणभावद्योतकत्वाभावेन अनोः कर्मप्रवचनीयत्वाभावान्न गङ्गाया अनु इत्यत्र द्वितीयेति भावः ।

'वनमनु' 'गङ्गामनु' इति द्वितीयैवेति बोध्यम् । "निवेश्य गङ्गामनु तां महानदीं चमूम्" इति रामायणे प्रयोगात् । वाराणस्याः (१)स्वरूपेण ज्ञातत्वेऽप्यायामवैशिष्ट्येन ज्ञाप्यत्वं बोध्यम् ।

**तिष्ठद्गुप्र** (पा०सू० २।१।१७) ॥ चेनैषां वृत्त्यन्तरे प्रवेशो न ।

आ तिष्ठद्गु जपेत्सन्ध्यां पश्चिमामाऽयतीगवात् ॥

इति भट्टिश्लोके आ तिष्ठद्गु, आ आयतीगवादिति भिन्ने पदे । इह—उक्तोदाहरणद्वये । तत्राद्ये शत्रादेशमात्रम् । प्रथमासामानाधिकरण्याच्चद्-प्राप्तिः । यद्यपि 'पचन् पुरुषः' इतिवत्सिध्यति, तथाऽप्युपायान्तरमिदम् । **समासान्तश्चेति** । इदमन्त्ये । चेनान्यपदार्थेऽव्ययीभाव इति बोद्धव्यम् ।

**पक्षे षष्ठीति** । अयं भावः—महाविभाषा नैकार्थीभावस्य विकल्पबोधिका, वृत्तिश्चैकार्थीभावे नित्येति येननाप्राप्तिन्यायेनाव्ययीभावस्तत्पुरुषं बाधेत, यथैकदेशिसमासः षष्ठीतत्पुरुषम् , इति (२)पक्षे तल्लाभाय पुनर्वाग्रहणमिति ।

सङ्ख्येत्यादित्रिसूत्री स्वभावात्समानाधिकरणविषया । **वंश इति** । एकस्वभावः सन्तानप्रबन्धो वंशः । **द्वौ मुनी**—पाणिनिकात्यायनौ । **त्रिमुनि—भाष्यकृत्** तौ च । स्वपदार्थप्राधान्ये एवायं समासः । नन्वेवं 'त्रिमुनि व्याकरणम्' इति सामानाधिकरण्यानुपपत्तिरत आह—**विद्येति** । **अन्ये तु** बहुव्रीहौ त्रिमुनि व्याकरणम् , अव्ययीभावे व्याकरणस्य इति, स्वरभेदश्चेष्ट एवेत्याहुः ।

**परे तु** विद्यावंशो नाम गुरुशिष्यपरम्परा । न चैतस्य मुनित्रयस्य

---

**(१)स्वरूपेणेति** । असीवरणयोर्मध्ये वाराणसी इत्येवं वाराणस्याः स्वरूपेण ज्ञातत्वेऽपि 'प्राक्पश्चिमायता, दक्षिणोत्तरायता वा वाराणसी' इत्येवं प्रश्ने 'अनुगङ्गं वाराणसी' इत्युत्तरवाक्यं प्रयुज्यते । असीवरणामध्यदेशावच्छिन्नगङ्गादैर्घ्यस्य ज्ञातत्वात् तेन वाक्येन तत्सदृशदैर्घ्यवत्त्वज्ञानात् निरुक्तगङ्गादैर्घ्यस्य च दक्षिणोत्तरायतत्वात् वाराणसी दक्षिणोत्तरायतेति ज्ञायते । अर्थात् विशालत्वमन्यादृशामिति गम्यते । ततश्च न काचिदनुपपत्तिरिति बोध्यम् ।

**(२)पक्षे इति** । अन्यतरपक्षे षष्ठीतत्पुरुषलाभायेत्यर्थः ।

तत्त्वे मानमस्ति । 'त्रिमुनि व्याकरणस्य' इति यदीष्यते तदेदं तिष्ठद्गुप्रभृतिषु पाठात्साध्यमित्याहुः । मूलं तु वृत्त्यनुसारेण । किञ्च 'न हि त्रिपुत्रो त्रिपुत्रव्यपदेशं लभते' इति न्यायेन द्विमुनीति व्यवहारासङ्गतिर्बोध्या । जन्मनोदाहरति—**एकविंशतीति** । एकविंशतिर्भरद्वाजा वंश्या इति विग्रहः । वृत्तौ "तृतीयासप्तम्योः" (पा०सू० २।४।८४) इतिसूत्रस्थ**भाष्य**-प्रयोगात्तत्प्रामाण्येनोपकादि(१)ष्वनयोः पाठाद् "यञञोश्च" (पा०सू० २। ४।६४) इतिलुगभावो बोध्यः ।

**नदीभिश्च** (पा०सू० २।१।२०) ॥ अत्र च बहुवचननिर्देशान्न सञ्ज्ञाया ग्रहणं, नापि शब्दस्वरूपस्य । शब्दसञ्ज्ञात्वाच्च । किन्तु नदीत्यर्थग्रहणम् । तेन तद्वाचके सर्वत्र प्रवृत्तिः । एतच्च सङ्ख्यासञ्ज्ञासूत्रे **भाष्ये** स्पष्टम् । **समाहारे चेति** । तत्रैवेत्यर्थः । एवञ्च तदविवक्षायां "पूर्वकालैक" (पा०सू० २।१।४९) इति समासे 'एकनदीतरः' सिद्धः । अन्यथा समानाधिकरणतत्पुरुषं बाधित्वाऽव्ययीभावे नपुंसकह्रस्वापत्तिः । "अच् प्रत्यन्वव" (पा०सू० ५।४।७५) इतियोगविभागसिद्धोऽभियुक्तोक्तः ।

गोदावर्याश्च नद्याश्च सङ्ख्याया उत्तरे यदि ।

इत्यच् तु न । योगविभागस्येष्टसिद्ध्यर्थत्वाद्, **भाष्यकृता** तदनुक्तेश्चेति भावः ॥

**अन्यपदा** (पा०सू० २।१।२१) ॥ सङ्ख्येति निवृत्तम् । नदीग्रहणमनुवर्त्तते । **सञ्ज्ञाऽनवगमादिति** । सञ्ज्ञेति कर्मण्यङ् । तेन सञ्ज्ञिनो देशविशेषस्यानवगमादित्यर्थः । **नित्यसमास इति** । तत्सदृश इत्यर्थः । तत्सादृश्यञ्च समाससमानार्थकवाक्याभावेन । समासघटकपदानां विग्रहस्त्वस्त्येव । महाविभाषाया असम्बन्धे मानाभावात् । अत एव "द्वितीयतृतीय" (पा०सू० २।२।३) इति सूत्रेऽन्यतरस्यांग्रहणेनोत्सर्गोप-

---

(१)**अनयोरिति** । 'एकविंशतिभारद्वाजं' 'त्रिपञ्चाशद्गौतमम्' इति तत्सूत्रस्थभाष्यप्रयोगात् उपकादिषु गोतमभरद्वाजयोः पाठात् वृत्तौ "यञञोश्च" (पा०सू० २। ४।६४) इति लुगभावः । समस्तपाठात् विग्रहे लुग् भवत्येव । तेन एकविंशतिर्भरद्वाजा इत्येव विग्रहीयो मूलः पाठ इति बोध्यम् ।

